भारतसंघराज्यमुख्येन राष्ट्रपतिना

श्रीराजेन्द्रप्रसादेन

अयं पञ्चमो भागः स्वकरकमलेन

प्रकाशितः ।

मार्गशीर्षः कृष्णः १० शकः १८८२

# अनुक्रमणिका



# प्रकाशकस्य निवेदनम्



मीमांसाकोषचतुर्थभागस्य प्रकाशनानन्तरं पञ्चमभागप्रकाशनपर्यन्तं वर्षत्रयात्मको दीर्घः कालो व्यतीतः। तत्कारणं च गुरुचरणनिर्मितलेखस्य पुनः संस्कारः कर्तव्य आसीदिति। श्रीदुर्गारामशास्त्रिणा उपाध्ये इत्युपनाम्ना एतत् पुनःसंस्करणकार्यमङ्गीकृत्य अस्य भागस्य पर्याप्तो गुरुलेखः श्रीरङ्गनाथशास्त्रिणा वारंवारं दर्शितपद्धत्या परिशोधितः।

अस्य पञ्चमभागस्य यथापूर्वं मुद्रितपरिशोधनं च सूक्ष्मेक्षिकया धर्मकोशस्य कार्यकारी-संपादकेन श्रीरङ्गनाथशास्त्रिणा निर्वर्तितम्। श्रीरङ्गनाथशास्त्रिणः एतादृशकार्यनिर्वर्तन-सामर्थ्ये गुरुचरणानामपि विश्वास आसीत्। न्यूनातिरिक्तदोषपरिहाराय गुरुभिस्तेन सह पुनःपुनः विमर्शोऽपि कृतोऽस्ति। गुणवत्तासंपत्तावेव श्रीरङ्गनाथशास्त्रिणश्चित्तसमाधानमि-त्यस्माकमपि चिरकालीनोऽनुभव इति तस्मिन्विश्रभ्य धर्मकोशकार्यमपि वयं संचालयामः।

**अधिकरणादिसंख्या**— पञ्चमेऽस्मिन् भागे भाष्याधिकरणानि ९९, संकर्षाधिकरणानि ४३, केवलानन्दीवृत्त्यधिकरणानि १३४, तौतातिताधिकरणानि २५, न्यायाः १२७, लघुसिद्धान्ताश्च ४४८४ भवन्ति।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ६९८, संकर्षाधिकरणानि २२७, केवला-नन्दीवृत्त्यधिकरणानि ५९०, तौतातिताधिकरणानि ६१, न्यायाः १०३२, लघुसिद्धान्ताश्च १७६४७ इति।

मार्गशीर्षः कृष्णः १०
शकः १८८२



लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

### अस्य कोशस्य कर्तुः

## श्रीकेवलानन्दयतेश्चरित्रसारः

शान्तस्वान्तो योगजादात्मधर्मात्
सिद्धस्तन्त्रं तारयन् जैमिनेर्यः ।
धन्यं धीरं धारिणं मोक्षलक्ष्म्याः
प्राज्ञाचार्यं केवलं तं प्रणौमि ॥

अस्मद्गुरुः श्रीकेवलानन्दस्वामी 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥' (भ. गीता ८।१३) इति भागवतं सिद्धान्तमनुसृत्यान्तकाले अपुनरावृत्तिमाकाङ्क्षन् अक्षरं ब्रह्मणोऽभिधानभूतमोङ्कारमुच्चारयन् तल्लक्ष्यं भगवन्तमनुस्मरन् स्वीयं विनश्वरं देहं परित्यज्य पारमेश्वरं परमं पदं प्रापत् शके १८७८ फाल्गुने शुक्लपक्षे सप्तम्याम् । तेन मीमांसाकोशो विरचितः संन्यासाश्रमप्रवेशानन्तरमेव । 'ब्रह्मचर्यादेव प्रव्रजेत्' इति जाबालश्रुतिमनुसंदधानेन चतुष्पञ्चाशत्तमे वयसि ब्रह्मचर्यं समाप्य स्वयंस्थापितसंस्थायाः 'प्राज्ञपाठशाला'इत्यभिख्यायाः कार्याद्विरम्य संन्यासाश्रम आश्रित आसीत् । परिव्रज्याया अङ्गीकरणोत्तरं अन्तिमोच्छ्वासपर्यन्तं ग्रन्थार्थचिन्तनपरेण धर्मब्रह्मपरे उभये पूर्वोत्तरमीमांसे विमृश्य विविदिषूणामुपकाराय (१) पदसूची-सूत्रसूचीसहितः अधिकरणसंख्याविमर्शयुक्तः पाठभेदचर्चान्वितः जैमिनीयमीमांसासूत्रपाठः ( मुद्रितः ), ( २ ) मीमांसाकोशः ( क्रमशः मुद्रणयन्त्रस्थः ), (३) कौषीतकिब्राह्मणारण्यकविषयकोशः ( मुद्रितः ), ( ४ ) ऐतरेयब्राह्मणारण्यकविषयकोशः ( मुद्रितः ), ( ५ ) तैत्तिरीयमन्त्रसूची ( अमुद्रिता ), (६) तैत्तिरीयशाखाविषयसूची ( अमुद्रिता ), ( ७ ) सत्याषाढसूत्रविषयसूची ( अमुद्रिता ), ( ८ ) शांकरभाष्यपरिभाषाकोशः ( अमुद्रितः ), (९) अद्वैतसिद्धेर्मराठीभाषान्तरम् ( अमुद्रितम् ), (१०) नव्यवेदान्तपरमाणुमाला अद्वैतसिद्ध्यन्तर्गतसिद्धान्तवाक्यकोशात्मिका (अमुद्रिता) इत्येते ग्रन्थाः प्रणीताः । तेन प्रणीतानां अमुद्रितानां ग्रन्थानां हस्तलिखितानि प्राज्ञपाठशालामण्डलसंस्थायाः संग्रहे सुरक्षितानि स्थापितानि सन्ति । तेषां मुद्रणं प्रकाशनं च द्रविणलाभानुकूल्ये सति कर्तुमिच्छामः । एतत् सर्वग्रन्थप्रणयनं तेन विनैवान्येषां धनादिरूपं साहाय्यं निर्वर्तितम्, धनपरिग्रहं वान्तनिगरणमिव प्रव्रज्याश्रमानुसारेण मत्वा ।

कौमारावस्थामारभ्य संन्यासाश्रमस्वीकरणकालपर्यन्तमपि देहधारणमात्रपर्याप्तं भैक्षममृतमिव मत्वा जीवितयात्रा तेन निर्वाहिता । यौवने एव संन्यस्तसंकल्पस्य तस्य बाह्यलक्षणपरिवर्तनरूप एव संन्यासपरिग्रह आसीदिति तस्य ब्रह्मचर्यावस्थाचरित्रं सूचयति । तस्य चरित्रसारकथने नात्रानवसरदोषः प्रसरति इति तत् संक्षिप्य कथयामः ।

केवलानन्दसरस्वतीति तस्याभिधा संन्यासाश्रमीया, न पितृकृता । पितृकृतं तन्नाम च नारायण इति । कोङ्कणप्रदेशे कुलाबामण्डले रोहे इति राजकीयोपभागे मुडकोलीग्रामे शके १७९९ मार्गशीर्षशुक्लपक्षे चतुर्थ्यां प्रातः एकादशवादनसमये चित्पावनाख्यायां ब्राह्मणोपजातौ प्रसिद्धे मराठे इत्यभिहिते कुले सदाशिवात्पितुः पार्वत्या मातुश्च नारायणस्य जन्माभूत् । पितुः सदाशिवस्य द्विविधोपजीविकाऽऽसीत् पौरोहित्यं कृषिकर्म चेति । वयसो दशमवर्षपर्यन्तं पितृभ्यां वात्सल्येन परिपाल्यमानो गौरस्तप्तकनककमनकान्तिः सुकुमारो दृढाङ्गश्चायं बालो नारायणः प्राथमिकीं शिक्षां लेखनवाचनगणितरूपां संध्यावन्दन-देवपूजारुद्राध्यायादिब्रह्मकर्मसहितां पितुरेव प्राप्तवान् । भगवद्भक्तिपरायणौ मातापितरौ ईश्वरभजनप्रणिधानपरं धर्मं भागवतोत्तममुनीनां चरित्रकथनद्वारा बाल्यैव पुत्रायोपदिदिशतुः । एकादशे वयोवर्षे गुरुकुलवासाय प्रोत्साहितो नारायणः अलीबागनगरं समागमत् । देवोपनाम्नः केशवशास्त्रिणः गृहे वर्षद्वयम्, लोण्ढे इत्युपनाम्नः दामोदरशास्त्रिणश्च गृहे वर्षषट्कमुषित्वा संस्कृतसाहित्यम्, किञ्चित् पाणिनीयं व्याकरणम्, हरिकीर्तनपद्धतिम्, संगीतं च नारायणोऽधिजगाम । नारायणः अभिनवाष्टवर्षात्मके काले गुरुगृहे वसन् गुरोः कृते गृहसंमार्जनम्, पाकनिष्पत्तिः, गोदोहनम्, पाकादिपात्रशोधनम्, गुरुतत्पुत्र-पत्न्यादीनां वस्त्रधावनम्, गृहोपकरणव्यवस्थापनम्, आपणात् गुरुकुलोपयोगिक्रीत-वस्त्वाहरणं इत्यादीनि कर्माणि शरीरायासमपरिगणय्य अकृतज्ञैर्गुरुसंबन्धिभिः परिचर्या-न्यूनतान्वेषिभिः कृतमधिक्षेपं चोपेक्ष्य गुरोस्तत्संबन्धिनां चित्तप्रसादनाय निरवर्तयद-ध्ययनमात्रकामः ।

दामोदरशास्त्रिणः संनिधौ संस्कृतविद्यामधिगम्याप्यपरितुष्टः उच्चतरशास्त्रस्तरमधि जिगमिषुर्नारायणः सातारामण्डलस्थं वाईनगरं प्रति प्रस्थितः । शके १८२० आश्विने मलमासे प्रथमसप्ताहे कृष्णातीरस्थवाईनगरमागम्य बहूनां गुरूणां संनिधौ वेदान् शास्त्राणि चाधीतवान् । ऋग्वेदो मेणवलीकरोपनाम्नः विष्णुशास्त्रिणः, यजुर्वेदो रानडे इत्युपनाम्नः बाळम्भट्टात्, व्याकरणं करन्दीकरोपनाम्नः विष्णुशास्त्रिणः, नव्यन्यायश्च हेंगवेकरोपनाम्नः बाळशास्त्रिणः अधिगतः । मेणवलीकरः विष्णुशास्त्री पुस्तकमनाश्रित्य ऋग्वेदस्य समग्रस्य साङ्गस्य पदक्रमजटाघनादिविकृतियुतस्य कण्ठत एव पठने समर्थ इति भारते काशीतो रामेश्वरपर्यन्तं विश्रुत आसीत् । रानडे बाळम्भट्टः कण्ठतो घनान्तयजुर्वेदाध्यायी श्रौते स्मार्ते च कर्मणि निपुणो धर्मशास्त्रे निष्णातमतिरासीत् । हेंगवेकरः बाळम्भट्टः पुस्तकमनवलम्ब्य शिष्येभ्यो व्याकरणं महाभाष्यपर्यन्तम्, न्यायं च गादाधरीपर्यन्तमध्यापयदकुण्ठितमतिः । स खलु श्रीमद्भागवतपुराणस्य कथासरित्सागरस्य मध्ययुगीनभगवद्भक्तप्रणीतमराठीकाव्यानां च संस्मर्ताऽधिवक्ता चाऽऽसीत् । वेदशास्त्रनिष्णातधिषणो महापण्डितोऽप्यसौ पत्नीदुहितृसहितो गृहाश्रमे वसन्नपि ऐहिककाममुक्तः स्थिरमतिः परित्यक्तसर्वपरिग्रहः असंग्रहशीलोऽयाचनेन कस्मादपि दातुरेकाह्नजीविकां लब्ध्वैव परिसंतुष्टोऽयाचकवृत्त्या जीवन्नायुरत्यवहत् । पण्डितोऽपि

चालैः पामरैश्च जनैः सह संलापरुचिर्नित्यस्वाध्यायशीलो भगवद्ध्यानपरायणो जिजीव वयसो द्व्यधिकसप्ततिवर्षपर्यन्तम्। ततः प्लेगातङ्कनिमित्तेन चेमं लोकं विजहौ।

शरीरमनोबुद्धिबलसंपन्नोऽव्याजेन धर्माचरणशीलो गुरुपरिचरणपरो भगवच्छरणो नारायणशास्त्रीत्यभिधानेन लोके निर्दिश्यमानो वेदवेदाङ्गान्यधीत्य पाणिनिकणादाक्षपाद-प्रणीतनयानधिगच्छन्नपि नैवैषा अपराविद्येति मन्वानः ऐहिकामुष्मिकजीवनस्य क्षयिष्णुतां पश्यन् तस्मिन्विरज्यमानो मुमुक्षुः श्रुतविनयसंपन्नं साधुशीलं युवानं योगपट्टाभिषिक्तं संसारादुद्दिधीर्षुं वेदान्तपारंगतं प्रज्ञानन्देति विख्यातं गुरुमुपशिश्रिये त्रयोविंशे वयो-वर्षे। नारायणशास्त्री स्वात्मचरित्रलेखे अस्मिन् संदर्भे लिलिखिति—"इतः परं सद्गुरोः परमहंसस्य प्रज्ञानन्दस्य स्वामिनः संबन्धे किञ्चिल्लेखनीयम्। कथं वा तत्संबन्धे वस्तुतो लेखनं संभवति? 'यतो वाचो निवर्तन्ते' इति कृत्वा। 'तथापि स्मर्तृणां वरद परमं मङ्गलमसि' इति लेखनीयं किमपि। गुरोः पूर्वाश्रमनाम कृष्णशास्त्रीति। गौरीशंकरपुत्रः परांजपेकुलोत्पन्नः स भ्रातृत्रयसंपन्न आसीत्। विवाहानन्तरमचिरात्तरुण्याः पत्न्याः मरणात्पुनर्विवाहमकृत्वैव स्थितः कृष्णशास्त्री। कृष्णशास्त्रिणः कुले स्वाव्यवहितत्रिपुरुषपर्यन्तं वेदस्य श्रौतयज्ञस्य धर्मविशाखस्य च प्रावीण्यं अग्निहोत्रानुष्ठानं च प्रावर्तत। स्वयं कृष्णशास्त्रिणा स्ववेदशाखा, श्रौतयाज्ञिकी, ज्योतिष्टोमसामगायनम्, संस्कृतभाषा-व्युत्पन्नता चाधिगता आसीत्। तदात्वे च वाईनगरे प्रसिद्धयोः संन्यासिनोः भूमानन्द-रामानन्दयोः वेदान्तपाठकयोः सविधे शाङ्करं प्रस्थानत्रयभाष्यं कृष्णशास्त्रिणा श्रुतम्। तत्समनन्तरं प्रस्थानत्रयभाष्याध्यापने द्वारकाख्यदेवालये गीताभाष्यमारभ्य कृष्णशास्त्री प्रवृत्तः। पञ्चाधिकत्रिंशत्तमे वयसि शके १८१३ संन्यासाश्रमं प्रविष्टः। रामानन्दशिष्यः प्रज्ञानन्दनामा ब्रह्मचर्यादेव प्रव्रजितो महाविरक्त आसीद्वाईक्षेत्रे। तस्मात् संन्यस्तेन कृष्णशास्त्रिणा योगपट्टः स्वीकृतः प्रज्ञानन्देत्यभिधा च प्राप्ता। वाईग्रामप्रविभागे गङ्गापुर्यां कृष्णातीरस्थप्रस्तरावतारसमीपे वर्तमाने मुरलीधरमठे स्थित्वा प्रज्ञानन्द-स्वामिना वेदान्तप्रवचनमारब्धम्। व्यतीते कियतिचित्समये प्रज्ञानन्देन दातारमठ आश्रितः। स्वामिना एतत्स्थलं पुनः परित्यज्य दातारमठात् पश्चिमायां दिशि अव्यवहितस्थितस्य भग्नप्रायस्य द्रविडकृष्णशास्त्रिस्वामिकस्य गृहे वेदान्तप्रवचनं नित्यं पुनः प्रवर्तितम्। ततः पुनः कालान्तरेण तदपि स्थानं त्यक्त्वा दातारमठादाग्नेय्यां दिशि नवीकृतस्य मारुतिमन्दिरस्य द्वितीयतले प्रस्थानत्रयपाठपद्देहावसानपर्यन्तम्। वयं प्रत्यहं तत्र प्रणामार्थमगच्छाम।"

"एकदा एकादश्यां तिथौ भाष्यपाठश्रवणेच्छावशात प्रज्ञानन्दस्वामिनः सन्निधावह-मगमम्। 'नाहं मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्तद्वेद तद्वेद नो न वेदेति वेद च॥' इत्येतत्केनोपनिषद्वचनभाष्यस्य प्रवचनं गुरुणा समापितं पाठान्ते। अध्या-त्मानुभवसारभूतं वाक्यमेतत्। ब्रह्मानुभवस्वरूपाविष्कारकं माहात्म्यमस्मिन्वाक्येऽस्ति। आत्मानुभवानुप्राणिते भाषणे प्रवीण आसीत्प्रज्ञानन्दस्वामी। नारायणशास्त्री तस्य लक्ष्य आसीत्। एतादृशाः श्येना इव अप्रमादेनैव लक्ष्यवेधिनो लक्ष्यान्वेषणे कुशला भवन्ति। विद्धो लक्ष्यः कल्याणमृच्छति। मम स्वामी बहुमानेन मां निर्दिशति स्म। अहं

आ शैशवाद्वेदान्तानुकूलचित्तवृत्तिरासम् । तत्केनोपनिषद्वाक्यप्रवचनं श्रुत्वैव नारायणशास्त्रिणः बुद्धिस्तन्मयी* जाता । 'वाक्यादेवापरोक्षधीः' इति सद्गुरुकृपैव फलिता ।"

"काशीतो रामेश्वरपर्यन्तं मत्स्वामिनः शारीरकभाष्यप्रवचनख्यातिः प्रसृताऽऽसीत् । बहवो विद्वांसो वाईनगरमागत्य मत्स्वामिनो दर्शनं तत्प्रवचनश्रवणं च कृत्वैव प्रतिन्यवर्तन्त । रात्रौ एकान्तसमये सामानि गायन् 'विट्ठल विट्ठल, जय जय विट्ठल' इति भगवन्नामसंकीर्तनं वा कुर्वन् मत्स्वामी ईश्वरप्रणिधाने रत आसीत् । वाईग्रामे प्लेगोपद्रव उद्भूतः शके १८२६ आश्विने मासि । तस्मिन्नेव मासि शुद्धाष्टम्यां तिथौ प्लेगसंसर्गदोषात् त्रिदोषग्रस्तमिमं देहं हित्वा मम स्वामी ब्रह्मण्यनन्ते लीनः । तदनन्तरं शके १८२७ संवत्सरमारभ्य शांकरगीतोपनिषद्ब्रह्मसूत्रभाष्यप्रवचनायाहं प्रवृत्तः ।"

"स्वाध्यायप्रवचनयोस्तपस्येव च आयुः क्षपणीयं इति अहं निरदीधरं वयसः त्रयोविंशतितमे वर्षे शारीरिकम्, मानसिकम्, बौद्धिकं च बलमनुकूलमिति मत्वा । गृहाश्रमो नावलम्बनीय इत्यपि निरचिनवम् । विना द्रव्यार्जनं न गृहाश्रमः कर्तुं पार्यते, द्रव्यार्जनं च प्रायः सव्याजपूजया लाङ्गूलचालनेन स्वाभिमानराहित्येन च दोषेण विना कर्तुं न पार्यते इत्यहमदर्शम् । अतिदुःसहं पारतन्त्र्यम्, तस्मिन् स्वोन्नतिर्न शक्येति वारंवारं अमंसि. प्रत्यज्ञासि च यावज्जीवं भिक्षया वर्तिष्य इति । त्रयोविंशतितमं वर्षमारभ्य त्रिपञ्चाशद्वर्षपर्यन्तं संन्यासग्रहणक्षणावधि अध्यापनं तप इति मत्वा निरवर्तयम् । स्नानं संध्यां योगाभ्यासं तृतीयप्रहरादौ भिक्षां भोजनं निद्रां च विहाय मम सर्वः कालोऽध्ययनाध्यापनयोर्व्यतीतः । मध्ये मध्ये प्रसङ्गानुसारेण सामाजिके राजकीये चान्दोलनेऽपि किञ्चित्कार्यं मया कृतम् ।"

अयमंशः अस्मद्गुरोः केवलानन्दस्य मराठीभाषायां लिखितात्स्वात्मचरित्रादुद्धृत्यात्र संस्कृतेऽनूद्य च निवेदितः ।

ईसवीयवत्सरे १९०१ अस्मद्गुरुणा अध्यापनं प्रारब्धं गोडबोलेकुलनाम्नः सत्-स्मट्टस्य गृहे स्थितिं लब्ध्वा । त्रयस्त्रयो वा विद्यार्थिनः संस्कृताध्ययनार्थं प्रथममागताः । वर्षपञ्चकादुत्तरं तेन गोडबोले-गृहं त्यक्त्वा गङ्गापुर्यां कृष्णातीरस्थप्रस्तरघट्टसन्निधौ वर्तमाने स्वगुरुस्थाने निवासार्थमेत्य प्राज्ञमठाख्या संस्कृतपाठशाला स्थापिता । अस्यां पाठशालायां सामान्यतस्त्रिंशत्संख्याका विद्यार्थिनो न्यवसन्, पञ्चमहाकाव्यानि, वैष्णवभागवतम्, व्याकरणम्, वेदान्तम्, न्यायम्, धर्मशास्त्रमन्यानि च दर्शनानि अध्यैयत च । उत्तमश्रेणीप्रविष्टास्ते प्रथमश्रेणीगतान् विद्यार्थिनः अपाठयन् आचार्यकार्यभागं लघूकर्तुम् । एतेऽध्ययनाध्यापनयो रता विद्यार्थिनः क्रमशः शिक्षिता अध्यापनकार्यकौशल्यमपि प्राप्नुवन् । दीपाद्दीपान्तरमिव आचार्यादन्य आचार्योऽनया शिक्षाप्रणाल्या प्रादुरभूत् । भारतीयप्राचीनपद्धतिमनुरुध्यैव प्राज्ञमठे शिक्षाविधिरनुसृतः । परन्तु कालतो दार्ढ्येन पाठधारणस्य महिमा प्राचीनपद्धत्यां यावता आग्रहेण धृत

* ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविध. स्मृत. । भगवद्गीता १७।२३.

आसीत्तानानाग्रहः अस्मदाचार्येण नावलम्बितः । अतः कण्ठतः कोपधारणं परित्यक्तम् । कोपपाठस्थाने अन्यत्साहित्यं कण्ठतो धारणार्थमध्यापनविषयेषु निवेशितम् । कालिदासादिषूपलभ्यमानोत्तानशृङ्गारोऽपि पाठ्यविषयक्रमाद्वर्जितः । केचिदाधुनिका अपि विषया इतिहासभूगोललौकिकसाहित्यपदार्थविज्ञानादयः पाठ्यक्रमे निवेशिताः । लौकिकव्यवहारे आधुनिकपश्चिमदेशोद्भूतसंस्कृतेश्च ज्ञानमावश्यकमिति हृदि निधाय तद्विषयाणि पुस्तकानि च पाठ्यक्रमेऽन्तर्भावितानि । शास्त्री धर्मोपदेशकश्च वर्तमानदेशकालपरिस्थितिज्ञो यथा भवेत्तथाविधः शिक्षाक्रमोऽस्मदाचार्येण नारायणशास्त्रिणा स्वसंस्थायाः कृते अङ्गीकृतः ।

प्राज्ञमठ-प्राज्ञपाठशालाख्यां यथा प्राप्तस्तद्वृत्तान्तसारमात्रं कथ्यते । 'समर्थविद्यालयः' इति नाम्ना विश्रुता राष्ट्रीयपाठशाला पुण्यपत्तनमण्डलस्य 'तळेगावदाभाडे' ग्रामसंनिहितवने स्थापिताऽऽसीत् विष्णुं गोविन्दपुत्रं विजापूरकरकुलोद्भवं पुरस्कृत्य कैश्चित् स्वदेशं वैदेशिकपारतन्त्र्यादुद्दिधीर्षुभिराधुनिकशिक्षितैः । ईशवीये १९१० वत्सरे ब्रिटिशप्रभुभिः 'समर्थविद्यालयः आङ्ग्लसाम्राज्यविरोधं ब्रिटिशप्रभुत्वस्य विद्रोहं च राष्ट्रीयशिक्षामिषेण अध्यापयति' इत्यपराधमारोप्य विध्वंसितः । ततस्तत्र कतिपयाः प्रौढा विद्यार्थिनः प्राज्ञमठमागत्य राष्ट्रीयशिक्षाप्रणाल्याः पुनः प्रवर्तनार्थं वेदान्ताध्ययनार्थं च न्यवसन् । स्वदेशनिर्मितमात्रवस्तुक्रयणं परदेशनिष्पन्नवस्तुबहिष्कारः स्वराज्यार्थप्रयत्नो राष्ट्रीयशिक्षाप्रवर्तनं चेति चतुर्विधं कार्यक्रममादृत्य वर्तितव्यमिति एतेषां विद्यार्थिनां समुद्दिष्टमासीत् । तेषु कानडेकुलनामा दिनकरशास्त्री, दिवेकरकुलनामा महादेवशास्त्री च राष्ट्रीयशिक्षाप्रणाल्या प्राज्ञमठे अध्ययनं प्रवर्तनीयमिति मनसि निधाय मुख्याचार्यं नारायणशास्त्रिणं प्रति साहाय्यमकुरुताम् । ईशवीये १९१६ वत्सरे सप्टेम्बरमासे शके १८३६ संवत्सरे आश्विने मासि विजयादशम्यां प्राज्ञमठस्य प्राज्ञपाठशाला इति नामकरणं कृतम् ।

विद्यार्थिनां यत्र विद्याधिगमस्तत्र जीवनम्, न प्रातिस्विके गृहे वासः पाठशालायां च अध्ययनमित्येवं नियमः अस्याः पाठशालायाः कृते विहितः । विद्यार्थिनां वसतिगृहे प्रातरारभ्य रात्रौ शयनपर्यन्तं विद्यार्थिना विविधाचरणस्य विशिष्टा पद्धतिरप्यनुशासिता । सा यथा— प्रातः उषःकाले प्रबोधनसमनन्तरं प्रातःस्मरणीयस्य वैदिकस्य सूक्तस्य, देवतास्तोत्राणां राष्ट्रभक्तिभावान्वितगीतानां च सर्वैर्विद्यार्थिभिर्नियतसमय उत्थितैरेकतानस्थाय पठनम्, दन्तधावनादिशौचक्रिया, शीतोदकस्नानम्, संध्यावन्दनम्, सूर्यनमस्कारादिव्यायामः, शिक्षकाणां शिष्याणां च सामूहिकी प्रार्थना, मध्याह्नभोजनसमयपर्यन्तं माध्यमिकशिक्षाकार्यक्रमानुसारेण उच्चशिक्षाक्रमानुसारेण च वर्गभेदेन पाठग्रहणम्, सर्वेषां सहभोजनम्, मध्याह्ने भोजनोत्तरं विश्रमः, पुनश्च पाठग्रहणं सन्ध्यासमयपर्यन्तम्, सन्ध्यासमये शारीरव्यायामपरा क्रीडा प्राङ्गणे व्यायामगृहे वा, सायंसंध्यावन्दनम्, रात्रिभोजनम्, स्वाध्यायः, शयनं च इत्येवंप्रकारेण विरामदिवस-

व्यतिरिक्तेषु दिवसेषु अध्यापकानामध्याप्यानां च कालविभागेन कार्याणि क्रमनियतानि कृतानि ।

वैदेशिकाङ्ग्लराज्यपारतन्त्र्येण समुत्पन्ना ये दोषाः स्वात्मविश्वासनाशः, प्रज्ञाहानिः, ऐक्यभावनालोपः, परावलम्बनमित्यादयस्तेषां समूलमुत्खननकरी, भारतीयानां स्वधर्मेषु स्वपरंपरागतसंस्कृतौ शास्त्ररीतिधर्मेषु च विवेकयुक्तश्रद्धोत्पादिका या सा राष्ट्रीयशिक्षेति व्याख्याता प्राज्ञपाठशालासंस्थापकैः । पारतन्त्र्येण मृतप्रायस्य राष्ट्रस्य संजीवनं यथा स्यात्तथा नवीनानां विचाराणां प्रवर्तका देशकालपरिस्थितिभेदानुसारेण परंपरापरिवर्तनाय विवेचकबुद्धियादमाश्रिताः भगवद्भक्तेः राष्ट्रभक्तेश्च समन्वयकारिणा दृढशुद्धभावेन समुपबृंहितचित्ताः शीलवन्तोऽन्यपरंपराविध्वंसिनः परंपरागतसंस्कृतिमूलतत्त्वानामेव संरक्षणाय संनद्धाः पण्डिता धर्मोपदेशका नागरिका एव पारतन्त्र्येण विपन्नस्य दुर्बलस्य भारतराष्ट्रस्य समुद्धाराय प्रभवेयुरिति तादृशनागरिकनिर्माणमेव राष्ट्रीयशिक्षोद्देश इति समुद्घोषितो राष्ट्रीयशिक्षासिद्धान्तः प्राज्ञपाठशालासंस्थापकैः । आङ्ग्लप्रणीतशिक्षापद्धति-र्वैदेशिकराज्यसेवकनिर्माणयन्त्रमिति सा पद्धतिर्हेया, परन्तु आङ्ग्लभाषासाहित्यान्तर्गतज्ञान-विज्ञानकलाः सर्वथा संग्राह्याः, यतः पाश्चात्त्यज्ञानविज्ञानकलानां परिग्रहेणैव बलशालिनो नवजीवनसंपन्नस्य भारतराष्ट्रस्योदयः संभवति, नान्यथा इति तेषां निश्चय आसीत् । किञ्च या हि आधुनिकविद्याकलासंस्कृतिविमुखानां भारतीयपरंपरागतपूर्वतनाचारविचारानेव सारसर्वस्वं मन्यमानानां 'सामाजिकरूढिरेव पवित्रा कल्याणकारिणी, तद्विरोधः पापावहः' इति श्रद्धावतां मार्गेण न भारतः समुन्नतिपथं प्राप्नुयादित्यपि तैर्निर्णीतमासीत् ।

प्रथमजागतिकमहायुद्धोत्तरं भारते राष्ट्रस्वातन्त्र्यप्राप्तये परंपरागतसामाजिकरूढि-परिवर्तनाय च आन्दोलने प्रवृत्ते, ययोरान्दोलनयोर्महात्मा गान्धी प्रधाननेताऽभवत् । प्राज्ञपाठशालाशिक्षकाः शिष्याश्च राष्ट्रीयस्वातन्त्र्यान्दोलने सामाजिकधार्मिकपरिवर्तना-न्दोलने च माहात्म्यं नेतृत्वं चाऽऽचरितवन्तः । नारायणशास्त्रिणा तच्छिष्यमहादेव-शास्त्रिलक्ष्मणशास्त्रिभ्यां च सामाजिकपरिवर्तनान्दोलने मुख्यतः धार्मिकाणां सभासु सामाजिकपरिवर्तनस्य धर्मशास्त्रग्रन्थानालोड्य तर्कपरिबृंहितं समर्थनं कृतमिति परिवर्तनवादिपक्षः अपरिवर्तनवादिरूढिनिष्ठपक्ष इति पक्षद्वयं संस्कृतपण्डितेषु समु-द्भूतम् । धार्मिकसामाजिकसंस्थासु आचारमार्गे च परिवर्तनं न मूलतो धर्मविघातकम्, प्रत्युत धार्मिकतत्त्वसामर्थ्यवृद्धये एव प्रभवति इत्येवंविधां विचारसरणीमनुसृत्य परिवर्तनवादिपक्षे बहवो विद्वांसो महाराष्ट्रे प्रविष्टाः । धर्मशास्त्रेतिहासकारः काणे इत्युपाह्वः वामनसूनुः पाण्डुरङ्गः, दप्तरीत्युपाह्वः लक्ष्मणपुत्रः केशवः नागपूरस्थः, पाठकः श्रीधरशास्त्री, चित्रावः सिद्धेश्वरशास्त्री, भिडे सदाशिवशास्त्री, चापेकरेत्युपाह्वो गोविन्दपुत्रो नारायणः, कोगजे रघुनाथशास्त्री इत्यादिभिः धर्मशास्त्रविद्भिः पण्डितैः नैष्ठिकब्रह्मचारिणस्तपोविद्यावदातचित्तस्य नारायणशास्त्रिणो नेतृत्वं स्वीकृत्य धार्मिकेषु सामाजिकेषु चाचारेषु आधुनिककालमनुसृत्य परिवर्तनमपरिहार्यमादरणीयं चेति उद्घोष्य परिवर्तनान्दोलनं प्रचारितम् । हिंदुसमाजगतानां जातीनामुपजातीनां च

परस्परं सहभोजनं विवाहश्च संभवः कृतोऽनेन परिवर्तनपक्षेण । गांधीमहात्मना प्रवर्तितास्पृश्यत्वोच्छेदनान्दोलनोपोद्बलनार्थैतैः पण्डितैरावेदितम् — अन्त्यजा इति स्मृतिशास्त्रे निर्दिष्टानां जातीनामस्पृश्यता चातुर्वर्ण्येन परम्परया समाचरिता सर्वेण हिन्दुसमाजेनोच्छेद्येति । उपनयनविवाहादिसंस्काराः सर्वैर्हिन्दुभिः वैदिकमन्त्रैः गृह्यसूत्रानुसारेण कार्याः इत्यभ्युपगतमेतेन धर्मपरिवर्तनवादिपक्षेण । तेषां संस्कारकर्मणां दीर्घविस्तारं परिहाय यथा अनुष्ठानं कर्तव्यं तथा संक्षिप्ता पद्धतिरपि नारायणशास्त्रिणा प्रणीता संन्यासाश्रमप्रवेशानन्तरं केवलानन्देस्वामिरूयां प्राप्तेन ।

सनातनमतावलम्बिनोऽपरिवर्तनवादपक्षीयाः पण्डिताः स्मृतिपूपलभ्यमानानां जात्याद्याचारधर्माणामदृष्टफलकत्वान्मनुष्यबुद्ध्या परिवर्तनं न सहन्ते । अदृष्टफलकार्यकारणभावो मनुष्यबुद्धेरगम्य इति निर्धार्य स्मृतिशास्त्रेपूपलभ्यानां परस्परविरुद्धवचनानां पूर्वमीमांसोक्तपद्धत्या विरोधपरिहारं भिन्नस्मृतीनां समन्वयं च स्थापयन्ति, सर्वेषां स्मृत्यविरोधिनां कुलधर्मदेशधर्मजात्यादिधर्माणां रूढिस्वीकृतानामपि सनातनत्वमपरिवर्तनीयत्वं च मन्यते । एतद्विरोधेन परिवर्तनवादिपक्षः पूर्वमीमांसोक्तपद्धत्या विरोधपरिहारेऽपरितुष्यन् ऐतिहासिकपद्धतिमङ्गीकरोति, जात्याद्याचारपरिवर्तनं च समर्थयति — यथा युगे युगे ऋषिभिर्वा शिष्टैर्वा जनैर्वा तत्तद्देशकालपरिस्थितिविशेषानुसारेण लोकहितार्थमनुष्ठातृशक्तिभेदमधिकारभेदं चावेक्ष्य परम्परागता धर्माचाराः परिवर्तिताः नवीनाश्च प्रवर्तिताः, तथा अधुनाप्याधुनिकैर्विद्वद्भिः सद्भिः परिवर्तनीयाः प्रवर्तनीयाश्चेति ।

अस्मद्गुरुचरणैः परिवर्तनवादपक्षसमर्थनाय ऐतिहासिकपद्धतिरङ्गीकृता । ऐतिहासिकपद्धतिसमर्थनाय धर्मशास्त्रप्रमाणानामन्वेषणप्रवृत्तास्ते वेदस्मृतिपुराणानां वचनसंग्रहः साकल्येन कर्तुमिष्ट इति विचार्य धर्मकोशकार्यालयं प्राज्ञपाठशालामण्डलसंस्थाद्वारा स्थापितवन्तः ईशवीये १९२७ तमे वत्सरे केषाञ्चिदन्तेवासिनां साहाय्येन । ईशवीये १९३१ तमे वत्सरे एतद्धर्मकोशकार्यस्य प्रत्यवायपरिहाराय ऐकाग्र्येण निर्वर्तनाय च संकल्पितम् — यत् माध्यमिकशिक्षाशाखा प्राज्ञपाठशालाङ्गभूता न रक्षणीया, चित्तविक्षेपहेतुत्वादल्पफलत्वाच्च । अल्पफलत्वं च माध्यमिकशिक्षाया हि य उद्देशः प्राचीनभारतीयसंस्कृतितत्त्वरक्षणानुरोधेन राष्ट्रीयशीलशालिनो नागरिका निर्मातव्याः इति तमुद्देशं श्रद्दधानाः शिक्षका न लभ्यन्ते माध्यमिकशिक्षानिर्वाहार्थमिति । अतः माध्यमिकशिक्षाशाखाकार्यमितः परं नाङ्गीकरणीयमिति । इदं नारायणशास्त्रिपादानां मतं नादृतं तत्सहकारिभिरन्यैः संस्थाकार्यवाहैः । अतः प्राज्ञपाठशालामण्डलसंस्थायाः अध्यक्षपदं सदस्यत्वं च सर्वथा परित्यक्तमाचार्यचरणैः । ततश्च ते शके १८५३ विजयादशम्यां ( ईशवीयाब्दे १९३१ तमे ऑक्टोबरमासे २२ दिनाङ्के ) प्रातः परिव्राजकाश्रमं प्रविष्टाः ।

प्राज्ञपाठशालासंस्थापपञ्चाविवृत्तेषु गुरुचरणेषु संस्थायाः सर्वः कार्यभारः मयि न्यस्तः प्राज्ञपाठशालामण्डलकार्यकर्तृभिस्तदध्यक्षपदं मह्यं दत्त्वा । माध्यमिकशिक्षाशाखा

तत्स्रष्टव्या इत्येतत् गुरुचरणमतं मुक्तमासीदिति मया वर्षत्रयादूर्ध्वं स्वीकृत्य तच्छाला-कार्यं सर्वेषामैकमत्येन विरमितम्, धर्मकोशकार्यं संस्कृतविद्याशिक्षाकार्यं च अनुवर्तित-मचयायत् । गुरुचरणाश्च तदुत्तरं परिव्राजकाश्रमस्यायामैकाग्र्येण जैमिनीयबादरायणीय-मीमांसयोर्मनने, तदनुसंधानेन ग्रन्थलेखने, ब्रह्मचिन्तने, ध्यानयोगाभ्यासे च चिरं स्थिताः। प्राप्ते च प्रयाणसमये दीर्घकालं निरन्तरं निरन्वयं च जपितस्य प्रणवस्यैकाक्षरब्रह्मणो व्याहारमुच्चैः कृत्वा केवले ब्रह्मणि लीनाः। तैः प्रणीतग्रन्थानां मुद्रणप्रकाशनकार्यस्य कर्तव्यता प्राज्ञपाठशालामण्डलसंस्थया गुरुचरणानामृणापाकरणाय स्वीकृताऽस्तीति।

तदेतस्य गुरुचरणचरित्रसारस्य संक्षिप्य निवेदनं परिसमाप्यते ।

लक्ष्मणशास्त्री जोशी

अध्यक्षः प्राज्ञपाठशालामण्डलस्य

वाई नगरी

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च।

अद्वैत—अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता।

अद्वैत. चं —अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम।

अलंकार —भाट्टालङ्कारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता। चौखम्बाया १९२१ सने मुद्रितः।

आचारमयूखः—श्री. व. र. घारपुरे प्रकाशितः, मुम्बई।

आपध—आपस्तम्बधर्मसूत्रम्। प्रश्न°, कण्डिका, सूत्र इति अङ्कत्रयम्।

आपस्तम्बाचार्यः—प्रसिद्धः कल्पसूत्रकार°।

आभरणम्—शाङ्करशारीरकभाष्यस्य टीका। अध्याय-पाद-सूत्राङ्काः। क्वचित् तृतीयोऽङ्कः अधिकरणस्य।

आर्षेयब्राह्मणम्— सामवेदीयम्।

आश्व. गृ — आश्वलायनगृह्यसूत्रम्, तदन्या नारायणवृत्तिश्च।

आश्व. श्रौ — आश्वलायनश्रौतसूत्रम्। पुण्यपत्तनस्थानन्दाश्रमे मुद्रितम्।

इ— इत्यादि।

उपदेशसाहस्री— श्रीशंकराचार्यप्रणीता। रामतीर्थः टीकाकारः। प्रकरणश्लोकाङ्कौ गद्य पद्य च।

ऋजु— ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता। चौखम्बाया १९२९ सने मुद्रिता।

ऋसं— ऋग्वेदसंहिता। मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम्।

ऐब्रा— ऐतरेयब्राह्मणम्। पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम्। अध्यायः, खण्डः, सूत्रं इत्यङ्कत्रयम्।

ऐब्रासा— ऐतरेयब्राह्मणस्य सायणप्रणीतं भाष्यम्। पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम्।

कठोप— कठोपनिषत्।

कणादसूत्रम्— वैशेषिकदर्शनम्। अध्याय-आह्निक-सूत्राणामङ्काः।

कणिका —न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता। काशी मेडिकल्‌हॉल-मुद्रणालये १९०७ सने मुद्रिता।

कर्क— कर्काचार्यः, कात्यायनश्रौतसूत्रस्य भाष्यकारः।

कल्पतरु — भामत्याः टीका। अमलानन्दसरस्वतीप्रणीतः, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः। अध्याय°, पाद°, सूत्र इत्यङ्कत्रयम्।

कस्तूरि— कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः । १९०८ सने मैसूरनगरे मुद्रिता । सा च भाट्टदीपिकापुस्तके एव मुद्रिता ।

कातीयसूत्रम्— कात्यायनश्रौतसूत्रम् ।

काशीखण्डः— स्कन्दपुराणान्तर्गतः । रामानन्दः टीकाकारः । अध्याय-श्लोकाङ्कौ ।

कासं— काठकसंहिता ।

कु, कुतूहलम्— अध्वरमीमांसाकुतूहलवृत्तिः श्रीवासुदेवदीक्षितविरचिता श्रीरङ्ग-वाणीविलासे मुद्रिता । अध्याय, पाद., अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

के— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

कैयटः— व्याकरणमहाभाष्यस्य टीकाकार. । काश्यां मुद्रितः ।

कौ., कौस्तुभ— मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः, अधिकरणम्, सूत्र इत्यङ्कचतुष्टय पृष्ठाङ्कश्च ।

कौब्रा— कौषीतकिब्राह्मणम् । पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

चन्द्रिका— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

जै— जैमिनिकृतद्वादशलक्षणी । अध्यायः, पादः, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम् ।

जैब्रा— जैमिनिब्राह्मण सामवेदीयम् ।

टुप्— टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम्, पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३३ सनादौ मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् ।

तत्त्व, तत्त्वप्रकाशिका— परिभाषेन्दुशेखरटीकायाः भूतेः टीका । २००२ संवति काश्यां मुद्रिता ।

तत्त्वबोधिनी— सिद्धान्तकौमुद्याः टीका निर्णयसागरीया १९२९ सने मुद्रिता ।

तन्त्ररत्नम्— टुप्टीकायाः पार्थसारथिप्रणीता टीका । लिखिता । अध्याय, पादः, अधिकरणम्, सूत्र चेति अङ्कचतुष्टयम् ।

ताण्ड्य— ताण्ड्यब्राह्मण पञ्चविंश नाम । अध्यायः, खण्डः, सूत्र चेति अङ्कत्रयम् ।

ताण्ड्यसा— ताण्ड्यब्राह्मणस्य सायणप्रणीत भाष्यम् ।

तैसं— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकः इत्यङ्कत्रयम् ।

तैसंसा— तैत्तिरीयसंहितायाः सायणभाष्यम् ।

तौता— तौतातितमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूप. अधिकरणरचनात्मकः । काश्यां मुद्रित. ।

नीतिमयूखः— श्री. ज. र. घारपुरे- प्रकाशितः, मुम्बई । पृष्ठाङ्कः ।

निरुक्त— यास्काचार्यप्रणीत निरुक्तम् । अध्यायः खण्डश्च ।

नृ. पू. भा— नृसिंहपूर्वतापिन्याः भाष्यं शाङ्करम् ।

न्यायनि— न्यायनिर्णय नाम शाङ्करशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय-पाद-सूत्राङ्का. ।

न्या. माला— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

न्या. सू— न्यायदर्शनसूत्रम् । अध्याय, आह्निकम्, सूत्र इति त्रयोऽङ्काः ।

पं— पङ्क्तिः ।

पञ्जिका— प्रकरणपञ्जिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी । अनेकप्रकरणात्मको ग्रन्थः । चौखम्बायां मुद्रितः ।

पराक्रमः— उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखितः । पत्रम्, पृष्ठं इत्यङ्कद्वयम् ।

परि— परिभाषा । क्रमाङ्कः ।

परिभाषेन्दुः— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः ।

परिमल— भामतीटीकायाः कल्पतरोः टीका । अप्पय्यदीक्षितविरचितः मोहमय्यां निर्णयसागरे १९१७ सने मुद्रितः ।

पा— पाणिनिः । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

पुरुषार्थचिन्तामणिः— श्रीविष्णुभट्टविरचितः । मोहमय्यां मुद्रितः ।

पृ— पृष्ठम् ।

प्र. पञ्जिका— प्रकरणपञ्जिका श्रीशालिकनाथप्रणीता । काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता ।

प्र. वि— प्रभाकरविजयः नन्दीश्वरविरचितः । कलिकातायां १९२७ सने मुद्रितः ।

प्रा. मयूखः— प्रायश्चित्तमयूखः । भ. र. घारपुरे- प्रकाशितः । पृष्ठाङ्कः ।

बाल— भाट्टमीमांसाप्रकाशः शंकरभट्टप्रणीतः । काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रितः ।

बिन्दुः— न्यायबिन्दुः तत्त्वबुधाख्यवैद्यनाथप्रणीतः । मुम्बई गुजरातीमुद्रणालये १९१६ सने मुद्रितः ।

बृहती— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका । नव्यप्राभाकरमतमत्र । चौखम्बायां १९२९ सने मुद्रिता ।

बृहस्पतिः— बृहस्पतिस्मृतिः ।

बौध— बौधायनधर्मसूत्रम् । प्रश्नः पटलं सूत्रं च ।

ब्रसू— ब्रह्मसूत्रम् । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

भगी— भगवद्गीता । अध्यायः श्लोकश्च ।

भट्टसोमेश्वरः— तन्त्रवार्तिकटीकायाः न्यायसुधायाः कर्ता ।

भा— शाबरभाष्यम् । आनन्दाश्रमे मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रं इत्यङ्कचतुष्टयम् । क्वचित् पृष्ठाङ्कः अधिकः ।

भाट्ट— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर् १९०८ सने मुद्रिता । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

भाट्टालंकारः— न्यायमीमांसाप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

भामती— श्रीवाचस्पतिमिश्रप्रणीता शाङ्करशारीरकभाष्यस्य टीका । मुम्बई निर्णयसागरे १९१७ सने मुद्रिता ।

भावनाविवेकः— मण्डनाचार्यप्रणीत काश्यां १९२३ सने मुद्रितः।

भूतिः— परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्रीपटवर्धनप्रणीता । काश्यां २००२ संवति मुद्रिता।

मणि— भाट्टचिन्तामणिः गागाभट्टविरचित । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रित ।

मण्डन— मण्डनमिश्रकृता मीमांसानुक्रमणी । चौखम्बायां १९२९ सने मुद्रिता।

मीको— मीमांसाकोशः ।

माघ— माघकविकृत शिशुपालवधं नाम महाकाव्यम् । सर्गः, श्लोकः इत्यङ्कद्वयम्।

मीन्या— मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीत. । चौखम्बायां १९२० सने मुद्रितः ।

मीमांसाजीवरक्षा— प्राभाकरमतानुसारिणी शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके अन्ते काश्यां १९०४ सने मुद्रिता ।

मुरारि.— अङ्गत्वनिरुक्तिकर्ता । आनन्दाश्रमीये मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता ।

मेधातिथिः— मनुस्मृतेः भाष्यकारः ।

याज्ञ, यास्मृ— याज्ञवल्क्यस्मृतिः । अध्याय॰, श्लोकः इति द्वौ अङ्कौ ।

रत्न, तन्त्ररत्न— तन्त्ररत्नम् । पार्थसारथिमिश्रप्रणीतम् । टुप्टीकावार्तिकस्य टीका । लिखिता । अध्याय , पाद॰, अधिकरणम्, सूत्र इत्यङ्कचतुष्टयम्।

रत्नमाला— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

रत्नाकरः— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता । चौखम्बायां १८९८ सने मुद्रित॰ ।

रसायनम्— विधिरसायन अप्पय्यदीक्षितप्रणीतम् । चौखम्बायां १९०१ सने मुद्रितम् ।

रहस्य— माहरहस्य श्रीखण्डदेवप्रणीतम् । शाब्दबोधविषयकम् । काञ्चीनगरे मुद्रितम् ।

लाट्या— लाट्यायनश्रौतसूत्रम् । कलिकातायां १८७२ सने मुद्रितम् ।

वा— तन्त्रवार्तिक आचार्यकुमारिलभट्टविरचित शाबरभाष्यस्य विवरणात्मकम् । पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९२१ सने मुद्रितम् । अध्याय , पादः, अधिकरणम्, सूत्र चेति अङ्कचतुष्टयम् ।

वाक्यार्थ— वाक्यार्थमातृकावृत्तिः शालिकनाथप्रणीता । प्रकरणपञ्चिकापुस्तके एव अन्ते १९०३ सने मुद्रिता ।

वाध— वासिष्ठधर्मसूत्रम् ।

वि— जैमिनीयन्यायमालाविस्तर॰ सायणमाधवाचार्यप्रणीत. । पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रित. । अध्याय., पाद॰, अधिकरण चेति अङ्कत्रयम् ।

विट्ठल— विट्ठलेशी अद्वैतसिद्धेः चन्द्रिकाटीकायाः टीका । निर्णयसागरे १९१६ सने मुद्रिता ।

विधि— विधिविवेकः मण्डनाचार्यप्रणीतः । काश्यां मेडिकल्हॉल्मुद्रणालये १९०७ सने मुद्रित. ।

वृ— मीमांसासूत्रवृत्तिः सुबोधिनी नाम रामेश्वरसूरिविरचिता । काश्यां मेडिकल्हॉलमुद्रणालये १९२३ सने मुद्रिता ।

वैजयन्ती— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः । पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता ।

वैद्यनाथः— शाबरभाष्यीयतर्कपादस्य टीकाकारः । आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम ।

वैद्यनाथी— वैद्यनाथकृता शाबरभाष्यस्य टीका ।

व्यवहारमयूख.— श्री ज. र. घारपुरे- प्रकाशितः मुम्बई ।

शंकर— शंकरभट्टकृतः मीमांसासारसंग्रहः । काश्यां विद्याविलासमुद्रणालये प्रकरणपञ्चिका-पुस्तकान्ते १९०४ सने मुद्रितः ।

शब्दकौस्तुभ — भट्टोजीदीक्षितप्रणीतः ।

शांभा— शांकरं भाष्यम् । अध्यायः, पादः, सूत्रं चेत्यङ्कत्रयम् । चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य ।

शांश्रौ— शाङ्खायनश्रौतसूत्रम् । अध्यायः, खण्डः, सूत्रं च । कलिकातायां १८८८ सने मुद्रितं सभाष्यम् ।

शा— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता । निर्णयसागरे १९१५ सने मुद्रिता । अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

शास्त्रप्रकाशिका— बृहदारण्यकोपनिषच्छांकरभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता ।

शेखर— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः भूत्यादिसहितः ।

श्राद्धमयूखः— श्री ज. र. घारपुरे- प्रकाशितः मुम्बई ।

श्रीकर— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी ।

श्लोवा— श्लोकवार्तिकं आचार्यकुमारिलभट्टविरचितम् । तर्कपादः । चौखम्बायां १८९८ सने मुद्रितम् ।

संकर्ष— सङ्कर्षकाण्डम् । भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः । काश्यां मेडिकल्हॉलमुद्रणालये १८९४ सने मुद्रिता ।

संक्षेपशारीरकम्— रामतीर्थकृतटीकासहितम् । अध्यायः, श्लोकः इति अङ्कद्वयम् ।

संग्रह— न्यायसंग्रहः । लिखितः ।

सत्याषाढ.— तैत्तिरीयहिरण्यकेशिशाखीयकल्पसूत्रं आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सत्याश्रौ— सत्याषाढीयं श्रौतसूत्रम् । आनन्दाश्रमे १९०७ सने मुद्रितम् ।

सदसं— सर्वदर्शनसंग्रहः ।

सना. ध. प्र— सनातनधर्मप्रदीपः । श्रीकुरुन्दवाडकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः ।

समयमयूख — श्री व र घारपुरे इत्येतैः प्रकाशित, मुम्बई।

साहस्री— भुवनेशलौकिकन्यायसाहस्री। मुम्बई श्रीवेङ्कटेश्वरे मुद्रित शक १८३०। साहस्रया यो न्यायनम्बाङ्को निवेशित स एवास्माभि प्रदत्तो।

सिद्धान्तकौमुदी— भट्टोजीदीक्षितप्रणीता। निर्णयसागरे १९२१ सने मुद्रिता।

सिद्धान्तचन्द्रिका— तर्कपादस्थशास्त्रदीपिकाया टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता।

सु, सुधा— न्यायसुधा भट्टसोमेश्वरविरचिता राणकापरपर्याया तन्त्रवार्तिकस्य टीका चौखम्बायां मुद्रिता। अत्र पृष्ठाङ्का एव केवलमुपन्यस्ता। यत्र च 'सु ३।७ पृ' इति स्यात् तत्र सुधाया तृतीयाध्यायस्य सप्तमाष्टमपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठ अमुक इत्यर्थः। तत्र भागे किल पृथगेव अङ्का मुद्रिता आदित आरभ्य।

सोम— सोमनाथी मयूखमालिका शास्त्रदीपिकाटीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता। निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता। अत्र अध्याय, पाद, अधिकरण इति अङ्कत्रयम्।

## प

* 'पक्षान्तरैरपि परिहारा भवन्ति'। अन्यथा कृत्वा दोष उक्तः, अन्यथा परिहारः। दार्शपौर्णमासिको प्रायश्चीयकाल इति कृत्वा दोष उक्तः। नैयमिक इति परिहारः। भा. १२।२।६।२०. * 'पक्षान्तरैरपि परिहारा भवन्ति' इति महाभाष्यं कल्पसूत्रे। अत्र कैयट.- यथा द्रव्यपक्षे सरूपाणा इत्यस्यारम्भ., जातिपक्षे तु प्रत्याख्यानम्। इति। पक्षान्तरैरपि० वार्तिककृता एवमुक्त इति विवरणम्। के * 'पक्षान्तरैरपि परिहारा भवन्ति'। 'विभाषा छन्दसि' इति नैकस्वर्यमेकश्रुत्य (सूत्रेषु) अङ्गीकृत्य पक्षान्तरैरपि० इति न्यायेन तत्रतत्र-उदात्तनिपातन करिष्यते इत्युक्त भाष्ये। शब्दकौस्तुभः वृद्धिरादैच्.

* पक्षेतरत्वं नोपाधिः, साध्यव्यापकत्वग्राहकमानाभावात्। मणि. पृ. ३५.

* पक्षोक्तेनैव प्रयोजनेन भवितव्यं इति न नियमः। भा. ३।८।१४।२७.

* पक्षता असत्या सिद्धौ सत्या वा, सत्यामनुमित्सायां उभयासत्त्वे वा अनुमितेरुदयात् अनुमित्साविरहविशिष्टायाः सिद्धेरभावः। अनुमित्सा च यादृशयादृशेच्छासत्त्वे अनुमितिः सा सा विवक्षिता। तेन 'प्रत्यक्षमिव वह्निज्ञानं जायताम्' 'आलोकेन वह्निज्ञानं जायताम्' इत्यादीच्छासंग्रहः। अत्राय निष्कर्षः— तत्साध्यताऽवच्छेदकावच्छिन्नसाध्यविशिष्टतत्पक्षताऽवच्छेदकविशिष्टमिन्नाविषयिका, अनुमितित्वभिन्नप्रमितिविभाजकधर्माविषयक-तल्लिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति तदन्यलिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारिका, तल्लिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति तल्लिङ्गताऽवच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यिका, वह्निविशिष्टलिङ्गकत्वाप्रकारकत्वे सति वह्निरुद्धधर्मविशिष्टलिङ्गकत्वाप्रकारिका-तल्लिङ्गकालान्यकालाविषयिणी या तदन्यानुमित्सा, तद्विरहविशिष्टसिद्ध्यभावः पक्षता इत्यर्थः।

अत्र 'तत्साध्यताऽवच्छेदकावच्छिन्नसाध्यविशिष्टतत्पक्षताऽवच्छेदकविशिष्टभिन्नाविषयिका' इति निवेशात् 'पर्वते वह्न्यनुमितिर्जायताम्' 'प्रत्यक्षातिरिक्त ज्ञान जायताम्' पर्वते वह्निप्रत्यक्षम्, तद्-व्याप्य-परामर्श., विषयान्तरे च अनुमितिसामग्र्यभावः, तत्र 'यत्किंचिज्ज्ञान जायताम्' इतीच्छादीनां संग्रहः। 'अनुमितित्वभिन्नप्रमितिविभाजकधर्माविषयक' इति निवेशात् अनुमितौ प्रत्यक्षत्वप्रमत्वदशायाम् 'पर्वतो वह्निमान् इति प्रत्यक्ष जायताम्' इतीच्छाया न संग्रह.। तल्लिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारकत्वे सति तदन्यलिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकत्वाप्रकारिका इति निवेशात् धूमत्वावच्छेदेन व्याप्यत्वपरामर्शदशायां द्रव्यत्वावच्छेदेन द्रव्यत्वावच्छिन्नलिङ्गकानुमितीच्छाया न संग्रहः। तल्लिङ्गताऽवच्छेदकावच्छिन्नलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यकत्वे सति तल्लिङ्गताऽवच्छेदकाविरुद्धधर्मविशिष्टलिङ्गकानुमितित्वावच्छिन्नानुद्देश्यिका इति निवेशात् 'धूमेन आलोकेन च वह्न्यनुमितिर्जायताम्' इतीच्छाया न संग्रह। यत्र द्रव्यत्वस्य लिङ्गताऽवच्छेदकत्वानुल्लेखिनी 'द्रव्येण वह्निमनुमिनुयाम्' इतीच्छा, तस्याः संग्रहश्च। वह्निविशिष्टलिङ्गकत्वाप्रकारकत्वे सति तद्विरुद्धधर्मविशिष्टलिङ्गकत्वाप्रकारिका इति निवेशात् यत्र आलोकत्वस्य अवच्छेदकत्वानवगाहिनी 'आलोकेन वह्निमनुमिनुयाम्' इतीच्छा तस्या न संग्रहः। तल्लिङ्गकालान्यकालाविषयिणी इति निवेशात् 'पूर्वकालीनपर्वतीयधूमेन वह्न्यनुमितिर्जायताम्' इतीच्छाया न संग्रहः। 'गौडमणपे. स्वमोल्कल्पितैरिच्छासमारब्धमनुपार्यकार्यैः। वृथैव बाल्यक्षयणं विचिन्त्य चिन्तां मयोपैधि रघुप्रवृत्त्या॥' मणि. पृ. ३५–३७.

* पञ्चवत् — यथा पञ्चम्याप्यञ्चम्या मुद्क्ते इति पञ्चान्तरम् ( मुद्गे कृष्णे ) गम्यते । भा. १०।५। १४।५६.

* पञ्चिणो नाशितव्या इत्यविचिद्धनम् । यागान्ते अस्य अनुष्ठानम् । भा. ५।३।१०।२६.

* 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्यादिनोक्त रूपद्वय निषिध्यते चेत् पङ्कप्रक्षालनन्यायात् प्रसज्यप्रतिषेधे गौरव स्यात् । तथापि कथं पङ्कप्रक्षालनन्यायो न स्यात् । ( 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इत्यस्यैव सक्षेपरूपोऽयं न्यायः । ) न्यायनि. ३।२।६।२२ भ्रम्.

* सुकृतशब्दस्य सर्वपुण्यविषयत्वात् अग्निहोत्रादीनामपि पुण्यान्तरवत् विनाश्यत्वात् पङ्कप्रक्षालनन्यायापातात् आवश्यकत्वात्ऽपि तानि नानुष्ठेयानि इति प्राप्य सिद्धान्तयति । न्यायनि. ४।१।१२।१६ भ्रम्.

* पङ्कजादिशब्दानां प्रयोगान्यथानुपपत्त्याश्रयणाद्यधीन यत्रस्थितविषयत्व इष्यते । सु. पृ ११००.

* पङ्कजशब्दस्य विशिष्टविषयप्रयोगान्यथाऽनुपपत्त्या पद्मत्वैकार्थसमवेतपङ्कजननविशेषनिमित्तत्वावधारणात् व्यवस्था । सु. पृ. ४०७.

* पङ्क्तिः । पादेषु अक्षराणि ८।८।८।८।८ । उदा० 'दानाः द्युश्रतः' ( ऋग्. ८।४६।२४ ) । के.

* पङ्क्त्युत्तरा त्रिष्टुप् । पादेषु अक्षराणि १०। १०।८।८।८ । उदा० 'एवेन्द्राग्निभ्यामहा' ( ऋग्. ५।८६।६ ) । इयमेव विराट्पूर्वा त्रिष्टुप् । के.

* पङ्क्तिपावना. । 'अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च । श्रोत्रियाश्च यज्ञानाञ्च विज्ञेया. पङ्क्तिपावनाः ॥' ( मनु ३।१८४ ) । [illegible] पृ. ३३०.

* पङ्क्तिपावनाः । मनुना पङ्क्तिपावनमध्ये 'यश्च व्याकुरुते वाच यश्च मीमांसतेऽध्वरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥' इत्युक्तम्, तत् वेदादेव उपनयन उक्तम् । वा. १।३।८।२७.

* पचत्यादिशब्दोच्चारणात् इयन्तोऽर्थाः गम्यन्ते– भावना–धात्वर्थ–कर्तृ–तत्संख्या–पुरुष–उपग्रह ( परस्मैपदात्मनेपदत्व )–कालविशेषा. । तेषां तु कः शब्दः कोऽर्थात् इति विभागो न ज्ञायते । लक्षण चैतावत् योऽर्थोऽत्र गम्यते स शब्दार्थ इति । भावनायास्तावत शब्दव्यतिरिक्त प्रत्यायक पश्यामः । सम्भवन्ति हि विनाऽपि भावनया कात्स्नर्यादयः ( वा १।४।४।१३ पृ ९११.

* पचेः विक्लेदनफलकाधिश्रयणादिप्रयोजकव्यापारवाचित्व प्रसिद्धम् । सु. पृ. १२०५.

* पच्यादेश्च स्वरूपेण कर्मसाकाङ्क्षत्वेऽपि अविवक्षाद्दशाया अकर्मकत्वात् ओदनस्य पच्यते इति भावेऽपि प्रयोगः । रहस्य. पृ. ५१.

* पच्यादिधातो. विक्लित्यादिफले अनुकूलव्यापारे च प्रत्येकं शक्तिः, न विशिष्टे । व्यापारश्च आत्मनिष्ठः प्रयत्नः, फूत्कारादिः शरीरगता चेष्टा च । अनुकूलत्वस्य ससर्गमर्यादालभ्यत्वात् न तत्र शक्तिः । यावत्सु च व्यापारेषु पचतीतिप्रयोगः, तावत्सु प्रत्येकं शक्तिः । शक्यतावच्छेदकं च तावदन्यतमत्वम् । इति वैयाकरणाः । मणि. पृ. १०४.

[ 'पञ्च' शब्दारब्धलघुसिद्धान्तसमाप्त्युत्तर 'पञ्चम'- शब्दो द्रष्टव्यः । के. ]

* पञ्च पञ्चनखा भक्ष्या. इति शशादीनां पञ्चानां ( शश – शल्यक– गोधा– कच्छप– खड्गानाम् ) कीर्तनात् अन्येषा भक्षण प्रतिषिध्यते परिसख्यया इत्ययमर्थो वाक्येन गम्यते । भा. १०।७।६।२८.

* पञ्च पञ्चनखा भक्ष्या इति स्मृतिन्यायेन अनुपात्तविषयभक्षणप्रतिषेधः अर्थापत्तिसिद्धः सर्वत्र । वा. १।३।८।२४ पृ. २५४ । यथा पञ्चनखाना मध्ये पञ्चैव शशादयो भक्ष्या इति नियमे कृते ततोऽन्येषा भक्षणनिवृत्तिरस्य गम्यते, तथा गवादय एव साधवः इति नियमे कृते अन्येषामसाधुत्वावगतिरित्यर्थः । सु. पृ. २६४.

* 'पञ्च पञ्चनखा भक्ष्याः' इय प्राक्परिसंख्या त्रिदोषा स्मार्ता । बाल. पृ. २५.

¶ पञ्चभिर्मिलितैः किं यज्जगतीह न साध्यते इति न्यायः। अयं पञ्चभिरेकमतिमद्भिः सर्वमेव साध्यते इति विवक्षायामवतरतीति। साहस्री. ९४२.

* पञ्चाक्षरतद्धितान्तपदघटत्वं चोदनालिङ्गं अतिदेशकरम् 'अग्नीषोमीयमेकादशकपालम्' इत्यस्य प्राकृतस्य 'आग्नावैष्णवमेकादशकपालम्' इत्येवंरूपेषु 'द्यावापृथिव्यमेककपालम्' इत्यत्रापि च। बाल. पृ. १२०.

* पञ्चाग्निष्टोमः संस्थायाः अग्निष्टोमस्य पञ्चकृत्वोऽभ्यासेन जायमानो गणः। तत्र द्वादशाहस्य निष्पन्नः संघत्वलिङ्गात्। स्तोत्राणि तु ज्योतिष्टोमादेव न द्वादशाहात्। वि. ८।३।४–५.

* पञ्चानुगानमध्ये साम्नस्य अनुक्रम्। बाल. पृ. ७२.

* पञ्चावत्तं अवदानं जामदग्न्यादीनाम्। (मीको. पृ. ६९२)। संकर्ष. २।२।६. * पञ्चावत्तं जमदग्नीनां इति सद्योनाणामेव भवति। भा. ६।७।१२।२८. * पञ्चावत्तं भृगूणाम्। वा. १।१।७।१७. * पञ्चावत्तैव वपा, यद्यपि चतुरवत्ती यजमानः। भा. १०।७।१९।६४. * पञ्चावत्ते अवदाने तृतीयं पञ्चार्धमुत्तरार्धात्। (मीको. पृ. ६९२ द्रष्टव्यम्)। संकर्ष. २।२।९. * पञ्चावत्ते अवदाने पञ्चममभिघारणात् प्राग्वेव। (मीको. पृ. ६९४ द्रष्टव्यम्)। संकर्ष. २।२।८. * पञ्चावत्ते अवदाने पञ्चममौपभृतेन। (मीको. पृ. ६९४ द्रष्टव्यम्)। संकर्ष. २।२।७.

* पञ्चावत्तता अग्नीषोमीये पशौ वसायामिव हृदयाद्यङ्गेष्वपि। (मीको. पृ. १२० अग्नीषोमीये पशौ इत्यत्र द्रष्टव्यम्)। भा. १०।७।२०।७२–७३.

* पञ्चावत्तिनः 'जामदग्न्या वत्सविदा आर्ष्टिषेणाश्च ते त्रयः। पञ्चावत्तिन एवान्ये सर्वे चतुरवत्तिनः॥' गोभिलगृह्ये– 'जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च। मार्गवास्त्यावना और्वाः पञ्चावत्तिन ईरिताः॥'। वि. टिप्पणी च १०।७।२०.

* पञ्चार्षेयस्य नास्ति आर्षेयवरणविशिष्टकर्माधिकार इति जैमिनिमतम्। अस्ति तस्याप्यधिकार इति ऋष्यन्तरमतम्। पञ्चार्षेयेणापि कर्मणि त्रिप्रवरा एव उच्चार्या इति मतान्तरम्। भाट्ट. ६।१।११.

* पञ्चेन्द्रोपाख्यानम्। इन्द्रस्य त्वष्टृपुत्रवधात् तेजो धर्ममाविशत्, बलं वायुम्, रूपमश्विनौ, अर्धमागमन्यत्र जिष्णुम्। ततः पाण्डुपत्न्या कुन्त्या धर्मेण तेजो निक्षिप्तं युधिष्ठिरोऽभवत्, वायुनिक्षिप्तं बलं भीमः, इन्द्रनिक्षिप्तं देहार्धमर्जुनः, अश्विभ्यां माद्र्यां निक्षिप्तं रूपं नकुलसहदेवौ। इति पञ्चापि इन्द्रावयवप्रकृतित्वात् इन्द्रा एव इति। सु. पृ. ७१३.

* पञ्चोक्थ्यः उक्थ्यसंस्थेन प्रत्यह समाप्यमानस्य यागस्य पञ्चकृत्वः करणे जायमानो गणः। तत्र द्वादशाहविध्यन्तः संघत्वलिङ्गात्। स्तोत्राणि तु ज्योतिष्टोमादेव ग्राह्याणि, न द्वादशाहात्। वि. ८।३।४–५.

* पञ्चोक्थ्यादिषु उक्थ्यादिसंस्थानां स्तोत्राणामतिदेशः। भा. ८।३।५।१०–११.

* पञ्चोक्थ्यादिसंस्थागणेषु द्वादशाहधर्माणामतिदेशः परन्तु उक्थ्यसंस्थत्व। भा. ८।३।४।८–९.

* 'पञ्चकृत्वः त्रियो भक्षे भुङ्क्ते' इत्यत्र प्रथमाधिकरणे षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः। बाल. पृ. ४५.

¶ पञ्चकोशावतरणन्यायः। अयं श्रुतिमात्रसिद्धत्वान्न लौकिकः। साहस्री. ८१५. * पञ्चकोशावतरणन्यायः (१।१।६।१२ ब्रसू.) प्रसिद्धो हि स्थूलारुन्धती–शाखाचन्द्रादिन्यायो लोके, पञ्चकोशावतरणन्यायश्चोत्तरमीमांसायाम्। शब्दकौस्तुभः स्फोट. (सर्वं वाक्यं तु स्थूलारुन्धतीन्याये द्रष्टव्यम्)।

* 'पञ्चदशान्याज्यानि भवन्ति' इत्यत्र (१।४।२) रूढिपरित्यागेन कथञ्चिद्यौगिकत्वाश्रयणम्। वाक्यार्थ. पृ. २०. * पञ्चदशोऽग्निष्टोमः वीर्यकामस्य। काठीये। बाल. पृ. ३४. * पञ्चदशः स्तोमविशेषः। अयं शब्दः पञ्चदशसंख्याकत्वरूपगुणविधायकः। वि. १।४।२, * पञ्चदशः स्तोमविशेषः अहर्गणे द्वितीयेऽहनि इत्यादौ। ७।३।१०, * पञ्चदशः स्तोमविशेषः ज्योतिष्टोमे। ५।३।१५, * पञ्चदशस्य स्तोमस्य विष्टुतिरेषम्, प्रथमात्तृचो

प्रथमाया ऋचस्त्रिरभ्यासः । द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ तु उत्तमायाः इति । १।४।३.

● पञ्चदशरात्रे नाहीनः किन्तु सत्र उपायिचोद नात् ' ये एव भूतिकामिच्छन्तस्ते एत पञ्चदशरात्र-मुपेयु ' इति । भा. ८।२।६।२९-३२. ● पञ्चदशरात्रः सत्ररूपः, उपायिचोदनत्वात् ' यदन्यतरतोऽतिरात्रस्तेना-हीनः ' इत्यहीनत्वोक्तिस्तु स्तुतिः । तथा च तत्र सत्रधर्मा-तिदेशः । अन्यतरतोऽतिरात्रत्व अहीनलिङ्गम् । उभयतो-ऽतिरात्रत्व सत्रलिङ्गम् । वि ८।२।६. ● पञ्चदशरात्रे अग्निष्टुदेकाह. प्रथममहः । ततो ज्योतिर्गौरायुः इति त्र्यहः । परिशिष्टानि एकादशाहानि द्वादशाहप्रकृतीनि । भा. १२।२।७।१२. ● पञ्चदशरात्रे अग्निष्टोम आग्नेयी-सुब्रह्मण्याप्रवर्तक ज्योतिरादिनाम्ना ऐन्द्रीसुब्रह्मण्याप्रवर्त-केन बाध्यते । थाल पृ. १३२. ● पञ्चदशरात्रे प्रथमाहे मुख्याग्नेयीसुब्रह्मण्या आग्नेयी, चतुर्दशसु अहःसु च ऐन्द्री । तथाः प्रत्यह मेदेनैवानुष्ठानात् । ' उपस्थ स्वाहीना तु सुब्रह्मण्या प्रथमाहेऽपि ऐन्द्री एव कार्या भूयसामनुग्रहात् ' इति आख्यातम् । ( प्रथमाहे उभे अपि सुब्रह्मण्ये कर्तव्ये इति वा भाट्ट च ) । वि. १२।२।७. ● पञ्चदशरात्रे या तावत् वसतीवरीग्रहणोत्तर काला सुब्रह्मण्या, सा प्रतिदिवसं भिद्यते ( तत्काल त्वात्तत्रैव० ११।३।११।२३ अत्रप्यन्यायात् ) यथादेवत च अग्निष्टुति आग्नेयी । अन्येषु ऐन्द्री । या तु आति-थ्यान्ते उपसत्सु च सुब्रह्मण्या, तस्यां देवतासंस्कार-कत्वात् निगदस्य यथादेवतमेव तन्त्रभेदः । नास्ति तन्त्रेण द्वयोरपरणम् । तस्मात् द्वे अपि सुब्रह्मण्ये आह्वातव्ये । टुप्. १२।२।७।२२. ● पञ्चदशरात्रे सत्रत्वाद्द्वादशाह-धर्मातिदेशः । ( मीको. पृ. ३१२ द्रष्टव्यम् ) । भा. ८।२।६।३०-३२.

● पञ्चदशरात्रगते अग्निष्टुति सुब्रह्मण्या ऐन्द्री एव कार्या भूयसामनुग्रहाय । भा.१२।२।७।२२.

● पञ्चदशरात्रस्वरूपम् ' त्रिवृदग्निष्टुदग्निष्टोमः, त्रिरात्र , दशरात्र उदयनीयोऽतिरात्र. ' इति । वि. ८।२।६.

● पञ्चदशसप्तदशादिपदानां अभ्यासबाध्यपञ्चदश-त्वादिविशिष्टऋक्समुदाये शक्तिः । मणि पृ. १६४.

● पञ्चदशस्तोमे आवृत्तगानम् । आवृत्तगान नाम ऋचामावृत्त्या संख्या यत्र पूर्यते तादृक् सामगानम् । वि. ५।३।४.

● पञ्चनखानां मध्ये पञ्चैव भक्ष्याः इति नियमे कृते ततोऽन्येषा शशादीना अभक्ष्यत्व गम्यते । सु. पृ. २६४.

● पञ्चरात्रे पवन भर्तुं शक्यते । भा. १०।५। २३।७८

● पञ्चशरावः ओदन ऐन्द्र , दर्शे एकदोहनाशे द्वयोरपि वा दोहयोर्नाशे प्रायश्चित्तम् । वि. ६।४।६, तत्र द्रव्यदेवताविशिष्ट कर्मान्तरम्, न तु द्रव्यलोपे दोहस्य प्रतिनिधिः । ६।४।९, तच्च कर्मान्तरमपि पयोऽन्तरेण दध्यन्तरेण चानुष्ठीयमानस्य दर्शस्याङ्गम् । ६।४।१०. ● पञ्चशरावः ओदनः । पञ्चशरावा परिमाणमस्य इति ' तदस्य परिमाणम् ' इति ( परिमाणार्थकः ठञ् ) तद्धितार्थे विवक्षिते ' तद्धितार्थोत्तरपदसमाहारे च ' ( तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये समस्येते ) इति समासे सत उत्पन्नस्य आर्हीयस्य ठञ्-प्रत्ययस्य 'अध्यर्धपूर्वद्विगोर्लुक्' इति लुकि पञ्चशरावशब्दो निष्पन्नः । सोम. ६।४।९.

**सू पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् । ६।४।९।२८ ॥**

दर्शपूर्णमासयो ' यस्योभय हविरार्तिमार्छेत् ऐन्द्र पञ्चशरावमोदन निर्वपेत् ' इति श्रुत पञ्चशरावः सान्नाय्यहविषः प्रतिनिधिः स्यात् । निरपेक्षे द्रव्यस्य श्रुतेः श्रवणात् । कर्मान्तरविधिपक्षे तु द्रव्यदेवतासंबन्धो वाक्यात् विधीयेत । वाक्याच्च श्रुतिर्बलवती इति पूर्व. पक्षः । तुशब्दः पञ्चशरावविषये यत् पूर्वमुक्त तदेव विशेषान्तरमपेक्ष्यते इति सूचनार्थ ।

**चोदना वा द्रव्यदेवताविधिरवाच्ये हि । २९ ॥**

पूर्वोक्त सूत्रेण प्रथ वाशब्देन निरस्य सिद्धान्तमाह । सान्नाय्यार्तिनिमित्ता चोदना कर्मान्तरविधिः स्यात् ।

द्रव्यदेवताविधेः । 'ऐन्द्रं पञ्चशरावम्' इति द्रव्यस्य देवतायाश्च विधेः सद्भावात् । ननु ऐन्द्रमिति आनाय्यदेवतयोः इन्द्रमहेन्द्रयोरनुवादः स्यात् । नेत्याह । अचान्ये हि यस्मात् ते देवते । पक्षे प्राप्तयोः इन्द्रमहेन्द्रयोः ऐन्द्रं इति इन्द्रपदेन वचनं शक्यम् । तस्मात् पञ्चशरावः कर्मान्तरं इति सिद्धान्तः । के.

* पञ्चशरावन्यायः । आर्त्यधिकरणम् । आर्तिन्यायः । हविरार्तिन्यायः एकमेव । ( मीको. पृ. ९९१ द्रष्टव्यम )। भा. ६।४।६।२२–२३. * पञ्चशरावन्यायः द्विविधः । तत्राद्यः मिश्रमयार्तौ पञ्चशरावः उत अन्यतरार्तावपि इति (६।४।६।२२–२३)। द्वितीयस्तु किं आर्तिदोहप्रतिनिमित्तेनामावास्याकर्माणि एव साधनं विधीयते, उत कर्मान्तरं हविरार्तिनिमित्ते चोद्यते इति (६।४।५।२८-२९ अत्र सूत्रं 'पञ्चशरावमनु')। तृतीयोऽपि ६।८।१०।३०-३१ 'स प्रत्यामनेत् स्थानात्' इति । अथ पञ्चशरावयागस्य दर्शाङ्गता साधिता । के. * पञ्चशरावन्यायः । पञ्चशरावनिर्वापः कर्मान्तरं हविरार्तौ । भा. ६।४।५।२८–२९. * पञ्चशरावन्यायः (६।४।६।२२–२३)। उभयपञ्चशरावन्यायः । पूर्वस्यापि तत्त्वान्निमित्तभावस्य पञ्चशरावन्यायानन्तरेऽपि... । सोम. ६।४।८. * उभयपञ्चशरावन्यायेन अन्यतरानुगममात्रनिमित्तम्, इति प्राप्ते । शा. ६।४।८.

* पञ्चशरावयागः हविरार्तिनिमित्तकः दर्शस्याङ्गम् । ( मीको. पृ. २०१९ द्रष्टव्यम् )। भा. ६।४।२०।३०.

* पञ्चशरावकाण्डे अपनयविध्यभावादेव कर्मान्तरम् । भाट्ट. ६।५।२ पृ. २८७.

* पञ्चशारदीयः पञ्चाहविशेषः अहीनः । स च पञ्चसु वर्षेष्वनुष्ठेयः । प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां (प्रायः आश्विनामावास्यायाम्) सप्तदश अल्पवयसः स्थौलपाशः, सप्तदश उक्षाणश्च विहिताः । तेषु पर्यग्निकृतेषु प्रोक्षितेषु च सत्सु स्त्रीपशूनामालम्भं पुंपशूनामुत्सर्गं चाम्नाय पुनर्द्वितीये तृतीये चतुर्थे च वर्षे तथैवानुष्ठानमाम्नाय पञ्चमदाप्राप्ते 'श्रीश्रीनेकैकस्मिन्नहन्यालभेरन् पञ्चोत्तमेऽहनि' इति । तत्र वत्सरचतुष्टयगतासु अमावास्यासु योऽयं पशूनामुत्सर्गः, तत्र कर्मशेषत्याग एव नोत्कर्षः । 'श्रीश्रीनेकैकस्मिन्' इत्यादि तु संख्या-कालरूपगुणद्वयविशिष्टं कर्मान्तरमेवेति सिद्धान्तः । वि. ११।२।१३.

* पञ्चशारदीयास्तथेति चेत् । ११।२।१३।५४ ॥ इत्येकादशाधिकरणे प्राजापत्योत्सर्गवत् उक्षणामपि उत्सर्गः संस्कारनिषेधः इति प्राप्ते, संस्कारनिषेधे सति 'श्रीश्री-नुक्षणः एकैकस्मिन्नहनि आलभेरन् पञ्चोत्तमे' इति प्राप्ते कर्मणि अनेकगुणविधानात् वाक्यभेदापत्तेः, नवमोपान्त्यसूत्राधिकरणोत्सर्गवत् कर्मशेषनिषेधे 'न चोदनैकवाक्यत्वात्' (५५) इति सूत्रेण सिद्धान्तयित्वा 'संस्काराणां च दर्शनात्' (५६) इति सूत्रान्तरेण प्रतिवर्षं संस्कारानुवाददर्शनात् कर्मैक्ये च द्रव्याभेदेन पुनः पुनः संस्कारानर्थक्यात् प्रतिवर्षं कर्मसमाप्तिः अवसीयते इत्युक्त्वा, ननु नवनमेतद्भविष्यति इत्याशङ्क्य 'पर्यग्नि करोति' 'पर्यग्निकृतानुत्सृजन्ति' इत्यनेकार्थविधौ वाक्यभेदापत्तेः वत्सतरीषु च प्रकृतिप्राप्तानुवादत्वात् तत्साहचर्येण उक्षस्वपि अनुवादतैव न्याय्या इति भाष्यकृद्दर्शयति । सु. पृ. ७११.

■ पञ्चशारदीयास्तथेति चेत् । ११।२।१३।५४ ॥

'मारुतीयः पञ्चशारदीयः, यः कामयेत बहुः स्यामिति स एतेन यजेत' इति मरुद्देवताकः पञ्चसु शरत्सु क्रियमाणः पञ्चाहः अहीनः क्रतुः । तत्र श्रूयते 'वैशाखाममावास्यायाम् ( विशाखानक्षत्रयुक्तायाममावास्यायां प्रायः आश्विन्याम् ) मारुतीः त्रिवत्सा अप्रवीता उपाकरोति' 'सप्तदश पृश्नीनुक्षणः, तान् पर्यग्निकृतान् प्रोक्षितान्, इतर आलभन्ते, प्रेतरानुत्सृजन्ति' इति । तत्र त्रिवत्साः त्रिवर्षा वत्सतर्यः अप्रवीताः अप्रसूताः । पृश्नीन् नानावर्णान् क्षुद्रान् अल्पशरीरान् वा मतभेदेन । प्रतिवर्षं सप्तदश त्रिवर्षा गावः आलब्धव्याः, सप्तदश उक्षाणश्च पर्यग्नि कृत्वा प्रोक्ष्य उत्स्रष्टव्याः । पञ्चमे तु वर्षे गावः पूर्ववत् आलब्धव्याः, उक्षाणस्तु आलब्धव्या एव, परन्तु चतसृषु तुयासु सप्तदश, पञ्चम्यां तु पञ्च आलब्धव्याः । इति सिद्धान्ते ।

पूर्वपक्षे तु पञ्चस्वपि संवत्सरेषु अभिन्ना उक्षाण, तत्र आदितश्चतुर्षु संवत्सरेषु केवलं पर्यग्निकरणं प्रोक्षणं च पुनः पुनः वर्तयम्। पञ्चमे वर्षे तु आलम्भः। तावत्पर्यन्तं च ते प्रतिपाल्नीयाः। इति विशेष.। अथ सूत्रार्थ उच्यते। पञ्चशारदीयाः उक्षाणः तथा प्राजापत्यपशुवत् स्युः। प्राजापत्या यथा आदौ उत्सृज्य पश्चात् आलभ्यन्ते तथा उक्षाणोऽपि आदितश्चतुर्षु वर्षेषु उत्सृज्य पञ्चमे वर्षे आलब्धव्याः। तथा च संस्कारप्रतिषेधः इति चेत् पूर्वपक्षी ब्रूयात्।

न, चोदनैकवाक्यत्वात्। ५५ ॥

सिद्धान्ती आह। न संस्कारप्रतिषेधः। किन्तु कर्म शेषप्रतिषेध.। चोदनैकवाक्यत्वात्। 'सप्तदश मारुतीः स्पाकरोति' इति कर्मचोदना, तथा 'सप्तदश पृश्नीनुक्षणः' इत्यस्य एकवाक्यत्वम्। तस्मादेकेन अनेन वाक्येन चतुस्त्रिंशत् कर्माणि चोद्यन्ते प्रतिवर्षम्। तत्र सप्तदशाना पर्यग्निकरणान्ते उत्सर्गः क्रियते। सप्तदशासु यथाप्रकृति क्रियते। तस्मादारण्यवत् कर्मशेषप्रतिषेध इति सिद्धान्तः।

संस्काराणां च दर्शनात्। ५६ ॥

चतुस्त्रिंशता पशूनां पर्यग्निकरणं प्रोक्षणं च। तत्र सप्तदशाना औषधीनामालम्भः उक्ष्णा चोत्सर्गः इति चतुर्षु वर्षेषु, पञ्चमे तु वर्षे सर्वेषामालम्भ. इति संस्कारा दृश्यन्ते पुन. पुन.। तत्र उभयाभेदे तु पुनः संस्कारो व्यर्थ.। तथा च संस्काराणां दर्शनात् अन्ये उक्षाण. इति प्रतीयते। तथा च कर्मशेषप्रतिषेध., न संस्कारप्रतिषेध. इति सिद्धान्त.। के.

• पञ्चशारदीये आदिमेषु चतुर्षु संवत्सरेषु सप्तदशोक्षाणः पर्यग्निकरणप्रोक्षणाभ्यां समापनीयाः। के. ११।२।१३।५४. • पञ्चशारदीये उक्षाणुत्सर्गः कर्मशेष प्रतिषेधः न तु संस्कारकर्मप्रतिषेधः। प्रतिवर्षमन्ये उक्षाण.। शा. ११।२।१३।५४–५६, • पञ्चशारदीये उक्षवाक्ये कर्मशेषप्रतिषेधात् प्रतिसंवत्सरं भिन्नानामेवोक्षणामानयनम्। ११।२।१३।५४.

■ पञ्चशारदीयाधिकरणम्। पञ्चशारदीये आदिमेषु चतुर्षु संवत्सरेषु सप्तदशोक्षाणः पर्यग्निकरण-प्रोक्षणाभ्यां समापनीयाः। पञ्चशारदीये उक्षवाक्ये कर्मशेषप्रतिषेधात् प्रतिसंवत्सरं भिन्नानामेवोक्ष्णामानयनम् ॥

पञ्चशारदीयास्तथेति चेत्। ११।२।१३।५४ ॥

भाष्यम्-- अस्ति पञ्चशारदीयः अहीनः 'मारुतीयः पञ्चशारदीयः, यः कामयेत बहु. स्यामिति, स एतेन यजेत' इति। तत्र श्रूयते 'वैशाख्याममावास्याया (विशाखायुक्तायाममावास्यायाम्) सप्तदश मारुतीर्वत्सा. (निवत्सयः) अप्रवीताः (अप्रसूताः) उपाकरोति' इति। 'सप्तदश पृश्नीनुक्षणः (नानावर्णान् शुक्लान् अल्पशरीरान् वा), तान् पर्यग्निकृतान् प्रोक्षितान्, इतराः (निवत्साः) आलभन्ते, प्रेतरान् (उक्षणः) उत्सृजन्ति' इति। ततः संवत्सरे राजीनाः (कमलसदृशवर्णा.) आनयन्ति, तांश्चैवोक्षण., तान् पर्यग्निकृतान्, इतरा आलभन्ते, प्रेतराननुत्सृजन्ति' इति। (अत्र बौधायनश्रौतसूत्रे १८।११ प्रकारान्तरं सविस्तरं द्रष्टव्यम्। आश्वलायनश्रौते च ११।७।२९–३०) तत्र सैव चिन्ता किमुक्ष्णामुत्सर्गः आरण्यवत् कर्मशेषप्रतिषेधः, अथवा प्राजापत्यवत् संस्कारकर्मप्रतिषेधः। तेषां च तुल्यासु प्रतिप्रसवः, 'नीलीनुक्ष्ण एकैकस्मिन्नहन्यालभन्ते, पञ्चोत्तमे' इति। यदि कर्मशेषप्रतिषेधः प्रतिवर्षमन्ये उक्षाण.। अथ संस्कारप्रतिषेध., ततस्त एव पञ्चवर्षाण्युपरुध्यन्ते, पुनः पुन संस्क्रियन्ते। अन्त्यासु तुल्यास्वालभ्यन्ते इति। किं तत्र प्राप्तम्? पञ्चशारदीयास्तथेति चेत्। इति चेत्पश्यसि। कथं पञ्चशारदीया इति? पञ्चशारदीयास्तथा, यथा अनन्तरः प्राजापत्या., संस्कारप्रतिषेध इत्यर्थः। एवं प्रकृतप्रत्ययो भवति। स एवमनुग्रहीष्यते। इतरथा प्रकृत हानमप्रकृतप्रत्ययश्च भवेत्। एवं च तांश्चैवोक्ष्ण इत्यपेक्षावचनं युक्तं भविष्यतीति। प्रायश्चित्तविधानं च, 'यदि कूटः काणो वा भवेत् बार्हस्पत्यं चरुं निर्वपेत्, यदि प्रपतेत् वायव्यं चरुम्, यद्यपसीदेदैन्द्रं चरुम्' इति। निरुद्धानामेतानि निमित्तान्युपपद्येरन्। तस्मात् संस्कारप्रतिषेधः।

टुप्— 'सप्तदश मारुतीर्निवत्सा अप्रवीता उपाकरोति। सप्तदश पृश्नीनुक्ष्ण.' इति पूर्वासु त्रिहायणीषु या देवता, सा उक्षानुपयाते (उक्षसु)। तस्मात्

द्रव्यदेवतासंयोगात् चतुस्त्रिंशत् कर्माण्येतानि (अनेन वाक्येन विधीयन्ते। तत्र एतत्–) द्वितीयं वाक्यम् ‘तान् पर्यग्निकृतान् प्रोक्षितान्, इतरा आलभन्ते, नेतराननुसृजन्ति’ इति। तत्र तान् इति प्रकृताः (उक्षाणः) परामृश्यन्ते। इतराशब्देन (स्त्रीलिङ्गेन) वत्सतर्यः उच्यन्ते। तासां (आलम्भानुज्ञावचनेन लक्षणया) विशसनादि कृत्स्नं चोदकप्राप्तं क्रियते। अतस्तासु संदेह एव नास्ति। ‘नेतराननुसृजन्ति’ इत्यनेन (पुंलिङ्गेन) अनड्वाह उच्यन्ते। तेष्वेव संदेहः, किं पर्यग्निकरणान्ताङ्गरीत्या अनड्वाहः एकत्रास्थया गत्वा चोदकेन अङ्गानि न गृह्णन्ति, यथा आरण्याः, उत प्राजापत्यानामिव प्रातःसवनकाले संस्काराणां प्रतिषेधः इति। किं तावत् प्राप्तम्? संस्काराणां प्रतिषेधोऽयम्। अस्मिन् काले अनडुहां आलम्भावधौ न कर्तव्याः संस्कारा इति। यथा प्राजापत्यानाम्। ‘त्रींस्त्रीनुक्ष्णः एकैकस्मिन्नहनि आलभेत’ इति (पशुषु) तुल्यासु प्रतिप्रसवः। यथा ‘ब्रह्मसाम्नि आलभते’ इति। कर्मशेषप्रतिषेधे तु ‘तांस्तान्’ इति च कर्मान्तरं कल्प्येत प्रतिषेधकपरम्। ‘त्रींस्त्रीन्’ इति च। [illegible] बहु अदृष्टं कल्प्येत। संस्कारप्रतिषेधे तु तेषामेव (अनडुहाम्) द्वितीये (संवत्सरे पर्यग्निकरणान्तम्) संस्कारमात्रं विधीयते, न याग इति।

न, चोदनैकवाक्यत्वात्॥ ५५॥

भाष्यम्– नैतदेवं संस्कारप्रतिषेध इति। कथं तर्हि? कर्मशेषप्रतिषेधः। कुतः? चोदनैकवाक्यत्वात्। ‘सप्तदश मारुतीरुपाकरोति’ इति कर्मचोदनैषा, द्रव्यदेवतासंबन्धात्। तस्यैकवाक्यमेतत् ‘सप्तदश पृश्नीनुक्ष्णः’ इति। कथं ज्ञायते? सप्तदश पृश्नीनुक्ष्ण इत्येतावदपरिसमाप्तम्। तत्पूर्वेणैव परिसमाप्यते, मारुतानालभते इति। एवं सति अनुषङ्गोऽवश्यं भवति। तथा च समस्तावाक्यभेदः। किमुच्यते चोदनैकवाक्यत्वादिति। आह। यदि असौ अस्य शेषत्वेनापेक्षको ततोऽनुषङ्गः। अथायं तस्य, तत एकवाक्यत्वम्। इह तस्य शेषत्वेनापेक्षिष्यामहे। एतच्चात्र युक्तम्, यदयं तस्य शेषः स्यात्, नासावस्य। तच्छेषत्वे अपेक्षामात्रम्। इतरथापेक्षा अनुषङ्गश्च। अर्थेन च संबध्येत। सप्तदश पृश्नीर्मारुतीरुपाकरोति, सप्तदश च पृश्नीनुक्ष्ण इति चार्थो न वक्तव्यः। प्रचयादेव गम्येत। तस्मादेकेनानेन वाक्येन चतुस्त्रिंशद्देवतानि कर्माणि चोद्यन्ते। तेषां सप्तदशानां पर्यग्निकरणान्तः उत्सर्गः क्रियते। सप्तदशसु यथाप्रकृति। एवमुत्तरास्वपि चोदनासु। न चोत्सृष्टानां कर्मान्तरे उपयोगो युज्यते। असंस्कृतत्वात् यातयामत्वाच्च। तस्मादारण्यवत् कर्मशेषप्रतिषेधः। अन्ये त्वन्ये चोक्षाणः। पूर्वेषामुत्सर्गाभावात् प्रकृतहानम्। प्रायश्चित्तमप्युपाकृतानां प्रागुत्सर्गात्। अपेक्षावचनमपि तेषामभावात् अन्यान् नाऽऽगमनेनापेक्ष्य भवेत्, पृश्नीन् मारुतांश्च। यथा तामेव यवागूं स्वयं पिबतीति। तान्येवौषधानि, स एव तित्तिरिरिति।

टुप्– ‘सप्तदश मारुतीः पृश्नीरुपाकरोति’ इति द्रव्यदेवतासंयोगात् यागचोदनैषा। ‘सप्तदश पृश्नीनुक्ष्णः’ इत्यस्य सापेक्षत्वान्निराकाङ्क्षीकरणेन भवितव्यम्। तत्र ‘मारुतीरालभते’ इति मनसि विपरिवर्तमानेनैव निराकाङ्क्षीक्रियते। अत्र च द्वयी गतिः। यदि वा अनडुहः प्रति ‘मारुतीरालभते’ इत्यनुषज्यते। अथवा ‘मारुतीरालभते’ इत्येतत्प्रति अनड्वाहो नीयन्ते। तस्मानड्वाहः उपेयाः। यस्मिन्नेव क्षणे त्रिहायण्यः संबध्यन्ते, तस्मिन्नेव अनड्वाहोऽपीति। एवं परस्परापेक्षितः संबन्धो भविष्यति, एकवाक्यत्वं च। इतरथा पूर्वस्मिन् वाक्ये निराकाङ्क्षीकृतस्य पुनराकाङ्क्षा कल्पनीया। ततः पुनः संबन्धः। ‘तस्मात् एकेन वाक्येन चतुस्त्रिंशत् कर्माणि विधीयन्ते’ (इति भाष्यं किञ्चिदक्षरभेदेन)। ननु पूर्वपक्षवाद्यपि चतुस्त्रिंशत् कर्माणि एकवाक्यत्वं चेच्छत्येव, कर्मशेषप्रतिषेधम् (तु) नेच्छति (किन्तु ‘पर्यग्निकृताननुसृजन्ति’ इति संस्कारप्रतिषेधमिच्छति प्राबापयत्)। न च अनेन (भाष्यकारीयेण व्याख्यानेन) सः (पूर्वपक्षवादी) निराक्रियते। तस्मात् कथमेतत् व्याख्येयम् (एकवाक्यत्वात् इति सूत्रम्। उच्यते–) प्राजापत्येषु यः संस्कारप्रतिषेधः, सः ‘ब्रह्मसाम्न्यालभते’ इत्यस्य (प्रतिप्रसववाक्यस्य) सामर्थ्यात्। अस्मिन् सति अनुवादो वा (संस्कार-) प्रतिषेधो वा ‘पर्यग्निकृताननुत्सृजन्ति’ इति। इह तु (‘त्रींस्त्रीन् अन्वहमालभेत, पञ्चोत्तमेऽहनि’ इति

वाक्येन ) न शक्यः सुत्याकाले प्रतिप्रसवः कर्तुम् । अत्र ( हि ) यत् आलभते, तान् पञ्च, ताश्च अन्त्येऽहनि इति ( गुणपरत्वे सति अर्थद्वयस्य विधानात् ) वाक्यभेदः स्यात् । एवं 'त्रीन्त्रीन्' इत्यपि योज्यम् । तस्मादेतत् सुत्याकालिकं कर्मान्तरम् ( तदा च अपूर्व स्यैव विधानात् एकवाक्यता भवति इति सूत्रार्थः । व्याख्यानान्तरमाह— ) अपि च यस्य ( मते ) संस्कारः प्रतिषिध्यते, तस्य द्वितीये संवत्सरे पर्यग्निकरणं न प्राप्नोति ( कृतत्वात् । तेन ) तत् तावत् विधातव्यम्, उत्सर्गश्च ( विधातव्यः ) तत्र ( अर्थभेदात् ) वाक्यभेदः विवक्षाभेदश्च ( पर्यग्निकृतान् इत्यत्र स्यात् । ) एकत्र ( वत्सतरीषु ) प्रकृतिप्राप्तमनूद्यते ( पर्यग्निकरणम् ), अन्यत्र ( अनडुत्सु प्रागेव पर्यग्निकरणस्य कृतत्वात् पुनरप्राप्तेः पर्यग्निकरणान्तरम्— ) अप्राप्तं विधीयते । तद्दुष्परिहरस्य एतदन्याय्यम् ।

**संस्काराणां च दर्शनात् । ५६ ॥**

**भाष्यम्**—संस्कारांश्च प्रतिवर्षं दर्शयति 'तान् पर्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुत्सृजन्ति' इति । ननु वचनमेतद्भविष्यतीति । न, वाक्यभेदप्रसङ्गात्, पर्यग्निकरणं करोति, पर्यग्निकृतांश्चोत्सृजन्तीति । अपि च वत्सतरीणामुक्ष्णां च युगपत् पर्यग्निकरणमुच्यते । तद्वत्सतरीषु प्रकृतितः प्राप्तत्वादनूद्यते । इतरेषु अप्राप्तत्वाद्विधीयते, एतन्नोपपद्यते । सत्सु संस्कारेषु एतदुभयं न दुष्यते । यागे च सत्यम् । तस्मादुभयत्र यागः ।

**सोम**—प्राजापत्यमिवेति दृष्टान्तसंगतिः । सूत्रार्थस्तु– पञ्चशारदीयपशवोऽपि प्राजापत्यवत् उत्कृष्यन्ते इति । १२.

**वि**— "उक्षोत्सर्गः किमुत्कर्षस्त्यागो वा,ऽऽद्योऽत्र पूर्ववत् ।, अन्वहंत्रित्वयोरुक्षाहपञ्चत्वयोर्विधौ ॥ वाक्यभेदाद् निर्दिष्टानामन्येषां कर्मणा विधिः । तस्मादारण्यवच्चैषामत्याग उत्सर्ग इष्यताम् ॥ "

**भाट्ट**—पञ्चशारदीयो नाम अहीनः पञ्चाहः 'यः कामयेत बहुः स्यामिति, स एतेन यजेत' इति फले विनियुक्तः । तत्र वैशाख्याममावास्यायाम् 'मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति, सप्तदश पृश्नीरुक्षणः, तान् पर्यग्निकृतान् प्रोक्षितान्, इतरा आलभन्ते, प्रेतरानुत्सृजन्ति, ततः संवत्सरे राजीवा आनयन्ति, ताश्चेतोक्ष्णस्तान् पर्यग्निकृतान्' इत्यादि पूर्ववत् । तृतीये चतुर्थे च संवत्सरे स्त्रीलिङ्गनिर्देशात् स्त्रीपशूनां सामस्त्येनानुक्रमं उक्ष्णां च पर्यग्निकृतानामुत्सर्जनमुक्त्वा पञ्चमे संवत्सरे दीक्षित एव 'उक्षणस्त्रींस्त्रीनन्वहमालभेत पञ्चोत्तमेऽहनि' इति श्रुतम् । त्रिवत्साः त्रिवत्सराः, अप्रवीताः अप्रसूताः, पृश्नीः अल्पशरीराः, राजीवाः राजीववर्णाः ( राजीव कमलम् ) । अत्र स्त्रियोऽपि गाव एवेति केचित् । अतोऽत्रवाक्ये मारुतानिति विपरिणतस्य उपाकरोति इत्यस्य चानुषङ्गात्तदपि वाक्यान्तरम् । अस्मिंश्च वाक्ये यथा कर्मभेदः तथा तथा कौस्तुभे निरूपितम् । अत्र च 'उपाकरोति' इत्यस्य एकत्वेन स्त्रीषु पुरुषेषु च समन्वयादेकमेवेदं वाक्यं चतुर्भिश्चान्यकर्मणा विधायकमिति भाष्यकारः । वाक्यान्तरत्व तु युक्तमित्युत्पश्यामः । तत्र किं उक्षणो ये एव प्रथमे संवत्सरे पर्यग्निकृताः उक्षाणः, तेषामेव द्वितीयादिसंवत्सरेषु पर्यग्निकरणादि कृत्वा पञ्चमे संवत्सरे तेषामेव चतसृषु सुत्यासु त्रयाणां त्रयाणामालम्भः, पञ्चानां चोत्तमेऽहनीत्येवं प्राजापत्यानामिव आलम्भोत्कर्षः । उत प्रथमादिवर्षेषु अन्येषामन्येषामुक्ष्णां पर्यग्निकरणान्ताङ्गरीतिविधानेन आरण्यपशुवदुत्सृष्टवचनेन समाप्तिः, पञ्चमे वर्षे तत्सुत्यासु अन्येषामेवालम्भः । इति चिन्तायाम्, श्रवणात् तेषामेवालम्भोत्कर्षः प्राजापत्यवत् । वचनाच्च पर्यग्निकृतानामपि पुनःपुनः पर्यग्निकरणादिः, तच्छब्दबलेन पूर्वोपाकृतानामेव परामर्शात् । उत्कृष्यतिस्तु आलम्भोत्कर्षादेव प्राप्तोऽनूद्यते । इति प्राप्ते, प्राप्तालम्भानुवादेन 'त्रींस्त्रीनन्वहम्' इति चानेकार्थविधाने वाक्यभेदात् गुणात् कर्मान्तराण्येवैतानि विधीयन्ते, न त्वत्र आलम्भोत्कर्षः । एवम् 'पञ्चोत्तमेऽहनि' इत्यत्रापि अनेकार्थविधिर्बोध्यः । अत एव 'पञ्चोत्तमेऽहनि' इत्यत्र उत्तमेऽहनि पञ्चत्वविधौ अवशिष्टानां द्वादशानां 'सम स्यादश्रुतत्वात्' इति न्यायेनैव अन्वहं त्रयाणां त्रयाणां प्राप्तेः 'त्रींस्त्रीनन्वहम्' इत्यनुवाद इत्यपास्तम् । 'पञ्चोत्तमे' इत्यनेनैव प्राप्तालम्भा-

नुवादेन कालसंयोगविधाने वाक्यभेदात् । उत्तमाहरुद्देशेन पशुन्यमात्रविधाने विशिष्टोद्देशादालम्भस्यैवाश्रयत्वे प्रमाणाभावाच्च । अतः कालसंयोगविशिष्टकर्मान्तराण्येवैतानि समस्त वाक्यद्वयेन विधीयन्ते । तत्रश्चोत्कर्षविध्यभावात् प्रथमादिवर्षेषु भिन्नभिन्नान्येवैतानि कर्माणि पर्यग्निकरणान्ताङ्गविशिष्टानि देवतापदानुषङ्गेण विधीयन्ते । अतश्च प्रतिवर्षं पशुभेदः । पञ्चमे च पर्यग्निकरणान्ताङ्गानामावृत्तिः । तच्छब्दश्च व्यक्तिभेदेऽपि समानीसजातीयकः सन् पृथिव्यादिगुणप्राप्त्यर्थो न विरुध्यते । १२.

' मण्डन– ' इज्यामयं त्वहीने स्यात् । ' औक्षीन् इति विहित अपूर्वमेव ।

शंकर– ' स्यात् पञ्चशारदीये वा । ' कर्मभिदा ।

* पञ्चसंचराणि चातुर्मास्येषु वैश्वदेवे पर्वणि आग्नेयादीनि पञ्च हवींषि सर्वपर्वसु संचरन्ति इति पञ्चसंचराणि इत्युच्यन्ते । ( ' आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम् ' इति विहितानि आदिमानि पञ्च ) । आ. ७।१।३।१७.

पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् । ७।१।३।१७ ॥

चातुर्मास्येषु वैश्वदेवे पर्वणि ' आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम् ' इति पञ्च हवींषि पञ्चसंचराणि नाम सार्थवादवाक्यैर्विहितानि । वरुणप्रघासेषु केवलानि हवींष्याम्नाय तत्र वैश्वदेविकं ब्राह्मणमतिदिष्टम् ' एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानि इतराणि' इति । इतराणि वैश्वदेविकानि । तत्र किमर्थवादमात्रस्यायमतिदेशः उत सार्थवादकस्य सविधिकस्य कृत्स्नस्य काण्डस्येति । तत्र पूर्वपक्षमाह । पञ्चसंचरेषु आग्नेयादिषु पञ्चसु हविःषु वरुणप्रघासगतेषु अर्थवादातिदेशः वैश्वदेविकस्य केवलस्य अर्थवादस्यैव अतिदेशः स्यात् । संनिधानात् । अर्थवादस्य विध्येकवाक्यतया संनिहितत्वात् । चतुर्ष्वपि पर्वसु संचरन्ति उपतिष्ठन्ते इति संचराणि, तानि च पञ्च हवींषि ।

सर्वस्य वैकशब्द्यात् । १८ ॥

वरुणप्रघासेषु ' एतद्ब्राह्मणान्येव पञ्च हवींषि यद्ब्राह्मणानीतराणि ' इति वाक्येन वैश्वदेवपर्वगतस्य सार्थवादकस्य सविधिकस्य काण्डस्य सर्वस्य अतिदेशः स्यात्, न तु अर्थवादमात्रस्य । ऐकशब्द्यात् । एक एवायं 'ब्राह्मणं' इति शब्दः विधीनां अर्थवादानां च । स यथा अर्थवादान् गृह्णाति तथा विधीनपि । एकः शब्दो येषां ते अर्थवादा विधयश्च एकशब्दाः, तेषां भावः ऐकशब्द्यम् । ऐकशब्द्यात् सर्वस्य काण्डस्य अतिदेशः स्यात् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः ।

लिङ्गदर्शनाच्च । १९ ॥

वरुणप्रघासगतेषु पञ्चसंचरेषु वैश्वदेवपर्वगतस्य सार्थवादस्य सविधिकस्य सर्वस्य काण्डस्यातिदेशं दर्शयति लिङ्गम् । ' निराहुतयो हूयेरन्, यजिनो यजन्ति, आहुतीनां संपत्त्यै त्रिंशत्नाम ' इति वरुणप्रघासेषु त्रिंशतमाहुतीर्दर्शयति । अङ्गप्रधानविध्यतिदेशे सत्येव उत्तरविहारे आघारावाज्यभागौ, अष्टौ हवींषि, नव प्रयाजाः, नव अनूयाजाः, स्विष्टकृत्, वाजिनहोमश्च इति लिङ्गदर्शनमुपपन्नं भवति । यदि विधयो नातिदिश्येरन्, तत् नोपपद्येत । तस्मात् विधयोऽपि अतिदिश्यन्ते ।

विहिताम्नानान्नेति चेत् । २० ॥

पूर्वपक्षी शङ्कते । वरुणप्रघासेष्वपि वैश्वदेविकाः केचित् धर्मा विधीयन्ते । यथा ' अग्निं मन्थन्ति, प्रसुवो भवन्ति ' पुष्पितानि बर्हींषि भवन्ति इत्यर्थः । तेषामतिदेशेन विहितानां पुनराम्नानमनर्थकं स्यात्, यदि विधीनामतिदेशः स्यात् । तस्मात् विहिताम्नानात् न विधीनामतिदेशः, किन्तु अर्थवादानामेव केवलानामिति । इति चेत् ।

नेतरार्थत्वात् । २१ ॥

तन्न, इतरार्थत्वात् । ' अग्निं मन्थन्ति ' ' प्रसुवो भवन्ति ' इत्यादयो विधयः इतरार्थाः दक्षिणविहारानुष्ठेयमात्रत्वात्साहविर्थाः, तस्मादेतत् ज्ञापकं विधीनामनतिदेशस्य । तस्मात् विधीनां च अर्थवादानां च वरुणप्रघासेषु अतिदेश इति सिद्धान्तः । के.

● पञ्चसंचरेषु वारुणप्रघासिकेषु वैश्वदेविकधार्यवाद विधिकाण्डस्यातिदेशः । भा. ७।१।३।१७–२९.

● पञ्चहोत्रा हविरभिमर्शनं अमावास्यायाम् । ( पञ्चहोतृमन्त्रश्च ' अग्निर्होता पञ्चहोतॄणाम् ' इत्युक्तत्वात् ' अग्निर्होता । अश्विनाध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता ' इति मन्त्रः ) । भा. ८।२।१५।२६.

● पञ्चहोतृचतुर्होतृमन्त्राभ्यामभिमर्शनं अपूर्वप्रयुक्तम्, न समुदायप्रयुक्तम् । भा. ९।२।५।११–१९, ● पञ्चहोतृचतुर्होतृमन्त्रयोः दर्शपूर्णमासहविरभिमर्शनकरणभूतयो, सौर्ययागे विकल्पः । ८।२।१५।२६.

● पञ्चमेऽध्याये । ' इदानीं क्रमनियमलक्षणमुच्यते । तत् श्रुत्यर्थपाठप्रवृत्तिकाण्डमुख्यैः वक्ष्यते । श्रुत्यादीनां च बलाबलम् ' । भा.५।१।१।१.

वा— श्रुत्यर्थपाठक्रमा उपदेशनिमित्ता एव । प्रवृत्तिकाण्डमुख्यक्रमास्तु अतिदेशनिमित्ता अपि प्रधानभूताः पदार्थाः । कर्ता गुणभूतः । तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव । क्रमनियमस्तु चिन्त्यते ।

वि— ' श्रुत्यादिभिः क्रमस्यास्य विशेषो वृद्धवर्धने । श्रुत्यादेर्नित्यता चेति पञ्चमाध्यायपादगः ॥ ' पञ्चमाध्यायस्य प्रथमे पादे श्रुत्यर्थपाठादिभिः क्रमो निरूपितः । द्वितीये वाजपेयगतेषु पशुषु एकैकधर्मसमापनं इत्यादिक्रमविशेषः । तृतीये पञ्चप्रयाजादीनामावर्तनेन ऐकादश्य इत्यादिवृद्धिः, अदाभ्यग्रहचित्योरनावृत्तिः इत्यादिः वृद्ध्यभावः । चतुर्थे क्रमनियामकानां श्रुत्यर्थपाठादीनां प्रबल्दुर्बलभावः । प्रस्तावना श्लोक. १७.

' द्वितीयादित्रये प्रोक्तं भेदशेषप्रयुक्तिभिः । अनुष्ठेयमनुष्ठानक्रमः पञ्चम ईर्यते ॥ ' वि. ५।१।१.

भाट्ट— तदेवं अङ्गप्रधानसाधारण्येन प्रयोजनवर्गे निरूपिते अधुना प्रयोगाश्रितः क्रमो निरूप्यते । एकादशे हि अङ्गानां प्रधानानां च एकेनैव प्रयोगविधिना विधानमिति वक्ष्यते । अतश्च एकविधिविधेयत्वेन सर्वसाहित्यस्य विवक्षितत्वात् एकेन कर्त्रा युगपत् सर्वकरणाशक्तेः अवश्यभाविनि कस्मिंश्चित् क्रमे नियामकानि श्रुति–अर्थ–पठन–स्थान–मुख्य–प्रवृत्त्याख्यानि षट् प्रमाणानि निरूपयिष्यन्ते । ५।१।१,

पञ्चमेऽध्याये – भिन्नप्रयोगपरिगृहीतानां पौर्वापर्यमात्रं प्रसङ्गान्निरूपितम् । व्यवहिताव्यवहितसाधारण्येन पौर्वापर्यमेव अध्यायार्थः इत्यपि ध्येयम् । ५।३।९.

● पञ्चमलकारः प्रतिषेधे श्रौतो यथा ' न संतृणत्ति ' ' दीक्षितो न जुहोति ' । बाल. पृ. ४०, ● पञ्चमलकारः विधौ श्रौतो यथा ' समिधो यजति ' । स्मार्तो यथा मनुः ( २।२९ ) ' प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते । ' ' महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः । ' ( २।२८ ) इति । पृ. ४०.

● पञ्चमलकाररूपं तु वर्तमानापदेशेन संदिग्धम् । वा. ३।२।२।२२ पृ. १३६.

● पञ्चमी ( भाट्टचिन्तामणिः ) । अपादानत्व पञ्चम्यर्थः ' अपादाने पञ्चमी ' (पा० २।३।२८) इति सूत्रात् । अपादानत्वं च परसमवेतक्रियाजन्यविभागाश्रयत्वम् । विभागहेतुक्रियानाश्रयत्वे सति विभागाश्रयत्वं इति तदर्थः ' ध्रुवमपायेऽपादानम् ' ( पा० १।४।२४ ) इति सूत्रात् । अपायो विश्लेषः विभागवियोगादिशब्दवाच्यः । अन्यस्य विभागवियोगादिक्रियाश्रयस्य विभागादौ सति विभागवियोगाश्रयत्वेन ध्रुवं स्थिरं विभागवियोगादिनिरूपकमिति यावत्, तदपादानमिति सूत्रार्थः । यथा ' वृक्षात् पर्णं पतति ' । अधःसंयोगानुकूलक्रिया पतेरर्थः अधःसंयोगप्रयोजकविभागानुकूलक्रिया वा । एवं च अधःसंयोगानुकूलक्रियानाश्रयत्वे सति तादृशक्रियाजन्यविभागाश्रयत्वात् वृक्षस्य अपादानत्वम् । इत्थं च तत्तद्धात्वर्थतावच्छेदकफलजनकक्रियानाश्रयत्वे सति तादृशक्रियाजन्यफलनिरूपकत्वं तादृशक्रियानिरूपकत्वं च इति निष्कर्षः । एवं चौरात् व्याघ्रात् ( वा ) बिभेति, चौरात् त्रायते, अध्ययनात् पराजयते, यवेभ्यो गां वारयति, मातुर्निलीयते, उपाध्यायादधीते, ब्रह्मणः प्रजाः प्रजायन्ते, हिमवतो गङ्गा प्रभवति इत्यादौ भयादिहेतुचौरव्याघ्रादीनाम् ' भीत्रार्थानां भयहेतुः ' ( पा० १।४। २५ ) ' पराजेरसोढः ' ( पा० १।४।२६ ) ' वारणार्थानामीप्सितः ' ( पा० १।४।२७ ) ' अन्तर्धौ येनादर्शनमिच्छति ' ( पा० १।४।२८ ) ' आख्यातोपयोगे ' ( पा० १।४।२९ ) ' जनिकर्तुः प्रकृतिः ' ( पा० १।

४।३०) 'भुवः प्रभवः' (पा० १।४।३१) इत्याद्यानुशासनिकं मुख्यमेव अपादानत्वम्। अत्र च अपक्रमानुकूलक्रिया बिभेतेरर्थः। तदनुकूलरक्षणं त्रायतेः। ग्लानिजनकक्रिया पराजयतेः। दूरदेशसंयोगानुकूलक्रिया वारयतेः। दर्शनाभावानुकूलक्रिया निलीयतेः। गुरूच्चारणानूच्चारणानुकूलक्रिया अधीतेः। उत्पत्त्यनुकूलक्रिया जायतेः। प्रकाशजनकहृदयादिक्रिया प्रपूर्वकभवतेरर्थः।

तदनाश्रयत्वे सति तत्तत्क्रियानिरूपकत्वात् 'भीत्रार्थानां भयहेतुः' इत्याद्यनुशासनानाम् अपादानत्वबोधकता, न तु पञ्चम्या उपपदविभक्तित्वबोधकता इति वैयाकरणाः मीमांसकाश्च। अरण्यादेः निरूपकत्वाभावात् नापादानत्वम्। अत एव 'अरण्यात् बिभेति' इति न प्रयोगः। यदि 'वनात् बिभेति' इति प्रयोगः, तदा वनपदस्य वनस्थितव्याघ्रादौ लक्षणा। 'मञ्चादवरोहति' इत्यादौ विभागप्रयोजकक्रियाऽनाश्रयस्य तन्निरूपकस्य मञ्चभागस्य अपादानत्वम्। नैयायिकास्तु विभागाश्रयत्वमेव अपादानत्वमिच्छन्तः 'व्याघ्रात् बिभेति' इत्यादौ लक्षणया प्रयोगं क्रियान्तरकल्पनेन वा उपपदविभक्तित्वमिच्छन्ति। एवम् 'धावतोऽश्वात् पतति' इत्यत्र अश्वस्य उक्तक्रियाश्रयत्वेऽपि तस्य विभागहेतुत्वाभावात् अपादानत्वोपपत्तिः। न चैवम् 'मेषान्मेषोऽपसरति' इत्यत्र मेषस्य कथमपादानत्वम्, उभयकर्मजविभागस्य ऐक्येन तज्जनकक्रियानाश्रयत्वाभावात् इति वाच्यम्। विभागजनकक्रियाभेदात् एकक्रियामादाय अपादानत्वम्। 'अन्योन्यस्मात् अपसरतः' इत्यत्र उभयकर्मजविभागस्य ऐक्येऽपि तत्तज्जनकक्रियामादाय परस्परस्य तदनाश्रयत्वोपपादनात्। 'वृक्षात् पर्णं पतति' इत्यत्र पतनक्रियाधात्वर्थमादाय संगमनीयम्। न चैवम् 'वृक्षात् स्पन्दते' इत्यापत्तिः। 'गृहाच्चलितः, राज्याच्चलितः' इत्यादिवत् इष्टत्वात्। केचित्तु पञ्चम्यन्त्यापादानत्वबोधेन द्वितीयाया असाधुत्वात् इत्याहुः। 'बलाहकात् विद्युत् विद्योतते' इत्यत्र 'निःसृत्य' इत्यध्याहारेण उपपदविभक्तिः। एवं अन्यादिपदसमभिव्याहारे तु पञ्चमी उपपदविभक्तिः, 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' (पा० २।३।२९) इति सूत्रात्। अन्यपदेन अन्यार्थकेतरादिपदग्रहणम्। 'कृष्णादन्यः तिष्ठति, आराद् वनात्, कृष्णादितरः, ऋते कृष्णात्'। दिक्शब्दसमभिव्याहारे 'ग्रामात् पूर्वः, चैत्रात् पूर्वः'। अञ्चूत्तरपदं प्राक्प्रत्यगादिपदम्। तत्समभिव्याहारे 'ग्रामात् प्राक्'। आच्प्रत्ययान्तदक्षिणा(पद)समभिव्याहारे 'दक्षिणा ग्रामात्'। दूरत्वान्तक—आहिपदसमभिव्याहारे 'दक्षिणाहि ग्रामात्'। अत्र पञ्चम्यर्थस्य उपपदार्थेऽन्वयः। इदं च प्रभृत्यादिपदानामुपलक्षणम्। भवात् प्रभृति, आरभ्य। ग्रामाद् बहिः। एवं विना-पृथग्-नानादिपदसमभिव्याहारे द्वितीयातृतीयाभ्यां विकल्पिता पञ्चमी उपपदविभक्तिः। एवं दूरान्तिकार्थकपदसमभिव्याहारे द्वितीयाषष्ठीभ्यां विकल्पिता पञ्चमी उपपदविभक्तिः, ग्रामस्य ग्रामात् ग्रामं दूरेण, अन्तिकेन इति। मणि. पृ १४०–१४२.

• पञ्चमी (भाट्टरहस्यमते)। पञ्चमी अपि भावनायामेव अन्वेति। तदर्थश्च 'अपादाने पञ्चमी' (पा० २।३।२८) इति सूत्रात् अपादानत्वरूपः। तच्च 'ध्रुवमपायेऽपादानम्' (पा० १।४।२४) इति सूत्रनिरुक्तम्। तथाहि। अपाये विभागे, ध्रुवं निश्चलं क्रियानाश्रयं यत्, तत् अपादानसंज्ञं स्यादिति सूत्रार्थः। तथा च क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्वं अपादानत्वम्। अस्ति चेदम् 'वृक्षात् पर्णं पतति' इत्यत्र वृक्षे पतनक्रियानाश्रयत्वात् पतनक्रियाजन्यविभागाश्रयत्वाच्च। अत्र च उदासीने घटे पर्णे च अतिप्रसङ्गवारणार्थं दलद्वयम्। क्रियानाश्रयत्वं च यद्यपि सामान्यतो न क्रियावन्निष्ठभेदप्रतियोगित्वम्। प्रतियोगितासामान्यप्रवेशे पतनवत्यपि पर्णे द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्त्वात् 'स्वस्मात् पतति' इति प्रयोगापत्तेः। प्रकृत्यर्थताऽवच्छेदकावच्छिन्नप्रतियोगिताप्रवेशे च 'द्रव्यात् पतति' इत्यस्य अनापत्तेः पतनवति पर्णे द्रव्यत्वावच्छिन्नभेदाभावात्, तथापि प्रकृत्यर्थताऽवच्छेदकाश्रयकिञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताविवेशेनैव क्रियावन्निष्ठभेदप्रतियोगित्वं निर्वाच्यम्। तच्च पतमानपर्णव्यक्तिनिष्ठभेदनिरूपितयत्किञ्चित्पर्णव्यक्तित्वावच्छिन्नप्रतियोगितावत्त्वम् उदासीने पर्णेऽपि, अतः क्रियाजन्यविभागाश्रयत्वोपादानम्, इति न वृक्षात् पतति पर्णे 'पर्णात् पर्णं पतति'

इति प्रयोग. । अत्र विभाग: परसमवेतत्वं च विभक्तिवाच्यम् । तत्र च प्रकृत्यर्थो वृक्षो विभागे पदार्थैकदेशे भेदे च समवेतत्व-प्रकृत्यर्थताऽवच्छेदकाश्रयविभागाश्रयीभूतव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गाभ्याम् अन्वेति । विभाग. परसमवेतत्वं च जनकत्व-स्वरूपसम्बन्धाभ्यां पतनरूपधात्वर्थे अन्वेति । तथा च वृक्षसमवेतविभागजनकवृक्षत्वरूपप्रकृत्यर्थताऽवच्छेदकाश्रयविभागाश्रयीभूतव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेण वृक्षभेदाश्रयसमवेतपतनाश्रयः पर्णमिति शाब्दबोध । अत्र प्रकृत्यर्थताऽवच्छेदकाश्रययत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वस्यैव प्रकृत्यर्थस्य वृक्षस्य पञ्चम्यर्थे भेदे संसर्गत्वोक्तौ वृक्षात् पतति पर्णे 'पर्णात् पतति' इति प्रयोगापत्ति , तत्पतनस्यापि प्रकृत्यर्थताऽवच्छेदकपर्णत्वाश्रययत्किंचिदुदासीनपर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्पतमानपर्णवृत्तित्वात् , पतमानपर्णवृत्तिविभागजनकत्वाच्च । अत तद्व्यावृत्त्यर्थं प्रकृत्यर्थस्य भेदेन सह अन्वये संसर्गघटकव्यक्तौ पतनजन्यविभागाश्रयत्वं विशेषणमिति केचिन्नैयायिकनव्या । अन्ये तु (इत्याहु इति दूरेणान्वय ) गुरुभूतसंसर्गघटितव्युत्पत्तिविशेषकल्पनाया गौरवापत्ते क्रियाऽनाश्रयत्वं न क्रियावद्भेदप्रतियोगित्वम् , किन्तु क्रियावत्प्रतियोगिकभेदाश्रयत्वम् , तदा क्रिया प्रतियोगिताऽवच्छेदिका । भेदश्च अभावीयविशेषणतासम्बन्धेनैव अपादानवृत्ति. । तच्च उदासीनपर्णादावपि, इति तद्व्यावृत्त्यर्थं विशेष्यदलम् । तथा च अस्मिन् पक्षे विभागो भेदश्च पञ्चम्यर्थ । तत्र च आधेयतया प्रकृत्यर्थान्वय । तयोश्च जनकत्वप्रतियोगिताऽवच्छेदकत्वोभयसंसर्गेण धात्वर्थान्वय । वृक्षवृत्तिविभागजनकवृक्षनिष्ठभेदप्रतियोगिताऽवच्छेदकपतनमित्यादिशाब्दबोध । अत्र च 'ग्रामादागच्छत अश्वात् पतति ' इत्यत्र अश्वग्रामयो गमनपतनापादानत्वव्यावृत्त्यर्थं लक्षणे क्रियाविशेषविवक्षा द्रष्टव्या । तेन यन्निष्ठविभागजनकत्वेन यन्निष्ठभेदप्रतियोगिताऽवच्छेदकत्वेन च यत्क्रिया विवक्षिता, तस्य तत्क्रियापादानत्वं इति निष्कर्षः । तथा च पतनस्य अश्वे एव, गमनस्य च ग्रामे एव अपादानत्वमिति सिध्यति । अत एव 'परस्परस्मात् मेषौ अपसरत. ' इत्यत्र उभयकर्मजविभागस्थले विभागस्य एकत्वेऽपि तत्तत्क्रियाविशेषान् आदायैव तदनाश्रयस्य तदपादानत्वं निर्वचनीयम् । विवक्षापदोपादानेन च यदा नोक्तरूपेण विवक्षा, अपितु अवयवावयविविभागस्यैव विवक्षा, तत्र 'वृक्षस्य पर्णं पतति' इत्येव प्रयोग. इति न तत्र अपादानत्वप्रसङ्ग । यत्पद च यत्पदार्थाभिधेयपरम् । तेन ' वृक्षात् तस्मिन्नेव वृक्षे पर्णं पतति ' इत्यत्र सप्तम्यन्तपदाभिधेयत्वविशिष्टस्य नापादानत्वम् । न चैवमपि ' वृक्ष त्यजति ' इत्यत्र ' स्पन्दते पर्णम् ' इत्यत्र च वृक्षे अपादानत्वापत्ति., क्रियाजन्यविभागाश्रयत्वात् क्रियानाश्रयत्वाच्च इति वाच्यम् । वृक्षे अपादानत्वसत्त्वेऽपि बलीयस्या कर्मसंज्ञया फलाश्रयत्वघटकत्वेन त्यागकर्मत्वस्यापि सत्त्वात् द्वितीयोत्पत्ते पञ्चम्यप्रयोगात् । ' स्पन्दते पर्णम्' इत्यत्र ' आसनात् चलित , राज्यात् चलित ' इतिवत् ' वृक्षात् स्पन्दते ' इत्यस्यापि इष्टत्वात् । अत एव ' स्पन्दते ' इत्यत्रापादानत्वव्यावृत्त्यर्थम् ' क्रियापद सकर्मकधातुपरम् ' इति केषा चित् समाधानमपास्तम् । ' वृक्ष त्यजति ' इत्यत्र एवमनिवारणाच्च । अथवा उभयत्र अपादानत्वव्यावृत्त्यर्थं धात्वर्थताऽवच्छेदकफलभिन्नत्व विभागविशेषण वाच्यम् । त्यजेर्हि विभागानुकूलो व्यापारो वाच्य । अतो विभागस्य धात्वर्थतावच्छेदकत्वात् तद्भिन्नविभागाश्रयत्वाभावेन न वृक्षे अपादानत्वप्रसङ्ग । स्पन्दतेश्च धात्वर्थताऽवच्छेदकफलाभावेन तद्भेदस्य अप्रसिद्धया तादृशविभागाप्रसिद्धे नापादानत्वप्रसक्ति । अथवा ' यन्निष्ठविभाग ' इत्यपहाय ' यन्निरूपित ' इति लक्षणे विवक्षितम् । ' वृक्ष त्यजति ' इत्यत्र वृक्षनिष्ठो विभागो विवक्षित , न तु वृक्षनिरूपित इति नातिप्रसङ्ग । 'वृक्षात् पर्णम्' इत्यत्र च प्रकृत्यर्थस्य निरूपितत्व विभागे संसर्ग । तथा च वृक्षनिरूपितविभागजनक वृक्षनिष्ठभेदप्रतियोगितावच्छेदक यत् पतन इत्यादि शाब्दबोध । ' स्पन्दते ' इत्यत्र अपादानत्ववारणाय क्रिया सकर्मिकैव लक्षणे निवेशिता । ' आसनात् चलित., सार्थात् हीयते पशु ' इत्यादय प्रयोगास्तु वक्ष्यमाणावधित्वरूपपञ्चम्यर्थमादाय नेया इत्याहु ( अन्ये तु इति प्राक्तनेनान्वय•) । वैयाकरणनव्या अपि केचिदेवम् । वस्तुतस्तु

गुरुभूतावच्छिन्नावच्छेदकभेदेन अनेकशक्तिकल्पनापेक्षया प्रकृत्यर्थस्य पञ्चम्यर्थद्वयान्वये व्युत्पत्तिद्वयम्, पञ्चम्यर्थस्य च धात्वर्थद्वयान्वये व्युत्पत्तिद्वय इति कल्पनापेक्षया च अनुगतव्यवहारसाक्षिकतया अपादानत्वम् अखण्डोपाधिरूपमेकं धर्मं निरुक्तापादानत्वसमव्यापकं कल्पयित्वा तत्रैव पञ्चम्याः शक्तिं कल्पयित्वा तस्मिंश्च प्रकृत्यर्थान्वयाय एकाम्, तस्य च आख्यातार्थान्वयाय एकां व्युत्पत्तिं कल्पयितुमुचितम्। प्रकृत्यर्थस्य च तत्र आधेयतया अन्वयः। तस्य च स्वनिरूपकधात्वर्थानुकूलत्वसंसर्गेण कृतौ अन्वयः। तदेव प्रचुरप्रयोगात् अपादाने पञ्चम्याः शक्यम्। यत्र तु 'वृक्षात् विभजते' इत्यादौ विभागजन्यविभागाश्रयत्वाभावात् नोक्तापादानत्वसम्भवः, तत्र लक्षणया स्वरूपसम्बन्धविशेषरूपं अवधित्वं पञ्चम्यर्थः। तत्रापि अपाये विभागे, ध्रुवमवधिभूतमपादानसंज्ञं स्यात् इति वाक्यपदीयादौ सूत्रं व्याख्यातम्। तस्यापि धात्वर्थघटितसंसर्गेण भावनाऽन्वयः। वृक्षनिष्ठावधितानिरूपकविभागानुकूलकृतिः कर्तृवृत्तिः इति शाब्दबोधः। स्वनिष्ठविभागावधित्वस्य स्वस्मिन्नभावाच्च न 'स्वस्मात् विभजते' इति प्रयोगः। सर्वेऽपि पूर्वोक्तेषु अवधित्वमेव पञ्चम्यर्थः। तस्य च क्वचित् धात्वर्थजन्यविभागद्वारकः अन्वयः, क्वचित् धात्वर्थद्वारकः इत्यपि वा सुवचम्। 'बलाहकात् विद्योतते विद्युत्' इत्यत्र तु निःसरणजन्यविद्योतनं लक्षणया द्युतेरर्थः। तत्र एकदेशे निःसरणे पञ्चम्यर्थान्वयः। एवं 'कुसूलात् पचति' इत्यत्रापि आदानजन्यः पाकः पच्यर्थः। आदाने च पञ्चम्यर्थान्वय इति परटीका। स्वमते तु लक्षणाया एकदेशान्वये च प्रमाणाभावात् पञ्चम्यर्थः अपादानत्वादिरेव स्वनिरूपकनिःसरणादिजन्यविद्योतनानुकूलत्वसंसर्गेण कृत्यन्वयी। 'कुतो भवान्' इत्यादौ प्रश्ने 'पाटलिपुत्रात्' इत्याद्युत्तरे च 'आगतः' इत्यध्याहारेण अन्वयो बोध्यः। यत्तु 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकम् एतेषां योगे पञ्चमी वाच्या इत्यर्थकम्, तत् प्रामाणिकानुशासनम्। यतः 'पापात् जुगुप्सते विरमति, धर्मात् प्रमाद्यति' इत्यादौ पञ्चमी। अत्र आद्ये निन्दा धात्वर्थः। तत्र विषयत्वम्, पञ्चम्यर्थो विषयित्वम्, प्रकृत्यर्थश्च निरूपितत्वसंसर्गेण तत्र अन्वेति, तच्च स्वाश्रयनिगानवत्त्वसम्बन्धेन आख्यातार्थे आश्रयत्वे। द्वितीये करणानन्तरं अकरणं धात्वर्थः, पञ्चम्यर्थः पूर्ववत्, आख्यातार्थः आश्रयत्वम्, पञ्चम्यर्थस्य च कृतिद्वारकः अन्वयः। पापविषयकृत्यनन्तरकालीनपापविषयककृत्यभावाश्रयत्वमिति शाब्दबोधः। तृतीये पञ्चम्यर्थो विषयित्वमेव, अनवधानं धात्वर्थः, आख्यातार्थः आश्रयत्वमेव। स्वाश्रयानवधानवत्त्वं आश्रयत्वे पञ्चम्यर्थस्य संसर्गः।

एवम् 'भीत्रार्थानां भयहेतुः' (पा० १।४।२५) इत्यनुशासनात् भयार्थानां त्राणार्थानां च धातूनां योगे भयहेतुः अपादानसंज्ञः स्यात् इत्यर्थकात् 'चोराद् बिभेति, चोराद्धनिकं त्रायते' इत्यत्र पञ्चमी। अत्र हेतुमत्त्वं पञ्चम्यर्थः। आद्ये भयं धात्वर्थः। द्वितीये भयाभावानुकूलो व्यापारः, न तु भयाभावमात्रं कैश्चिदुक्तम्, तथात्वे धनिकस्य त्यज्यते धात्वर्थताऽवच्छेदकफलाश्रयत्वेन तदाश्रयत्वरूपकर्मत्वानुपपत्तेः। अस्मन्मते तु व्यापारस्य भयाभाव एव कर्म इति तदुपपत्तिः। आख्यातार्थः आश्रयत्वम्। स्वाश्रयधात्वर्थकत्वं उभयत्र संसर्गः। चोरहेतुकभयाश्रयत्वम्, चोरहेतुकभयाभावानुकूलव्यापाराश्रयत्वमिति शाब्दबोधः। 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इत्यादौ तु 'कस्य संयुगे' इत्येव संयुगघटितसम्बन्धेन भावनाऽन्वयात् षष्ठी। न चैवं संयुगस्यैव अपादानत्वापत्तिः, परया अधिकरणसंज्ञया बाधात्। अधिकरणत्वाविवक्षायां तु इष्टापत्तेः। एवं 'पराजेरसोढः' (पा० १।४।२६) इति सूत्रात् पराजेः प्रयोगे योऽसोढोऽर्थः अपादानसंज्ञः स्यात् इत्यर्थकात् 'अध्ययनात् पराजयते' इत्यत्र पञ्चमी। अत्र धात्वर्थः अनिष्टम्, पञ्चम्यर्थो जन्यत्वम्, अध्ययनजन्यानिष्टाश्रयत्वमिति शाब्दबोधः। 'शत्रून् पराजयते' इत्यत्र तु शत्रुनिष्ठाभिभवानुकूलकृत्याश्रयत्वमिति बोधात् द्वितीया। केचित्तु असहनं धात्वर्थः 'अध्ययनं न सहते' इति विवरणात् इत्याहुः। एवम् 'वारणार्थानामीप्सितः' (पा० १।४।२७) इति सूत्रात् वारणार्थानां योगे ईप्सितोऽर्थः अपादानसंज्ञः स्यात् इत्यर्थकात् 'यवेभ्यो गां वारयति' इत्यादौ पञ्चमी। अत्र पञ्चम्यर्थः प्रतियोगित्वम्,

द्वितीयार्थो वृत्तित्वम्, धात्वर्थश्च विनाशानुकूलव्यापाराभावानुकूलव्यापारः, यत्नश्च आख्यातार्थः, पञ्चम्यर्थस्य स्वनिरूपकविनाशघटितः संसर्गः, द्वितीयार्थस्य धात्वर्थताऽवच्छेदकीभूतव्यापाराभावद्वारकः। तथा च यवप्रतियोगिकविनाशानुकूलो भक्षणादिरूपो यो व्यापारः, तस्य गोवृत्तिर्योऽभावः तदनुकूलव्यापारानुकूला कृतिः देवदत्तवृत्तिः इति बोधः पर्यवसितः। अत्र च यवाना वस्तुत ईप्सितत्वात् पञ्चमी। न चैवं गोरपि ईप्सितत्वात् पञ्चम्यापत्तिः, तस्या ईप्सिततमत्वेन कर्मत्वोपपत्तेः। एतदर्थमेव हि 'कर्तुरीप्सिततमम्' (पा० १।४।४९) इत्यत्र तमब्ग्रहणमित्युक्तं कौस्तुभे। धात्वर्थताऽवच्छेदकीभूतस्य विनाशानुकूलव्यापारध्वंसस्य गोमात्रवृत्तित्वात् तत्रैव द्वितीया। एवं 'कूपादन्धं वारयति' इत्यत्र वृत्तित्वं पञ्चम्यर्थः, पतनानुकूलव्यापाराभावानुकूलो व्यापारो धात्वर्थः। तथा च कूपवृत्तिः अधःप्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपं यत् पतनम्, तदनुकूलो यः अन्धवृत्तिः व्यापारः तदभावानुकूलो यो व्यापारः तदनुकूला कृतिः चैत्रवृत्तिः इति बोधः पर्यवसितः। एवम् 'पुष्पेभ्य आतपं वारयति' इत्यत्रापि शुष्कीभावानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। पुष्पवृत्तिशुष्कीभावानुकूलव्यापाराभावो यः आतपनिष्ठः तदनुकूल- इत्यादि पूर्ववत् बोधः। 'अग्नेर्माणवकं वारयति' इत्यादौ जन्यत्वं पञ्चम्यर्थः, दाहानुकूल- इत्यादिर्धात्वर्थः। न चैवमननुगमः। अनुभवानुरोधेन तत्तत्कार्याणामननुगमस्य अदोषत्वात्। यवेभ्यो गां वारयति अन्यथा भक्षयिष्यति, कूपादन्धं वारयति पतिष्यति, पुष्पेभ्य आतपं वारयति शुष्काणि भविष्यन्ति, अग्नेर्माणवकं वारयति दग्धो भविष्यति इति प्रयोजनस्य भेदेन विवरणात्। अन्ये तु अनुगमरसिकाः सर्वत्र संयोगजनकव्यापाराभावस्य कर्मकारकवृत्तेः अनुकूलो यो व्यापारः स एव धात्वर्थः। वृत्तित्वं च पञ्चम्यर्थ इत्याहुः। तन्न, 'यवेभ्यो गोसंयोगं वारयति, यवेभ्यः कार्मणिकं वारयति' इत्यादौ अनुगमानुपपत्तेः। ननु 'वारणार्थानामीप्सितः' (पा० १।४।२७) इति सूत्रे न तावत् ईप्सिते वारणक्रियायोगे एव अपादानत्वनियमः 'इष्टाद्ग्रामात् अन्नं ददाति' इत्यादौ तदभावे अपि दर्शनात्। नापि वारणार्थयोगे ईप्सित एवेति नियमः, 'सर्पात् वारयति, गङ्गास्नानात् वारयति' इत्यादौ अनीप्सितेऽपि दर्शनात्। इति चेन्न। निवार्यं निवारकस्य यत् तस्य ईप्सितम् इति तदर्थात्। सर्पादयो हि निवारकस्यापि पुरोवृत्तिवादिना निवार्यस्य इष्टा एव। पुष्पेभ्य आतपं वारयति इत्यादौ निवार्यस्य अचेतनत्वात् निवारकग्रहणम्। अथवा धात्वर्थताऽवच्छेदकीभूतस्य विनाशानुकूलव्यापाराभावरूपस्य फलस्य यत् फलं विनाशादि, तत्सन्निधित्वेन प्रसक्तस्य यवादेः तद्विपरीतत्वेन निवारकेच्छाविषय इति तदर्थ इति न कश्चित् विरोधः। वस्तुतस्तु बहुधा एतानि सर्वाणि सूत्राणि भाष्यकारेण प्रत्याख्यातानि। तथाहि भाष्यम्। 'ध्रुवमपाये' इतिसूत्रे हि न वस्तुत एव क्रियाजन्यो विभागोऽभिप्रेतः, अपितु शाब्दोऽपि यदि इयं क्रिया न स्यात् तदा अमुकारकेण अपादानस्य संबन्धः स्यात्, क्रियया तु स निवारित इति तदभावो जनित इति। तदभिप्रायमेव च अपायपदम्। आवश्यकं च एतादृशं व्याख्यानम् 'अश्वुत्कादेव चोरात् पलायितः' इत्येतदर्थम्। ततश्च तत्सूत्रेणैव यवादेरपि अपादानत्वसिद्ध्या सूत्रान्तरवैयर्थ्यमिति। न चैवं गवादेरपि शाब्दाभावाश्रयत्वात् अपादानत्वापत्तिः, ईप्सिततमत्वादिप्रयुक्तकर्मसंज्ञया परत्वेन अपादानत्वसंज्ञाया बाधात्, वैपरीत्येन विवक्षाया इष्टापत्तेश्च। न च विवक्षाया उभयोः अपादानत्वापत्तिः, वारयतेः सकर्मकत्वेन अन्यतरस्य कर्मत्वविवक्षाया आवश्यकत्वात्। एवम् 'अन्तर्धौ येनादर्शनमिच्छति' (पा० १।४।२८) इत्यनेन अन्तर्धौ व्यवधाने सति यत्कर्तृकस्य आत्मनो दर्शनस्य अभावमिच्छति, तत् अपादानं स्यात् इत्यर्थकेन 'मातुर्निलीयते कृष्णः' इत्यादौ पञ्चमी। अत्र च प्रत्यक्षाभावेच्छापूर्वकः प्रत्यक्षविरोधिव्यापारः धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः धात्वर्थताऽवच्छेदके प्रत्यक्षे अन्वेति। विरोधित्वं तज्जनकलौकिकसन्निकर्षाभावानुकूलत्वम्। कृतिराख्यातार्थः। तथा च मातृवृत्तिस्वविषयकप्रत्यक्षाभावेच्छापूर्वको यः प्रत्यक्षजनकलौकिकसन्निकर्षाभावानुकूलव्यापारः तदनुकूलकृतिः कृष्णवृत्तिः इति शाब्दबोधः।

व्युत्पत्तिबलेन च प्रत्यक्षे कृष्णविषयत्वस्य बोधः पार्ष्ठिकः । एवं नियमपूर्वकविद्यास्वीकारे वक्ता अपादानसंज्ञः स्यात् इत्यर्थकेन 'आख्यातोपयोगे' (पा० १।४।२९) इति सूत्रेण 'उपाध्यायादधीते' इत्यत्र पञ्चमी । अत्र उच्चारणोत्तर-कालीनं अनभ्यस्तोच्चारणं धात्वर्थः । गृचितं पञ्चम्यर्थः । इदमपि सूत्रं भाष्यकारेण प्रत्याख्यातम् । उच्चारणक्रिया-जन्यशब्दश्रवणस्य समानजातीयशब्दानां उपाध्यायमुखनिः-सृतत्वेन उपाध्यायस्य क्रियाजन्यविभागाश्रयत्वात् 'ध्रुव-मपाये' इति सूत्रेणैव तत्सिद्धेः । न च एवंविधस्य विभागस्य मुख्यविभागत्वाभावात् नैकविधत्वं अपादान-त्वस्य इति वाच्यम् । नानाविधाना एवंजातीयकाना-मपादानत्वानां व्यापकीभूतावच्छेदकधर्मरूपापादानत्वे एव तात्पर्यात् । अत एव एवंविधाः प्रयोगाः सर्वे शक्या एव इत्यपि शक्यं वक्तुम् । तत्स्थापनमेव च प्रत्याख्यानफलम् । उक्तविधतत्तद्रूपेण निरूढलक्षणया चोपसिद्ध्यर्थं तत्त-त्सूत्राणि इति मत्वा अस्माभिः अन्यैश्च तत्तत्सूत्राणि व्याख्यायन्ते । एवं जायमानस्य हेतुः अपादानसंज्ञः स्यात् इत्यर्थकेन 'जनिकर्तुः प्रकृतिः' (पा० १।४।३०) इति सूत्रेण 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र पञ्चमी । अत्र जन्यत्वं पञ्चम्यर्थः । स च स्वाश्रयव्युत्पत्तिकर्तृत्वसंबन्धेन आख्यातार्थे आश्रयत्वे अन्वेति । अत्र हेतुत्वमुपादान-निमित्तोभयसाधारण्येन विवक्षितम् । तेन 'पुत्रात् प्रमोदो जायते, मृदो घटो जायते' इत्यादौ पञ्चमी । ब्राह्मणस्तु उभयरूपत्वात् पञ्चमी । एवम् 'भुवः प्रभवः' (पा० १।४।३१) इत्यनेन भवनस्य प्रकर्षविशिष्टस्य यः कर्ता, तस्य यः प्रभवनप्रतियोगी, सः अपादानसंज्ञः स्यात् इत्यर्थकेन 'हिमवतो गङ्गा प्रभवति' इत्यत्र पञ्चमी । अत्र प्रकर्षः संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम् । धात्वर्थश्चैतत्संसर्गीयभारतवर्षवृत्तिभूसंयोगध्वंससमानकालीनः तादृशभूसंयोगः । प्रतियोगित्वं पञ्चम्यर्थः । तस्य च प्रकर्षार्थसंयोगद्वारक आख्यातार्थान्वयः । आख्यातार्थः आश्रयत्वम् । धात्वुपसर्गार्थभूतपर्वतसंयोगेषु गङ्गावृत्तित्वं च व्युत्पत्तिबललभ्यम् । तथा च हिमवत्प्रतियोगिकगङ्गा-संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वेनतत्संसर्गीयभारतवर्षस्थ-भू-गङ्गा-संयोगध्वंससमानकालीनतादृशभूसंयोगाश्रयत्व गङ्गावृत्ति इति बोधः पर्यवसितः । अत्र वैकुण्ठसंयोग-ध्वंसक्षणोत्तरं तादृशभूगङ्गासंयोगस्य आद्यस्य जायमानतया 'वैकुण्ठात् भुवि प्रभवति गङ्गा' इतिप्रयोगापत्तिः, अतः अव्यवहितेति । काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे उक्त-भूगङ्गासंयोगानां केषां चिज्जायमानत्वात् 'काशीतो गङ्गा भुवि प्रभवति' इतिप्रयोगापत्तेः तादृशसंयोगध्वंससमान-कालीनेति । एवं च आद्यस्यापि तादृशसंयोगस्य तदव्य-वहितपूर्वक्षणवृत्तिवैकुण्ठसंयोगध्वंसाव्यवहितोत्तरत्वात् 'वैकुण्ठात् प्रभवति' इतिप्रयोगापत्तेः अनिवारणात्प्रकर्षा-र्थसंयोगध्वंसक्षणस्यापि आद्यत्वविशेषणं देयम् । वस्तु-तस्तु 'वैकुण्ठात् भुवि प्रभवति' इतिप्रयोगस्य इष्टापत्त्यैव परिहर्तुं शक्यत्वात् न तन्निवारणाय पदद्वयदानम् । एवम् 'ल्यब्लोपे कर्मण्यधिकरणे च' इत्यनेन (वार्तिकेन) अर्थाध्याहारादिना गम्यमाने ल्यबन्तकर्मणि अधिकरणे वा पञ्चमी स्यात् इत्यर्थकेन 'प्रासादात् प्रेक्षते' इत्यादौ पञ्चमी । 'प्रासादमारुह्य प्रेक्षते, प्रासादे स्थित्वा प्रेक्षते' इत्यर्थः । अत्र कर्मत्वं अधिकरणत्वं वा पञ्चम्यर्थः । तस्य च स्वनिरूपकारोहणादिभावनोत्तरकालिकत्वादि-संसर्गेण प्रेक्षणभावनायामन्वयः । न च गम्यमानक्रियांशः कथं सार्थघटकत्वम्, 'कस्मात् त्वम् ? नद्याः' इत्यादौ आगतादिपदाध्याहारेण गम्यमानक्रियादेः विशेष्यत्वानु-पपत्तौ सम्पर्कघटकत्वस्य सुतरामुपपत्तेः । एव 'यतश्चाध्व-कालनिर्माणं तत्र पञ्चमी' 'तद्युक्तादध्वनः प्रथमासप्तम्यौ' 'कालात् सप्तमी च वक्तव्या' इत्यादिवार्तिकात् 'वनात् ग्रामो योजनं योजने वा, कार्तिक्या आग्रहायणी मासे' इत्यादौ पञ्चमी । अत्र अवधित्वं पञ्चम्यर्थः । वनावधिक-योजनपरिमितदेशवृत्तिग्रामः इति बोधः फलितः । प्रथमार्थोऽपि अधिकरणत्वमेव । एवम् 'अन्य-आरात् -इतर-ऋते-दिक्शब्द-अञ्चूत्तरपद-आच्-आहि-युक्ते' (पा. २।३।२९) इत्यनेन एभिः शब्दैर्योगे पञ्चमी इत्यर्थकेन 'कृष्णादन्यः' इत्यादौ पञ्चमी । प्रतियोगित्वं चात्र पञ्चम्यर्थः । तस्य च स्वनिरूपकान्योन्याभावद्वारक-परम्परया अध्याहृतास्याद्यर्थे अन्वयः ।, अन्य इत्यर्थ-ग्रहणं इति सूचनार्थे पृथक् इतरपदोपन्यासः । अत एव 'कृष्णादितरः, कृष्णात् पृथक्' इत्यपि द्रष्टव्यम् । न चैवं

'घटः पटो न, घटस्यान्योन्याभावः, घटस्य संयोगाभावः, घटस्य तादात्म्याभावः' इत्यादावपि पञ्चम्यापत्तिः, 'घटात् विभागः, घटात् भेदः पटस्य' इत्यादाविव धर्ममात्रशक्तित्वेऽपि पञ्चम्यापत्तेर्दुर्वारत्वात्। धर्मिविवक्षायामपि 'घटस्यान्योन्याभाववान्' इत्यादौ तदापत्तेर्दुर्वारत्वाच्च इति वाच्यम्। पञ्चम्यर्थे हि प्रतियोगित्वे स्वनिरूपकभेदादिघटितसंसर्गेण अस्मन्मते आख्यातार्थान्वयी। तत्र च अन्यादिपद संसर्गतात्पर्यग्राहकम्। परमते तु तदुपस्थापिते भेदादौ एव अन्वयः इति विशेषः। तदिह अन्यादिपदैः भेदादेर्विशिष्य भेदत्वादिना उपस्थितत्वात् युक्ता तद्योगे पञ्चमी। अन्योन्याभावादिपदैस्तु अन्योन्यादिपदवाच्यतादात्म्याद्यभावत्वेन बोधात् न तद्योगे पञ्चमी। नञोऽपि लाघवेन अभावत्वेनैव वाचकता, न तु भेदत्वादिना अनेकशक्तिकल्पनाऽऽपत्तेः। अत एव 'तदन्यतद्विरुद्धतदभावेषु नञ्' इत्यनुशासनमपि न शक्तिपरं अन्यलभ्यत्वात्। अतो विशेषबोधः समभिव्याहारविशेषादिना इति न तत्रापि पञ्चमीप्रसक्तिः। अत एव 'घटात् पृथक्त्वम्' इत्यादिप्रयोगा निरपवादाः। न चैवम् 'घटः पटो न' इत्यादौ पञ्चम्यनापत्तावपि षष्ठ्यापत्तिर्दुर्वारा इति वाच्यम्। 'नियतप्रयोगा हि केचिदव्ययाः' इत्यनुशासनान्तरेण तदनापत्तेः। 'नेच विभाषा' इत्यादिभाष्यप्रयोगाच्च। 'धनादृते ग्रामः, ऋते कृष्णाच्च किञ्चित्' अत्रापि प्रतियोगित्वं पञ्चम्यर्थः। यत्तु 'पुरारातिधनमृते' (पुष्पदन्तः) इति प्रयोगः, सः 'ऋते द्वितीया' इति चान्द्रसूत्रादवगन्तव्यः। दिशि दृष्टः शब्दो दिक्शब्दः। तेन अत्र लक्षणया देशकालवाचिना योगे पञ्चमी इत्यर्थः। 'पूर्वो ग्रामाद्देशः, चैत्रात्पूर्वः फाल्गुनः' इत्यादौ। अत एव अवयववाचिना योगे न, 'पूर्वं कायस्य'। अन्यारादितरर्त्तेद्योगेऽपि 'प्राक् प्रत्यक् वा ग्रामात्'। आच्योगेऽपि 'दक्षिणा ग्रामात्'। आहियोगेऽपि 'दक्षिणाहि ग्रामात्'। एवम् 'कार्त्तिक्याः प्रभृति' इति भाष्ये प्रयोगात् प्रभृत्यर्थयोगेऽपि पञ्चमी। 'भवात् प्रभृति सेव्यो हरिः' एवम् 'अपपरिबहिरञ्चवः पञ्चम्या' (पा. २।१।१२) इति समासविधिसामर्थ्यात् बहिर्योगेऽपि सा 'ग्रामात् बहिः।' एवम् 'पञ्चम्यपाङ्परिभिः' (पा. २।३।१०) इति सूत्रात् एतैः कर्मप्रवचनीयसंज्ञकैर्योगे पञ्चमी इत्यर्थकात् 'अप हरेः संसारः, परि हरेः संसारः, आ मुक्तेः संसारः' इत्यादौ पञ्चमी। अत्र 'अपपरी वर्जने' (पा. १।४।८८) इतिसूत्रात् अनयोः कर्मप्रवचनीयसंज्ञा। अत एव वर्जनार्थकापपरियोगे एव पञ्चमी, लक्षणाद्यर्थयोगे तु द्वितीयैव इत्युक्तम्। आङस्तु 'आङ् मर्यादावचने' (पा. १।४।८९) इत्यनेन कर्मप्रवचनीयसंज्ञा। वचनग्रहणात् अभिविधावपि। एवम् 'प्रतिनिधिप्रतिदाने च यस्मात्' (पा. २।३।११) इति सूत्रात् एतदर्थककर्मप्रवचनीययोगे पञ्चमी इत्यर्थकात् पञ्चमी। स च 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा. १।४।९२) इति सूत्रात् प्रतिरेव। 'प्रद्युम्नः कृष्णात् प्रति' कृष्णप्रतिनिधिरित्यर्थः। मुख्याभावे यः तत्सदृश उपादीयते, स प्रतिनिधिः। प्रतियोगित्वं च अत्र पञ्चम्यर्थः। प्रतिदानम्—दत्तस्य प्रतिनिर्यातनं दानजन्योपकारप्रत्युपकार इति यावत्। 'तिलेभ्यः प्रतियच्छति माषान्'। अत्र कर्मत्वं पञ्चम्यर्थः। तस्य च निपातोपात्तदानभावनायां अन्वयः। तथा च तिलकर्मकदानभावनाजन्योपकारप्रत्युपकारजनकीभूता माषकर्मिका दानभावना चैत्रवृत्तिः इति शाब्दबोधः। एवम् 'अकर्तर्यृणे पञ्चमी' (पा. २।३।२४) इति सूत्रात् कर्तृवर्जितं यत् ऋणं हेतुभूतम्, ततः पञ्चमी इत्यर्थकात् 'ऋणात् बद्धः, शतात् बद्धः' इत्यादौ पञ्चमी। अत्र हेतुत्वं पञ्चम्यर्थः। शतमिह उत्तमर्णाय धार्यमाणत्वात् ऋणरूपमेव। तस्य कर्तृत्वे तु 'शतेन बन्धितः' इत्येव तृतीयैव। अत्र हि णिजन्तत्वात् बन्धनप्रयोजके ऋणे हेतुत्ववत् 'तत्प्रयोजको हेतुश्च' (पा. १।४।५५) इति चकारेण कर्तृसंज्ञाया अपि करणात् कर्तृत्वावश्यकतया तृतीयान्तत्वमेव। एवम् 'विभाषा गुणेऽस्त्रियाम्' (पा. २।३।२५) इति सूत्रात् गुणे हेतौ अस्त्रीलिङ्गे पञ्चमी वा स्यात् इत्यर्थकात् 'जाड्यात् जाड्येन वा बद्धः' इत्यत्र विकल्पेन पञ्चमी। गुणत्वाभावे स्त्रीलिङ्गे वा 'धनेन कुलम्, बुद्ध्या मुक्तः' इत्यादौ तृतीयैव, 'हेतौ' (पा. २।३।२३) इति सूत्रात्। गुणत्वं चेह परतन्त्रत्वमात्रम्। तेन 'वह्निमान् धूमात्'

इत्यादौ पञ्चमी । 'नासीद् भटः अनुशल्ययोः' इत्यादौ स्त्रीलिङ्गे तु पञ्चमी 'बाहुलक प्रकृतेस्तद्-नुदृष्टेः' (पा. २।३।१ वा.) इति वार्तिकप्रयोगाद-नुसंधेयम् । एवम् 'पृथग्विनानानाभिस्तृतीयाऽन्यतर-स्याम्' इति सूत्रात् एभियोगे तृतीया स्यात् पञ्चमी-द्वितीये च इत्यर्थकात् 'पृथक् ग्रामात्, ग्रामेण ग्रामं वा' इत्यादौ द्वितीयातृतीयाभ्यां विकल्पेन पञ्चमी । एवं विना-नानायोगेऽपि । अत्र प्रतियोगिन्न सर्वविभक्त्यर्थः । तत्र द्वितीया सन्निहितत्वादेव अनुवर्तते, पञ्चमी तु मण्डूकप्लुत्या अनुवर्तनीया, भाष्यकृता तथैव व्याख्या-तत्वात् ।

एवम् 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्व-वचनस्य' (पा. २।३।३३) इतिसूत्रात् एभ्यः करणे तृतीयापञ्चम्यौ स्तः इत्यर्थकात् 'स्तोकेन स्तोकाद्वा मुक्तः' इत्यादौ तृतीयया सह पञ्चमी । करणत्वं पञ्चम्यर्थः । द्रव्यरूपसत्त्ववचने तु 'स्तोकेन विषेण हतः' इत्यादौ तृतीयैव । एवम् 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा. २।३।३५) इतिसूत्रात् एभ्यो द्वितीया, चात् पञ्चमीतृतीये इत्यर्थकात् 'ग्रामस्य दूरं दूरात् दूरेण वा' इत्यादौ द्वितीयातृतीयाभ्यां सह पञ्चमी । प्रातिपदिक-मात्रार्थे विधियम् । न तु अत्र विभक्त्यर्थोऽन्यः कश्चन । इह सप्तम्यपि 'सप्तम्यधिकरणे च' (पा. २।३।३६) इतिसूत्रे चकारेण 'दूरान्तिकार्थेभ्यः' इत्यनुकर्षणात् । तेन 'ग्रामस्य दूरेऽस्ति' इति प्रयोगोऽपि नानुपपन्नः । अत्र असत्त्ववचनस्य अनुवर्तनात् सत्त्ववचनत्वे न एत-द्विभक्तिचतुष्टयनियमः । सत्त्ववचनत्वं चेह सामानाधि-करण्येन प्रातिपदिकार्थविशेषणत्वम्, तेन 'दूरः पन्थाः' इत्यादौ दूरशब्दस्य पथो विशेषणत्वेन प्रथमैव विभक्तिः । यद्यपि च अस्मन्मते विशेषणानामपि आख्यातेनैव अन्वयः, तथापि यत्र दूरत्वविशिष्टाभेदः संसर्गघटकः तत्र प्रथमा, यत्र दूरत्वाधारता संसर्गघटिका, तत्र विभक्तिचतुष्टयं इति न कोऽपि विरोधः ।

तेन सिद्ध पञ्चम्यर्थः सर्वत्र भावनाऽन्वयी इति । रहस्य. पृ. ११२-१२६.

मी. को. ३०४

■ पञ्जरचालनन्यायः । 'न वायुक्रिये' इत्यधि-करणपूर्वपक्षन्यायोऽयम् । संग्रहः. * पञ्जरचालनन्यायः । यथा स्वपञ्जरैर्दशभिः पक्षिभिरेकक्रियोत्पादनेन पञ्जरचालनं क्रियते, तथा दशभिरिन्द्रियैः प्राणरूपैकक्रियोत्पादनेन देह-चालनं क्रियते इति भावः । साहस्री. ४१. * पञ्जर-चालनन्यायः । ननु पञ्जरचालनन्यायेनैतद्भविष्यति । यथा एकपञ्जरवर्तिनः एकादश पक्षिणः प्रत्येकं प्रतिनियत-व्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति । एवमेक-शरीरवर्तिनः एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः संभूयैका प्राणाख्यां वृत्तिं प्रतिलप्स्यन्ते । शाभाष्य. २।४।५।९ यस्.

■ पञ्जरमुक्तपक्षिचालनन्यायः । यथा पञ्जरात् मुक्ताः पक्षिणः सद्योर्ध्वमेव चलन्ति, एवमेव जीवो देहात् मुक्तः सदोर्ध्वमेव गच्छति इति स एव तस्य मोक्ष इति दिगम्बरैकदेशिनो मन्यन्ते । साहस्री. ९.

■ पञ्जरस्थसिंहन्यायः । यथा—'स्नेहतन्तुमयैः पाशैर्बद्धः सतानरज्जुभिः । पञ्जरस्थो यथा सिंहः समर्थो-ऽपि वशीकृतः ॥' इति । साहस्री. १६७.

* पटः भवति इति पट उत्पद्यते इत्यर्थः । निरा-काङ्क्षं च पदद्वयम् । यदा न तस्मिन्नेव 'रक्तः' इत्यपर श्रूयते, तदा वाक्यसम्बन्धो भवतीत्यर्थः । भवति च एतं प्रति आकाङ्क्षा । भा. १।२।१।७ पृ. ११७, * पट-मभिनवं दृष्ट्वा (तस्य अनित्यता गम्यते) । न चैनं क्रियमाणमुपलब्धवान् । अथ चानित्यमवगच्छति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यतीत्यवगच्छति । १।१।६।२१, * 'पटं वय' इति पटवयनसंबन्धो विधेयोऽवगम्यते । 'पटं दीर्घं वय' इति पटस्य दीर्घता विधीयते, दीर्घशब्द-प्रयोगात् । २।३।५।१४, * 'पटस्य शुक्लः इत्यत्र निष्कृष्टो गुण आश्रितः । पटः शुक्ल इति त्वत्र द्रव्यलीनो-ऽभिधीयते ॥' लिङ्गसंख्यादिसंबन्धः स्वाश्रयद्वारेण उप-पत्स्यते । वा. ३।१।६।१२ पृ. ६८५.

■ पटाच्छादनन्यायः । विरुद्धयोर्हि श्रुतिस्मृत्योः विकल्पप्रसङ्गेन अवश्य कल्पनीये अन्यतरप्रमाणत्वे यावत् श्रुतौ पटाच्छादनन्यायेन कल्पयितुमारभ्यते, तावत् स्मृतौ

स्वरूपाभयं क्त्समेनोपलभ्य संशयच्छेदे न कदाचिदपि अभूतप्रामाण्याध्यारोपकल्पनोपपत्तिः । वा. १।३।२।३ पृ. १८०.

* पण: द्यूतम् । शतस्य पणते । मणि पृ.१२६.

' पणलभ्यं हि न प्राज्ञः क्रीणाति दशभिः पणैः । ' इति न्यायः । मेधातिथिः २।७९.

पतङ्गदीपकन्यायः । यथा पतङ्गाख्य. कीट विशेष. स्वप्रीतिपात्रदीपके निजाङ्गदाहकत्वसत्वेऽपि तत्र पतन प्रीतिवशमापन्नो नो जहाति, तथा सम्मिन्नस्य व्यवहारः । साहस्री. ३२६.

* पतञ्जलिः मन्वादिसमानः प्रामाण्ये । वि. १।३।९.

पतन्तमनुधावतोऽपि गत इति न्यायः । यथा पतन्त कथञ्चिज्जालाग्निःसृत्योड्डीय गच्छन्त पक्षिणमनुधावतो जीवान्तिकस्य नष्टोऽपि पक्षी गतः, तथा प्रकृतेऽपि । किंच, प्रकृतन्यायेन हरिहरादेरेकब्रह्मरूपाय चेत्तर्हि तत्त माहात्म्यपरपुराणादिभ्यितरनिन्दा न स्यात्, दृश्यते च सा, तथा च तदन्यथानुपपत्त्या साम्यमपि दुर्लभ मेकत्वस्य का कथेति वादिनः शङ्का । साहस्री. १३५.
* पतन्तमनुधावतो नष्टोऽपि गतः ( पक्षी ) इति न्याय. । संग्रहः.

पतनान्ताः समुच्छ्रया इति न्यायः । यथा ये पदमूर्ध्वं गच्छन्ति तेषा पातोऽप्यवश्यम्भावीति विषये प्रकृतन्यायसञ्चार इति संक्षेपः । साहस्री. १२६.

* डौक्ने यष्टिर्कया क्रियते । नैवा बहून् पतीन् । वा. १।३।४।९ पृ. २२१.

* पतेः ( पतदेर्धातोः ) अर्थः अध.संयोगानुकूलक्रिया, अध.संयोगप्रयोजकविभागानुकूलक्रिया वा अर्थः । मणि. पृ. १४० .

पतिंवरान्यायः । यथा स्वयंवरा कन्या अन्योऽन्यवरा सर्वोत्तमत्वेनाभिमत यमभीष्टतमत्वेनादत्ते, न ततोऽन्यत्राभीष्टतमत्वमतिं कुरुते, तथा प्रकृतेऽपीति । साहस्री ३८९.

* पतिशब्दः सर्वत्र आधिपत्ये प्रयुक्तः आ हिमवत आ कुमारीभ्यः । मा.१।३।१२।३३.

* पतितयाजनं लोभादङ्गीकृत्य यो याजयिष्यति, तदपेक्षम् ' ब्रह्महा अश्वमेधेन यजेत ' इति विधानम्, न तु तद्विधानान्यथाऽनुपपत्त्या याजनमितरेषामपि विहितमिति कल्प्यते । वा. ३।४।१०।२८ पृ. ९६०.

* पत्नी इति हि यज्ञस्य स्वामिनीत्युच्यते । न क्रीता । पत्नीति सम्बन्धिशब्दोऽयम् । भा. ६।१।४।१७ पृ. १३६२. * पत्नी दर्भमय वासः परिधत्ते अहतं च । महाव्रते । वि.१०।४।८. * पत्नी पारिणय्यसंष्टे ( इति गौण. प्रयोगः इति पूर्वपक्षः ) । ( पारिणय्य गृहगत भाण्डादिकम् ) । भा ६।१।४।१९, * पत्नी महाव्रते दर्भमय वासः परिधत्ते, तस्य प्राकृतेन अहतवाससा समुच्चयः । १०।४।७।१३–१५, * पत्नी स(धन)वती श्रुत्यनुरोधात् । ६।१।४।२०, * 'पत्नयः उपगायन्ति ' इति माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति । तेन गवामयनविध्यन्त. संवत्सरसत्रेषु । ८।१।११।१८, * पत्नय उपगायन्ति पिच्छोलाभिः काण्डवीणादिभिः आपातलिकाभिः । महाव्रते प्राकृताना ऋत्विजा उपगातॄणा पत्नीभिः समुच्चयः । दुन्दुभीना वादित्ररूपाणा इदमुपगानम् । काण्डवीणादिभिः वादित्रमेव वा उपगान इदम् । १०।४।५।८–९, * द्विपत्नीको बहुपत्नीकश्चापि यजमानोऽस्ति । ९।३।६।२१, * ' पत्नीं सनह्य ' इति पत्नीशब्दः द्विपत्नीके बहुपत्नीके वा प्रयोगे नोहितव्य । ९।३।६।२०, * ' पत्नीं संनह्य ' इत्यत्र द्विबहुपत्नीकप्रयोगे विद्यमानावपि एकवचनस्य नोहः । (मीको. पृ. १२२८ द्रष्टव्यम् ) । ९।३।७।२२, * पत्न्या द्वितीयया विना यजमानेन धनस्य त्यागो नैवावकल्पते । ६।१।४।१७. * पत्नीभिरुपगानकर्त्रीभिः ऋत्विजा मुपगाने समुच्चयो महाव्रते । १०।४।५ ( मीको. पृ. ११४२ द्रष्टव्यम् ) । * पत्न्याः निषिद्धस्य अध्ययनस्य पुनः प्रसवे न किंचिदस्ति प्रमाणम् । भा. ६।१।६।२४, * पत्न्या. यागे यावदुक्तब्रह्मचर्यादावेवाधिकार । ६।१।६।२४. मीको. पृ. १४८९ ' वेदाध्ययनन्याय ' इत्यत्र द्रष्टव्यम् । * पत्न्याः अन्नश्रपण दक्षिणेऽग्नौ आम्नातम् । यदा आमपदोषात् मास भतकार्ये उपादीयते, तदा तत्र दक्षिणाग्नौ श्रपयि-

तव्यम् । ज्योतिष्टोमे । भा. १२।२।१।७. * पत्न्याः श्मश्रूणामभावात् वेशानामपि न वपनम्, साहित्यस्य विवक्षितत्वात् । ( 'केशश्मश्रु वपते' इति ज्योतिष्टोमगतसंस्कारविषयकमिदम् ) । भाट्ट. ६।५।२०.

* पत्न्यधिकरणम् । ६।१।४, ९।३।६. ( महाधिकाराधिकरणं पत्नीसंनहनन्यायश्चोभयमपि पत्न्यधिकरणशीर्षकेण उच्यते । 'सहाधिकाराधिकरणम्' 'पत्नीसंनहनन्यायः' इत्यत्रापि द्रष्टव्यम् ) ।

* पत्न्यधिकरणे ( ६।१।४।१७–२१ ) पत्न्या अपि पतिधने स्वत्वमुक्तमिति । तस्या अपि तर्हि पत्या सह विभागो भवेदपि शास्त्रतु निषेधो न स्यादिति चेत्, न, 'अधनास्त्रय एवैते भार्या दासस्तथा सुतः ।' इत्यादिना सम्या अधनोक्तेरित्यवेहि । पत्न्यधिकरण तु इज्यामाने सहत्वेन अधिकारसिद्धौ । न तु अधिकरणेन योषिद्धनस्वत्वननबाधः । तस्य न्यायत्वेन वचनाबाधनत्वात् । विधावचिन्तामणिः पृ. २५४–२५५.

* यः पत्न्यधिकरणे ( पत्नीसंनहनन्याये ) पूर्वपक्षः स इह ( अभिगुरेपगतस्य प्राप्ते इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे न विकारः इत्यधिकरणे ) पूर्वपक्षः । यः सिद्धान्तः स इह सिद्धान्तः । ऊह इति पूर्वपक्षः । अविकार इति सिद्धान्तः । भा.९।३।८।२१.

* पत्न्यवेक्षितेन यजमानावेक्षितेन चाज्येन होम उच्यते, समान्यतराभावे वैगुण्यम् । तस्मात् दंपत्योः सहाधिकारः । भा. ६।१।४।१७.

* पत्नीद्वयं एकस्य संभवति न वेति विचारे भाष्ये उक्तम् " यथैव स्मृतिः 'धर्मे चार्थे च कामे च नातिचरितव्या' इति, 'धर्मप्रजासंपन्ने दारे नान्यां कुर्वीत' इति च । एवमिदमपि स्मर्यते एव 'अन्यतरापायेऽन्यां कुर्वीत' इति । 'तस्माद्यस्य न धर्मसपत्ना, न प्रजासंपन्ना या पत्नी सोऽन्यां कुर्वीत' इति । 'सोमपो न द्वितीया जायामभ्यश्नुते' ( 'सोमपाने न द्वितीया जायामभ्यश्नुते' इति च ) द्वितीयामपि जाया दर्शयति " । इति । पत्नीसंनहनाधिकरणादौ बहुपत्नीकत्वं स्वीकृत्यैव च विचारः कृतः । के.

* यत्र चान्यनाभिधानविप्रतिपत्तिः तत्र पाशन्यायः । यत्र त्वेक एव मन्त्रः तत्र पत्नीन्यायः । 'पवित्रे स्थः' इति यथा । टुप्. ९।३।६।२०. * पत्नीन्यायेन एकत्वस्य प्रत्येकवृत्त्यभिप्रायेणापि उपपत्तिः ( आभिगुर्ये पशुगणे 'अस्य पदो निधत्तात्' इत्यत्र ) । के

* पत्नीरहितस्य क्रतुप्रयोगः अनाचारः । धा. १।३।१।७ पृ. २०४.

* पत्नीशब्दं यज्ञस्वामिन्या स्मरन्ति एवं यजमानशब्दमपि । [ स्मरन्तीति– 'पत्युर्नो यज्ञसंयोगे' (पा. ४।१।३३ ) इत्यादिनेति शेषः । यजमानशब्दमपीति– स्वामिनि स्मरन्तीति पूरणम् । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' ( पा. १।३।७२ ) इतिस्मृत्या कर्तृगामिक्रियाफलस्यात्मनेपदान्तत्वात् यजमानशब्दस्य इति शेषः । रत्न. ] । टुप्. ६।१।४।१७ पृ. १३६१.

* पत्नीसंनहनं ज्योतिष्टोमादीष्टिषु पृथक् न कार्यं सौमिकसंनहनेन प्रसङ्गसिद्धत्वात् । वि. १२।१।११. * पत्नीसंनहनेन सौमिकेन प्रसङ्गसिद्धिः सौमिकेष्टिपश्वादिषु पत्नीसंनहनस्य दार्शिकस्य । १२।१।१२. 'प्रसङ्गसिद्धिः सौमिकेन' इत्यत्र द्रष्टव्यम् ।

पत्नीसंनहनन्यायः । दर्शपूर्णमासयोः द्विबहुपत्नीके प्रयोगे 'पत्नीं संनह्य' इत्यत्र एकवचनस्य नोहः ॥

अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत । ९।३।६।२१ ॥

भाष्यम्— दर्शपूर्णमासयोरामनन्ति 'प्रोक्षणीरासादयेध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि' इति । तत्र पत्नीं संनह्येति चिन्त्यते । अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च । तत्र सर्वस्य प्रयोगमधिकृत्य पत्नीशब्द उच्चरितः इत्येतत् पाशाधिकरणेनैव ( ९।३।४ ) निर्णीतम् । इदं तु संदिह्यते किं द्विपत्नीके बहुपत्नीके च प्रयोगे ऊहितव्य पत्नीशब्दः, उत नेति । किं प्राप्तम् ? अभिधानार्थत्वान्मन्त्राणा ऊहितव्य इति । एवं प्राप्ते, ब्रूमः । अपूर्वे तु अप्रकृतिपूर्वके कर्मणि, अविकारेण प्रयुज्येत । कुतः ? ईकारान्त हीद पत्नीमात्रस्य वाचकम् । तत्र द्विपत्नीके बहुपत्नीके

च प्रयोगे पत्नीशब्दे उपादीयमाने द्विवचन बहुवचन च सामर्थ्यात् प्राप्नोति संनहनमन्त्रं कर्तुम् । समाम्नान सामर्थ्यात्तु एकवचनेन नियते । न चात्र द्वित्व बहुत्व वा विवक्ष्यते, लक्षणत्वेन हि पत्नीशब्दस्य श्रवणात् । न चैकपत्नीकात् प्रयोगात् द्विबहुपत्नीके प्रयोगेऽतिदेशो भवति । यथा तत्र सत्योक्ता, तद्वदिहापीति । तस्मादविकारेण पत्नीशब्दस्य प्रयोग । अथापि कथञ्चिदेकत्व विवक्ष्येत, तथापि द्विबहुपत्नीके प्रयोगे सम्प्रतिपत्त्यभावा देकवचनार्थमेकवचनम् । तदनेकपत्नीके प्रयोगे अविरुद्धमित्यविकारेण प्रयुज्यते इति ।

टुप्-- यदि पत्नी प्रातिपदिक प्रधान भवत्, तत एकद्विबहुपत्नीकेषु प्रयोगेषु प्रातिपदिकार्थोऽस्ति इति तद्वशेन विभक्तिरपि एकवचन नियपि अप्रकृतिस्त्या ऽभिप्राय स्यात् । अथ विभक्ति प्रधानम्, ततो यत्र सा स्वार्थं लभते, तत्रैव पर्यवसित प्रातिपदिकार्थं , इति द्विबहुपत्नीके मन्त्र एव न स्यात् । इत्येतयो पक्षयो किं न्याय्यमित्येतत् पाशाधिकरणे वर्णितमिति यथाप्राति पदिकानुरोधि वचनमिति । 'अथापि कथञ्चिदेकवचन विनक्षितम्' ( इतिभाष्यस्य अयमर्थ – ) अदृष्टार्थमेकवचनमुच्चारितम् , न समवेतसंख्याभिधानार्थम्, द्विबहुत्वस्यानभिधानात् । यत्र चायमभिधानविपति पत्तिस्तत्र पाशन्याय । यत्र चैक एव मन्त्र , तत्र पत्नीन्याय , 'पवित्रे स्थ' इति यथा । नह्यु पवित्रयो रुपादीयमानत्वाद्विवक्षित द्वित्वम् । उपादीयमानता च 'पवित्राभ्यामुत्पुनाति' इत्यादौ तयोरिति । न चय द्वित्व विवक्षा कारयाम । किं तर्हि ? समवेत वदति न वक्ष्यतीति । समवेतवचनत्व तहो विवक्षित प्रयोजन मिति ।

सोम-- पूर्वपक्षरूपेण उपापात् सगति । अत्र प्रातिपदिक निजमपि प्रमन्ते, वचन तु एकपत्नीकप्रयोगे इत्यर्धजरतीयाश्रयणमयुक्तम् , प्रकृतिप्रत्ययो सहप्रवृत्ति नियमात् । तस्मादिह द्विवचनबहुवचनप्रयोगमिच्छता प्रातिपदिक वचन च उभयमपि एकपत्नीकप्रयोगामि प्रायेण आम्नात इति तस्य प्रकृतित्वम्, इतरयोस्तद्वि कृतित्व चाश्रित्य मुख्य एवोहो वक्तव्य । स च न संभवति, प्रयोगाणा समानविधित्वात् इति सिद्धान्त । सूत्रार्थस्तु-- अपूर्वे प्रकृतौ 'पत्नीम्' इत्यस्य अविकार , अपदेशात् सामानविध्येन अनतिदेशात् प्रतीयेत इति ।

वि-- 'पत्नीमिति द्विपत्न्यादावूह्यो नो वो,ह्यते- ऽपत्न्य ।, नोपदेशस्य सामान्यादतिदेशाप्रवृत्तित ॥' तस्मादत्र नास्त्यूह ।

भाट्ट-- अत एव दर्शपूर्णमासयो 'पत्नीं सनह्य' इत्येकवचनान्तो मन्त्र एकपत्नीप्रयोगे इव द्विबहु पत्नीकप्रयोगयोरपि अविकारेणैव प्रयोक्तव्य । न च लिङ्गैकपत्नीकप्रयोगे एव मन्त्रोऽत्र द्विबहुपत्नीकप्रयोगयोस्तूहेनातिदिश्यते इति युक्तम् । प्रयोगयो परस्पर प्रकृतिविकृतिभावे प्रमाणाभावात् । लिङ्गस्य वक्ष्यमाणरीत्या सर्वसाधारणत्वाच्च । यत्र हि उपदेशा त्यापकप्रमाणस्य एकमात्रविषयत्व अन्यत्र च कार्य गुणेनातिदेशत प्राप्ति , तत्रैवोह , न तु प्रापकप्रमाणस्य सर्वविषयत्वे । अत्र च पाशन्यायेन प्रातिपदिकार्थलिङ्गस्य सर्वविषयत्वोपपत्तेरेकवचनानुरोधेन सकोचायोगात् नास्य प्रापकप्रमाणस्य एकपत्नीप्रयोगमात्र विषयत्वम् । न च नन्वप्यत्र समानविधानत्वकल्पना चिन्त्यताम् 'प्रास्मै' इत्यस्य लिङ्गानुरोधेन मेषीवर्जे सकोचवत् इहाप्येकवचनानुरोधेन मन्त्रसकोचोपपत्तिरिति वाच्यम् । विना कारण पुंलिङ्गस्य लक्षणाया प्रमाणा भावेन तत्र सकोचोपपत्तावपि प्रकृते सकोचे प्रमाणा भावात् । अत्र द्विबहुपत्नीकप्रयोगे एकवचनस्य लक्षणा, प्रत्येक व्यक्तिगतैकत्वाभिप्रायेण तदुपपत्ते । यथैव हि 'ग्रहा ग्रह' इत्यादौ शुद्धगुणस्य प्रत्येकवृत्तित्वेनान्वय , तथैकवचनाभिहितस्य एकत्वस्यापि प्रत्येकव्यक्तिवृत्तित्वे नान्वये न काचित् क्षति । न चैवम् 'बहुषु बहुवचनम्' इत्याद्यनुशासनस्य निर्विषयत्वापत्ति , बहुत्वस्य शाब्द बोधविवक्षया तदुपपत्ते । न चैवम् 'पशुना यजेत' इत्यादौ द्वित्रिपशुग्रहणेऽपि बाधकत्वापत्ति , प्रयमाति क्रमे कारणाभावेन एकवचनस्य ऐच्छिकपक्षान्तरपरावृत्ति फलकत्वोपपत्ते । अतश्च द्विबहुपत्नीकप्रयोगे एकवचना-

न्तास्यैव मन्त्रस्य प्रयोगोपपत्तेर्न तत्रोहः, न वा 'व्रीहीणा मेध' इतिवत् लोपः इति सिद्धम्।

मण्डन— 'पत्नीपदे सनहनाय नोहः।'

शंकर— 'नोहः पत्न्यैक्यवान् मन्तुः।' मन्तुः मन्त्रः।

* पत्नीसंनहनमन्त्रे द्विपत्नीके बहुपत्नीके वा यजमाने सत्यपि पत्नीशब्दस्य नास्त्यूहः प्रकृतौ। वि. ९।३।६, * पत्नीसंनहनमन्त्रे विकृतावपि द्विबहुपत्नीकयजमानप्रयोगे पत्नीशब्दे नास्त्यूहः। ९।३।७.

* पत्नीसंयाजा इति कर्मनाम्नः प्रवृत्तिः तृतीयाऽऽहुतौ देवपत्नीनां देवतात्वात् तद्द्वारा। वि. ३।३।१०, * पत्नीसंयाजा इत्यत्र 'सोमं यजति, त्वष्टारं यजति, देवाना पत्नीर्यजति, अग्निं गृहपतिं यजति' इति सोमादयः पत्नीशब्देन गुणवृत्त्यायेन विवक्षिताः। कुतु. ३।३।१५।१८. * पत्नीसंयाजाः गार्हपत्ये भवन्ति। 'गार्हपत्ये पत्नीसंयाजान् जुहोति' इति श्रुतेः। वि. १०।८।८, * पत्नीसंयाजान् वरुणप्रघासेषु अध्वर्युः प्रतिप्रस्थाता च पृथक्पृथक् जुहुयाताम्। ११।२।११, * पत्नीसंयाजानामुपरि फलीकरणहोमप्रायश्चित्तहोमकपालोद्वासनैः इष्टिः समाप्यते। १०।७।१२. * पत्नीसंयाजानां वरुणप्रघासेषु द्विरावृत्तिः। ११।२।११. 'वरुणप्रघासेषु पत्नीसंयाजानाम्' इत्यत्र द्रष्टव्यम्। * पत्नीसंयाजाना द्वारयोरुत्तरत्र द्वादशाहे। के. * सविष्टपशुःपत्नीसंयाजानां पशुकप्रयोगविधिविहितानां क्रमः व्यवधायकाभावविशिष्टप्रकृतिवत्पौर्वापर्यादेव सिध्यति। भाट्ट. ५।१।१५. * पत्नीसंयाजेषु अग्नीषोमीयपशुगतेषु विकल्पप्राप्तआज्यस्य नियमेन पुनर्विधेश्चरितार्थत्वात् अर्थकर्मत्वमेव। वि. १२।४।६. * पत्नीसंयाजेषु आश्रुतप्रत्याश्रुतयजवषट्कारमिश्रमन्त्रेष्वेव उपांशुत्वम्। संकर्ष. ४।३।१५. मीको. पृ. १२०८ 'उपांशुयाजपत्नीसंयाजेषु०' इत्यत्र द्रष्टव्यम्। * पत्नीसंयाजेषु कपालमिद्धोमे (कपाले आहुतिपाते) वैश्वानरो द्वादशकपाल प्रायश्चित्तम्। 'तस्य एकहायनो गौर्दक्षिणा' इति भाष्यम्। 'तस्य एकहायनी गौर्दक्षिणा' इति विस्तरः। द्रा., भाट्ट. विस्तरदेव। इदं च दानं कर्मैव न्यवत् देयाय, न ऋत्विग्भ्यो। इदं चादृष्टार्थम्। के. १०।२।६।४७. * पत्नीसंयाजेषु बाधनी दर्शपूर्णमासधर्मकं चोदकप्रपरया पशुगण प्राप्ता। के. * पत्नीसंयाजेषु बाधनी हविष्ट्वेन विधीयते। सा संभवति दर्शपूर्णमासयोः क्रीत्वाऽपि आनीयमाना। नासौ पशुं प्रयोक्ष्यते। तस्मात् नासौ पशौ उत्कृष्यते। आज्येन चेयं विकल्प्यते। के. ३।३।१०।२०-२१. * पत्नीसंयाजेषु आवनीना विकल्पः ऐकादशिनादिपशुगणेषु। १२।४।६. मीको पृ. १३०९ 'ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु' इत्यत्र द्रष्टव्यम्।

* पत्नीसंयाजाङ्गमेव आज्येडा। संकर्ष. ४।३।१६. मीको. पृ ८८३ 'आज्येडा.' इत्यत्र द्रष्टव्यम्।

* पत्नीसंयाजाङ्गभूतेन आज्येन सह विकल्प्यमाना बाधनी दर्शपूर्णमासयोः। वा. ३।३।१०।२३, 'आज्येन पत्नीसंयाजा इज्यन्ते' इति शाखान्तरविधिः इति कुतुहलम्। ३।३।१५।२०.

* पत्नीसंयाजाधिकरणे (३।३।१०।२०) 'पत्नीसंयाजान्तान्यहानि सतिष्ठन्ते' इति द्वादशाहिकं वाक्यं नियमविधिलाघवानुसरणात् प्रायुक्तमादहः पत्नीसंयाजान्तत्वविधायकं इत्यङ्गीकृतम्। रसायनं. पृ. ७५.

* पत्नीसंयाजान्तत्वमुत्तमाहर्वर्जमहर्गणे द्वादशाहे। ९।१।९. मीको. पृ. ७६१ 'अहर्गणे द्वादशाहे' इत्यत्र द्रष्टव्यम्। * पत्नीसंयाजान्तत्व द्वादशाहे उत्तमाहर्वर्जम्। भा. ९।१।९।२९-३२, * पत्नीसंयाजान्तत्वं द्वादशाहिकानामह्ना सामान्येन। विशेषेण [illegible] दशमन्याह्नो मानसान्तता उच्यते 'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति। १०।६।१३।४४.

※ पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्। ९।१। ९।२९॥

द्वादशाहे अहर्गणे 'पत्नीसंयाजान्तानि अहानि संतिष्ठन्ते' इति श्रूयते। अत्र किं सर्वेषामह्ना पत्नीसंयाजान्तत्वम्, उत प्रायणीयात् दशममहः वर्जयित्वा इति विचारे पूर्वपक्षमाह। सर्वेषामह्ना पत्नीसंयाजान्तत्व

स्यात्, अविशेषात् 'पत्नीसंयाजान्तान्यहानि' इति अविशेषेण श्रवणात्। तस्मात् सर्वेषाम्।

**लिङ्गाद्वा प्रागुत्तमात्। ३० ॥**

वाशब्दः पूर्वपक्षव्यावृत्तौ। यदुक्तम्, द्वादशाहे अहर्गणे पत्नीसंयाजान्तत्वं सर्वेषामह्नामिति, तन्न। किन्तु प्राक् उत्तमात् अन्तिमात् अह्नः पत्नीसंयाजान्तत्वं स्यात्, लिङ्गात्। 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, न बर्हि रनुप्रहरति, असंस्थितो हि तर्हि यज्ञः' इति लिङ्गं यस्मिन्नहनि यज्ञः न संस्थितः समाप्तो भवति, तस्मिन् पत्नीसंयाजान्तता दर्शयति। समाप्तिश्च अन्त्ये अहनि। तस्मात् असमाप्तेः पत्नीसंयाजान्ततायाश्च सामानाधिकरण्यम्। असमाप्तिश्च प्राक् उत्तमात् अह्नः। तस्मात् प्रागुत्तमात् पत्नीसंयाजान्तता इति सिद्धान्तः।

**अर्थवादो वा, दीक्षा यथा नक्तंसंस्थापनस्य। ३१ ॥**

द्वादशाहे अहर्गणे पत्नीसंयाजान्तत्वं सर्वेषामह्नामिति पुनः पूर्वपक्षी आह। वाशब्दः सिद्धान्तपक्षं व्यावर्तयति। 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते, न बर्हिरनुप्रहरति, असंस्थितो हि तर्हि यज्ञः' इति यत् लिङ्गमुक्तम्, सः अर्थवादः पत्नीसंयाजान्ततास्तुत्यर्थः। संतिष्ठमानेष्वेवाह सु असंस्थावचनं पत्नीसंयाजान्ततप्रशंसार्थम्। यथा दीक्षा दीक्षाविषयकम् 'वरुणपाशाभ्यां वा एषोऽभिधीयते (बध्यते) यो दीक्षितः। अहोरात्रे वै वरुणपाशौ। यद्दिवा संस्थापयेदनुन्मुक्तो वरुणपाशाभ्यां स्यात्। नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते, आत्मनोऽहिंसायै' इति दीक्षोन्मोचनवचनं नक्तसंस्थापनस्य अर्थवादः। यस्मेतत् चिरेण संस्थानमालोच्य असंस्थितत्वमेव भवति। तस्मान्न प्रागुत्तमात् पत्नीसंयाजान्तता किन्तु सर्वेषामिति।

**स्याद्वाऽनारभ्यविधानादन्त्ये लिङ्गविरोधात्। ३२ ॥**

पूर्वपक्षिणा उक्तं निरसितुं वाशब्दः। स्यादेव प्रागुत्तमात् पत्नीसंयाजान्तता। तस्याः उत्तममहरनारभ्य विधानात्। 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते' इति सामान्येनोक्तम्। अन्त्ये अहनि तु असंस्थितत्वरूपस्य लिङ्गस्य विरोधात्। तत्र हि संस्थया भाव्यमेव। कुतूहले तु लिङ्गशब्दोऽत्र न्यायपर एव स्वीकृतः। अन्त्ये अहनि न्यायविरोधात् पत्नीसंयाजान्ततायाः न प्रवृत्तिः इति सूत्राक्षरार्थ उक्तः। न्यायश्च भाष्ये– 'पत्नीसंयाजान्तान्यहानि संतिष्ठन्ते इति, नैतदुक्तं भवति, विष्टमवसृज्यते इति। संतिष्ठन्ते नानुष्ठीयन्ते कर्तव्यापार एषु उपरमति इति। तेषु सहक्रियमाणेषु अहःसु अवश्यं कस्मिंश्चित् पदार्थे अवस्थाय अवश्यं अपरस्याह्नः पदार्था अनुष्ठातव्याः। अनियमे प्राप्ते पत्नीसंयाजान्ते संस्थाप्यं इति नियम्यते। तच्च अन्त्ये नास्ति। तत्र [illegible] यज्ञपुच्छान्तता भवति। तथैव च पूर्वेषामपि अह्नां यज्ञपुच्छान्तता प्रासङ्गिकी सिद्धा भवति' इति। तस्मात् प्रागन्त्यात् पत्नीसंयाजान्तता, न्यायेन प्राप्ते लिङ्गदर्शनमुक्तम् 'असंस्थितो हि तर्हि यज्ञः' इति। के.

● **पत्नीसंयाजोत्तरं** द्वादशाहगतानां दशमातिरिक्तानामह्नां विराम.। अवशिष्टं हारियोजनादि बर्हिःप्रहरणान्तं कर्म द्वादशेऽहनि पत्नीसंयाजोत्तरं कर्तव्यम्। वि. ९।१।९. * पत्नीसंयाजोत्तरं हविष्कृतः पत्न्याः विसर्गः न प्राक्। के.

* **पत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ द्रव्याय दानं अदृष्टार्थम्।** १०।२।१६. (मीको. पृ. २१०० द्रष्टव्यम्)।

* **पत्नीसंयाजन्याय.** (पत्नीसंयाजेषु पयुआघनी हविः। तच्च आज्येन विकल्प्यते दर्शपूर्णमासयोः)। ३।३।१०. (मीको. पृ. १७५५ 'आघनीन्यायः' इत्यत्र द्रष्टव्यम्)।

* **पथिकृत्।** 'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति नैमित्तिकं निमित्तसद्भावे कार्यम्। वि ५।३।१२.

* **पथ्यं** बहुकृत्वोऽपि वदितव्यं भवति, न पुनरुक्तता महान् दोषः। ग्रन्थगौरवभयेन पुनरुक्तं नेच्छन्ति। अर्थाग्रहणात्तु बिभ्यतः पुनः पुनरभिधीयमानं बहु मन्यन्त एव। भा. ४।२।४।१३.

* पदं अन्तिकादुपनिपतितं वाक्यार्थमुपजनयितुमल भवति, न दूराद्वतिष्ठमानम् । अतोच्यते । व्यवहितमपि हि, पराणुत्र व्यवधायकम्, आनन्तर्येण मनसि विपरिवर्तमानं अल्पेन भवति विशेषमुपजनयितुम् । यथा 'इतः पश्यसि धावन्त दूरे जात वनस्पतिम् । त्वया ब्रवीमि विज्ञानीहि या पिनक्षि शरद्वम् ॥' इति । अत्र 'इतः पश्यसि' इति शब्दो बुद्धौ भवति । स दूरे जातं वनस्पतिं इत्येतैः ( इत्येवमादिभिः ) पदैर्व्यवहितेन शरद्वय इत्यनेन शब्देन, व्यवधायकान्यपोह्य संबध्यमानः सम्बध्यते । अर्थानां शर्गेकत्वेन हेतुना व्यवहितान्यपि वचनानि संबध्यन्ते । यानि पुन. अर्थतो ऽसमर्थानि, तानि आनन्तर्येऽपि सति न परस्परेण सम्बन्धमर्हन्ति । यथा या पिनक्षि शरद्वय इत्येवमादीनि । भा.४।१।५।११.

पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते इति न्यायः । श्लो. वा. शब्दपरिच्छेदे १०७ । तात्पर्यलक्ष्यार्थभेदे अन्यतरपदवैयर्थ्यमिति शङ्कोच्छेदाय प्रवर्तते । लक्ष्यार्थबोधे प्रमाणानुत्पादकतया पदान्तरसाफल्यं बोध्यम् । संग्रहः. * यथा हि स्मारकाः सम्बन्धिदर्शनादयः अनधिकविषयाः तथैव पदमपि अनधिकविषयत्वतुल्यत्वात् अप्रमाणमिति । रत्नाकरः.

* पदम् ( 'पदे जुहोति' इति वाक्यस्थम् ) उत्पत्तिवाक्यविहितम् । उत्पत्तिवाक्यविहितेन वाक्यान्तरशिष्टं बाध्यते । तस्मात् आहवनीयबाधः । शा. ६।४।४।११. * पदमेकेन संबद्धं सत् निराकाङ्क्षं भवति, न तदपरेणापि सम्बन्धमर्हति । भा. ४।३।६।१४. * पदं गकारादीन्, स एव शब्दः, नान्यत् व्यतिरिक्तमस्ति । बृहती. पृ. १२३. * पदं चतुर्विधं रूढं यौगिकं योगरूढं यौगिकरूढं च । समुदायशक्त्या अर्थप्रत्यायकत्वं रूढत्वम् । अवयवशक्त्या अर्थप्रत्यायकत्वं यौगिकत्वम् । समुदायशक्त्या अवयवशक्त्या च एकार्थप्रत्यायकत्वं योगरूढत्वम् । तथैव भिन्नार्थप्रत्यायकत्वं यौगिकरूढत्वम् । यथा घटः, चित्रगुः, पङ्कजम्, मण्डपः इत्यादिशब्देषु । पङ्कजपदात् पङ्कजनिकर्तृत्वपद्मत्वोभयप्रकारकबोधस्यैवानुभवसिद्धत्वात्, अन्यथा पङ्कजपदात् भेकादिबोधोऽपि स्यात्, अतो योगरूढिरावश्यकी । अत्र केचित् । पङ्कजादिपदानां यौगिकत्वमेव, पङ्कजपदात् अवयवशक्त्या पद्मविशेष्यकपङ्कजनिकर्तृत्वमात्रप्रकारकबोधेन पद्मत्वप्रकारकबोधाभावात् । न च एवं पङ्कजपदात् कुमुदभेकादिविशेष्यकपङ्कजनिकर्तृत्वप्रकारकबोधापत्तिः इति वाच्यम् । पूर्वतरप्रयोगत्वप्रकारकज्ञानस्य तत्पदजन्यशाब्दबोधे हेतुत्वाङ्गीकारात् । यद्वा पङ्कजनिकर्तृत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन पङ्कजपदाश्रयवृत्तिकग्रहजन्यशाब्दबोधं प्रति समवायसंबन्धेन पद्मत्वस्य, पद्ममात्रवृत्तिविषयताया वा, पद्ममात्रवृत्तिविषयतासम्बन्धेन ज्ञानस्यैव वा हेतुताऽङ्गीकारात् नोक्तातिप्रसङ्गः, न वा भूताभाविपद्मबोधानुपपत्तिः इत्याहुः । क्वचित् कुमुदादौ प्रयोगस्तु लाक्षणिकः । यद्यपि योगरूढ्यङ्गीकारेऽपि इयं लक्षणा तुल्या, तथापि शक्यताऽवच्छेदकाननुप्रविष्टधर्मेण लक्षणापेक्षया तदनुप्रविष्टधर्मेण लक्षणा लघीयसी । लाघवं च तेन रूपेण अभ्युपगमनकल्पनम्, न तु स्मरणमपीति । एवं यौगिकरूढं मण्डपादिपदम् । योगेन रूढ्या च भिन्नार्थप्रत्यायकत्वात् । योगापेक्षया रूढेः प्राबल्यमपि एतद्विषयमेव । अत एव रथकारादिवाक्ये सौधन्वनापरपर्यायसङ्करजातिविशेषस्यैव ग्रहणमेव सिद्धान्तयिष्यते । इति दिक् । मणि. पृ ७८-७९. * पदं परिपूर्णं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति । भा.१०।३।१४।४४. * पदं प्रकृतिप्रत्ययसमुदायः, नावयवः । शा. ३।१।७।१४. पृ. ७१९. * पदं यत् केनचित् पदेन सम्बध्यते विशेषणत्वेन न तत् पदान्तरेण सह संबन्धमर्हति सकृदुच्चरितम् । यथा भार्या राज्ञः पुरुषो देवदत्तस्य इति भार्याविशेषणत्वेन उच्चार्यमाणो राज्ञ इति शब्दः न पुनः पुरुषशब्देन संबध्यते इति । भा.१०।६।८।१६.

पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिण इति न्यायः । पेलवं मृदुलं शिरीषपुष्पं भ्रमरस्य भृङ्गस्य पदं पदस्थितिं सहेत पतत्रिणः पुनः पक्षिणस्तु पदं न सहते इति । कुमारसंभवे स० ५, श्लो० ४ । अतिसौकुमार्यविवक्षायामयमवतरतीति । सादसी. ६५४.

* पद सामान्यवृत्ति, वाक्य विशेषवृत्ति । भा ३।३।६।१२ पृ ६८९ * 'न चाप्यज्ञातसम्बन्ध पद किञ्चित्प्रकाशकम् ।' श्लो वा शब्दपरिच्छेद २५ * न चैक पद विशेषण प्रति उद्देशक सोम प्रति (अन्य प्रति इति) विधायक भवितुमर्हति, वचनव्यक्तिभेदात् । भा १।४।२।३ पृ ३३२ * पदानि नित्यानि । मणि पृ ४४ * पदानि विचित्रशक्तीनि एकानेकार्थप्रतीते । तथा एषामर्थरूपम् कदाचित् पदेनैवान्येन क्रियते, कदाचिद् वाक्येन । तेनापि एके नानेकेन वा द्विपदेन बहुपदेन वा इति वैचित्र्यम् । तद्यथा क मित्र ? कोऽस्मि । क औपगव ? उपगोरपत्यम्, उपगुना वा स्वत्रा जायामुत्पादित । तथा पचतीत्युक्ते पाक प्रत्याभिपत्त्या एक कर्ता पूर्वापरीभूत वर्तमानकाले निर्वर्तयति इति कथ्यते । न चैव पचयता वाक्यभेद प्रसज्यते, न वा अशब्दा फल अभ्युपगम्यते । वा २।१।१०।१७ पृ ४२१ * पदानि उद्दिश्य क्रमभिदधति वाक्यम् । भा । यद्यपि च न सहताना कश्चित् एकोऽभिधेय, तथापि गम्यमानाभिप्रायेणोक्तम् । अथवा एकत्वस्यप्रमाणत्वप्रयुक्ततया सघातत्वमापादितानि यथा स्वार्थमभिदधति, तथा तद्भूतान्वयेन सन्ति वाक्यत्व प्रतिपद्यन्ते इति । वा ३।३।७। १४ पृ ८२४ * पदानि स्वार्थेभ्यापि व्याप्रियमाणानि वाक्यार्थप्रतिपत्तिमुपजनयन्ति, न पुन प्रत्यस्तमितपद विभाग अनन्यमेव वाक्यार्थे वर्तन्ते इति तद्भूताधिकरणे दर्शने । ऋजु पृ १४२-१४३ * पदानि हि स्व स्व पदार्थमभिधाय निवृत्तव्यापाराणि । अथेदानीं पदार्था अवगता सन्त वाक्यार्थं गमयन्ति । भा १।१।७।२० पृ ९६ * समूहावयवास्तु पदानि विभागे परस्पर मानाङ्क्षन्ति न तु एषामेकार्थेन प्रतिपदमर्थभेदात्, समूहस्य च पृथग्याचनाप्रसिद्धे । वा २।१।१४।४६ पृ ४४६ * पदेन (एकहायन्या पदेन) आहवनीयो बाध्यते । बाल पृ १३२ * 'पूर्वानुभूत पदार्थं स्मरते प्रथम पदात् ।' वा १।४।१२। २३ पृ ३५८ * पदेभ्य एव पदार्थप्रत्यय पदार्थेभ्यो वाक्यार्थ । भा १।१।७।२६ * पदस्य कल्प्यस्यापि अभिधानकरणत्वम् । मु पृ ६९७ * पदस्य कारकविभक्तीना च विनियोजकत्वम् । वा ३।१।७।१३ पृ ७०० * पदस्य परिपूर्णस्य पदान्तरयोग । एकदेशनिष्कर्षे च सामर्थ्याभाव । ३।५।१०।३१ पृ १००७ * पदस्य सर्वस्यैव पदान्तरसबन्धे सति च शब्दाद्वते तृतीयेन पदेन सता गतौ सनिहितेनापि सबन्धो न युक्त । नहि भवति माया राज पुरुषो देवदत्तस्य इत्यत्र राजा पुरुषविशेषणम् । असत्या तु गतौ उपादेयस्य अनेकस्यापि प्रधानस्य सबन्धोऽवकल्पते व्यवहितेनापि । व्यवधानादर्शी बर्हीयानिति । भा ६।४।६।२३ पृ १४४५ * पदस्य स्वार्थासमाप्तस्य पदान्तरान्वयो न भवति । मु पृ ७२४ * पदस्य हि आकृतिर्नाम एकोऽर्थो भवेत्, न तु तदवयवाना वर्णाना प्रकृतिप्रत्ययपोर्वा विभागे शास्त्रदृष्टत्वम्, अथप्रत्यायनशक्त्यभावात् । वा २।१।१४।४६ पृ ४४६ * पदयो एकवाक्यस्थत्वे पौर्वापर्येऽपि पदार्थविधिषोर्वाप्ययोग । मु पृ १०२१ * पदानामावापोद्वापाभ्या पदार्थमात्रागम एव कार्यतया अवसित (इति एकदेशिमतम्) । ऋजु पृ १४१ * पदाना इतरपदार्थान्विते शक्ति । इतरपदार्थस्य तत्समभिव्याहारेण विशेषण अननुगत एव । एव च आकाङ्क्षित-योग्य-सनिहितार्थाभिधायकाना पदाना वाक्यार्थप्रतिपादकत्व इति केचित् । तत्र । मणि पृ १७२ * पदानाम् । यद्यपि आवापोद्वापाभ्या पदाना शक्तिनिधारणा, तथापि यथाव्यवहारमेव युक्ता । व्यवहारश्च वाक्यस्यावयव एव दृश्यते । तदभिप्रायेण च शब्दस्यापि शक्ति कल्पयितु युक्ता । तेन वाक्यार्थस्य प्रधानभूतस्य अनेकान्यथानुपपत्त्या तत्तुल्यभूतावगति कारणत्वेन आवापोद्वापाभ्यामवसीयते । तेन नान्तरीयकी पदार्थावगति । कार्ये तु सर्वपदानामपि वाक्यार्थावगतिरेव । ऋजु पृ १४१. * पदानां लौकिकाना सता न वेदादेव पूर्वोक्तपदसबन्धमनपेक्ष्य शक्यतेऽर्थोऽध्यवसातुम् । भा १।४।७।१० * पदाना वाक्यार्थावगतेरन्यत् न कार्यमस्ति । यावत् सा वाक्यार्थावगति सा प्रथमश्रवणेऽपि भवति । वाक्याद्धि सा भवति, नैकस्मात् पदात् । न च वाक्यस्य द्वितीयश्रवणापेक्षा ।

ऋजु. पृ. १४१. * पदानां वाक्यार्थप्रतिपत्त्यर्थत्वात् श्रौतेनार्थेन वाक्यार्थप्रतीत्यनुपयोगे लाक्षणिकार्थतात्पर्यं युक्तम् । सु. पृ. १३८४. * पदानां संहतानां न कश्चिदेकोऽभिधेयः । वा. २।२।७।१४ पृ. ८२४. * पदानां समुदायो न प्रत्यायक इत्युक्तम् ' तद्भूतानां क्रियार्थेन समाम्नायः' इत्यत्र । भा. ५।१।४।५, * पदानां साकाङ्क्षत्वात् विधे. स्तुतेश्चैकवाक्यत्वं भवति । १।२।१।७ पृ. ११७. * पदानां साधूनामेव प्रयोगः कर्तव्यः । वि. १।१।९. * ' पदे जुहोति ' अयं विशेषविधिः अदृष्टार्थः । बाल. पृ. २१, भाट्टार्थः । पृ. १५. * ' पदे जुहोति, वर्त्मनि जुहोति ' इति आहवनीयापवादः । संकर्ष. २।४।१४. मीको. पृ. १०२१ ' आहवनीयापवादः ' इत्यत्र द्रष्टव्यम् । * पदे वर्णानां वाक्ये च पदानां एकार्थप्रतिपादनकार्यकारित्वम् । सु. पृ. ६९२. * पदेषु स्मारिका अनुभाविका चेति शक्तिद्वयम् । तत्र स्मारिका जातौ । अनुभाविका कार्यान्विते । इति प्राभाकराः । मणि. पृ. ८२.

* पदान्तरेण पदान्तरस्य स्वाभाविकशक्तिनाशेन वाक्यान्तरानुत्पादकत्वम् । सु. पृ. १०८१, * ' पदान्तरस्य पारार्थ्यादाख्यातं योऽपि मन्यते । वाक्यम्, प्राधान्ययोगेन वाक्यार्थं चापि भावनाम् ॥' ( श्लो. वा. वाक्याधिकरणम् पृ. ८६१ ) इति आख्यातस्य वाक्यतोद्घोषः । पृ. ११८६.

* पदान्तरगतार्थग्रहणनिमित्तः वाक्यभेदः । वा. १।४।२।३ पृ. ३२०.

* ' पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रम-न्यूनातिरिक्तत्व-स्वर-वाक्य-श्रुति-स्मृतीः ॥ ' इति न्यायेन व्यपदेशादिभेदो भविष्यति इत्याशङ्क्य, आह ' स्वरादयश्च ' इति । सु. पृ. २७४. * ' पदावधारणोपायान् बहूनिच्छन्ति सूरयः । क्रम-न्यूनातिरिक्तत्व-स्वर-वाक्य-श्रुति-स्मृतीः ॥ ' ( श्लोकवार्तिकं वाक्याधिकरणे १८३, १।१।७।२४-२६ इदमेव तद्भूताधिकरणम् ) । जप-यज्ञादिषु क्रमभेदात् अर्थान्तराभ्यवसायः । ब्रह्मब्राह्मणादिषु न्यूनातिरेकवशात् अर्थभेदो लोकत एवावगतः । पूर्वपदप्रकृतिस्वरत्वे बहुव्रीहित्वं अन्तोदात्तत्वे स्वार्थसूचिता स्वरादवगम्यते । शा. १।३।१० पृ. ४९-५० । सोम— पचते इति पदं नामत्वेनाख्यातत्वेन च संभाव्यमानम् ' भोक्तुकामः पचते ' इत्यत्राख्यातम्, ' पचते दक्षिणां देहि ' इत्यत्र शब्रन्तं नाम इति च पदान्तरसमभिव्याहारान्निश्चीयते इति पदान्तरसमभिव्याहाररूपवाक्यं पदभेदावगमोपायः । श्रुतिपदेन प्रथमान्ताख्यातपदयोः यत् सामानाधिकरण्यं तद्विवक्षितम् । तेन ' यातः पुनरयाति ' इत्यत्र आयाति इत्याख्यातपदसामानाधिकरण्यात् यातः इति कर्तरि निष्ठायां प्रथमान्तं नाम इति, ' यातो देवदत्तयज्ञदत्तौ ' इत्यत्र द्विवचनान्तनामपदसामानाधिकरण्यात् यातः इति आख्यातं इति निश्चीयते इति सामानाधिकरण्यं पदभेदज्ञानोपायः । कात्यायनीयकाया तु ' उद्भिदा यजेत ' इत्यत्र उद्भिच्छब्दः तृतीयान्तश्रुतिबलात् भावनाकरणभूतकर्मपर एव न तु खनित्रादिपरः इति निश्चीयते इति अर्थविशेषावच्छिन्नपदभेदः तृतीयया श्रुत्या अवसीयते इति श्रुतेः पदभेदज्ञानोपायत्वमुक्तम् । ' अश्वस्त्वम् ' इत्यत्र अश्वः इति पदं नामत्वेन संभाव्यमानं देहोच्छूनताख्यार्थविवक्षितार्थेऽभाव व्याकरणस्मृत्या टुकि ' टुओश्वि गतिवृद्ध्योः ' इत्यस्य मध्यमपुरुषैकवचनान्तं आख्यातं निश्चीयते इति व्याकरणस्मृतिः पदभेदज्ञानोपायः ।

* पदादिना विशेषविहितेन ज्योतिष्टोमादौ सामान्यविहिताहवनीयादेर्बाधः । मीको. पृ. १८३९ ' ज्योतिष्टोमादौ वर्त्मादिना॰ ' इत्यत्र द्रष्टव्यम् । भा. १०।८।८।१६.

* पदोपस्थापितपदार्थो वा पदजन्यपदार्थज्ञानं वा शब्दप्रमाणम् । सोम. १।२।१ पृ. ८.

* पदैकदेशस्य धातोः पदान्तरेणान्वेतुमयोग्यत्वात् विधायकपदस्य नञ्पदेनान्वये सति रागप्राप्ता भक्षणप्रवृत्तिमनूद्य निषेधो विधेयः ' न कलञ्जं भक्षयेत् ' । वि. ६।२।५.

* पदैकवाक्यता विध्यर्थवादयोर्नास्ति । वाक्यैकवाक्यता तु विद्यते । त्रि. १।२।१.

* पदकर्म गवालम्भनस्य न प्रयोजकं किन्तु क्रय एव प्रयोजकः । पदकर्म च सोमक्रयार्थे नीयमानाया

गोः सप्तमपदस्थाने पांसुषु आज्येन आहुतिं विधाय पांसून् गृहीत्वा तैः पांसुभिः हविर्धानशकटयोः अक्षस्य अञ्जनम् । वि ४।१।१०.

* पदकर्माधिकरणम् । मीको. पृ. १० ' अक्षाभ्यञ्जनन्यायः ' इत्यत्र द्रष्टव्यम् । ४।१।१०।२५

सू पदकर्माप्रयोजकं नयनस्य परार्थत्वात् । ४।१।१०।२५ ॥

' सोमक्रयार्थं मूल्यत्वेन अरुणा पिङ्गाक्षी एकहायनी गौर्नीयते । गमनकाले तस्याः पूर्वभागस्य दक्षिणं पदं यत्र निपतति तत्र हिरण्यं निधाय स्रुवेण आज्यं हुत्वा आज्यमिश्राः पांसवो गृह्यन्ते । गृहीत्वा विभज्य एकेन भागेन सोमशकटस्य अक्षः अज्यते । सोमक्रयणीपदपातस्थानगतपांसुग्रहणं पदकर्म इत्युच्यते । इदं यत् सोमक्रयण्याः नयनं तस्य पदकर्म वा प्रयोजकं सोमक्रयो वा प्रयोजकः इति विचारे पदकर्म नयनस्य प्रयोजकं इति उत्सूत्रे पूर्वपक्षे सिद्धान्तयति सूत्रम् । पदकर्म नयनस्य सोमक्रयण्याः नयनस्य अप्रयोजकं न प्रयोजकम् । कुतः ? नयनस्य परार्थत्वात् सोमक्रयार्थत्वात् सोमक्रयाङ्गत्वात् । ' एकहायन्या क्रीणाति ' इति वाक्येन क्रयार्थत्वम्, प्रकृतत्वाच्च पदपांसुभिः संबन्धः । प्रकरणाच्च वाक्यं बलीयः । अथवा एकहायन्या इति तृतीयाश्रुत्यैव क्रयाङ्गत्वम् । श्रुतिश्च प्रकरणात् बलीयसी । के.

* पदकर्मन्यायः । ' अक्षाभ्यञ्जनन्यायः ' । ४।१।१०।२५. * पदकर्मन्यायः ( अयमेव पदन्यायः ) । नापि ( ' मैत्रावरुणवत्कर्मवति ' इत्यत्र अतिदेशप्राप्ते अवघाते ) पदकर्मन्यायः ( प्रवर्तते ) तत्र हि ' तेनाक्षमुपाञ्ज्यात् ' इति तच्छब्दस्य ' सप्तमं पदमभ्युपाञ्ज्य गृह्णाति ' इत्यत्र च पदशब्दस्य सापेक्षत्वादुक्तं परप्रयुक्तक्रयाङ्गभूतैकहायनीनयनस्योपजीवित्वम् । प्रकृते तु व्रीहिशब्दस्य प्रकृतानपेक्षत्वात् न यावीयव्रीह्युपजीवित्वं इति विशेषः । इदं पूर्वपक्षे । कौ. २।१।४।९ पृ. ६८.

* नियतपदक्रमा हि मन्त्रा भवन्ति । भा. १।२।४।३१-२.

* पदग्रहणम् ( एकहायनीसप्तमपदपातस्थलस्थपांसुग्रहणम् ) हविर्धानशकटाक्षाञ्जनार्थम् । वि. ४।१।१०.

* पदजातं सर्वं मिलित्वा वाक्यार्थं प्रतिपादयति इति वैयाकरणदर्शनम् । ऋजु. पृ. १४२.

* पदद्वयान्वयव्यापारः पदद्वयसमभिव्याहारलभ्यः । सु. पृ. ८५२.

* पदन्यायः । मीको. पृ. १० ' अक्षाभ्यञ्जनन्यायः ' इत्यत्र द्रष्टव्यम् । ४।१।१०।२५. * पदन्यायः । ( अयमेव पदकर्मन्यायः । ) ' अयमीशम् ' इत्यत्र ईशगतान्वयं प्रति पश्यतीति प्रकृते जीव एव पदन्यायेन प्रतियोगितया संबध्यते । अद्वैत. १।२४।१५, * पदन्यायः । ' पदे जुहोति ' इत्यत्र ' एकहायन्या सोमं क्रीणाति ' इत्युपस्थिता एकहायन्येव संबध्यते, न तु यत् किञ्चित् । २।२५।१५.

* पदपङ्क्तिः गायत्री । पादेषु अक्षराणि ५।५।५।५।६ । उदा० ' आसिष्टे अद्य ' ( ऋस. ४।१०।४ ) । किंवा ५।५।५।४।६ उदा० ' अग्ने तमद्य ' ( ऋसं. ४।१०।१ ) । के.

* पदपदार्थौ यावेव लौकिकौ तावेव वैदिकावपि । त्मना-आत्मना, ब्राह्मणासः- ब्राह्मणाः इति क्वाचित्को विशेषस्तु व्याकरणात् ज्ञातव्यः । वि. १।३।१०, * पदपदार्थयोरेव वृद्धव्यवहारादिना संगतिर्गृह्यते । ( वाक्यवाक्यार्थयोस्तु न पृथक् संगतिग्रहणम् । ) वाक्यं तु आकाङ्क्षायोग्यतासंनिधिवशात् स्वार्थं प्रतिपादयति । १।१।७.

* पदपदार्थसंबन्धो नित्यः ' औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः । ' भा. १।१।५।५.

* पदपदार्थसंबन्धादिषु पुरुषसंपर्काभावेन समस्तो वेदः प्रमाणम् । मोम. १।२।१ पृ ६.

* पदपदार्थसबन्धज्ञाने आर्यप्रसिद्धिविरोधाभावे म्लेच्छप्रसिद्धिरपि आदरणीया । नेम इति अर्धम्, पिकः कोकिलः, तामरसं पद्मं इति म्लेच्छप्रसिद्ध्या ग्राह्यम् । वि. १।३।६.

* पदपांसुनाशे पांस्वन्तरेण हविर्धानशकटाक्षाञ्जनं कार्यम् । न तु तदर्थं पुनः सोमक्रयण्याः गोर्नयनम् । के, ११।३।१३.

* पदभेदावधारणोपायत्वेन प्रकृतिप्रत्ययान्वाख्यानस्मृतिरपि दृष्टा । ( ' पदावधारणोपायान् ' श्लो, वा. १।१।७ पृ. ८९६ इति वार्तिकम् ) । सु. पृ. ८३३.

* पदवाक्यदोषयोर्मध्ये पदे एव दोषकल्पना उचिता । मीन्या.

* पदविचारः । पदज्ञानस्य च द्वैधी करणता । चरमपदस्य सर्वपदस्मृतिहेतुसंस्कारोद्बोधकतया लक्षणिकस्य च शक्तपदस्मृतिहेतुसंस्कारोद्बोधकतया स्वार्थोपस्थितिद्वारा च । अन्येषां तु स्वार्थोपस्थितिद्वारैव इति । तत्र तद्बोधकविषयता यत्पदज्ञानजन्यत्वं पदार्थोपस्थितिद्वारा च यत्पदज्ञानजन्यत्वं शाब्दबोधनिष्ठम्, तदन्यतरसंबन्धेन पदज्ञानविशिष्टत्वोपस्थितिशालिना घटादिशाब्दे हेतुत्वम् । लाक्षणिकपदस्य अनुभावकत्वाभावात् तत्संसृतशक्तपदस्यैव शाब्दबोधहेतुत्वात् इति केचित् । पदं च आनुपूर्वीविशिष्टवर्णसमुदायः । आनुपूर्वी च शक्तताऽवच्छेदिका । सा च प्रागभावविशिष्टपरत्वरूपा, ध्वंसविशिष्टत्वरूपा वा । वर्णानां नित्यत्वे तु अव्यवहितोत्तरत्वसम्बन्धेन घज्ञानविशिष्टज्ञानविषयत्वादिरूपा ( आनुपूर्वी ) । ' सुप्तिङन्तं पदम् ' इति वैयाकरणाः ( पा. १।४।१४ ) । शक्तं पद इति तु युक्तम् । इदं तु बोध्यम् । पदज्ञानस्य घटशाब्दे केनरूपेण हेतुत्वम् । न तावत्पदज्ञानत्वेन, व्यभिचारात् । नापि घटपदज्ञानत्वेन, कलशापदादपि घटशाब्दे व्यभिचारात् । किन्तु घटशक्तपदज्ञानत्वेन, न तु वृत्तिमत्पदज्ञानत्वेन, वृत्तित्वस्य शक्तिलक्षणाऽन्यतरगर्भतया गौरवात् । तेन लाक्षणिकस्य अननुभावकत्वम् । अत एव यत्र सर्वाणि लाक्षणिकानि, तद्वाक्यं मूकमेव । ' गङ्गायां घोषः ' इत्यादौ तु यत्किञ्चिच्छक्तपदमादाय अन्वयानुभव इति संप्रदाय. । वस्तुतो वृत्तिमत्पदज्ञानत्वेन, घटपदज्ञानत्वेन, घटस्मारकपदज्ञानत्वेन, अन्ततः शाब्दत्वावच्छिन्ने पदज्ञानत्वेनैव वा हेतुत्वम् । तत्पदजन्यपदार्थोपस्थितिरूपव्यापाराभावेन न व्यभिचारः । तेन लाक्षणिकस्यापि अनुभावकत्वं युक्तम् । इति दिक् । मणि. पृ. ७३.

* पदविधिः । ' समर्थः पदविधिः ' ( पा. २।१।१ ) । पदयोर्विधिः पदविधिः, तथा सुब्विधिरपि पदत्वसम्पादको विधिः पदविधिः । बाल पृ. १५०.

* पदविषयं औत्पत्तिकत्वं मन्यन्ते मीमांसकाः । बृहती. पृ.१०२.

* पदशक्तिः । ननु शक्तपदज्ञानत्वेन हेतुता इत्युक्तम् । तत्र केयं शक्तिः इति चेत् । अव्यवधानेन शाब्दजन्यप्रतीत्यनुकूला वृत्तिः शक्तिः । अव्यवहितत्वं च अर्थान्तरप्रतीत्यद्वारकत्वम् । इदं च लक्षणावारणाय । तात्पर्यप्रत्याख्यानाय च अवशिष्टम् । सा च ' अस्मात् पदात् अयमर्थो बोद्धव्यः ' इत्याकारिका ईश्वरेच्छा इति न्यायविदः । पदार्थान्तरं इति मीमांसका. । अस्या एव ' सङ्केतः ' इति व्यवहारः, साक्षाच्छब्दजन्यार्थप्रतीतिसहकारिज्ञानविषयत्वं वा । वैयाकरणास्तु बोधकत्वमेव शक्तिः । एवं लाक्षणिकार्थेऽपि शक्तिरेव । अत एव ' सर्वे सर्वार्थवाचकाः ' इत्याहुः । मणि. पृ. ७३-७४. * पदशक्तिः व्यक्तौ, न [illegible] आकृतौ । आकृतिस्तु पदप्रवृत्तिनिमित्त इति नैयायिकाः । तत्र । आकृतावेव शक्तिः, व्यक्तिस्तु क्रियाऽन्वयकाले उपलक्षणीया । ' श्येनचितं चिन्वीत ' ' व्रीहीनवहन्ति ' ' पशुमालभेत ' इत्यादौ । वि. १।३।१० वर्णक २.

* पदश्रुत्यपेक्षया कारकश्रुतेः उपक्षीणत्वेन दौर्बल्यम् ' सोमेन यजेत ' इत्यादौ । शेषालेकरे इदम् । श्लो. ३।३।७।१४ पृ. ३५०.

* पदश्रुतिबाधः प्रत्ययश्रुतिबलेन । सु. पृ. ९२.

* पदसंयमस्य पदार्थातिरिक्तैकार्थपर्यायचिता तद्भूताधिकरणे निरस्ता । सु. पृ. ६८४.

* पदसमुदायस्य च पृथगर्थो नास्तीत्युक्तम् । भा. २।१।१८।४६ पृ. ४४६.

* पदसमूहः एकदेशाद्भिन्ना साकाङ्क्षः न पर्याप्तः स्वस्मै प्रयोजनाय । नैवम् । भवति हि कश्चित् पदसमूहः, योऽर्थवादेभ्यो विनाऽपि विदधाति [illegible] विदर्थम् । भा. १।२।१।१ पृ. १०७.

* पदस्फोटः ' वाक्यार्थे शक्तिः लक्षणा वा ' इति बिन्दौ द्रष्टव्यः ।

* पदहोमः सोमक्रयार्थमेकहायन्या नीयमानायाः दैवात् ग्रावणि सप्तमपदपाते ग्रावण्येव कार्यः । असम्भवे नार्थं तु के चित् पांसवो ग्राह्याः । यथाशक्तिप्रयोगे तु आहवनीये निरधिकरणक एव वा इत्यन्यदेवात् । भाट्ट. ४।१।१०.

▪ पदातिन्यायः । यथा बुद्धिबलापरपर्याय-चतुरङ्गाख्यक्रीडने पदातिर्ऋजुमार्गेण चलन् हनना वसरे वक्रमार्गमुररीकरोति । तथा चोक्तम्– ' ऋजुना पथा चलन्नपि हनने यना गतिं कल्पयन् । बुद्धि-बलाख्यं क्रीडन् पदातिरिव दुर्जनो ज्ञेयः ॥ ' इति । साहस्री. ९७०.

* पदार्थः आचमनम्, पदार्थानां च गुणः क्रमः । न च गुणानुरोधेन पदार्थो न कर्तव्यो भवति । अपि च प्राप्तानां पदार्थानामुत्तरकाल क्रम आपतति । यदा पदार्थः प्राप्नोति, तदा क्रम एव नास्ति, येन सह विरोधो भविष्यतीति । भा. १।३।३।७ पृ. १९६. * पदार्थः कालानुरोधेन नान्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । अतो न कालानुरोधेन व्यथयितव्याः पदार्थाः । १।३।३।७. * पदार्थ पदे-नार्थेऽवगते अवधार्यते तदुत्तरकाल वाक्यार्थः । टुप्. ६।१।१।१ पृ. १३४६.

▪ 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन' इति न्यायः । ' अमहद्गवाक्रम ' इत्यत्र आरोपितत्वस्य महत्त्वरूपार्थे अन्वये एकदेशान्वयात् ' पदार्थः० ' इति न्यायविरोधः । महत्त्वविशिष्टे तु तस्यानारोपात् अन्वयो बाधितः । तथा च वाक्यलक्षणे अन्वयानुपपत्त्या (नञ ) द्योतकत्वमभ्युपेयम् । तत्त्वप्रकाशिका. पृ.८५. * ' पदार्थः पदार्थेन अन्वेति, न तु तदेकदेशेन ' ( इति न्यायः ) । ऋद्धस्य राज्ञः पुरुषः इत्यर्थे ऋद्धस्य राजपुरुष इति न भवति समासस्य विशिष्टैकार्थप्रतिपादकतया तदेकदेशेन राजपदेन ऋद्धपदस्य अन्वयासंभवात् 'पदार्थः पदार्थेन० ' इतिन्यायात् । कु. १०।८।१।४। अभ्यास्तादः व्यक्तिन्यायः । संग्रहः. * पदार्थः पदार्थेनान्वेति न पदार्थैकदेशेनेति न्यायः । अयं न्यायो मुक्तावल्यां लक्षणाप्रकरणे निर्दिष्टः । तथाहि यदि एकदेशान्वयो न स्वीक्रियते तदा ' गम्भीरायां नद्यां घोषः ' इत्यादौ नदीपदस्य गम्भीरनदीतीरे लक्षणा, गम्भीरपदं तु तात्पर्यग्राहकमिति । साहस्री. २६५.

* पदार्थः पदार्थधर्मात् प्रबलः । यथा– स्मार्तमपि आचमनं पदार्थः, श्रौतादपि वेदवेदिकरणात् धर्मात्, प्रबलः । इति वेदवेदिकरणमध्ये क्षुतादौ सति स्मृत्युक्तं आचमनं कार्यम् । वि. १।३।४. * पदार्थो हि वाक्यार्थस्य मूलम् । नास्य पृथक् सिद्धिरस्ति इति । तदुक्तम् ' तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ' इति । भा. १०।७।९।२९. * पदार्थाः ( विकृतौ ) अङ्गोपकाराः प्राप्यन्ते । टुप्. १०।१। २।४. * पदार्थाः अप्रमत्ताः सन्तः वाक्यार्थं गमयन्ति । विशिष्टार्थसम्प्रत्ययश्च वाक्यार्थः । भा. १।१।७।२५ पृ. ९५. * पदार्थाः करकाङ्गभावेन गृह्यन्ते । सोम्यम्. * पदार्थाः द्रव्यगुणकर्मसामान्यसमवायाभाव-भावाः सप्त । संख्याऽपि गुणादिप्राचीनत्वात् पदार्थान्तर-मिष्यते । मणि. पृ. २२. * पदार्थाः यस्मिन् वेदे आम्नाताः तत्समाख्यातेन पुरुषेण क्रियन्ते । भा.३।८। २।३. * न चाप्रसिद्धाः पदार्थाः वाक्यार्थं निष्पाद-यन्ति । वा. २।२।१।२२ पृ. ५३२. * संकेतानपेक्षै-रेव पदैः वैदिकाः पदार्थाः प्रतिपाद्यन्ते । शा. १।१।८. * पदार्थेभ्यो वाक्यार्थः प्रतीयते । भा. १।२।७।२६, * पदार्थस्य उपस्थानं प्रयोगकाले । मन्त्रेणोपस्थितः पदार्थः कर्तव्य इति विज्ञायते, तदर्थस्य मन्त्रस्य आम्नान-सामर्थ्यात् वचनाच्च । १२।२।१०।२९. * पदार्थस्य शास्त्रप्रसिद्धस्य प्रामाण्यम्, न म्लेच्छप्रसिद्धस्य । के. १।३।९. * पदार्थस्य स्मरणे प्रकृतौ सर्वत्र उपायचतुष्टयं प्रमाणम्— ब्राह्मण–पद–मन्त्र–सूत्रोपद्रष्टारः । टुप्. १०।२।२।१९ * पदार्थानामुपकारकः कालः, प्रयोगा-ङ्गत्वात् । भा. १।३।३।७ पृ. २००. * पदार्थानां च खलेकपोतन्यायेन शाब्दबोधे अन्वयबोधः । तदुक्तम् । ' वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत् पतन्ति । तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ॥ ' इति । मणि. पृ. ७०. * पदार्थानां ज्ञात-

कालाना प्रवृत्त्या नियमः स्यात् । भा. ५।१।१३।२५. * पदार्थानां परस्परान्वयाकाङ्क्षापर्यवसानेऽपि वाक्यार्थानां परस्परान्वयापेक्षया अन्वयो न विरुद्धः । सु. पृ. ५२५. * पदार्थाना प्राप्तानामुत्तरकालं क्रमः आपतति । यदा पदार्थः प्राप्नोति तदा क्रम एव नास्ति । भा. १।३।३।७ पृ. १९९. * पदार्थाना वाक्यार्थे प्रामाण्याभ्युपगमः । शा. १।३।१ पृ. ८. * पदार्थानां वाक्यार्थावगममूलत्वम् । वैद्यनाथी. १।३।७।२५ पृ. ९६. * पदार्थानां वाक्यार्थप्रतीतौ कारणत्वम् । बाल. पृ. ७०. * पदार्थानां शक्तिमालोच्य कर्मसु विनियोगः । १।४।१४. 'शक्त्यधिकरणम्' इत्यत्र द्रष्टव्यम् । * पदार्थे तदनुष्ठाने च यथा वेदः प्रमाणं तथा पदार्थविक्रमेऽपि वेदः प्रमाणम् । वि. ५।१।१.

* पदार्थातिदेशपक्षे शास्त्रातिदेशपक्षे वा तद्भेदात् भेदो भवेत् । भा. ३।६।२।८.

* पदार्थानुसमयः अनेकेषु प्रधानेषु संनिपातिनाम् । भा. ५।२।१।१–२. * पदार्थानुसमयः अल्पाभ्यासप्रतिबन्धे अवदानादावपि, भूयोऽभ्यासप्रतिबन्धे तु काण्डानुसमय एव । निर्वापादौ तु उभयत्रापि पदार्थानुसमय एव । सोम. ( तात्पर्यम् ) ५।२।२. * पदार्थानुसमयः अहीनेषु बहुयजमानकेषु अङ्क्ते-अभ्यङ्क्ते-यपति-पात्नीवतीनाम् । के. ५।२।२. * पदार्थानुसमयः आग्नेयाग्नीषोमीयनिर्वापयोः । के. * पदार्थानुसमयः एकस्मिन् प्रथमं धर्मं कृत्वा द्वितीये तमेव धर्मं कृत्वा तृतीयादौ स एव धर्मः कार्यः । पुनः अन्यो धर्मः प्रथमे द्वितीये तृतीये कार्यः । एवमेवापरे धर्माः कार्याः । एवं पङ्क्तिपरिवेषणन्यायेन धर्माणां धर्मिषु अनुष्ठानं पदार्थानुसमयः । यथा प्राजापत्यपशुषु उपाकरणादयः संस्काराः । के. ५।२।१. * पदार्थानुसमयः प्रवृत्तिक्रमविचारस्य बीजम् । भाट्ट. ५।२।१. * पदार्थानुसमयः प्राजापत्यपशूनां संनिपत्योपकारकेषु । के. ५।२।१।१–२. * पदार्थानुसमयेन प्राजापत्यपश्वङ्गानुष्ठानम् । वारुणेषु चतुष्कपालेषु तु काण्डानुसमयेन धर्मानुष्ठानम् । वि. ५।२।१–२.

§ पदार्थानुसमयन्यायः । प्राजापत्यन्यायः । अनेकप्रधानेषु संनिपातिना पदार्थानुसमयः ॥

संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् । ५।२।१।१॥

भाष्यम्— वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रूयते । अग्नीषोमीये च पशौ पशुधर्माः समाम्नाताश्चोदकेन प्राप्ताः । तेषु संशयः किमेकस्य आदित आरभ्य धर्मान् सर्वान् कृत्वा द्वितीयस्य पुनरादित उपक्रमितव्याः, अथ प्रथमस्तावत् सर्वेषां कर्तव्यस्ततो द्वितीय इति । किं प्राप्तम् ? एकैकस्य सर्वे अपवर्जयितव्या इति । कुतः ? प्रधानासत्तेरनुग्रहाय । इतरथा प्रधानासत्तिर्विप्रकृष्येत । यथा बहुष्वश्वेषु प्रतिगृहीतेषु ये पुरोडाशाः तेषु नैकजातीयानुसमयः, एवमिहापीति ।

टुप्— ( किमेकस्य इत्यादि भाष्यं आरादुपकारकानपि विषयीकरोतीति मत्वा आह— ) आरादुपकारकेषु भेदेन क्रियमाणेषु सौर्यादीनामिव तन्त्रभेदः ( प्रयोगभेदः ) स्यात् । ( तत्र 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति सहप्रयोगविधानं विरुध्यते ) तस्मात् संनिपत्योपकारका उदाहरणम् । ( पूर्वपक्षमाह— ) प्रधानकालस्यादृष्टत्वात् एकैकस्मिन् गुणकाण्डमपवृज्यात् । इतरथा हि पदार्थानुसमये ( सति ) प्रधानात् विप्रकृष्येरन् । प्रकृतौ च पूर्वस्मात् ( उपाकरण— )पदार्थात् उत्तरः ( अनुष्ठितः ) एवमिहापि ( काण्डानुसमयेन भवितव्यमिति ) ।

सर्वेषां वैकजातीयं कृतानुपूर्व्यत्वात् । २ ॥

भाष्यम्— एकजातीयानुसमयः कर्तव्यः । किमेवं भविष्यति ? सहत्वमनुग्रहीष्यते । तत्सहत्वं श्रूयते, वैश्वदेवीं कृत्वा पशुभिश्चरन्तीति । एकस्मिन् काले पशूनां प्रचारः । ननु एवं सति पूर्वस्य पदार्थस्योत्तरः पदार्थः परतन्त्रव्यापारेण व्यवधीयते, नैष दोषः । एवमपि कृतमेव आनुपूर्व्यम् । योऽसौ पश्वन्तरे व्यापारः, स एवासौ न पदार्थान्तरम् । पदार्थान्तरेण व्यवधानं भवति ।

टुप्— सर्वेषां वैकजातीयं कृतानुपूर्व्यात् । (लिखिते स्वे चैवं पाठः) । यदि एकैकस्मिन् गुणकाण्डमपवृज्येत, तथा सति सहप्रयोगात् ('प्राजापत्यैश्चरन्ति' इति विहितात् ) संदेहकर्तव्यता अनुपपत्तिव्या इत्येतत्

तु आगदुपकारकाङ्गाभिप्रायेणेति न कश्चिद्विरोधः । इति प्राप्ते, प्रत्यक्षवचनेनैकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात् प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमात् एकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्तव्यमित्यर्थावगमेनैकमुपाकरणाख्यमङ्गं सर्वपशूनां कृत्वा नियोजनं कार्यम्। प्रधानप्रत्यासत्तिस्तु प्रत्यक्षवचनावगतोक्तसाहित्यानुरोधेनैव कल्पनीया । उपाकरणानन्तरमेव च नियोजनमिति यथाप्रवृत्त्येवानुष्ठानम् । आवृत्त्यानुष्ठानं तु प्रधानसाहित्यानुरोधेनेति न कश्चिद्विरोधः । अतः पदार्थानुसमयः । प्रवृत्तिक्रमविचारस्त्वेतदधिकरणोत्तरं द्रष्टव्यः ।

मण्डन— ' क्रमः पदार्थेषु गुणे परत्वात् । '

शंकर— ' पदार्थोऽनुसमीयते । '

* पदार्थानुसमयन्यायः । ( ५।२।१।१–३ ॥ ) न्यायस्वरूपम् ' प्रत्यक्षवचनेन ( ' प्राजापत्यैश्चरन्ति ' ) एकस्मिन् काले साङ्गानां सर्वेषां प्रयोगविधानात् प्रधानसाहित्यवदङ्गेष्वपि साहित्यावगमात् एकैकाङ्गेन सर्वप्रधानानां युगपदुपकर्तव्यं इत्यर्थावगमः ' इति । उदाहरणम्– प्राजापत्यपशुषु एकं उपाकरणाख्यमङ्गं सर्वपशूनां कृत्वा नियोजनं कार्यम्, एवं सर्वत्र । तथा चाप एकैकमङ्गं एकैकस्य कृत्वा नियोजनं कार्यं इत्येवं पदार्थानुसमय. । इति । के.

* ' पदार्थापेक्षया पदार्थगुणः क्रमादिर्दुर्बलः ' इति शिष्टाकोपाधिकरणन्यायस्य स्वरूपम् । के.१।३।४। ५–७.

* पदार्थयत्ता न कैन चित् प्रमाणेन परिच्छिद्यते । वा.१।३।१।० पृ. २००.

* पदार्थैकदेशेनान्वयो व्युत्पत्तिविरुद्धः । सोम. १।१।९.

* पदार्थक्रमः अर्थादपि । भा. ५।१।२।२.

* पदार्थपूर्वकत्वात् वाक्यार्थस्य, वाक्यशेऽर्थः पदवेलायामनवगतः, तादृश एव उत्तरेण पदेन संबध्यते । टुप्. ६।२।३।४ पृ.१३९२.

* पदार्थप्राप्तिः उपकारद्वारकत्वेन। भाट्ट. १०।१।९ पृ.२०५.

* पदार्थप्राबल्याधिकरणम् । वि. १।३।३. ' शिष्टाकोपाधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* पदार्थप्राबल्यन्यायस्य ( १।३।४।५–७ ) स्वरूपं ' अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ ' । वा १।३।७।१४ पृ. ८४१.

* पदार्थमूलत्वया वाक्यार्थप्रामाण्यम् । भा. १।१।७।२४–२६.

* पदार्थसंदेहात्तावत् बहवो वृद्धव्यवहारादेव निर्वर्तन्ते । शेषाश्च निगमनिरुक्तकल्पसूत्रतर्काभियुक्तेभ्यः, सर्वेषामर्थप्रतिपादनपरत्वात् । वा. १।३।८।२४ पृ २६६

* पदार्थसामर्थ्यञ्चन्नितो हि वाक्यार्थो भवति । भा. ५।१।१।१।२१.

* पदार्थस्वरूपशास्त्रयोः समानप्रकारकत्वं तदाविर्भावपदेषु । इति के चित् । अन्ये तु तदविर्भवत्वादिनैव शक्तिरिति नानार्थतैव इत्याहुः । मणि. पृ.१६१.

* पद्मपत्रस्थिततोयन्यायः । उक्तं च– ' पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् । महाजनस्य संपर्कः कस्य नोन्नतिकारकः ॥ ' इति । साहस्री. ८०७.

* ' यथा च पद्मरागादीन् काचस्फटिकमिश्रितान् । परीक्षका विजानन्ति, ( शब्दान् ) सद्धुलमपरे तथा ॥ ' वा. १।३।८।२७ पृ. २८२.

* पनसोदुम्बरादिवत् इति न्यायः । अयं कदम्बसहितायामुदाहृतः । तथाहि, ननु क चित्रजोदर्शनं विनापि गर्भसंभवो दृश्यते, क चित्तु सत्यपि रजसि गर्भोऽनुपलम्भः इति । नैष दोषः, गर्भधारणं हि रजोविना न भवतीत्येषा व्याप्तिः, तत्र क चित् प्रकटं क चिदप्रकटमन्तरेऽवतिष्ठते । तत्राप्रकटेऽपि रजसि अन्तर्गतरजस्त्वात् गर्भधारणसंभवः, अतः प्रागुक्तदोषाभावः । अत आह ' वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि । अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत् ॥ ' इति । साहस्री. ५२४.

* 'पम्पाकुलायप्रतिमाश्च मुक्ता ।' (अर्थवाद-मात्रस्य अतिदेशो उदाहरणमिदमुक्तम्— के ) । मा ७।१।३।१७

* पय एव आमिक्षा वैश्वदेवहवि, दधि तु संस्कारक इत्यर्थे ( ८ २।४ )। के * 'पयो वा तत्प्रधानत्वात्०' (८।२।४।२२) । यदि चात्र पयो देवता संबन्धि, ततो विशेषातिदेश सिध्यति 'पयो वा०' इति । टुप् ४।१।९।२३ * नित्य हि उपसर्जनीभूत भोजने पय प्रचरति । ननु केवलमपि लोके पय उपयुज्यते । उच्यते । कारणात् केवलाशनम् । अत औषध वा यस्य स केवल पय उपयुङ्क्ते । न तु एतत् प्रचुरम् । मा ९।४।९।२८, * 'पयसा जुहुयात्' इति विधि, 'ज्योतिष्मत्या' इत्यादिरर्थवाद अग्निहोत्रे । १०।८।४।७, * पयसा दध्ना वा चरो श्रपण नियते ( नियते च दधिपयोभ्या श्रपणम् ) । ९।२।१४।४७, * 'पयसा मैत्रावरुण श्रीणाति' इति वचनात् मैत्रावरुणस्यैव पयसा श्रपण न सर्वेषाम् । ३।६।११।१२, * पयस सान्नाय्यगतस्य धर्माणामति देशोऽग्नीषोमीयपशौ । ८।२।३।१५–१८ * पयसि अदितिचरुश्रपणार्थे प्रदेयधर्मा नानुष्ठेया प्रायणीये । ९।४।९ मीको पृ ९०९ 'आदित्यस्योऽधिकरणम्' इत्यत्र द्रष्टव्यम् । * पयसि आग्नेये सान्नाय्यस्य विध्यन्त । मा ८।१।१७।३४ * पयसि आग्नेये सान्नाय्यस्यो धर्मागमनातिदेश । ८।१।१७ मीको पृ २०१ 'अतिदेश ऐन्द्रे०' इत्यत्र द्रष्टव्यम् । * पयसि चरु ज्योतिष्टोमे प्रायणीये । तत्र पयसि प्रदानार्था धर्मा न कर्तव्या । मा ९।४।९।३२–४० * पयसि दधनि च पशुधर्मेष्टौ प्रदेयधर्मा न भवेयु । श्रपणार्थे तु प्रीतार्थधर्मा भवेयु । के ९।४।२१।४३–४४ * पयसि दधनि च प्रीतार्थधर्मानुष्ठान चन्द्रामुदितेष्टौ । मा ९।२।१४।४४–४५, * पयसि दधनि च प्रदेयधर्मानुष्ठान चन्द्रामुदितेष्टौ । ९।४।१०।४१–४२, * इत्यर्थे दधनि पयसि च प्रीतार्थधर्मा पाके उपकुर्वन्ति । ३।१।७।१४ पृ ७१६

* पयआदिषु मैत्रावरुणादिप्रदेयेषु श्रपणार्थेषु प्रदेय धर्मा नानुष्ठेया ज्योतिष्टोमे । ९।४।१२ मीको पृ. १८२४ 'ज्योतिष्टोमे मैत्रावरुणादि०' इत्यत्र द्रष्टव्यम् ।

* पयोग्रहा सुराग्रहाश्च सौत्रामण्याम् । 'उत्तरेऽग्नौ पयोग्रहान् जुहोति, दक्षिणे सुराग्रहान्' । वा ३।५।३।१४

* पयोद्रव्यकत्व इष्टिप्रकृतिलिङ्गम् । बाळ पृ ११९

* पयोधर्माणा सान्नाय्यगतानामतिदेश वैश्वदेव पर्वगतामिक्षायाम् । ८।२।४ मीको पृ २२२ 'अतिदेश वैश्वदेव्या०' इत्यत्र द्रष्टव्यम् ।

* पयोधर्मातिदेश आमिक्षायाम् । पयोविकार आमिक्षा । मा ८।२।४।१९–२३

* पयोविकार. अग्नीषोमीय पशु, न दधि विकार । मा ८।२।३।१५–१८

* पयोव्रत अपरराज्ञादौ अशीयमानपक्षे न कर्तव्यम्, अन्यथा कर्तव्यम् । वि ६।८।८, * पयोव्रत ब्राह्मणस्य दीक्षितस्य ज्योतिष्टोमे तत्त्वार्थम् । ४।३।४ * 'पयोव्रत ब्राह्मणस्य यवागू राजन्यस्य आमिक्षा वैश्यस्य' अत्र कर्तृव वाचनिकत्वमसाविधि । बाळ पृ १८ * पयोव्रत यवागूव्रत इत्यादि अन्यस्मिन् भक्षे सत्यपि कर्तव्यम्, अन्यथा न भक्षणीयमपूर्वार्थत्वात् । वि ६।८।७

* पयोव्रतादि ज्योतिष्टोमे अपरराज्ञे न नित्यम् । ६।८।९ मीको पृ १७८९ 'ज्योतिष्टोमे अपर०' इत्यत्र द्रष्टव्यम् । * पयोव्रतादीनि ज्योतिष्टोमे नित्यानि । मा ६।८।८।२८ मीको पृ १८८२ 'ज्योतिष्टोमादिषु पयो०' इत्यत्र द्रष्टव्यम् । * पयोव्रतादिना सौमिकेन ज्योतिष्टोमे प्रायणीयादिषु दार्शिकस्याशनस्य प्रसङ्गसिद्धि । मा १२।१।१४।३०, * पयोव्रतादे रातिदेशिकस्य कृष्णलहोमादिष्टमध्यपाठनेन न बाध किन्तु समुच्चय । १०।४।११।१–२ वर्णक १ * पयोव्रतादीना करणत्वम् । ४।३।४ 'व्रताधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* पयःसक्तुधानादिषु प्रदानधर्मा नानुष्ठेया ज्योतिष्टोमे 'पयसा मैत्रावरुणं श्रीणाति' इत्यादौ । भा. ९।४।१२।४९-५०.

* पयोहोमन्यायः । भा. १०।८।४।७. अश्वमेध जर्तिल्यवागून्यायः । मीको. पृ. १७४९ 'जर्तिल्यवागून्यायः' इत्यत्र द्रष्टव्यम् । * गवामयने, पयोहोमन्यायेन तत्र पौर्णमासीवाक्यशेषे 'चित्रापूर्णमासे दीक्षेरन् मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासः' इत्यादौ चैत्र्याः स्तुतत्वात् चैत्री एव दीक्षाकालः । इत्यादिः पूर्वपक्षः । भाट्ट. ६।५।१०.

* पयोहोमविधेरर्थवादः जर्तिल्यवागूहोमवाक्यम् । भा. १०।८।४।७.

* पयस्या पयसि प्रभवा आमिक्षा । तैसा. २।३।१३।२. * पयस्यां मैत्रावरुणपात्रे निदधाति ज्योतिष्टोमे । सवनीये विद्यमानायाः पयस्यायाः एकदेशसंयोगो न तु कृत्स्नायाः । भा. ३।८।१८।३३. * पयस्यायाः सवनीये पूर्वसिद्धाया एवैकदेशः मैत्रावरुणपात्रे निधेयः ज्योतिष्टोमे, न तु निधानार्थमपूर्वपयस्योत्पादनम् । चि. ३।८।१९. * पयस्यायां प्रणीतानामभावः । 'पुरोडाशाभावे प्रणीतानामभावो यथा पयस्यायाम्' । भा. ४।२।५।१५.

* परं तु श्रुतिसामान्यमात्रम् । १।१।८।३१ ॥ इत्यनेन न्यायेन बबरशब्दस्य शब्दानुकारित्वम्, प्रावाहणिशब्दस्य च प्रकर्षेण वहति इति व्युत्पत्तिमङ्गीकृत्य नित्यत्वाद्युपपत्त्याद्यङ्गीकारः । कौ. ११२।११८ पृ. ३८.

परेणावेदनाद् दीक्षितः स्यात् सर्वैर्दीक्षाभिसंबन्धात् ।५।३।११।२९॥

ज्योतिष्टोमे 'दण्डेन दीक्षयति' इति दण्डेन दीक्षां निर्वर्तयति इति दण्डो दीक्षार्थ उक्तः । आम्नावैष्णवोऽपि दीक्षार्थः । तत्र किं सर्वैर्दीक्षितो भवति इष्ट्यन्ते एव वा दीक्षितो भवति इति विचारे पूर्वपक्षमाह । परेण अध्वर्युणा आवेदनात् 'अदीक्षिष्टायं ब्राह्मणः' इति निर्देशात् ऊर्ध्वं यजमानो दीक्षितः स्यात् । सर्वैः आग्नावैष्णवेन पुरोडाशेन, दण्डेन मेखलया कृष्णाजिनेन इत्यादिना च दीक्षाया अभिसंबन्धात् । ततश्च आवेदनोत्तरं दीक्षितत्वम् । दीक्षितत्वे च सिद्धे 'दीक्षितो न ददाति, न जुहोति, न पचति' इत्यादीनि दीक्षितव्रतानि प्रतिपत्तव्यानि । अत्र तन्त्ररत्नम्— 'आवेदनात् इति पञ्चमीसिद्धौ यत्नः कर्तव्यः सकलशब्दार्थतत्त्वज्ञाननिधिना भगवता महर्षिणा प्रयुक्तत्वात् । तस्मात् 'एनपा द्वितीया' इत्यत्र पञ्चम्यपि दृश्यते इति वक्तव्यम्' इति । एतन्मते आवेदनात् परेण इत्यन्वयः । आवेदनोत्तरमित्यर्थः । परेण इति एनबन्तमव्ययम् ।

इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात् । ३० ॥

पूर्वपक्ष सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । इष्ट्यन्ते दीक्षितः स्यात् । हि यस्मात् तदर्था दीक्षार्था सा इष्टिः । दीक्षया च दीक्षितो भवति । 'दण्डेन दीक्षयति' इत्यादौ तु अविशेषार्थसम्बन्धात् । अविशेषेण क्रियाविशेषशून्येन अर्थेन दण्डादिरूपद्रव्येण संबन्धात् न तेन दीक्षोत्पत्तिः, क्रियारूपत्वाभावात् । तस्मात् इष्ट्यन्ते एव दीक्षितत्वम् । तत आरभ्य च दीक्षितव्रतानि । 'अविशेषात्वार्थसंयोगात्' इति कुतूहलपाठेऽपि उक्त एवार्थः ।

समाख्यानं च तद्वत् । ३१ ॥

दीक्षणीयया इष्ट्यैव दीक्षितत्वम्, न दण्डाजिनमेखलादिना इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । इष्टिर्दीक्षार्था, इष्ट्यन्ते च दीक्षितत्वस्य दीक्षितव्रतानां च प्रवृत्तिः । यस्मात् समाख्यानं दीक्षणीया इति समाख्या, तद्वत् पूर्वसूत्रोक्तहेतुवत् इष्ट्यन्ते दीक्षितत्वसाधकम् । दीक्षयितुं दीक्षासंपन्नं कर्तुं योग्या दीक्षणीया इति हि तत् समाख्यानम् । तच्च दीक्षणीयया इष्ट्या दीक्षितत्वे संभवति सति उपपद्यते नान्यथा । तस्मात् दीक्षणीया इति समाख्याऽपि इष्ट्यन्ते दीक्षितत्वं इत्यस्य पक्षस्य साधिका । तस्मात् इष्ट्यन्ते दीक्षितः स्यात् । के.

* परेणावेदनात् (दीक्षितः स्यात् सर्वैर्दीक्षाऽभिसंबन्धात् । ५।३।११।२९) इत्यधिकरणे तन्त्ररत्ने उक्तम् 'आग्नावैष्णवो वाक्येन दीक्षिष्यमाणपदसमभिव्याहारेण दीक्षार्थः' इति । बाल. पृ. ४७. * परेण

पूर्वं बाध्यते पौर्वापर्येण विरोधे । अश्मन्नाघः । बा. ३।३।७।१४ पृ. ८६०.

‡ परेषां प्रतिषेधः स्यात् । १०।२।३२।७२ ॥

सारस्वते सोमे ' श्लेष्माती यूपो भवति ' इत्युक्तम् । तत्र श्लेष्मातीत्वात् परेषां अन्येषां यूपधर्माणां जोषणं तक्षणं उच्छ्रयणं इत्येवमादीनां प्रतिषेधः प्राप्तः स्यात् । ते न कर्तव्याः । इति सिद्धान्तः ।

विप्रतिषेधाच्च । ७३ ॥

तत्रैव हेत्वन्तरमाह । तेषु धर्मेषु कृतेषु श्लेष्मात्याः विप्रतिषेधः कृतो भवेत् । यत् काष्ठं श्लक्ष्णं बलीवर्दधारणप्रवृत्तं सा श्लेष्माती । सा तादृश्येवोपादातव्या । तक्षणे क्रियमाणे सा विनश्येत् । जोषणं तु अशक्यतर मेव । नियतैव च श्लेष्माती, पुनर्निखननं व्यर्थम् । एवमुच्छ्रयणम् । तस्मात् श्लेष्मात्याः तक्षणादयो धर्मा न कर्तव्याः । के.

‡ परेषु चामसशब्दः पूर्ववत्स्यात् तदादिषु । १०।५।१९।६७ ॥

ज्योतिष्टोमे ' आश्विनाग्रान् गृह्णीयादामयाविनः ' ' शुक्राग्रान् गृह्णीयादभिचरतः ' ' मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य ' इति ऐन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते । तेषु ऐन्द्रवायवात् परेषु च ग्रहेषु अग्रशब्दः पूर्ववत् स्वक्रमस्यस्यैव बोधकः, तदादिषु तस्य आदौ येषां तदुत्तरेषां ते तदादयः, तेषु तदादिषु अग्रशब्दः स्यात् । यस्य यद्रूपः पाठस्थो क्रमः पाठक्रमेण सिद्धा स्यात् अनूद्य तत्र ग्रहो फलाय विधीयते, न तु अग्रता विधीयते । तेन स्वस्थानस्थितानामेव आश्विनादिग्रहाणां तत्तत्फलार्थता स्यात् इति पूर्वः पक्षः ।

प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् । ६८ ॥

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थे । आश्विनाग्रताशुक्राग्रता मन्थ्यग्रताः कामाय श्रूयन्ते । तत्र आश्विनादीनां न स्वस्थानस्थितानामेव कामार्थता, किन्तु तेषां ऐन्द्रवायवात् प्राक् प्रतिकर्षः कर्तव्यः फलाय । नित्यार्थेन अग्रस्य नित्यार्थो या पाठसिद्धा आश्विनादीनां अग्रता तस्याः तदसंयोगात् तेन कामप्रविधिनियतादिस्थेन असंयोगात् संयोगाभावात् । तत्रश्च स्वस्थानस्थितत्वेन या कथञ्चिदग्रता सा नित्यार्था । अभिचारादिफलार्था च या अग्रता, सा ऐन्द्रवायवात् प्राक् प्रतिकर्षेणैव सेत्स्यति । तस्मात् विशिष्टफलार्थं आश्विनादीनां ऐन्द्रवायवात् प्राक् प्रतिकर्षः इति सिद्धान्तः । अत्र न पूर्ववत् ग्रहविधिः, किन्तु अग्रताया एव विधिः इति मन्तव्यम् ।

प्रतिकर्षं च दर्शयति । ६९ ॥

ज्योतिष्टोमे कामविशेषाय आश्विनाग्रता शुक्राग्रता मन्थ्यग्रता च श्रुता । तत्र आश्विनादीनां ऐन्द्रवायवात् प्राक् प्रतिकर्षः सिद्धान्ते उक्तः । तत्र लिङ्गमाह । लिङ्गं धाराग्रहेषु दर्शादिः आश्विनादीनां प्रतिकर्षं दर्शयति । ' धारयेयुक्तम्, यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ त सादयेत्, य कामाय गृह्णीयुः ' इति । इदं लिङ्गं कामाय गृहीते धार्यमाणे ऐन्द्रवायवस्य ग्रहणं दर्शयति । तस्मात् कामार्थाना ग्रहाणां ऐन्द्रवायवात् प्राक् प्रतिकर्षः इति सिद्धान्तः । के.

● परकृतिः अर्थवादः ' इति ह स्माह बर्कुर्वार्ष्णिः माषानेव मह्यं पचत ' इति । बाल. पृ. ५०. ● परकृतिः एककर्तृकोपाख्यानम् । ' इति ह स्माह बर्कुर्वार्ष्णिः माषान् मे पचत ' इत्यादि । भाट्ट. ६।७।११. ● परकृतिः मन्त्रः ' चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु । पर्जन्यइव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥ ' ( ऋग्. ८।२१।१८ ) । अत्र हे राजकाः राजानः, चित्रो नाम राजा, इत् इति निश्चये । स एव सरस्वतीमनु तद्देशे यके अन्यके यस्मिन्कस्मिंश्चित् अन्यस्मिन् देशे गवां सहस्रम्, अयुता अयुतानि च ददत् इव ददौ एव । वृष्ट्या ततनत् तन्वन् पर्जन्य इव । हि: प्रसिद्धौ । बाल. पृ ६१-६२.

‡ परकृतिपुराकल्पं मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् । ६।७।१२।२६ ॥

' इति ह स्माह बर्कुर्वार्ष्णिः माषानेव पचत, न वा एतेषां हविर्गृह्णन्ति ' इति एककर्तृकवृत्तान्तकथनरूपायां परकृतौ तथाऽस्मिन्नपि ग्रामप्रमाणमुक्तम् । ' उल्मुकैर्ह स्म पूर्वे समाजग्मुः , तान् ह असुरा रक्षांसि निजघ्नुः ' इति बहुकर्तृकवृत्तान्तकथारूपे पुराकल्पे उल्मुकैः सह

शमनमनिष्टमित्युक्तम् । परकृतिश्च पुराकल्पश्च अनयोः समाहारः परकृतिपुराकल्पम् । तत्र कथितं धर्मजातं तेन शब्देनोक्तम् । तथा च परकृतिपुराकल्पाभ्यां धर्मः माषभक्षणादिः मनुष्यधर्मः मानकर्तुः मनुष्यस्य धर्मः स्यात् । हि यस्मात् धर्मस्य अनुकीर्तनं कथनं अर्थाय प्रयोजनायैव । तस्मात् उपवसथादौ माषभक्षणं वर्ज्यं वार्ष्णैः अन्यैरपि मनुष्यैः कर्तव्यं इति माषपाकस्य विधिरयम् , नार्थवादः इति प्रथमः पूर्वपक्षः ।

तद्युक्ते च प्रतिषेधात् । २७ ॥

परकृतिपुराकल्पोक्तधर्मे उपवसथे माषभक्षणादौ तद्युक्ते विहितमनुष्यधर्मत्वयुक्ते तस्यैव प्रतिषेधात् 'तत्तथा न कुर्यात्' इत्यादिप्रतिषेधस्य सफलत्वात् माषभक्षणादेर्मनुष्यधर्मत्वेन विधिरेव स्यात् इति पूर्वपक्षे हेत्वन्तरमाह सूत्रम् । हेत्वन्तरसमुच्चयार्थश्चकारः । कुतूहले तु इदं सूत्रं 'विधौ तु वेदसंयोगात्०' इति सूत्रोत्तरं एकोनत्रिंशत्त्वेन पठितम् । व्याख्या च इत्थम्— वाजपेयप्रकरणे वाजसनेयशाखायां द्विविधः पशुकल्पः श्रुतः । पशुकाले आग्नेयमैन्द्राग्नमैन्द्रमिति त्रीन् क्रतुपशून् उपाकृत्य मारुतीं वशामुपाकरोति सारस्वतीं च मेषीं सारस्वतं च मेषमुपाकृत्य सप्तदश प्राजापत्यान् पशून् उपाकरोति । पर्यग्निकरणान्ते आरम्भणान्तान् पूर्वानालभन्ते, सारस्वतप्रभृतीन् उत्तरान् धारयन्ति । माध्यंदिनस्य सवनस्य मध्यमे उत्तमपर्याये प्रह्णमाग्नि उपाङ्गने सारस्वतप्रभृतीनुत्तरान् आलभन्ते । 'तेषामनभिघारिताभिर्वपाभिः प्रचरन्ति । सावित्रस्य ग्रहस्य प्रचर्यं समवदाय प्राजापत्यवपाभिः चरति । हारियोजनेन प्रचर्य सारस्वतप्रभृतीनां हृदयादिदैवतैः प्रचरन्ति । तदा शेषा अनूयाजा भवन्ति, अभ्यूढे स्रुचौ अथैषां हविर्भिः प्रचरन्ति । तद्धु तथा न कुर्यात् । घ्नन्ति ( नश्यति ) वा एष यज्ञो यदेव कुर्वन्ति । तस्मात् यथैव पूर्वेषां वपाभिश्चरेयुः तदितरेषां वपाभिश्चरेयुः , यथैव पूर्वेषां हविर्भिः तथैव तेषां हविर्भिश्चरेयुः' इति । अत्र यच्छब्दयुक्ते वाक्ये श्रुतस्य पशुकल्पस्य प्रतिषेधो भवति । स च प्रसक्तस्यैव भवति । तस्मादपि एवंजातीयो विधिरेव स्यात्— इति । तत्कुतूहलोक्तो विषयः कियानित् शत-पथे ५।१।३।१–१४ इत्यत्र दृश्यते, न तु सर्व एव । वाक्यार्थपरिपाटी प्रायः सर्वा अन्यैव च दृश्यते ।

निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् । २८ ॥

परकृतिपुराकल्पोक्तः उपवसथे माषभोजनादिधर्मः वृष्णिकुलोत्पन्नवर्णवत् सर्वमनुष्याणां धर्मः विधिः स्यादिति प्रथमपूर्वपक्षं सूत्रद्वयेन प्राप्तं वाशब्देन निरस्यन् अन्यं पूर्वपक्षमाह । वार्ष्णिशब्देन निर्देशात् वृष्णिकुलोत्पन्नानामेव तद्धर्मः, स चासौ धर्मश्च तद्धर्मः माषभक्षणरूपो धर्मः स्यात्, न तु वृष्णिभिन्नमनुष्याणाम् । पञ्चावत्तवत् । 'पञ्चावत्तं जमदग्नीनाम्' इति यथा जमदग्निगोत्राणामेव पञ्चावत्तं भवति, नान्येषां तद्वत् । अथवा निर्देशात् वृष्णिगोत्रनिर्देशात् तद्धर्मः तेषां वृष्णीनां वृष्णिगोत्रोत्पन्नानामेव धर्मः स्यात् इति सूत्रार्थः ।

विधौ तु वेदसंयोगादुपदेशः स्यात् । २९ ॥

'माषानेव मह्यं पचत' इत्यर्थवादे वार्ष्णिसंयोगात् विधौ तदनुमितविधौ वृष्णिसम्बन्धस्तुत्या सर्वेषामेव मनुष्याणामुपदेशः स्यात् माषपाकस्य । परकृतिपुराकल्पमिति प्रथमसूत्रे केवलं विधिपक्ष उक्तः । न तु तत्र केषां मनुष्याणामित्युक्तम् । इति न पुनरुक्तिः ।

अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् । ३० ॥

परकृतिपुराकल्पयोः 'इति ह स्माह बर्कुर्वार्ष्णिः माषान् मे पचत' इत्यादौ माषपाकविधिः , वृष्णिगोत्राणामेव विधिः , मनुष्यमात्रस्य स विधिः इति पूर्वपक्षद्वयनिरासार्थः वाशब्दः । 'आरण्यमेवाश्नीयात्' इत्यस्य विधेः 'इति ह स्माह' इत्यादिः शेषः । विधिशेषत्वात् अर्थवादः स्यात् । 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेत्' इत्यस्य विधेः 'असुरैर्ह स्म पूर्वे समाजग्मुः , तान् ह असुरा रक्षांसि निजघ्नुः' इत्ययं शेषः , तस्मात् सोऽप्यर्थवादः । तस्मात् अर्थवादत्वात् सः नित्यानुवादः स्यात् , न विधिः । इति सिद्धान्तः । के.

* परकृतिपुराकल्पा अर्थवादाः । ( तत्र एककर्तृकमुपाख्यानं परकृतिः । अनेककर्तृकमुपाख्यानं पुराकल्पः इति वदन्ति ) । मा. ६।७।१२।२६–३०.

ॐ परकृतिपुराकल्पाधिकरणम् । माषपाकाधिकरणम् । परकृतिपुराकल्पाः अर्थवादाः ॥

परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् । ६।७।१।२।२६॥

भाष्यम्— इह परकृतयः, पुराकल्पाश्चोदाहरणम् । यथा 'इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत, न वा एतेषां हविर्गृह्णन्ति' इति । पुराकल्पः, 'उल्मुकैर्ह स्म पूर्वे समाजग्मुस्तान् ॥ असुरा रक्षांसि निजघ्नुः' इत्येवमादयः । तेषु संदेहः किमेते मनुष्यधर्मा विधयः, उत तद्गोत्राणाम् । अथवा अर्थवादा इति । किं तावत् प्राप्तम् ? मनुष्यधर्मा विधयः इति । कुतः ? अर्थाय प्रयोजनाय अनुकीर्तनमेतद्भवति । कर्तृमनुष्यसंबन्धकीर्तनेन क्रिया प्रशस्ता भवति । प्रशस्तं च प्रतिपाद्यम् । स एष विधिरेव अनेन प्रकारेण । अतः परैरपि मनुष्यैः कर्तव्य इति गम्यते ।

तद्युक्ते च प्रतिषेधात् । २७ ॥

भाष्यम्— एवंजातीयकस्य विधेः प्रतिषेधो भवति, तत्तथा न कुर्यादिति । प्रसक्तस्य च प्रतिषेधो न्याय्यः । तस्मादपि विधय इति ।

निर्देशाद्वा तद्धर्मः स्यात् पञ्चावत्तवत् । २८ ॥

भाष्यम्— मनुष्यधर्मोऽयं विधिरेवंजातीयक इति गृह्यते । तत्र तु विशिष्टगोत्राणां निर्देशात्तेषामेव धर्म इति गम्यते । स्तुत्या ह्यत्र कर्तव्य इति ज्ञायते । स च विशिष्टगोत्राणां श्रूयते । तस्मात् तद्गोत्राणामेव कर्तव्यः । पञ्चावत्तवत् । यथा 'पञ्चावत्तं जमदग्नीनाम्' इति तद्गोत्राणामेव भवति, एवमिहापीति ।

विधौ तु वेदसंयोगादुपदेशः स्यात् । २९ ॥

भाष्यम्— गुणवादेपोऽपि पक्षो व्यावर्त्यते । विधौ एतेषामुपदेशः स्यात् । विधौ वेदेन स्तुतिनिर्देशः कृतः । न विध्याश्रये पुरुषे । पुरुषग्रहणं विधिस्तुत्यर्थम् । विधिरिति क्रियामाह । एतस्याः क्रियाया मान्यो यस्मादनेन पुरुषेण क्रियते तस्मात् साधुरिति । न त्वत्र पुरुषः क्रियासंबन्धेन निर्दिश्यते किन्तु स्तोतव्यत्वेन । कुत एतत् ? स्तुतिपदस्यान्याश्रयाभावात् । अपि च क्रियानिर्देशो भूत्वा विधानम्, क्रियापुरुषसंबन्धनिर्देशो वाक्येन । तच्च दुर्बलम् । तस्मात् पुरुषमानस्य विधानं प्राप्नोति, न तद्गोत्राणामिति ।

अर्थवादो वा विधिशेषत्वात् तस्मान्नित्यानुवादः स्यात् । ३० ॥

भाष्यम्— एषोऽपि पक्षो वाशब्दाद्विनिवृत्तः । नात्र तद्गोत्राणां विधिः, न मनुष्यमात्रस्य वा विधिः, विधिरेव नेति । अर्थवादस्तु । कुतः ? विधिशेषत्वात् । अन्यं त्वत्र विधिमामनन्ति । परकृत्युदाहरणे तावत्, 'तस्मादारण्यमेवाश्नीयात्' इति । पुराकल्पोदाहरणे, 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इति । न च द्वयोर्विध्योरेकवाक्यभावोऽस्ति । विधिना हि संबध्यमानयोः परकृतिपुराकल्पवचनयोरन्या वचनव्यक्तिः । अन्या तु स्तुत्यर्थप्रवृत्तयोः । न चोभयं यौगपद्येन संभवति । तस्मादर्थवाद इति ।

शा— कृत्वाचिन्तया अधिकारश्चिन्त्यते । अर्थवादो नेति कृत्वाचिन्तोत्पादनम् ।

सोम— अपरिमितशब्दवत् इहापि नाविशेष इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— परकृतिः पुराकल्पः इद द्वयमपि मनुष्यधर्मः मनुष्यधर्मत्वेन विधेयः स्यात् । तथा सति तत्कीर्तनं प्रयोजनाय भवतीति ।

वि— 'माषान् मे पचतेत्येतद् वार्ष्णिष्वेवाथवेष्वुत वा ।, उक्तेर्विशेषश्च तौ पक्षौ, कृत्वाचिन्ताऽर्थवादतः ॥'

भाट्ट— दर्शपूर्णमासयोः 'इति ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचत' इति श्रुतम् । इदं चैककर्तृकोपाख्यानपरत्वात् परकृतिः । अयं चारण्याशनविधेः शेषः । बहुकर्तृकोपाख्यानपरं च वाक्यं पुराकल्पः सत्रे 'उल्मुकैः सह पूर्वे समाजग्मुः, तानसुरा रक्षांसि निजघ्नुः' इति । अयं च 'गृहपतेरेवाग्निषु निर्मथ्य निर्वपेरन्' इति निर्मन्थ्याग्निसंसर्गस्तुत्यर्थः उल्मुकसंसर्गनिन्दकः सन् तद्विधेः शेषः । न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणे निर्णीतमेव । परकृत्युदाहरणे तु यदा विधिस्तदा कृत्वाचिन्तया विचार्यते । वृष्णिगोत्रस्याधिकारिकदर्शपूर्णमासोद्देशेन तत्कर्तृसंस्कारार्थतया वा माषपाकविधिरिति तद्गत एव माषपाकाधिकारो वैश्यनिमित्तकसांसद्दयवत् । नत्वत्र प्राच्यवत्, वृष्णिगोत्रत्व दुर्बलम्, येन तत्कल्प्यनिषेधः

सामान्यविषयत्वं स्यात् । इति प्राप्ते, स्तुत्युपायत्वेनोपात्तस्य वृष्णिगोत्रत्वस्य विधेयमाषपाकविशेषणत्वकल्पने प्रमाणाभावात् माषपाकमात्रविधानेन सर्वाधिकारः । ११.

मण्डन— ' माषपाकवचः स्तुतिः । '

शंकर— ' माषपाके विधिर्नास्ति । ' १४. ' सर्वेषां विधौ हु हः । ' १५. पक्षान्तरमिदमिति टिप्पणी ।

* परकृतिरूपार्थवादत्वं एककर्तृकोपाख्यानम् । बाल. पृ. १२.

* परकृतिरूपोपाख्यानार्थवादकल्प्यः विधिः यथा ' ताम्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ' इति । इन्द्रस्य उपाख्यानमिदम् । बाल. पृ.१२.

* परतन्त्रोपजीवीन्येतानि ( हविर्धाने औपयगुणकानि पैष्टिकानि कर्माणि ) यथाऽवस्थितं परतन्त्रमुपजीवितुमर्हन्ति, यथा पाशुकान् प्रधानान् अन्यकालमपि पशुपुरोडाशः उपजीवति, इति पूर्वपक्षः । भा. १२।१।७।१५.

* परतस्त्वं अप्रामाण्यस्य बाधकज्ञान-कारणदोषज्ञान-विसंवादज्ञानैर्ग्राह्यत्वम् । बाल. पृ. ६. * परतस्त्वं अप्रामाण्यस्य बाधकज्ञान-कारणदोष-विसंवादज्ञानाधीनत्वम् । अयाथार्थ्यस्याप्रामाण्यस्य च परतस्त्वम् । कु. १।१।५।५.

* परदाराभियोगः अनाचारः । वा.१।३।३।७ पृ.२०३.

* परनिमित्तकप्रायश्चित्तानुष्ठानम् ( परं परस्य-दर्शमानं निमित्तं यस्य प्रायश्चित्तस्य, तस्यानुष्ठानमित्यर्थः) अपच्छेदपौर्वापर्ये । भा. ६।५।१९।५४.

* परपक्षसाम्यापत्तिरेव नोपपत्तिः । तस्य च तव च उभयोरपि अन्येन पर्यनुयोगात् । वा. २।१।१।५ पृ. ४०४.

* परप्रकरणे अन्यधर्मविधेरन्याय्यत्वम् । वा. ३।३।८।१६ पृ. ८६४.

* परप्रतापनार्थो वाक्यप्रयोगो वक्तॄणाम् । वा. २।१।१४।४६ पृ. ४४८.

* परप्राबल्यन्यायः, पूर्वदौर्बल्यन्यायः, पौर्वापर्यन्यायः, पौर्वापर्यबलीयस्त्वन्यायः, अपच्छेदन्यायः इत्येकमेव । भा. ६।५।१९।५४. मीको. पृ. ४९५ ' अपच्छेदन्यायः ' इत्यत्र द्रष्टव्यम् ।

※ ' परमतमप्रतिषिद्धमनुमतं भवति ' इति न्यायात् इहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते, ' प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयः ' नाम । शांभा. २।४।१२ भाष्.

* परशब्दः यत्र प्रयुक्तः सन् तद्धर्मानतिदिशति इत्युक्तम् । भा. ७।४।२।८, * परशब्दः यत्र स्तोतुमपि न वर्तते । वा. १।४।१२।३१-१ पृ. ३५५. * परशब्दस्य परप्रवृत्तौ तद्धर्मो गम्यते । स यत्र विज्ञातो भवति, तथानूद्यते, यथा ' सिंहो देवदत्तः ' इति । यत्र अविज्ञातः, तत्र विधीयते, ' यथा अमी पिण्डाः सिंहाः क्रियन्ताम् ' इति । भा. ७।३।१।१.

* परशाखाविहितं स्वशाखाविहितेन बाध्यते, भयं अभ्यासबाधः ( यथा उदितहोमादि अनुदितहोमादिना ) । वा. ३।३।७।१४ पृ. ८६०.

* परसिद्धेन परो बोधनीयः इत्यस्मिन्नंशे विरोधाभावात् अप्रतिषिद्धत्वमुक्तम् ( मनसो वृत्तिपञ्चकस्य योगशास्त्रसिद्धस्य ) । न्यायनि. २।४।५।१२.

* परस्वत्वापादनं नाम दातृव्यापार एवासौ । वा. ३।४।१०।२८ पृ. ९६०, * परस्वत्वापादनात् प्राक् दानविधानं न पर्यवस्यति, इति प्रतिग्रहमाक्षिपति । ३।४।१०।२८ पृ. ९२९.

* परकीयैः पदार्थैरुत्कृष्यमाणैः न दाक्षिणाग्नौ पिष्टलेपफलीकरणहोमौ उत्कृष्येते ज्योतिष्टोमे । टुप्. ५।१।१५।२८. * परकीयस्य दानं नावकल्पते । भा. ३।२।१५।२७ पृ. ७९६. * परकीयस्य द्रव्यस्य क्रतौ विनियुक्तस्य अन्यार्थे विनियोगानौचित्यम् । सु. पृ. १२८.

* परमाणुः । अणोरनुपलम्भ इत्यचोद्यम् । यदेव भवदभिमतं त्र्यणुकमीक्षामहे तदेव परमाणुमाचक्ष्महे, तदवयवानुपलम्भात् तत्कल्पनाद्यनुपपत्तेश्च । दृश्यमानावयवस्य च स्थवीयसः तैरेव चोदितैः ( त्र्यणुकैः )

आरम्भसंभवात्, अमहतोऽपि च गुणादेश्चाक्षुषत्वात् न महिमगुणशालिता तद्धेतुः । तदेकार्थसमवायस्य वा तद्धेतुत्वे त्र्यणुकस्य अग्रहणप्रसङ्ग स्यात् । तदभावात् परस्परापेक्षोभयकारणत्वे वा त्र्यणुकस्य च गुणादेश्च एकैककारणशालिनो. अचाक्षुषता स्यात् । परस्परानपेक्ष कारणत्वे तु तृतीयस्यापि प्रकारस्य संभवो दुर्वार । भवतु वा स्वभावविशेष एव चाक्षुषत्वे हेतुरेक इति (चाक्षुषत्वे) न परिमाणतो नियमोपपत्ति. । कणिका पृ ११७ * परमाणव । 'मीमांसकैश्च नावश्यमिष्यन्ते परमाणव. । यद्वैनैषचक्षुषस्य मिथ्यात्व कल्पयेद्भवान् ॥ समूहरूप प्रत्यक्षमवस्थै परमाणुभि । योऽपह्नुते शरारस्यापि सोऽभाव ध्रुवतो वदेत् ॥ समूहपरमार्थत्वे स्थिते तत्सिद्धिहेतुका । यदि नामावगम्येत परमाण्वस्तिता पुन ॥' श्लोवा अनुमानपरिच्छेदे १८३-१८५. * परमाणुषु अव्याप्यवृत्ति. संयोग. अङ्गीक्रियते । तत्र देशस्य अवच्छेदकत्वसंभवेन अव्याप्यवृत्तित्वेऽस्यापि नानुपपत्ति इति तार्किका. । मभि. पृ ४९.

* परमाणुसमर्थनम् । सम्प्रति परमाणुसद्भाव साध्यते । अल्पपरिमाणतारतम्य क्वचिदवधिमत् परिमाणतारतम्यत्वात्, महत्परिमाणतारतम्यवत् । नित्यश्चासौ अवधिर्युक्त, अनित्यत्वे तस्यापि कारणवत्त्वेनानवस्थाप्रसङ्गात् । यश्चासौ अवधि. स परमाणुरिति । तथा त्र्यणुक प्रत्यक्षस्वपरिमाणादल्पतरपरिमाणकार्यद्रव्यारब्ध कार्यद्रव्यत्वात्, घटादिवत् । तथा द्व्यणुक स्वावयवारब्ध सावयववात्, घटादिवत् इति । ननु द्व्यणुकमपि कार्यद्रव्यारब्ध स्यात्, कार्यद्रव्यत्वात्, घटादिवत्, अतो न नित्यरूपपरमाणुसिद्धि । नैवम्, महत कार्यद्रव्यस्य कार्यद्रव्यारब्धत्वम् । तर्हि तदेव द्रव्य कारणवत् दृष्टमिति न द्व्यणुकस्य कारणवत्त्वमपि सिध्यति । तथापि यदि कार्यत्वादेव कारणवत्त्वमनुमीयेत, तर्हि कार्यत्वादेव कार्यद्रव्यारब्धत्वमप्यनुमीयताम्, क पक्षपातहेतु । नैवम्, द्व्यणुकस्यापि कार्यद्रव्यारब्धत्वे, तस्यापि कार्यद्रव्यारब्धत्वप्रसङ्गेन अनवस्था प्रसज्येत । अथ क्वचित् कार्यद्रव्यारब्धत्व नाश्रीयेत, तर्हि प्रथमस्य तथाभावे क प्रद्वेष ? इति स एव परमाणु । अनवस्थायामपि को दोष इति चेत्, अयमेव दोष, सर्षपावयविना स्वावयवपरम्पराया क्वचिदपरिनिष्ठितत्वादनन्तावयवप्रसङ्ग । भवत्विति चेत् तर्हि सर्षपमहीधरयोरपि तुल्यपरिमाणत्वप्रसङ्ग, अवयवाल्पत्वावयवमहत्त्वाभ्यां हि सर्वेषावयविना परिमाणाल्पत्वमहत्त्वव्यवस्था, अनन्तावयववत्त्वे तु सर्षपोऽप्यनन्तावयव. पर्वतोऽपि तथैवेति तुल्यपरिमाणत्वमपरिहार्यमेव, अतोऽनवस्थादिदोषप्रसङ्गेन द्व्यणुकस्य न कार्यद्रव्यारब्धत्व शक्यानुमानम् । ननु कार्यस्य कारणद्रव्यानुमानमप्यनवस्थाप्रसङ्गेनैव न घटते । नैवम्, अन्यतरव्याप्तिपरित्यागे प्रसक्ते कार्यद्रव्यारब्धत्वमेव परित्याज्यम्, न तु कारणवत्त्वमात्रव्याप्ति, तस्या अवश्यम्भावित्वात् । तथाहि, कार्यं कारणवदिति सामान्यव्याप्तिमङ्गीकृत्य तत्कारणमपि कार्यरूपमेवेति द्वितीयानुमानेन साध्यते, अत सामान्यानुमानविरोधे तदुपजीवक विशेषानुमान वै परित्याज्य स्यात्, न तूभयोरपि परित्याग । भवतु, द्व्यणुक परमाणुक चोभयमपि नाभ्युपेयताम्, आद्यमेव प्रत्यक्ष महिमगुणशाल्येवावधिर्भविष्यति, परमाणुसाधकानुमानमपि सिद्धसाधन भवतु । नैवम्, विकल्पासहत्वात् । तत् किं आद्यप्रत्यक्ष सावयवमनित्यम्, उत निरवयव नित्यम् ? यदि सावयवमनित्यम्, तदा तस्यावयववत्त्वेन कारणवत्त्वेन च द्रव्यान्तरानुमानप्रसङ्गोऽक्षत परमाणु । निरवयव नित्यमित्याश्रीयमाणे उत्तरोत्तरसावयवानित्यकार्यद्रव्यस्य कारणत्व न स्यात् । यतः घटादिकार्यद्रव्यकारण पिण्डादि सतत् सावयवमनित्य च दृष्टम्, निरवयवस्य चाकाशादेर्द्रव्यारम्भकत्वमपि न दृष्ट अतो निरवयवनित्येनाद्यप्रत्यक्षेणोत्तरोत्तरकार्यारम्भो न सिध्यति । अथ सत्यपि तथा दर्शने तदुत्तरकार्यद्रव्यजनकत्वान्निरवयव नित्यमाद्यप्रत्यक्ष कारणमिति कल्प्येत, तर्हि परमाणुरपि नित्यो निरवयव एव कारण भवतु, द्व्यणुकमपि नित्यद्रव्यकार्यं भवत्विति तुल्यचर्चम् । ननु अस्माक दृष्टविरुद्धनित्यनिरवयवस्य कार्यद्रव्यसमवायिकारणत्वे कल्प्यमानेऽपि उभयसंप्रतिपन्ने आद्यप्रत्यक्षे धर्ममात्रमेव कल्पनीयम्, तत्र तु द्व्यणुकपरमाणुरूपधर्मिकल्पन कृत्वा तत्र निरवयवनित्यकारणत्व धर्मकल्पनमपीति न तुल्यत्वम् । सत्यम्, दृष्टस्वरूपे

आगमप्रत्यक्षे न विरुद्धधर्मकल्पनमुचितम्, कल्पनाहानिप्रसङ्गात्। अदृष्टस्वरूपं परमाण्वादिकमेव कल्प्यते, अतः कल्पनाहानिपरिहारेणाकल्पकल्पनमेव न्याय्यम्, इतरथा पर्वतधूमस्य कारणत्वेनाधिककल्पने लाघवमस्तीत्यस्यानुमानोच्छेदप्रसङ्गः। अथ धूमजातीयस्याग्निसंबन्धस्यावगतत्वात् कल्पनाहानिप्रसङ्ग इति चेत्, तर्ह्यपि द्रव्यस्य सावयवानित्यस्वभावस्य क्लृप्तत्वात् तत्परित्यागे कल्पनाहानिः समैव। एवं नित्यानतीन्द्रियादिष्वपि लाघवादनुमानं न स्यात्। अत एवोक्तम् 'प्रमाणवत्कल्प्यानि सुबहूनि' इति। अतः कार्यद्रव्यं समवायिकारणवत् इत्येतावदेवानुमातव्यम्, न महत्कार्यद्रव्य कारणवत्, नापि कार्यद्रव्यारब्धमिति। किञ्च कार्यद्रव्यं कारणवदिति सामान्यव्याप्त्युपजीवनेन 'महत्कार्यद्रव्य कारणवत्', 'कारणमपि कार्यद्रव्यमेव दृष्टम्' इत्यादि निषेद्धव्यम्, तथा च सति महत्त्वादेर्व्यतिरेकाभावात् प्रयोजकत्वं न सम्पद्यते। तथाहि, कारणसामग्रीसमवधानेऽपि यस्य व्यतिरेकात् कार्यानुत्पादो दृष्टः, तस्यैव धर्मस्य प्रयोजकत्वम्, अत्र तु कार्यत्वे सत्यपि महत्त्वादिधर्माभावात् कारणस्याभावः क्वचिदपि न दृष्टः, अतः कारणवत्त्वे कार्यत्वमेव प्रयोजकम्। किञ्च कार्यद्रव्यं कार्यद्रव्यारब्धमितीयं व्याप्तिर्द्वयोरपि वादिनोर्व्यभिचारिणी, तव तु आद्यप्रत्यक्षे उत्तरकार्यारम्भके व्यभिचारः, मम तु परममहत्कार्यात् त्र्यणुकात् द्व्यणुकसिद्धिः, द्व्यणुककार्यात् परमाणुसिद्धिः। ननु परमाणवस्त्र्यणुकमेवारभन्ताम्, किमन्तर्गडुना द्व्यणुकारम्भेण? नैवम्, महतः कार्यद्रव्यस्य अल्पपरिमाणकार्यद्रव्यान्तरारब्धत्व दृष्टमिति तदनुसारेण त्र्यणुकस्य कार्यद्रव्यमेव कारणमनुमेयम्, विशेषव्याप्तेः परित्यागायोगात्, परमाणवश्च नित्या इति न तैस्त्र्यणुकारम्भः। ननु अनित्याः परमाणवः मूर्तत्वात्, घटादिवत्, तथा सावयवाः परमाणवः मूर्तत्वात् घटादिवत्, तथा अनित्याः सावयवाः परमाणवः सर्वदिक्संबन्धत्वात्, घटादिवत् इत्येभिर्निराकृताः परमाणवः कथं सिध्यन्ति? सिध्यन्त्येव तैरेव हेतुभिः। एतेषां हेतूनां पक्षधर्मत्वं विना हि न हेतुत्वमिति एतेषां पक्षवृत्तिताऽऽदिसाधकप्रमाणैरेव परमाणवोऽपि सिद्धा भवन्ति, अन्यथैतेषां हेतुत्वमेव न स्यादिति भावः। तथाहि, तत्र पक्षीकृताः परमाणवः सिद्धा असिद्धा वा? यदि सिद्धाः, तदा धर्मिग्राहकप्रमाणबाधात् बाधितविषया हेतवः। अथासिद्धाः तर्हि आश्रयासिद्धत्वादेव न साध्यसाधकाः। अथ प्रसङ्गापादनमुखेन हेतवः साध्यं साधयन्ति, तर्हि पक्षभूतपरमाण्वङ्गीकारेण चेत् प्रसङ्गः, तथापि धर्मिग्राहकबाध एव। अनङ्गीकारेणेति चेत् तदाऽपि पूर्वोक्ताश्रयासिद्धितादवस्थ्यमेव। प्रसङ्गापादनमपि नानुमानविलक्षणं प्रमाणम्, किन्तु अनुमानस्यैव प्रयोगभेदमात्रम्, साधनदूषणलक्षणान्यपि तान्येवेति न विधाऽन्तरं प्रसङ्गापादनमिति सर्वमनुपपन्नम्। अयं तु नित्यकारणवादः ब्रह्मकारणत्वपक्षे प्रकृतिकारणत्वपक्षे च तुल्यः। अतः परमाणुकारणवादे ये दोषास्ते सर्वेषामपि समाना इत्युपरम्यते। प्रवि. पृ. ४२–४६.

* परमात्मा. 'तत्सवितुर्वरेण्यम्' इति सवितृपिण्डान्तस्थछन्दोवाच्यब्रह्माख्यपरमात्माभिधायिन्या गायत्र्या अभिमन्त्र्यमाणेन वारिणा इज्यते। सु. पृ. १०१०. * परमात्मा स्वेच्छया परमार्थत एव व्योमादि जनयति। 'इन्द्रो मायाभिः' इत्यादिश्रुतिस्तु प्रपञ्चस्य अनित्यत्वं बोधयति, न मिथ्यात्वादि इति केचित्। मणि. पृ. ५०. * 'तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः। इज्यते वारिणा नित्यं यः स ब्रह्मेति चोदितः॥'। वा. ३।१।७।१३ पृ. ७०२, * 'शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना॥' ३।१।७।१३ पृ. ७०३. * परमात्मनः एव वेदान् स्वार्थप्रतिपादने नियन्तुं वेदाख्यक्षेत्राधिष्ठातृत्वेन क्षेत्रज्ञव्यपदेशभाक्त्वात् नित्यज्ञानत्वोपपत्तिः। सु. पृ. १०११, * परमात्मनः कर्मजन्यफलोपभोगार्थं देहानधिष्ठानेऽपि कार्यकारणप्रतिनियमसिद्ध्यै सर्वस्य जगतः चेतनाधिष्ठानकत्वात्, परमात्मनोऽपि 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।' इति देहाख्यक्षेत्रे शतृन्याख्यक्षेत्रज्ञत्वस्मृतेः देहेषु अधिष्ठातृत्वोपपत्तिः। पृ. १००८, * परमात्मनः महाभूताधिष्ठितस्यैव कालेच्छादिमत्त्वम्. 'पञ्चधातून् स्वयं षष्ठ आदत्ते युगपत् प्रभुः।' इत्यादिस्मृत्यालोचनेन अवगम्यते। पृ. १००९.

* परमात्मप्राप्त्यवस्था । अपुनरावृत्त्यात्मकपरमात्मप्राप्त्यवस्थापरवचनम् ' स खल्वेव वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते ' इति, न तस्यार्थवादत्वम् । वा. १।३।८।२७ पृ. २८८.

* परमापूर्वं अङ्गापूर्वं प्रधानापूर्वं समुदायापूर्वं इति अपूर्वावान्तरभेदः । वि. २।१।२, * परमापूर्वं साक्षात् स्वर्गादिफलजनकम् । इदमेव फलापूर्वमित्युच्यते। २।१।२.

* परमापूर्वप्रयुक्तं न भवति अग्नीषोमीयप्राग्भागवर्तिपदार्थधर्मस्य उपांशुत्वम्, किन्तु तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् । भा. ९।१।६।२०-२५.

* परमेश्वरः । अचिन्त्यशक्तिकपरमेश्वरकर्तृकसृष्टिप्रलयादिकमप्यस्ति इति वार्तिककारे. वैदिकशिरोमणिभि प्रदर्शितम् । अनीश्वरवादिनस्तु प्राभाकरादयो वैदिकैरनादरणीयाः । कु. १।२।१।१८.

* परनैष्ठि साम अनूकम् । बाल. पृ ७९.

* परम्परातिदेशाम् लिङ्गातिदेश प्रबल. । लिङ्गातिदेशादपि नामातिदेश. प्रबल, चोदनातिदेश स्यात् । तेन कौण्डपायिनामयनगताग्निहोत्रश्रपण प्राजहिते एव न गार्हपत्ये । वि. १२।१।६

* परस्तादनुपङ्गेण विधिर्यथा ' अथैष ज्योति. ' ' अथैष विश्वज्योति. ' ' अथैष सर्वज्योति. ' ' एतेन सहस्रदक्षिणेन यजेत ' इति । अत्र ' एतेन ' इत्यादि पूर्ववाक्ययोरपि अनुषज्यते । बाल पृ २८

* परस्तादनुषङ्गमन्त्र ' चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसो. सूर्यस्य रश्मिभिः ।' इति । बाल. पृ ६०.

* परस्परैकवाक्यतासामर्थ्यान्मन्त्रात् लिङ्गात् अर्थाभिधानशक्तिरूप लिङ्ग बलीय लिङ्गयोर्विरोधे। ' स्योन ते सदन कृणोमि ' इत्यत्र । वा ३।३।७।१४ पृ. ८४०.

* ' परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकताऽपि विरुद्धानामुक्तिमात्रविरोधत ॥ ' इति न्याय. । न च क्रमाक्रमाभ्यामन्य प्रकार समस्ति, परस्परविरोधे हीति न्यायेन व्याघातस्योद्भटत्वादिति तत्रैव ( सर्वदर्शनसंग्रहे ) बौद्धे । साहस्री ६९५.

* परस्मैपदं विनियोक्त्री श्रुतिर्यथा ' यदि कामयेत वर्षुक. पर्जन्यः स्यादिति. सदो मिनुयात् ' अत्र परस्मैपदश्रुत्या अध्वर्युकर्तृकत्व परार्थ. श्रूयते, तथा श्रुत्या तत्सामानाधिकरण्य कामश्रवणेनाध्यते । बाल. पृ. ४१.

* परस्वम् । ' ईशानाय परस्वत आलभेत ' इत्यत्र परस्वच्छब्देन आरण्या. पशुविशेषा उच्यन्ते । वि ५।४।१३.

* परस्वदादौ पर्यग्निकरणान्ताङ्गरीतिविधानेन वहुसराङ्गप्रतिषेध ( अश्वमेधे ) । भा. ९।४।१३।५१-५५.

* ' पराक् बहिष्पवमानेन स्तुवन्ति ' अत्र पराक्शब्देन पाठक्रमो बोध्यते, तेनाभ्यासप्रतिषेध. । वि. १०।५।७, * पराचीभिः अनुक्रमेणाम्नाताभिः ऋग्भिः । ११४।३.

* पराक्शब्दः अनभ्यासे ' पराची. सामिधेनीरन्वाह ' । अनभ्यस्ता सामिधेनीरन्वाहेति । ( पूर्वपक्षे इत्युक्तम् ) । भा १०।५।१०।४५। दिग्देशकालवचनो हि पराक्शब्दो भवति । यथा ' पराङ्गमन्यावेशात् पुनरावर्त्स्यति ' इति कालसंबोधे पञ्चमी, नापादाने । १०।५।१०।४७

* पराजयते ग्लानिजनकक्रिया अर्थ. । मणि पृ.१४०

* परामर्शो यदि पक्षविशेष्यक तदा वह्निवैशिष्ट्यैव अनुमिति । हेतुविशेष्यके तु साध्यविशेषिका इति मणिकृत् ( गङ्गेश )। उभयविधेनापि पक्षविशेष्यिकैव इति नव्या । अत्र धूमलिङ्गकपर्वतपक्षकवह्निविधेयकानुमिति प्रति धूमपरामर्शस्य हेतुत्वम् । धूमलिङ्गकत्व व्याप्यवह्नित्वोत्तरत्वसंबन्धेन धूमज्ञानवत्त्वम् । अयमहितोत्तरत्व च धूमज्ञानाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वरूपम् । तेन अपेक्षाबुद्ध्यात्मकपरामर्शसंग्रह । एव तत्तत्परामर्शाना कारणतेति । ननु सर्वेषु परामर्शेषु अनुमितिकारणताऽवच्छेदकतया परामर्शत्व जाति किमिति नाभ्युपेयते । चाक्षुषत्वादिना

संकर इति चेत्, तर्हि तस्या जातौ मानसत्वव्याप्यता अङ्गीकार्या। चाक्षुषपरामर्शानन्तरं जायमानायामनुमितौ व्यभिचारवारणस्य मध्ये मानसपरामर्शकल्पनेन सम्भवात्। न च चाक्षुषसामग्र्याः मानसप्रतिबन्धकत्वेन तदानीं मानसोत्पादासम्भव इति वाच्यम्। फलबलेन चक्षुर्योगाभावेन चाक्षुषसामग्र्यभावस्य सत्त्वात्।

ननु परामर्शस्य स्मृतित्वव्याप्यम्। चाक्षुषादिपरामर्शानन्तरोत्पद्यमानानुमितिस्थले मध्यतः इव स्मरणरूपपरामर्शकल्पनान्न क्षतिः। एवं च स्मरणस्य संशयात्मकत्वाभावेन संशयानन्तरं अनुमित्युत्पादनासंभवात्। विशेषतः परामर्शकारणतायां निश्चयत्वस्य अप्रवेशेन लाघवं इति चेन्। चाक्षुषादिपरामर्शोत्तरं उत्पद्यमानानुमितिस्थले स्मरणात्मकपरामर्शकल्पने तज्जनकसंस्कारकल्पने च अतिगौरवापत्तेः। अनुमितिजनकताऽवच्छेदकजातेः संशयात्मकमानसव्याप्यत्वकल्पनेन संशयात्मकपरामर्शादनुमित्युत्पादनासंभवेन विशेषहेतुतायां निश्चयत्वाप्रवेशस्य तुल्यत्वात्। समूहालम्बनात्मकपरामर्शोत्तरं एकानुमितौ तद्व्याप्यवत्तापरामर्शान्तरकल्पनेन समूहालम्बनात्मकपरामर्शे अनुमितिजनकताऽवच्छेदकजातिर्न कल्प्यते। अतो न तत्र द्वितीयाऽनुमितिः। तस्मात् परामर्शत्वं जातिः इति चेत्।

अत्र केचित्, तत्कल्पनेन इष्टहेतुताज्ञानादौ प्रवृत्तिजनकतावच्छेदकजात्यस्यापि मानसत्वव्याप्यत्वेन सिद्धया इच्छाजनकतादिपरामर्शविशेषे प्रवृत्तिजनकतावच्छेदकजात्येन संकरप्रसङ्गात्। न च प्रवृत्तिजनकताऽवच्छेदकजात्यं चाक्षुषत्वव्याप्यत्व इति वाच्यम्। परामर्शत्वस्य चाक्षुषत्वादिव्याप्यत्वेन विनिगमनाविरहात्। अतो न परामर्शत्वं जातिरित्याहुः। अत्र गौतमीयाः, वह्न्यनुमितौ वह्निव्याप्यालोकवान् पर्वतः' इत्यादिविशिष्टपरामर्शस्यैव हेतुत्वम्, न आलोको वह्निव्याप्यः, आलोकवान् पर्वतः इति ज्ञानद्वयस्य गौरवात्। यत्र च ज्ञानद्वयादनुमितिः, तत्र विशिष्टज्ञानकल्पनात् न व्यभिचार इत्याहुः। मीमांसकास्तु, वह्निव्याप्यधूमवान् पर्वतः इति विशिष्टपरामर्शस्य हेतुत्वपक्षेऽपि व्याप्त्यंशे निश्चयत्वं निवेश्य धूमांशेऽपि निश्चयत्वं निवेशनीयम्, तथा च निश्चयत्वस्य तदभावाप्रकारकत्वरूपबहुतरपदार्थघटितत्वेन तेषां परस्परविशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावबाहुल्यम्। ज्ञानद्वयवादिनये ज्ञानस्य भिन्नतया निश्चयत्वप्रवेशेऽपि न मिथो विनिगमनाविरहः। तत्र लाघवं इत्याहुः। न च परामर्शवादिनये व्याप्त्यवच्छिन्ना या हेतुनिष्ठप्रकारता तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन हेतुत्वकल्पनेन व्याप्त्यंशे निश्चयत्वानिवेशेन नोपदर्शितं गौरवं इति वाच्यम्। वह्निव्याप्यत्वे निश्चयत्वानिवेशे वह्निव्याप्यो धूम इति विशेषणताऽवच्छेदकप्रकारकनिर्णयकाले 'व्याप्यभावप्रकारकं ज्ञानं जायताम्' इतीच्छासत्त्वे व्याप्त्यंशे संशयात्मकतयाविधविशिष्टवैशिष्ट्यबोधोत्पत्तौ बाधकाभावः। तथा च तादृशज्ञाने व्याप्त्यंशे निश्चयत्वनिवेशेन गौरवतादवस्थ्यात्। न च तादृशज्ञानस्य आहार्यत्वेन न तस्मादनुमित्यापत्तिः। आहार्यपरामर्शात् अनुमित्यापत्तिवारणार्थं अनाहार्यत्वनिवेशस्य आवश्यकत्वात् इति वाच्यम्। अनुमितिजनकताऽवच्छेदककोटौ अनाहार्यत्वस्य अनुगतस्य अशक्यनिर्वचनत्वेन तद्व्यक्तिविश्रान्ततया तथाविधतद्व्यक्तित्वावच्छिन्नभेदकूटस्य अनुमितिजनकताऽवच्छेदककोटौ निवेशमपेक्ष्य व्याप्त्यंशे निश्चयत्वस्यैव तर्कसहत्वात्। तथा च गौरव तदवस्थं इति दिक्। मणि. पृ. १७–१९.

* परार्थमनुमानं प्रतिज्ञाद्यवयवप्रयोगेण परस्य साध्यज्ञानजनकम्। मणि. पृ. ३१. * परार्थमनुमान सामान्यतोदृष्ट विशेषतोदृष्ट चेति द्विविधम्। बाल. पृ. ८.

परार्थान्येको यजमानगणे। (१२।४।११।३१) इति न्यायेन औदुम्बरीसंमाननम् यस्य कस्य चित् अपि तु कृतमपि कर्म सर्वेषां फलिष्यति। पूर्वपक्षः। ('परार्थान्वेको इति क्वचित् पाठः।) सोम. ६।६।८.

परार्थान्येको यजमानगणे। १२।४।११।३१।

सत्रे अहीने वा यजमानानां गणे सति यानि परार्थानि कर्माणि कृत्वर्थानि शुक्लान्वारम्भण औदुम्बरीसंमाननं

इत्यादीनि, तानि एक एव यजमानः कुर्यात्, न सर्वे कुर्युः । इति सिद्धान्तः । के.

'परार्थान्येकेन क्रियेरन् ।' ( सत्या श्रौ. १।१।४२ ) । गार्हपत्योपस्थानं आयादुपकारकं कर्मापि प्रतिपत्ति आनन्त्ये । 'परार्थान्येकेन क्रियेरन्' इति न प्रवर्तते । तस्य न्यायस्य परार्थकर्मविषयत्वात् । वैजयन्ती, १।७।१८. • 'परार्थान्येकेन क्रियेरन् ।' 'पत्नी यदि नान्वास्ते सर्वे पृथिव्याम्' । ( सत्या. श्रौ. १।७।१०२ ) । सर्वप्रसङ्गं प्रतिपत्ति आवृत्ति-निरासार्थम् । 'परार्थान्येकेन क्रियेरन्' इति न्यायस्य परार्थे एकसंस्कारे प्रवृत्तिः इति मा भूत् । अपि तर्हि ( किन्तु ) स्वार्थे यन भवति तत्रूपे चास्त्वार्थेऽपि कर्मणि । तथा च एकवैव पत्न्या सिध्यति नियमम् । वैजयन्ती.

• 'परार्थे त्वर्थ(र्था)सामान्यम्' (९।२।१४।४३) इति ( उपक्रम्य 'क्रियेरन् वा' इति ) वक्ष्यति, नियामकोऽपि तादर्थ्येन अभ्युदितेष्ट्या दधिशृतयोः तदुपकारमात्र-दर्शनात् प्रणीताधर्मप्राप्तिमेवतीति । वा. ३।७।१।८.

परार्थे त्वर्थासामान्यं संस्कारस्य तदर्थत्वात् । ९।२।१४।४३॥

'वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति । स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्, ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति प्रजापत्येन अभ्युदयेष्टिः आम्नाता । तत्र शृते दधनि च प्रणीताधर्माः कर्तव्या न वेति विचारे पूर्वपक्षमाह । तुशब्दः कर्तव्यताभावसूचकः । परार्थे चरुणा सह प्रदानार्थे, शृते दधनि न प्रणीताधर्मा न कर्तव्याः । दधिशृतयोः प्रणीताभिः सह अर्थासामान्य अर्थसामान्याभावो यतः । संस्कारस्य उत्पवनादेः तदर्थ-त्वात् श्रपणार्थत्वात् । प्रणीताधर्माः श्रपणार्थाः । दधिशृते तु न श्रपणार्थे किन्तु प्रदानार्थे, तस्मात् तयोः प्रणीता-धर्मा उत्पवनादयो न कर्तव्या इति पूर्वः पक्षः । अत्र क्वचित् 'परार्थेन त्वर्थ' इति तृतीयान्तः पाठः । क्वचित् 'परार्थे न त्वर्थे' इति सप्तम्यन्तः, यथा आनन्दाश्रमीये सूत्रपाठे । आनन्दाश्रमीये एव तु ३।७।१।८ सूत्रीये वार्तिके "'परार्थे त्वर्थसामान्यम्' इति वक्ष्यति" इति मुद्रितम् । तत्र नञ् नास्ति । चौखम्बान्यायसुधायामेतदेव वार्तिकम् "'परार्थे त्वर्थासामान्यम्' इति पूर्वपक्षमुपक्रम्य वक्ष्यति इति उपक्रमार्थेऽतिकरणाभ्युपगमेन व्याख्येयम्" इति ग्रन्थेन विवृतम् । सूत्रे तुशब्दस्य विद्यमानत्वात् न-शब्दस्य पृथगपेक्षा नास्त्येव । अथ 'अर्थासामान्यम्' इति सुधास्थ पाठ एव स्वीकार्यः तथा च तत् पदं भाष्ये 'नहि प्रणीताना दध्नश्च अर्थसामान्यं किञ्चिदस्ति' इति विवृतम् । सोऽयं भाष्यानुसारी सुधास्थः पाठः स्वीकृतो-ऽस्माभिरत्र । अस्मदीयमीमांसादर्शने स्वीकृतः पाठस्तु परिवर्जनीयः ।

क्रियेरन् वाऽर्थनिर्वृत्तेः । ४४ ॥

पूर्वपक्षं वाशब्दो व्यावर्तयति । दधिशृतयोः प्रणीता-धर्मा उत्पवनादयः क्रियेरन् कर्तव्याः । अर्थनिर्वृत्तेः अर्थस्य चरुश्रपणस्य निर्वृत्तिः निष्पन्नत्वात् श्रपणनिष्पत्त्य-वगमात् । 'शृते चरु दधन् चरुम्' इत्युक्त्या ज्ञायते एतत् शृते दधनि च चरोः श्रपणमिति । चरौ समनेतव्यात् तयोः प्रदान स्यादाम । न तु तयोर्विधानं प्रदानार्थं किन्तु श्रपणार्थमेव । तस्मात् श्रपणार्थासु प्रणीतासु ये धर्मा उत्पवनादयस्ते दधिशृतयोः कर्तव्याः एवेति सिद्धान्त । के.

• परार्थानुमाने न पञ्चावयवाः किन्तु त्रय एव । 'उदाहरणपर्यन्ता यद्वोदाहरणादिकम्' । बाल. पृ. ८.

• परार्थत्वं शेषलक्षणम् । 'यस्तु अत्यन्तं परार्थः, त वय शेष इति ब्रूमः' । भा. ३।१।२।२ पृ. ६५९ • परार्थत्वाद्गुणानाम् । ( १।४।१०। १६ ) पूर्वेण एकमूत्रत्वमपि संभवति ( तथा च 'मिथश्चानर्थसंबन्धः परार्थत्वाद्गुणानाम्' इत्येकसूत्रत्वेन व्याख्येयम् ) । वा. १।४।१०।१६.

• परावपनं उद्वस्यत् वर्गे अवदृतस्य हविषः प्रक्षेपः । मोम. ११।२।७.

* परिः समन्तार्थः । 'औदुम्बरी परिवेष्टयितव्या' इत्यत्र परिः समन्तार्थः सर्वतो वेष्टनं ब्रूते । सु. पृ. १६०.

꣸ 'परिकल्पितोऽपि मरणाय भवेदुरगो यथा न तु नभो मलिनम्' । जीवकल्पितत्वपक्षेऽपि साक्षात्( जीवप्रेरकत्वादि )धर्मविशिष्टतयैव कल्पनेन तस्य ( ईश्वरस्य ) भ्रमविषयत्वाद्युपपत्तिः, 'परिकल्पितोऽपि०' इति न्यायात् । अद्वैत, प्रतिकूलतर्कनिराकरणे पृ. ५०४.

* परिक्रयः अन्यदीये कर्मणि स्वसंकर्तृत्वापादनसामर्थ्यात्मकः । सु. ३।८।१ पृ. ५३. * परिक्रयः अन्वाहार्यः इह ( सत्रे ) चोदकेन प्राप्तः सन् न कर्तव्यः । भृताश्चेते ऋत्विजः सोमार्थेन परिक्रयेण । तस्मात् ( सोमाङ्गदीक्षणीयादिषु ) अन्वाहार्यो निवर्तते । भा. १२।१।१६।३३. * परिक्रयः ऋत्विजा याचमानं कर्म । वि. ३।८।१. * परिक्रयः ऋत्विजां सत्रेषु नास्ति । भा. १०।२।११।३६–३९ * परिक्रयः ऋत्विजा स्वामिकर्म । ३।८।१. मीको. पृ. १२५२ 'ऋत्विजा परिक्रयः०' इत्यत्र द्रष्टव्यम् । * परिक्रयः ऋत्विक्कर्मापि, यत्र वचन भवति, यथा 'य एतामिष्टका उपदध्यात् स त्रीन् वरान् दद्यात्' इति ( स्वयमातृण्णाविषयकमिदम् ) । भा. ३।८।१।२.

꣸ परिक्रयश्च तादर्थ्यात् । १०।२।११।३६ ॥

चशब्दो वरणदक्षिणार्थः । सत्रे वरणवत् परिक्रयोऽपि न कर्तव्यः, दक्षिणा न देया । तादर्थ्यात् सर्वेषामेव स्वार्थत्वात् । सत्रे हि सर्वे यजमानाः, तत्र कः कस्मै किमर्थं दक्षिणां दास्यति । तस्मात् सत्रे न परिक्रय इति सिद्धान्तः ।

प्रतिषेधश्च कर्मवत् । ३७ ॥

सत्रे गवादयः प्रतिषिध्यन्ते 'नात्र गौर्दीयते, न वासो न हिरण्यम्' इति । प्रतिषेधश्च प्राप्तौ सत्यामुपपद्यते । कर्मवत् इति मतुबर्थे न वतिः । तथा च सत्रे यस्मात् केषां चित् दक्षिणात्वेन प्रतिषेधः, तस्मात् कर्मवत् प्रतिषिद्धेतरदक्षिणादानरूपकर्मविशिष्टं सत्रं भवति इति मन्यामहे । अतश्च सत्रे परिक्रयः कर्तव्य इति पूर्वः पक्षः ।

स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् । ३८ ॥

वाशब्दः पूर्वपक्षनिरासार्थः । सत्रप्रकरणे योऽयं गवादिदानस्य प्रतिषेधः, स प्रासर्पिकस्य स्यात् । प्रासर्पिकेभ्योऽपि शास्त्रीयदानस्य प्रतिषेधोऽयम् । प्रासर्पिकदानस्य तु धर्ममात्रत्वात् । धर्मार्थं तत् । तस्मात् तत्प्रतिषेधबलेन सत्रे परिक्रयसिद्धिर्न भवितुमर्हति । प्रसर्पकाः नाम प्रसर्पन्ति यज्ञमण्डपेषु तत्रतत्र । यज्ञे अर्थसंशये निर्णायकाः । यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टा ब्राह्मणाः चित्प्रभृतयः । प्रसर्पकेभ्यो दीयते इति प्रासर्पिकम् । ( ज्योत्स्ना १०।२।१० ) । सिद्धान्त्येकदेशिना इदमुक्तम् । मुख्यसिद्धान्ती तु उत्तरसूत्रे वक्ष्यति ।

न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् । ३९ ॥

'नात्र गौर्दीयते, न वासः, न हिरण्यम्' इति प्रतिषेधः न प्रासर्पिकस्य दानस्य । दक्षिणाशब्दात् । 'अदक्षिणानि सत्राणीत्याहुः, न ह्यत्र गौर्दीयते, न वासो न हिरण्यम्' इति । दक्षिणाशब्दश्च परिक्रयार्थो भवति । प्रसर्पकेभ्यो दानं तु न दक्षिणा नाम । तस्मात् परिक्रयार्थस्यैव दानस्य प्रतिषेधोऽयं न प्रासर्पिकस्य । तस्मात् नित्यप्राप्तस्यैव अनुवादोऽयं 'न सत्रेषु दक्षिणा' इति । तस्मात् सत्रे नास्ति परिक्रयः इति सिद्धान्तः । के.

* परिक्रयश्च तादर्थ्यात् । यदि च अदृष्टमात्रविकल्पं वरणभरणाभ्यां कल्प्येत, ततः सत्रेऽपि यजमानेषु तत् आधातव्यं तद्विशेषाश्च अध्वर्य्वादयो दीक्षावाक्येऽनूद्यन्ते इति वरणभरणे कर्तव्ये स्याताम्, तत्र 'वरणमृत्विजा०' 'परिक्रयश्च०' इति च विरुध्यते । वा. ३।७।१६।३३ पृ. १०९८. * परिक्रयो ज्योतिष्टोमे द्वादशशतम् ( ११२ ), दर्शपूर्णमासयोः अन्वाहार्यः । स च परिक्रयः स्वामिकर्म । वचनात्तु ऋत्विक्कर्मापि यथा 'य एतामिष्टकामुपदध्यात्, स त्रीन् वरान् ( चतुर्वर्षाः गाः ) दद्यात्' इति । भा. ३।८।१।१–२. * परिक्रयः नियते काले भृतिदानेन भृतकदानेन वा मनुष्यस्य शकटादेर्वा पदार्थस्य स्वीकारः । के. * चिकीर्षितं कुर्वाणस्य सहायान् उपाददानस्य अयं

विशेष उच्यते परिक्रय । भा १०।६।१७।६७, ● नहि अर्हति दाने परिक्रय । १०।२।१७।४८, ● पुरुषानतिप्रकारेषु बहुषु प्राप्तेषु परिक्रयो नियत । तस्मात् परिक्रयेण आनते सर्वे पदार्था कर्तव्या । ३।७।८।२० ● परिक्रयेण अदानस्य ऋत्विक्कर्मत्व यदि तावत् शास्त्रीयेण लभ्यते, ततोऽन्येन यजमानस्य कर्तव्यम्। अथ न लभ्यते, ततो लौकिक उपाय इति। भा ३।८।१।२, ● परिक्रयस्य एतद्रूप ( यत् ) ऋत्विजामुत्साहकारित्वम्। ३।४।१७।४९

● परिक्रयार्थं ऋत्विजामुद्वत्सर्गाये दक्षिणादानम्, तस्य समानत्वात् । भा १०।२।१२।४०–४१, ● परिक्रयार्थं च भर्त्रा मूल्येन सह पणितव्यम्। यथा लोके कायवाहप्रभृतिभ्यो दीयते, तत्र कायवाहा स्वामिना सह पणन्ते। तेभ्य स्वामी विभज्य निर्दिशति इद तुभ्य मिद तुभ्यमिति। १०।३।१२।५१, ● परिक्रयार्थे दान ( यद्वे ), न धर्ममात्रम्। १०।३।१२।५१ ● परिक्रयार्थे वा कर्मसंयोगात् । ( १०।३।८।२३ ) इति दशमे अन्वाहार्यद्वादशशतादिदान कर्मसंयुक्तेभ्योऽभिधानात् इति वक्ष्यति । वा ३।७।८।२०, ● परिक्रयार्था दक्षिणा अध्वर्य्वादीनां कर्मसंयोगात् । ३।१।६।१२ पृ ६९७

● परिक्रयात्मकस्य वरदानस्य स्तनमात्रूण्योपधाने आर्त्विजत्व द्यम्। सु ३।८।१ पृ ९४

● परिक्रयादिना करणत् न कर्तृत्वात् प्रच्यवते । वा ३।७।८।१९

● परिक्रयण नियतकाल भृत्या स्वीकरणम् । रहस्य पृ १०९

● दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति । भा १०।२।८।२७, ● परिक्रीतानां ऋत्विजां संख्याविशेषनियम कर्तव्यकर्मानुसारेण । ३।७।९।२१–२४

● परिगृहीतद्रव्यापचारे प्रतिनिधित्वेन तत्सदृशस्यैवोपादानम्, न तु वैकल्पिकद्रव्यान्तरस्य। वृ ६।३। १३।३८–३० ● परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्व यथा व्रीह्यपचारे यवानाम्। ६।३।१२ ' वैकल्पिकन्याय ' इत्यत्र द्रष्टव्यम्।

● परिधत्ते। ननु कौपीनप्रच्छादने परिधत्ते इति भवति। नैतदेवम्। उपरि वाससोऽपि कार्ये परिधत्ते इति भवति। यथा कम्बल परिधत्ते, गौरव परिधत्ते इति। भा १०।४।७।१४

● परिपूर्णं पद पदान्तरेणान्वेति इति न्यायेन प्रथमावगतयागादिव्युत्पत्तिवैगया भावनाविशेष्यत्वोपस्थितत्वात् तन्नैव विशेषणज्ञानरूपलाभसंभावितत्वेन स्वर्गादिपदार्थान्तराणामपि प्रकारतया अन्वयव्युत्पत्तिकल्पना, न तु अयत्न, अयत्नतमुख्यविशेष्यस्य अनुपस्थितत्वेन विशेषणज्ञानाभावात् । कौ २।१।२।५ पृ ३९, ● परिपूर्णं पद० इति न्यायेन प्राजापत्य इत्येकवचनान्तर्गतस्य सर्वनाम्न दध्यादिपदान्वयव्यतिरेकेण एकदेशान्वयाप्रतीते, तदन्वयस्य च ' परिपूर्णं० ' इति न्यायेन तद्धितस्यैव पश्चादेकशेषकरणात् यागभेदोपपत्ति । १।४।३।३ पृ १७८, ● परिपूर्ण० इति न्यायेन सोमाक्षिप्तया भावनापदान्वये तस्य परिपूर्णत्वापेक्षणात् । तत्र पूर्वमेव यागादे अङ्गत्वावगते तदुत्तरभाविन सोमाङ्गत्वस्य दौर्बल्यम् । २।१।२।९ पृ १०० ● प्राथमिकभावनाऽन्वये विद्यमाना पद्भुति फलान्वये निर्णायिका लाक्षणिकत्वेऽपि, यागकरणत्वस्य सोमकरणत्वान्वयात् प्राक् भावनायामन्वितत्वेन तदन्वयस्य प्राप्त्यात्। अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन पश्चादुपस्थापितभावनाया सोमस्यापि अन्वयानुपपत्ते परिपूर्ण० इति न्यायात्। भाट्ट २।१।२ पृ ८५ ● न च एव भावनाया साध्यसाधनेतिकर्तव्यतान्वयेऽपि समानप्रत्ययोपादानश्रुत्या शुद्धायामेव तस्या विध्यन्वयात् उत्तरकालीनस्य तदन्वयस्य विधिस्पर्शाभावेन प्रहैकत्ववत् अविवक्षाऽऽपत्ति । अतोऽन्यथान्वयोत्तर तद्विशिष्टाया भावनायां विध्यन्वयाभ्युपगमे तु परिपूर्णं पद० इति न्यायभङ्गापत्ति इति वाच्यम्। शुद्धस्य यत्नस्य विधिविषयत्वानुपपत्ते । कौ २।१।२।५ पृ ४४

● परिसमाप्ति प्रयूच तृचे गेयस्य साम्न । भा ९।२।३।१४–२०

¶ परिहृत्यापवादविषयं तत उत्सर्गोऽभिनिविशते इति न्यायः । प्रतिलक्ष्यं भिन्नानां सर्वेषां लक्षणानां तन्त्रेणोच्चारणम् 'इको यणचि' इति, तत्रश्च इकामपि तात्पर्यतो निमित्तत्वप्रतिपादनम् । न चैवं श्रीश. इत्यादौ यण्प्रसङ्गः, व्यक्तिपक्षे 'विप्रतिषेधे परमेव' इति नियमबलेन तद्व्यक्तिविषयकशास्त्रस्यैव विरहकल्पनात् । एवमपवादविषयेऽपि सुधियो इत्यादौ बोध्यम् । परिह्वत्यापवादविषयं० इति न्यायात् । शब्दकौस्तुभः इयवाद्

* परिफरसन्धः । निर्वीतं के चित् परिकरसन्ध सारन्ति । स च सर्वकर्मसु अध्यमताकरत्वात् प्राप्तः । इति पूर्वपक्षे । पा. १।४।१।२.

* 'परिग्रहपरित्यागाविच्छानिच्छाफले स्पिते ।' पौरुषेयेषु वाक्येषु परिग्रहापरिग्रहौ फलत्वेन प्रतातौ । शा. ३।१।७।१२ पृ. ७००.

* परिग्राहः वेदेः दर्शादौ 'स्फ्येन वेदिं परिग्रिष्य परिगृह्णाति' इति विहितः । वि. १०।१।१.

* परिचक्षा निन्दा । सोम. ७।३।१०.

* परिचराः नाम ग्रन्थविशेषाः । 'अरुणपराशरा नाम शाखिनः, तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति ।' । भा. ७।१।१।८.

* परिचोदना शङ्का । सा च परिचोदना या स्वपक्षं वा स्थापयति परपक्षं वा दूषयति । टुप्. ११।१।२।६.
* परिचोदनानां बह्वीनां मध्ये परिचोदनापरिहारकालेऽपि पूर्वपरिचोदनापरिहारः बलवत्वेन । शा. ३।३।७।१४ पृ ८२७.

* परिणयः । केषु चित् दक्षिणदेशेषु मातुलस्य दुहितरं शिष्टाः परिणयन्ति । सोऽयमाचारः प्रमाणम्, शिष्टाचारत्वात् होलाकाद्याचारवत् इति चेन्न, स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् । तस्मात् ईदृशस्य आचारस्य अप्रामाण्यम् । वि. १।३।५ वर्णकं २ .

* परित्रानाधिकरणम् । भा. ३।४।६।१७. मीको. पृ. ६७७ 'अवगोरणन्याय.' इत्यत्र द्रष्टव्यम् ।

* परिदृंहणं यूपधर्मः, 'ब्रह्म दृंह क्षत्रं दृंहेति मैत्रावरुणदण्डेन समभूमि परिदृंहणम् (दृढीकरणम्) कृत्वा' इत्युक्तत्वात् । वि. १०।२।२३.

* परिदेवनमन्त्रः 'अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॥' इति । बाल. पृ. ५९.

* परिदेवनरूपः अर्थवादः 'ये मामभुञ्जन्, ते मा प्रत्यभुञ्जन्त' इति । बाल. पृ ५०.

* परिदेवनरूपः अर्थवादः 'आहिताग्निर्वा एष सन् नाग्निहोत्रं जुहोति, न दर्शपूर्णमासौ यजते, या आहुतिभाजो देवतास्ता अनुध्यायिनीः करोति' । इदं यावज्जीवाधिकरणे वार्तिके । बाल. पृ. ५०.

* परिधानीयं कर्म अन्तिमं अन्त्येष्टिरूपं कर्म । सोम. ११।३।११ .

* परिधिः अग्निना संबध्यते, अग्निर्हविषा । भा. १२।२।११।२७. * परिधिः अङ्गुलीवत् अणीयान् भवति । उत्तरवेदां तु सविग्नो भवति पाशुकेषु चातुर्मास्येषु । वि. १०।१।१. * परिधिः इति अग्निपरिपालार्थं द्रव्यमुच्यते । शा. २।१।४।१२ पृ. ४१४ . * परिधिः निरवदत्यामयुक्तो न भवति ('ध्रौन् परिधीन्०' इति मन्त्रे ) दर्शपूर्णमासयो, किन्तु अपूर्वप्रयुक्तः । भा. ९।१।५।११-१९.

¶ परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् । १२।२। १०।२६ ॥

पशुमत्सु चातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुतम् । स परिधिः उभयधर्मा परिधेः धर्मैः यूपस्य धर्मैश्च विशिष्टः स्यात् । स हि द्वयोः द्वयोरर्थे करोति अग्नेः परिधानम्, पशोश्च प्रतिबन्धम् । तस्मात् अविरुद्धा उभये धर्माः कर्तव्याः । इध्मसंनहनं संमार्जनं शुष्काञ्जनं अभ्याधानमं इति परिधिधर्माः, यवमतीभिरद्भिः प्रोक्षणं अञ्जनं परिव्याणं इति यूपधर्माः । इति सिद्धान्तः । के.

* परिधिः । परिधीयते अग्निः तदायतनं वा यैः इति, परिधीयन्ते इति वा, परिधिशब्दो यौगिकः । दर्शादौ आग्नेयस्य सार्धारत्निपरिमिताः दीर्घाः अङ्गुष्ठमात्रस्थूलाः

लक्षणावश्यम्भावेन अयूपे परिव्याणादावपि प्राप्त्युपपत्तिः । उच्छ्रयमाणं परं अर्थलोपादिना निवर्तते । न चैवं 'यूपायाज्यमानाय' इति मन्त्रे ऊहापत्तिः, भवन्मतेऽपि समानत्वात् । 'परिधये अज्यमानाय' इत्याद्यूहस्येष्टत्वेनैव सुपरिहरत्वाच्च । सूत्रस्योहपरत्वेनापि व्याख्यानसंभवात् । १२.

मण्डन-- 'परिधिर्यूपधर्मभाक् ।' २०.

शंकर-- 'परिधौ यूपधर्माः स्युः ।' १४.

* **परिधौ** यूपपरिध्युभयधर्माणामविरुद्धानां चातुर्मास्येषु पाशुकेषु अनुष्ठानम् । १२।२।१०. मीको. पृ. १६९२. 'चातुर्मास्येषु पाशुकेषु०' इत्यत्र द्रष्टव्यम् । * परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः पाशुकेषु चातुर्मास्येषु । १२।२।११।२७-२९. मीको. पृ. १६९२ 'चातुर्मास्येषु पाशुकेषु' इत्यत्र द्रष्टव्यम् ।

* **परिध्यधिकरणम्** । चातुर्मास्यपशुके मीको. पृ. १६९२ इत्यत्र द्रष्टव्यम् ।

* **परिधिधर्माः** इध्मसन्नहनम्, संमार्जनम्, स्रुवा अञ्जनं 'वसुरसि' इत्येवमादिभिः ( मन्त्रैः ), अग्न्या श्रावणम्, सत्यकरणम्, उपशयत्वं च । भा. १२।२। १०।२६.

* **परिधिप्रहरणं** परिधीनां आहवनीयाग्नौ प्रक्षेपः । 'अनूच्यमाने सूक्तवाके, आहवनीये परिधीन् प्रहरति ।' वि. १०।७।१२.

* **परिधिमन्त्रगतच्छन्दसामेव** व्यतिक्रमो व्यूढे द्वादशाहे, न तु परिधीनां साक्षात् व्यतिक्रमः । भा. १०।५।२६।८८.

* **परिधिरूपगुणस्य** पशुनियोजने विधानं सौमिकेषु चातुर्मास्येषु । भा. १०।३।३।१८-२२

* परिधीयन्ते अग्निः तदावरणं वा यैः इति, परि समन्तात् धीयन्ते इति वा परिधिशब्दो यौगिको द्रव्यवाची । बाल पृ १६६.

* **परिधिसंमार्जने** मन्त्रः सकृत्पठनीयः अपूर्वप्रयुक्तत्वात् । न मन्त्रः परिधिप्रयुक्तः ( ९।१।५। ११-१९ ) । के.

* **परिप्लुपात्रेण** सोमेन धिष्ण्यव्याघारणं ज्योतिष्टोमे । संकर्ष. ३।२।१९. मीको. पृ. १८३१ 'ज्योतिष्टोमे सोमेन०' इत्यत्र द्रष्टव्यम् ।

* **परिभाषा.** काश्चित् संगृह्यन्ते । व्याकरणे यथा साक्षात् महाभाष्ये एव सूत्रस्य परिभाषा उक्ताः, न तथा मीमांसायां भाष्यादिषु प्राचीनेषु भाट्टदीपिकादिषु वाऽर्वाचीनेषु ग्रन्थेषु परिभाषा नाम काचिदप्युक्ता । न्यायास्तु नानाविधा उक्ताः । तथापि भाष्यादौ दृष्टानि कानिचिद्वाक्यानि परिभाषावत् श्रूयमाणानि उपलभ्य परिभाषात्वेन अस्माभिरेव प्रकल्प्य अत्र निवेद्यन्ते । न च भूयसाऽत्र परिभाषात्वं परीक्षितम् । संग्रहश्च वर्णक्रमेण ।

* अकर्तव्यानामिविकर्तव्यतया नास्ति संबन्धः । भा. ९।१।१।१, * अनङ्गमपि 'तस्य' इति शक्यते वक्तुम्, यथा 'वाजपेयस्य यूप' इति । ८।१।३।१०, * अङ्गगुणविरोधे प्रधानगुणो बलवान् । १२।२।९।२५, * अनुवादस्वरस्य सति संभवे न बाधितव्यम् । १२।४। ३।७, * अनुष्ठेया क्रिया प्रतीता सती कारकाणि प्रत्याययति । ३।४।४।१३ पृ ९१३-१४, * अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः । १२।२।११।२७, * अन्याय्यश्चानेकार्थत्वम् । ( एकस्य शब्दस्य अनेके अर्थाः इति न युक्तं इत्यर्थः. ) । १।३।९।१०. * अन्याय्यश्चानेकशब्दत्वम् । ( एकस्यार्थस्य वाचका अनेके शब्दाः इति न युक्तमित्यर्थः. ) । सूत्रं १।३।८।२६. * अर्थद्रव्यविरोधे अर्थं प्रत्यावर्तेत्यम् । ( अर्थः. प्रयोजनम् । द्रव्य प्रयोजनसाधनम् । तयोर्विरोधे प्राप्ते अर्थः. स्वीकार्यः । खदिर. प्रयत्नेऽप्यसमर्थश्चेत् स न ग्राह्यः., तत्समर्थः कदर. प्रतिनिधिर्ग्राह्यः अर्थानुरागात् इति ) । भा. ६।३। १३।३९. * असाधारणगुणवचने अधिगुणमन्तरेणैव गुणः संपादितो भवति । टुप्. १०।२।२९।६८. * आख्याते अनुयोगिवृत्तिसंख्यावचनमेव, न तु प्रतियोगिवृत्तिसंख्यावचनम् । रहस्य. पृ. ९५. * 'आश्रये प्रवर्तमाने तदाश्रितमपि प्रवर्तते ।' यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते । यथा च चमसः प्रवर्तते । यथा च 'खादिरं वीर्यकामाय यूपं कुर्वीत' इति । भा ८।१।१४।२३. * कृदभिहितो भावो द्रव्यवद्

भवति। भा. ३।१।६।१२ पृ. ६७६, * 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः। यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥' ३।३।२।४, * 'गुणवचनानां आश्रयतो लिङ्गवचनानि भवन्ति'। गुणवचनं इति न गुणाभिधान मात्रेणोच्यते। किं तर्हि? गुणमुक्त्वा यो द्रव्ये वर्तते। ३।३।६।१२ पृ. ६८२. * चोदनागतं लिङ्गं ग्राहकम्, मन्त्रगतं ग्राह्यस्य बोधकम्। भा. ८।१।१६।३१. * 'तुल्यकार्ये तुल्यजातीयं तुल्यस्य बाधकं भवति'। तथाहि सामसु चोदनादौ यज्ञान्तरं प्राप्तं प्रकृतितश्चैकत्वम्, तत्र दशत्वं विधीयमानं सामान्यात् आतिदेशिकत्वाच्च एकत्वं बाधते, न जातिम्, भिन्नकार्यत्वात्। पूर्वपक्षे। भा. ३।५।१०।५२. * दैवतसामान्यं देवतासामान्यात् बलवत्, अन्तरङ्गत्वात्। तेन हविर्गणविशेषसामान्येऽपि प्राकृतिकाग्नीषोमीयविध्यन्त एव। भा. ८।१।१।२. * द्रव्यसंस्कारविरोधे द्रव्यम्। (अनयोर्विरोधे द्रव्यमादर्तव्यम्।) खदिरः लक्षणादिसंस्कारासमर्थोऽपि यूपकार्यसमर्थश्चेत् स एव ग्राह्यः, न संस्कारादिसमर्थोऽपि बदरः)। सूत्रे ६।३।१८।३८. * न अन्यस्योक्तोऽर्थः अन्यस्य भवति। नहि यद्देवदत्तस्य ग्रासाच्छादनादिकम्, तद्यज्ञदत्तस्य भवति। भा. ७।१।२।१, * न अविहितमङ्गं भवति। ३।४।४।१३ पृ. ९४१. * नासिद्धो दृष्टान्तो भवति। भा. ९।१।७।३३ पृ. १६६६. * 'नास्ति दृष्टेऽनुपपन्नं नाम'। दृष्टा बाला वृद्धेभ्यः (शब्दार्थम्) प्रतिपद्यमानाः। भा. ११।१।५।५ पृ. ५८, * न आनुमानिकं प्रत्यक्षं बाधते। ७।४।२।१०. * न गुणः आक्रम्यमाणो गुणिनमाक्रमेति अतादर्थ्यात्। भा. ८।१।१३।२०, * 'न चोभयाश्रयं दोषमेकश्चोद्यो विचारयेत्'। ३।८।४।१३ पृ. ९१८. * न द्वयोर्नाम्नोः संबन्धोऽस्ति। टुप्. ११।१।२।१०। नित्यागर्भत्वात् संबन्धानाम्। रत्न. * न द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति। भा. ११।१।१।३. * न युगपत् श्रुतिलक्षणावृत्त्युपयोगित्वमवकल्पते। भा. ३।४।४।१२ पृ. ९०७. * न विप्रकृष्टौ युगपत् संभवतः। भा. ११।१।२।९. * न न्यायाः पर्यनुयुज्यन्ते। वा. ३।४।४।१३ पृ. ९१५. * न सामर्थ्यमात्रेण वाक्यादृते (वचनादृते) विनियोगा भवन्ति। भा. ९।१।१४।४०. * न सामवायिकत्वे (संनिपत्योपकारकत्वे) संभवति आरादुपकारकल्पना युक्ता। वा. ३।४।४।१२ पृ. ९०२, * नहि अङ्गधर्माः प्रधानानि संक्रामन्ति। ३।३।२।९ पृ. ८११. * नहि एकस्य शब्दस्यानेकार्थता सत्यां गतौ न्याय्या। (अन्याय्यं चानेकार्थत्वम्)। भा. ८।३।६।२२. * नहि कर्मणि उपक्रान्ते तदसमाप्य कर्मान्तरमारब्धुं युक्तम्। संकर्ष. ३।१।७. * नहि द्वयोर्विधीयमानयोः संबन्धोऽस्ति। भा. ११।१।१।३। अयुक्तमिदं दूषणम्। अश्वादीनामप्ययं दूषणप्रकारः स्यात्। बलीयांश्चायमेव न्यायः यत् भावनया सर्वेषां संबन्ध इति, इतरेतरसंबन्धस्तु आर्थः। टुप्. * नहि यस्मिन्नर्थे यत् कल्प्यते तेनैव तद्बाधा उचिता, कल्पकाभावेन आत्मोपमर्दकत्वप्रसङ्गात्। (उपजीव्यविरोधस्य अयुक्तत्वम्, सन्निपातपरिभाषा च एतादृशी एव)। सु. पृ. ३१, * नहि विधीयमानस्य विशेषणं भवति। यत् कारणं विशेषणमपि अविधीयमानं न भवति। न च द्वयोर्विधीयमानयोः परस्परसंबन्धो भवति। भा. ११।१।१।१, * नहि सविशेषणानां श्रुतिर्भवति, न खल्वपि श्रुतस्य विशेषणं प्रयुज्यते। १०।४।१५।३१, * नैमित्तिकी चिकीर्षा नित्यां चिकीर्षां बाधते। १२।२।१३।३३, * 'पक्षान्तरैरपि परिहारा भवन्ति'। अन्यथा कृत्वा दोष उक्तः, अन्यथा परिहारः। दार्शपौर्णमासिको यावज्जीवकालः इति कृत्वा दोष उक्तः, नैमित्तिक इति परिहारः। पक्षान्तरैरपि परिहारा भवन्ति। १२।२।८।२०, * 'पूर्वासनाविनश्च बलीयांसो ह्यन्त्यावसायिभ्यः'। तस्मात् प्रकृतिः पूर्वं प्रयुज्यते (इदं पूर्वपक्षे)। १२।२।१२।३३. * प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येन। सु. पृ. १३७१. * प्रधानसंनिधौ गुणः शिष्यमाणः प्रतिप्रधानमुपदिष्टो भवति। भा. ३।८।४।१२. * मूलमन्त्रसमुच्चारणे भूतं मन्त्रेणोपदिश्यते। भा. ९।१।४।९. * यत्र विधीयते तस्य स्तुतिः, यस्य स्तुतिर्न तस्य विधानम्। विधिनैव स्तुत्यपेक्षायाः कृतत्वात्। भा. ३।४।१।१३० पृ. ९६४. * 'फलवत्तया यो विचारः तत्समाप्तौ

स एव बुद्धिस्थो भवति ' इति बुद्धिस्थत्वमत्राधिकरण प्रसङ्गेन चतुर्थाकरणाधिकरणस्य सगतिः । सु पृ १०७२ * ' यस्य यो धर्मः प्रायेण दृष्टः, स तस्मादृश्य-मानोऽपि अनुमीयते ' । यथा य पर्णमयीन् प्रायेण करोति, अन्यस्मिन्नपि पर्णमयीकरणे स एव संभाव्यते । भा ८।४।५।१८, * लिङ्गे अविवक्षितेऽपि लिङ्गविशेष निर्देशोऽनुवादभूतो भवत्येव । यथा शुक्लः पुमान्, शुक्ला स्त्री शुक्लं नपुंसकम् । शुक्ल एक, शुक्लौ द्वौ, शुक्ला बहव इति । शुक्ला शाटीमानय इति । यद्यपि शाट्याश्च नयनं न विधीयते शुक्लमात्रस्य चमात्रविधित्सा भवति । न तत्र लिङ्गेन विशेषणं क्रियते । तथाप्यनुवादभूत स्त्रीलिङ्गनिर्देशो भवत्येव शुक्लामानयेति । ९।१।५।२३ * ' विप्रतिपत्तौ हविषा नियम्येत ' । हविर्देवतयो र्विप्रतिपत्तौ हविषा विप्रतिपत्तिर्नियम्येत । सूत्र ८।१।१७। १२ * विशेष्यं बुद्धौ संनिहितं भवति, न विशेषणम् । तत् विशेषणं विशेष्यं निवर्तते । ' राजपुरुष पुरुष ' इत्युक्ते पुरुष पुरुषो गम्यते न राजा । एवम् ' ऐन्द्र पय ' इत्युक्ते हविर्बुद्धौ संनिधीयते न देवता । भा ८।१।१७। १४, * शब्दार्थाधिगमे अभियुक्तोपदेश प्रमाणम् । ८।२।५।२४, * शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्ति । ११।२।४।२६, * श्रुत्यर्थे सम्भवति न वाक्यार्थो ग्राह्य , श्रुत्यर्थस्य मुख्यत्वात् । ११।१।१।१, * संयोगिनोरन्यतरं दृश्यमानं इतरमदृश्यमानमपि अनुमानात् बुद्धौ संनिधापयति । यथा अग्निहोत्र इत्यभिधानं कौण्डपायिनामयने श्रूयमाणं नैयमिकाग्नि होत्रधर्मान् बुद्धौ संनिधापयति । ८।१।२।२, * ' सकृत् क्रियया कृत शब्दार्थ ' इति न स्यादभ्यास अभि-धाने सर्वोपधानप्रसङ्ग । ११।१।७।२८ * सामान्य शास्त्राणि विशेषविधिविषयं परिहृत्य प्रवर्तन्ते । बा ३।२।८।२९ पृ ७७४ * हविर्गुणसामान्यात् हवि सामान्यं बलवत् । शतकृष्णले हविर्गतं वैशद्यं चान्नत्वं च बलवत्, गुणभूतमाज्यं दुर्बलम् । भा ८।१।१८।२९

* परिभोजनीयं नाम बर्हि । तत पवित्रे विधृती च कर्तव्ये, न तु वेदिस्तरणार्थात् बर्हिषः । दर्शपूर्ण मासयो । भा ३।८।१०।२२ * परिभोजनीया आशीस्तन्त्रनादिसंस्काररहिता ( यागे उपयोज्यमाना ) दर्भा । ( तादृशदर्भाणां मुष्टिरपि ' परिभोजनीया ' इत्युच्यते ) । दर्शपूर्णमासयो पवित्रं परिभोजनीयदर्भै मपादनीयम् । वि ३।८।१८

* ' परिमाणमपि स्वार्थमविस्मरणसिद्धये । स्वयमालोच्यते प्राज्ञैः स्मार्तैः सद् तदिष्यते ॥ ' न केन चित् प्रमाणेन पदार्थेयत्ता परिच्छिद्यते । तत्र यदि तेन विना अन्ये समस्तपदार्थस्मृतिहेतवो न स्यु , तत एतदप्येकं कारणमिति परिमाणमपि स्याप्येन । तस्या मपि तु अवस्थाया यथा श्रौतमानपरिमाणमनमाप्य समाप्त्यापर्यन्तप्रापितपदार्थगतपरिमाणावधारणं आश्रीयते, तथा स्मृत्याचारपर्यन्तावगतपरिमाणमाश्रयिष्यते इति निर्दोषम् । वा १।३।३।७ पृ २०० * परिमाण नाम प्रयोगे पदार्थेयत्तारूपं तत्पदार्थविधिरापन्नावगतम् । तत्र किं कश्चित् पदार्थो विस्मृत किं वा सर्वमनुष्ठित-मिति संशयनिराकरणाय प्रयोगविधिरपेक्षमाण स्वीकरोति, अतस्तदपि प्रयोगविधिग्राह्यम् । कु १।३।४।५, * परिमाणं यूपस्य पञ्चारत्निर्वादि तत्पर स्कंधे वा ज्ञेयम् । सकर्ष १।४।८ ' यूपादौ पञ्चारत्नित्वादि ' इत्यत्र द्रष्टव्यम् । * ' स्वाङ्गेन हि पदार्थाना परिमाण विना गतम् । प्रयोगस्याऽऽशुनिर्माणक्रम ॥ ' वा १।३।३।६ पृ १९७, * क्रमकालपरिमाणानि समस्तपदार्थधर्मत्वेन निश्चितानि । १।३।३।९ * परि माणस्य द्वावन्तौ पारिमाण्डल्यं परममहत्त्वं च । तत्र अत्यन्तात्पत्वे वर्तमानं परमाणु अत्यन्तमहत्त्वे च वर्तमानं व्योमादिकं अल्पं इत्युच्यते । रत्नाकर , अनुमानपरिच्छेद श्लो १७७

* परिलेखः वेदे दर्शपूर्णमासयो । ' स्फ्येन वेदिं परिश्रयन् परिगृह्णाति ' । अथ परिलेखः राजसूये मैत्राबार्हस्पत्ये नास्ति । तत्र हि ' स्वयकृता वेदिर्भवति ' । वि १०।२।१

परिवप्यहोमयो ' अभित पुरोडाशे ' इति पूर्वोत्तरकालत्वाद् ॥

' स्वाहा देवेभ्यो देवेभ्य स्वाहेत्यभितो वपा जुहोति ', ' पुनरूर्जा सहरय्येत्यभित पुरोडाशमाहुती

जुहोति ' इत्यादौ अभितो धूमं निषेहीत्यादाविव देशवादः, अभित इत्यस्य प्रतिमन्त्रान्विते पदे द्वितीयाविधानात् यथा वपा पुरोडाशश्च मध्यतो भवति तथा जुहुयादित्यर्थः । इति प्राप्ते, कर्मण एव पूर्वं प्रक्रान्ततया वपापदस्य तद्द्रव्यकयागपरत्वात् तत्पूर्वापरकालवादोऽयम् । न च लक्षणा दोषः, ' अभियागे ' इति स्मृत्यैव तदनुमतेः । किञ्च अभितःपदस्य उभयतः इत्यर्थकस्य देशवादे कतरयोर्दिशोर्ग्रहणम् ? अनियमे विकल्पापत्तिः । कालवादे तु पूर्वापरयोर्द्वयोरेवोपस्थितेर्न क्षतिः । अत एव ' देवेभ्यः स्वाहेत्युपरिष्टात् ' इति श्रुत्यन्तरे स्पष्टः कालवादः । संकर्प. २।९।१०.

* परिवर्तिनी नाम त्रिवृत्स्तोमस्य विष्टुतिः । सा च एवं आम्नायते । ' तिसृभ्यो हिंकरोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः, तिसृभ्यो हिंकरोति स पराचीभिः, परिवर्तिनी त्रिवृतो विष्टुतिः ' इति । पराचीभिः अनुक्रमेण आम्नाताभिः । तिसृभ्य इति तृतीयार्थे पञ्चमी । हिंकरोति गायति । वि. १।४।३.

* परिवासनं शाखायाः अग्रार्थमेव, न मूलार्थे दर्शपूर्णमासयोः । परिवासन छेदनम् । के. ( भा. ४।२।३।८-९ ) । * परिवासनस्य ( शाखायाः ) वत्सापाकरणादि प्रयोजकम्, न कपालोपधान दर्शपूर्णमासयोः । के. ( भा. ४।२।३।८-९ ).

* परिवीय वेष्टयित्वा । व्येञ् संवरणे इत्यादिः । के.

* ' परिवीरसि ' इति यूपपरिव्याणकरणमन्त्रं होता पठेत्, कौण्डपायिनामयनेऽग्नीषोमीये पशौ । के. ( वि. ३।८।११ ).

* परिव्याणमग्निष्ठे द्वाभ्यां द्वाभ्यामेव रशनाभ्यां क्रमेण । संकर्प. १।४।१३. मीको. पृ. ७८ ' अग्निष्ठे द्वाभ्यां द्वाभ्याम् ' इत्यत्र द्रष्टव्यम् । * परिव्याणं ' आश्विनं ग्रहं गृहीत्वा० ' इत्यादिवाक्ये पुनः श्रुतं यूपसंस्कारार्थम्, न पशुसंस्कारार्थम् । के. (भाट्ट. ४।४।१)। * परिव्याणं द्वितीयम् ' त्रिवृता यूप परिवीय ' इति सवनीये पशौ विदधाति । वाल. पृ. ६४. * परिव्याणं यूपस्य रशनया वेष्टनम् । के. * परिव्याण रशनाद्वयेन युगपत् यूपैकादशिन्यामपि । संकर्प. १।४।१४. ' यूपैकादशिन्यामपि रशनाद्वयेन ' इत्यत्र द्रष्टव्यम् ।

* परिव्याणान्तं अञ्जनादि परिव्याणान्तं काण्डम्, यूपस्य घृतेनाञ्जनं समुच्छ्रयणं अवटसमूहन मूलपरिदृंहणं रशनया परिव्याण इति । तत्रानेकः पदार्थः, तेन अनुसमयः यूपैकादशिनीपक्षे । वि. ५।२।९.

* परिव्याणकरणक्रियमाणानुवादिनोः ' परिवीरसि ' ' युवा सुवासाः ' इति मन्त्रयोः क्रमात् अग्नीषोमीयपरिव्याणाङ्गत्वे प्राप्ते लिङ्गात् सवनीयार्थद्वितीयपरिव्याणाङ्गत्वमपि । लिङ्गं क्रमात् बलवत् । वा. ३।३।७।१४ पृ. ८३७.

* परिव्याणकरणक्रियमाणानुवादिपरिवीरसि-परिवीतवत्यतिरिक्तपदसमाम्नात् 'युवा सुवासाः० आगात् स उ श्रेयान् ॥ ' इत्येवमादीना लिङ्गविनिर्मुक्त(परिवीरसि)-परिवीतपदैकवाक्यत्वात् सवनीयपरिव्याणे विनियोगः । वाक्य क्रमात् बलीयः । वा. ३।३।७।१४ पृ. ८३७.

* परिव्याणन्यायः । इतरमन्यस्तेषां इति न्यायः । कुण्डपायिनामयने होत्रा अध्वर्युकर्म परिवीरसीति मन्त्रः पठनीयः ॥

विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषः स्यात् । ३।८।१०।२१ ॥

भाष्यम्-- अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तस्य यूपस्य परिव्याणे मन्त्रौ एकः अध्वर्योः ' परिवीरसि ' इति करणः, अपरो होतुः ' युवा सुवासाः ' इति क्रियमाणानुवादी । तयोः चोदकपरंपरया कुण्डपायिनामयनं प्राप्तयोः भवति संदेहः । कः पुनरसौ ? तत्र कश्चित्कर्मास आम्नातः ' यो होता सोऽध्वर्युः ' इति । किं करणं आध्वर्यवं होता कुर्यात्, किं होत्रं क्रियमाणानुवादिनं इति । किं प्राप्तम् ? अनियम इति । इति प्राप्ते, उच्यते । विप्रतिषेधे करणः स्यात् आध्वर्यवः ' परिवीरसि ' इति । न क्रियमाणानुवादी होतुः ' युवा सुवासाः ' इति । कुतः ? समवायविशेषात् द्वौ तत्र समवायौ, होतृचोदकेन हौत्रेषु, प्रत्यक्षवचनेन आध्वर्यवेषु ' यो होता सोऽध्वर्युः ' इति । एवं प्रत्यक्षमध्वर्योः कार्ये चोद्यते । प्रत्यक्षं चानुमानात् बलीयः । यस्मा-

दाध्वर्यवे करणं परिवीरसि इति होता कुर्यात्, अथ हौत्रे विरुद्धं कः कुर्यात् ? 'इतरमन्यस्तेषा यतो विशेषः स्यात्' अन्यो होतृपुरुष एव स्यात्, सम्बन्धाभ्यासभूतत्वात्, प्राधान्यविशेषो वा ।

या— 'परिवीरसि' 'युवा सुवासाः' इत्येतयोः करणक्रियमाणानुवादिनोः अध्वर्युणा होत्रा च युगपत् प्रसक्तौ प्रयुक्तयोः कुण्डपायिनामयने हौत्राध्वर्यवयोः एककर्तृकत्वादशक्तेः अवश्यावरेये अन्यतरस्मिन्, कतरः प्रतिपद्यता इति सन्देहः । तत्रानियमः प्राप्नोति । यदा होतुः सिद्धस्वरूपस्य आध्वर्यवविधानात् अजहत्स्वधर्मतया हौत्रः एव युक्तः ( मन्त्रः )। इति प्राप्ते, अभिधीयते । एतस्मिन् विप्रतिषेधे करणः प्रयोक्तव्यः । कुतः ? समवायविशेषात् । केचिदाहुः प्रधानप्रत्यासत्तिः समवायविशेष इति । बहिरङ्गो हि आरादुपकारकरूपत्वात् क्रियमाणानुवादी, करणस्तु अन्तरङ्ग इति । तदकारणम् । यदि हि प्रधानद्वारेण अङ्गेषु कर्ता अवतरेत्, ततः सन्निकर्षविप्रकर्षौ उपयुज्येयाताम् । स तु समाख्यया चोदनेन च प्रधानेषु अङ्गेषु च अविशेषेण लभ्यते । न च कश्चित् अङ्गगुणविरोधन्यायः, उभयोरङ्गत्वाविशेषात् । न च सन्निपातित्वेन क्रियाऽन्तर्गतमारादुपकारित्वं दुर्बलीक्रियते । न चायमतीव आरादुपकारकः । क्रियमाणपरिव्याणस्मृत्यविच्छेदेन दृढसंस्कारजननात् । तस्मात् आनुमानिकात् हौत्रसम्बन्धात् प्रत्यक्षत्वेनैव आध्वर्यवस्य समवायस्य विशेषो भवति । कथम् ? एषा ह्यत्र वचनव्यक्तिः, यदुत होत्रादयः श्रुतिवृत्ताः अध्वर्य्वादिशब्दलक्षितेषु कर्मसु विधीयन्ते । तत्र हौत्रसम्बन्धो होतुरानुमानिकः आध्वर्यवसम्बन्धस्तु प्रत्यक्षः । यत्तु अजहत्स्वधर्म एव होता आध्वर्यवेण सम्बध्यते इति, सम्बध्येत यदि तत्प्रयोगमात्रकृतमेव अस्य होतृत्वं भवेत्, यदि वा हौत्रं प्रति अध्वर्युर्विधीयेत, होतारं वोद्दिश्य अध्वर्युकर्मविधिर्भवेत्, न तु तत् सर्वमस्ति । होता तावत् योग्यतामात्रेणावधारितः, अन्यपि च कर्मनिमित्तत्वे अन्यानि सहस्राणि तदुपलक्षणं करिष्यन्ति । न च हौत्रं प्रति अध्वर्युविधिरिह, होत्रध्वर्युशब्दयोः भिन्नप्रवृत्तिनिमित्तपुरुषवचनयोः मुख्यसामानाधिकरण्याभावात् अन्यतरस्य अवश्यकल्पनीये लक्षणावृत्तत्वे विरोधनिमित्तत्वाल्लक्षणाकल्पनायाः प्रथमोच्चारिते होतृशब्दे किञ्चिदपि कल्पनाबीजं न पश्यामः । तेन 'मुख्यं वा पूर्वचोदनात्' इति तं स्वार्थवृत्तमेव गृहीत्वा अध्वर्युशब्दः कर्मलक्षणार्थः अध्यवसीयते । तदपि तदुद्दिश्य होत्रा विधीयते । यदि कर्तृत्वेन प्रयोजनवत्, न तथा कर्ता । प्रधानं च एवंजातीयकेषु उद्दिश्यते । ततश्च गुणभूतो होता उपादीयमानः, यः प्रधानाविरोधी धर्मः, तन्मात्रयुक्त एव सम्बध्यते । यदि तु होतुः आध्वर्यवं विधीयेत, ततस्तस्य कर्माविरुद्धं तत् प्रवर्तेत, इति न किञ्चिदपि हौत्रं हापयेत् । अप्राकृतकर्तृसंस्कारत्वप्रसङ्गाच्च आध्वर्यवस्य, नैवं सम्बन्धः, इति पक्षान्तरमवलम्बितम् । तस्मादाध्वर्यवसम्बन्ध एव प्रत्यक्षः प्रबलं च इति सिद्धम् ।

अत्र चोदयन्ति । नैवात्र अन्यतरस्यापि मन्त्रस्य होतृसम्बन्धो बाधितव्यः । कुतः ? 'एककालप्रयोगे हि विरोधो मन्त्रयोर्भवेत् । करणः प्राक् क्रियातस्तु, परतश्चेतरः स्थितः ॥' करणस्य हि 'मन्त्रान्तेन कर्मादिसन्निपातः' ( १२।३।१०।२० ) इत्यनेन न्यायेन प्राक् परिव्याणात् प्रयोगः । क्रियमाणानुवादिनस्तु तस्मिन् क्रियमाणे । तेन द्वावपि प्रयोक्तुं समर्थो होतेति । नैतदस्ति । क्रियमाणता नाम सङ्कल्पादेः कारकप्रचलनात् प्रभृति आ समाप्तेः । अतश्च पूर्वपदार्थसमाप्त्यैव पर्युपस्थापितं चेत् परिव्याणं वर्तेत, स एव दीर्घः समस्तः क्रियमाणानुवादिनः कालः । एवमपि करणस्य तादर्थ्यादेव प्राक् प्रयोगात् अविरोधः इति यद्युच्येत, तन्न । न हि 'परिवीरसि' इत्ययम्, संकल्प रशनाऽऽदान सन्निहितं वा यूपं अवयवक्रियामात्रप्रवृत्तं वा परिव्याणं शक्नोति प्रकाशयितुम् । तस्मात् प्रधानक्रियाऽऽरम्भे एव यूपसमीपस्थेन प्रयोक्तव्यः । ननु एवमपि दीर्घकाले कर्मणि एकदेशे करणं एकदेशे च क्रियमाणानुवादिनं प्रयुञ्जानो न विरोत्स्यते । कथं न विरुध्यते । यदा 'यूपाय परिवीयमाणायानुब्रूहि' इत्यनेन पाठक्रमात् करणं, प्रैषसामर्थ्याच्च इतरो युगपदेव प्राप्यते, न च नियैकदेशे नियमाणानुवादिनः प्रयोगः इत्यस्ति प्रमाणम् । स हि रशनाऽऽदानानन्तरं प्रयुक्तेन प्रैषेण प्रयोजितः दीर्घत्वात् आ परि-

व्याणसमाप्तेः कालमवरुणद्धि । तदन्तराले च आध्वर्यवः आपन्नो न कथंचित् अविरोधेनावतिष्ठते । ननु च युगपत्कालता बाध्यतां एककर्तृत्वं वा, इति वरं पदार्थप्राप्तेर्बहिरङ्गत्वात् काल एव बाधितुम्, नान्तरङ्गः कर्तृसंबन्ध इति । भवेदेतदेवम्, यदि प्राकृतकालं बाधमानौ मन्त्रौ स्वकार्याय प्रत्यवेयाताम् । तयोस्तु य एव कालान्तरे प्रयुक्तः स एव स्वसामर्थ्यप्रतिपाद्यात् अर्थात् प्रच्यवते । सोऽयं लिङ्गविरोध आपद्यते । ननु च 'यो होता सोऽध्वर्युः' इत्यनया श्रुत्या लिङ्गं बाध्येत । बाध्येत यदि श्रुतिः स्यात् । वाक्यं त्विदं तदपि लक्षणया । न ह्यत्र कस्यचिच्छब्दस्य श्रवणादिदं गम्यते हौत्राध्वर्यवे समानकर्तृके इति । किं तर्हि ? होत्रध्वर्युशब्दसमानाधिकरण्यात् । सर्वत्र चैष संबन्धो वाक्यलक्षण इत्युक्तम् ( ३।१।६ ) । तथापि च अध्वर्युशब्दस्य कर्मलक्षणार्थत्वात् विप्रकृष्टता । ननु लिङ्गमप्येतत् चोदकापेक्षित्वात् विप्रकृष्टतरं भवेत् । वाक्यं हि अर्थविप्रकर्षात् लिङ्गेन बाध्येत । स चेह विपरीतोऽर्थविप्रकर्षः । न हि चोदकेन अप्राप्तयोर्मन्त्रयोः एककालप्रयोज्यत्वं गम्यते । तस्मादेककर्तृत्वमेव बलीयः इति । उच्यते । सत्यमिह चोदकाङ्गीकरणम्, तत्तु मन्त्रलाभे, न लिङ्गे । द्वयोरपि च तदविनाशम् । प्राप्ते तु मन्त्रद्वये, लिङ्गं औपदेशिकेनाविशिष्टम् । स्यादेतदेवं यदि चोदकः प्रापयेत् । स तु प्रत्यक्षवाक्यविशिष्टसमानकर्तृत्वविरोधिमन्त्रद्वयं प्रापयितुमेव न शक्नोति । यद्यपि हि वाक्यं लिङ्गस्य भेदे, चोदकस्य तु स्वरूपप्रापणे पश्चात् भाविनमपि विरोधमालोच्य शक्तो निरोद्धुम् । ततः छिन्नमूलत्वात् लिङ्गस्य दुर्बलता इति । उच्यते । सर्वं हि विरोधवेलायां बाध्यते । न च अनवसरो विरोधो बाधकारणं भवितुमर्हति । तदिह चोदकप्राप्तिवेलायां कश्चिदपि विरोधो उत्पद्यते । प्राप्ते तु प्राप्ते विरोधः, तत्र लिङ्गं बलवत्तरं इत्युक्तमेव । यदि चात्र द्वयोरपि समानकर्तृत्वं वाक्येन विधीयेत, ततोऽपि एतस्य बलीयस्त्वमुन्नाय्येत । इह आध्वर्यवस्य होत्रा सह संबन्धो विधीयते, न हौत्रस्यापि । स हि चोदकेन प्राप्नोति । तेन यदि प्रत्यक्षवाक्यादेतस्य बाधकत्वम्, ततः समाख्याकृतमेव क्रियमाणानुवादिनो होतृसंबन्धबाधनम् । एवं च सति लिङ्गवाक्ययोरविरोधात् न किंचिदपि बाधिष्यते, आध्वर्यवप्रयोगश्च सेत्स्यति । यथा तु लिङ्गबलीयस्त्वमाश्रितमासीत्, तथा अन्यदेव अनिष्टमापद्येत । यो हि अस्य वाक्यस्य विषयः स बाध्येत । न चास्य होतृहौत्रसंबन्धो विषयः । कस्तर्हि ? होत्राऽऽध्वर्यवसंबन्धः । ततश्च यथाप्रकृत्येव प्रयोगः स्यात् । तस्मात् समाख्याबलसमेव आतिदेशिकं संबन्धं बाधित्वा समवायविशेषात् करणः प्रयोक्तव्य इति सिद्धम् ।

शा— एवं प्राप्ते, ब्रूमः— 'प्रत्यक्षवचनात् प्राप्तिर्होतुराध्वर्यवेषु हि । हौत्रेषु चोदकात्, वाक्यं चोदकाद्बलवत्तरम् ॥ ' ( भाष्यकारमतमनूद्य निराचष्टे ) यत्तु ' सत्रेषु होत्रादयो न सन्ति, तदभावाच्च हौत्रादिषु चोदकतः प्राप्तिः ' इत्याह, तस्य ' हौत्रेण होतुश्चोदकात् समवायः ' [ ' द्वौ तत्र समवायौ, होतुश्चोदकेन हौत्रेषु ' इति तु भाष्यप्रवृत्तिः ] इति भाष्यविरोधः । सत्रं हि कुण्डपायिनामयनम् । वक्ष्यति हि ( सूत्रकारः ) ' तत्रै भोत्पादिचोदनात्' इति । किञ्चैवम् 'यो होता सोऽध्वर्युः' इति वचनेन किं विधीयते ? नहि होताऽस्ति, योऽध्वर्युकार्ये विधीयेत । अथ हौत्रमाध्वर्यवं च एकः कर्ता कुर्यात् इत्येतावत् विधीयते, तदा उभयोरपि प्रत्यक्षवचनादिष्टत्वेन तुल्यत्वात् आध्वर्यवस्य बलीयस्त्वं न स्यात्, इत्यधिकरणविरोधः । 'प्रत्यक्षविधानादिष्टम्' इति च निबन्धनग्रन्थो विरुध्यते । इत्यास्तां तावत् ।

सोम— सूत्रार्थस्तु— विरोधे होता करणमन्त्रं ब्रूयात् प्रत्यक्षवचनकृततत्समवाये आनुमानिकापेक्षया विशेषसद्भावात् । न चैतावता क्रियमाणानुवादिनः परित्यागः, किन्तु तमन्यो ब्रूयात् सोऽपि न सर्वः, किन्तु तेषामृत्विजां मध्ये यस्य मैत्रावरुणादेः प्राधान्यविशेषो होतृप्रत्यासत्तिलक्षणोऽस्ति स ब्रूयात् इति ।

वि— 'यो होताऽध्वर्युरेष स्यादित्याध्वर्यवमाचरन् । हौत्रं कुर्वीत वा, त्यागहेत्वभावात् करोति तत् ॥, होतैको युगपत् कर्मद्वयं कर्तुं नहि प्रभुः । त्यजेच्चोदकतः प्राप्तं हौत्रं वाचनिकार्थकृत् ॥ '

भाट्ट— दैक्षे पशौ यूपपरिव्याणे आध्वर्यवः करणमन्त्रः 'परिवीरसि' इत्ययं श्रुतः । तथा ' युवा

सुवासाः' इत्ययं क्रियमाणानुवादी होतोऽपि । तौ च द्वावपि 'यूपाय परिवीयमाणायानुब्रूहि' इति प्रैषवचनात् तदुत्तरपाठाच्च प्रैषाव्यवहितोत्तरक्षणे एककालीनौ । अङ्गपरिव्याणभावनाकरणसमानकालीनत्वाच्च क्रियमाणानुवादित्वाविरोधः । सोमविकृतौ च कुण्डपायिनामयने तथैव प्राप्तौ । तत्र च 'यो होता सोऽध्वर्युः' इति श्रुतम् । तस्य च सत्रत्वात् सत्रे च आनतिप्रयुक्तवरणजन्यहोतृत्वाध्वर्युत्वादेरात्यन्तभावेन अभावात् 'यो होता' इत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽपि एककर्तृकत्वं विधीयते । अतश्च औपदेशिकैककर्तृकत्वबलेन प्राकृतैककालकत्वबाधात् प्रथमतः करणमन्त्रः पश्चादपरः इत्याद्यः पक्षः । होतृत्वादेः अध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् सत्रेऽपि तत्सम्भवेन पदद्वये कर्मलक्षणायां प्रमाणाभावात् जघन्ये एवाध्वर्युपदे तद्गुणमङ्गीकृत्य आध्वर्यवपदार्थानां होतृसंस्कारकत्वेन विधानम् । अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मलक्षणापत्तेश्च होतैव वा तत्कर्तृत्वेन विधीयते । तथापि तु 'परिधौ पशुं नियुञ्जीत' इत्यत्र परिधिनाविरोधेनेव होत्रध्वर्युविरोधेनैव कर्तृत्वविधानात् होत्रा क्रियमाणानुवाद्येव तेन प्रयोक्तव्यः, अपरस्तु तेन कालान्तरे अन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्यः । इति प्राप्ते, पुरोडाशकपालवत् अग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगात् मुख्यं परिधिधर्माणां तत्कृतत्वादीनां प्राबल्यम् । प्रकृते तु अध्यवसायनिमित्तहोतृत्वेनैव आध्वर्यवे विनियोगात् होतृकार्यस्य प्रयोजकत्वकल्पने प्रमाणाभावात् आध्वर्यवस्य करणत्वेन प्रत्यक्षवाक्यावगतशेषित्वेन प्राबल्यात् नातिदेशिकसमाख्याप्रमाणकक्रियमाणानुवादिनः प्राबल्यम् । न वा कालान्तरे तस्य होत्रा पाठः, 'स उ श्रेयान् भवति' इति लिङ्गावगतक्रियमाणानुवादित्वबाधापत्तेः । नापि करणमन्त्राव्यवहितोत्तरक्षणे होत्रा तस्य पाठः, 'यूपाय' इत्यादिप्रैषे होतुः कर्तृत्वेन प्रैषार्थे तदर्थमवगमात् । अतः तस्मिन् तत्काले एव होतृपुरुषोऽन्यः कश्चित् अन्तरङ्गः आध्वर्यादिः कर्ता । तस्य कार्यान्तरव्यापृतौ तु बहिरङ्गोऽपि ।

सु— क्रियमाणानुवादिनं कः कुर्यात् इत्याशङ्कोत्तरत्वेन ऋत्विजां मध्ये यस्य मुख्यप्रत्यासत्त्याख्यः, प्रत्यासन्नस्य स्वकर्मणि व्यापृतत्वे यस्य अव्यापृतत्वाख्यो वा विशेषः स प्रयुञ्जीयात् इत्येवम् "इतरमन्यः" इति सूत्रे वार्तिकव्याख्यार्थे अर्थेत्यादि भाष्यम्, कुण्डपायिनामयने अच्छावाकीयाख्याया होत्रायाः उद्गातृकार्यत्वात् स्तोत्रीयायाश्च प्रस्तोतृकार्यत्वात् अच्छावाकमात्रस्तुरभावेन मैत्रावरुणव्यतिरिक्तहोतृपुरुषाभावात् प्रकृतोपयोगानुपपत्तेः इत्याशयप्रदर्शनमात्रार्थत्वात् उपेक्षितम् ।

मण्डन— 'अध्वर्युमन्त्रः करणो विरोधे ।'

शंकर— 'विरोधे करण होता ।'

• परिव्राट् ब्राह्मण. वानप्रस्थः इति धर्मभेदात् संज्ञाव्यवस्था । भा. ८।२।५।२५.

§ परिशेषन्यायः । उक्तादन्यः परिशेषः, तस्य न्यायः रीतिः । संग्रहः.

• परिषद् । यत्रे दक्षिणायाः यस्य यावान् भागः आभवति, स्वयमेव यजमानेन विभज्य तस्य दातव्यः कल्पयितव्यः (भागः) उत परिषदैव विभज्यते इति संदेहः । यजमानेनैवेति सिद्धान्तः । यदि च परिषद प्रतिपद्येत, परिषच्च विभजेत, न स्वामिना सह अपक्रिष्यत । तत्र परिक्रय एव नाभविष्यत् । भा. १०।३।१२।५१

• परिसंख्या इति परेर्वर्जनार्थत्वात् तद्विषया बुद्धिरभिधीयते (वर्जनाकरी बुद्धिः परिसंख्या) । साऽपि गर्दभरशनाया आदाने वा स्यात् मन्त्रे वा । उभयथा त्रिदोषी । विधिपरः सन् न गृह्यते इति स्वार्थे जह्यात् । परस्य च वाक्यस्य "गर्दभरशना न" इत्यस्यार्थे कल्पेत । प्राप्तं च रूपादर्थाद्वा मन्त्रादानं वा बाधेत । इति पूर्वपक्षे । शा. १।२।४।३१–१. • परिसंख्या 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' एतादृशेषु उदाहरणेषु निर्दोषा प्रवर्तते । प्रपञ्चितं चैतत् वार्तिककारैः 'सामान्यप्रकरणादाह वाक्याद् यत्रानुमानिकात् । श्रुत्या प्राप्तिर्विरोधे च परिसंख्या तदाश्रया ॥ निर्दोषत्वं हि तत्रास्य विधाने सति लभ्यते ॥' (वा. ३।१।७।१४ पृ. ७१०) 'रूपप्रकरणद्वाय श्रुतिर्यावत्तु कल्प्यते । तावत् प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते ॥ अप्राप्त-

विशेषभेदानुपादानात् । यदि हि सामान्येन इदं लक्षणम् ( 'अर्थैकत्वादेकं वाक्यम्०' इत्यादि एकवाक्यतालक्षणम् ) क्वचिदभिधाय पुनः केवलपौरुषेयग्रन्थविषयमुच्येत, ततः परिसंख्यावशेन वैदिकानामिदं तावत् न भवति इत्येतावन्मात्रं गम्येत ( इह पूर्वपक्षे ) । शा. २।१।१४।४६ पृ. ४४४, * 'नियमः परिसंख्या वा न व्यावर्त्योद्भिनेष्यते' । २।२।८।२७ पृ. २८२, * 'सामान्यप्रापणाशङ्का वाक्याद्यनुपानितम् । भुजान् प्राप्तिर्विशेषे च परिसंख्या तदाश्रया ॥ त्रिदोषत्वं हि तत्रास्या विधाने सति लभ्यते । परत्वेन हि तस्यैषा बलादाश्रीयते यतः ॥' समानवाक्यपदपूर्वभागावलिङ्गितप्रातिपदिकमापित – सर्वग्रहसंमार्गज्ञानमभ्याख्यानेन तदधीनात्मनामप्रत्ययप्रतिपाद्यायाः परिसंख्यायाः त्रिदोषत्वपरिहारार्थम् । ३।१।७।१४ पृ. ७१०, * हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या अग्नीषोमीये पशौ । हृदयादिन्यायः द्रष्टव्यः । भा. १०।७।२।२–९, * परिसंख्यया प्रतिषेधः स्यात् । यथा 'पञ्च पञ्चनखा भक्ष्याः' इति शशादीनां पञ्चानां कीर्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यते । १०।७।९।२८, * परिसंख्यायाः तत्र हि तत् ( दोषत्रयम् ) परिहर्तुं शक्यते, यत्र परिसंख्यायमानप्राप्तिशास्त्रमवलम्ब्य तदर्थेनाप्यत्र वर्तते । वा. ३।४।१४।४१ पृ. ९७९, * परिसंख्यायां त्रिदोषत्वमदोषः । 'सर्वत्र हि द्वयोः संबन्धे कृते तत्स्वरूप संसर्गश्च प्रतीयते अन्यनिवृत्तिश्च । क्वचिच्च त्रितयं प्रयोजनवशेन विवक्ष्यते । स्वरूपसंसर्गासंभवे च बलादेव विधिः इतरनिवृत्तिप्रयोजनो भवति । अतश्च त्रिदोषत्वं अदोषः स्वार्थस्य प्राप्तत्वेनैव हेयत्वात् प्रतीतस्य च परार्थस्यापरिग्रहे विध्यानर्थक्यात्' । ३।७।१६।२२ पृ. १०९५. * परिसंख्यायां स्वार्थहानिः परार्थकल्पना प्राप्तबाधश्च । भा. ६।१।३।८.

* परिसंख्यार्थमिदं श्रवणं आङ्गिरसां द्विरात्रे 'नैरायनस्य पूर्वेद्युर्भवति षोडश्युत्तरे' इति, यदेतत् द्विरात्रस्य उत्तरे गृह्यते, एतत् आङ्गिरसां द्विरात्रस्य गृह्यते नान्यत्रेति । इद वृत्तिकारमतम् । भा. १०।५।१३। ५३–५४.

* परिसंख्याविधिः उभयस्य युगपत्प्राप्तौ इतरव्यावृत्तिपरो विधिः । यथा 'पञ्च पञ्चनखा भक्ष्याः' । इद अपञ्चनखभक्षणनिवृत्तिपरम् । मीन्या. * परिसंख्याविधिः चतुर्विधः– जातिविधिः द्रव्यविधिः गुणविधिः क्रियाविधिश्च । पुनरपि द्विविधः शेषिपरिसंख्या शेषपरिसंख्या चेति । पुनर्द्वेधा शाब्दी आर्थी चेति । तत्र आर्थी द्विविधा प्राप्तपरिसंख्या अप्राप्तपरिसंख्या चेति । पुनर्द्विविधा क्रत्वर्था पुरुषार्था चेति । पुनर्द्विविधा दृष्टार्था अदृष्टार्था च । तत्र इतरनिवृत्त्यंशः सर्वत्र अदृष्टार्थ एव । विधेयांशस्तु क्वचित् दृष्टार्थः क्वचिददृष्टार्थः । पुनर्द्विविधा नियमेन तत्र चान्यत्र च प्राप्तौ, अनियमेन तत्र चान्यत्र च प्राप्तौ इति । बाल. पृ. २४–२६, * परिसंख्याविधिः नियमविधिना बाध्यते । पृ. १४३. * परिसंख्याविधिः प्रायेण विनियोगविषय एव । मणि. पृ. ९९.

* परिसंख्याविधिविवेचनं मणिकृतम् 'विधिः त्रिविध' इति विन्दी मणिग्रन्थे द्रष्टव्यम् । के.

* परिसंख्याव्यावर्तितविषयः अभ्यनुज्ञाविधिर्यथा 'पञ्च पञ्चनखा भक्ष्याः' इत्यनेन व्यावर्तितानां मार्जारादीनां अभ्यनुज्ञाविधिः 'प्राणात्यये' इत्यादिः ( सर्वानुमतिश्च प्राणात्यये तद्दर्शनात् । ३।४।२८ ब्रसू. ) । बाल पृ. १७, * परिसंख्याव्यावर्तितविषय. प्रतिप्रसवविधि. भट्टसोमेश्वरमतेन पशुसोमाधिकरणे 'एकादश वै पशोरवदानानि' इति परिसंख्या । तथा अङ्गान्तराणि व्यावर्तितानि इति स्विष्टकृत्यपि शेषकार्ये व्यावर्तितान्येव । तत्र 'त्र्यङ्गैः स्विष्टकृतं यजति' इति अङ्गान्तरेषु त्रयाणां प्रतिप्रसवः । पृ. १६.

* परिसंख्याशब्दवाच्यायाः बुद्धेरपि प्रवर्तनरूपायाः विधित्वाभ्युपगमः । सु. पृ. ९७.

* परिसंख्यासूत्रे 'कण्वरथंतरे प्रकृतावान्तरापूर्वेष्वेव कण्वरथंतरयोनित्वगुणाभिधानात्ता विधानोपपत्तेः हिरण्यगर्भमन्त्रवत् अपूर्वान्तराकल्पनात् तत्साधनीभूते बृहद्रथंतरधर्मप्राप्त्यविरोधः' इत्युक्तम् । कौ. ११४।३।३ पृ. १९९.

* परिसामानि परितः सामानि । अवभृथसामानि अनुकम्प्यादिसामानि च । सु. पृ. ११८३.

* परिहरणं युगपत् अलभक्षाणां शतकृष्णलस्वरौ । भा.१०।३।४।१७.

* परिहारः ( समर्पणम् ) ब्रह्मणे सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय शतकृष्णलस्वरौ । भा.१०।२।५। १८-१९.

* लोकानवगत विवेक कुर्वन्ति परीक्षकाः । सु. पृ. ५६२. * नहि यथावगताभ्युपगमात् अन्यत्किञ्चित् साधीयः परीक्षकाणाम् । वा. १।२।२।१ पृ. १०६-१०७.

परुषिदिताधिकरणम् । दिग्विभागाधिकरणम् । परुषिदितादीनामनुवादः ॥

परुषिदितपूर्णघृतविदग्धं च तद्वत् । ३।४।३। ११ ॥

भाष्यम्— दर्शपूर्णमासयोराम्नातम् ' यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत्समूलं तत्पितॄणाम् ' इति । तथा ' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवतः । तस्मादविदहता श्रपयितव्यं सदेवत्वाय ' इति । ज्योतिष्टोमे श्रूयते- ' यत्पूर्णं तन्मनुष्याणामुपर्यर्धो देवानामर्धः पितॄणाम् ' इति । तथा ' घृतं देवानां मस्तु पितॄणां निष्पक्वं मनुष्याणाम् ' इति । तत्र मनुष्यधर्मेषु रौद्रे च सन्देहः किं मनुष्याणां धर्मा विधयः, उत कर्मधर्मा अनुवादाः । अथ यत्प्रकरणे मनुष्यप्रधान रौद्र च तत्र विनेयत्, उताऽऽविध्ये, उतार्थवाद इति । किं तावत् प्राप्तम् ? एतान्यपि तद्वत् । यो निवीते पूर्वः पक्षः, स एतेषां पूर्वः पक्षः । यो मध्यमः, स मध्यमः । यः सिद्धान्तः, स एव सिद्धान्तः । अर्थवत्वात् मनुष्यसंबन्धाच्च विधयो मनुष्यधर्माश्च इति पूर्वः पक्षः । उपरि मूले च अनियमात् साधनम् । अशृतं रोगदत्वात् रौद्रम् । पूर्णेऽपि स्फुरत्वात् लाघवम् । एव आयुतं शिरसि निहितं मनुष्याणां गुणतरमेव । अर्थप्राप्तत्वात् अनुवादः इत्युत्तरः पक्षः । विधिः कर्मधर्मप्रायात् समाख्यानाच्च कर्मधर्मः इति पक्षः । अन्वाहार्ये दक्षिणासु च इति वाक्यसमुच्चय-नुग्रहात् पक्षः । आविध्ये इति वाक्यभेदप्रसङ्गात् । अर्थवादः इति प्रकरणात् विधिना एकवाक्यत्वादिति । ' पर्वणि लुनाति ' ' उपरि बिलात् गृह्णाति ' ' नवनीतेनाभ्यङ्क्ते ' ' अविदहता श्रपयितव्यम् ' इत्येभिः सह एषामेकवाक्यभावः । तस्मात् एते न विधयः ( किन्तु ) अर्थवादाः इति ।

वा— दिग्विभागपरुषिदितशृतादीनां निवीताधिकरणवत् सर्वे प्रकारा अवगमयितव्याः । का पुनरत्र अतुल्या शङ्का व्यावर्तयितुमविदेयः क्रियते ? किमर्थं वा अधिकरणद्वयमारभ्यते ? तदुच्यते । 'पुरुषकल्पस्याल्पेन मनाग्यत्नेन विना । दिग्विभागस्य संबन्धान्निवीतातुल्यतामतिः ॥ इतरेषां तु पर्यन्तसंबन्धेऽपि फलोदयः । पुरुष प्रति विस्पष्टस्तत्क्रियाऽन्तर्गतात्मनाम् ॥' स्वाभाविक दिगादीनां सर्वक्रियाऽङ्गत्वं न निवीतपदपूर्वं निघातव्यम् । तत्र मनुष्यधर्मत्वेऽपि नियमफलमात्रकल्पनमेव, न क्रियाफलकल्पना । तदपि च लौकिकीनामेव क्रियाणां अनियमापन्नं अपेक्षावशात् कल्प्यते, नान्यत् स्वर्गादि । तेन एवमापाति - ' यावत् किञ्चित् मनुष्याः स्वार्थं कर्म अनुतिष्ठन्ति, तत्र प्रतीची उदीची च अङ्गं भवति । यावच्च दर्भलवनम्, तत् अन्तरा कर्तव्यम् । यावत् मीयते, तत् पूर्णेन मातव्यम् । यावच्च स्नेहकार्यम्, तत् सर्वं विलीनेन नवनीतेन निष्पक्व-आयुतशब्दवाच्येन कर्तव्यम् । नैर्ऋतरौद्रयोश्च विदग्धत्व-अशृतत्वे कर्तव्ये ' इति । तेन अत्रापि पूर्वतुल्यं न साधयितव्यं इत्यारम्भे ।

तत्र मनुष्यधर्मः ' शब्दस्य तत्प्रधानत्वात् ' ( ३।४। २।१ ) इति विनाऽपि षष्ठीनिर्देशात् ' अभजन्त ' इति मनुष्यसंबन्धात् तादर्थ्यम् । इतरेषु षष्ठी एव । तथा ' अपदेशो वा ' ( ३।४।१।२ ) इति लौकर्यात् प्राप्तिरभिधीयते । पूर्वाह्णे हि पुरुषः आदित्य कृष्या मुञ्च व्याप्रियन्ते इति प्रतीचीप्राप्तिः । तथा अन्तरालवन-पूर्णयोः अश्रयलाघव्यत्वात् प्राप्तिः । तथा विदग्धे कृष्णत्वात् एकवर्णनिर्ऋत्याख्यप्रभिनीर्धसंबन्धप्राप्तिः । अशृते च रोगदत्वात् रौद्रता । नियोक्तत्तु अप्राप्तेः सर्वत्र नियमविधिः । प्रकरणसमाख्याभ्यां च कर्मधर्मः । सर्वप्रमाणानुग्रहार्थं प्रकरणे मनुष्याधाने निवेशः । वाक्येन प्रकरणसमाख्ययोः

यथात् फलकल्पनाभावाच्च आतिथ्यादौ निवेश. । तेनापि सह सम्बन्धप्रमाणाभावात् प्रकरणे समविनश्च अनुत्कर्षात् ( ११२।२।२४ ) प्राचीनविधिशेषत्वाच्च अर्थवाद. इति सिद्धान्त । 'सम्यक्श्रुतयथाविदितविषय–अन्यविषय–स्तुतिविवेकसिद्धि.। ("सम्यक् श्रुत यथाविदितः अनुवादश्च विषयो यस्या. सा सम्यक्श्रुतयथाविदितविषया स्तुतिः । अन्यः उक्तविपरीतः विषयो यस्याः सा स्तुति. अन्यविषया । सम्यक्श्रुतयथाविदितविषया चासौ अन्यविषया चासौ इति विशेषणोभयपदः कर्मधारय. । सा चासौ स्तुतिश्च । विवेकेन सिद्धि. विवेकसिद्धि. । तादृशस्तुतेः विवेकसिद्धिः इति विग्रह । तत्र सम्यक्श्रुतत्व स्वसम्बन्धिमत्वेन भवनम् । यथा ' यथा प्रतीची उदीची मनुष्याणामुचिता, तथा प्राची देवानाम् ' इत्यत्र । विवेकश्च– ' निर्णीतोदाहरणे यदि औचित्येन स्तुति., ततोऽन्यत्रापि औचित्येन । यदि [illegible] विपर्ययेण स्तुतिः अत्रापि विपर्ययेण ' इति । इति सुधासक्षेप. । अत्र अक्षरशः सुधा यथा [illegible] विदग्धोदाहरणे वा ' विदग्धामूनत्वयो. कार्ष्ण्यंगोमदस्वपादकत्वेन अग्राह्यत्वात् अनिर्दहनप्रयत्नेव प्रशस्तम् ' इत्येवरूपत्वेन औचित्यविपर्ययरूपत्वाभावात् विदग्धोदाहरणात् विवेकेन उदाहरणान्तरेषु ईदृश्या. स्तुते. सिद्धि । " इति । )

सोम—( दिग्विभागपरुपिदिताधिकरणयो ) अतिदेशाविशेषेऽपि दिग्विभागस्य ' अभजन्त ' इत्याख्यातेन विधित्वस्य झटिति प्रतीतेः विधिप्रतीतितारतम्यात् अधिकरणद्वयस्य पौर्वापर्यं बोध्यम् । सूत्रे परुषिदित इति वाक्यानुकरणत्वात् अलुक्, विदग्धशब्दः अनुक्तोपलक्षणार्थश्च ।

वि— ' परुर्दिच्छिन्नमित्युक्त्या बर्हिषस्तु समूलताम् । घृत देव मस्तु पित्र्यमित्युक्त्या नवनीतकम् ॥ यो विदग्ध स इत्युक्त्या पुरोडाशस्य पक्वताम् । स्तौति पूर्वोत्तरौ पक्षौ योजनीयौ निवीतवत् ॥ '

भाट्ट— दर्शपूर्णमासयोः ' पर्व प्रति जुहोति ' इत्यादिविधेः ' यत् परुषि दि( त )न तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूल तत्पितृणाम् '-इति शेषः । तथा सोमे ' यत् पूर्वं तन्मनुष्याणा यदुपर्यर्धं तद्देवानाम् ' इति ' उपरि निलादृगृह्णाति ' इत्यस्य विधे. । तथा तत्रैव ' नवनीतेनाभ्यङ्क्ते ' इत्यस्य ' घृत देवाना मस्तु पितृणा निष्पक्व मनुष्याणाम् ' इति । तथा दर्शपूर्णमासयोः ' अनिर्दहता ( अपयितव्य ) शृतङ्कृत्य. ' इति विधे. ' यो विदग्ध स नैर्ऋतः ' इति । तत्र मनुष्यसम्पृक्तक्रियाविशेषस्य लवनादेरुपादानात्, तत्र च लवनत्वावच्छेदेन अन्तरात्वादिगुणाना नित्यप्राप्त्यभावात् विध्यन्तरकल्पनया तत्र अद्विधानम् । न च फलकल्पना, ' तस्मैवादो मनुष्यराज आगते ' इत्यादौ, ' नवन दक्षिणं दीक्षित. पूर्वमाङ्क्ते' इत्यादौ च शतशस्तस्या अङ्गीकारात् । अन्यथा तत्तत्स्मृतीनां तत्तदर्थवादोन्नीतविधिमूलकत्वानुपपत्ते. । ' यो विदग्धः ' इत्यत्र तु विदग्धनिर्ऋतिदेवनोभयसंबन्धस्य अप्राप्तत्वात् विध्यन्तरकल्पनाया नैव किञ्चि ज्ञापकम् । इति प्राप्ते, ' परुषि दि( त )नम् ' इत्यत्र दितपदस्य वैदिकलवनपरस्य ' अन्तरा ' इत्यत्रानुषङ्गेण तदर्थपरत्वे विरूपप्रसङ्गात्, अर्थान्तरपरत्वे वैरूप्यापत्ते. अनुषङ्गप्रयोगेन अध्याहारस्यासम्भवात्, ' यदन्तरा ' इति यच्छब्दयोगेन च लौकिकास्तयाद्यन्तिकान्तराकलनक्रियामुद्दिश्यैव मनुष्यसंबन्धस्य स्तुत्यर्थमनुवादप्रतीतेः लौकिकलवनत्वावच्छिन्ने अन्तरात्वस्याप्रतीते, तस्य च तद्व्यक्तौ नित्यप्राप्त्या न विध्यन्तरकल्पनम् । ' नवनं दक्षिण दीक्षितः पूर्वमाङ्क्ते सव्यं हि मनुष्या आञ्जते ' इत्यत्र तु मनुष्यकर्तृकाञ्जनत्वावच्छेदेनैव सव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानात्, तादृशस्य च नित्यप्राप्त्यभावेन विधिकल्पकत्वमिति विशेष. । यादृशस्य हि स्तुत्यर्थमुपादानम्, तादृशस्य नित्यतदप्राप्तौ विधिकल्पन नान्यथा । अत एव ' यो विदग्ध. ' इत्यादौ विदग्धत्वनिर्दार्थ तस्य कर्मानर्हत्वफलकनिर्ऋतिसंबन्धमात्रस्य उत्प्रेक्षाविषयाभिधानात् निर्ऋतिसंबन्धस्य ' त यज निर्ऋतिर्गृह्णाति ' इत्यादौ कर्मानर्हत्वप्रयोजनकत्वावगतेः, उत्प्रेक्षाया च उत्प्रेक्षितार्थस्य प्राप्त्यभावेऽपि क्षतिविरहात्, निर्ऋतेः पक्षोपेक्षितत्वेन देवानर्हफलकत्वस्य प्रमाणान्तराप्राप्तत्वाच्च न विधिकल्पकत्वम् । न हि अप देवतासदितः, येन

तस्या अप्राशस्त्यादिभिः कल्प्येत । निन्दार्थे संबन्धसामान्येनापि तदुपपत्ते. । अतो नैते विध्यन्तरकल्पकाः ।

मण्डन— ' पूर्णाविदग्धं विहितं स्तवाय । ' ३.

शंकर— ' पूर्णतादि च तद्वत् स्यात् । ' ९. ( तद्वत् निषीतवत् । ) ।

· ☒ परुषिदितपूर्णघृतविदग्धं च तद्वत् । ३।४।३।११॥

दर्शपूर्णमासयोः ' यत् परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्, यत् समूलं तत् पितृणाम् ' इति श्रूयते । तथा ' यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवतः । तस्मादविदहता श्रपयितव्य सदेवत्वाय ' इति च । ज्योतिष्टोमे च श्रूयते– ' यत् पूर्णं तन्मनुष्याणाम्, उपर्यर्धो देवानाम्, अधः पितृणाम् ' इति, तथा ' घृतं देवानाम्, मस्तु पितृणाम्, निष्पक्वं मनुष्याणाम् ' इति । तत्र मनुष्यसंबन्धेषु रौद्रे च विचारः । तत्र विधयः इति पूर्व. पक्ष. । परुषि पर्वणि दितं छिन्नं बर्हिः, पूर्णः सोमरसेन ग्रहश्चमसो वा, घृतं स्त्यानं दध्योतत् आज्यम्, विदग्धः अग्नेरूष्मणा शुष्कः, एतेषां समाहारः । परुषिदितपूर्णघृतविदग्धं च द्रव्यम्, तद्बोधकं वाक्यजातम्, तद्वत् द्विविभागवाक्यवत् न विधिः किन्तु अर्थवादः । ' पर्वं प्रति कुनाति ' ' उपरि बिलाम् गृह्णाति ' ' नवनीतेनाभ्यङ्क्ते ' ' अविदहता श्रपयितव्यम् ' इत्येतैः विधिभिरन्यैः एकवाक्यत्वात् प्रकरणाच्च । तस्मादेते न विधयः, किन्तु अर्थवादा इति सिद्धान्तः । ' परुषि ' इति पदं सर्वैरेव पृथङ्मुद्रितम् । तदयुक्तम् । तत्र सोमनाथी-सूत्रार्थग्रन्थे ' परुषिदितमिति शब्दानुकरणत्वात् अलुक् ' इति । श्रौतशब्दार्थस्तु– परुषि पर्वणि दितं खण्डितम् । अन्तरा मूलपर्वणोर्मध्ये ( इति सोम. ) । विदग्धः अग्नेः ऊष्माधिक्येन श्यामः । अशृतः अपक्वः । के.

● परोक्षात् प्रत्यक्षं बलीयः । ' सामान्येन यत् प्राप्नोति, तत् परोक्षं लक्षणया । यत्तु विशेषेण तत् प्रत्यक्षं श्रुत्या । श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात् ' । भा. ३।६।३।१०.

● परोक्षत्वं साक्षात्करोमि इत्येतादृशविषयताशालिज्ञानाविषयत्वम् । मणि. पृ. ११६.

● यथा च अर्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते, तथा परोक्षवृत्त्याऽपि । शा. ३।२।१३।२९ पृ. ५६६.

● परोपकाराय प्रपाखडागानि च, न धर्माय इत्येवावगम्यते । तथा च दर्शनम् ' धन्वन्निव प्रपा असि ' इति ( यथा धन्वनि निरुदके कृता प्रपाः परेषामुपकुर्वन्ति, एवं त्वम् । ) । भा. १।३।१।२ पृ. १६६.

☒ परोपकाराय सतां विभूतयः इति न्यायः । यत्र परोपकारविवक्षा, तत्रास्य प्रवृत्तिरिति । उक्तं च ' परिनिर्मथ्य वाग्जालमिदमेव सुनिश्चितम् । नोपकारात् परं पुण्यं नापकारादघं परम् ॥ ' । साहस्री. १०००.

● परोपकारश्रुतेः सर्वसाधारण्यम् । सु. पृ. १२७.

☒ पर्जन्यन्यायः । यथा पर्जन्यो जलेऽपि वर्षति स्थलेऽपि वर्षति । एवं विवक्षाया प्रवर्ततेऽयं न्यायः । अयम् ' हलो हल् ' पा. १।२।९३ इति सूत्रमहाभाष्येऽभिहितः । तद्यथा– कृतकारि खल्वपि शास्त्रं पर्जन्यवत् । तद्यथा पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति इति । किञ्चास्य भ. गी. अ. ९ श्लो. ९ टीकायां नीलकण्ठेनाप्युदाहृतः । तथाहि– ' उदासीनवदासीनम् ' इति । यथा पर्जन्यो बीजविशेषेषु रागं केषु चित् द्वेषं चाकुर्वन् उदासीनः सन् वर्षति, एवमीश्वरोऽपि पुण्यवत्सु रागं पापिषु द्वेषं चाकुर्वन् फलं प्रसूवतीति प्रोक्तमिति । साहस्री. ६२९.

● पर्णता ग्रहणस्थितक्रत्वपूर्वार्था, न ग्रहणनिरूपार्था । सोम. १२।२।२.

● पर्णतादीनामनारभ्याधीतानां प्रकृतौ निवेशः, विकृतौ तु अतिदेशेन प्राप्तिः । बिन्दु ३।६।१.

● पर्णतान्यायः । ( ३।६।१ ) । अत्र प्रकृत्यर्थता उक्ता । अधिकरणं तु मीकोः. पृ. २७३ ' अनारभ्याधिकरणम् ' इत्यत्र द्रष्टव्यम् । के. ● पर्णतान्याय । ( ४।३।१ ) । अत्र फलश्रुतिरर्थवाद इत्युक्तम् । के. ' पर्णमयीन्याय. ' इत्यत्रापि द्रष्टव्यम् । ● अध्ययनाय-पतीतासंस्पर्शाभिज्ञानं च क्रतुप्रवृत्तिविरोध्यपि, अतः

कथं तस्य ऋत्वङ्गता पर्णतान्यायेन भवेत्। आभरणं. ३।४।१।२-३.

* न च गुणकामानां विकृतौ अप्रवृत्तिः, वषट्कारस्य 'एष वै सप्तदशः प्रजापतिः यज्ञे अन्वायत्तः' इत्य- नारभ्याधीतवचने साक्षाद्यज्ञोद्देशेन विधानात् पर्णता- न्यायाभावेन प्रकृतिविकृतिसाधारण्येन उपदिष्टतया विकृतावपि ईदृशगुणकामप्राप्त्युपपत्तेः। भाट्ट. १०। २।२१

* पर्णतावाक्ये अव्यभिचरितक्रतुसम्बन्धस्याश्रयणानु- रूपणा विधौ अङ्गीकृत्य वाक्यशेषस्य प्राशस्त्यलक्षणाऽपि अङ्गीकर्तव्या। परिमल. ३।३।२७।४२ ब्रम्.

* 'पर्णन्यायोऽतिदिष्टे स्यात्'। पर्णवाक्यात् पर्णतायाः यावत्क्रतुप्रवेशो जुहूद्वारम्। सा च जुहूः प्रकृतावेव विहिता विकृतिषु धर्मत्वातिदिश्यते। वि ३।७।२०.

* पर्णमयी जुहूः (पर्णमयी पलाशकाष्ठजन्या)। भा. ३।८।१।१.

* रात्रिसत्राधिकरणे (४।३।८।१७-१९) प्रकारान्तरेण फलाकाङ्क्षायां प्रशान्तेः, अन्यथा स्तुतिसमर्पकस्यैवार्थ- वादस्य फलसमर्पकत्वम्, तदुम्बरतापर्णतादीनां तु क्रतूप- कारेण फलाकाङ्क्षाशान्तेः नागतिकल इति प्रतिपादनार्थं पर्णमय्यधिकरणम्। के. * पर्णमय्यधिकरणे अपापश्लोकश्रवणादीनां प्रशंसार्थत्वेन उपात्तानां फलत्वा- भावः वक्ष्यते। १।२।१।७ पृ. ३५, * पर्णमय्य- धिकरणे तीर्थस्नाने (तीर्थे एव समानानां भवति इति) फलश्रुतेः फलसमर्पकत्वपूर्वपक्षः निराकरिष्यते। पृ. १४६५. * पर्णमय्यधिकरणे साध्यसाधनविचारः। औदुम्बरे तु साधनत्वाद्वारा। के. (शा. १।२।२)। * अपापश्लोकश्रवणादीनां फलत्वेन प्रतिपादनं न संभवति 'स्वर्गकामः' इत्यादिवत् कामशब्दप्रयोगाभावात् इति पर्णमय्यधिकरणे वक्ष्यते। सोम. १।२।२. * औदु- म्बरत्वादेः यूपार्थत्वेनैव नैराकाङ्क्ष्यं रात्रिसत्रवत् फलान- पेक्षत्वात् इति पर्णमय्यधिकरणे वक्ष्याम। कौ. १।२।२। २२. * कर्मपदनिरपेक्षसमभिव्याहारमात्रप्रमाणकस्य च साध्यत्वस्य पर्णमय्यधिकरणे निराकरिष्यमाणत्वात् फलत्वाभावेन पूतत्वादीनां कर्मप्रवृत्तिकारणत्वं नास्ति। सु. पृ. ४९०. * न चैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुम् इति पर्णमय्यधिकरणे वक्ष्यामः (४।३।१।१)। शा. १।२।१. * प्रथनात् यजपतिप्रथनं पुरोडाशप्रथनस्य फलत्वेन कीर्त्यते स्तुत्यर्थं वेति जिज्ञासितुं व्याचष्टे। एवं मान्त्रवर्णिकफलश्रवणसंभवेन यजपति- प्रथनस्य फलत्वानपायात्, पर्णमय्यधिकरणे निराकृतत्वेन च जिज्ञासाऽनुपपत्तेः अपरितोषात् मन्त्राभिप्रायेण व्याचष्टे। सु. १।२।४।३५ पृ १०७, * मान्त्रवर्णिकफल- श्रवणसंभवेन यजपतिप्रथनस्य फलत्वानपायात् पर्णमय्य- धिकरणे निराकृतत्वेन न जिज्ञासाऽनुपपत्तिः। पृ १०७. * वेदाध्ययनमात्रस्य यत् फलम्नानमिव दृश्यते 'यंयं क्रतुमधीते तेनतेनास्येष्टं भवति' (तैआ. २।१५) इति तस्यापि चतुर्थतृतीयपादे पर्णमय्यधिकरणे अर्थवादता वक्ष्यति। वेदनार्थी. १।१।१।१.

* पर्णमय्यधिकरणन्यायः अर्थवादकल्प्यफल- विषयः। सु. पृ. ८७३. * पर्णमय्यधिकरणन्यायेन पूर्णाहुतेराधानाङ्गभूतकर्मरूपत्वात् प्रयाजादिवत् प्रयोजना- नपेक्षत्वम्। कौ. १।२।१।४. * 'य सत्राय दीक्षितानां म्रियेत अपि तस्य फलम्' इति फलरूपोऽर्थवाद: पर्णमय्यधिकरणन्यायात्। रत्न ६।२।९।२५.

* पर्णमय्यधिकरणसिद्धः अभिचयनस्य फलवद- फलत्वविचारः। सु पृ ९४९.

* पर्णमय्यधिकरणसूत्रे एव 'खादिरं वीर्य- कामस्य यूपं कुर्यात्' इत्येवमाद्यायां फलप्रधानायां श्रुतौ फलमुच्यते इति वदता सूत्रकृता कामपदयुक्तायां श्रुतौ फलार्थत्वं वक्ष्यते। पृ. १४६८.

* अनारभ्याधीतत्वात् उपास्तीनां वाक्यात् क्रतु- संबन्ध एव सिध्यति, न फलसंबन्ध इति वक्तुं पर्ण- मयीत्वामुदाहरति ......। एतत् पूर्वपक्षे। कल्पतरु. ३।३।२७।४२ ब्रम्.

* पर्णमयीत्वं क्रत्वर्थम्, न पुरुषार्थमपि, अपाप- श्लोकश्रवणं तु अर्थवादः। भा. ४।३।१।१-३. * पर्णमयीत्वस्य क्रतुसंबन्धो वाक्येन। वि. ४।३।१, * पर्णमयीत्वस्य फलश्रवणमर्थवादः। ४।३।१.

* सा च फलश्रुतिः ( 'यस्य पर्णमयी० न स पापं श्लोकं शृणोति' ) न फलपरा फलान्तरकर्तव्यत्वात् पर्णतादेः फलोपपत्त्यायोगात् । अतः सा अर्थवाद एवेति पर्णमयीत्याधिकरणे ( ४।३।१।१ ) समर्थितम् । तथा आत्मज्ञानेऽपि फलश्रुतिरर्थवाद एव स्यात् इत्याह ( पूर्वपक्षी ) । न्यायनि. ३।४।१।२ सू.

‡ पर्णमयीन्यायः । पर्णतान्यायः । ( फलश्रुतिः अर्थवादः ) ॥

द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् । ४।३।१।१ ॥

भाष्यम्—'यस्य खादिरः स्रुवो भवति स छन्दसामेव रसेनावद्यति सरसा अस्याऽऽहुतयो भवन्ति' । 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इति । 'यस्याऽऽश्वत्थ्युपभृद्भवति ब्रह्मणैवास्यान्नमवरुन्धे' । 'यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्ति अथो प्रैव जायते' 'यस्यैवंरूपाः स्रुचो भवन्ति सर्वाण्येवैनं रूपाणि पशूनामुपतिष्ठन्ते, नास्यापरूपमात्मञ्जायते' इति । तथा ज्योतिष्टोमे संस्कारे फलश्रुतिः 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' । तथा 'केशश्मश्रु वपते, दतो धावते, नखानि निकृन्तते, स्नाति, मृता वा एषा त्वगमेध्या याऽस्यैतदात्मनि शमलं तदेवापहत्य मेध्य एव मेधमेनमुपैति' । कर्मणि फलं श्रूयते 'वर्म वा एतौ यज्ञस्य यदाघारौ' 'चक्षुषी वा एतौ यज्ञस्य यदाज्यभागौ' 'यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै' इति । अत्र संदेहः । किमिमे फलविधय उतार्थवादा इति । किं प्राप्तम् ? फलविधयः, प्रवृत्तिविशेषकरत्वात् फलविधेः । 'यथा खादिरं वीर्यकामस्य यूपं कुर्यात्, पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्य' इति । यथैते फलविधय एवमिहापि द्रष्टव्यम् । एवं प्राप्ते, ब्रूमः । फलार्थवादा इति । कुतः । परार्थत्वात् । द्रव्यसंस्कारकर्माणि परार्थान्येतानि । जुहूः प्रदाने गुणभूता, उपभृद्धारणे, ध्रुवा आज्यधारणे, अञ्जनवपनादि च यजमाने, आघाराज्यभागौ प्रयाजानुयाजाश्च आग्नेयादिषु । यदि फलेऽपि गुणभावः स्यात्, अन्यत्रोपदिष्टानामन्यत्र पुनर्गुणभाव उपदिष्ट इति प्रतिज्ञायेत । न चैतन्न्याय्यम् । परार्थता हि गुणभावः । प्रत्यर्थता चैषां शब्देन, जुह्वा जुहोति– जुह्वा होममभिनिर्वर्तयतीति । एवं सर्वत्र । तस्मान्नैते पुरुषार्थाः ।

टुप्—अपापश्लोकश्रवणार्थिनः उपायमनिच्छतः पर्णमयीत्वमुपायत्वेन विधीयते । जुह्वाश्च जात्याकाङ्क्षायां पर्णमयीत्वं परिच्छेदकत्वेन विधीयते । तत् ( पर्णमयीत्वम् ) उभे अपि नियन्तुकीकर्तुं शक्नोतीत्युभाभ्यां संबन्ध्यते । 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्यनारभ्याधीताः ( पर्णमयीत्वादि ) जातिविशेषाः क्रत्वर्थाः पुरुषार्थाश्च, यथा खादिरत्वादयः । अथवा 'जुह्वा जुहोति' इति प्रकरणे जुहूर्विहिता 'न स पापं श्लोकं शृणोति' इत्यनेन पुरुषार्थतया विधीयते । सा च साध्यसाधनत्वादवेनोपपन्नस्य इति वर्तमानापदेशस्यापि विधायिका शक्तिः कल्प्यते । भवतिश्च भावयतिस्थाने इति । 'यदाङ्क्ते' इत्येवमादिष्वप्येवं योज्यम् ।

एवं प्राप्ते, ब्रूमः । जुह्वा क्रत्वर्थतया विधीयमानाया यदिदं तत्फलसेपोऽर्थवादः स्तावकत्वेन । विश्वजिन्न्यायेन फलमशक्यं कल्पयितुम् । यथा प्रणयनं अभूत् तथाविधा जुहूमाश्रिता जातिर्गुणकामनाऽपि नास्ति, आश्रयव्यतिरिक्तवर्तमानत्वात् । जुहूराश्रय इति चेन्न, द्रव्यत्वात् । औदासीन्यमाचरन्नेवो ह्याश्रयः । क्रिया च तथा, न द्रव्यम् । दीयमानोऽपि ( आश्रयः ) वाक्येन दीयते । तत्र वाक्यभेदः । स चाऽऽश्रयान्तरमपेक्षते । न चाऽऽश्रयो विपरिवर्तते । तस्मात्क्रतुगतकर्त्वर्थाया जुह्वा जातिमपेक्षमाणायां ( तदङ्गत्वेन ) जातिर्विधीयते । तस्यां विधीयमानायां फलश्रुतिरर्थवादः, परार्थत्वात् ।

उत्पत्तेश्चातत्प्रधानत्वात् । २ ॥

भाष्यम्—अर्थोच्येत । पुरुषमपि प्रति गुणभाव उपदिष्टः 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इत्येवमादिभिर्वाक्यैरिति । तच्च न । कस्मात् ? उत्पत्तेरतत्प्रधानत्वात् । न तत्र पर्णमय्या जुह्वा अपापश्लोकश्रवणं क्रियत इत्यभिप्रायेणाह । एतावत् श्रूयते, यस्यासौ भवति न स पापं श्लोकं शृणोतीति । एतावदत्र शब्देन गम्यते, यस्यैवंरूपा जुहूस्तस्य-

पापश्लोकश्रवणमिति । तत्र जुहूः तत् क्रियते जुहूर्वा तद्रूपति नैतच्छब्द आह । ननु अनुमानादेतद्गम्यते । ध्रुवं पालाश्या जुहा तत्क्रियते, यतस्तस्यां सत्यां तद्भवतीति । अत्रोच्यते । नैवंजातीयकं कार्यकारणत्वेऽनुमानं भवति । कार्यकारणसंबन्धो नाम स भवति, यस्मिन्सति यद्भवति यस्मिंश्चासति यन्न भवति तत्रैव कार्यकारणसंबन्धः । इह तु तद्भावे भावो ज्ञातः, नाभावेऽभावः । यस्य पालाशी न भवति तस्यापापश्लोकश्रवणं नास्तीति नैवंजातीयकः शब्दोऽस्ति । तेन न नियोगतोऽवगम्यते, तेनेदं क्रियते इति । लक्षणमेतज्जुहूत्वस्य गम्यते । तस्मान्नानुमानम् ।

अपि च, यस्यापि जुहूः पालाशी भवति तस्यापि पापश्लोकश्रवणं भवति । कथमवगम्यते ? प्रत्यक्षतः । ननु एवं सत्यग्निहोत्रेणापि फलं न साध्येत । न ह्यग्निहोत्रेण फलं दृश्यत इति । नैष दोषः । न हि तत्रोच्यते तावत्येव फलं भवतीति । इह तु वर्तमानाया जुहूसत्ताया वर्तमानस्य पापश्लोकश्रवणस्य प्रतिषेधः । तस्माच्च तत्रानुमानम्, इदं कार्यमिदं कारणमिति । अग्निहोत्रादिषु तु शब्देनैव कार्यकारणसंबन्ध उच्यते । तस्मात्तत्र तत्कालेऽदृश्यमानेऽपि फले कालान्तरे फलं भविष्यतीति गम्यते, न त्वेवंजातीयकेषु । तस्मादेवंजातीयकेभ्यः फलमस्तीति । ननु ' यस्य पालाशी जुहूर्भवति न स पापं श्लोकं शृणोति ' इत्येवमुक्ते सा एव तत्फलं भवतीति गम्यते । तस्मादिहापि कालान्तरे फलं भविष्यतीति । उच्यते । सत्यं गम्यते । प्रमाणं तत्र किमिति विचारयामः । न तावत् प्रत्यक्षम्, नानुमानम्, नेतरद् दृष्टविषयमुपमानादि । नो खल्वपि शब्द इत्येतदुक्तम् । वाक्यार्थोऽपि पदार्थोपजनितो भवति नान्यथा । तदुक्तम् ' तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ' इति । तस्मादप्रमाणमूलत्वात् मिथ्याविज्ञानमेतत् । लौकिकेषु तु वाक्येष्वेवं गम्यते । तानि हि विज्ञानेऽर्थे प्रयुज्यमानान्यध्याहार्यपदानि गौणानि विपरिणतान्यव्यवहितार्थानि च प्रयुज्यन्ते । तस्माच्चात्रादरणात् वचनादागम्येष्वप्यर्थेषु भवति तत्कृतो मिथ्याप्रत्ययः, यथा मृगतृष्णादिषु । अपि च वर्तमानापदेशोऽयम् । न चायमर्थो वर्तमानः । तस्माच्च खादिरस्रुवादिवद्वादे तत्फलं भवेत् । तदेवमापतति । खादिरादौ सति भवति तत्फलं नापि भवति । असत्यपि भवति वा न वेति । नैवं विज्ञायते कुतस्तत्फलमिति । तस्मादेवंजातीयकेषूच्चरितेषु न क्वचित् प्रवृत्तिर्न कुतश्चिन्निवृत्तिरिति आनर्थक्यमक्रियार्थत्वात् । अर्थवादे तु सति भवति प्रयोजनं खादिरादेः स्रुवादिषु कर्मार्थेषु प्रयोजनवत्सु । यद्येषां क्रतुं प्रति प्रयोजनवत्ता न स्यात्तत एतदेव फलं कदाचित् शब्दश्रुत्या भवेद्वा न वेति विचार्येत । सति तु पारार्थ्ये नैव सा निष्छन्दप्रवृत्तिराश्रयितुं शक्यते । कैमर्थ्ये हि सा कल्प्येत । तस्मादेवंजातीयका अर्थवादाः । अर्थवादत्वे चावर्तमाने लक्षणया वर्तमानः शब्दः प्रशंसार्थ उपपत्स्यते ।

टुप्— उत्पत्तेश्चातत्प्रधानत्वात् इत्यनेन साध्यसाधनसंबन्धं निराकरोति । न जातिर्नापि जुहूर्विधीयते साधनतया । कुतः ? शब्दाभावात् । अर्थवादो विधायक इति चेदेवं साध्याभावः । उभयपरत्वे वाक्यभेदापत्तेः । तदुक्तम् ' विधौ च वाक्यभेदः स्यात् ' इति । तन्निमित्तवदिति चेत् । उच्यते । तत्रार्थान्तराभावादुक्तम् । इह त्वर्थान्तरमस्ति क्रतूपकारः । जुह्वा अपापश्लोकश्रवणं क्रियते इति शब्दास्तावत् संबन्धो नास्ति । यस्य पर्णमयी जुहूस्तस्यापापश्लोकश्रवणमिति, न चैतत् प्रत्यक्षेण गम्यते । व्यभिचरितत्वाच्चानुमानम् । तस्मात् क्रतुसंबन्धात् न पुरुषार्थता ।

फलं तु तत्प्रधानायाम् । ३ ॥

भाष्यम्— अथ यदुक्तम् ' यथा खादिरं वीर्यकामस्य यूपं कुर्यात्, बैल्वमन्नाद्यकामस्य, पालाशं ब्रह्मवर्चसकामस्य ' इति । युक्तं तेषु । विधिविभक्तिः कुर्यादिति वीर्यखादिरसंबन्धस्य विधात्री । न च वर्तमानापदेशिनी । तस्मात् तत्राविरोध इति । एवं हि पदवाक्यार्थन्यायविदः श्लोकमामनन्ति— ' कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥ ' इति । विधिविभक्तिं हि विधायिकां लिङं मन्यमानास्त एवं समामनन्ति । अस्ति चात्र विधिविभक्तिः । तस्माद्युक्तमेतदिति ।

टुप्— ( साध्यसाधनत्वप्रतिपादनप्रधानायां श्रुतौ युक्ता फलविधिरिति तत् व्याचष्टे— ) ग्रहादिराढीनां नूभय संयोगात् युक्ता उभयार्थता ।

सोम— 'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रे प्रथमोपात्तक्रत्वर्थपदसूचिता क्रतुप्रयुक्तिः पादद्वयेन विचारिता । इदानीं चरमोपात्तपुरुषार्थपदसूचितफलप्रयुक्तिर्विचार्यते इति पादान्तरस्य आनन्तर्यं च बोध्यम् । सूत्रार्थस्तु— यस्य पर्णमयीति द्रव्ये यदाङ्क्ते इति संस्कारे यत्प्रयाजा इज्यन्ते इत्यर्थकर्मणि च फलश्रुतिः अर्थवादः सैषा क्रत्वर्थान् इति ।

वि— 'जुह्वाः पर्णमयीत्वेन न पापश्रुतिरञ्जनात् । वैरिदृग्वृजन, वर्मं प्रयाजैः, पुरुषाय किम् ॥ क्रत्वे वाऽभिनो मानात् फलस्य न हि साध्यता । विभाति क्रत्वे तस्मादर्थवादः फलं भवेत् ॥'

भाट्ट— अनारभ्य 'यस्य पर्णमयी जुहूर्भवति, न पाप श्लोक शृणोति' इति श्रुत द्रव्यम्, सोमे 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति श्रुत संस्कारः, 'यत्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इति श्रुत कर्म च नापापश्लोकश्रवणादिरूपफलार्थं कामशब्दाद्यभावेन वर्तमानापदेशस्य फलपरत्वानुपपत्त्या अर्थवादत्वस्यौदुम्बराधिकरणे साधितत्वात् । न च स्तुतिपरस्याप्यस्य लक्षणया फलपरत्वम्, एकस्यार्थद्वयपरत्वे वाक्यभेदात् । न च सन्निहितवस्तुसंस्थितत्वेन कामपदयुक्तपदान्तरकल्पनया फलपरत्वम्, तद्वदिह वाक्यादिप्रमाणेन जुह्वाद्यर्थत्वस्यावगततया फलाकाङ्क्षाविरहात् । न च कर्मोदाहरणे प्रकरणागम्यकर्त्वर्थस्यापेक्षया स्ववाक्योपस्थितफलपदकल्पनायामेव वैमुख्यमल्पबलमिति वाच्यम्, विध्यादीनां फलकल्पनात. स्वल्पफलप्रकारत्वेन फलवैचित्र्यात् । इष्यत एव हि प्रकृत प्रमाणोपस्थितक्रत्वाकाङ्क्षापरकवैकल्पाङ्गत्वागमेनैव दुर्बलनिराकाङ्क्षप्राकृताङ्गग्रहण विकृतौ बलाबलमानेन । अतो नैते फलप्रयुक्ता उभयप्रयुक्ता वा । अपि तु क्रतुप्रयुक्ता एवेति फलकामनायामसत्यामप्यनुष्ठेयाः । औदुम्बराधिकरणसिद्धस्याप्यस्यार्थस्य प्रयुक्तरूपप्रयोजनसूचनार्थं पुनरुक्तिः ।

मण्डन— 'द्रव्यादिफलवाक् स्तुत्यै ।'

शंकर— 'द्रव्यादौ न फलार्थता ।'

● पर्णमयीन्यायेन 'शोभतेऽस्य मुखं य एवं वेद' इत्यस्य फलपरत्वासंभवेन अर्थवादत्वं सिद्धान्त्यते । कौ. १।२।१।३. ● उपासनासु फलश्रुतेः पर्णमयीन्यायेन अर्थवादत्वेऽपासनानां क्रत्वर्थत्वेन समुच्चयनियमः इति आशङ्का । भामती. ३।३।३६।६१ ब्रसू.

● वेदान्तप्रतिपाद्यस्यात्मनः पारार्थ्यक्रत्वव्यभिचारयोरभावात् इह पर्णमयीन्यायानुन्मेषेण तदुज्जीवनार्थं अग्निश्रुतिलिङ्गादिवर्णनमित्येव व्याख्यातुं युक्तम् । परिमल. ३।४।१।१ ब्रसू.

● 'एतदुपोद्बलनार्थम्' इति टीकाग्रन्थः स्वयम् स्वतन्त्रस्याचारादेः पर्णमयीन्यायप्रापकमपेक्ष्य उन्मेषपरत्वेन व्याख्यातुं न युक्तः, किन्तु देहातिरिक्तस्य वेदान्तप्रतिपाद्यस्यात्मनः परार्थत्वाभावात् अव्यभिचारक्रतुसंबन्धाभावाच्च इह पर्णमयीन्यायस्य अनुन्मेषप्राप्तौ आचारादिकमपेक्ष्य तदुन्मेषपरत्वेन व्याख्यातुं युक्तः । इति आशङ्का । परिमल. ३।४।१।२ ब्रसू.

● न तावदार्थवादिकं फलं ( सोमे दधिग्रहस्य ) पर्णमयीन्यायविरोधात् । भाट्ट. ४।४।५.

● पर्यग्निकरणं गुणकर्म, न प्रधानकर्म । भा. २।१।४।९–१२. ● पर्यग्निकरणं दर्भोल्मुक्या त्रिः प्रदक्षिणीकरणम् । वि. ३।६।७. ● पर्यग्निकरणं पुरोडाशयोः । नहि पशौ दृश्यते, 'आहवनीयादुल्मुकेन पशुं पर्यग्नि करोति' इति । भा. ८।२।२।१२.

● पर्यग्निकरणान्ताङ्गरीतिः उपाकरणमारभ्य पर्यग्निकरणान्तानि यानि पशोरङ्गानि तेषामेकः समुदायः इति । 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' अत्र सा रीतिः । [illegible], २।३।८.

● पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेध. अश्वमेधे परस्वत्यागे । भा. ९।४।१३।५१–५५.

● पर्यग्निकरणगुणकर्मत्वं त्वाष्ट्रपात्नीवतस्य 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति । पर्यग्निकरणोत्तरभावीनि अङ्गानि तु नानुष्ठेयानि । वि. २।३।८.

* ' पर्यग्निकृत पान्नीवतमुत्सृजन्ति ' इत्यत्र पर्यग्नि करणान्तत्वस्य गुणस्य विधि । वि २।३।८

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् । १।४।१३।५१॥

अश्वमेधे ' ईशानाय परस्वत आलभेत ' इति प्रकृत्य ' पर्यग्निकृतानारण्यानुत्सृजन्ति ' इति श्रूयते । तत्र आरण्यानामालम्भ उत्सर्गार्थ एव, उत पर्यग्निकरणान्ते संस्कारे संस्कृत्य उत्स्रष्टव्या इति कर्मशेषप्रतिषेध इति विचारे पूर्वपक्षमाह । पर्यग्निकृताना आरण्याना उत्सर्गे श्रुते आलम्भस्य तादर्थ्ये तदर्थत्व वहिर्नि सारणरूपो त्सर्गार्थत्व प्रत्येतव्यम् । उपधानवत् । यथा अग्निचयने 'एतत् खलु साक्षादन्न य एष चरुरे एतमुपदधाति' इति चयनार्थं एव चरु उपादीयते । एवमत्रापि उत्सर्गार्थं एव आलम्भ कर्तव्य इति ।

शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् । ५२ ॥

कर्मशेषप्रतिषेधोऽयम् । उत्सर्गार्थं आलम्भो विधीयते इति पूर्वपक्ष याथार्थ्यं नास्ति । कर्मशेषप्रतिषेध अर्थाभावात् । उत्सर्गार्थे आलम्भे अर्थाभाव आलम्भ वाक्यस्य निष्प्रयोजनत्व स्यात् । ' ईशानाय परस्वत आलभेत ' इति वाक्यमनर्थक भवेत् । तस्मात् आलम्भवचनेन दानमेव विधीयते । पर्यग्निकृतानिति वचन अङ्गान्तरप्रतिषेधार्थम् । इडान्तवत् । ' इडान्ता आतिथ्या सतिष्ठते ' इति इडोत्तराणामङ्गाना प्रतिषेधवत् । तस्मादीशानवाक्य यागविधि उत्सर्गवचन शेषकर्मप्रतिषेधार्थम् ।

पूर्ववत्त्वाच्च शब्दस्य सस्थापयतीति चाप्रवृत्ते नोपपद्यते । ५३ ॥

यथा अश्वमेधे ' ईशानाय परस्वत आलभेत ' इति प्रकृत्य ' पर्यग्निकृतानारण्यानुत्सृजन्ति ' इति श्रुतम्, तथा ऐकादशिन्यां ' त्वाष्ट्र पात्नीवतमालभते ' इति प्रकृत्य ' पर्यग्निकृत पात्नीवतमुत्सृजन्ति आज्येन शेष सस्थापयति ' इति श्रुत । इद वाक्यद्वय उदाहृतम् । तत्र आज्यस्यपात्नीवतस्य पात्नीवताङ्गयाग त्वस्य , शेषस्थापनात् । तत्र अनारब्धे असम्पन्ने यागे ' शेष संस्थापयति ' इत्यत्र ' संस्थापयति ' इति, ' शेषम् ' इति च शब्द नोपपद्येत । शब्दस्य पूर्ववत्त्वात् प्रवृत्तिपूर्वकत्वात् यागप्रवृत्तिपूर्वकत्वात् । प्रकृते ईशानवाक्य यदि यागविधि पर्यग्निवाक्य च पर्यग्निकरणादुत्तराङ्गप्रतिषेधक स्यात् तदैव तुल्यश्रुतित्वात् पात्नीवतवाक्यमप्युत्तरपर्यग्निवाक्य पात्नीवतयागस्य पर्यग्निकरणे चरमाङ्गभावात् ' आज्येन शेष संस्थापयति ' इति कर्मान्तरविधान च उपपद्यते । एव च ईशानवाक्य यागविधि पर्यग्निकरणवाक्य च कर्मशेषप्रतिषेधार्थं इति सिद्धम् ।

प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात् तत्कारित्वाद् यथा प्रयाजप्रतिषेधेऽग्रहण माज्यस्य । ५४ ॥

आलम्भ उत्सर्गार्थं एवेति पूर्वपक्षे दोषमाह सिद्धान्ती । यदि पशुद्रव्यस्य उत्सर्ग एव विधीयेत तत्र संस्काराणा उपाकरणादीनामपि अकर्म स्यात् प्रवृत्ते संस्कारप्रवृत्तेर्यज्ञहेतुत्वात् । यागप्रतिषेधे यागाभावे किमिति संस्कारा क्रियेरन्, तेषा तत्कारित्वात् यज्ञकारित्वात् । प्रतिषेधे संस्काराणा प्रवृत्तेर्यज्ञहेतुत्वात् तत्कारित्वात् संस्काराणामकर्म स्यात् । यथा उपसत्सु 'अप्रयाजास्ता अननुयाजा ' इति प्रयाजप्रतिषेधे प्रयाजार्थस्य आज्यस्य अग्रहण ग्रहण न क्रियते, तथा यागाभावे यागार्था संस्कारा अपि न क्रियेरन् । न चेद युक्तम् । तस्मात् ईशानवाक्ये यागविधिरेव स्वीकर्तव्य , संस्काराश्च कर्तव्या । शेषकर्मप्रतिषेधस्तु उत्सर्ग विधानात् ।

क्रिया वा स्याद्वच्छेदादकर्म सर्वहान स्यात् । ५५ ॥

' पर्यग्निकृतानारण्यानुत्सृजति ' इत्यत्र यदि यागस्य अकर्म स्यात्, तदा सर्वहान सर्वस्य संस्कारादि क्रियामात्रस्यैव हान त्याग स्यात् । तदयुक्तम् । तस्मात् अवच्छेदात् पर्यग्निकरणोत्तराङ्गमात्रस्य व्यवच्छेदात् विहितदेवतोद्देशेन द्रव्यत्यागरूपस्य यागस्य पर्यग्निकरणान्तस्य च संस्कारजातस्य क्रिया अनुष्ठान स्यात् । तस्मात् ईशानवाक्येन यागविधि उत्सर्गवाक्येन च

कर्मशेषानुष्ठानप्रतिषेधः इति सिद्धान्तः । वाशब्दः पक्षान्तरमाह । के.

* 'पर्यग्निकृतानामुत्सर्गे॰' (९।४।१३।५१) इत्यत्र पर्यग्निकृतानुवादेन तत्सर्गविधिः उत्सर्गानुवादेन वा पर्यग्निकृतविधिः इति चिन्तयिष्यते । सु. पृ.९३७.

■ **पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः, श्रुतिसामान्यादारण्यवत्, तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् । ११।२।१२।५१ ॥**

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते– 'तान् पर्यग्निकृतानुत्सृजन्ति, ब्रह्मसाम्नि आलभन्ते' इति । अत्र पर्यग्निकृतानां प्राजापत्यानां प्रजापतिदेवताकानां पशूनां उत्सर्गे श्रूयमाणे कर्मोत्सर्गः कर्मण एव उत्सर्गः प्रत्येतव्यः । आरण्यवत् श्रुतिसामान्यात्, अश्वमेधे यथा 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इति श्रुतिः तत्समानैव प्रकृता वाजपेयगता श्रुतिः । एवं श्रुतिसामान्यात् आरण्यवत् प्राजापत्यानामपि कर्मोत्सर्गः । यस्मात् पूर्वं कर्मोत्सर्गः तस्मात् ब्रह्मसाम्नि ब्राह्मणाच्छंसिसामकाले चोदनापृथक्त्वं कर्मान्तरस्य चोदना स्यात् । पूर्वं सप्तदश पशवः उत्सृष्टाः ब्राह्मणाच्छंसिसामकाले च अपरे सप्तदश पशवः आलब्धव्याः । इति पूर्वः पक्षः ।

**संस्कारप्रतिषेधो वा, वाक्यैकत्वे क्रतुसामान्यात् । ५२ ॥**

सिद्धान्ती आह । नायं कर्मशेषप्रतिषेधः किन्तु संस्कारप्रतिषेधः प्राप्तावसराणां संस्काराणां तदानीं प्रतिषेधः शक्यशेषेण च ब्रह्मसामकाले प्रतिपत्तव्यः । क्रतुसामान्यात् वाक्यैकत्वेन 'पर्यग्निकृतानुत्सृजन्ति' इत्यस्य 'ब्रह्मसाम्न्यालभन्ते' इत्यस्य च वाक्यैकत्वे सति संस्कारप्रतिषेधः प्रत्येतव्यः । येषामेव पूर्वमुत्सर्गस्तेषामेव परस्तात् आलम्भः । तस्मात् आलम्भोत्कर्षः ।

**वपानां चानभिघारणस्य दर्शनात् । ५३ ॥**

संस्कारप्रतिषेधे हेत्वन्तरमाह सिद्धान्ती । वपानां अनभिघारणस्य अभिघारणाभावस्य दर्शनात् संस्काराणां प्रतिषेधो ज्ञायते । 'रुक्षा वा एतर्हि वपा यदनभिघृता, ब्रह्म वै ब्रह्मसाम, यद् ब्रह्मसाम्न्यालभते तेनाशुक्राः, तेनाभिघृताः' इति । रुक्षा रूक्षा । यदि संस्कारप्रतिषेधः तर्हि जुहूः सवनीयप्रचारेण रेचितत्वात् प्रयाजशेषो नास्ति, तदभावात् अनभिघृतत्वं युज्यते । यदि तु कर्मप्रतिषेधः स्यात् ततो ब्रह्मसाम्नि आलम्भः कर्मान्तरे तत्र प्रयाजाः पुनरिज्येरन्, तेषां शेषः स्यात्, तेनाभिघारणं स्यात् इति अनभिघारणं नोपपद्येत । ततश्च संस्कारप्रतिषेधः, तस्मात् प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रविधानमिति सिद्धान्तः । के.

* **पर्यनुयोगो** नाम स भवति, यः स्वपक्षं साधयति विपक्षस्य च प्रतीपमाचरति । भा.३।१।६।१३ पृ. ६१४.

* **पर्यायः** । नहि गो गत्पर्यायः स तेनैव सह प्रयुज्यते । वा १।२।११।१२ पृ. ३२७. * दर्शपूर्णमासादीनां सर्वकामार्थता पर्यायेणेति निर्णयः । एकः प्रयोगः एकस्मै फलाय, अपरः अपरस्मै । भा. ४।३।११।२५–२६. * **पर्यायाणां** सहाप्रयोक्तृत्वस्य आनर्थक्यापत्तिप्रयुक्तत्वात् पर्यायत्वस्वरूपस्य अप्रयोजकत्वम् । सु. पृ. ५६०.

* **'पर्यास इति चान्ताख्या'** (५।३।४।८) अन्तिमस्तुचः पर्यासः । ज्योतिष्टोमे बहिष्पवमाने 'पवमानस्य ते कवे॰' इति तृचः पर्यासः । वि. ५।३।४.

* **पर्यासोत्तरकालता** बहिष्पवमाने आगन्तूनां स्तोमानाम् । माध्यन्दिनार्भवपवमानयोस्तु गायत्र्यादिष्वेव निवेशः साम्नाम् । भा. ५।३।४–५।७–१४.

* **पर्यासशब्दश्चान्तवचनो** लोके दृश्यते, यथा क्षेत्रपर्यासः नदीपर्यासः इति । भा. ५।३।४।८.

* **पर्युदस्तप्रतिप्रसवविधिः** (भट्टसोमेश्वरमते) 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यस्य पर्युदासत्वात् प्रतिप्रसवः 'अग्निष्टोमे प्रवृणक्ति' इति । बाल. पृ. १६.

* **पर्युदासः** अकर्तव्यत्वोक्त्यर्थत्वाभावः इति 'विशीनामेकदेशः स्यात्' इति सूत्रेण अधिकरणाय दशमे (१०।८।१।४) सिद्धान्तितम् । बाल. पृ. ९१. * पर्युदासः अनुयाजमहापितृयज्ञयोः येयजामहस्य होतृवरणस्य च । भा. १०।८।१।१–४. * पर्युदासोऽयं न निषेधः 'नेक्षेतोद्यन्तमादित्यम्' इति । प्रजापतिव्रतेषु । के. ४।१।३।३–६. * पर्युदासः कर्तव्यत्वाकर्तव्यत्वयोः

उदासीन. । बाल. पृ. ९९. * पर्युदासः ज्योतिष्टोमे पुरुषार्थदानपाकहोमाना दीक्षितकर्तृकत्वेन । भा. १०।८।७।१२-१५. * पर्युदासः तदन्यमात्रसंकोचनार्थः । सु. १।२।२ पृ ८. * पर्युदासः दीक्षितस्य दानहोमपाकप्रतिषेध । भा १०।८।७।१२-१५. * पर्युदासः नानुयाजेषु इत्यादौ । प्रतिषेधे सति शास्त्रस्य प्राप्तिः कल्पनीया, विकल्पापत्तेः । द्विरदृष्टकल्पना च । प्रतिषेधात् इन्द्रियाणां कोऽप्युपकारो भवतीति, विधौ क्रियमाणे । तस्मात् पर्युदासः । तत्र लक्षणा केवला, नादृष्टकल्पना । अदृष्टकल्पनायाश्च लक्षणा ज्यायसी । टुप्. १०।८।१।४, * पर्युदासः नानुयाजेषु इत्यादौ । 'समर्थः पदविधिः' इति समर्थयोः समासः । सामर्थ्यं च यदि लिङ्गसंख्यादिकं नापेक्षते राजशब्दः ततः स्यात् । ततः पुरुषेण सम्बध्यते । तस्माल्लिङ्गसंख्याविमुक्तः श्रूयमाणः समासे अवयवार्थो गम्यते, प्रतीतेः तुल्यत्वात् । एवं सन्देहः अर्थः । तस्मादुभयोरनुगमः कर्तव्यः । उभयोश्चानुगमाद्वाक्ये पर्युदासः सिद्धः । १०।८।१।४. * पर्युदासः 'नार्षेयं वृणीते' इति महापितृयज्ञे । भा. १०।८।१।१-४, * पर्युदासः 'न होतारं वृणीते' इति महापितृयज्ञे । १०।८।१।१-४. * पर्युदासः नञर्थः अन्योन्याभावः । तद्भिन्नत्वे सति तत्सदृशत्वं पर्युदासः । के पर्युदासो नानाविधः मीमांसाबालप्रकाशे सूक्ष्मतया विवेचितः । तत्र सर्वं 'पर्युदासविधिः' इति विन्दौ द्रष्टव्यम् । के. * पर्युदासः पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य । १०।८।७. मीको. पृ २३०३ 'नदीक्षिताधिकरणम्' इत्यत्र द्रष्टव्यम् । * पर्युदासः भावनाऽतिरिक्ते नञः संबन्धात्, 'नेक्षेतोद्यन्तमादित्यम्' इत्यत्र । भाट्ट. ४।१।३. * 'न कलञ्जं भक्षयितव्यम्' इति मम तु पर्युदास एव । उभयोरन्यतरस्य श्रुत्या भक्ष्यते. कर्तव्यता तयोः विद्यमाने । नञारश्च कर्तव्यताविहितत्वात् न कर्तव्यतावत्त्वेन सम्बध्यते । तस्मात् प्रत्युत अन्येन सम्बध्यमानः पर्युदासो भवति । नाय कलञ्जेन सम्बध्यते । किं कारणम् ? असमस्तत्वात् । सुबन्तयोः समासे सति पर्युदासो भवति, नासमासे । अतस्तस्मात् पर्युदासो धातुना संबध्यते । तत्र सुबन्तत्वाभावाभावात् समासो नास्ति । तस्मात् अभक्षणं कलञ्जादिविशिष्टं फलार्थिना कर्तव्यम् । टुप्. ६।२।५।१९. * 'न केसरिणो ददाति' इति नायं प्रतिषेधः किन्तु पर्युदासः । तत्प्रकारश्च दशमे (१०।८।१) 'येयजामहे' इति मन्त्रोदाहरणेन व्युत्पादयिष्यते । ततस्तेन (पर्युदास-)न्यायेन अश्वपर्युदासे सति अश्वव्यतिरिक्त सर्वस्य देयमिति विधिनिषेधयोः एकवाक्यत्वालाभात् नास्ति अश्वस्य प्राप्तिकमपि दानम् । वि. ६।७।३. * नञ्पदस्यापि याहृतयतोः स्वविरुद्धार्थे लक्षणा यत्र वाक्ये, स पर्युदासः । बृ. ६।२।५।२१. * पर्युदासेन प्राकृत बाध्यते । बाल. पृ. १११. * पर्युदासे तदन्यमात्रसंकोचः । मीन्या.

* पर्युदासाधिकरणे (१०।८।१) नञर्थस्य लाक्षणिकत्वमुक्तम् । वाक्यार्थ. पृ २०. * श्रुत्यन्तरस्थो विशेषः श्रुत्यन्तरे अनाश्रितश्चेत् विकल्पः सर्वत्र स्यात्, स चायुक्तः सत्या गतौ इति पर्युदासाधिकरणे व्युत्पादितम् । न्यायनि. ३।३।१६।२७ ब्रसू.

* ननु 'मृडमृद०' (पा. १।२।७) इत्यादे. यथा 'न क्त्वा सेट्' (पा. १।२।१८) इति निषेधनिषेधकत्वं तद्वत् सगुणवाक्यानामपि निर्गुणवाक्यबाधकत्वं किं न स्यादिति चेन्न । दृष्टान्ते पर्युदासाधिकरणन्यायेन मृडमृदेत्यादिसूत्रविहितसेट्क्त्वाप्रत्ययकित्त्वनिषेधपरत्वेन एकवाक्यताया वाक्यभेदेन निषेधनिषेधकत्वाकल्पनात् । अद्वैत. २।४।१९९-१९१.

* 'दीक्षितो न जुहोति' इत्यत्र चोदकप्राप्तपुरुषार्थहोमप्रतिषेधे पर्युदासाधिकरणपूर्वपक्षन्यायेन अनिवार्यो विकल्पः । परिमल. ३।३।१५।२६ ब्रसू.

* पर्युदासन्यायः । येयजामहन्यायः । अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणयोः पर्युदासः ॥

प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् । १०।८।१।१ ॥

भाष्यम्— प्रतिषेधः श्रूयते चोदकेन प्रदिष्टे कर्मणि, क्वचिदनारभ्यवादेन प्राप्ते । चोदकेन प्रदिष्टे महापितृयज्ञे, 'न होतारं वृणीते नाऽऽर्षेयम्' इति । तथा अनारभ्यवादेन प्राप्ते 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति

पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः ' इति । ततः ' नानुयाजेषु येयजामहं करोति ' इति । तत्रायमर्थः सांशयिकः किं प्रयाजानारभ्यवादयोः प्रतिषेधः, स च विकल्पः उत पर्युदास इति । किं प्राप्तम् ? विकल्प इति, प्राप्तिप्रतिषेधयोः प्रमाणवत्त्वात् । उभौ हि प्राप्तिप्रतिषेधौ प्रमाणवन्तौ । प्राप्तिस्तावत् प्रमाणवती महापितृयज्ञेन यजेत प्रकृतिवदिति । तथा, ' एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः ' इति भवति वाक्यं प्राप्तेः प्रतिषेधमनपेक्षमाणं प्रमाणभूतम् । तथा प्रतिषेधः प्रमाणवान् ' न होतारं वृणीते, नाऽऽर्षेयम्, भृगोरेवैनानुत्सृजति ' इति । तथा, ' नानुयाजेषु येयजामहं करोति ' इति । सर्वेषु यज्ञेषु येयजामहक्रिया प्राप्ता, न करोत्यनुयाजेष्विति प्रतिषिध्यते । ' येयजामहः कर्तव्यः ' इति वचनात् सयेयजामहकः प्रयोगः फलवानिति गम्यते । ' न कर्तव्यो येयजामहः ' इति वचनादयेयजामहकः प्रयोगः फलवानिति गम्यते । उभयोः प्रामाण्यादुभयथाऽपि फलमिति गम्यते । तस्मात् विकल्पः । एवं होतृवरणेऽपि । तस्मात् प्राप्तप्रतिषिद्धत्वाद्विकल्पः स्यात् ।

इष्यते — ' न होतारं वृणीते ' ' नानुयाजेषु येयजामहं करोति ' इत्यत्र पूर्वः पक्षः । अयं नञ् श्रुता कर्तव्यतां प्रतिषेधति । ये धातुनामनी, ते अपि तामेव विशेषयतः । एवं सर्वाणि पदानि स्वार्थयुतानि भवन्ति प्रतिषेधे । पर्युदासे तु लक्षणायुतानि भवन्ति, यथा ' अब्राह्मणमानय ' इति अत्र नञ् ब्राह्मणपदं च अन्यस्य ( क्षत्रियादेः ) लक्षणार्थमुच्चार्येते ( न स्वार्थम् ) । एवमिहापि नञ्शब्दः अनुयाजशब्दश्च अन्यस्य यज्ञलक्षणार्थौ उच्चार्येयाताम् । तस्मात् पर्युदासो न ग्रहीतव्यः । ननु प्रतिषेधेऽपि पर्युदासफलं ( अविकल्परूपं ) भवत्येव, यथा ' दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय ' इति । अत्र ब्राह्मणजातिर्वर्णोपात्ता, तदुपलक्षिता व्यक्तिः ( न वर्णोपात्ता ) । कौण्डिन्ये तु उपात्ता ( व्यक्तिः ) । तत्र यत् दधिदानं अर्थात् ( ब्राह्मणपदवाच्यजातिलक्षितव्यक्त्युद्देशेन विधीयमानं व्याक्षणिकं ) कौण्डिन्ये प्राप्नोति, तत् वर्णेन ( कौण्डिन्यपदोपात्तव्यक्तिविशेषोद्देशेन विधीयमानेन श्रौतेन ) तक्रदानेन ( विरोधात् ) बाध्यते । एवमत्रापि यज्ञसामान्यं ( ' यजतिषु येयजामहं करोति ' इति ) वर्णोपात्तम्, विशेषो लक्षणया । ' नानुयाजेषु ' इति वर्णोपात्त एव ( यज्ञ- )विशेषः । तत्र ( विशेषे ) श्रूयमाणः प्रतिषेधः ( शब्दत्वेन ) सामान्यं ( लक्षणावशात् प्रवर्तमानं ) बाधते । चोदकस्तु अश्रूयमाणः ( एव ) कल्पनीयः । कल्पितोऽपि ( असौ ) अङ्गानि सामान्येन ब्रवीति । ( तेन ) ' न होतारं वृणीते ' इति ( एतत् ) विशेषेण श्रूयमाणं उपमितकल्पितसामान्यप्राप्तिं बाधते । ( इति दूरोत्सारितो विकल्पः ) । उच्यते । नकारः ( अयं ) निवृत्तिं ब्रवीति । सा च ( निवृत्तिः ) प्रवृत्तिमन्तरेण न संभवति । ( सा तु ) सामान्यशास्त्रेण वा भवेत् विशेषशास्त्रेण वा । ( ततः किं ? इत्यत्र आह— ) यदि अनुयाजेषु येयजामहः ( विहितः ) न स्यात्, प्रवृत्तिरेव ( अत्र ) न स्यात् । ( नह्यत्र विना शास्त्रेण रागतः प्रवृत्तिः संभवति ) । एवं च प्रतिषेधस्य आनर्थक्यमेव स्यात् । ( पुनश्चोदयति— ) यथा तर्हि ' ब्राह्मणो न हन्तव्यः ' इति ( प्रवृत्त्यधीनोऽपि प्रतिषेधः, तामेकान्तेन बाधते ) एवं ( अत्रापि प्रतिषेधेन प्रवृत्तेर्बाधो ) भविष्यति । ( परिहरति— ) नहि । ( कुतः ? तत्र हि ) अर्थात् हननं प्राप्तं ( यथेच्छं ) कुर्यान्न वेति । ( तत्र ) यदा करोति, तदा प्रतिषिध्यते ( न हन्तव्यः इति । किञ्च— ) तत्र अर्थात् प्राप्तस्य शास्त्रेण नित्यबाधः ( युक्तः ) । इह ( तु ) द्वे ( अपि ) शास्त्रे । तेन द्वे अपि ग्रहीतव्ये । तयोः ( च ) विरोधात् विकल्पः । चोदकोऽप्येवमेव । अपि चैकस्य ( शास्त्रस्य ) फलवत्ता प्रमेया, अपरस्य ( तु ) निवृत्तिः । तस्मात् ( भिन्नविषयत्वात् ) न बाध्यबाधकभावः ( परस्परबुद्धिवत् ) । तस्मात् विकल्पः । न चेदं ( प्रतिषेधपक्षे विकल्पाभिधानं ) पूर्वपक्षोक्तिमात्रं ( किन्तु पारमार्थिकमेव ) । तथा च सूत्रभाष्यकारौ आहतुः ' सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात् ' ( १।४।२।२१ ) इति । तत्र ( हि प्रत्यक्ष— ) वचनेन प्रतिषिध्यते । ( ' न चतुस्त्रिवरिति ब्रूयात् ' इति । ) आनुमानिकी प्राप्तिः प्रकरणाम्नानात् । ( तथापि )

तत्र विकल्प (एव सिद्धान्तेन) अभ्युपगत (दुर्बलाऽपि प्राप्ति तदधीनामलाभेन प्रतिषेधेन तुल्यबलेति। ननु तत्र आनर्थक्यात् पाठस्य युक्तो यत्राङ्गीकार। इह तु सामान्यचोदक्यो विषयान्तरेऽप्यवकाशसम्भवात् नानर्थक्यम्। अत आह-) आनर्थक्येन (प्रमाणेन तत्र कृत्य अङ्गीकार। कुत?) आनर्थक्य हि परित्यागे कारण नोपादाने। तस्मात् युक्तो विकल्प।

अर्थप्राप्तवदिति चेत्। २ ॥

भाष्यम् – इति चेदवगम्यते विकल्प स्यादिति। तन्न। अर्थप्राप्तवत् स्यात्। तद्यथा लोकेऽर्थप्राप्ते यत्र प्रतिषेधो भवति 'न विष भक्षयितव्यम्, न सर्पाय अङ्गुलिर्देया, न कण्टक पादेनाधिष्ठेय' इति, अक्रियैव तत्रार्थ्या भवति, न विकल्प। तन्न मन्यामहे विधिप्रतिषधयो प्रतिषेधो बलीयानिति। प्राप्ते हि विधौ प्रतिषेधो भवति। येन च नाम प्राप्त यदुच्यते तत्तस्य बाधक भवति। तस्मादक्रियैवानुयाजेषु येयजामहस्य, महापितृयज्ञे च होत्रार्षेयवरणस्येति।

न तुल्यहेतुत्वादुभय शब्दलक्षणम्। ३ ॥

भाष्यम्— नैतदेवम्। तुल्यो हि हेतुरिह प्राप्ते प्रतिषेधस्य च। उभय शब्दलक्षणम्, प्राप्तिरपि प्रतिषेधोऽपि। प्राप्तिरपि प्रतिषेधे प्राप्ते, प्रतिषेधोऽपि प्राप्तौ प्राप्तायाम्। लोके पुनरुभयमर्थलक्षण प्रत्यक्षतो गम्यमान गुणदोषकम्। तत्र विधिप्रतिषेधयोर्यतरो गुणवान् सोऽनुष्ठीयते। न तु शब्दलक्षणे गुणदोषौ शक्येते अवगन्तुम्। तस्मात् यद्यद्वाक्येन प्राप्त तत्तदुभयमभ्यर्थेत। उभौ च प्राप्तिप्रतिषेधौ प्राप्नुत। तस्माद्विकल्प इत्यन्तरेति।

अपितु वाक्यशेष स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदेश स्यात्। ४ ॥

भाष्यम्— अपि त्विति पक्षव्यावृत्ति। वाक्यशेष स्यात् प्रतिषेध प्रदेशानामभ्यविधानयो। नैवमभिसंबन्ध, अनुयाजेषु येयजामहो न कर्तव्य इति। कथ तर्हि? नानुयाजेष्विति नञ्शब्दोऽनुयाजशब्देन सह संबध्यते, न करोतिना। किमतो यद्येवम्? नानुयाजेष्वित्येतावदपरिपूर्णं वाक्यम्, तत् साकाङ्क्ष पूर्ववाक्यैकदेशेन समन्वस्यते। यदेतत् 'येयजामह करोति' इत्युक्तम्, तदनानुयाजेषु। यावदुक्त स्यात् अनुयाजवर्जितेषु यजतिषु येयजामह करोतीति। तस्माद्विधिरेव पर्युदस्तानुयाजक, नास्ति प्रतिषेध इति न विकल्पो भविष्यति। महापितृयज्ञेऽपि प्रकृतिवदिति वचनात् होत्रार्षेयवरणमिह कर्तव्य प्राप्तम्। तदुच्यते प्रकृतिवत् कर्तव्य वरण वर्जयित्वेति। नञ्शब्दोऽत्र वृणीतेरर्थेन संबध्यते। प्रत्ययार्थस्तु अनुवाद। यदत्र प्रकृतिवत् कर्तव्य तत् वरण वर्जयित्वेति। किमर्थं पुनरनुयाजैर्वृङ्‌अर्थेन च नञ्शब्द संबध्यते इति? उच्यते। अन्याय्यत्वाद्विकल्पस्य। अन्याय्यो हि विकल्प। कथम्? इह यजतिषु येयजामह करोतीत्युच्यते। यदेव मवगम्यते, न शक्य स विना येयजामहेन यजतिरभिनिर्वर्तयितुम्। तत्र प्रतिषेधवचनमनर्थकम्। प्रतिषेधेऽपि विज्ञाते विधिवचनमनर्थकम्। तस्माद् यादृशो विकल्प। न च यतरस्य विधेरानर्थक्यप्रसङ्गाद्विकल्प आश्रयणीयो भवति। उच्यते। यदा यतरदानर्थक्यमापद्यते, कल्प्येतापि तत्र विकल्प, यत्र न केनचिदपि प्रकारेणार्थवत्ता संभवति। इह त्वनुयाजवर्जं पर्युदासेनार्थवत्ता। तस्मान्न विकल्प। आह। नन्वनुयाजसम्बन्धे नञ्शब्दस्य समास प्राप्नोति। नित्यो ह्यस्य नञ्शब्दस्य सुबन्तसम्बन्धेन समास इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म। 'वावचनानर्थक्य च स्वभावसिद्धत्वात्' इति। नेति भगवान् पाणिनि। स हि, 'विभाषा' इति प्रकृत्य ईदृश समासमुक्तवान्। सद्वादित्वाच्च पाणिनेर्वचन प्रमाणम्। असद्वादित्वान्न कात्यायनस्य। असद्वादी हि विद्यमानमप्यनुपलभ्य ब्रूयात्। तस्मात् पर्युदास इति।

टुप्— प्रतिषेधे (सति) शास्त्रस्य भ्रान्ति कल्पनीया, विकल्पापत्ते। द्विरदृष्टकल्पना च। प्रतिषेधादक्रियाया कोऽप्युपकारो भवतीति, विधौ क्रियायाम्। तस्मात् पर्युदास। तत्र लक्षणा केवला (नादृष्टकल्पना)। अदृष्टकल्पनायाश्च लक्षणा ज्यायसी। ननु 'अर्थैकत्वाद्' (२।१।१४।४६) इत्यय न्यायोऽत्र नास्ति, येनैकवाक्यता स्यात्। उच्यते। सत्यमय न्यायो नास्ति। किन्तु (यथा) 'दध्ना जुहोति' इति होम पूर्वेण

वाक्येन प्राप्तो विपरिवर्तते । तत्र दधि विधीयते, भवति चैकवाक्यत्वम् । एवमिहापि, येयजामहं विपरिवर्तमानमनूद्य पर्युदासार्थो विधीयते । पर्युदासपक्षे पृथगाख्यातश्रवणात् पदैकवाक्यत्वासंभवेऽपि वाक्यैकवाक्यत्वं संभवत्येव । ( तथा ) चोदकेऽपि यत् प्रकृतिवत्पितृयज्ञेन यजेत तद्वरणवर्जमिति । अथवा येयजामहः सामान्येन प्राप्यमाणः एवानुयाजवाक्येन विशेष्यते ( अनुयाजवर्जं येयजामहं करोतीति ) । पितृयज्ञेऽप्येवमेव । अत्र ग्रन्थः ' नञनुयाजसंबन्धे नञ्यस्य समासः प्राप्नोति ' इति । पर्युदासपक्षे समासः स्यात् । न चात्र समासः ( येन पर्युदासः स्यात् ) । तस्मादिदमत्र एवाऽऽश्रीयते । उच्यते । ' विभाषा ' इति ( अनेन ) समासो वाक्यं वा भवति । यदि समासलक्षणमेवाऽऽश्रीयेत, राज्ञः पुरुषः इति अपप्रयोगः स्यात् । तस्मात् राज्ञः पुरुष इत्यपि साधु, राजपुरुष इत्यपि, उभयोरप्यनुगमात् । यत्रानुगमो नास्ति तत्रासाधुः प्रयोगः, यथा गावीति । तेनासत्यपि समासे स एवार्थः, समासेऽपि । तेनासमासत्वमदोषः । ' नित्यो यस्य नञः सुबन्तसम्बन्धे समासः ' इति । कोऽभिप्रायः ? भिन्नार्थाविति वाक्यसमासौ । वाक्येन पुंलिङ्गैकत्वविशिष्टस्य पुरुषः प्रतीयते । समासे तु न ज्ञायते किं द्वयोः पुंसोरुत बहूनामुत स्त्रिया उत नपुंसकस्येति । तस्मात् ( वाक्यसमासौ ) नैकार्थौ । गोशब्दे लिङ्गोऽर्थः प्रतीयते । तत्र यस्यानुगमः स साधुरितरेऽपभ्रंशाः । ( यथाहो गोणीशब्द आवपने सर्पून सास्नादिमति ) । अत्र राजपुरुष इति लिङ्गसंख्याविमुक्ते वाक्ये नित्यं समास एव साधुः । तदुक्ते राज्ञः पुरुष इति वाक्यमेव । अत आह ' मानवनानर्थकत्वं च स्वभावसिद्धत्वात् ' इति । तेन पर्युदासो नास्ति, समासाभावात् । अत्रोच्यते । ' समर्थः पदविधिः ' इति समर्थयोः समासः । सामर्थ्ये च यदि लिङ्गसंख्यादिकं नापेक्षते, राजशब्दस्ततः स्यात् । ततः पुरुषेण समस्यते । तस्माल्लिङ्गसंख्याविमुक्तः ( श्रूयमाणः ) समासे अनयत्रार्थो गम्यते, प्रतीतेस्तुल्यत्वात् । एवं सत्येकोऽर्थः । तस्मादुभयोरनुगमः कर्तव्यः । उभयोश्चानुगमाद्वाक्ये पर्युदासः सिद्धः ।

शा— ' तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः । पदद्वयमपि ह्यन्यपरत्वाल्लक्षणा भवेत् ॥ ' इति प्राप्ते ब्रूमः । ' सत्र एव विकल्पोऽयं प्रतिषेधे प्रसज्यते । अतस्तत्परिहाराय पर्युदासाश्रयो वरम् ॥ '

सोम— एवमसमस्तयोः अर्थलोपप्रत्याम्नाननिबन्धनबाधयोः निरूपणानन्तरं अतिप्रसक्तस्य प्रतिषेधनिबन्धनबाधस्य अस्मिन् पादे प्राधान्येन निरूपणमिति पादान्तरत्वमानन्तर्यं च । सूत्रार्थस्तु– प्रैषे चोदकेन आर्षेयवरणातिदेशे येयजामहस्य अनारभ्यविधाने च सति ' नार्षेयम् ' ' नानुयाजेषु ' इति मन् प्रतिषेधार्थकः । ततश्च विहितप्रतिषिद्धत्वात् विकल्पः इति ।

वि— ' नार्षेयं न च होतारं नानुयाजेष्विवीदृशो । विकल्पः पर्युदासो वा, स्याद्वाचो वचनद्वयात् ॥, अन्यार्थत्वाद् विकल्पस्य विप्लवः स निषेधगीः । तेनानुयाजवाक्यस्थमन्तर्यं पर्युदस्यति ॥ '

भाट्ट— तदेवमर्थलोपात् प्रत्याम्नानाच्च बाधो निरूपितः, प्रतिषेधादिदानीं निरूप्यते । महापितृयज्ञेऽतिदेशप्राप्तस्य होतृवरणस्य प्रतिषेधः श्रुतः ' न होतारं वृणीते ' इति । तथा अनारभ्याधीतस्य ' आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः ' इति यजमानोद्देशेन विहितस्य येयजामहस्य ' नानुयाजेषु येयजामहं करोति ' इति प्रतिषेधः श्रुतः । तयोः किं नित्यं होतृवरणादिबाधकत्वं उत विकल्पेनेति चिन्तायाम्, न तावदयं ' होतृवरणव्यतिरिक्तं प्रकृतिवत् कुर्यात् ' ' अनुयाजव्यतिरिक्तेषु च यज्ञेषु येयजामहः कर्तव्यः ' इत्येवंविधः पर्युदासः, अत्यन्ताभाववाचिनो नञः प्रधानभूतभावनान्वयसंभवे अन्योन्याभाववाचित्वमङ्गीकृत्य गुणभूतधात्वर्थान्वयाङ्गीकारे प्रमाणाभावात् । अन्योन्याभाववाचकस्य नञस्तद्वति पदार्थान्तरे लक्षणापत्तेश्च । अतः प्रतिषेध एवायम् । तस्य च प्राप्तिसापेक्षत्वात्, प्राप्तेश्च प्रकृते शास्त्रीयत्वात्, शास्त्रप्राप्तस्य चात्यन्तं बाधायोगात् अगत्या ग्रहणाग्रहणवद्विकल्पः । ननु प्रतिषेधस्य प्राप्तिसापेक्षत्वे

किं बीजम्? न तावदभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् प्रतियोगिप्राप्त्यर्थं तत्, येयजामहादिरूपस्य प्रतियोगिनो अनूयाजादिषु प्रसिद्ध्यभावेऽपि यागान्तरेषु प्रसिद्धत्वात्। नह्यनुयोगिनि प्रतियोगिप्रसिद्धिरभावबोधे कारणम्, ह्रदे वह्निप्रसिद्ध्यभावेऽपि ह्रदे वह्निर्नास्तीति बोधस्यानुभविकत्वात्। अत एवोद्देश्यप्रसिद्ध्यर्थमेव प्राप्तिसापेक्षत्वमित्यप्यपास्तम्, निषेधाधिकारे प्रतियोगिनमनुद्दिश्यानुयोगिवृत्तित्वस्यैव विधेयत्वात्। न च तथापि प्रमत्तपुरुषनिवृत्तिप्रयोजनकत्वात् निषेधस्य प्रमत्तत्वाभावे वैयर्थ्यापत्तेः तत्परिहारार्थं प्राप्त्यपेक्षत्वमिति वाच्यम्। निषेधाभावे सामान्यशास्त्रेण भ्रान्त्या आहवनीयशास्त्रेणेव पदहोमे आहवनीयस्य अनूयाजादिषु येयजामहादीनां प्रसक्तत्वात्। अतश्च यथैव पदशास्त्रं सामान्यशास्त्रस्य तात्पर्यग्राहकं सत् तस्य तद्व्यतिरिक्तविषयतां कल्पयति, एवं निषेधशास्त्रमपि सामान्यशास्त्रस्य तद्व्यतिरिक्तविषयत्वे तात्पर्यग्राहकत्वादेव सार्थकम्। न च सामान्यशास्त्रानालोचनेऽपि पदशास्त्रस्य पदविधायकत्ववत् निषेधशास्त्रस्य प्रथकत्वभावेन शाब्दबोधाजनकत्वम्, पदशाब्दबोधवदेव प्रतियोगिप्रसिद्धिमात्रेणानुयोगिवृत्त्यभावविषयकशाब्दबोधोपपत्तेः। अतश्च भ्रान्तिप्राप्तस्यापि निषेधोपपत्तेः न प्राप्तेः शास्त्रीयत्वेन निवेशः। इति चेन्न। सकलकारकान्वितभावनारूपाख्यातार्थे एव प्रतियोगितासम्बन्धेन नञर्थाभावस्योत्सर्गेणान्वयात् अनूयाजाधिकरणकयेयजामहानुकूलकृतेरेव प्रतियोगितया तत्प्रसिद्धिं विना शाब्दबोधाजनकत्वेनैवास्य तत्प्राप्तिसापेक्षत्वात्। नहि वर्तमानस्य प्रतियोगिता संभवति। अतश्च शास्त्रविहितायास्तत्त्वावगतप्रभावे विनिगमनाविरहात् सर्वविशिष्टाया एव तत्। अत एव न येयजामहमात्रस्यैव प्रतियोगित्वं नञः प्रधानभूताख्यातार्थान्वयसंभवे गुणभूतनदन्वयस्यान्याय्यत्वात्। अत एव यत्र 'ह्रदे वह्निर्नास्ति' 'नान्तरिक्षे न दिवि' इत्यादौ तत्राप तथागत्या षष्ठ्यादेरेव प्रतियोगित्वमङ्गीकृत्य तदुद्देशेनैवानुयोगिवृत्त्यभावनिधानम्। यत्र तु न बाधस्तत्र नियमतः कृतेरेव प्रतियोगित्वात् तदुद्देशेनैवाभावमात्रविधिः। अत एव प्रतियोगिप्रसिद्ध्यर्थमिवोद्देश्यप्रसिद्ध्यर्थमपि प्राप्तिसापेक्षता, निषेधस्य तद्व्यतिरेकेण शाब्दबोधस्यैवाजननात्। सा च प्राप्तिः क्वचिद्रागतः, क्वचित् शास्त्रतः। आद्या 'न कलञ्जं भक्षयेत्' इत्यादौ। अन्त्या प्रकृते। सा च प्रमारूपैवेति युक्तो विकल्पः। नहि भ्रमात्मकप्रसिद्धिमादाय तत्संभवः। निषेधशास्त्रानालोचने सामान्यशास्त्रमात्रालोचनेन भ्रमसंभवेऽपि निषेधशास्त्रस्यैव प्रथमालोचने विशेषदर्शनसत्त्वेन सामान्यशास्त्रतो भ्रमानुपपत्तेः, वस्तुतः शास्त्रप्रतियोगिनोऽप्रसिद्ध्या तदुद्देश्यकतदभावप्रमानुपपत्तेश्च। न च यस्य सामान्यशास्त्रमात्रालोचनेन भ्रमात्मकेष्टसाधनताज्ञानादनूयाजेषु येयजामहकृतिरुत्पन्ना, तत्पुरुषीयकृतेरेव प्रसिद्धाया अनूयाजाधिकरणकयेयजामहकृतित्वेन प्रतियोगित्वात् तदभावविधायकतोपपत्तिरिति वाच्यम्। एतदात्मनि तत्पुरुषीयकृत्यभावस्य स्वतःसिद्धत्वेन तदंशे विधिवैयर्थ्यात्, पुरुषान्तरीयकृत्यभावस्य एतत्पुरुषीयनिवारणप्रयोजकत्वानुपपत्तेश्च। अभावे तदयोग्यत्व हि निवारणानुमेयानिष्टसाधनताज्ञानस्य अभावप्रतियोगिभूतकृतिसामग्रीविघटकत्वम्। न चान्यदीयकृतिसामग्री बलवदनिष्टानुबन्धित्वज्ञानाभावरूपा अन्यदीयानिष्टसाधनत्वज्ञानात् निवर्तते। अतश्च एतदात्मनिष्ठकृतिसामग्र्येव एतदात्मनिष्ठानिष्टानुबन्धित्वज्ञानात् निवर्तनीया। सा च निषेधस्य प्रथमालोचने विशेषदर्शनवत्त्वात् भ्रमात्मिका न संभवति। तत्र च कृतिस्तु प्रतियोगिभूता अप्रसिद्धैव। अतोऽवश्यं निषेधशास्त्रस्य प्रथमालोचनेऽपि तदपेक्षितप्रतियोगिप्रसिद्ध्यर्थं सामान्यशास्त्रमालोच्यैव अनूयाजाधिकरणकयेयजामहानुकूलकृतित्वावच्छिन्नकृतेरेव सामान्यशास्त्रप्रमितायाः प्रतियोगितामङ्गीकृत्य निषेधशास्त्रार्थावधारणं इत्यङ्गीकर्तव्यम्, अतश्च सामान्यशास्त्रप्रमितस्याप्यन्यस्य बाधायोगात् विकल्पो युक्त एव। तदा हि सामान्यशास्त्रेण येयजामहस्य फलभूमसाधने अनूयाजसाद्गुण्यजनकत्वानुमानात्, निषेधेन च फलभूमसाधनाभावे येयजामहाभावेऽपि इत्यादेः साद्गुण्यजनकत्वानुमानात् उभयोर्ग्रहणाग्रहणयोः अविरोधः। रागप्राप्तनिषेधे तु रागेण कलञ्जभक्षणादौ इष्टसाधनताज्ञानेन प्रसक्तायाः कलञ्जभक्षणानुकूलकृतेरभावे निषेधशास्त्रेण

* पर्युदासविधिः षोडशविधः — १ प्रकृतिगतारादुपकारिपर्युदासः २ विकृतिगतोपदिष्टारादुपकारिपर्युदासः ३ विकृतिगतातिदिष्टारादुपकारिपर्युदासः ४ अपूर्वकर्मगतारादुपकारिपर्युदासः ५ प्रकृतिगतसंनिपात्यदृष्टार्थपर्युदासः ६ प्रकृतिगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिपर्युदासः ७ प्रकृतिगतदृष्टार्थसंनिपातिप्रतिपत्तिपर्युदासः ८ अपूर्वकर्मगतसंनिपात्यदृष्टार्थपर्युदासः ९ अपूर्वकर्मगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिपर्युदासः १० अपूर्वकर्मगतदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः ११ विकृतिगतोपदिष्टादृष्टार्थसंनिपातिपर्युदासः १२ विकृतिगतोपदिष्टदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिपर्युदासः १३ विकृतिगतोपदिष्टदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः १४ विकृतिगतातिदिष्टादृष्टार्थसंनिपातिपर्युदासः १५ विकृतिगतातिदिष्टदृष्टार्थप्रतिपत्तिव्यतिरिक्तसंनिपातिपर्युदासः १६ विकृतिगतातिदिष्टदृष्टार्थप्रतिपत्तिसंनिपातिपर्युदासः । उदाहरणानि तु सुगमानि । ( अनेन पर्युदासशब्दस्थाने क्रियानिषेधशब्द संनिवेश्य निषेधः षोडशविधो ज्ञेयः । ) । वृ. २०. * पर्युदासविधौ न सर्वत्र पदैकवाक्यता, तथात्वे आग्नेयादिष्वनन्वयापत्तेः । अपि तु आग्नेयादिषु सत्त्वे वाक्यैकवाक्यताऽपि । भाट्ट. १०।८।२.

* पर्युदासस्थले नञः कर्माङ्गनियमः कात्यायनमतेन । 'अब्राह्मणं आनयति', 'अधर्मं करोति' इत्यादौ । के. ( नि. १०।८।२ ).

* पर्यूहणं धूपनं. । 'अश्मनि त्वा धनयामि०' इति मन्त्रेण पांसुभिः पर्यूहन' ( कात्यसूत्रम् ) । अवटे यूपस्थापने मूले पांसुभिः परितः ऊहनम् । नि. १०।२।३३, * पर्यूहणं यूपसंस्कारः पशुभेदेऽपि यूपकाले एव तल्लोपानुष्ठानः । ११।३।४.

* पर्यूहणादिसंस्कारायां ( यूपाङ्के ) सत्ते- वल्या अनुग्रहनम् । भा.१०।२।३३।७३. मीको. पृ. १५३६ 'सत्येनान्या पर्यूहणादि०' इत्यत्र द्रष्टव्यम् ।

* पर्वणि नाश्नीयात्, अध्ययनधर्मोऽयं न प्रयोगधर्मः, तेन पर्वणि यजन्नायेऽपि कर्मणि मन्त्राः पठनीया एव । भा.१२।३।७।१८–१९. * पर्वणि प्रातरग्निहोत्रे हुते पश्चात् दर्शपूर्णमासार्थं अग्निद्वयस्यान्वाधान क्रियते । अन्वाधाने 'वाचा त्वा होत्रा०' इत्यादिः अग्निहोत्रोद्धरणमन्त्रो नास्ति । वि. ९।४।९.

* पर्वकालकर्तव्ययोः दीक्षासुत्ययोर्मध्ये सुत्या पर्वण्येव, दीक्षा अपर्वण्यपि । ज्योतिष्टोमे । भा. १२।३।१।२९ .

* पर्वशब्दः आग्नेयादित्रिकसमुदायः, प्रकरणवशात् । मासस्युत्पत्त्य क्रियासमुदायः, निरूढे दीयते अस्मिन् इत्यधिकरणव्युत्पत्त्या तु कालवाचकः । वि. ९।२।१८, * पर्वशब्दः 'स्रुवेण पार्वणौ जुहोति' इत्यत्र आग्नेयादित्रिकसमुदायः । ५।२।१८. * पृणातेः पर्वशब्दः । पृणातिश्च दाने प्रसिद्धः । दानानि च ( दर्शपूर्णमासयोः ) समुदायः । भा. ५।२।१८।५३.

## पर्वसंधिः तन्त्रमध्ये ग्रहीतव्यः ॥

संधिकालस्याल्पत्वेन साङ्गप्रयोगस्यानन्तर्यासत्त्वाभावेन तत्पर्याप्तये सम स्यादिति न्यायेन तत्पूर्वपरभागयोः समारोपक्षेपात् । 'संधिमभितो यजेत' इति श्रुतेश्च यदैव प्रतिपदहे रात्रौ वा पतति ततः पूर्वं घटिकाद्वयमारभ्य तत्पश्चाद् घटिकाद्वये हविः समापयेत् । इति प्राप्ते, हविर्निर्वापकाले वचनाद् व्यवतिष्ठेते । 'पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवता यजते' इति वचनेन प्रयोगस्य द्व्यहव्याप्तत्वागमात् । 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामुपवसेदिति कौषीतकं या पर्यस्तमयमुत्सर्पेत्' इति कौषीतकिब्राह्मणे ( ३।१ ) सूर्यास्तमनपरि- त्यक्तेनागर्भनात्परतो रात्रौ वा यदि संधिः लोपत्वात्पूर्वा तदा पौर्णमासी तस्यामन्वाधानमित्युक्त्वा ततः परेद्युर्याग इत्युक्तं भवति । आवर्ते ततः पूर्वं वा यदि संधिः सोपराऽपि नोपवासार्हा, किन्तु पूर्वेत्युक्त्वा संधिदिन एव इत्यपि व्यवतिष्ठते । तेन संधिमभितः इत्यस्य विदुद्वृष्टिमध्ये यथा संधिः पतति तथा तन्त्रं प्रक्रमेदित्यर्थः । आवर्तने यदा संधिः पर्वप्रतिपदोर्मध्ये दिनादीनि प्रतिपत्प्रविष्टाया यदि चेष्टिः समाप्यते इत्यादीनि च गोभिलगार्ग्यादिवचनानि एवमेवार्थं विवृण्वन्ति । संकर्ष. ३।१।२.

५ पर्वताधित्यकान्यायः । यथा ' अधित्यकाया-मिव धातुमय्या लोध्रद्रुमं सानुमतः प्रफुल्लम् ' इति रघुवंशे । माहसी. २११.

५ पर्वतोपत्यकान्याय. । ' उपत्यकादेशस्था भूमि रूर्ध्वमधित्यका ' इति कोशात् । साहस्री.२१२.

* पलाशशाखाऽऽहरणम् 'यत् प्राचीमाहरेत् देव-लोकमभिजयेत् ' (तैब्रा. ३।२।१) इत्यादिनोक्तम् । तत्र प्राचीशब्देन वृक्षस्य प्राचीदिक्स्था शाखा ग्रहणीया, न तु दिगेव वाच्या । वि ४।२।२, * पलाशशाखा-ऽऽहरण वत्सापाकरणाङ्गम् । ३।६।८,

* पलाशशाखाछेदनं दोहधर्मः । स न प्रायणाद्-सभयशेषार्थः । वि ३।६।८, * पलाशशाखाछेदन विष्यादिविहितम् , न तु विध्यन्तविहितम् । ३।१।२, * पलाशशाखाछेदने ' इषे त्वा ' इति मन्त्रः । अत्र छिनद्मि इत्यध्याहारः , ' इषे त्वेति छिनत्ति ' इति छेदने विनियोगात । इष्यमाणाय अन्नाय यो पलाशशाखे त्वा छिनद्मि इति मन्त्रार्थः । २।१।१५.

* पलाशशाखामार्जने ' ऊर्जे त्वा ' इति मन्त्रः ' ऊर्जे त्वेत्यनुमार्ष्टि ' इति विनियोगात् । ऊर्जे रसाय बलाय वा त्वामनुमार्ज्मि इति मन्त्रार्थः । अनुमार्जन पश्वङ्गभूतधूल्यादिनि सारणम् । वि. २।१।१५.

५ पवनताडनन्यायः । अनुभवद्गतुनि व्यर्थ-प्रयत्नकरणे अयं प्रवर्तते । नहि पटादिना पवनस्य ताडनं सफलं भवति । साहस्री. ६६७

* पवमानाः अग्निष्टा. ( अग्निष्टोमस्य. ) अभि-षेचनीयस्य । भा. १०।४।१०।२०, * पवमाने एव माध्यंदिने आर्भवे च विवृद्धाविवृद्धस्तोमकऋतुषु साम्ना-वापोद्वापौ । १०।४।११।२१-२३, * पवमाने रथंतर करोति, आर्भवे बृहत् । विश्वजिति सर्वपृष्ठे । १०।६। ५।१४.

▌ पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् । १०।४।११।२१॥

विवृद्धाविवृद्धस्तोमकेषु क्रतुषु साम्ना आवापोद्वापौ यत्रकापि वा स्तोत्रे पवमानेष्वेव वा इति विचारे सिद्धान्तमाह । आवापोद्वापौ आर्भवे माध्यंदिने च पवमाने स्याताम् । तस्मिन् पवमाने आवापोद्वापयोः दर्शनात् । ' त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्य-नुष्टुप् , अत्र ह्येवावपन्ति, अत एवोद्वपन्ति ' इति श्रुतौ ।

वचनानि त्वपूर्वत्वात् । २२ ॥

विवृद्धाविवृद्धस्तोमकेषु क्रतुषु साम्नामावापोद्वापौ पवमाने स्तोत्रे एवेत्यत्र पूर्वे लिङ्गमुक्तम् । वचनमुख्य-त्वाम्, इति चेदुच्यते । तुः शङ्कां निरस्यति । लिङ्ग-रूपाणि यानि उक्तानि, तानि वचनान्येवोक्तानि । तद् यस्य अपूर्वत्वात् अन्यतः अप्राप्तत्वात् । ततश्च पृथक् वचनापेक्षा नास्ति । तानि च 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् । अत्र ह्येवावपन्ति, अत एवो-द्वपन्ति ' इति । के

* पवमानयोरुत्तरयो, आवपमानानां साम्नां गायत्रीबृहत्यनुष्टुप्सु निवेशः, न तु अन्ते विवृद्धस्तोम कल्पे । भा. ५।३।५।१३-१४, * पवमानयोरुत्तरयोः विवृद्धस्तोमकल्पे साम्नामागमः इति वक्ष्यते ( १०।५। ५।१६ ) । ५।३।५।१३.

* पवमानाज्यपृष्ठादिस्तोत्रेषु रथंतर-बृहत् वैरूपादि साम एकस्यामेव ऋचि न गातव्यम् , किन्तु ' एकं साम तृचे क्रियते स्तोत्रीयम् ' इति वचनात् तृचे एव साम गातव्यम् । वि १०।६।१.

* पवमानेष्टय' । ' अग्नये पवमानाय अष्टाकपाल निर्वपेत् , अग्नये पावकाय, अग्नये शुचये ' इति आधाने । भा ३।६।४।११, * पवमानेष्टयः अग्न्यङ्ग आधान-सिद्धेष्वेवाग्निषु स्वोत्तरभाविक्रतुप्रयोगितया संस्कार-विशेषाधायकत्वं समर्पयन्ति , भाष्यमते । पवमानेष्टय' आधानाङ्ग बृहस्पतिप्रभृतयः , अग्नीनां रथान्तिकत्व इति वार्तिककृन्मतम् । के. ( भाट्ट. ५।३।१९ ) । * पवमानेष्टयः अग्निसंस्कारार्था इत्युक्तम् ( ३।६।४ ) । भा ३।६। ६।१७ * पवमानेष्टयः आधानानन्तरहितसोमानुष्ठानेऽपि सोमात् प्रागेव कर्तव्या , अग्निसंस्कारकत्वात् आधानाङ्ग-त्वादेव वा । के. (टुप् ५।४।३।५-९) । * पवमानेष्टयः आधानमात्रसंस्कृतेषु अग्निषु कर्तव्याः, न पवमानेष्टि-संस्कृतेषु । वि. ३।६।६. * पवमानेष्टय. इष्टिसंस्कार-वर्जिता प्रकृतिमेव्यन्ते, अविहितत्वात् तत्प्राकरस्याधा

पवमानेष्टीनाम् । भा. ३।६।६।१७. ● पवमानेष्टयः केवलाधानसंस्कृतेऽग्नौ । ३।६।६. मीको. पृ ९२४ ' आधाने पवमानेष्टय० ' इत्यत्र द्रष्टव्यम् । ● पवमानेष्टय० दर्शपूर्णमासविकृतिः । वि ३।६।८. ● पवमानेष्टीः कृत्वा अग्निष्टोमादीनि कर्माणि प्रतिपत्तव्यानि, न तु आहितमात्रेषु अग्निषु । ' न ह्यस्य दारु अभ्यादध्यात् ' इत्यादीनि व्रतानि तु आहितमात्रेष्वेव कर्तव्यानि । भा. ५।३।९।२१-२५, ● पवमानेष्टीः कृत्वा संस्कृतेष्वग्निषु अग्निहोत्रादीनि नियतानि, ऐन्द्राग्नादीनि च अनियतानि कर्माणि कर्तव्यानि । ५।३।९।२१-२५. ● पवमानेष्टिभिः संस्क्रियैवाधानमग्न्युत्पादकम् । वि. ५।३।९.

● ' पवमानेष्टेः प्राक् यजुषा होमो न सर्वसंमतः ' इति न्यायः । आधानाङ्गभूताग्निहोत्रार्थवादस्य मीमांसाप्रपत्न न्यायस्य विप्रतिषेधात् । अत्र 'पवमानेष्टे.०' इति न्यायविप्रतिषेधो ज्ञेयः । सू. ५।३।९।२१-२५ ● पवमानेष्टीनां द्वेधा प्रयोगः तन्त्रेण भेदेन चेति । तत्र काम्यत्वे प्रथमेष्टिः एका, उत्तरयोस्तन्त्रम् । नित्यत्वे तु तिसृणामपि तन्त्रम् । के ( वि. ११।४।८ ) । ● पवमानेष्टीनां सद्य एव करण सोमाधानपक्षे । सोमेनायक्ष्यमाणस्य तु संवत्सरादिकाल । भाट्ट. ५।४।३. ● पवमानेष्टिषु अग्निहोत्रहवणी निर्वापेण बाध्यते । बाल. पृ. ११२ ● पवमानेष्टिष्वग्निहोत्रहवण्यभावेऽपि निर्वापोऽनुष्ठेय । १०।२।२७. मीको. पृ. १५९२ ' गुणलोपन्यायः ' इत्यत्र द्रष्टव्यम् । ● पवमानेष्टिषु आज्यभागयोः गुणवाचकपदरहितस्यैव देवतापदस्याभिधानं कर्तव्यम् । १०।४।१७।३०-३१. मीको. पृ ९२६ ' आधाने पवमानेष्टिषु० ' इत्यत्र द्रष्टव्यम् । ● पवमानेष्टिषु आज्यभागदेवौ न सगुणौ । ' वृत्रघ्नात् (वृधन्वात्) आग्नेयः कार्य., पावकवान् सौम्य. ' इति तु मन्त्रपरम् । ( अत्र कल्पसूत्रम्– " अग्निं स्तोमेन बोधय ' इत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति, ' अग्न आयूंषि पवसे ' इति सौम्यस्य " इति । ) । वि १०।४।१७. ● पवमानेष्टिषु केवलस्यैव निर्वापस्य बाधार्थत्वम्, न [illegible] अग्निहोत्रहवणीरूपगुणसहितस्य । सोम. १०।२।२७.

● पवमानेष्ट्यधिकरणम् । न चैवं आरभ्यणीयाया अन्या आरभणीया इत्यनवस्था स्यादिति वाच्यम् । ' यावतीः शक्नुयात् कर्तुं यस्मिन्नहनि तावतीः कुर्वतो नानवस्था स्यात् ' इति पवमानेष्ट्यधिकरणपूर्वपक्षोक्तप्रकारेण अनवस्थाऽभावात् । सोम. १०।१।४.

● पवमानेष्ट्यादिषु देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोग. । १०।४।१४।२६-२९ ' पावकाग्निन्याय. ' इत्यत्र अधिकरण द्रष्टव्यम् ।

● पवमानेष्ट्याधानादीनां ( आधानगतपवमानेष्ट्यादीना ) श्येनाङ्गानामपि न हिंसनवनीताज्यता । के. ( भाट्ट. ३।८।२१ ).

**पवमानेष्टिन्यायः । आधानं अग्न्यर्थम् ।।**

**इष्ट्यर्थमग्न्याधेयं प्रकरणात् । ३।६।४।११ ॥**

**भाष्यम्**— सन्ति पवमानेष्टयः 'अग्नये पवमानायाष्टाकपाल निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तासा प्रकरणे समाम्नातम् ' ब्राह्मणो वसन्तेऽग्निमादधीत ' इति । तत्र संदेहः, किमग्न्याधेयं पवमानेष्ट्यर्थम्, उत नेति । किं प्राप्तम् ? इष्ट्यर्थमिति । कुत. ? प्रकरणात् । तासा प्रकरणे श्रूयते, अतस्तदर्थम् ।

**वा**— अनारभ्यवादप्रस्तावेन अग्न्याधेयस्य प्रथम तावत् अनारभ्यवादत्वमेव प्रतिपाद्यते । प्रकरणेन तावत् पवमानेष्ट्यर्थत्व प्राप्नोति । श्रुत्या तु शुद्धाग्न्यर्थत्वम् । अतः ' प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ' ( ३।४।९।१९ ) इति इष्ट्यर्थाग्निसंस्कारत्वात् श्रुतिवाक्यप्रकरणै. अविरुद्धै. इष्ट्यर्थाग्न्यर्थत्व अवधार्यते । शुद्धाग्न्यर्थत्वे च निष्प्रयोजनत्वात् तद्द्वारेणैव अग्न्याधानप्रकरणसामर्थ्यम् । तस्मात् इष्ट्यर्थं सामान्याभिधानम् । अपि च प्रकरणादेव पवमानेष्टिविषय द्रष्टव्यम् ।

**न वा तासां तदर्थत्वात् । १२ ॥**

**भाष्यम्**— पवमानेष्टयो हि अग्न्यर्थाः । यदि अग्नि. इष्ट्यर्थं स्यात् ततस्तदर्थं अग्न्याधेयमिष्टीनामुपकुर्यात् । निष्फलास्तु इष्टयः । तदर्थं अग्न्याधेयमपि निष्फल स्यात् । कथ पुनरग्न्यर्थता पवमानेष्टीनाम्, निष्प्रयोजनत्वादेव । प्रयोजनवत्त्वाच अग्नीनाम् । भाव-

यितव्या अपीष्टय. भूतानामग्नीनामर्थेन क्रियेरन् । तस्मात् अग्न्याधेयं न पवमानेष्ट्यर्थम् ।

वा— यदि आगन्तुपकारकमाधानं भवेत्, ततः प्रकरणात् इष्ट्यर्थमिति गम्येत । वाक्यसंयोगात्तु द्वितीयानिर्दिष्टाग्निसंस्कारार्थमेतत् । एवं च सति यदि अग्नयः पवमानेष्ट्यर्था भवेयुः ततः तद्द्वारेण आधानमपि तदर्थं भवेत् । तास्तु निष्फलत्वात् अग्न्यर्था इत्युक्तम् । अतश्च 'गुणानां च परार्थत्वात्' (३।१।१२।२२) इत्यनेनैव परस्परानङ्गत्वम् । नहि द्वितीयाश्रुतिः प्रकरणेन बाध्यते ।

**लिङ्गदर्शनाच्च । १३ ॥**

**भाष्यम्**— लिङ्गं च दर्शयति यथा अग्न्यर्थाः पवमानेष्टयः इति । किं लिङ्गम् ? 'जीर्यति वा एष आहितः पशुर्यदग्निः, तदेतान्येवाग्न्याधेयस्य हवींषि संवत्सरे निर्वपेत्, तेन वा एष न जीर्यति, तेनैनं पुनर्नवं करोति, तत्र सूत्रार्थम्' इति ।

वा— 'तेनैनं पुनर्नवं करोति' इति च अग्निसंस्कारार्थतां दर्शयति ।

**सोम— प्रयोजनं पूर्वपक्षे** आधानस्य स्वर्गार्थपवमानेष्ट्यर्थत्वेन अग्निहोत्रदर्शपूर्णमासादिषु आधानकृतस्य कस्य चिदुपकारस्याभावात् विनाऽपि आधानेन अग्निहोत्रादयः कर्तव्याः । **सिद्धान्ते** तु आधानस्य अग्न्यर्थत्वात् अग्निभिर्विना अग्निहोत्रानुष्ठानासंभवात् आधानानन्तरमेव अग्निहोत्रादयः कर्तव्या इति ।

वि— 'आधानं पवमानादीष्ट्यङ्गं न वा भवेत् ।, पमीनामिति(?)विशेषत्वात् तद्द्वाराऽस्य तदङ्गता ॥, अनारभ्य विधानात्तु नाङ्गं कस्य चिदाहितिः । अग्न्यर्थत्वात् तत्संबन्धिमयस्त्वग्निहोत्रगा. ॥'

**भाट्ट**— अग्नीनामनिर्देशेन पवमानेष्ट्यङ्गत्वाभावात् तत्संस्कारकत्वेन विहितस्य आधानस्यापि प्रकरणसहकृतवाक्यात् पवमानेष्टिसाधनीभूताग्निसंस्कारकत्वेन विनियुक्तस्य पवमानेष्ट्यङ्गत्वम्, पवमानेष्टीनां विश्वजिन्न्यायेन (४।३।५) फलकल्पना । इति प्राप्ते, आधानस्य किं अग्न्युत्पादकत्व उत संस्कारादिवत् अग्निनिष्ठातिशयमात्रजनकत्वम्, उभयथाऽपि तन्मते अग्निहोत्रादिषु आह वनीयाद्युत्पादकाभावात् अतिदेशस्यैवासंभवः । अतः अग्निहोत्राद्यङ्गभूताहवनीयाद्युत्पादकमेव आधानम् । पवमानेष्टयोऽपि अग्न्यङ्गभूताः फलवदाधानाङ्गभूता एव वा प्रकरणात् । ततश्च पवमानेष्टिषु असिद्धत्वात् अग्नेरतिदेशस्यैवाभावः । **प्रयोजनम्**— पवमानेष्टिषु **पूर्वपक्षे** अन्वारम्भणीया, **सिद्धान्ते** प्रधानारम्भकत्वात् न इत्यादि ।

मण्डन— 'नाधानमङ्गं स्तु पावमान्याः ।'

शंकर— 'आधानं नेष्ट्यर्थमिष्यते ।'

* अन्वारम्भणीयाया तु तृतीयोक्तपवमानेष्टिन्यायेनापि न अन्वारम्भणीया । भाट्ट. १०।१।४.

* पवमानेष्टिसंस्कारः अग्निप्रयुक्तः, न दर्शपूर्णमासप्रयुक्तः । भा. ३।६।६।१७.

* **पवमानग्रहविपर्ययेषु** अन्वारोहमन्त्रेषु व्यूढद्वादशाहगतेषु छन्दोव्यतिक्रमः भवः । स न छन्दःपदार्थेषु, किन्तु मन्त्रगतशब्देष्वेव कार्यः । प्राकृतस्य 'गायत्रच्छन्दाः' इत्यस्य स्थाने 'जगतीछन्दाः' इति वक्तव्यम्, 'त्रिष्टुप्छन्दाः' इत्यस्य स्थाने 'गायत्रच्छन्दाः' इति, 'जगतीछन्दाः' इत्यस्य स्थाने 'त्रिष्टुप्छन्दाः' इति वक्तव्यमित्यर्थः । वि. १०।५।२६.

* **पवमानमन्त्राः** 'श्येनोऽसि गायत्रच्छन्दाः, सुपर्णोऽसि त्रिष्टुप्छन्दाः, सघाऽसि जगतीछन्दाः । अनु त्वाऽऽरभे स्वस्ति मा सं पारय ॥' इति । अन्वारोहमन्त्रा एते । भा १०।५।२६।८८.

* **पवमानस्तोत्रं** त्रेधा, प्रातःसवने बहिष्पवमानम्, माध्यंदिनसवने माध्यंदिनपवमानम्, तृतीयसवने च आर्भवपवमानम् । वि.९।२।१ वर्णके २.

* **पवमानहवींषि** अग्न्याधेयप्रकरणाम्नातान्यपि वाक्येन प्रकरणं बाधित्वा अग्नेरेव गुणभूतानि भवन्ति । भा. ३।१।१२।२२. * पवमानहवींष्यपि प्राकरणिकेन 'यदाहवनीये जुह्वति' इति वाक्येन अग्न्यर्थतयैव विनियुज्यन्ते, आधानं अग्न्यर्थतया निरपेक्षेण वाक्येन यद्यपि विहितं तथापि– इत्युक्तं तृतीये । तन्त्र. ५।३।९। २१–२५. * पवमानहवींषि नाधानाङ्गं इति भाष्यमतम् । आधानाङ्गं इति वार्तिकमतम् । के. ● पवमानहवींषि ।

पर्यग्निकरणाच्च ॥ १२ ॥

पूर्वपक्षे तृतीयं हेतुमाह । 'आहवनीयादुल्मुकं गृहीत्वा तेन पशुं पर्यग्नि करोति' इति पशोः पर्यग्निकरणं श्रुतम् । तच्च पुरोडाशधर्मः । तस्मात् पशुः पुरोडाशविकारः ।

सांनाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥

पूर्वपक्षं सूत्रत्रयेण प्राप्तं वाशब्देन निरस्य सूत्रयन् सिद्धान्तमाह । सानाय्यं पशोः प्रकृतिः स्यात्, न पुरोडाशः । सानाय्यविकारः पशुः । तत्प्रभवत्वात् । प्रभवति अस्मादिति प्रभवः । तच्छब्देन पशुर्निर्दिश्यते । स. प्रभवः यस्य तत् तत्प्रभवं तद्भावात् । पशुरपि पशोर्जायते, सानाय्यमपि पशोर्जायते । इति उभयोः पशुप्रभवत्वं सामान्यम् । हविःसामान्यं च देवतासामान्यात् बलवत् इत्युक्तम् ( ८।१।१७।३२–३४ ) । तस्मात् तत्प्रभवत्वं निर्णायको हेतुः ।

तस्य च पात्रदर्शनात् ॥ १४ ॥

सिद्धान्ते हेत्वन्तरमाह । तस्य सानाय्यस्य यत् पात्रं कुम्भी नाम, तस्यैव पात्रस्य पशौ दर्शनात् सानाय्यविकारः पशुः । 'यदि पशुकुम्भ्यां पचेत्' इति च पात्रदर्शनम् । तस्मात् अग्नीषोमीयः पशुः सानाय्यविकार इति सिद्धान्तः । के.

* पशुर्मुख्यः । न हि शमि निर्वर्तयति । भा. १२।२।११।२७.

※ पशुः सवनकालः, न व्यहकालः ॥

निरूढपश्वादिषु उत्तरवेदेः काले व्यहरूपस्यहरूपो वा स्यात् चोदकानुग्रहात् । इति प्राप्ते, 'स्नात्वा उपवा वेदावसमूणि अरणी समारोप्य निर्मथ्य यदवसाय' इत्यादिना सवनकालत्वस्य वाचनिकत्वात् अतिदेशबाध । अत एवोत्तरवेद्या नाग्निहोत्रस्य स्वपमलक्षिः । दैवात् कर्मण उत्कर्षे तु सत्या प्रथमो, तत्रैव करणमिति फलः । संकर्ष. ३।२।२७.

* पशुः सांनाय्यविकारोऽपि सन् न दध्नो विकारः, किन्तु पयसो विकारः । सद्यस्कालत्वसामान्यात् पशानामर्थाच्च । भा. ८।२।३।१५–१८. * पशुः स्नायकद्वारा यागसाधनम् । भाट्ट. १०।७।१. * पशुः हृदयादीन्याग्नेयुक्तः, न तु सांनाय्यप्रयाजलोहितनिरसनमयुक्तः । भा. ४।१।१२।२७ * पशवः इष्टयश्च अग्निष्टोमानुष्ठानात् प्राक् अनुष्ठातुं शक्यन्ते । के (वि. ५।३।१४) । * पशवः औत्पत्तिकेन विभागेन संव्यवहारेषु संख्यायन्ते 'पञ्चभिरश्वैः क्रीतः', 'पञ्चभिर्गोभिः क्रीतः' इति । न ब्रीह्यादीनामौत्पत्तिकेन विभागेन सव्यवहारेषु संख्या संश्लिष्यते । निगदमित्रायां मानाभिधाया वा भवति । नहि भवति पञ्चभिर्माषैः क्रीत इति । पञ्चभिर्माषाणामाढकैः द्रोणैर्वा कुडवैर्वा जातीभिर्वा इति भवति । भा. १०।३।११।४६. * पशवश्च आम्नाता ज्योतिष्टोमे अग्निष्टोमसंस्थे अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । भा ३।६।७।१८. * पशवो निरूढादयः सोमात् प्रागपि कर्तुं शक्यन्ते । तन्त्र. ५।४।८।२५. * पशवः प्राजापत्याः सप्तदश वाजपेये । तेषां चोदकप्राप्ताग्नीषोमीयविकृतपशुभिः समुच्चयः । वि.१०।४।४. * पशवः साद्यस्के 'सह पशूनालभते' इति सह विहिताः । तत्र पशुषु वेदि–उत्तरवेदि–यूपाः शास्त्रीयसंस्कारनिरपेक्षा गृह्यन्ते 'खलेवाली यूपः' इत्याम्नानात् ( ११३) हलोत्तरवेदिः ) खलेवाली यूपः' इत्याम्नानात् ( १।३। १३–१४ ) । ते च पशवः अग्नीषोमीयपशोः विकृतिः । १०।२।५. * पशुमग्नीषोमीयं प्रोक्षति 'अदुभ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि' इति ज्योतिष्टोमे । भा ८।३। २।११. * 'पशुमालभेत' इति एकत्वं विवक्षितम् । पश्वेकत्वाधिकरणम् । वि. ४।१।५. * 'पशुमालभेत' इति वाक्यं कर्मणो विधायकम्, न तु अनुवादकम् । पशुसोमाधिकरणम् । २।२।६. * 'पशुं संज्ञपयति' अत्र प्रतिपत्तिविधिः द्वयर्थः । बाल. पृ. २१. * पशून् । 'वसन्ते ललामांस्त्रीन् वृषभानालभते' । भा. ८।१।८।१५. * 'पशुना' इयं तृतीयैकपदत्वश्रुतिः विनियोक्त्री श्रुतिः । बाल. पृ. ४१–४२. * 'पशुना यजेत' अत्रोपादेयपरत्वादिगता संख्या विवक्षिता । के. (भाट्ट. ४।१।५) । * 'पशुना यजेत' इत्यत्र विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वमवगम्यते । भाट्ट. ४।१।५. * पशोरग्नीषोमीयस्य पर्यग्निकरणं ज्योतिष्टोमे 'आहव-

नीयादुल्मुकेन पशुं पर्यग्नि करोति ' इति । भा. ८।२। २।१२. ● पशोरङ्गान्येव हवींषि, न तु कृत्स्नः पशुः । वि. १०।७।१. ● पशोरङ्गानि । हृदय जिह्वा वक्षः दोषी पार्श्वे गुदं अंसौ शिरः अनूक अपरसक्थिनी । भा. १०।७।१-२।२-६. ● पशोरङ्गं केन चित् काष्ठेन कार्यं स्वरोर्नावादौ । भाट्ट. ४।२।१. ● पशो. । अवकीर्णिपशोर्लौकिकाग्नौ अनुष्ठानम् । भा. ६।८।४।२२. ● पशो. आग्नेयस्य प्रथममुपाकरणम्, न तु अग्नीषोमीयस्य साद्यस्के । तन्त्र. ५।१।६।१३. ● पशोः एकैकस्मिन् पार्श्वे त्रयोदश त्रयोदश वङ्क्र्यो भवन्ति । वङ्क्र्य. पर्शव. पार्श्वास्थीनि । के.

■ पशोरेकहविष्ट्वं समस्तचोदितत्वात् । १०। ७।१।१ ॥

ज्योतिष्टोमादौ अग्नीषोमीयादेः पशोः एकहविष्ट्वम् । एक च तत् हविश्च एकहविः, तस्य भावः एकहविष्ट्वम् । कृत्स्नः पशुरेक हविः, न तु प्रत्यङ्ग हविर्भेदः । समस्तचोदितत्वात् समस्तस्य पशोः अग्नीषोमार्थे चोदितत्वात् ' अग्नीषोमीयं पशुमालभते ' इति । तस्मात् कृत्स्नः पशुरेक हविः । तस्मादेव प्रदानार्थमादेय पुरोडाशादिव । इति पूर्वः पक्ष. ।

प्रत्यङ्गं वा, मद्धदङ्गानां पृथक्प्रकल्पनत्वात् । २ ॥

वाशब्द. पूर्वपक्ष व्यावर्तयति । न कृत्स्नस्य पशोः एकं हविष्ट्वम्, किन्तु प्रत्यङ्ग हविष्ट्वम् । हृदयादीनामङ्गाना पृथक्प्रकल्पनवत्वात् पृथक् हविष्ट्वेन प्रकल्पन येषा तानि अङ्गानि पृथक्प्रकल्पनानि, तादृश त्वात् । ' हृदयस्याग्रेऽवद्यति, जिह्वाया अवद्यति, वक्षसोऽवद्यति ' इति अङ्गाद्अङ्गात् पृथगवदान श्रूयते । तस्मात् पश्वाकृतिकस्य द्रव्यस्य हृदयादीनि हवींषि । तेभ्योऽवदाय प्रदातव्यम् । ग्रहवत् । यथा सोमे ' ऐन्द्रवायवं गृह्णाति, मैत्रावरुण गृह्णाति, आश्विन गृह्णाति ' इति पृथक्प्रकल्पनात् सोमग्रहो हविः न सोमलता, तद्वत् । तस्मात् प्रत्यङ्ग हविर्भेद इति सिद्धान्तः । के.

● पशोरेकहविष्ट्व समस्तचोदितत्वात् । इति सूत्रेण ' अग्नीषोमीयं पशुमालभेत ' इति श्रुतिबोधितेन अस्याकपालादिवत् समस्तपशोः देवताऽन्वयात् प्रदेयत्वलक्षण हविष्ट्वावगतेः समस्तादवदाने पूर्वपक्षिते, ' प्रत्यङ्गं वा मद्धवदङ्गाना पृथक्प्रकल्पनत्वात् ' इति सूत्रेण पशु स्वरूपस्य विशसनेन नाशितत्वात् प्रदेयत्वानुपपत्तेः पृथक्कल्पितेभ्यश्च हृदयादिभ्य. अवदानविधानात् तद्धितोक्तस्य देवताऽन्वयस्य साक्षादसंभवात् अगत्या स्वत्वहितविषयत्वावगतेः प्रत्यङ्गं हविष्ट्वेन अवदानं सिद्धान्तयिष्यते । मु पृ. ७९९. ● पशोरेकहविष्ट्वम् ( १०। ७।१।१ ) इत्यत्र उद्भविष्यति ( कथा ) किं समस्तादवदातव्यम्, उत प्रत्यङ्गम्, उत एकस्मात् अथवा हृदयादिभ्यः परिगणितेभ्यः इति । बा. २।२।६।११ पृ. ५१७. ● पशो. एकादशाङ्गानि हविः । तानि च '१ हृदयम्, २ जिह्वा, ३ वक्ष, ४ यकृत्, ५-६ वृक्कौ ( वृक्यौ इति क्वचित् ), ७ सव्य दोः, ८-९ उभे पार्श्वे, १० दक्षिणा श्रोणि., ११ गुद तृतीय (गुदतृतीयोऽश.) इति दैवतावदानानि ' ( अत्र यकृत्-शब्दस्थाने ' तनिम ' इति पाठ. भाट्टे. , ' दक्षिणोऽसः, सव्या श्रोणि., गुद तृतीय इति सौविष्टकृतानि ' इति कल्पसूत्रकारः । ' दोष्णः पूर्वार्धादग्रे समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनत. ' इति श्रुति ) । वि. १०।७।३. ● पशोः काल. ' य इष्ट्वा पशुना सोमेन वा यजेत सोऽमावास्याया पौर्णमास्या वा यजेत ' इति । भा. १२।२।५।२५. ● पशोर्दर्शहकाल्ये प्राजहिते एव अग्निहोत्रपाक. । संकर्ष. ३।२।२५ मीको. पृ. ९५ ' अग्निहोत्रपाक. पशो. ' इत्यत्र द्रष्टव्यम् । ● पशो. पश्चादवदानत्वम् । पश्चादवदानं हि पशो. श्रूयते । भा. १०।७।२।९. ● पशो प्रदेयाङ्गत्विष्येव, न तु साक्षात् प्रदेयत्वम् । इति पश्वयवा एव अतिदेशाप्रामण्योपायकाः । अवयवेष्वेव च पशोधर्मा. । भाट्ट. १०।७।१. ● पशो. या देवता, सैव पशुपुरोडाशस्यापि । के. ● पशोः विशसनकर्म हृदयादीनां निष्पत्त्यर्थम्, न वाधन्याः । भा. १२।४।६। १३, ● पशोः चैतेणिनो धर्म. सुक्तवाकप्रैषः ' अग्मिन ' इति । आम्नानसामर्थ्यात्... स ■ मैत्रावरुणेन वक्तव्यः । मैत्रावरुणश्च पशौ अस्ति, पुरोडाशे नास्ति । १२।२।१२।३१, ● पशोः सवनीयस्य धर्माग-

मतिदेशः, ऐकादशिनेषु पशुषु । द्वैशन्यस्य दर्शनात् । ८।१।७।१४, * पशोः स्वरुणा अञ्जनं स्वरोरुत्पत्तिं प्रयोजयति । 'स्वरुणा पशुमनक्ति' । ४।४।१०।२९–२८. * पशोः हृदयाद्यवदानकर्तृत्वं अध्वर्योः प्रतिप्रस्थातुर्वा इति पक्षद्वयम् । पक्षद्वयेऽपि प्रतिप्रस्थातुः इडाभक्षो नास्तीति भाट्टदीपिका विस्तारश्च । प्रतिप्रस्थातृकर्तृकत्वपक्षे तस्य भक्षोऽस्ति इति शास्त्रदीपिका । के. * पशोः हृदयाद्यवयवेभ्य एव यावदानं गृहीत्वा हूयते । शा, १०।७।१. * पशोः हृदयादिरूपहविष्प्रकृतितया यागाङ्गत्वम् । यत्र विशसनम्, तत्र पशुः प्रकृतिद्रव्यम् । मीन्या. * पशूनामैकादशिनानां प्रायणीयोदयनीययोः विभज्य (५+६) अनुष्ठानम् । भा. १०।६।४।६–१२, * पशूनां काम्यानां धौम्यादीनामनुष्ठाने पाठक्रमो न नियामकः, यथाकामं तु अनुष्ठानम् । ५।१।१२। ३२–३६, * पशूनां प्रयाणां यूपकल्पनमग्निष्टोमे । 'यूपन्यायः' इत्यत्र अधिकरणं द्रष्टव्यम् । ११।३।३।२–४, * पशूनां प्राजापत्यानां अवदानकाले आक्रमोत्कर्षमात्रविधानं वाजपेये । ११।२।१२।५१–५३. * पशौ अग्नीषोमीये 'अध्यूध्नीं होत्रे हरन्ति' इत्युक्तया अध्यूध्न्या होतुः कृत्स्नस्य इडाभागस्य निवृत्तिः । भाट्ट. १०।७।४. [अग्नीषोमीये इति पदं प्रतिबिन्दु अनुवर्तते इति ज्ञेयम्] * पशौ अग्निराशीर्वैस्त्रिमिरङ्गैः स्विष्टकृद्यागानुष्ठानम् । भा. १०।७।३।१०–११, * पशौ अनूयाजीयपृषदाज्यधारणार्थं पात्रं प्रयाजाज्यपानात् पृथक् प्राप्यम् । पात्रभेदन्यायः । ५।२।८।१६. * पशौ इडाभक्षः 'दक्षिणतो निषाद्य प्रतिप्रस्थाता अवद्यति' इति प्रतिप्रस्थात्रवदानपक्षे प्रतिप्रस्थातुरपि अस्ति । अध्वर्युणा अवदानमितिपक्षे तु नास्तीति पार्थसारथिः । तन्निर्मूलमिति, यदि तु याज्ञिकानां तथा आचरणम्, तदा प्रयोजनकालीनः प्राकृतः कश्चित् पदार्थः अनुसंधेय इति च खण्डदेवः । के. (भाट्ट. १०।७।८) । * पशौ इडाभक्षे 'वनिष्ठुमग्नीधे' इति वनिष्ठुना अग्नीधः तदितरभागस्य बाधः । वि. १०। ७।५. * पशौ दार्शपौर्णमासिको विध्यन्तः, लिङ्गदर्शनात्, 'एकादश प्रयाजान् यजति, एकादशानुयाजान्' 'ध्रौवमाघारमाघार्य जुह्वा पशुमनक्ति' इति, द्रव्यदेवतारूपव्यक्तचोदनत्वाच्च । भा. ८।१।५।१२, * पशौ धर्मवान् निर्मन्थ्योऽग्निराम्नातः 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । ७।३।७।१८. * पशौ 'परिवीरसि' इति करणमन्त्रेण अध्वर्युर्यूपस्य परिव्याणं करोति । तत् परिव्याणं होता 'युवा सुवासाः' इति मन्त्रेण अनुवदति । वि. ३।८।११. * पशौ प्रतिप्रस्थातुर्भक्षाभावः ज्योतिष्टोमे । भा. १०।७।८।२२–२३, * पशौ मैत्रावरुणस्य अस्ति इडाभक्षः । १०।७।९।१८–१९ । प्रैषानुवचनरूपकर्मद्वयकर्तृत्वेऽपि तस्य न द्वौ भागौ, किन्तु एक एव । ७।२०–२१, * पशौ मैत्रावरुणस्य प्रैषान्तानुवचनेष्वेव कर्तृता ज्योतिष्टोमे । प्रैषानुवचनाधिकरणम् । ३।७। २१।४३–४५, * पशौ वनिष्ठुः अग्नीधः प्राकृतकृत्स्नेडाभक्षं निवर्तयति ज्योतिष्टोमे । वनिष्ठु–अधिकरणम् । १०।७।५।१७, * पशौ साप्तमस्य पशुपुरोडाशहविष्कावदानकाले विमर्शः । १२।१।८।१६, * पशौ अग्नीषोमीये (इदं पदं उत्तरत्र नानुवर्तनीयम् ।) विहितैः एकादशप्रयाजैः प्राकृताङ्गान्तराणां न बाधः. सोमे । १०।१।१।१–१२.

ꣳ पशौ अग्नीषोमीये शमिता ऋत्विग्भ्यो न भिन्नः ॥

शमिता च शब्दभेदात् । ३।७।१३।२८ ॥

भाष्यम्—अस्ति शमिता 'शमितारमुपनयेत' इति । स किं संकीर्तितानाम् (ऋत्विजाम्) अन्यतमः, उत अन्यस्तेभ्यः इति । किं प्राप्तम् ? तेषां वर्गे संकीर्तनात् तेषामन्यतमः । इति प्राप्ते, उच्यते । शमिता च शब्दभेदात् । शब्दो भिद्यते । एवसंज्ञकेन इदं कर्म कर्तव्यमिति । तस्मात् एवंसंज्ञकः उत्पादयितव्यः । अस्य संकीर्तनात् ऋत्विक्प्रसिद्धिः गम्यते । तस्मादन्यः शमिता स्यात् । अपि च 'क्लोमा चार्धं वैकर्तनं च शमितुः । तद् ब्राह्मणाय दद्यात्, यद्यब्राह्मणः स्यात्' (अत्र ऐत्रा. 'अर्धं चैव वैकर्तस्य क्लोमा च शमितुः' इति पाठः प्रथमवाक्ये । तद्ब्राह्मणाय इत्यादि तु समानम् । २।१।१।२) इति अब्राह्मणाशङ्का भवति । सा ऋत्विजि नोपपद्यते ।

**धा**— शमिता च शब्दभेदात् ॥ ( वार्तिककारेण सूत्रपाठमात्रं कृतम् )।

**प्रकरणाद् वोत्पत्त्यसंयोगात् । २९ ॥**

**भाष्यम्**— सत्य सत्यापिवृद्धिर्गम्यते, न तु उत्पद्यमानेषु । या तु अनुत्पत्तिस्तेषु गम्यते, तत्र एकस्य कर्मभेदात् (३।७।१।२३) इत्येवमपि अवकल्पते। यत्तु उक्त अब्राह्मणाशङ्का भवतीति, यजमानाभिप्राया सा ' यदि अब्राह्मणो यजमान स्यात् ' इति । ननु ' यदि अब्राह्मण स्यात् ' इति प्रकृत शमिता सम्बध्यते । उच्यते । शमयति ( शरीरोष्माणं वारयति सञ्जपयती त्यर्थ । ) इति शमिता । यौगिक एष शब्द प्रकृतेष्वपि अवकल्पते । शामित्रमपि आध्वर्यवे समाम्नानात् अध्वर्युणा कर्तव्यम् । तस्मात् शमनात् अध्वर्यु शमिता । एव सति अप्रकृतो यजमान सम्बध्यते ।

**वा** — उत्पत्तिगता समाख्या भेदिका भवति । न चेय तद्गता । तेन एकस्य कर्मभेदात् ' इत्येवमेव भवति । नन्वध्वर्य्वादिषु व्याप्रियमाणेषु ' शमिता पशु मन्थे ग्लावि ' इति अनर्थकमेव स्यात् । नैष दोष । य एव कश्चिद् व्यापृत, स एव ग्रहीष्यति । न च एषां सर्वाध्वर्युपुरुषाणा सर्वर्त्विजां वा व्यापारो विद्यते । तदेतद् वक्ष्यति इतरस्य यस्तथा यतो विशेष स्यात् ' इति । प्राप्त्यभावाच्च 'यद्यब्राह्मण स्यात् ' इति लिङ्गमबाधकम् । अतो बलात् यजमानविषय कल्प्यते । ( ' यद्यब्राह्मण स्यात् ' इति वाक्यस्य ) यजमानप्रकरणाम्नानाच्च शामित्रस्य न कथञ्चित् अब्राह्मणविषयत्व विज्ञायते । हिंसात्वात् ब्राह्मणो नेच्छेत् इति चेत्, तुल्यमेतत् अब्राह्मणस्यापि । न हि मन्दप्रतीकार सुतरा प्रत्यवैति । तेन यथैव शूद्रादि कथञ्चिदनिच्छन् कार्यते (शामित्रम्), तथैव यो दानादिवशीकृत ( आर्त्विज्यम् ) करिष्यति सोऽनुष्ठास्यति ( शामित्रम् ) इत्यविशेष । एतेनैव हेतुना आर्त्विज्य निन्द्यते ।

**सोम**— सज्ञाभेदम् प्राधान्यस्यापवादात् समवि ।

**वि**— ' तेभ्योऽन्य शमिताऽनन्यो वा, ऽन्य संज्ञापृथक्त्वत ।, करणाभावतो नान्यः सज्ञाभेदात्तु यौगिक ॥ ' यद्यपि ' शमितार उपेतन यज्ञम् ' इति मन्त्र अध्वर्युकाण्डे पठित, तथापि ' पराववर्तेऽध्वर्यु पशो संज्ञप्यमानात् ' इति अध्वर्यो पराङ्निश्रवणात् अध्वर्युपुरुषा प्रतिप्रस्थात्रादय शमितार ।

**भाट्ट**— पशौ ' शमितारमुपनयीत ' इति श्रुत शमिता तु वरणभेदानाम्नानात् सत्यपि संज्ञाभेदे यौगिक त्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा वृतेषु तस्या उपपत्तेर्नान्य । तत्राप्यध्वर्यो ' परावर्तनेऽध्वर्यु पशो संज्ञप्यमानात् ' इति वचनेनासामर्थ्यात् तत्पुरुष प्रति प्रस्थाता संज्ञपयेत् । न च तस्य हिंसादोषभिया अप्रवृत्ति । दक्षिणादिलोभेन तदङ्गीकारेण प्रवृत्त्युपपत्ते । अत एवा र्त्विज्य निन्दन्ति । ब्राह्मणस्य च शामित्रविषये कर्तौ पृथक्निषेधो दोषाधिक्यज्ञापनार्थ । अत एव कर्तौ शामित्रे ब्राह्मणालाभेन शूद्रेण क्रियमाणे ' क्रोमान शमितुस्तद्ब्राह्मणाय दद्यात् यद्यब्राह्मण स्यात् ' इति वचन सगच्छते एव । अब्राह्मणपद यजमानपरमिति तु भ्रान्त ।

**मण्डन**— ' शमिताऽध्वर्युरेव स्यात् ।'

**शंकर**— ' ऋत्विग्भ्य शमिता नान्य ।'

● पशौ अग्नीषोमीये हृदयाद्यङ्गेष्वपि यथावत् पशु धर्मत्वमेव । भा १०।७।२०।७२-७३

**पशावपालम्भाल्लोहितशकृतोरकर्मत्वम् । ४।१।१२।२७ ॥**

अग्नीषोमीयपशौ हृदयादिराग प्रयोजक, उत शकृत्प्रयाजलोहितनिरसने अपि प्रयोजके इति विचारे सिद्धान्तसूत्रम् । पशौ पशुयागे लोहितस्य शकृतश्च लोहितशकृतो लोहितनिरसनशकृत्प्रयाजयो अकर्मत्व अप्रयोजकत्वम् । कुत ? अनालम्भात् लोहितनिरसना र्थम् पशोरालम्भाभावात् । हृदयादियागार्थमेव हि आलम्भ । तस्मात् हृदयादियाग एव पशोरालम्भस्य प्रयोजक । के

● ' पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ' इत्यधि करणे प्रधानपूर्वकाण्ड प्रतिपत्ति ' शकृत् प्रविध्यति ' ' लोहित निरस्यति ' इत्युक्ता । वाल पृ ८२ ● पशौ अनूयाजा एकादश । तत्र प्रथमानूयाजस्य आद्याश्रयाये दक्षश्चेति अभ्यास, द्वितीयस्य अष्टमपर्यन्त पञ्चम

प्रभृत्यध्यायः, तृतीयस्य नवमैकादशौ इति । भाट्ट. ५।१।२.

ह्रै पशावपीति चेत् । १०।१।९।१९ ॥

'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इत्युक्तः पशौ पुरोडाशः अपि आज्यभागवत् आराद्रुपकारकः स्यात्, न देवतासंस्कारार्थः । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, तद्भूतवचनात् । २० ॥

अग्नीषोमीयपशुपुरोडाशयागः न आराद्रुपकारकः किन्तु पशुदेवताया संस्कारकर्म । न च पशौ अन्या देवता पुरोडाशे चान्या, किन्तु एकैव, 'यद्देवत्यः पशुः, तद्देवत्यः पशुपुरोडाशः' इति तद्भूतवचनात् । तस्मिन् पशौ भूतः निगमानो यो देवताविशेषः तस्यैव पशुपुरोडाशेऽपि वचनात् । तस्मात् सैव देवता, पुरोडाशयागश्च तस्याः संस्कारकर्म इति सिद्धान्तः ।

लिङ्गदर्शनाच्च । २१ ॥

पशुपुरोडाशयागः पशुदेवतायाः संस्कारकर्म अप्रतिपन्नदेवतासंस्कारकत्वस्य मन्त्रलिङ्गस्य दर्शनात् । 'इन्द्राय वज्रिणे वृषभमालभेत' इत्यस्य पशोः पुरोडाशस्य प्रश्ने 'इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठम्' 'स्तुहि शूर वज्रिणं सुप्रणीतम्' इति याज्यानुवाक्याद्वयं समाम्नातम् । तत् संस्कारपक्षे युज्यते । तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयागः इति सिद्धान्तः ।

गुणो वा स्यात् कपालवद्, गुणभूतविकाराच्च । २२ ॥

वाशब्दः सिद्धान्तपक्षं व्यावर्तयति । पुरोडाशदेवता गुणः पशुयागे पुरोडाशयागे च गुणः स्यात् । कपालवत्, यथा कपालं भागेऽपि पुरोडाशेऽपि च गुणः तद्वत् । गुणभूतविकारात् गुणभूतविकारत्वात् अग्नीषोमौ पशुयागे पुरोडाशयागे च गुणभूतौ । तत्र आराद्रुपकारकत्वेनैव पुरोडाशयागस्य विधानात् प्राकृतकर्मप्राप्तत्वात् । चकारो दृष्टान्तार्थः, सौत्रामण्या आश्विनसारस्वतनुत्यानदेवताकेषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडाशाः पशुप्रकरणात् नोत्कृष्यन्ते, तस्मात्तेषामाराद्रुपकारकत्वेन । संस्कारत्वे च उक्तत्वेन । तद्वत् अत्रापि पुरोडाशयागस्य आराद्रुपकारकत्वम् । प्रधानभूतयोरग्नीषोमयोः गुणत्वं विरुद्धमिति भावः । इति पूर्वः पक्षः ।

अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत स्वाहाकारवत् । २३ ॥

सम्प्रदायपूर्वपक्षव्यावृत्त्यर्थः अपिवाशब्दः । शेषभूतत्वात् देवतायाः यागशेषभूतत्वात् पशुपुरोडाशः तत्संस्कारः तस्याः पशुदेवतायाः संस्कारः प्रतीयेत । स्वाहाकारवत्, यथा स्वाहाकारः पञ्चमप्रयाजरूपः स्वाहाकारयागः स्वयं निष्प्रयोजनः सन् देवतासंस्कारः प्रतीयते तद्वत् । तस्मात् पुरोडाशयागः संस्कारकर्म ।

अङ्गानामर्थसंयोगात् । २४ ॥

पशुपुरोडाशयागः पशुदेवतासंस्कारकर्म । अङ्गानामर्थेन प्रयोजनेन संयोग इह गम्यते वाक्येन । तेन नाराद्रुपकारकम् । आराद्रुपकारकेभ्यः सामवायिकानि अङ्गानि गरीयांसि भवन्ति इति । तस्मात् संस्कारकर्म पुरोडाशयागः ।

व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् । २५ ॥

सौत्रामण्या पशुपुरोडाशदेवतानां विप्रतिपत्तौ सत्यां व्यृद्धवचनं व्यृद्धत्ववचनं तदर्थत्वात् स्वकल्पे पञ्चमी, तदर्थत्वं देवतासंस्कारार्थत्वमङ्गीकृत्य उपपद्यते । 'व्यृद्धं वा एतत् सौत्रामण्या यत् यदस्याः समृद्धं यदन्यदेवत्याः पशुपुरोडाशा भवन्ति अन्यदेवत्याः पशवः' इति । इदं च पशुपुरोडाशस्य संस्कारकर्मत्वे एवोपपद्यते । तस्मात् संस्कारकर्म पशुपुरोडाशः इति सिद्धान्तः ।

गुणेऽपीति चेत् । २६ ॥

पूर्वपक्षी आह । गुणेऽपि व्यृद्धवचनमुपपद्यते इति । गुणशब्देन आराद्रुपकारकत्वमुच्यते । पुरोडाशयागे गुणेऽपि आराद्रुपकारकत्वे स्वीकृतेऽपि व्यृद्धवचनमुपपद्यते, व्यृद्धत्वे सत्येव असमृद्धत्वोक्तेः । इति चेत् पूर्वपक्षी ब्रूयात् ।

नासंहानात् कपालवत् । २७ ॥

पशुपुरोडाशयागस्य आराद्रुपकारकत्वेऽपि सौत्रामण्यां व्यृद्धवचनं उपपन्नं इति चेन्न । कपालवत्, यथा एकेन कपालेन पुरोडाशे क्रियमाणे अन्यस्य कपालस्य का चिद्धानिर्नास्ति, तथा अन्यया देवतया पुरोडाशयागे

क्रियमाणे पशुयागदेवतायाः असद्भावात् सद्भावस्य हानेरभावात् । पशुदेवतायाः संस्काररूपपुरोडाशयागे अन्यया देवतया कृते स्मरणरूपसंस्कारलोपात् व्यूढवचन उपपद्यते इति भावः । एवं [illegible] सौत्रामण्यां व्यूढवचन अन्यत्र पशुयागे पुरोडाशयागे च एकैव देवता भवतीति लिङ्गदर्शनं भवति इति पुरोडाशयागः पशुयागीयदेवतायाः संस्कारकर्मैव इति सिद्धं भवति ।

ग्रहाणां च संप्रतिपत्तौ वद्वचनं तदर्थत्वात् । २८ ॥

सौत्रामण्यां संप्रतिपत्तौ संप्रतिपन्नदेवताकेषु ग्रहेषु तद्वचनं पुरोडाशवचनं भवति ‘ नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः ’ इति । वस्तुतस्तु न तावत् न पुरोडाशा विद्यन्ते, विप्रतिपन्नदेवताकेषु संस्काराभावमालोच्य एवमुच्यते– ग्रहा एवा पुरोडाशा इति । तदर्थत्वात् देवतासंस्कारार्थत्वात् पुरोडाशानामिव ग्रहाणाम् । तेन ज्ञायते यत्र साक्षात् पुरोडाशा एव भवन्ति तत्र ते पशुदेवतासंस्कारार्था इति । तस्मात् संस्कारार्थं पशुपुरोडाशः ।

ग्रहाभावे च तद्वचनम् । २९ ॥

सौत्रामण्यां आश्विनसारस्वतैन्द्रान् पशुयागान् विधाय तेषां ग्रहपुरोडाशांश्च विधाय बार्हस्पत्य चतुर्थः पशुयागो विहितः । अयं च पुरोडाशवानेव पशुः ‘ न ह्येतस्य ग्रह गृह्णाति ’ इति श्रुतत्वात् । एवं चात्र ग्रहाभावे ग्रहस्याभावे तद्वचनं पशुपुरोडाशवचनं पशुयागे पुरोडाशग्रहान्यतरयागस्य संस्कारकर्मत्वे लिङ्गम् । तस्मात् पुरोडाशो देवतासंस्कारार्थः ।

देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति । ३० ॥

‘ अग्निभ्यः कामेभ्य पशव आलभ्यन्ते, कामा वा अग्नय , आग्नेयाः पुरोडाशा भवन्ति आग्नेया हि पशव ’ अत्र पशुदेवताया अग्नित्वात् पुरोडाशानामपि देवता अग्निरेव इत्याह । ततश्च देवताया पशुदेवताया पुरोडाशदेवताहेतुत्वं प्रसिद्धं तेन वाक्येन दर्शयति । तस्मात् पुरोडाशः पशुदेवतासंस्कारः ।

अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारः स्यात् । ३१ ॥

यदुक्तम् ( २२ ) गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यात् इति, तत्रोच्यते । अग्नीषोमीयपशुपुरोडाशे अग्नीषोमौ प्रधानदेवते । पूर्णमासयागे तु अग्नीषोमौ यागाङ्गम् । एवं च गुणभूतयोरपि अग्नीषोमयोर्धर्माः पशुपुरोडाशे प्रधानभूतयोरपि सतोः उपपद्यन्ते । तदाह उपपत्तिः धर्माणामुपपत्तिः अविरुद्धा न विरुद्धा । अर्थापत्तेः अर्थस्य प्रयोजनस्य आपत्तेः प्राप्तेः छिद्रापिधानार्थत्वात् । शृतवत् । यथा अभ्युदितेष्टौ ‘ शृते चरुम् , दधन्चरुम् ’ इति दधिशृते प्रदानार्थत्वात् प्रधानभूते अपि गुणभूतं प्रणीताकार्यं लभेते । तस्मात् पशुपुरोडाशः पौर्णमासपुरोडाशस्य गुणभूतस्यापि विकारः स्यात् । प्रधानमपि क्वचित् गुणभूतस्यापि धर्मान् लभते इति वक्तव्यमन ।

स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद् , विप्रतिपत्तौ तादर्थ्याद् विकारत्वम् । ३२ ॥

यदुक्तं पूर्वपक्षिणा ऐन्द्रवायवमाविभाणां पुरोडाशानां सौत्रामणीप्रकरणात् उत्कर्षः प्राप्नोतीति ( २२ ) । तत्रेदमुच्यते । [illegible] यागः द्व्यर्थः देवतासंस्कारार्थः छिद्रापिधानार्थश्च । उभयोः अर्थयोः श्रुतिभूतत्वात् श्रुत्युक्तत्वात् । विप्रतिपत्तौ विप्रतिपन्नदेवताकेषु पुरोडाशेषु तादर्थ्यात् छिद्रापिधानार्थत्वात् विकारत्वं प्रकरणे एव । न प्रकरणादुत्कर्षः ।

तस्याप्युक्तमर्थवादत्वम् । ३३ ॥

पशुपुरोडाशस्य पशुच्छिद्रापिधानार्थत्वं यदुक्तं सिद्धान्तिना, तस्यापि अर्थवादत्वमुक्तम् । वपोद्धरणेन जातस्य पशोः छिद्रस्य पुरोडाशेन अपिधानं प्रत्यक्षविरुद्धम् । तस्मात् छिद्रापिधानोक्तिः पुरोडाशस्तुत्यर्था इति । इति पूर्वपक्षिणः शङ्का ।

विप्रतिपत्तौ तासामाख्याविकारः स्यात् । ३४ ॥

यदुक्तं पूर्वपक्षिणा छिद्रापिधानार्थत्वस्य अर्थवादत्वमिति । तत्रोच्यते । नहि प्रकारान्तरेण सौत्रामणीप्रकरणात् पुरोडाशानामनुत्कर्षं उच्यते । माऽस्तु छिद्रापिधानार्थत्वेन अनुत्कर्षसिद्धिः । तथा । अश्विनौ सरस्वती सुत्रामा

च पशुदेवताः । इन्द्रः वरुणः सविता च पुरोडाशदेवताः । एवं सौत्रामण्यां देवतानां विप्रतिपत्तौ सत्यां तासां पशुदेवतानां याः आख्याः तासां विकारः स्यात् । पशुदेवतावाचकशब्दानां पुरोडाशदेवतावाचकशब्दाः आख्याविकारः स्यात् । तत्र इन्द्रः सुत्रामा पर्याय एव इति इन्द्रशब्दस्य सुत्रामा इति विकारः । सरस्वतीशब्दस्य विकारः सवितृशब्दः । अश्विनीशब्दस्य वरुणशब्दः । एवं च पशव एव देवताः पौरोडाशिक्यः स्युः इति प्रकरणात् नोत्कर्षः । तस्मात् पुरोडाशयागः संस्कारार्थः ।

अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवतः । ३५ ॥

सौत्रामण्यां पशुदेवतानां आख्याविकारः पुरोडाशदेवताशब्दाः इत्युक्तम्, तत् अपरितोषात् वाशब्दो व्यावर्तयति । न आख्याविकारः । संस्कारपक्षस्तु अन्यथा अवकल्प्यते । पशुपुरोडाशः पशुयागस्य अभ्यास एव पशुदेवतासंस्कारार्थः । सौत्रामण्यां तु यागानामेकदेशः अन्यदेवत्योऽपि स्यात् प्रयाजवत् । यथा पशौ चोदकेन प्राप्तानां प्रयाजानां पञ्चानां स्थाने एकादशत्व विधीयते । तत्र अभ्यासमन्तरेण नावकल्पते इति अभ्यस्यन्ते प्रयाजाः । तेषामेकदेशः अन्यदेवत्यः प्रकृतिवत् समिदादिदेवत्यः, अपर एकदेशस्तु अन्यदेवत्यः दुरः उषासानक्ता इत्येवमादिदेवत्यः । तद्वत् सौत्रामण्यां पशुदेवता पशुपुरोडाशे चोदकेन प्राप्नोति पुरोडाशश्च द्रव्यम् । तत्र पशुदेवतायाः द्रव्यान्तरं पशुः विधीयते, पशुपुरोडाशस्य च द्रव्यस्य देवतान्तरं इन्द्रसवित्रादि विधीयते, यागस्तु अविकृत एवावतिष्ठते । स च यागः पशु पुरोडाश चेति द्व्यर्थं संपादयितुमभ्यस्यते । तस्मात् पशुपुरोडाशः पशुदेवतायाः संस्कारकर्म नादृष्टार्थः इति सिद्धान्तः । के.

● पशावपीति चेत् । अत्रेदं चिन्त्यते । 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इति अग्नीषोमदेवतासंस्कारार्थतया विहितः पुरोडाशयागः भूतवपायागाभ्यासार्थ एव, उत आख्यातप्रधानकर्मार्थ एव, उत उभयार्थोऽपि इति । तत्र उभयार्थोऽयं कर्मापूर्वार्थोऽसौ अग्नीषोमदेवताया उभयत्र श्रुतत्वात् इत्याद्यः पक्षः । द्वितीयस्तु वपायागाभ्यासार्थः एव संस्कार्यदेवतायाः उभयत्र सत्त्वेऽपि 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इतिवत् 'सद्यस्क्य पौर्णमासीं वैमृधमनुनिर्वपति' इतिवच्च वाक्येन वपायागाभ्यासमात्रार्थत्वावगमात् इति । उच्यते । पुरोडाशयागस्तावत् वाक्यादेव अग्नीषोमदेवतासंस्कारार्थः । तत्र वपायागस्य वाक्यादेव अग्नीषोमदेवतारूपोद्देश्यविशेषणत्वे स्वतन्त्रोद्देश्यत्वे वा वाक्यभेदापत्तिः । बृहस्पतिसववैमृधयोस्तु नायं दोषः । तस्मात् न वपायागाभ्यासार्थमेव । तत्रोपपत्तिः । सन्निपत्योपकार्ये यागापूर्वे प्रधानोत्पत्त्यपूर्वे एव व्याप्रियते इति हि सार्वत्रिकम् । क्वचिदेव तु अगत्या तदुत्पत्त्यनन्तरं प्रधानापूर्वस्य धारणे व्याप्रियते इति वक्ष्यते । तदिह भाव्यवपायागाभ्यासापूर्वोत्पत्तौ पुरोडाशयागापूर्वस्य व्यापारसंभवे उत्पन्नवपायागाभ्यासापूर्वधारणे व्यापारकल्पना न संभवति । तस्मात् पुरोडाशयागोऽपि उत्तमप्रयाजवत् वक्ष्यमाणदेवतासंस्कारार्थ एवेति । सिद्धान्तस्तु– प्रकरणाद्यनेकप्रमाणैकवाक्यत्वेन मुख्योपयोगसम्भवेऽपि देवतासंस्कारार्थत्वावश्यंभावात्तदुत्पन्नस्यापूर्वस्य धारणम्, अनुत्पन्नस्य च उत्पत्तिः इत्यविरोधात् उभयार्थत्वमेवेति । बाल. पृ. ८३–८४.

● पशौ 'आज्येन यूपमनक्ति' इति आज्य दर्शपूर्णमासगताज्यधर्माणां न ग्राहकम् । भा. ७।३।७।१८, ● पशौ आज्यभागप्रतिषेधः अर्थवादः । १०।८।२।५. 'पशुनाज्यभागान्यायः' इत्यत्र द्रष्टव्यम् ।

## ⁂ पशौ उत्तमप्रयाजार्थमपि स्रुगासादनप्रैषस्य आवृत्तिः ॥

पशौ उत्तमप्रयाजस्य प्रान्त उत्कर्षात् तत्पूर्वं स्रुगासादनप्रैषस्य 'घृताचीमग्ने स्रुचमासादय' इत्यादेः प्रयुक्तत्वेन तावतैव आधारयोः प्रैषार्थप्रतिपत्तेर्जातत्वात् पुनः उत्तमप्रयाजकाले स्रुगासादननिगदः प्रयोक्तव्यः । इति प्राप्ते, प्रैषजनितसंस्कारस्य कर्मकालान्तरेण कालभेदेन कर्मणो भेदे सति तदुद्देशात् प्रैषोऽप्यावर्तते । 'यत्र प्राजास्ते यज' इति याज्यार्थप्रैषस्य आवृत्तिदर्शनात् । संकर्ष. ४।८।१०.

* पशौ उभयत इष्टिपक्षवत् अन्यतरत इष्टिपक्षो ऽप्यस्ति। सकर्ष ३।२।२३

**पशौ च लिङ्गदर्शनात्। ८।१।५।१२॥**

अग्नीषोमीये पशौ च इष्टिषु इव दार्शपौर्णमासिक एव विध्यन्त स्यात्। 'एकादश प्रयाजान् यजति, एकादशानुयाजान्' इति, 'स्रोचमाधारमाधार्य जुह्वा पशुमनक्ति' इति च लिङ्गम्। 'ऐन्द्र पय' इति दर्शे 'अग्नीषोमीय पशु' इति च पशौ द्रव्यदेवतावचनम्। के

**पशौ च सपुरोडाशे समानतन्त्र भवेत्। ११।३।८।१८॥**

अग्नीषोमीये पशौ पशु पुरोडाशश्च। तत्र हविष्कृदाह्वानकाले वाग्विसर्गं पौरोडाशिके एव हविष्कृदाह्वानकाले न पाशुके इति सिद्धान्त। तदाह सपुरोडाशे पुरोडाशेन सहिते सपुरोडाशे पशौ समानतन्त्र भवेत् समान एकमेव तन्त्र भवत्। तस्मात् सर्वतन्त्रान्ते पौरोडाशिके आह्वानकाले वाग्विसर्गः स्यात्। कृत्वा चिन्तेयम्। नास्ति पशौ हविष्कृत्। के

**पशौ तु संस्कृते विधानात् तार्तीय सवनिकेषु स्यात् सौम्याश्विनयोश्चापवृक्तार्थ स्यात्। १२।२।४।१२॥**

तार्तीयसवनिकेषु तृतीये सवने भवेषु पुरोडाशेषु सौम्याश्विनयो सौम्ये चरौ आश्विने द्विकपाले च हविष्कृत् भेदेन आह्वातव्या स्यात्। पशौ संस्कृते पशुश्रपणोत्तर एतेषा विधानात्। तस्मिन् काले च पाशुकी हविष्कृत् अपवृक्तार्था, अपवृक्त समाप्त अर्थ कार्यं यस्या सा। समानकार्यत्वात् सहकृत्यार्थे सा गताऽभूत्। तस्मात् पुनराह्वातव्या। इति पूर्व पक्ष। तुशब्द पूर्ववैलक्षण्यार्थ।

**योगाद्वा यज्ञाय तद्विमोके विसर्गं स्यात्।१३॥**

तृतीयसवनगतपुरोडाशार्थं सौम्यचर्वर्थे आश्विनद्विकपालार्थे च हविष्कृत् पुनर्नाह्वातव्या। सैव कुर्यात् विद्यमानत्वात्। ननु कृतार्था सा। न कृतार्था, यज्ञाय योगात् यज्ञाय पशुबन्धाय आदावेव तस्या योगात्। तद्विमोके यज्ञविमोके सति तस्या विसर्गं स्यात् न प्राक्। तस्मात् भेदेन नाह्वान इति सिद्धान्त। के

* पशौ दैवतस्विष्टकृतयोरवदान समकालम्। सकर्ष २।२।१८ मीको पृ ६९२ 'अवदान समकाल०' इत्यत्र द्रष्टव्यम्। * पशौ 'नासयोरवद्यति, न शिरसो नानूक्यस्य नापरसक्थ्यो' इति केषा चिदङ्गानामवदाननिषेध। भा १०।७।२।६, * पशौ 'न तौ पशौ करोति, न सोमे' इति आज्यभागप्रतिषेध अर्थवाद, न पर्युदास। सोमे तस्य नित्यानुवादत्वात्। १०।८।२।५, * पशौ पात्नीवते 'आज्येन शेष संस्थापयति' इति वाक्येन कर्मान्तरविधानम्। (न तु उत्सृष्टस्य पात्नीवतस्यैव आज्येन समाप्ति) । ९।४।१४।५६-६० * पशौ पुंस्त्वादि लिङ्ग विवक्षितम्। ४।१।६।१७ 'लिङ्गाधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम्।

**पशौ पुरोडाशस्य शालामुखीये एव श्रपणम्॥**

पशोरिव पशुवत् प्रकृतित्वेन पुरोडाशस्यापि प्रकृतित्वेन शामित्र एव श्रपणे प्राप्ते, शालामुखीये एव स्यात्। तस्य गार्हपत्याहवनीयोभयरूपत्वात्। पुरोडाशे चोदकेन उभयोर्विकल्पेन प्रापणेऽपि समभवति अविरोधेन विधिद्वयानुग्रहे ऽन्यतरत्यागस्यानुचितत्वात्। सकर्ष ३।२।२६

**पशौ प्रथमेष्टिपक्षे इष्टयर्थं प्रणीत एवाहवनीय पश्वर्थमपि धार्य॥**

पशौ उभयत इष्टिपक्षवत् अन्यतरत इष्टिपक्षोऽप्यस्ति। तत्र प्रथमत इष्ट्यभावे पशौ एवाहवनीयप्रणयन भवतीत्यविवादम्। तदैकरूप्याय प्रथमेष्टिपक्षेऽपि तथैव स्यात्। इष्टौ प्रणीतस्य इष्ट्यपवर्गे लौकिकत्वात्। इति प्राप्ते देवतापरिग्रहरूपसंस्कारस्य साङ्गप्रधानापवर्गे एवापनयात् दीक्षणीयाहवनीयवत् वैष्टिक एव आऽन्त धार्य। सकर्ष ३।२।२३

* पशौ प्रयाजा एकादश। तत्र प्राकृतिकपञ्चप्रयाजेषु चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुरभ्यावृत्ति। उभयत्र अभ्यासद्वये च प्राकृतदेवताबाध लक्षणया वा तद्देवताप्रकाशनमित्य यदेतत्। भाट्ट ५।३।२ * पशौ 'बर्हिषा यूपावटमवस्तृणाति' इति। इद बर्हि दार्शपौर्णमासिकबर्हिर्धर्मान् न गृह्णाति। भा ७।३।७।१८, * पशौ बहुदेवत्ये अग्निगुप्रैषगतस्य एकवचनान्त

मेषपतिशब्दस्य द्विवचनान्तेन विकारः । ९।३।१३।४२–४३. मीको. पृ. ३४० ' अग्निगुणेषगतस्य मेषपति शब्दस्य ' इत्यत्र द्रष्टव्यम् । ● पशौ यागसाधनत्वेन चोदिते हृदयाद्यवदानप्रकृतित्वेन पशुना यागः साधयितव्य. इति वाक्यान्तरवशात् अवगम्यते । भा. ७।२।७।२१ पृ. ५२४. ● पशौ लौकिके यूपस्पर्शे पुरुषार्थं प्रायश्चित्तम् । तत्र ' यदि एकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहून् एते ते वायवः ' इति विशेषः । भा. ९।३।३।९. ● पशौ वपा चतुरवत्तिनोऽपि पञ्चावत्तेन ' यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या ' इति वचनात् । ' आज्य हिरण्य वपा हिरण्य आज्यम् ' इति पञ्चावत्तत्वम् । पशङ्गेष्वपि पञ्चावत्तत्वम् । वि. १०।७।२०.

¤ पशौ वरुणप्रघासेषु च शालामुखीयोऽस्ति ॥

पशौ वरुणप्रघासेषु च प्रकृतितः प्राप्तत्वात् शालामुखीयो न स्यात् । इति प्राप्ते, वैशेषिकविधिबलादस्त्येव । अत एव वरुणप्रघासेष्वपवर्गमने शालामुखीयो नास्ति नोपायनमने स्यादीति व्यवस्था । संकर्ष. ३।२।२८.

● पशौ वायव्ये विहितेनाऽऽरम्भेण प्राकृतप्राप्तस्य न बाध. । भा. १०।३।१।११–१२. ● पशौ वायव्ये श्वेतगुणस्य नियमविधि. ' वायव्यं श्वेतमालभेत ' इति । वि. ४।२।१०. ● पशौ वायव्ये हिरण्यगर्भमन्त्रोपचारे निवेश. । भा. १०।३।२।१३–१७, ● पशौ वायव्यादौ मनोतामन्त्रः अविकृत एव प्रयोक्तव्य. । १०।८।२१।८२, ● पशौ त्रियवनादिकन्तर्भावेऽन्यतया अनवगता हविर्द्रव्ये सति ' आग्नेयमग्निष्टोम आलभते ' इति श्रुतस्य देवतोद्देशेन त्यागस्य पशावेव पर्यवसानात् ' वाया प्रातःसवने प्रचरन्ति, अर्द्धेन तृतीयसवने ' इति युक्त प्रचारविप्रकर्षविधिः । सोम. ११।२।१४. ● पशौ शकृत्प्रयोग लोहितनिरसन च पदार्थस्य न प्रयोजके । ४।१।१२. ' शकृल्लोहिताधिकरणम् ' इत्यत्र द्रष्टव्यम् । ● पशौ ' सं ते प्राणो वातेन गच्छताम्, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषा ' इत्यत्र द्वितीयादिमन्त्रे गच्छता इत्यस्य नानुषङ्गः, गच्छन्ता इति द्वितीये, गच्छता इति तृतीये अध्याहर्तव्यम् । वि. २।१।१८. ● पशौ संज्ञपनहोमो नित्य. । भा. ६।८।८।२८, ● पशौ सवनीये पशुपुरोडाश. कर्तव्यः । १२।२।२।८–१०, ● पशौ ( सामिधेनीनाम् ) सप्तदशत्वे श्रूयमाणे न दार्शपौर्णमासिकी प्रवृत्तिः । ( पाञ्चदश्यम् ) तत्र विप्रतिषिध्यते, वाचनिकत्वात् साप्तदश्यस्य । ८।४।४।१४. ● पशौ सोमारौद्रे यूपः औदुम्बर एवोपदिष्टः । अतिदिष्टस्य तु खादिरस्य बाधः । वि. १०।७।१८, ● पशौ स्विष्टकृद्विकारः पठित. ' पृषदाज्येन वनस्पतिं यजति ' इति । तत्र सर्वेषु निगमेषु अग्नौ वनस्पतिशब्देनैव वक्तव्य, न पर्यायशब्देन । १०।४।१८, ● पशौ (अग्नीषोमीये) हृदयादीनामेव अवदानसम्बन्धितया श्रूयमाणाना हविष्ट्वेन इत्थम्भूताना हविर्द्रव्यपरिसंख्या । 'हृदयादिन्याय.' इत्यत्र इदमधिकरणं द्रष्टव्यम् । भा. १०।७।१।१–९. ● पशुषु अतिदेशकृतानि प्रकृतिलिङ्गानि आत्मविशेष प्राणिशब्दक न मुख्याकाल्य पशुगणनमित्यादीनि । बाल पृ ११९. ● पशुषु ऐकादशिनेषु सवनीयपशुधर्मातिदेश । भा. ८।१।७।१४. ● पशुषु नानाजातीयेषु कुम्भीशूलवपाश्रपणीना न तन्त्रम्, पारःवैषम्यात् । ११।४।१०।४०–४१. मीको पृ. १९३६ ' तन्त्र न कुम्भी० ' इत्यत्र द्रष्टव्यम् । ● पशुषु भिन्नदेवतेषु एकजातीयेषु कुम्भीशूलवपाश्रपणीना तन्त्रम् । ११।४।१५।३४–३९. मीको. पृ. ११०६ ' ऐकादशिनेषु पशुषु ' इत्यत्र द्रष्टव्यम् । ● पशुषु यूपे खादिरस्य नियमविधि. वाजपेये । भा. १०।७।१६।५१–५७. ● पशुषु वाजपेयप्राजापत्येषु अभिघारणार्थं प्रयाजशेषधारणमत्यावे न कर्तव्ये । वि. ४।१।१४. ● पशुषु सवनीयादिषु अग्नीषोमीयस्य पशोर्विध्यन्तः, साम्पतिनोदनाभावात् पशुचोदनासामान्याच्च । भा. ८।१।६।११, ● पशुषु सोमाङ्गेषु सोमाङ्गत्वेन दर्शिक्ष्वेदैः प्रवृत्तिर्विद्धिः । १२।१।३।८–९.

¤ पदवद्ध रशना स्यात् तद्गते विचालात् । ४।४।९।२२॥

ज्योतिष्टोमे ' अभिधा असि भुवनमसि यन्तासि धर्ता ' ... पूर्वं

परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति श्रूयते। इयं रशना किं पश्वङ्गम्, उत यूपाङ्गमिति विचारे पूर्वपक्षमाह। रशना पश्वङ्गं स्यात्। कुतः? तदागमे पश्वागमे पशूपाकरणे प्राप्ते रशनाया विधानात्। उत्पत्तिवाक्ये रशनायाः पशुना सम्बन्धः श्रूयते। तस्मात् पश्वङ्गं रशना।

यूपाङ्गं वा तत्संस्कारत्वात्। २३॥

सिद्धान्तयति। रशना न पश्वङ्गम्, किन्तु यूपाङ्गं स्यात्। तत्संस्कारत्वात् यूपसंस्काररूपत्वात् रशनायाः। रशना हि यूपस्य यावती तावती इडिम्नो माना संजनयति। तस्मात् यूपाङ्गं रशना।

अर्थवादश्च तदर्थवत्। २४॥

सिद्धान्ते मन्त्रार्थवादरूपहेत्वन्तरप्रतिपादनार्थं सूत्रम्। चकारः समुच्चयार्थः। तत् अर्थवत् इति व्यत्ययेन छान्दसं नपुंसकत्वम्। रशनायाः यूपाङ्गत्वे सति ' युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरास. कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः॥ ' इति तत् स. मन्त्ररूपः अर्थवादः अर्थवत् अर्थवान् कृतार्थः स्यात्। मन्त्रार्थस्तु– युवा परिवीतः रशनया वेष्टित. सन् सुवासाः शोभनवस्त्राणीव आ अगात् आगतः स्थितः। स उ एव जायमानः श्रेयान् भवति। धीरास. धीराः धीमन्त. स्वाध्यः शोभना आ समन्तात् धीर्येषां ते स्वाध्यः मनसा यूप देवयन्तः देव आदित्यमिव मन्यमानाः कवय. विद्वांसः ऋत्विज उन्नयन्ति उच्छ्रयन्ति। इति यूपस्य स्तुति.। के.

* पश्वङ्गं रशना। भा. ४।४।१०।२५–२८.

* पदार्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्य अपि उपकारसिद्धेः तदर्थं पृथगङ्गानुष्ठानं न कर्तव्यम्। १२।१।११. ' पशुपुरोडाशाधिकरणम् ' इत्यत्र द्रष्टव्यम्।

* पश्वाहुतिः। अवदानानि हवींषि यागसाधनानि न पश्वाहुतिः। सा हि अवदानप्रकृतिद्रव्य विशिंषन्ती प्रकृतौ प्रधानस्य उपकुर्वती इति विकृतावपि अवदानप्रकृतिद्रव्य विशिंषन्ती प्रधानस्योपकरिष्यति। भा. ३।२।७।२१.

* पश्वादौ आमिक्षेत्यादिप्राकृतेतिकर्तव्यतानुष्ठानम्। वि. १०।३।१.

* पश्वादिफलं गोदोहनादीनां प्रयोजकम्, न क्रतुः। के. ( भट्ट. ४।३।२. )

* पश्वादिविकृतौ उपदिष्टैरेकादशप्रयाजादिभिरङ्गैः प्राकृताङ्गान्तराणां न बाधः। भा १०।३।१।१–१२.

* पश्वालम्भो यागार्थमुत्पन्नः तदर्थमेव च अनुष्ठीयमानो लोहित-शकृत्कर्मणोऽपि उपकरोति। भा. ११।३।२।११ पृ. २०९६. * पश्वालम्भस्य लोहित निरसन न प्रयोजकम्, किन्तु प्रतिपत्तिः अग्नीषोमीये पशौ। भाट्ट. ४।१।१२.

* पशूद्देशेन गोदोहनं विधीयते इति पशुप्रयुक्तमेव गोदोहनम्। तच्च स्वतन्त्रकामनायामेव कर्तव्यम्। भाट्ट. ४।१।२ वर्णक ३.

पश्वेकत्वाधिकरणम्। तदागमन्यायः। अग्नीषोमीय पशु इत्येकत्व विवक्षितम्॥

तत्रैकत्वमयज्ञाङ्गमभूतमर्थस्य गुणभूतत्वात्। ४।१।५।११॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीय', ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति। तथा ( श्रीसोमानयनार्थे शकटे– ) ' अनड्वाहौ युनक्ति ' इति। तथा अश्वमेधे ' वसन्ताय कपिञ्जलानालभते ' इति। तत्र सन्देह., किं विवक्षितमेकत्व द्वित्व बहुत्व च, उत अविवक्षितमिति। तत्र एकत्वमयज्ञाङ्गभूतम्, न विवक्षितमित्यर्थः। अर्थस्य गुणभूतत्वात्। न आलम्भस्य गुणभूता संख्या नियोजनस्य वा। कस्य तर्हि? पशोः अनडुहो. कपिञ्जलानां च। विभक्तिर्हि श्रुत्या प्रातिपदिकार्थेगत संख्यार्थं ब्रूते। वाक्येन तु यज्ञाङ्ग ब्रूयात्। वाक्याच्च श्रुतिर्बलीयसी। तस्माच्च यज्ञाङ्गं विवक्षितमिति। आह, मा भूत् यज्ञाङ्गम्, पश्वादीनामङ्ग विवक्षित तथापि इति। उच्यते, न पश्वादीनामङ्गेन उक्तेनानुक्तेन वा किञ्चित् प्रयोजनमस्ति। यज्ञाङ्गेन हि अविवक्षितेन प्रयोजनम्। विपक्षेऽपि हि पश्वाद्यङ्गे अविगुणः एव क्रतुर्भवति। यज्ञाच्च फलम्, न पश्वादेः। तस्मात् पश्वादेर्गुणेन

अश्रुतेन श्रुतेन वा न किञ्चित् प्रयोजनमस्तीति तत् विवक्षितम्। यदि प्रयोजनवत् तद्विवक्षितमित्युच्यते।

टुप्.— तदेकत्वमपश्वङ्गमर्थस्य गुणभूतत्वात् ॥ अपदगो गुणः पदान्तरोपात्तत्वात् ( अवदानपदेन उपात्तत्वात् ) भवति क्रियार्थः। एकत्वस्य विभक्तिश्रुत्या प्रातिपदिकार्थत्वात् न क्रियार्थता। ( क्रियार्थता वाक्येन स्यात् इत्यधिकं आनन्दाश्रमीये, नेदं रत्ने )। 'पश्वादीनामत्र विवक्षितम्, तथापि' इति ( भाष्यस्य ) अन्तर्नीताभिप्रायमये सकृदुच्चरिताभिप्रायः परिचोदयति ( अन्तर्नीतैकत्वस्य पशोः क्रियासंबन्धात् एकत्वविशिष्टपशुविशिष्टो यागः सकृदुच्चरितेन विधिना चारमतीत्वविशिष्टं करोति इत्यर्थः )। अङ्गस्य ( यागाङ्गस्य पशोः ) यदुपकारकम् ( एकत्वम् ) भवति, ( तत् ) प्रणाड्याऽपि ( प्रणीतायाः ) क्रियाया अपि उपकारकम्। 'न पश्वादीनामङ्गेन उक्तेन अनुक्तेन वा किञ्चिदस्ति प्रयोजनम्' इति ( परिहारभाष्यस्य ) कोऽभिप्रायः? 'पशुसंख्ययोः संबन्धे अस्मिन् विवक्ष्यमाणे क्रियापश्वोः संबन्धो नास्ति' ( इति आनन्दाश्रमीये पाठः। 'संबन्धे एकस्मिन् क्षणे प्रातिपदिकार्थेन संख्याकारकयोः युगपत् विशेषणत्वेन सति क्रियापश्वोः संबन्धो नास्ति' इति लिखिते रत्ने च पाठः )। क्रियापशुसंबन्धोत्तरकालं पशुसंख्ययोः संबन्धे शुद्ध एव पशुः ( क्रियया ) संबध्येत ( न संख्याविशिष्टः, ततश्च पशुमात्रेण यागस्य सगुणत्वात् संख्याऽनादरः स्यात् )। तत्संबन्धे सकृदुच्चरितत्वात् ( पशुशब्दस्य युगपदेव ) पशोः स्वार्थपरार्थता स्यात्। ( विरुद्धत्रिकद्वयीसत्त्वप्रसङ्गः। तत्र यागस्य सत्त्वानिवृत्तावपि वैगुण्याभावात् संख्याऽनादरः स्यात् इति यो दोषोऽभिहितः ) स दोषः तत्संबन्धेऽपि तदवस्थ एव ( अस्यादिर्दोषस्तदवस्थ एव इति तु लिखितमुद्रितयोः पाठः अयुक्त एव )। तस्मात् न क्रियाऽङ्गं संख्येति। अत ( एत अभिप्रायात् भाष्यकारः— ) आह— 'पश्वङ्गेन हि अविरोधेन प्रयोजनम्। विरोधेऽपि पश्वङ्गे ( इति भाष्यानुसारी रत्नपाठः ) अविगुण एव यागो भवेत्।

एकश्रुतित्वाच्च ॥ १२ ॥

भाष्यम्— भवति च किञ्चिद्वचनम्, येन विज्ञायते न तद्विवक्षितमिति। 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्' इति। यदि हि विवक्षितं भवेत् न 'एकाम्' इति ब्रूयात्, 'गां' इत्येकवचनस्य विवक्षितत्वात्। तथा 'अवी द्वे' 'धेनू द्वे' इत्यत्रापि 'द्वे' इति वचनं ज्ञापकम्। अविवक्षितम् 'अवी' इति द्वित्वमिति। 'त्रीन् ललामान्' इत्यत्रापि 'त्रीन्' इति वचनं लिङ्गम् 'ललामान्' इति बहुवचनमविवक्षितमिति।

प्रतीयत इति चेत् ॥ १३ ॥

भाष्यम्— एवं चेत् पश्यसि, अविवक्षिता संख्येति। तत्र। प्रतीयते हि संख्या आख्यातवचनस्याङ्गभूता। यथा 'पशुमानय' इत्युक्ते एक एवानीयते, 'पशू' इति द्वौ, 'पशून्' इति बहवः आनीयन्ते। यश्च प्रतीयते स शब्दार्थः। तस्मात् पशोरङ्गभूता संख्या इति शब्दात् गम्यते। न च शब्दात् गम्यमानं ऋते कारणात् अविवक्षितं भवति।

नाशब्दं तत्प्रमाणत्वात् पूर्ववत् ॥ १४ ॥

भाष्यम्— नैतदेवम्। सत्यं प्रतीयते, न तु अयं शब्दार्थः। व्यामोहादेषा प्रतीतिः। कुत एतत्? वाक्याद्धि पशोरङ्गमित्यवगम्यते। वाक्यं च श्रुत्या बाध्यते। तस्मात् अशब्दार्थोऽयं पशोः एकत्वादीनि। अशब्दार्थोऽपि हि प्रतीयते। यथा पूर्वो धावतीति, पूर्वः इत्युच्यते यस्यापरोऽस्ति। तेन पूर्वः इत्युक्ते अपरो गम्यते। न तु 'अपरो धावति' इति शब्दात् प्रतीयते। एवमिहापि 'पशुम्' इत्येकत्वं गम्यते, न तु पशोः। यथैव हि पूर्वः इत्युक्ते अपरो गम्यत एव केवलम्, न तु स विधीयते कस्मिंश्चिदर्थे। एवमिहापि संख्या प्रतीयते एव केवलम्, न तु कर्तव्यतया पशौ विधीयते न पशौ। कथं न पशौ विधीयते इति चेत्, विधायकस्याभावात्। आख्यातशब्दो विधायको भविष्यतीति। एतदपि नोपपद्यते। यागदेवतासंबन्धस्य स विधायकः सन् 'आलभेत' इति न संख्यापशुसंबन्धं विधातुमर्हतीति। भिद्येत हि तथा वाक्यम्। तस्मादविवक्षिता संख्येति।

**शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथाऽन्येषाम् ॥ १५ ॥**

**भाष्यम्—** तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, न पशौ संख्या शब्देन श्रूयते इति । आख्यातवाच्ये ह्यर्थे उपलभ्यते । लोके 'पशुमानय' इत्येकवचने सति, एकपशुविशिष्टमानयनं प्रतीयते । पशू आनयेति द्वित्व-विशिष्टं गम्यते । तत्र हि एकवचनमपैति, द्वित्वमुपजायते । यस्य चागमे यदुपजायते स तस्यार्थ इति गम्यते । तस्य ज्ञानं यथा अन्येषां शब्दानाम् । 'अश्वमानय' इत्युक्ते अश्वानयनं प्रतीयते, 'गामानय' इति गवानयनम् । तत्र अश्वोऽपैति गौश्चोपजायते । तेन ज्ञायते, अश्व शब्दस्य अश्वोऽर्थः, गोशब्दस्य गौरिति । यदुक्तम्, 'श्रुत्या वाक्यार्थो बाध्यते' इति । उच्यते । न श्रुति भूते वाक्यार्थो नास्तीति । केवलं तु प्रातिपदिकार्थगतां संख्यामाह । तादृशी संख्या वाक्येन पशौ विधीयते । प्रातिपदिकार्थो हि आख्यातवाच्येन संबध्यते विभक्त्य र्थोऽपि । तथाहि, तद्विशेषणविशिष्ट आलम्भो गम्यते । तत्र एकार्थत्वात् एकवाक्यमवकल्पते । पशौ हि संख्यायां विधीयमानायां एक आख्यातशब्दो न शक्नुयात् आलम्भार्थं विधातुं संख्यासंख्येयसम्बन्धं च । तस्मात् पशौ विवक्षिता संख्येति ।

**टुप्—** विभक्तिर्हि लिङ्गसंख्याप्रातिपदिकार्थानां (त्रयाणामपि) श्रुत्यैव क्रियार्थतामाह । क्रिया साध्या, साधनं तत्परिच्छेदकानि च लिङ्गसंख्यादीनि अपेक्षते (क्रियामपि सर्वाणि कारकाणि अपेक्षन्ते) अतः सर्वं विशेषणविशिष्टा क्रियैव विधीयते । तत्र (विधि) प्रत्ययः पूर्वं विशेषणे व्याप्रियते अन्यथाऽनुपपत्त्या (कथमनुपपत्तिस्तदाह—) नहि अगृहीतविशेषणा विशिष्टे बुद्धि इति । (अस्तु नाम वाक्येन क्रियार्थत्वम्, तथापि न दोषः श्रुतिवाक्ययोरविरोधादित्याह—) पश्वेक त्वयोः उपश्लेषलक्षणया (उपपदलक्षणया) श्रुत्या विशेषणविशेष्यभाव एवावगम्यते, न तु तादर्थ्यम् । अतः (श्रुतिवाक्ययोः) एकविषयोपनिपाताभावादविरोधः । तस्मादाह (भाष्यकारः) न श्रुतिभूते वाक्यार्थो नास्तीति ।

**तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥**

**भाष्यम्—** किमिति ? (किं लिङ्गम् ?) 'कर्णा याम्या, अवलिप्ता रौद्रा, नभोरूपा पार्जन्या, नेषामैन्द्राग्नो दशमः' इति (कर्णा छिन्नकर्णा । याम्या यमदेवताका । अवलिप्ता गर्विष्ठा रुद्रदेवताका । नभोरूपा नीलवर्णा पर्जन्यदेवताका इति शब्दार्थः) । यदि त्रित्वं विवक्षितम्, तदा ऐन्द्राग्नो दशमो भवति । तथा 'कृष्णा भौमा, धूम्रा आन्तरिक्षा, बृहन्तो दिव्या शबला वैद्युता, सिध्मास्तारका' इति प्रकृत्याह 'अर्धमासानां वैतद्रूपम्, यत् पञ्चदशिनः' इति । तस्मादपि पश्यामो विवक्षिता संख्येति । यत्तूक्तम्, 'एकां गाम्' इत्यविवक्षां दर्शयतीति, अत्रोच्यते । गोसंख्यासम्बन्धं विधातुमेतदुच्यते । इतरथा हि गोदक्षिणासम्बन्धो विहितो गम्येत । तस्मात् विवक्षितेऽपि वाच्यमेतत् । 'अश्वौ द्वे' 'धेनू द्वे' 'त्रीन् रुक्मान्' इति चानुवादाः ।

**टुप्—** तद्वच्च लिङ्गदर्शनम् ॥ 'गोसंख्यासम्बन्धं विधातुमेतदुच्यते । इतरथा गोदक्षिणासंबन्धो विहितो गम्येत' (इति परिहारभाष्यमनुभाष्य व्याचष्टे—) 'गां दक्षिणां दद्यात्' इति तावत् श्रूयेत, (ततः) अश्वादीनां परिसंख्या स्यात् । (चोदयति—) संख्यैव विधीयते, न तु गौः, इति चेत् न । संख्याविधाने हि सति गो संख्ययोः संबन्धो विधातव्यः । तद्विधाने च क्रियायामननु प्रवेशः तत्र अत्यन्तं वाक्यं स्यात् (नात्र श्रुतिलेशः कश्चिदित्यर्थः) । तस्मात् 'यत् दक्षिणा दद्यात्, तत् गाम्' इतीयं वचनव्यक्तिर्गृह्यते श्रुत्यनुग्रहाय । इत्थं तु गामुद्दिश्य संख्याविधिरिति गम्यते । (चोदक आह—) एतदपि (समाधानम्) यद्वा तद्वा (न युक्तमित्यर्थः) । कस्मात् ? क्रियायामेव संख्या न विधीयते, येन गोसंख्ययोः संबन्धो विधातव्यः (स्यात् । एकदेशी समाधत्ते—) उच्यते । संख्या हि विधीयमाना संख्येय द्वारेण (क्रियायाः) साधनं भवति । तत्र बहूनि संख्येयानि, सा न ज्ञायते कस्य परिच्छेदिकेति । (चोदक आह—) अश्वादीनामुत्पत्तौ (दक्षिणोत्पत्तिवाक्ये एकत्व—) संख्या विद्यते (अतः पौनरुक्त्यात्) तत्र न निवेक्ष्यते । गवां

तु न विद्यते । ( एकदेशी आह- ) गवामपि द्वादशशतं विद्यते ( अवत्सान् वद्धियोपाद्य निरुप्यते । चोदक आह ) चोदकेन चेत् ( चोदकेन यथा द्वादशशतप्राप्तिः, नैमित्तिकस्य नित्यनिरासत्वात् औपदेशिकेन एकत्वेन प्रत्याम्नायते इति चेत् इत्यर्थः । एकदेशी आह- ) इतरेषामपि ( अश्वादीनाम् ) चोदकेनैव ( एकत्वप्राप्तिः । चोदकः स्वाभिप्रायं स्फोरयति- ) तेषाम् ( अश्वादीनाम् ) पशुत्वयुक्तानाम् ( चोदकादेव प्राप्तेः ) अनर्थिका ( औपदेशिकी एकत्वसंख्या ) इति चेत् । ( एकदेश्यपि स्वाभिप्रायमाह- ) उच्यते । इयम् ( औपदेशिकी संख्या ) प्रत्यक्षत्वात् शीघ्रम् ( अन्वयप्रमाणताया ) प्राप्स्यति ( इति नानर्थिका । सा त्वानिदेशिकी ) सा अनुमानतः । ( इदमेकदेशिसमाधानं नातीव हृदयङ्गममिति अन्यथा समाधत्ते- ) अथवा ( यदि ) गौरेव केवलः ( दक्षिणया ) प्राप्नोति, तदा गोविधानमनुत्तम् ( स्यात् आनर्थक्यात् । न त्वेतदस्ति ) प्राप्नुवन्ति हि अन्यान्यपि ( अश्वादिद्रव्याणि ) । तस्मात् नालीदम् 'गौर्न विधीयते, सत्यैव विधीयते' इति । अतो नियमात् ( अवश्यम् ) परिगण्या स्यात् । अन्येषाम् ( अश्वादीनाम् ) तन्निवृत्त्यर्थमाह 'एकां गाम्' इति ।

तथा च लिङ्गम् । १७ ॥

भाष्यम्— एवं च कृत्वा समानश्रुतिकं लिङ्गमपि निरवद्यं भविष्यति । तथेदं दर्शनमुपपद्यते 'वसन्ते प्राजापत्यौ कृष्णग्रीवानालभेत, ग्रीष्मे माध्यंदिने शितिपृष्ठमैन्द्रीम्, शरत्यपराह्णे श्वेता बार्हस्पत्याम्' इति । तत्र श्रूयते- 'गर्भिण्यो भवन्ति' इति । गर्भः स्त्रीणां गुणः । तेन स्त्रियो दर्शयति इति भविष्यति । तथा 'अश्वः तूपरो गोमृगस्ते प्राजापत्याः' इति, 'ते प्राजापत्याः' इति । तत्र श्रूयते 'मुष्करा भवन्ति सेन्द्रियत्वाय' इति । मुष्करास्तु पुंसां गुणः । तेन पुंस्त्वं दर्शयति इति ।

शा— उपादेयभूतपश्वादिगतविभक्त्यभिहितैकत्वादिका संख्या किमयागाङ्गत्वादविवक्षिता, उत यज्ञाङ्गत्वाद्विवक्षिता इति संशयः । तत्र 'श्रुत्या पश्वङ्गता तस्याः समानपदरूपया । पदान्तरस्थयागाङ्गभावो वाक्यात्प्रतीयते ॥ दुर्बलं च श्रुतेर्वाक्यमित्यज्ञाङ्गमेकता । तदभावे च यज्ञवैगुण्यात्तदविवक्षितम् ॥' उच्यते । 'समानप्रत्ययस्थेन कारकेणान्यसात्कृता । क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ॥' उक्तं च 'यथा पश्वङ्गमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥' इति ।

सोम— यथा 'रथ्येन उदन्ति' इत्यादिश्रुत्या उदननाद्यर्थता यज्ञगुणवाक्येन न यज्ञार्थत्वम्, तथा अत्रापि पदश्रुत्या पश्वर्थस्य एकत्वस्य न यज्ञार्थत्वमिति प्रत्यवस्थानात् सङ्गतिः ।

वि— 'पशुत्वान्य इत्यत्र पदैक्ये यजनादृता । नास्त्यस्ति वा, ऽऽद्यः स्वपदे श्रुत्या पश्वङ्गताञ्गतेः ॥, अन्त्यो स्वप्रत्ययोपात्त आख्यातकारके । योगः ततो पशौ चेति क्रमे समाङ्गतोचिता ॥'

भाट्ट— 'पशुना यजेत' इत्यादौ यत् उपादेयपश्वादिगतत्वं संख्या विभक्त्युपात्ता, सा किं विवक्षिता न वेति चिन्तायाम् 'सत्त्वप्रधानानि नामानि' इति स्मृत्या प्रातिपदिकार्थपश्वादेः विभक्त्युपात्तसंख्याविशेष्यत्वरूपसत्त्वप्रधानत्वया विभक्त्युपात्तसंख्यायाः प्रातिपदिकार्थं प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वावगमात् वाक्यीयक्रियान्वयानुपपत्तेः तदभावेऽपि क्रियाया अवैगुण्यात् न विवक्षिता संख्या । न च पश्वादेः पदान्तरेऽपि तद्विशिष्टत्वेन पशोः वाक्यान्वयात् क्रियाङ्गत्वात् लोहितोष्णीषादिवत् पशुविशेषणस्यापि विवक्षोपपत्तिः । संख्याकारकयोः विभक्त्या युगपदुपादानेन संख्यायाः प्रथमं पश्वन्वयमभिधाय पश्चात् विशिष्टस्य पशोः यागान्वयाभिधाने विरम्यव्यापारापत्तेः । न च त्वयाऽपि संख्यायाः पदश्रुत्या पश्वन्वयाङ्गीकारात् युगपदन्वयस्थाप्यन्वोपस्य विरुद्धत्वात् प्रथमतः शुद्धस्य पशोः कारकान्वयमङ्गीकृत्य पश्चात् संख्यायाः पश्वन्वयाङ्गीकारे तवापि विरम्यव्यापारापत्तिः इति वाच्यम् । तथापि भावनान्वितकारकविशेषणविशेष्यत्वस्य अप्रसक्तपदस्थे भावनान्वयानुपपत्तिमात्रेण अविवक्षोपपत्तेः । इतरथा आरम्भस्यापि आनुशासनिकत्वं भगवत एकहायनी प्रत्येव विशेषणत्वे सत्यपि प्रथमतः क्रियान्वय-

मभ्युपगम्य पार्ष्टिकैकहायनीसम्बसिद्धान्तभङ्गापत्ते । अत ॥ गौरित्यादे भावनाऽन्वितकारकविशेषणविशेषणत्वेऽपि समस्तपदत्वात् न क्षति. । वारन्तीयादेस्तु कृत्वाधिकदोसभावनायोगेन अन्वय इति न का चित् क्षति । अत एव सोमारुण्यादीनामपि न प्राथमिको धात्वर्थान्वय । अपितु भावनाऽन्वय एव इत्युक्तं नवनम । किञ्च न प्रत्ययार्थस्य एकत्वस्य प्रकृत्यर्थं पशु प्रति प्रधानता, प्रत्ययार्थप्राधान्यभङ्गापत्ते । अपितु पशोरेव करणत्व प्रतीत एकत्व प्रत्यपि प्रधानता । अतश्च एकत्वस्य करणत्वगत् विधेयभावनाया मप्रकारत्वात् अविवक्षा । इति प्राप्ते, पशो करणत्वे एवान्वये न तु एकत्वेऽपि, प्रमाणाभावात् । अतश्च पशो तद्द्वारा भावनाऽन्वयगत् संख्याया अपि स्त्रीयस्या समानाभिधानश्रुत्या आधेयत्वेन सामानाधिकरण्येन वा प्रथमत कारकान्वयत्वेन अङ्गीकारात्, पश्चाच्च पदश्रुत्यादिना आधेयत्वसम्बन्धेन पश्वन्वयोपपत्ते निरुक्तव्युत्पत्त्यैव भावनाऽनधित्वात् विवक्षितत्वम् । न च एव 'यदि सोममपहरेयुरेका गा दक्षिणा दद्यात्' इत्यादौ एकपद वैयर्थ्यम्, गामित्यनेनैवैकत्वविधानोपपत्तेरिति वाच्यम् । एकवचनविधिवत् गोत्वविधेरपि प्राप्तदक्षिणाऽनुवादेन 'धेनुर्दक्षिणा' इतिवद्विशिष्टकारकान्तरविधानेन आपचौ द्वादशशतसंख्याकत् सामान्यविहिताश्वादीनामपि बाध प्रसङ्गात् तन्निवृत्त्या दानाभिनयस्य एकत्वस्यैव गोरुद्देशेन विधानार्थं एकपदग्रहणोपपत्ते । अतो विनाऽत्रैव सत्या । अत एव 'वर्षा याम्या, अग्नीषा रौद्रा, नभोरूपा पार्जन्या, तेषामैन्द्राग्नो दशम' इति दशमत्वदर्शन मुपपद्यते ।

मण्डन — 'पश्वेकत्वविवक्षा स्यात् । ' ७

शङ्कर — 'पश्वेकत्व तु याजाङ्गम् । ' ८.

● पश्वेकत्वाधिकरणे ( ४।१।७।१३–१६ ) कारकप्राधान्य वक्ष्यते । कु २।२।३।६. ● एकपदे वचनानुवर्तनाऽन्वयस्तु समानाभिधानश्रुत्या कारके एव इति पश्वेकत्वाधिकरणे वक्ष्यते । कौ ३।१। ७।१४ पृ १७७ ● 'पशुना यजेत' इत्यत्र प्रकृत प्रधानानुरागमात्रेन उपादेयसंख्याऽऽक्षाङ्क्षानुरोधेन एकत्व विवक्षा आवश्यकी एव इति वक्ष्यते पश्वेकत्वाधिकरणे । कस्तूरि ३।१।७।१३–१५.

● यत्तु वार्तिके अपचयस्य अग्निमानसंस्कारार्थत्व अभ्युपगम्य तत्प्रयन ( 'अग्नेस्तृणान्यपचिनोति' ) विशेषणाविवक्षा इत्युक्तम्, तत् विनियोगभङ्गे प्रमाणाभावात् अविवक्षोपपादनस्य दुर्घटत्वाच्च उपेक्षितम् । 'पशुना यजेत' इत्यादौ ॥ उपादेयत्वात् पश्वेकत्वाधिकरण न्यायेन विवक्षा इति विशेष । कौ. ३।१।७।१४–१५

● अत एव पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन मुख्यविशेष्यभूतभावनाविशेषणीभूतासु रेवतीषु विशेषणनिविष्टत्वनायोगात् तासामविवक्षा इत्यपि अनाशङ्क्यम् । मुख्यविशेष्यभूतभावनाविशेषण वाभावेऽपि प्रकृताधिकरणोक्त भावनाविशेषणत्वस्य सत्त्वेन पश्वेकत्वाधिकरणपूर्वपक्ष न्यायाविषयत्वात् । यत्र लिङ्गसंख्यादौ कारकान्वयद्वारा भावनाऽन्वयो व्युत्पत्तिसिद्ध , तत्र तेषा तदनादरेण द्रव्यान्वये, विशेषणविशेषणत्वात् न विधिकल्पना इति तद्विषयोऽसौ न्याय । न तु यत्रापि कारकातिरिक्त धर्मेण समासादौ द्रव्यान्वयद्वाराऽपि भावनाऽन्वयव्युत्पत्ति । कौ २।२।१२।२६ पृ २९०, ● न पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन देवताया अविवक्षा, तद्वत् इह प्राथमिकभावनाऽन्वयस्य सद्धितमङ्गभयेना व्युत्पन्नत्वात् । २।२।३।९ पृ १७४, ● पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन संख्याविशिष्टद्रव्यविधाने संख्याया अविवक्षाऽऽपत्तिरित्याशङ्का । ३।४।३।१ पृ १७६, ● यद्यपि सक्तूना प्रथमत एव धात्वर्थे कर्मत्वेन अन्वय असमर्थ तथा सति पश्वेकत्वाधिकरणपूर्वपक्षन्यायेन सक्तूनामविवक्षापत्ते , तथापि भावनायामेव होमादिवत् परम्परासम्बन्धेन कर्मत्वे अवगते पश्चात्तत्र इत्यवगन्तव्यम् । २।१।७।१२ पृ ७७ ● पश्वेकत्वाधिकरणपूर्वपक्ष न्यायस्यापि क्रियाविशेषणत्वहेतुकविवक्षासिद्धान्तेन अबाधकत्वमुपन्यास । मु पृ ८६६

● 'न श्रुतिवृत्ते वाक्यार्थो नेति' ( पेटन्त तु मातिपदिकार्थमात्र सम्यगाह । मा ४।१।५।१५ ) इति पश्वेकत्वाधिकरणभाष्यविरोधमाशङ्क्य एकाभिधानश्रुतिबलीयस्त्वेन एकपदोपादानश्रुतवगतद्रव्यार्थत्व

चाधायं तत् मान्यं इत्येवं विरोधपरिहारः । सु. पृ. १३८०.

● 'प्राजापत्यान् पशूनालभते' इत्यत्र पदद्वयेऽपि बहुत्वस्य, प्रथमतः करणत्वेन अन्वितस्यापि पाक्षिकः पश्चात्पदद्वयेनैव अन्वयः पद्वैकत्वाधिकरणवक्ष्यमाणन्यायेनाऽभ्यते, न तु देवतात्वविशिष्टद्रव्येण । कौ. २।१।७।२० पृ. २३७.

● पद्वैकत्वादीनां कथं तर्हि अङ्गत्वम् ? उक्तं हि पयो। उपादानदोषत्वम् । प्रयुक्तित्वं च तत् । यद्यपि नैव प्रयुक्तित्वम् । किं तर्हि ? विनियोगाङ्गत्वमेव । ननु विभक्तिभिः प्रातिपदिकार्थो विनियुज्यते, न पुनः एकत्वादयो विभक्त्यर्थाः । कथं न विनियुज्यन्ते । न पुनः विनियुक्तोपादानेऽपि नावगम्यते विभक्तिभिः । विनियुक्तस्यैव एकत्वादयो विभक्तिभिरभिधीयन्ते, असंबन्धस्य अनवगमात् । तस्मात् युक्तमुपादानदोषत्वमेषत्वादेः । बृहती. पृ. १-४ । अत्र ऋजुविमला— अयमभिप्रायः । विभक्त्या तावत् प्रातिपदिकार्थो विनियुज्यते । विनियुक्तोऽसौ उपादातव्यः । न च अनवच्छिन्नस्य उपादानं संभवति । तेन अनवच्छेदकाकाङ्क्षायां गृहीततद्विशेषैकत्वादिकमेव तदवच्छेदकं गम्यते । तेन यत् पूर्वमपि विनियुक्ते प्रातिपदिकार्थमाने संख्याऽऽदिकमासीत्, तदुपादानेन विनियुक्तपश्वादिरित्थं क्रियते । विनियोगस्तु तस्य तात्पर्येणैव । यथा पर्णत्वान्वयः क्रतुविनियुक्तजुह्वादिद्वारेण विनियुक्तत्वतया क्रत्वङ्गानि । विनियुक्तस्वता तु तत्र जुह्वादीनां अव्यभिचारिक्रतुसंबन्धात् तद्विहितत्वेन, इह तु उपादानात् इति विशेषः । इति ।

● पश्वेकत्वन्यायः । ४।१।५ ११-१६. 'पद्वैकत्वाधिकरणम्' मीको. पृ. २४९४ इत्यत्र द्रष्टव्यम् ।

● पद्वैकत्वविवक्षाधिकरणे (४।१।५) न कारकविशेषणत्वात् गुणानां कारकविभक्तिः, किन्तु कारकत्वादेव इति वक्ष्यते । वा. ३।१।६।१२ पृ ६८८.

● पश्वेकत्वविवक्षाऽधिकरणन्यायेनैव द्रढयितुमाह— 'शब्दवत्तूपलभ्यते०' (४।१।५।१५) । यथैव दशापवित्रेण ग्रहः (संमार्गः) नान्येन क्रियते,... तथा (आलम्भः) एकस्य पशोः, नानेकस्य कर्तव्यः' (वा. ३।१।७।१४ पृ. ७०४-७०५) । सु. पृ. १०१४.

● पश्वेकादशिन्यां अभितुपेये मेधपतिशब्दः एकवचनान्तः निवर्तते, द्विवचनान्तश्च ऊहितव्यः, ततो न विकल्पः । भा. ९।३।१४।४३.

● पशुकामः अष्टिष्टुति रेवतीषु वारवन्तीयं अग्निष्टोमसाम कृत्वा यजेत । भा. २।२।१२।२७, ● पशुकामः अष्टपाद्येन यजेत । 'तस्य विश्वजिदभिजितौ अग्निष्टोमौ अभितः, उभयतो ज्योतिर्मध्ये षडहः (ज्योतिर्गौरायुः आयुर्गौर्ज्योतिः इति) पशुकामो ह्येतेन यजेत' । १२।३।१।१, ● पशुकामः उक्थ्यं गृह्णीयात् । ३।६।१६।४३, ● पशुकामः सारंसारस्वतीयेन यजेत । २।३।४।५, ● पशुकामः सोमापौष्णं चरुं निर्वपेत् नेमपिष्टम् । ३।३।१५।४२, ● पशुकामस्य गोदोहनेन अपां प्रणयनं दर्शपूर्णमासयोः । ४।३।२।४. ● पशुकामस्य चातुर्मास्यप्रयोगे ग्रहशसनप्राशित्रपर्यन्तं वैश्वदेवमेवाभ्यस्य अथ वरुणप्रघासादीनि पर्वाणि अनुतिष्ठेत् । संकर्ष. ३।२।२४. मीको. पृ. १६८७ 'चातुर्मास्यानां पशुकाम०' इत्यत्र द्रष्टव्यम् । ● पशुकामस्य ध्रुवायां पञ्चाज्यग्रहणम् । संकर्ष. ३।२।१३. 'पञ्चदशाज्यानि पशुकामस्य' इत्यत्र द्रष्टव्यम् । ● पशुकामस्य प्राजापत्यः अजस्तूपरः । 'यः प्रजाकामः पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमालभेत' । तूपरः शृङ्गरहितः । के. ● पशुकामस्य विश्वजिद्विनियोगः कातीये उक्तः । बाल. पृ. ३४.

● पशुकामस्य षड्विंशतिमनुब्रूयात् सामिधेनीः दर्शपूर्णमासयोः । भा. १०।४।८।२७.

● पशुकामेष्टिः 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्, दधि मधु घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः' इति विहिता । (तैसं. २।३।२।८ 'अग्नये०......दधि मधु घृतमापो धाना भवन्ति.....प्राजापत्यं भवति...' इत्याकारकं वाक्यम्) । तत्राज्यभागयोः पुरोनुवाक्ये वार्त्रघ्न्यावेव कर्तव्ये न वृधन्वत्यौ, भूयसामनुग्रहात् । वि. १२।२।७ वर्णकं २, ● पशुकामेष्टिः 'यः पशुकामः

स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' 'ये मध्यमा स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुम् येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति। अस्मिन् अपूर्वे कर्मणि दधिपयसो प्रणीतधर्मा एव कार्यो, न तु वत्सापाकरणादय प्रदेयधर्मा। ९।४।१२ * पशुकामेष्टौ दधिपयसो प्रदेयधर्मा नानुष्ठेया। ९।४।११ मीको पृ २००८ 'दधिपयसो पशुकामेष्टौ' इत्यत्र द्रष्टव्यम्।

* पशुगणा। 'वसन्ते ललामानालभेत प्रथमानाल्भेत'। तथा 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपा चौषधीना च सधावनाद्यकाम' इति। अत्र ऐन्द्राग्नियाना विध्यंत, नामीषोमीयस्य। मा ८।१।८ १५ * पशुगणस्य प्रकृति एकादशिनी, एकादशिन्या प्रकृति सवनीयपशु, सवनीयपशो प्रकृति अग्नीषोमीय, अग्नीषोमीयस्य प्रकृतिरिष्टि। वि ८।१।९-८। तत्रापि सान्नाय्यम्। ८।२।२। तत्रापि पय एव, न दधि। ८।२।३ * पशुगणे अभिगुप्रैषे एकधाशब्दस्य यावत्पशुमभ्यास। ९।३।११ मीको पृ १२७८ 'एकधाऽधिकरणम्' इत्यत्र द्रष्टव्यम्। * पशुगणे अभिगुप्रैषे समस्तबहुवचनप्रयोगानाथ समासेन वचनम्। ९।४।१ मीको पृ ३४६ 'अभिगुप्रैषे पशुगणे समस्त०' इत्यत्र द्रष्टव्यम्। * पशुगणे अभिगुप्रैषगताना सर्वाणि प्रयुक्ताना वाचश्चदिदवाम नोह। ९।३।१०।१८ मीको पृ ३४३ 'अभिगुप्रैषगताना सर्वाणि०' इत्यत्र द्रष्टव्यम्। * पशुगणे उपयाजसाधनाना गुदाना समुच्चय। १२।४।४।८ मीको पृ ११५८ 'उपयाजगुदसमुच्चयन्याय' इत्यत्र द्रष्टव्यम्। * पशुगणे एकस्मिन् पशौ नष्टे दुष्टे वा एक एव पशुरावर्तते, न गण। मा २।२।७।२१, * पशुगणे एकदेवताके दैवतावदानादिना पदार्थानुसमय। ५।२।६।१०-१२, 'वाजपेये प्राजापत्यपशुषु' इत्यत्र अधिकरणं द्रष्टव्यम्। * पशुगणे एकदेवताके वसाहोमाना तन्त्रम्। ११।४।५।२५ 'वसाहोमन्याय' इत्यत्र अधिकरणं द्रष्टव्यम्। * पशुगणे एकदेवत्ये साहित्यपक्षे समानजातीये असमानजातीया

नामनुसमय दैवतैर्दैवतानामिवैव कर्तव्य। ५।२।६। १०-१२

पशुगणे कुम्भीशूल्यवपाश्रपणीना विभुत्वात् तन्त्रभाव स्यात्। ११।४।८।२३ ॥

पशुगणे वाजपेये प्राजापत्येषु पशुषु इत्यादौ कुम्भ्या अवदानश्रपणार्थाया कुम्भ्या, शूलस्य हृदयशूल्स्य वपाश्रपण्याश्चेति कुम्भीशूल्यवपाश्रपणीना तन्त्रभाव स्यात् तन्त्र स्यात्। एका कुम्भी एक शूल एकैव वपाश्रपणी च। प्रभुत्वात् एकैकस्य कार्यसमर्थत्वात्। इति सिद्धान्त। के

* पशुगणे जाघन्या पत्नीसंयाजन दर्शपूर्णमासपूर्वकचोदकपरम्परया प्राप्तम्। भा १२।४।६।१०

पशुगणे तस्यतस्यापवर्जयेत् पश्वेकत्वात्। ५।२।६।१० ॥

वाजपेये प्राजापत्यपशूना सप्तदशाना मध्ये प्रथमस्य सर्वाङ्गस्य पशो दैवतानि सौविष्टकृतानि ऐडानि च अवदानानि अवदाय ततो द्वितीयस्य ततस्तृतीयस्य इत्येवं त्रिविधानि त्रिविधान्यपि अवदानानि अवदेयानि, अथवा सर्वेषा पशूना आदौ दैवतान्यवदानानि तत पुन सर्वेषामेव सौविष्टकृतानि, तत पुन सर्वेषा ऐडानि इडासञ्चीनि अवदानानि अवदेयानि इति विचारे पूर्वपक्षमाह। पशुगणे प्राजापत्यादौ तस्यतस्य एकैकस्य पशो अपवर्जयेत् एकैकविधस्य अवदानपदस्य समाप्तिं कुर्यात्। पश्वेकत्वात् प्रत्येकमस्मिन् पशौ गत्वा विध पश्वेकत्वस्य तुल्यत्वात्।

दैवतैर्वैककर्म्यात्। ११ ॥

सिद्धान्तमाह। दैवतैः इत्युपलक्षणम्। दैवतैः सौविष्टकृतैः ऐडैश्च अवदानैः अनुसमय कर्तव्य। सप्तदशानामपि पशूना दैवतानि अवदानानि अवदाय होमं कार्यं। तत सर्वेषा सौविष्टकृतानि अवदाय स्विष्टकृद्धोम कर्तव्य। तत सर्वेषा एडानि अवदानान्यवदाय शेषकार्यं कर्तव्यम्। ऐककर्म्यात् इत्यत्र वृत्तिकृतुहस्यो एककर्मत्वात् इति पाठ। अर्थस्तु स एव। सप्तदशानामपि पशूना साहित्येके एककर्मत्वमवसीयते इति पदार्थानुसमय एवात्र न काण्डानुसमय।

**मन्त्रस्य चार्थवत्त्वात् । १२ ॥**

सिद्धान्ते हेत्वन्तरार्थं सूत्रम् । चकारः समुच्चये । मन्त्रस्य ' त्वं ह्यग्ने प्रथमो मनोता ' इति मनोतामूक्तरूपस्य तन्त्रेणानुवचनेन सार्थकत्वात् । अन्यथा हि प्रतिपशु पुनः पुनः पाठ प्रसज्येत । तस्मात् पशूनामनुसमयोऽनेति सिद्धान्तः । के.

* पशुगणे भिन्नदैवत्यके वपाहोमाना तन्त्रभेदः । ११। २।६।२६, मीको. पृ १३०८ ' ऐकादशिनपशुवपा० ' इत्यत्र द्रष्टव्यम् । * पशुगणे विभिन्नदेवताके यत्र चोदनाविरोधः, तत्र अवदानत्रय ( दैवत-सौविष्टकृत-ऐडेति ) होम च एकस्य कृत्वा परस्यापि अवदानपूर्वकप्रदानान्तर कार्यम् । स्विष्टकृदिडाभक्षणे तु तन्त्रेणैव । वस्तुतस्तु दैवतावदानस्यापि प्रदानावयवतोपपत्तेः विभिन्नदेवतास्थलेऽपि दैवतावदानादिप्रदानान्तेन अनुसमयः । भाट्ट. ५।२।६. * पशुगणे ( एकयूपके–भाट्ट ) सर्वेषामत् सर्वपशुबन्धन वारणम्, सर्वपशूना चाञ्जनम् । सोम. ४।४।१०. * पशुगणेषु ऐकादशिनादिषु पत्नीसयाजेषु जाघनीना विकल्पः । १२।४।६. मीको. पृ १३०९ ' ऐकादशिनादिपशुगणेषु० ' इत्यत्र द्रष्टव्यम् । * पशुगणेषु ऐकादशिनपशुधर्माणामनिदेशः । भा. ८।१।८।१५. मीको. पृ. २१३ ' अतिदेशः पशुगणेषु० ' इत्यत्र द्रष्टव्यम् ।

* पशुगणत्वं पशुप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* पशुगते निर्मन्थ्यो चयनगतनिर्मन्थ्यशब्दो धर्मान् नातिदिशति । निर्मन्थ्यन्यायः । भा. ७।३।७।१८.

* पशुगतयूपाञ्जनाख्ये दर्शपूर्णमासगताञ्जनाख्या धर्माणा नातिदेशः । भा. ७।३।७।१८.

* पशुगतयूपावटबर्हिषि दर्शपूर्णमासगतबर्हि-र्धर्माणा नातिदेशः । भा. ७।३।७।१८.

**☒ पशुचोदनायामनियमोऽविशेषात् । ६।८। १०।३० ॥**

ज्योतिष्टोमे ' अग्नीषोमीय पशुमालभेत ' इत्यत्र पशुचोदनाया पशुविधौ भवति अजो वा अनड्वान् वा अश्वो वा अन्यो वा कश्चित् इति अनियमः स्यात् । अविशेषात् । पशु इत्युक्तम्, पशुविशेषस्तु नोक्तः । तस्मादनियमः स्यात् इति पूर्वः पक्षः ।

**छागो वा मन्त्रवर्णात् । ३१ ॥**

पूर्वपक्षं सूत्रेण प्राप्त वाशब्देन निरस्यन् सिद्धान्तमाह । अग्नीषोमीय पशुः नियमेन छाग एव स्यान्नान्यः । ' छागस्य वपाया मेदसोऽनुब्रूहि ' इति अनुवचनमन्त्रवर्णात् । तथा च मन्त्रवर्णतो द्रव्यनियमविधिः ।

**न, चोदनाविरोधात् । ३२ ॥**

अग्नीषोमीयः पशुः मन्त्रवर्णात् छागः इति न निश्चेतुं शक्यते, चोदनाविरोधात् । ' अग्नीषोमीयं पशुमालभेत ' इति चोदनागतपशुशब्दस्य पशुत्वमर्थः । अन्यो मन्त्रवर्णेन निरस्यते छागः । चोदना च मन्त्रवर्णात् बलवती । तस्मान्न छागनियमः इति पूर्वपक्षिणः शङ्का ।

**आर्षेयवदिति चेत् । ३३ ॥**

' अग्नीषोमीय पशुमालभेत ' इत्युक्तं पशुत्वम्, छाग प्रकल्पयितुं विनश्यतमिति सिद्धान्ती दृष्टान्तेन शङ्कते । ' आर्षेय वृणीते नैत् वृणीते ' इति सामान्याऽपि श्रुतिः विशेषेऽवतिष्ठते नान्यान् अपेक्षते । एवं आर्षेयमिव आर्षेयवत् पशुत्वमपि छागे एवावतिष्ठते, नान्यान् पशूनपेक्षते । इति चेत् ।

**न, तत्र ह्यचोदितत्वात् । ३४ ॥**

पूर्वपक्षी आह । न आर्षेयवत् पशुत्वस्य छागे पर्यवसानम् । तत्र छागे हि यस्मात् अचोदितत्वात् चोदितत्वाभावात् । पशुत्वं चोदितम्, छागो न चोदितः । तस्मादनियमः ।

**नियमो वैकार्थ्यं ह्यर्थभेदाद् भेदः, पृथक्त्वेनाभिधानात् । ३५ ॥**

पूर्वपक्षिणं वाशब्देन निरस्यन् सिद्धान्ती आह । अग्नीषोमीयस्य पशोः छागत्वे नियम एव । हि यस्मात् ऐकार्थ्यं पशुच्छागशब्दयोः । चोदनाया पशुमित्युक्तम्, मन्त्रवर्णे च छाग इत्युक्तम् । पशुरिति सामान्यम्, छागादयो विशेषाः । सामान्यविशेषयोश्च ' पशुश्छागः, पशुरश्वः, पशुर्मेषः, पशुरुस्रः ' इति सामानाधिकरण्यम् । एव सति छागमन्त्रवर्णेन पशुचोदनया न विरोधः । तस्मात् अग्नीषोमीय. पशुः छाग एव । यत्र तु पृथक्त्वेन परस्परविरोधेन अभिधानं स्यात्तत्र पृथक्त्वेन अभिधानात्

अर्थभेदः स्यात् । अर्थभेदाच्च मन्त्रलिङ्गविध्यर्थयो. भेदः स्यात् । यथा ऐन्द्या ऋचा गार्हपत्योपस्थाने । प्रकृते तु पृथक्त्वेनाभिधानाभावान् अर्थभेदाभावः । अर्थभेदाभावाच्च मन्त्रचोदनयोर्न भेदः । तस्मात् छाग एव पशुः ।

अनियमो वाऽर्थान्तरत्वादन्यत्वे व्यतिरेकशब्दभेदाभ्याम् । ३६ ॥

पुनः पूर्वपक्षी आह । अनियमः अग्नीषोमीयः पशुः छाग एवेति न नियमः । वाशब्द. नियमन्यावृत्त्यर्थ. । अर्थान्तरत्वात् पशुत्वात् छागत्व पदार्थान्तरम् । तेन पशुश्छाग एवेति नियन्तुं न शक्यते । अन्यत्व पदार्थान्तरत्व च व्यतिरेकशब्दभेदाभ्याम् । व्यतिरेकात् शब्दभेदाच्च । यद्यपि छागः पशुरेव तथापि न सर्वः पशुः छाग एव, गवाश्वादेरपि छागभिन्नस्य पशुत्वात् । ततश्च पशुच्छागयोः व्यतिरेको भेदः । छागः, पशुः इति अपर्यायशब्दभेदश्च भवति । नहि एतौ पर्यायौ । तस्मात् अग्नीषोमीयः पशुः छागो वा अन्यो वा अनियमेन ग्राह्य. ।

न वा, प्रयोगसमवायित्वात् । ३७ ॥

सिद्धान्ती पुनराह । न अनियमः । कुतः ? प्रयोगसमवायित्वात् मन्त्रवर्णस्य प्रयोगे समवेतत्वात् । तथा च छागस्यैव नियमः स्वीकर्तव्यः । न च चोदनाविशेषः । पशुच्छागशब्दयोः सामानाधिकरण्येन एकार्थत्वस्योक्तत्वात् ।

रूपाल्लिङ्गाच्च । ३८ ॥

अग्नीषोमीयः पशु. मन्त्रवर्णात् छाग इत्युक्त सिद्धान्तिना । पूर्वपक्षी तु ब्रूते, भवतु छागः । छागशब्देन तु अश्व एव ग्राह्यः । रूपात् आख्यारूपात् योगादित्यर्थः । छिदेः गमेश्च छागशब्द. प्रसिद्धः । यश्च छिन्नगमनः अश्व. स छागः स्यात् । लिङ्गाच्च । छागशब्दः पुलिङ्गः अश्वशब्दश्च पुलिङ्ग एव । एवं रूपलिङ्गाभ्यां छागः अश्वः स्यात् इति ।

छागे न कर्माख्या रूपलिङ्गाभ्याम् । ३९ ॥

सिद्धान्ती आह । रूपलिङ्गाभ्यां छागे कर्माख्या नारभ्यते । गमनच्छेदनकर्मणः आख्या कर्माख्या । छागपदे रूपलिङ्गाभ्यां गमनच्छेदनकर्मण. आख्या भवेत् इति पूर्वपक्षिणा उक्तम्, तत्र युक्तम् । नहि छागशब्दः छिन्नगमनवचनः । समुदायो हो पृथगर्थान्तरे प्रसिद्ध. । नासौ अवयवप्रसिद्ध्या बाधितव्य. योगाद् रूढेर्बलीयस्त्वात् । तस्मात् नाश्वश्छागः । सुबोधिनीवृत्तौ तु " छागेन कर्म आख्यारूपलिङ्गाभ्या ' इति पदच्छेद स्वीकृत्य ' छागेनैव कर्मयोगः । आख्यारूपं रूढिशक्तिः, लिङ्गं पुंलिङ्ग ताभ्याम् । रूढियोगमपहरति इति न्यायात् योगशक्तेरप्रवृत्ति. इति भावः " इति व्याख्यातम् ।

रूपान्यत्वान्न जातिशब्दः स्यात् । ४० ॥

ननु छागः छगल. वस्तः एते शब्दा वयोवचनाः । तेन अश्वोऽपि वयोवचनो भविष्यति, इति छागः अश्व एव स्यात् इति चेत् । आह सिद्धान्ती । न अश्वः छाग. । छागशब्दो यद्यपि वयोवचनः तथापि अजजातिगत वयः वदितु शक्नुयात्, नाश्वजातिगत वयः । रूपान्यत्वात् छागस्य रूप छागत्वं अश्वस्य अश्वत्वम् । रूपान्यत्वात् न छागशब्दः अश्ववचनः । किन्तु छागशब्दः जातिशब्द· स्यात् छागत्वजातिमदाभय यथो वदेत् । अत अग्नीषोमीयः पशुः छागो नाश्वः किन्तु अज एव ।

विकारो नौत्पत्तिकत्वात् । ४१ ॥

ननु अश्वशब्दस्य विकारः छागशब्दो अजशब्द· । अश्वशब्दस्य किञ्चिदश्रेभ्यते किञ्चिदन्यदेव । तस्मात् अश्वोऽपि अज । अजश्च छागः । उच्यते । न विकारः अजशब्दः अश्वशब्दस्य । औत्पत्तिकत्वात् । औत्पत्तिको नित्य एव नामिनाम्नो सम्बन्ध. । नहि एकः शब्दः अन्यस्य शब्दस्य विकारः सम्भवति । तस्मात् अग्नीषोमीय. पशुः छागः अज एव नाश्वादिः ।

स नैमित्तिकः, पशोर्गुणस्याचोदितत्वात् । ४२ ॥

ननु छागशब्दः छिद्रनिमित्तः स्यात् । एवं श्रूयते- ' सुषिरो वा एतर्हि पशु , यर्हि वपामुत्खिदति ' इति । अत्राह सिद्धान्ती । पूर्वसूत्रात् न इति पद अनुवर्तते । सः छागशब्दः न नैमित्तिकः न छिद्रनिमित्तकः । पशोः छिद्रत्वस्य गुणस्य अचोदितत्वात् । ' छागस्य पशोः वपायाः मेदसः ' इति हि चोद्यते । तस्मादच्छिद्र. पशुः । न

च अवयवप्रसिद्धया समुदायशक्तिर्बाध्यते इत्युक्तम् । तस्मात् अग्नीषोमीयः पशुः अजस्छाग एव ।

**जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम् । ४३ ॥**

वाशब्दः अवधारणार्थः इति भाष्यम् । छागशब्दः जातेरेव वाचकः । ' छिद्यमा देवानामुखाया छागस्य मेदसो वपाया मेदसोऽनुब्रूहि ' इति जातिप्राये छागशब्दस्य वचनात्, समुदायस्य अर्थवत्त्वाच्च । तस्मात् अग्नीषोमीयः पशुः छाग एव नाश्वादिः इति सिद्धान्तः । के.

* पशुचोदनायामनियमोऽविशेषात् । इति शाखाऽन्तरीयाणामधिकविधीनां उपसंहारस्यानित्यत्वादेव घाम्नान्याधिकरणमर्थयत् । अन्यथा ' अजोऽग्नीषोमीयः ' इति शाखाऽन्तरीयविशेषवचने जाग्रति तदधिकरणानुत्थानप्रसङ्गात् । कु. ३।१।१५।२७ पृ. २७७.

* पशुजाघनीवाक्यन्यायः ( ३।३।१० ) । अनेन न्यायेन प्रकरनिवृत्तिर्भवति । संकर्ष. १।४।१८. मीको. पृ. १७९९ ' जाघनीन्याय. ' इत्यत्र द्रष्टव्यम् ।

* पशुतन्त्रविप्रकर्षन्याय. । ( वा. पृ. ५०६ ' अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन सकृत् इहैव उपकुर्यात् ' ) ॥

**पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् । ११।२।१९ ॥** ( इष्टिराजसूयाधिकरणस्थमिदम् ) ।

भाष्यम्— यदुक्तं पशुवत् इति ( यथा पशौ भिन्नकालेष्वपि एकदेशेषु ' वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने ' इति नाङ्गानामावृत्तिर्भवति तद्वत्— इत्युक्त्वा पूर्वपक्षिणा ) । तत्र ब्रूम । पशौ युक्ता सकृत् अङ्गानां क्रिया, तत्र हि एकमेव तन्त्रम् । केवलं प्रचारस्य वचनात् विप्रकर्षः । वदैक्य तु चोदनैकत्वात् । एका तत्र चोदना ' आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति ' इति । कर्मचोदनया हि अङ्गानां ग्रहणम्, न प्रचारचोदनायाम् । तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्यते, तदर्थानि च कृतान्यङ्गानि । तेषां पुनः क्रियायां हेतुर्नास्ति । तस्मात् विषम उपन्यासः । अत्र सुधा— ( पृ. ७७९ ) पशुपुरोडाशाङ्गप्रचाराणां कालभेदेऽपि अङ्गानावृत्तिवत् इहापि अनावृत्तिः इत्याशङ्क्य एकस्य कर्मणः प्रक्रमात् प्रभृति आसमाप्तेः एकतन्त्रत्वात् सवनीयपशोश्च ऐककर्म्यात् प्रयोगाख्यस्य तन्त्रस्य विप्रकृष्टकालत्वेऽपि अङ्गानावृत्तिर्युक्ता इति वैषम्यं वक्ष्यमाणं दृष्टान्तितम् ( ५०६ पृष्ठे वार्तिककारेण ) इति ।

* पशुप्रयार्थः स्वरुः तन्त्रं अग्निष्टोमे । ११।३। ५।१०–१४. मीको. पृ. ७२ 'अग्निष्टोमे पशुप्रयार्थ.०' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* पशुप्रयार्थयूपसंस्करणं तन्त्रमग्निष्टोमे । ११।३। ४।५–९. मीको. पृ ७४ ' अग्निष्टोमे पशुप्रयार्थयूपसंस्करण० ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* ' पशुत्वान्वयेऽपि गवादौ छागत्वव्यतिरेकात् अर्थैक्ये च पशुः छागः इति शब्दभेदानर्थक्यापत्तेः ' इत्यनेन ( ६।८।१० ) वक्ष्यमाणेन न्यायेन .. । ( स्पष्टार्थो न्यायः ) । सु पृ. १४४३.

* पशुद्वयवत्यां विकृतौ पाशीकृत्यपाशानहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ । ९।३।४। १०–१४. ' पाशन्याय. ' इत्यत्र अधिकरणं द्रष्टव्यम् ।

* पशुधर्माः उपाकरणम्, उपानयनम्, अक्ष्णया बन्ध., यूपे नियोजनम्, नयनम्, संज्ञपनम्, विशसनमित्येवमादय. । भा ३।६।७।१८. * पशुधर्मा. शैत्यादह प्राचीने औपवसथ्येऽहनि श्रिकानिर्देशादूर्ध्वमाम्नाता. । अग्नीषोमीयस्य च सदेव स्थानं इति सन्निधिना पशुधर्मा अग्नीषोमीयपशुना सबध्यन्ते, सवनीयानुबन्ध्ययोस्तु चोदकात् । वि. ३।६।७. * पशुधर्माणामग्नीषोमीयाङ्गत्वं अनुक्रमसादेश्यरूपात् क्रमात् । ३।३। ५।१२. मीको. पृ. १५०९ ' क्रमाधिकरणम् ' इत्यत्र अधिकरणं द्रष्टव्यम् । * पशुधर्माणां वाजपेये प्राजापत्यपशुषु पदार्थानुसमय. । ( पदार्थानुसमयन्यायः मीको. पृ २४३७ ) । ५।२।१।१–२.

६ पशुधर्माधिकरणम् । अग्नीषोमीयपशुधर्माः पशुधर्माः ॥

**तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात् । ३।६।७।१८ ॥**

भाष्यम्— ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तथा सवनीयोऽनुबन्ध्यश्च । सन्ति च पशुधर्माः उपाकरणम्, उपानयनम्, अक्ष्णया बन्धः, यूपे नियोजनं नयन संज्ञपन विशसनं इत्येवमादयः । ते किं सर्वेषां अग्नीषोमीयसवनीयानुबन्ध्यानाम्, उत अग्नीषोमीयस्य सवनीयस्य च, उत अग्नीषोमीयस्यैवेति । किं प्राप्तम् ? अविशेषात् सर्वपशूनाम् । कथमविशेषः ? ज्योतिष्टोमप्रकरणे सर्वे पशवः समाम्नाताः । तत्प्रकरणापन्नत्वात् सर्वे पशुधर्माः संनमन्ते । न चैषां तत्र कश्चिद्विशेषः । एवं प्राप्ते, ब्रूमः । सवनीयस्यैते धर्मा भवेयुः । तुल्यः सर्वेषां पशुविधिः स्यात्, यदि प्रकरणे विशेषो न भवेत् । भवति तु प्रकरणे विशेषः । सवनीयानां प्रकरणे पशुधर्माः समाम्नाताः । ' आग्नेयः पशुरग्निष्टोम आलभ्यः, आग्नेयो ह्यग्निष्टोमः ' ' ऐन्द्राग्नः पशुरुक्थ्य आलभ्यः, ऐन्द्राग्नानि ह्युक्थ्यानि ' । ' ऐन्द्रो वृष्णिः षोडशिन्यालभ्यः, ऐन्द्रो वै वृष्णिरैन्द्रः षोडशी ' । ' सारस्वती मेष्यतिरात्र आलभ्या, वाग् वै सरस्वती ' इति सवनीयपशुधर्मा आम्नाताः । तस्मात् सवनीयस्य प्रकरणात् भवितुमर्हन्ति ।

व्या— इदानीं स्थानस्य प्रकरणेन सह पूर्वोत्तरविरोधाविरोधौ चिन्त्येते । ज्योतिष्टोमे अग्निष्टोमसंस्थे त्रयः पशव आम्नाताः अग्नीषोमीयः सवनीयः अनुबन्ध्यश्चेति । ते सर्वे कस्माच्चिद्धर्मानपेक्षन्ते । तथा औपवसथ्ये अहनि अग्नीषोमप्रकरणोपक्रमे उपाकरणादयः पशुधर्माः पठ्यन्ते । तेषु चतुर्धा सन्देहः, किं त्रयाणामपि पशूनामर्थेन आम्नायन्ते, अथ सवनीयार्थेनैव, अथ सवनीयाग्नीषोमीयार्थेन, अथ केवलाग्नीषोमीयार्थेनैवेति । किं प्राप्तम् ? तत्र ' स्थानाच्च पूर्वस्य ' ( १९ ) इत्येतस्मादिसूत्रसंगत्यर्थं अत्र तावत् पूर्वस्य पक्षोऽपि सर्वार्थो इति । यदि तु अयमेव पशु सूत्रेण परिगृह्येत, ततः उत्तरसूत्राणि अर्थगतान्येव भवेयुः । यदा पूर्वसूत्रेणैव सर्वार्थत्वं प्रतिज्ञायते तदा विभक्तेन ' स्थानाच्च पूर्वस्य ' इति । प्रकरणविभागादेव हि पूर्वस्यापि सिद्धिः । श्वस्त्वेकेषा ( २० ) इत्यपि प्रकरणाभावकथनेन अप्रतिज्ञातकेवलसवनीयार्थता व्याख्यायमाना कथं सङ्गच्छेत । एवं तदनुसारित्वात् उत्तरसूत्राणामप्यसङ्गतिः । अथवा सौत्रे एव पूर्वपक्षे केवलसवनीयार्थत्वं असूत्रितं द्वितीयं पक्षं कृत्वा ' श्वस्त्वेकेषाम् ' इत्यादि सम्बन्धनीयम् । तत्तु भाष्यकारेण नाभिमतम् । सर्वार्थः पक्षः सुगमसूत्रः क्रियते । मौनपक्षान्तराले तु तत्सङ्गत्यर्थं अभूतपक्षाश्रयणं सूत्रकारस्य शून्यहृदयतामापादयति । तस्मादाद्यः पक्ष सूत्रकृतः पक्षः । तस्योपपत्तिः, पशुधर्मा हि ज्योतिष्टोमप्रकरणे केन चिदपि पशुविशेषेण असंयुक्ताः श्रूयन्ते । कथम् ? ' एतद्वै ह्यनुष्ठानं साम्यात् दैक्षस्य यद्यपि । तथाप्युत्पत्तिदेशेऽस्य प्रक्रिया क्रयसन्निधौ ॥ ' दीक्षासु हि सोमक्रयसमीपे अग्नीषोमीयः समाम्नायते । तस्य च यद्यपि वचनसामर्थ्यात् पशुधर्मसमीपेऽनुष्ठानं भविष्यति, तथापि प्रकरणेन नैव व्याप्तम् । सर्व( प्र )करणानामुत्पत्तिदेशानतिरेकात् । सवनीयानामपि मुख्याकालश्रुत्यादि वाक्यम् । औपवसथ्ये तु गुणार्थैव श्रुतिः । न च तत्र प्रकरणं भाति । अनूबन्ध्यस्तु दूरस्थैव, सोमान्ते विधानात् । तस्मादवान्तरप्रकरणवाक्यसंयोगाभ्यामपि सह ज्योतिष्टोमप्रकरणेन अग्नीषोमीयस्य स्थानं विप्रकृष्टार्थं बाधित्वा ज्योतिष्टोमार्थत्वादेते इत्यं तत्त्वमुच्यते । तस्य च सोमद्रव्यत्वात् न पशुधर्मैः किञ्चित् प्रयोजनम्, इति ' आनर्थक्यात्तदङ्गेषु ' ( ३।१।९।१८ ) इत्येव अङ्गेष्ववान्तरम् । अनन्तरविशेषात् त्रिष्वपि ( पशुषु ) अवतरन्ति । सत्यपि तदङ्गत्वे योग्यताभावात् न दीक्षणीयादिषु अवतरणम् । सत्यपि च योग्यत्वे सामान्यवचनभावात् न नवनीतपशूनाम् । तस्मात् त्रयाणां समानविधानम् । इति प्राप्ते, अभिधीयते । स्यादेतदेवम्, यदि ज्योतिष्टोमद्वारेण प्रकरणाविशेषः स्यात् । अस्ति तु विशेषः सवनीयानां औपवसथ्येऽहनि उत्पत्तेः । ' आग्नेयमग्निष्टोम आलभेत ' ' ऐन्द्राग्नमुक्थ्ये द्वितीयम् ' इत्यादिना हि पशुधर्मसमीपे सवनीया उत्पादिताः ।

तस्मात् केवलसवनीयार्था एव । ( इति द्वितीयः पूर्वपक्षः ) ।

स्थानाच्च पूर्वस्य ॥ १९ ॥

**भाष्यम्**— यदुक्तं प्रकरणात् सवनीयार्था इति, एतत् गृह्णीमः । क्रमाच्च अग्नीषोमीयस्य । तस्य हि क्रमे औपवसथ्येऽहनि समाम्नानम् । तस्मात् उभयोरपीति ।

**वा**— कथं पुनरिदं श्रुतिलिङ्गाधिकरण- ( ३।३।७ ) विपरीतमभिधीयते ? नहि तत्र एवमिष्टं प्रकरणात् विदेवनादयो राजसूयार्थाः स्थानाच्चाभिषेचनीयार्था इति । तथा श्रुत्या ऐन्द्री गार्हपत्यार्था, लिङ्गेन इन्द्रार्था इति । युक्तं तत्र प्रकरणस्थानेन बलीयसा प्रमाणेन निराकाङ्क्षीकृते जघन्यप्रमाणानुत्थानात् समुच्चयानाश्रयणम् । नहि तत्र पुनः कल्पनया विना, शेषस्य न किञ्चित् सिध्यति । नापि शेषिणामिन्द्राग्न्यादीनाम्, उपायान्तरेणापि स्मृतिसिद्धेः । इह पुनः सत्यपि सवनीयसम्बन्धात् धर्माणां नैराकाङ्क्ष्ये, अग्नीषोमीयस्य पशुधर्मैर्विना सिद्ध्यभावात् प्राप्त्यन्तरमनयोः कल्पनीयम्, उभयोरविप्रतिपत्तेः । न चैतस्य तदा दर्शपूर्णमासप्रकृतित्वं भवेत् । यो हि प्रकृतिभूतः पशूनाम्, स दर्शपूर्णमासविकारो भवति । इतरे तु प्राणिद्रव्यकत्वसामान्यात् तद्विकाराः । तत्र किं सवनीयार्थाः, तत्साम्यद्वारप्राप्तेन अतिदेशेन अग्नीषोमीयो गृह्णाति, अथ उपदेशान्वयेन केन चिदिति, उपदेशान्तर्गतत्वात् क्रमेण विनियोगो युक्तः । यद्विधोपदेशासम्भवे हि अतिदेशः कल्प्यते । तस्मात् यथैव अन्यत्र उपदेशातिदेशाभ्यां प्रकृतिविकृत्यर्थत्वं यागगतस्य व्यापारस्य, तथैवेह स्थानप्रकरणाभ्यामुभयार्थत्वम् । अनुपलभ्यमाने तु सर्वोपदेशाभावात् अतिदेशेनैव प्राप्तिर्भविष्यति । तस्मात् अनुपालम्भः सूत्रस्य ।

श्वस्त्वेकेषां तत्र प्राक्श्रुतिर्गुणार्था ॥ २० ॥

**भाष्यम्**— एकेषां शाखिनां श्वः सवनीयानामाम्नानम् । तदपेक्षया इयमेषा गुणार्था पुनःश्रुतिः । कः पुनर्गुणो यदर्था एषा श्रुतिः ? उच्यते । पशून् सवनीयान् 'यथा वै मत्स्योऽविदितो जनमभ्यप्लुते, एवमेतेऽप्रज्ञायमाना जनमभ्यप्लुवते' इत्यविज्ञाने दोषमभिधाय, एभिः कथं सवनानि पशुमन्ति इति प्रश्नरूपेण वपाप्रचारो गुणो विधीयते । तदर्था एषा श्रुतिः वपाप्रचारेण एकवाक्यत्वात् । किमतो यद्येवम् ? न सवनीयानां प्रकरणेन पशुधर्माः, क्रमादग्नीषोमीयार्था एवेति । किं पुनः तत् श्व आम्नानम् ? 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति ।

**वा**— यदुक्तं स्थानात् अग्नीषोमीयार्था इति एतद् गृह्णीमः । यत्तु प्रकरणात् सवनीयार्था इति, एतन्न मृष्यामहे । कुतः ? 'गुणार्थौपवसथ्येऽह्नि सवनीयपुनःश्रुतिः । उत्पत्तिः प्रक्रिया चैषामाश्विनग्रहणोत्तरा ॥' 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति हि सवनीयानामुत्पत्तिः । 'श्वः' इति च औपवसथ्ये अहनि स्थितः सुत्यां ब्रवीति । 'कः पुनर्गुणः' इति स्ववाक्ये प्रयोगाभावात् पृच्छति ( भाष्ये ) । तद्दर्शयति । सर्वान् सवनीयान् अनुक्रम्य निन्दा श्रूयते 'यथा वै मत्स्यः' इति । यथा वै किल मत्स्यः जले विचरन् अनवधारितगतिः प्रेक्षकजनं अभ्यप्लुते 'किमितो गतः किमगतः' इति । एवमेवैते पशवः के कियन्त इत्येवमप्रज्ञायमानाः कर्तृजनं अभ्यप्लुवते । तेन पशुकीर्तनं तावत् प्रश्नार्थम्, न विधानार्थमिति गम्यते । साऽपि निन्दा परतः प्रश्नशेषत्वेन नीता । कैरेभिः पशुभिः सवनीयसमाख्यातैः कथं सवनानि पशुमन्ति कर्तव्यानि इति । सोऽपि प्रतिप्रश्नरूपविध्यन्तरशेषत्वं प्रतिपद्यते 'वपया प्रातःसवने चरन्ति' इति । तस्मात् एतद्गुणार्था इयं पुनः श्रुतिः । न च सा प्रकरणबुद्धिं करोतीति । किं पुनः तत् श्व आम्नानमिति । आश्विनग्रहणानन्तर्यगुणार्थत्वात् तदपि नोत्पत्तिसमर्थमिति मन्यते ( भाष्य ) । भाष्यकारेण केवलस्य आग्नेयस्य श्व आम्नानं दर्शितं नेतरेषाम् । तत्र केचित् आहुः, प्रदर्शनार्थत्वादस्य आग्नेयग्रहणं अविवक्षितत्वात् सर्वार्थमिति मन्यमानेन इति । वाक्यान्तराण्यपि एवंरूपाणि द्रष्टव्यानि इति अपरे । सर्वथा तु केवलाग्नेयप्रदर्शनमेवोपपद्यते । यत्रापि हि ऐन्द्राग्नादीनामौपवसथ्ये एवोत्पत्तिः तथापि तेषामनित्योत्तरपक्षार्थत्वात् नैव शक्तिः नित्यवदाम्नानात् पशुधर्मान् ग्रहीतुम्, इति अग्नीषोमीयस्थानमेव बलीयः स्यात् । यत्तु नित्यत्वेन

ग्रहणसमर्थं तस्य प्रकरणाभाव उक्त एव । तस्मात् सवनीयार्था इति ।

**तेनोत्कृष्टस्य कालविधिरिति चेत् । २१ ॥**

भाष्यम्— नैतदस्ति क्रमादग्नीषोमीयार्था एवेति । प्रकरणात् सवनीयार्था । पूर्वेद्युरपाम्नानं विधानार्थम् । आश्विनग्रहस्य कालगुणविधानार्थम् । कथम्, तेन यथा प्रचारेणोत्कृष्टस्य काल एष विधीयते । प्रातःसवने वपाप्रचारे चोदिते सति पशावप्यो ऽपि तत्रैव प्राप्नोति । तत्र कालनियमे प्राप्त ' आश्विनं ग्रहं गृहीत्वा ' इति कालमात्रं विधीयते । ' त्रिवृता यूपं परिवीय उपाकरोति ' इत्यनुवादः । इतरथा परिव्याणस्य काले विधीयेत उपाकरणस्य च । तत्रानेकगुणविधानात् वाक्यं भिद्येत । तस्मात् सवनीयार्था पशुधर्मा इति ।

वा -- इदानीं कतरत् सवनीयानामुत्पत्तिवाक्यं इत्येव स्परिज्ञानाधीनाधिकरणसिद्धिः । तत्र पूर्वपक्षवादी आह, इति चेत् सवनीयप्रकरणाभावं मन्यसे, तदयुक्तम् । कुतः ? ' सवनीयान् पुरोडाशान् वपामुत्खिद्य याजयति । तत्राप्यनियमे प्राप्ते तद्विशेषो विधीयते ॥ ' ' वपया प्रातः सवने प्रचरन्ति ' इत्यनेनैव वचनेन उत्कृष्टे प्रधाने, प्रधानदेशत्वादङ्गानां उपाकरणादिष्वपि उत्कृष्टेषु, कालनियमे प्राप्ते सति, आश्विनग्रहणानन्तर्यं विधीयते । तेन तदेव गुणार्थं भवति । इतरथा हि वाक्यं भिद्येत । परिव्याणोपाकरणयोः कालविधानात् द्रव्यदेवतायुक्तस्य च यागस्य विधेः । ननु च अतिदेशप्राप्तमेव परिव्याणम्, तत्सिद्धेन काले यागे विधीयमाने अनूद्येत । सत्यमतिदेशेन प्राप्तम्, न तु तस्यानीं क्रियते । भूयसाधारण्येन ' तत्काला तु ' ( ११।३।४।६ ) इत्येव अग्नीषोमीयपशुकालेऽन्यत्रोपदिष्टे । एवं तर्हि याथावण्यादेव प्राप्तं त्रिवृत्त्वमनूद्यते । ▪ शक्यं तदनुवदितुम्, अप्रत्यभिज्ञानात् । तन्नाम अन्यत्र प्राप्तमनूद्यते, यत् तादूप्येण प्राप्तं प्रत्यभिज्ञायते । न च पूर्वेद्युः कृतस्य आश्विनग्रहणोत्तरकालं वर्तमानत्वेन अनुवादो भवति । नहि तदाऽसौ परिव्ययति । न च पूर्वकृतस्य पर्यग्निकृतादिवत् ईदृशेन शब्देन अनुवादः । पूर्वोत्तरकालकर्मान्तरव्यवधानात् । एवं तर्हि अस्माद्वाक्यात् प्राप्तमनूद्यताम् ' स आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति ' इति । तदपि नास्ति, प्रत्यभिज्ञानाभावादेव । यदेतत् अप्राकृतं सवनीयपरिव्याणम्, एतस्य शुद्धस्य श्रवणात् रशनायाश्च प्राकृतपरिव्याणनिबन्धनत्वात्, येनकेनचित् वासःप्रभृतिना करणे सति त्रिवृत्त्वानुवादो न प्राप्नोति । तत्र अनेकार्थविधानात् वाक्यभेदः । तदा च एव भाष्यम् । ' इतरथा हि परिव्याणस्य काले विधीयेत ' यत्कालाधिकरणेन उपात्तं त्रिवृत् द्रव्यम्, काले विधीयेत । ' उपाकरणस्य च ' इति उपाकरणकाले द्रव्यदेवताविशिष्टं च कर्म विधीयेत इत्यर्थः । तस्मात् अस्य गुणार्थत्वात् अस्ति पूर्वेद्युः सवनीयानां प्रकरणमिति ।

**नैकदेशत्वात् । २२ ॥**

भाष्यम्— नैतदेवम् । अग्नीषोमीयार्था एवैते क्रमात् । आश्विनकाल आम्नानं विधानार्थम् । गुणार्थे एतस्मिन् वाक्यं भिद्येत, न विधानार्थे । नहि वपाप्रचारेण उत्कृष्टस्य कालविधिं सम्पादयति । एकदेशो हि वपाद्रव्यम् । तेन सन्निपातिनो वपासंस्कारान् उत्कर्षेत् नोपाकरणम् ।

वा -- ( अत्रोच्यते, ) यदा हि पूर्वेद्युः साङ्गानां सवनीयानामाम्नानम्, तदा तत्रैव सर्वानुष्ठाने प्राप्ते, वचनात् वपाप्रचारादिमात्रं उत्कृष्येत नोपाकरणादीनि । ' तदादि वाऽभिसंबन्धात् ' ( ५।१।१२।२४ ) इति ये वपाहोमोत्तरकाला पदार्थाः, तत्सन्निपातिनो वा तन्मात्रस्य उत्कर्षो भवेत्, न प्राक्तनानामुपाकरणादीनाम् । यानि च अश्रुतकालानि अङ्गानि तेषां प्रधानकालत्वं वक्ष्यते ( ११।३।१।१ ) । पत्न्यङ्गानि तु अवधारितपूर्वेद्युःकालत्वात् न प्रधानकालं गच्छन्ति । तस्मात् वपाप्रचारेण अनुत्कृष्टस्य अनेनैव वाक्येन उत्कर्षः कर्तव्यः । ततश्च गुणवाक्ये सति अनेकार्थविधानात् वाक्यं भिद्येत । उत्पत्तिवाक्ये न दोषः । तस्मादेतत् उत्पत्त्यर्थमिति । न तु इह भाष्यकारेण विधेयानेकार्थत्वं दर्शितम् । एवमेव तु ' गुणार्थे एतस्मिन् वाक्यं भिद्येत ' इत्यभिहितम् । शाक्यस्तु इह पूर्वेद्युः प्राप्तोपाकरणोत्कर्षमात्रविधानात् वाक्यभेदं परिहर्तुम् ।

तत्र केचिदेवं समर्थयन्ते । “ यथा किल ‘ आग्नेय्या आग्नीध्रम् ’ इति ज्योतिष्टोमसंबन्धे तद्विशेषे च विधीयमाने अनेकार्थत्वमुक्तम्, एवमिह यथाप्रचारेण अनुकृष्टस्य उपाकरणस्य उत्कर्षश्च कर्तव्यः तल्लिङ्गोपश्च इत्यनेकार्थत्वम् ” इति । न तु इदमाग्नेयीवाक्यसदृशम् । तत्र हि संबन्धविशेषपरे विधौ सामान्यसंबन्धप्राप्तिमन्यतः अपेक्षमाणे कासु चिदाग्नेयीषु तत्संबन्धात् स्तवविषय-सामान्यसंबन्धं प्रति अन्यथाऽनुपपत्तिः क्षीयते । अतस्तु वेदेन अनभ्युपेतं तद्विधिं कल्पयतो वाक्यभेदो भवति । न तु इह तादृक् प्रतिपक्षोऽस्ति । यतः सामान्येन उत्कर्ष-प्राप्तिं दृष्ट्वा विशेषपरस्य अर्थापत्तिपोषः कल्प्येत । तथापि चेत्तदर्थापत्तिबाधिनी प्रतिपक्षभूता सामान्यप्राप्तिः नाभविष्यत् नामेयीमात्रप्रमाणं निराकरिष्यत । प्राप्तेऽपि कर्मणि एकपदोपात्तानेकार्थविधिः शोणादुदाहरणैः तत्र तत्र प्रतिपादितः । तेन यद्यपि ‘ आश्विनं ग्रहं गृहीत्वा ’ इत्य नेन द्वयमपि प्रातःसवन आश्विनग्रहोत्तरकालस्य च विधी येत, तथापि विधायकस्य एकपदानुरागात् ‘ तस्यानन्योप-विधेयत्वे ’ ( २।१।३।६ ) इत्येतदापत्तिर्नास्ति, किमुत अनेकविधाने ऽर्थापत्तेव इत्यसिद्धेः । अत एव भाष्यकारेण अनेकविधिदूषणे अभिहितम् ‘ न चानेकोऽर्थः परस्परा-सम्बन्धे सति शक्यो विधातुम् ’ इति । आनानि हार्थौ यथा संबद्धानामर्थानां एकस्मिन् विहिते, अन्ये विनैवायासेन प्राप्नुवन्ति । तेन यदि एकस्मिन् विहिते अर्थात् अर्थान्तरमपरमापद्यते न कश्चित् विरोधो विधेयानां वा दृश्यते इत्याश्रीयते । तस्य तु अन्यथाऽप्युपपद्य-मानत्वमेव पक्षो निराकरणोपायः । न चेहास्ति स पक्षो यतैष विधिः सुत्याप्रातःसवनसंबन्धौ अकृत्वा आश्विन ग्रहणानन्तर्यं विदध्यात् । तस्मादवोषः । न चैव तु एष दोषः , यस्य अनेकद्रव्यदेवताविशिष्टकर्मविधानम् ।

अपि च ज्योतिष्टोमसुत्याप्रातःसवनविशेषकाल्संयोगः अपरः कल्पनीयः । सर्वेषु च उत्कर्षापकर्षेषु सामान्य विशेषरूप. अनेकविधिदोषोऽस्ति इति प्रकृतकर्मगुणविध्य-संभवात् कर्मान्तरविधित्वप्रसङ्गः । तद्यथा ‘ माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते ’ इत्यत्र अभिषेचनीयस्य माध्य-दिनसवनमाहेन्द्रस्तोत्रकालविधिः. अनेकार्थत्वम् । एवम् ‘ तिष्ठन्तं पशुं प्रयजन्ति ’ इत्यादिष्वपि योजनीयम् । अपि च एकस्मिन् पदार्थे अनुष्ठीयमाने विधीयमाने च अर्थान्तरं द्वेधा आपद्यते, किञ्चित् प्रयत्नान्तरसाध्यं किञ्चित् तदनुनिष्पाद्यम् । यथा भक्षविधौ ग्रहणादयः तृप्तिश्च । तत्र यत् प्रयत्नान्तरसाध्यं न च तस्मिन् अकृते विहितकरणं शक्यमित्यवधार्यते । तत्र अर्थापत्तिलभ्यं विधिशक्त्यन्तरं कल्प्यते । या च यावती च शास्त्रीया सा अवगतिर्भवति । यत्तु अनुनिष्पादि तदपि पुरुषस्य शास्त्रस्य च व्यापारान्तरमन्तरेणैव सिध्यति, न तेन कश्चित् आयासो भवति । न चेह आश्विनग्रहणानन्तर्ये विधीयमाने अनुष्ठीयमाने वा सुत्याप्रातःसवनादिसंबन्धे भेदेन व्यापारि-तव्यम् । तेन नात्र कश्चित् उत्कर्षसामान्ये विधत्ते । सुत्याप्राश्विनग्रहणार्थमात्रे विहिते यदि तदन्तर्गतत्वात् सुत्या-प्रातःसवनाहर्भागविशेषमुहूर्तनाडिकाक्षणलवनिमेष-काष्ठाद्यवयवत्वादयः प्रसज्यन्ते, किं क्रियताम् ? । अपि च ‘ गिरापामानय ’ इत्यत्रापि शुक्लत्वद्रव्यान्तरसत्ताप्रक्षेपात् वाक्यभेदः स्यात् । अतः पूर्वेद्युः प्राप्तस्य उपाकरणस्य कालान्तरमात्रं आश्विनग्रहणानन्तर्यं विधीयते इत्यदोषः ।

अन्ये तु द्वयोः परिव्याणोपाकरणयोः उत्कर्षात् वाक्यभेदं समर्थयन्ते । तदपि तु सुपरिहरम् । केवलपरिव्याणोत्कर्षादेव ‘ तदादि वाऽभिसंबन्धात् ’ ( ५।१।१२।२४ ) इत्येवमुपाकरणोत्कर्षसिद्धेः । तत्र एतत् स्यात् , ‘ प्रकृतिप्राप्तो धर्मः उत्क्राम्यमाणः तदानुरूप्यं करोति नापूर्वः ’ इति । तदयुक्तम् । ‘ कृतदेशात्तु पूर्वेषाम् ’ ( ५।२।१०।२१ ) इत्यत्र अप्राकृतानामपि विदेवनादीनामपकर्षदर्शनेन ‘ तथा-ऽपूर्वम् ’ ( ५।१।१६।२९ ) इत्यस्य विशिष्टविषयत्व-व्याख्यानात् । अथवा ‘ ■ आश्विन ग्रहम् ’ इत्ये-तद्वाक्यप्राप्तपरिव्याणान्तर्यानुवादात् अवाक्यभेद इति । अथोच्येत, अविशेषेणसाधनत्वात् तत्र निवृत्त्यनुवादो न संभवतीति, तदयुक्तम् । एवं हि सिद्धान्तवाद्यपि पूर्वपक्षवादिना चोदितः स्वयं परिहारं वक्ष्यति ( समाना-साधारण्याधिकरणे ) सोऽस्यापि भविष्यतीति । ननु च तस्य अपूर्वकर्मविधानादनेकार्थविधिरुपपद्यते नास्येति । नैष विशेषः । यत्र हि एकक्रियाविशेषणमनेकमुपादीयते,

तत्र तद्द्वारेण तद्विधिः सुलभ इति विशिष्टविधानन्यायः । यत्र पुनः स्वविशेषणाविशिष्टा क्रिया विधीयते, वाक्यान्तरप्राप्तस्य क्रियान्तरस्य विशेषणम्, तत्र अवश्यं वर्तनीयो विधिभेदः । देवतादिविशिष्टो हि यागो विधीयमानः स्वविशेषणमेव आक्षेप्तुं समर्थः, नाविधीयमानपरिव्याणविशेषणम् । तेन अपूर्वकर्मविधिष्वपि एतद् विवेक्तव्यम्, कतरत् तद्विशेषणम्, कतरत् अन्यविशेषणमिति । तस्मादयमुभयपक्षभावित्वात् नैवस्य चोदयितव्यः । तत्रावश्यं सिद्धान्तवादिना उभयोः परिव्याणयोः साधारणी रशना इति परिहारो वक्तव्यः । वक्ष्यति हि 'रशना च लिङ्गदर्शनात्' (३।६।१०।२१) इति । यावत् एतस्य यूपस्य परिव्याणम्, तस्यैतस्य एषा वाक्येन विज्ञायते । तथा प्राप्तानुवादात् न वाक्यभेदः । अथवा यत् 'निवृता यूपं परिवीय उपाकरोति' इति पूर्वेद्युः प्राप्तम् उपाकरणस्य परिव्याणानन्तर्यमनूद्य आश्विनग्रहणानन्तर्यं विधीयते । वर च वाक्यभेदात् व्यवहितकल्पनाश्रयणम् ।

तस्मात् एवं वर्ण्यते । अवश्यं तावत् स्तवनीयानामेकेनोत्पत्तिः, एकेन च गुणो विधातव्यः । तत्र पूर्वेद्युः स्तवनस्य तावत् न कश्चित् उत्पत्तिवाक्यत्वे हेतुरस्ति । ननु इतरस्यापि नास्ति । यद्यपि एवं तथापि विकल्पसमुच्चयासम्भवात् केन चिद्विशेषेण अन्यतरस्मिन्नभिहिते विशेषो ऽभिधीयते । पुरस्तात् एतदेव स्थितम्, यथा 'उपादेयो गुणः तिरोहितकर्मानुवादेन शक्यो विधातुम्, नानुपादेयः' । स हि कुण्डपायिनामयने होमस्येव बलात् कर्मान्तरत्वमापादयति । तदिह वपाप्रचारः उपादेयः शुक्लकालस्य स्तवनीयानुवादेन शक्यो विधातुम्, किं पुनः प्राप्तस्तवनश्रुत्या तद्देशस्तवनीयग्रहाभिधाने सति । श्वस्तनपुनःस्थाने निर्ज्ञातप्रयोजनत्वात् आश्विनग्रहणेन सह अन्नादिवत्प्रयोगाभावात् कालार्थे संयोगे तस्यानुपादेयत्वात् कर्मैकदेशेन निष्क्रयणसो अवश्यं कालोद्देशेन कर्म विषयः । अथापि आश्विनं प्रति अङ्गत्वेन विधिः, तथापि अङ्गिनः अनुपादेयत्वात् एवैव वचनयार्थः । अतश्च गुणविध्यनुपपत्तेः अवश्यं प्रकरणान्तरन्यायेन उत्पत्तिविधेः अन्येन अनुवादेन अप्रतिविधानात् उत्पत्तौ अनर्थार्थमागमाः कर्मान्तरं स्यात् । तेन अस्य तावत् कालापेक्षया उत्पादकत्वं सिद्धम् । अतश्च इतरस्य परिशेषसिद्धं गुणविधित्वम् । न हि तस्य किञ्चिद्भेदकारणम् । अत एव वपाप्रचारेण उत्कर्षोऽस्ति नास्ति इति विचारितम् । सति हि वपाप्रचारेण उत्कर्षे पूर्वस्यैव प्रातःसवने विपरिवृत्ते कालं प्रति उपादानं प्रत्यभिज्ञानात् कल्प्येत । यथोक्तम् 'सन्निधौ त्वविभागात्' (२।३।१३।२६) इति । काले च कर्मणि विधीयमाने प्रत्ययस्य संनिकृष्टेऽर्थे व्यापारो भविष्यति । वपाप्रचारकालस्य पुनः स्तवनीयोत्पत्तिक्रियात्वे निपाऽवत्विशेषणत्वात् कुष्प्रतिपादो विशिष्टविधिः इति वाक्यभेदः स्यात् । अस्मत्पक्षे पुनः यथा एकवाक्यत्वं भवति तथोक्तम् । एवं च परिव्याणस्यापि प्रकरणस्य अङ्गभावः दृशा वदिष्यते । अन्यथा पुनः विप्रकृष्टतरेण क्रमेण प्राप्तिमपेक्ष्य अनूद्यते । तस्मादयमेव उत्पत्तिविधिः ।

क्व पुनरस्मिन् पक्षे भाष्यकारस्य वाक्यभेदो पर्यायः ? उच्यते । 'कर्मणो भेद एवाय वाक्यभेदोऽभिधीयते । सम्बन्धे त्वेकवाक्यत्वमर्थात् यत्वेऽपि गम्यते ॥' 'वाक्यं भिद्यते' इति । न तेन एकवाक्यताभियात् यथा 'कर्तृगुणे तु कर्मासमवायात् वाक्यभेदः स्यात्' (३।१।१०।१९) इत्यत्र अयत्नेऽपि स्थापितः वाक्यभेदे परस्परप्राप्तवागभिप्रायेणोक्तम् । 'साकाङ्क्षं त्वेकवाक्यम्' (३।१।१०।२०) इत्यत्र च सेन धर्मान्तराभिप्रायम् । तथेह उत्पत्त्यर्थत्वे सति तदेकवाक्यता याति, न गुणार्थे इत्युच्यते ।

**अर्थेनेति चेत् । २३ ॥**

भाष्यम्— आह । अर्थेन हि उत्कर्षस्य काले विधीयते । 'मुष्टिना पिधाय यूपोद्धरणमासीत आवपाहोमात्' इति श्रूयते । पूर्वेद्युर्यूपोद्धरणं मुष्टिना पिधाय न शक्नुयात् एतावन्तं कालमासीनेन अवस्थातुम्, अनवसमाहारविहारादय तेन कर्तव्या इति ।

**न, श्रुत्यनिप्रतिषेधात् । २४ ॥**

भाष्यम्— नैतदेवम् । श्रुतिविप्रतिषेधे भवेदेवम् । न च श्रुतिविप्रतिषेधः । तृणमुष्टिना पर्णमुष्टिना वा पिधायिष्यते । ननु आस्ते इत्युपवेशने भवति । सत्यम् उपवेशने एव, औदासीन्येऽपि दृश्यते । तद्यथा 'ग्रहाणि

परिगृह्य आस्ते, क्षेमाणि परिगृह्य आस्ते' इति अनुप्रवेशनेऽपि भवति व्यापारनिवृत्तौ । इहापि तृणमुष्टिना पर्णमुष्टिना वा पिधाय आसपाक्षेमात् उत्स्रक्ष्यते । तस्मात् आश्विनग्रहमाम्नानं विधानार्थम्, न सवनीयानां प्रकरणे पशुधर्माः । तस्मान्न सवनीयार्थाः ।

स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥

भाष्यम्— नास्ति सवनीयानां प्रकरणम्, इत्येवं सति पूर्वेणैव हेतुना स्थानेन पूर्वस्य अग्नीषोमीयस्य भवितुमर्हन्ति । संस्कारोऽयं पशुयागप्रयुक्तः, न ज्योतिष्टोमप्रयुक्तः । ज्योतिष्टोमप्रयुक्तत्वे न विशेषः पशूनां स्यात् । पशुयागा अपि हि धर्मान् प्रयोक्तुमर्हन्त्येव, समर्थाः प्रकरणवन्तश्च । तस्मात् क्रमात् अग्नीषोमीयधर्मा इति ।

व्या— एवं सवनीयप्रकरणं निराकृत्य पूर्वोक्तेनैव हेतुना सिद्धान्तं निगमयति । यद्वा अवान्तरप्रकरणेन अनाम्नायमानं स्थानसाध्येनैव महाप्रकरणे सर्वार्थप्रतिपादनाय अवस्थितम्, तन्निवृत्त्यर्थस्तुशब्दः ( २५ सूत्रस्थः ) । यद्यपि प्रकरणं स्थानात् बलवत्, तथापि उपांशुयाजानुमन्त्रणन्यायेन लिङ्गानुगृहीतक्रम एव अत्र बलीयान् विज्ञायते । योग्यतया हि पशुधर्माः पशुयागमपेक्षन्ते, न सोमयागम् । न च अनपेक्षिताः प्रकरणेन ग्रहीतुं शक्यन्ते । सन्निपातकरणेन च अत्र विप्रकृष्टतरः क्रतोऽर्थः । न च पशोरप्रतिपाद्यात् संबन्धात् विना, आनर्थक्यन्यायोऽस्ति इत्युक्तम् । ननु न अविहितधर्मान्तरः साकाङ्क्ष एव अग्नीषोमीयः प्रदेशान्तरात् इह आनीयमानः सन्निहितान् धर्मान् प्रकरणेनैव गृह्णाति इति न वक्तव्यं स्थानाधीनेति । नैष दोषः । यत्र हि प्राकृतैरङ्गैः पूर्यमाणायां विकृतौ तन्मध्येऽप्यपूर्वाणि कानिचित् प्रक्षिप्यन्ते तत्र विकृतौ प्रकरणग्रहणं भवति । अत्र प्रदेशान्तरे उत्पन्नः अग्नीषोमीयः प्राकृतैस्तावत् निष्पत्तिहेतुभिः कल्पोपकारैश्च निराकाङ्क्षीकृतः । ततः इहानीतः सन् अनन्यप्रयोजनान् धर्मान् साकाङ्क्षान् पश्यन् अनुमितक्रमाख्यात्ः संबध्यते । स्थानस्य च एतदेव लक्षणम्, यद्गुत धर्माणां साकाङ्क्षत्वेन प्रधानस्य उपाय समानार्थ सम्बन्धः । तस्मात् सूक्तं स्थानात्तु इति ।

लिङ्गदर्शनाच्च ॥ २६ ॥

भाष्यम्— इतश्च पश्यामः अग्नीषोमीयार्थाः पशुधर्मा इति । कुतः? लिङ्गदर्शनात् । लिङ्गमस्मिन्नर्थे भवति 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने' इति पशुपुरोडाशं दर्शयति । इतरथा समानविधानेषु सर्वेषु पशुषु अग्नीषोमयोर्देवतयोः संस्कारार्थः सन् पुरोडाशः सामर्थ्यात् अग्नीषोमीयस्य भवेत् न सवनीयस्य, तयोर्देवतयोः अभावात्, दर्शयति च । तस्मात् अग्नीषोमीयार्था इति ।

व्या— सर्वेषां द्वयोर्वा समानविधानत्वे सवनीये पशुपुरोडाशदर्शनं नोपपद्यते । पुरोडाशस्य हि देवतासंस्कारार्थत्वं वक्ष्यति ( १०।१।९।२० ) । स च लिङ्गात् अग्नीषोमावेव संस्कर्तुं शक्नोति, नाग्निम् । न च समानविधानत्वेन ऊहः सिद्धान्तवत् संभवति । तस्मात् पुरोडाशदर्शनात् आतिदेशिकाः सवनीयस्य धर्मा इति ।

अचोदना गुणार्थेन ॥ २७ ॥

भाष्यम्— इदं पूर्वोत्तरं सूत्रम् । आह, ननु छिद्रापिधानार्थः पशुपुरोडाशः । नेति ब्रूमः । अचोदना गुणार्थेन । तस्य छिद्रापिधानार्थेन न चोदना, अर्थवादः स इत्युक्तम् । तस्मात् देवतासंस्कारार्थः । तस्य अग्नीषोमीयार्थत्वे सवनीये पुरोडाशस्य दर्शनमुपपद्यते, न साधारण्ये । तस्मात् अग्नीषोमीयार्थाः पशुधर्मा इति ।

व्या— यदा देवतासंस्कारार्थः सन् न प्राप्नोति, न तु अयं येनास्तदर्थः । किं तर्हि? 'सुषिरो वा एतर्हि पशुः' इत्युक्तस्य छिद्रापिधानार्थोऽपि । अतश्च विनाऽपि देवताम्, सवनीयस्य छिद्रं पिधातुं पुरोडाशः भविष्यते । तेन समानविधानत्वेऽपि अदोषः इत्युक्ते सूत्रेण उत्तरमाह । न छिद्रापिधानार्थेन अस्य चोदना । विधिवन्निगदानां हेतुवन्निगदानां च एवञ्जातीयानां अर्थवादत्वेन उक्तत्वात् ( १।२।२–३।१९–३० ) । नहि छिद्रापिधानं क्रतुना अपेक्षितम्, नापि पुरोडाशयागे कृते दृश्यते । तस्मात् नैतद् प्रयोजनम् इति यथोक्तमेव लिङ्गदर्शनं सिद्धम् ।

व्या— एवं प्रकरणस्य पूर्वैः सह विरोधाविरोधविचारम् आनुषङ्गिकं समाप्य ( ३।३।८–३।६।९ ), अधुना

पूर्वः, स्विष्टकृदादिरुत्तरः । येषां प्रधानानाम् तानि तन्त्रीणि प्रधानानि । तेषां तु समवाये एकदेशकालकर्तृत्वे, चोदनातः समानानां एकवाक्यचोदितानां एकतन्त्रत्वं भवति । यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ । अतुल्येषु तु भेदः स्यात् । यानि तु चोदनातो न तुल्यानि नानावाक्यैश्चोदितानि, तेषु तु भेदः स्यात् तन्त्रस्य । यथा अत्रैव 'अग्नीषोमीयं पशुमालभेत', 'अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति । किं कारणम् ? विधिप्रक्रमतादर्थ्यात् । विधिर्विधान तदङ्गानां प्रयोगः, तस्य प्रक्रमः तदर्था प्रवृत्तिः । विधिप्रक्रमतादर्थ्यं विज्ञायते, अत्र पश्वर्थः विधिप्रक्रमः, न पुरोडाशार्थं इति । कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य ? तादर्थ्यं श्रुतिकालनिर्देशात् । श्रुत्या तत्र काले निर्दिश्यते । अग्नीषोमप्रणयनादनन्तरं पशोः कालः । तत्र हि तस्य चोदना । वपाप्रचारादूर्ध्वं पुरोडाशस्य कालः । पशोरवसरे यो विधिप्रक्रमः स तेनतः पश्वर्थो विज्ञायते पुरोडाशस्याप्राप्तत्वात् । अतस्तस्य पृथक् तन्त्रं कर्तव्यम् । लिङ्गं च पश्वर्थतां तन्त्रस्य दर्शयति । 'यदेवादः प्रयाजान् यजति पशुमेव तत् प्रयजति, यदेवादोऽनुयाजान् यजति पशुमेव तदनुयजति' इति । एवमाम्नानात् अवधारणं विज्ञायते, पशुमेव, न पुरोडाशमिति ।

टुप्— तन्त्रिसमवाये ... निदानात् ॥ (अग्नीषोमीये पशौ) 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति (श्रूयते) । तत्र संशयः किं तस्य (पाशुकेभ्यः अङ्गेभ्यः) पृथगङ्गानि कर्तव्यानि, उत यानि पशोः (अर्थेन कृतानि) अङ्गानि, तानि (एव) तस्यापि उपकुर्वन्ति प्रसङ्गेन इति । ततः एतत्सिद्ध्यर्थं प्रसङ्गोऽस्ति नास्ति इति चिन्त्यते । (तत्र पूर्वः पक्षः) नास्ति प्रसङ्ग इति । कुतः ? (उत्तरत्वेन सूत्रं योजयति –) तन्त्रिसमवाये (साधारणो धर्मग्रामः तन्त्रम् । स येषाम्, ते तन्त्रिणः, तेषाम्–) प्रधानानां (आग्नेयाग्नीषोमीयानां पशुपुरोडाशादीनां च) समवाये (एकदेशकालकर्तृत्वे सति) चोदनातः समानानामेकतन्त्रत्वम् । यानि एकचोदनया चोद्यन्ते (एकया प्रधानचोदनया सह चोद्यन्ते,) तेषां समानतन्त्रत्वम् । यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ (दध्यादीनाम्) । अतुल्येषु तु भेदः स्यात् । यानि पुनः (प्रधान–) चोदनातो भिद्यन्ते, तेषां भेद एव यथा दर्शस्य पूर्णमासस्य च । तस्मात् द्विप्रकारत्वात् कर्मणां तृतीयः प्रकारो नास्ति । (एवं सामान्यन्यायमुक्त्वा प्रकृते योजयति । पशु–) पुरोडाशः (दार्शपौर्णमासिकात्) अग्नीषोमीयात् (पुरोडाशात्) भिन्नत्वं गृह्णाति, पशुरपि सान्नाय्यात् । एतावानतिदेशस्य व्यापारः । (तत्र) तयोः (पशुपुरोडाशयोः) भिन्नचोदितत्वात् न तन्त्रम् । लोके तु युक्तः प्रसङ्गः प्रत्यक्षगम्यत्वात् (उपकारस्य) । अत्र परिचोद्यते, चित्रेष्टिः अनुदाहरणम् (तन्त्रिभेदेन बहुयागाम्नानात्) कथम् ? 'दधि मधु घृतं धाना उदकं तण्डुलाः, तत् संसृष्टं प्राजापत्यम्' इति (अत्र) तत् इत्येकवचनान्तं सर्वनाम संसृष्टशब्देन सम्बध्यते एकवचनान्तेनैव । यदि दध्यादिभिः सम्बध्येत, बहुवचनान्तं स्यात् (तानि इति) वीप्सा वा (तत्तत् इति), न च वीप्सा श्रूयते, न बहुवचनम् । तस्मात् संसृष्टशब्देन (एव) सम्बन्धः । संसृष्टस्य च (तच्छब्दनिर्दिष्टस्य) प्रजापतिसम्बन्धः (प्रजापतिशब्देन सम्बन्धः) । संसृष्टं चैकं वस्तु । तस्मात् (द्रव्यदेवतैक्यात्) एक एव यागः, कुतस्तन्त्रम् (इति) । अत्रोच्यते । दध्यादिभिः (एव सर्वनाम) सम्बध्यते (न तु संसृष्टेन) । निर्दिष्टस्य हि प्रतिनिर्देशकं सर्वनाम (भवति), निर्दिष्टानि (चेह) दध्यादीनि प्रथमया विभक्त्या । अतस्तान्येव शब्दोपात्तानि (साकाङ्क्षाणि) परिवर्तमानानि सर्वनाम्ना प्रतिनिर्दिश्यन्ते, न तु केनचित् शब्देन (दध्यादि–) संसर्गो निर्दिष्टः यः सर्वनाम्ना प्रतिनिर्दिश्येत (तस्मात् तेषामेव निर्देशः) । अथ यदुक्तं दध्यादिसम्बन्धे बहुवचनं प्राप्नोति वीप्सा वेति । अत्रोच्यते । सर्वनामप्रातिपदिकस्य (हि) निर्दिष्टमात्रनिर्देशकत्वे शक्तिः, वचनस्य तु एकार्थप्रतिपादकत्वम् । तस्मादनयोर्विरोधः । तत्र प्रथमोपनिपातात्, लिङ्गसंख्ययोश्च तदर्थत्वात् (प्रातिपदिकार्थत्वात्) यथाश्रुतं प्रातिपदिकं गृह्णीमः । उत्तरकालभाविनोश्च लिङ्गसंख्ययोरविवक्षैव (युक्ता) । योऽयं 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति (पाशन्यायः ९।३।५।१५) स एवात्रापि न्यायः ।

अथवा एकदेवतात्वात् लक्षणया लक्षितलक्षणया वा उपपन्नमेकवचनं लिङ्गं च। (ननु लक्षणैव दोष इति चेत्तत्राह—) सर्वत्रैव लक्षणया लिङ्गसङ्ख्ये प्रवर्तेते। (तथाहि वृक्षः वृक्षौ इत्यादौ) प्रातिपदिकं जातिं ब्रूते, लक्षणया तु द्रव्यम् (तद्गतं च लिङ्गसङ्ख्ये गम्यते)।

गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

भाष्यम्— अपि च पाशुकाः प्रयाजानुयाजाः गुणतः कालतश्च विकृताः। एकादशसङ्ख्याः पशौ उभयेऽपि। पञ्चभिश्च प्रयाजैः त्रिभिरनुयाजैः पुरोडाशस्य कार्यम्। तथा पृषदाज्येन अनुयाजाः पशोरिज्यन्ते, केवलेनाज्येन च पुरोडाशस्यार्थः। कालविकारोऽपि, आसन्ने हविषि पौरोडाशिके प्रयाजैर्भवितव्यम्, पाशुकास्तु तिष्ठति पशौ वर्तन्ते 'तिष्ठन्तं पशुं प्रयजन्ति' इति वचनात्। उभयेऽपि पुरोडाशस्य पृथक्त्वेनाक्रियमाणाः न यथावत् संपादिता भवेयुः। तस्मादपि तन्त्रभेदः।

टुप्— इतश्च नास्ति प्रसङ्गः। यतः कालगुणविकृताः प्रयाजानुयाजाः पशौ। तेऽन्यस्य नोपकुर्वन्ति।

तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्, तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥

भाष्यम्— अथवा नैव भेदेन पुरोडाशस्य तन्त्रं कर्तव्यम्। किं तर्हि? मुख्यतन्त्रेण सिद्धिः स्यात्। पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्यात्। किं कारणम्? तन्त्रमध्ये विधानात्। पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति। किमतः? तन्त्रार्थस्याविशिष्टत्वं भवतीति। तन्त्रस्यार्थः तन्त्रार्थः अङ्गकृत उपकारः, सोऽत्राविशिष्टः पशोः पुरोडाशस्य च सन्निधानाविशेषात्। पशावपि क्रियमाणान्यङ्गानि पुरोडाशस्य सन्निहितानि। संनिधानाच्च पशोरप्युपकुर्वन्ति प्रदीपवत्। यथा प्रासादे कृतः प्रदीपः सन्निधानात् राजमार्गेऽपि उपकरोति। विषम उपन्यासः। स खलु प्रत्यक्षेण ज्ञायते। अथ पुनः अप्रत्यक्षः अङ्गोपकारः कथं शक्यो विज्ञातुमिति। अत्र-मपि शास्त्रहेतुः, शास्त्रप्रत्ययाद्गम्यते। शास्त्रं चेद् दर्श-पूर्णमासयोः कर्तव्यानि इति। तद्यथा कृतानि किमिति नोपकरिष्यन्ति। दर्शपूर्णमासयोः स्वप्रधाने एकदेशकाल-कर्तृकाणि क्रियमाणानि उपकुर्वन्ति, इहापि तथा विधान्येव क्रियन्ते, तस्मादिहापि तद्वदेव उपकुर्वन्तीति विज्ञायते। आह, नेह तद्विधानि। दर्शपूर्णमासयोः स्वप्रधानान्युद्दिश्य कृतान्यङ्गानि, इहापि तद्वदेव कर्तव्यानि। न च पुरोडाशमुद्दिश्य इह क्रियन्ते। किं तर्हि? पशुम्। तस्मात् पुरोडाशस्य न प्रकृतिवत् कृतानि भवन्तीति। उच्यते। प्रकृतौ न शाब्द उद्देशः। नहि तत्र श्रूयते प्रधानान्युद्दिश्य अङ्गानि कर्तव्यानीति। किं तर्हि? अर्थात् क्रियन्ते, तेषां तत्र चिकीर्षितत्वात्। न चार्थात् कृतं चोदकेन प्राप्यते। यत् कारणम्, विध्यन्तस्य शब्दा-पेक्षत्वात्। तेन यत् पठितम्, तत् प्राप्यते, न पाठात् सामर्थ्यम्। तस्मात्तु अनुद्दिश्यापि क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति। एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः। ननु एवं सति तन्त्रलक्षणात् अविशिष्टमेव भवति, न तत्तु तन्त्रमेव साधारणम्। इह तु अन्यकृत उपकारः। सोऽपि न साधारणः। अन्यकृतोऽन्यस्य भवति।

टुप्— अस्ति प्रसङ्गः, तस्य विषयो निरूप्यते। अन्यस्य तन्त्रे प्रवृत्ते यदन्यत् (पुरस्ताद्धर्मकम्) आपतति कर्म, तस्य कर्मणः (पूर्वभाविकर्मणः) या इतिकर्तव्यता (प्रकृता) सा प्रसज्यते। यथा पशौ प्रवृत्ते पुरोडाश आपतति, तस्य पाशुकी इतिकर्तव्यता प्रसज्यते। कथम्? तदुच्यते। भावयेत्, किम्? पशूपकारम्। केन? पुरोडाशयागेन। कथमिति अनेन (कथंभावेन) याग-गतो व्यापारः (अभिलषितः)। स च उपमितलक्षित-प्रापणेन (पौर्णमासिकस्य) अग्नीषोमीयस्य यो यागगतो व्यापारः (प्रयाजादिजन्यदृष्टादृष्टोपकारसमासंपादनाख्यः) तं (द्रव्यदेवता—)सादृश्येन आकाङ्क्षति। तत्र यदेतत् अग्नीषोमीययागगतव्यापारविशेषनियमनमष्टमध्यायसिद्धम्, तदुत्पत्तिरिव उत्पत्तिः (प्रथमालोचनागतः) तस्य च व्यापारस्य यत् इतरेण (पशुपुरोडाशयागेन) संबन्धकरणम्, सा प्राप्तिः (विनियोगः)। द्वावपि चेमौ (उत्पत्तिविनियोगरूपौ यागगतव्यापारविशेष-विषयौ) चोदकव्यापारौ। तत उत्तरकालमुपसंग्रहः। (उपसंग्रहपदार्थमाह—) 'उप' इति समीपे करण

( अनुग्रहणम् ) ' सम् ' इति ( तस्य नानाविधाङ्गरूपस्य प्रकारस्य ) साकल्येन ग्रहणम् । एष प्रयोगवचनस्य व्यापारः । ( प्रकृते आह— ) सः ( प्रयोगवचन ) इह पाशुकेन प्रयोगवचनेन ( समीपे— ) कृतत्वात् न भूयः पौरोडाशिकः समीपे करोति । तस्मात् पौरोडाशिकः प्रयोगवचनो लुप्यते । एष प्रसङ्गः । कथं पुनरिदमवगम्यते, पाशुकः प्रयोगवचनः ( प्राकृतमुपकार पुरोडाशस्यापि ) समीपे करोतीति ? ( उत्तरम्— ) ' अग्नीषोमीयं पशुमालभेत ' इत्येतस्मादेव अवगम्यते । कथम् ? ( तदाह । अस्य वाक्यस्यायमर्थः— ) भावयेत् । किम् ? ज्योतिष्टोमोपकारम् । (अवान्तरोपकारमग्नीषोमीयापूर्वमित्यर्थः ) । केन ? पशुयागेन ( कथमिति ( अंशेन ) इतिकर्तव्यता भवति ) तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमोपकारो भवने कर्तृत्व प्रतिपद्यते, तस्मिन्नेव क्षणे करणेन ( पशुयागेन ) भाव्यते । तस्मिन्नेव च ( क्षणे ) इतिकर्तव्यता करणमनुगृह्णती ( भाव्ययागेन ) संबध्यते । तस्मात् प्रयाणामेतेषां तुल्यकालत्वम्, भवत्वं ज्योतिष्टोमोपकारं यागेन इत्थं भावयेदिति । ( किमिति तुल्यकालता ? अत आह— ) यदि च भूतो भविष्यति ( वा ) भाव्ये करणेतिकर्तव्यते स्याताम्, तयोस्तेन ( सह ) संबन्ध एव न स्यात् । तत्र यद्यपि उपकारस्य ( भाव्यस्य ) कालो नावधार्यते, तथापि ( त्रयाणामेककाल— ) संबन्धात् करणेतिकर्तव्यताकालेन परिच्छिद्यते । पशोश्च दीर्घकालत्वात् तन्मध्यपाती पुरोडाशः समीपे कृतान् ( नर्हिस्तर णादिजन्यान् ) उपकारान् ( प्रयाजादिजन्यानि ) अपूर्वाणि च पाशुकेन प्रयोगवचनेन उपसंगृह्णाति ( स्वीकरोति प्रयोगवचनेन समीपे कृतानीत्यन्वयः ) । न तु स्वयं (पृथक्त्वेन) समीपे करोति । यानि च नेन (पाशुकेन) न समीपे कृतानि तानि ( आज्यभागावहन्त्यादीनि ) पृथगुपसंगृह्णाति (कथमित्याह—) ' न चेदन्येन शिष्टाः ' इति न्यायात् येऽन्येन न विहिताः ( पदार्थाः ) तान् विदधाति ।

विकाराच्च न भेदः स्यादर्थस्याविकृतत्वात् ।४॥

भाष्यम्— अथ यदुक्तं गुणकर्मविकाराच्च तन्त्रभेदः स्यादिति, तत्र ब्रूमः । विकाराच्च न भेदः स्यात् अर्थस्याविकृतत्वात् । अर्थः अङ्गजनित उपकारः, स न विकृतः, यो दर्शपूर्णमासयोः स एव । कथं ज्ञायते ? तदुच्यते । प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः । तत्र प्रयाजानुयाजशब्दौ प्रज्ञातौ । ते च चोदकेन इह प्राप्ताः संनिहिता विद्यन्ते । प्रकृतभाभिर्न च शब्दस्य न्याय्यम् । न चैकः शब्दः अनेकार्थो युक्तः । तस्मात् दार्शपौर्णमासिकास्ते । तदुपकारोऽपि एषां दार्शपौर्णमासिक एव । न हि तेषां प्रमाणं । यदि च प्राकृतादुपकारात् उपकारान्तरं अकुर्युः, ततः अप्राकृतकार्यत्वात् नैव चोदकेन प्राप्येरन्, अपूर्वा भवेयुः । यथा सभे गौग्गुलवादिभिरभ्यञ्जनम् । अथासौ वा अनेनैव प्रयाजा विधीयन्ते, अनेनैव तेषां विकार इति, तत्र द्विरूपः शब्दः स्यात् । न च सकृदुच्चरितः शक्नोत्यर्थद्वयं विधातुम् । अपूर्वत्वे च एतेषां प्राकृता अपि चोदकेन प्राप्येरन् । तत्र वैश्वदेवे त्रिंशत्संपच्चिराहुतीनां न युज्यते, ' नव प्रयाजाः, नवानुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये समवद्यति, वाजिनो यजति, आहुतीनां संपत्त्यै त्रिंशत्त्वाय ' इति । तस्मात् गुणविकारेऽपि अविकृतः प्राकृत अङ्गोपकारः । तत्कृता एव पुरोडाशस्यापि उपकुर्वन्ति इति न गुणकर्मविकारेऽपि तन्त्रभेदः । तदानीं त उभौ प्रार्थयेते पशुः पुरोडाशश्च । उभयोश्च प्रकृतिवत् क्रियन्ते अङ्गानि । तस्मात् सकृत्कृतान्येव उभयोरुप कुर्वन्ति । विकार इदानीं किमर्थः ? पश्वर्थः । पाशुकेषु हि प्रयाजानुयाजेषु श्रूयन्ते । न च पशोः पुरोडाशस्य च साधारणान्यङ्गानि । पाशुकान्येव सन्निधानात् पुरोडाशस्यापि उपकुर्वन्तीत्युक्तम् । अपि च पृषदाज्येनापि इज्यमाना अनुयाजाः आज्येन इष्टा भवन्ति । न हि पृषदाज्यं आज्यत्वं नाशयति । यथा क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चित् विरोधो भवति, सशर्करमपि तत् पय एवेति । तथा च एकादश प्रयाजान् यजति, यजत्यसौ तदन्तर्गतान् प्राकृतान् पञ्च । येऽप्यधिकाः षट्, न तैरिज्यमानैः पञ्च प्राकृता नष्टा भवन्ति । एवं विकृता अपि पशौ क्रियमाणा प्रयाजाः कृता एव पुरोडाशस्य भवन्ति । क्रमस्तेषां प्राकृतो हापितः, गुणयात्र न क्रमः, न च गुणानुग्रहार्थं

प्रधानस्यावृत्तिर्युक्ता । न च पशुवर्जितं प्रधानम् । कामं क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत्, नावृत्तिः । प्रायश्चित्तं तर्हि कर्तव्यम् ? क्रियते, ' अयाश्चाग्नेः इति सर्वप्रायश्चित्तं जुहोति ' इति । प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । तस्मादविरोधः ।

टुप्— अथ यदुक्तम्, द्रव्यसंख्याकालभेदात् न प्रसज्यते इति, तदुच्यते । सर्वः कथम्भावः उपकारमाकाङ्क्षति, तं तु चोदकः सादृश्येन उत्पादयति प्रापयति च । उत्पादितं प्रापितं च प्रयोगवचनः उपसंगृह्णाति । ते च ( उपकाराः ) शास्त्राण्यन्तरेण न सम्भवन्ति, इति शास्त्राणामुत्पत्तिं प्राप्तिं च करोति ( शास्त्रग्रहणं पदार्थानामपि उपलक्षणम् ) । पूर्वतन्त्रं प्रयोगवचनेन उपसंग्रहः । तदिह पाशुकौ चोदकप्रयोगवचनौ सर्वं ( इद ) कुरुतः । पौरोडाशिकस्तु चोदकः उत्पत्तिप्राप्ती करोत्येव । प्रयोगवचनस्तु पाशुकेन प्रयोगवचनेन उपसंगृहीतत्वात् न पृथगुपसंगृह्णाति उपकारान् । न चेदुपसंगृह्णाति, ते पदार्था एवात्र ( पुरोडाशे ) न सन्ति ( न कर्तव्या इत्यर्थः ) नतरां पदार्थानां गुणाः । तस्मान्नास्ति वैगुण्यम् । न च संख्याभेदेन द्रव्यभेदेन वा अपूर्वान्तरं भवति । किं तर्हि ? प्राकृती संख्या ( पञ्चसंख्या ) प्राकृतं च द्रव्यं ( केवलमाज्यम् ) अपनीयते । उपकारस्तु स एव ( स्थितः । एवं कालभेदेऽपि न दोष इत्याह– ) प्रयाजोपकाराश्च आदौ ये उत्पन्नाः, ते च आफलनिर्वृत्तेः ( फलभूतपश्वपूर्वनिर्वृत्तिपर्यन्तम् ) विद्यन्ते । विद्यन्ते चेत् अदोष एव कालभेदः । ( तस्मादस्ति प्रसङ्ग इति ) ।

एकेषां चाशक्यत्वात् । ५ ॥

भाष्यम्— एकेषां चार्थानां अशक्या भेदेन क्रिया । यथा वेदेरग्न्युद्धरणस्य प्रोक्षणानस्येति । वेदिः कृता अनवसृष्टा तिष्ठति । सा न शक्या कर्तुम् । नहि अर्थः कृतः सन् कर्तुं शक्यते । अथोच्यते, अन्या करिष्यतीति । आहोपुरुषिकं स्यात् । तिर्यक् चासौ भवेत् । तत्र दिक्कृतमुख्येन । विहारपृथक्त्वं चाभ्युपगम्यतेव । तत्र ' एकदेशकालकर्तृत्वमङ्गप्रधानानाम् ' इति स्थितो न्यायः प्रत्युद्भिद्येत । एवमग्न्युद्धरणं तदाहवनीयनिर्वृत्त्यर्थम् । सकृदुद्धरणेन च निर्वर्तितोऽसौ । न च निर्वर्तितः शक्यो निर्वर्तयितुम्, यथा कृतः कर्तुम् । अथोच्यते, अन्यं निर्वर्तयिष्यतीति । न तस्मिन्ननुपरते द्वितीयस्तत्र आहवनीयोऽस्ति । यत् कारणम्, गार्हपत्याहवनीयौ उभावेकस्थौ । आहवनीयेऽपयाते परिशिष्टो गार्हपत्यो भवति । यथा सर्वसाधारणात् प्रोक्षणात् उभयसाधारणेऽपयाते परिशिष्टमन्यदेवतार्थं भवति । विहारपृथक्त्वं च पूर्ववदापद्यते । तत्र पूर्वोक्ता एव दोषाः । तथा सर्वं यद् गृहीतम्, न तत् पुनरुत्सृष्टं शक्यते ग्रहीतुम् । अनुत्सृष्टं च तत्र प्रधानापवर्गात् ।

एकस्मिंश्च दर्शनम् । ६ ॥

भाष्यम्— एकस्मिंश्च पशोः पुरोडाशस्य च दर्शयति ' मध्येऽग्नेराज्याहुतीर्जुहोति, पुरोडाशाहुतीः पश्वाहुतीश्च ' इति । नाग्न्युद्धरणस्य भेदः । तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रसज्यते इति ।

शा — सकृदनुष्ठितमपि अङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोति उपकर्तुं इत्येतत् तन्त्रलक्षणोक्तमुपजीव्य क्रियमाणविशेषलाभादेव वा एवं भवति, तत्र ' असौ इदमनुष्ठानम्, नासौ ' इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेऽपि अनुष्ठितमपि अङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्तुम्, न तादर्थ्येन पुनरनुष्ठानमर्हतीति चिन्त्यते । इति तन्त्रप्रसङ्गयोर्हेतुरुक्तः । तत्र 'अङ्गानि पशुकालानि पदार्थानीत्यसंशयम् । अनागते पुरोडाशकाले नहि तदर्थता ॥ अन्यार्थानुष्ठितं चाङ्गं नह्यन्यस्योपकारकम् । तदर्थेन कृतं चैव तथा प्रकृतिदर्शनात् ॥ ' किञ्च ' विधीयमानं कालादौ कर्म साङ्गं विधीयते । स्वकालेऽतः पुरोडाशः कार्यः सर्वाङ्गसंगतः ॥ गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम् । तेनापि न प्रसङ्गोऽस्तीत्येवं प्राप्तेऽभिधीयते ॥ वितते पाशुके तन्त्रे समाप्तिमागते सति । मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति ॥ चोदकेन पुरोडाशे यो विध्यन्तः समर्पितः । ऐष्टिकः स पशावेव विततो दृश्यते यदा ॥ तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम् । प्राकृतानां पदार्थानां न करोत्युपसंग्रहम् ॥ ' तस्मादस्ति प्रसङ्गः ।

सोम—सूत्रार्थस्तु– साधारणाङ्गप्रयाजादा समवाये एकदेशकालकर्तृत्वे सति यानि एकचोदनाचोदितानि आग्नेयादीनि तेषामेव ऐकतन्त्र्यं स्यात्, भिन्नचोदनाचोदितेषु पशुपुरोडाशादिषु अङ्गानुष्ठानस्य श्रुत्या अग्नीषोमीयप्रणयनानन्तरकालाकालनिर्देशेन पश्वर्थात् पुरोडाशार्थं तन्त्रभेदः स्यात् इति ।

वि— 'पशर्थानुष्ठितैर्नास्ति पुरोडाशस्य उपक्रिया । अस्ति वा, विप्रकर्षान्नो, इष्टेवत्त्वन्तु नेतरत् ॥'

भाट्ट— 'अग्नीषोमीयस्य॰ निर्वपति' इति श्रुते अग्नीषोमीयपशुयागाङ्गभूते दाशिकाग्नीषोमीययागप्रकृतिके पशुपुरोडाशयागे किं पाशुकानि प्रयाजादीन्यङ्गानि प्रसज्यन्ते, उत भेदेनानुष्ठीयन्ते इति चिन्तायाम्, न तावत् पौरोडाशिकं चोदकं प्रयोगविधिं च प्रयाजादेरपि अभ्युपगम्य केवलमनुष्ठानप्रसङ्ग एवाभ्युपगन्तुं शक्यः । प्रयोगविधिना वपाप्रचारोत्तरकालविशिष्टसाङ्गपुरोडाशयागप्रयोगविधौ ततः पूर्वकृतप्रयाजादीनां अवान्तरत्वेन उपकारकत्वानुपपत्तेः । यदि तु नायं कालविधिः, अपितु पशुपुरोडाशसमाख्यावदङ्गानुष्ठानक्रमादेवयात् वाक्यादेव वा पश्वङ्गानन्तरं तत्प्रयोगस्य पाठेनानुष्ठानसिद्धेः अयं क्रमविधिरेव इत्युच्येत, तथापि पुरोडाशयागार्थं प्रधानविधिनैवानुष्ठापितानां प्रकृत्यानामङ्गानां अकरणे वैगुण्यापत्तिरनिवार्यैव । यत्र हि पश्वङ्गानां पुरोडाशाङ्गानां च न वैलक्षण्यम्, तत्र सकृत्करणे वैगुण्याभावेऽपि तन्त्रत्वसिद्धापत्तेः न प्रसङ्गापत्तिः । यत्र वैलक्षण्यम्, यथा पशौ एकादश प्रयाजाः त्रिवृति च पशौ पृषदाज्येनानूयाजाः एकादश वैकृतत्वात्तान्त्रिकाः, पुरोडाशे तु प्रयाजाः पञ्च हविरासादनोत्तरकालीनाः, अनूयाजाश्च शुद्धाज्येन त्रयः इत्यादि । तत्र भिन्नादिसंख्यायाः चोदकेनाङ्गत्वप्राप्तौ प्रयोगविधिना चानुष्ठापने कथं पुरस्तात्तन्त्रत्वेनानुष्ठाने वैगुण्यानापत्तिः ? । अतोऽवश्यं प्रसङ्गवादिना तदंशे शास्त्रस्यैव न व्यापारः इति अभ्युपगन्तव्यम् । तत्तु तर्हि तदंशे चोदकस्यापि प्रयोगविधिलोपः । तथात्वे पुरोडाशोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुष्ठाना प्रयाजादेः कारकत्वाभावेन पुरोडाशाङ्गत्वानापत्त्या चोदकवैयर्थ्यात् । प्रयाजानुष्ठानस्य पश्वुद्देश्यकत्वेन पुरोडाशोद्देश्यकत्वाभावात् । अथ पुरोडाशयागानुकूलभावनायामेव प्रयाजादेः इतिकर्तव्यतात्वेनान्वयादङ्गत्वमित्युच्येत, तथापि अनुष्ठानाभावेऽपि अङ्गत्वबोधकातिदेशस्यैतादृशे कृत्यत्वेषु अवघातातिदेशापत्त्या प्राभाकरमतापत्तेरापत्तेः । अथ उपकारपूर्वभावेन पदार्थानामतिदेशात् उपकारलोपे इव अन्यत उपकारलाभेऽपि न पदार्थातिदेश. । उपकारस्य सिद्धत्वेन जननस्यैवाऽभावे तदंशे अतिदेशकल्पने प्रमाणाभावात् । अत एव पुरोडाशनिर्देशेन प्रयाजादिजन्यो विजातीयोपकार एव अतिदिश्यते, न तु तज्जनकप्रयाजादिकमपि । अतश्च पश्वर्थं क्रियमाणप्रयाजादिभिरेव तादृशविजातीयोपकारस्य लब्धत्वात् तेनैव पुरोडाशयागेऽपि योग्यताजननरूपफलोपपत्तेः प्रसङ्गाविरोधः । अत एव कार्यशब्दाध्याहारकृतं न वैगुण्यमपि । प्रयाजादीनामेवाननिर्देशेन कर्तृत्वभावेन तेषां सुतरामनतिदेशात् । इति चेत्, तथात्वेऽपि पशुयागोद्देशेन अनुष्ठितप्रयाजादिजन्यादृष्टानां पशूपकारं प्रत्येव फलोपधायकतया पुरोडाशयागोपकारकत्वानुपपत्तेः । अन्यथा स्वर्गोद्देशेन अनुष्ठितदर्शपूर्णमासादितः पुत्रद्रव्यादेरपि उत्पत्त्यापत्तेः । अतः पश्वर्थं क्रियमाणप्रयाजादिभिः पुरोडाशोपकारकत्वानुपपत्तेः सदृशं भेदेनानुष्ठेयानि प्रयाजादीनि, न च 'एकादश प्रयाजान् यजति' इत्यादिना अङ्गप्रधानसाधारणप्रयाजाद्युद्देशेन एकादशत्वादिविधानात् साङ्गत्वैरेव तैः तन्त्रेण उभयोपकारोपपत्तिः । 'एकादश प्रयाजान् यजति, पशुमेव तत् प्रयजति' 'एकादशानुयाजान् यजति, पशुमेव तदनुयजति' इत्यादिना एकादशत्वादीनां पशूपकारकत्वपर्यवसानात् प्रयाजाद्यैकादश्यावगमेन श्रूयमाणविशेषतया तन्त्रत्वानुपपत्तिः । इति प्राप्ते, सत्यम् । एकादशत्वादिगुणक प्रयाजादिकं पश्वर्थमेव । तैरेव तु पशुप्रयोगमध्यवर्तिनः पुरोडाशयागस्य प्रसङ्गेन उपकारसिद्धेः न पृथक् तदर्थमनुष्ठानम् । अत एव प्रसङ्गस्थले अन्यत्र सिद्धोपकारलाभात् पुरोडाशप्रयोगविधिलाघवेन नोपकारजनकीभूतं प्रयाजादिकमनुष्ठापयति, न वा तदीयचोदक तदतिदिशति प्रयोजनाभावात् । अत एव उपकारमात्रांशे एव अतिदेशः । न च तैः पशुपूर्वानुकूल्योपकारमात्रस्यैव जननम्, पुरोडाशापूर्वानुकूल-

योग्यताया अपि सामग्रीसत्त्वेनोत्पत्तौ बाधकाभावात्। नहि एकं कारणं युगपत् क्रमेण वा एकमेव कार्यं जनयति इत्यत्र नियामकमस्ति, एकस्यैव घटस्य युगपत् क्रमेण वा रूपरससंयोगाद्युत्पादकत्वदर्शनात्। कामोद्देशेन अनुष्ठितदर्शपूर्णमासजन्यापूर्वात् नित्यप्रयोगीयसाधकत्वस्यापि उपपत्तेश्च। सामग्रीभेदस्य प्रकृतेऽपि समानत्वाच्च। एकस्मात् कारणात् युगपत् एककार्यताऽवच्छेदकावच्छिन्नस्य एकस्यैवोत्पत्तिः। इतरथा घटद्वयोत्पत्तिरपि युगपद्यापद्येत। अत एव 'स्वर्गेभ्यो दर्शपूर्णमासौ' इत्यादौ अर्थवादोपात्तकामशब्दानुरोधेन प्रवृत्तिप्रयोजककामनानियामकस्यैव उद्देश्यताऽवच्छेदकत्वेन स्थापितवान् तदवच्छिन्नस्यैकस्यैव युगपदुत्पत्तिः, नानेकस्य। न च तर्हि क्रमेण तस्योत्पत्तिप्रसङ्गः, पूर्वोत्पन्नकार्येण अपूर्वस्य नाशे उत्तरोत्पत्तौ आपादकाभावात्। न चैव इहापि प्राथमिकेन पुरोडाशजन्यापूर्वेण प्रयाजादिजन्यापेक्षाया नाशात् पाश्चात्त्यमुख्यापूर्वोत्पत्त्यनुपपत्तिः, लाघवेन उद्देश्यताऽवच्छेदकावच्छिन्नस्यैव अपूर्वतया स्वीकारात्। अतोऽत्र कार्यान्तरोत्पत्तौ न किञ्चिद् बाधक इति युक्त एव प्रयत्नः। युगपत्कार्यद्वित्वे वैगुण्य तु तत्रैव निरस्तम्।

मण्डन— 'अङ्ग पुरोडाश उपैति पाशुकम्।'

शंकर— 'चित्राया मिश्रकर्मता।' १. 'पश्वङ्गानि प्रयुज्यन्ते।' २. (अत्र प्रथमाधिकरणत्वेन यन्निर्दिष्टं तद्, 'येषां तु समवाये एकदेशकालकर्तृत्वे चोदनातः समानानामेकवाक्यचोदितानां एकतन्त्रत्वं भवति। यथा दर्शपूर्णमासयोः। यथा च चित्रायामिष्टौ' इति भाष्यानुसारेण चित्रोदाहरणं गृहीत्वा चकारमहे. किन्तु उक्तमिति ज्ञेयम्। के.)

• पशुपुरोडाशादयः अन्यार्थेऽपि उत्क्रियमाणाः न स्वाङ्गान्युपसंगृह्णन्ति, न च तदान्या किञ्चिद्वैगुण्यं भवति इति प्रयत्नलक्षणे (१२) प्रतिपाद्यते। वा. ३।६।२।१० पृ. १०३६. • पशुपुरोडाशादयः आश्रयिपदार्थाः अदृष्टार्थाः, न तु देवतासंस्कारार्थाः। देवताऽदृष्टयत्नु देवतागत तत्पूर्णमिति गम्यते। भा. ४।३।७।१८-२०. • पशुपुरोडाशादीनां हविर्निर्वापः हविर्धानशकटाभ्यां भिन्ने शकटे, न तु हविर्धानशकटयो रन्यतरस्मिन्। १२।१।७।१४-१६. मीको. पृ.१७८६ 'ज्योतिष्टोमे इत्यादौ•' इत्यत्र द्रष्टव्यम्। • पशुपुरोडाशादौ देवतादेः गुणत्वेन प्रतीतस्यापि प्रयोक्ताकाङ्क्षया प्राधान्यमिष्यते। भाट्ट. ३।४।८ पृ. ३१८.

• पशुपुरोडाशतन्त्रस्य प्रसङ्गः अग्निचयने अनुनिर्वाप्येषु देवसुवां हविःषु। १२।३।२।१-८. मीको. पृ ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम्।

• पशुपुरोडाशता च (सौत्रामण्याम्) प्रयोगाभावे— 'नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः' इति। (पशुदेवतानन्तः पुरोडाशा न सन्ति, अन्यदेवत्यास्तु सन्त्येव)। भा ८।२।१।१९.

§ पशुपुरोडाशन्यायः। अग्नीषोमीयपशुपुरोडाशयागः पशुदेवतासंस्कारकः॥

पश्वानर्थादिति चेत्। १०।१।९।१९॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः। 'आ सोम वहन्त्यग्निना प्रतितिष्ठन्ति, तौ सम्भवन्तौ यजमानमभि सम्भवतो वरुणपाशाभ्यां वा एषोऽभिधीयते, यो दीक्षितो यदग्नीषोमीयं पशुमालभते, वरुणपाशाभ्यामेव मुच्यते' इति। तमेव समामनन्ति— 'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति' इति। तत्र संदेहः किं पुरोडाशयागः आरादुपकारकः, उत देवतासंस्कारार्थः इति। किं तावत् प्राप्तम्? तत्र प्रयाजाधिकरणे पठितोऽपि हेतुः येन विशेषेण विशेषेण पुनरनुप्राप्यते इति पुनरुपदिश्यते 'पश्वानर्थादिति चेत्'। इति चेत् पश्यसि किमारादुपकारको देवतासंस्कार इति, पश्वानपि आरादुपकारकः स्यात्। एतद्धि कर्मणा प्रसिद्धं कर्म। अग्नीषोमीयमिति च गुणभूतदेवताकं तद्धितशब्दो भवति। पश्वावपि तद्धित एव शब्दो वाक्यदोषेण वक्ष्यता ज्वलनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशो। अतः प्रसिद्धेः आरादुपकारकत्वम्।

टुप्— यस्य प्रधानभूता देवता तस्य धर्मा एव न प्राप्नुवन्ति। तत्र 'अनिरुक्तः स्विष्टकृत्' इति दर्शनं नोपपद्यते। कथ (धर्माः) न प्राप्नुवन्ति? उच्यते। विकृतौ

सादृश्येन धर्मप्राप्तिः विसदृशयोस्तु अग्नीषोमयोः ( कथं धर्मप्राप्तिः ? इत्यभिप्रायः, व्यक्त्या व्यज्यतीय । किं वैसादृश्यमित्याह— ) प्रकृतौ गुणभूतयोः ( अग्नीषोमयोः ) धर्मा विहिताः, विकृतौ प्रधानभूतयोः इति विसदृशम् ( वैसादृश्यमित्यर्थः ) । अयमभिप्रायः परिचोदयतः ।

न, तद्भूतवचनात् । २० ॥

भाष्यम्—नेति प्रतिषेधकः शब्दः । 'आ सोमं वहन्ति, अग्निना प्रतितिष्ठन्ति' इत्यर्थवादवचनं एषः । यदर्थवादवचनात् अन्या पशौ देवता, अन्या पुरोडाशयागे इति गम्यते, अर्थवादवचनादेव सैवेत्यवगन्तव्या । एवं ह्याह— 'यद्देवत्यः पशुः, तद्देवत्यः पशुपुरोडाशः' इति । तस्मात् अर्थवादसामर्थ्ये देवतासंस्कार इति गम्यते ।

लिङ्गदर्शनाच्च । २१ ॥

भाष्यम्—इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति । कुतः ? लिङ्गमपि एतमर्थं दर्शयति । 'इन्द्राय वज्रिणे पुरोडाशमेकादशकपालं निर्वपेत्' इत्यस्य पशोः पुरोडाशस्य कर्म संप्रतिपन्नदेवताकं याज्यानुवाक्याद्वयं समाम्नातम् । 'इन्द्र स्तुहि वज्रिणं स्तोमपृष्ठम्, स्तुहि शूरं वज्रिणं सुप्रतीतम्' इति च । तत् संस्कारपक्षेऽवकल्पते नान्यथा । तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयाग इति ।

गुणो वा स्यात् कपालवद् गुणभूतविकाराच्च । २२ ॥

भाष्यम्—विशेषविवक्षया पुनरारम्भेण हेतुं व्यपदिशति । वाशब्देन पक्षं व्यावर्तयति । गुणः स्यात् देवता, एवमारादुपकारकत्वप्रसिद्धिरनुग्रहीष्यते । अनेकगुणभावश्च कपालवत् भविष्यति । यथा कपालं श्रपणेऽपि तुषोपवपनेऽपि । एवं अग्नीषोमावपि अग्नीषोमीये पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः । एवं च सति दर्शपौर्णमासिकयोः अग्नीषोमयोर्गुणभावेन यागं द्वारभूतयोः धर्माः आम्नाताः, इह गुणभूतयोरेवाविशेषेण भविष्यति । इतरथा प्रधानभूतयोः अन्यकार्ययोर्न प्राप्नुयात् । दृश्यते च अनित्या विकृतिरिति । तस्मादपि आरादुपक्रिया । अपि च सौत्रामण्यां आश्विनसारस्वतसुत्रामदेवत्येषु पशुषु ऐन्द्रवारुणसावित्राः पुरोडाशाः पशुप्रकरणान्नोत्कृष्यन्ते । संस्कारपक्षे उत्कृष्येरन् । लिङ्गाभिधानार्थतायाश्च उत्कर्षणादत्वम् । तस्मादपि आरादुपक्रिया ।

अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत स्वाहाकारवत् । २३ ॥

भाष्यम्—अपि वेति पक्षव्यावृत्तिः । नारादुपकारकं कर्म । तत्संस्कारः प्रतीयेत देवतासंस्कार इति । कुतः ? शेषभूतत्वात् देवतायाः प्रयोजनवत्त्वम् । तस्माद्यथा स्वाहाकारवर्जितं निष्प्रयोजनं इति देवतासंस्कारः प्रतीयते एवमिहापि ।

अङ्गानामर्थसंयोगात् । २४ ॥

भाष्यम्—अर्थेन प्रयोजकेन संयोग इह गम्यते वाक्येन । तेन नारादुपकारकम्, आरादुपकारकेभ्यः सामर्थ्यिकान्यङ्गानि बलीयांसि भवन्ति इति । यदुक्तं गुणभूतदेवताकेन तद्धितशब्देन निर्देश इति, प्रधानभूतदेवताकेनापि एवंजातीयकेन शब्देन सम्बन्धे विधीयमाने निर्देशो भवति । अपि च दृष्टकार्यत्वमदृष्टात् बलीयः । तस्मात् संस्कारकर्मेति । ( यद्यपि इदं पृथक्सूत्रत्वेन क्वापि नोपलभ्यते, तथापि भाष्यस्वारस्यात् पृथगेवेति सिध्यति इति अस्माभिः पृथक् कृतमिति ज्ञेयम् । के. )

व्यृद्धवचनं च विप्रतिपत्तौ तदर्थत्वात् । २५ ॥

भाष्यम्—इतश्च संस्कारकर्मेति । सौत्रामण्यां पशुपुरोडाशदेवताविप्रतिपत्तौ व्यृद्धवचनं देवतासंस्कारे पक्षे यथावत्कल्पते । 'यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धम्, यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशवः' इति ।

गुणेऽपीति चेत् । २६ ॥

भाष्यम्—एवं चेत् पश्यसि संस्कारपक्षे व्यृद्धवचनं अवकल्पते इति । तन्न । संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते । नहि तत्र किञ्चित् व्यृद्धम् । विप्रतिपन्नदेवताकैरेव पुरोडाशैः तत् कर्म समृद्धतरं भवति । एवं ह्याह— 'यदन्यदेवत्याः पुरोडाशा भवन्ति अन्यदेवत्याः पशवः इति तदस्याः समृद्धं भवति' इति । यथोभयोः पश्वोर्यागः, न तत्रैकदेशो भवति । यथैव

हि संस्कारपक्षे व्यूढवचनमर्थवादः एवमिन्द्राग्निपक्षेऽपि पक्षे अर्थवादो भविष्यति ।

**नासंहानात् कपालवत् । २७ ॥**

भाष्यम्— नैतदेवम् । मदीये पक्षे न किञ्चिदपि हीनम् । यथैव एकेन कपालेन तुषेषु उप्यमानेषु अन्येषां कपालानां न किञ्चिद्धीयते, एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किञ्चित् पशुदेवताया हीयते । तत्र अन्यदेव व्यूढवचनं भवति । मदीये तु पक्षे देवतासंस्कारप्रधानमङ्गभूतं हीयते । अन्यदेवतुच्यते यत् व्यूढमपि समूढं भवतीति । अहीने तु व्यूढशब्दे उच्चारिते न शब्दार्थो गृहीत इति ।

**ग्रहाणां च संप्रतिपत्तौ तद्वचनं तदर्थत्वात् । २८ ॥**

भाष्यम्— इतश्च संस्कारकर्मेति । सौत्रामण्यां च प्रतिपन्नदेवतानेषु ग्रहेषु तद्वचनं भवति पुरोडाशव्यूहनम् । ' नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः ' इति । न तानत्र निषन्ते । विप्रतिपन्नदेवतानेषु संस्कारप्रधानत्वादेष्य एवमुच्यते । ग्रहा एषां पुरोडाशाः । ' ग्रहपुरोडाशा ह्येते ' इति । किं तेषां पुरोडाशैः सामान्यम् ? यदेते देवतासंस्कारार्थाः । यदि पुरोडाशा अपि देवतासंस्कारार्थाः, एवमेतदवकल्पते । तस्मात् संस्कारपक्ष एव श्रेयान् ।

**ग्रहाभावे च तद्वचनम् । २९ ॥**

भाष्यम्— एवं श्रूयते ' नैतस्य पशोर्ग्रहं गृह्णन्ति पुरोडाशवानेव पशुः ' इति पशुपुरोडाशनव्याहृत्य ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोः एकार्थतां दर्शयति । तत्र ग्रहस्य देवतासंस्कारार्थता विज्ञाता । यदि पुरोडाशोऽपि देवतासंस्कारार्थः, एवमेतदवकल्पते ।

**देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति । ३० ॥**

भाष्यम्— इतश्च पश्यामः संस्कारकर्मेति । एवं समाम्नायते— ' अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते, नाग्ना वा अग्नयः, आग्नेयाः पुरोडाशा भवन्ति, आग्नेया हि पशवः ' इति । पशुदेवताहेतुकान् पुरोडाशान् ब्रुवन् देवतासंस्कारार्थतां पुरोडाशानां दर्शयति ।

**अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारः स्यात् । ३१ ॥**

भाष्यम्— अथ यदुक्तं गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यादिति । उच्यते । अविरुद्धा प्रधानभूतयोरपि अग्नीषोमयोर्धर्माणामुपपत्तिः । कुतः ? अर्थापत्तेः । प्रधानभूतावपि प्रकृतं कार्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूतौ इति धर्मैर्योक्ष्येते शृतवत् । यथा ' शृते चरुम् ' ' दधिचरुम् ' इति प्रधानार्थे दधिशृते प्रणीताकार्यं कुरुत इति धर्मैर्युज्येते । न च दोषो भवति ।

**स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद् विप्रतिपत्तौ तादर्थ्याद् विकारत्वम् । ३२ ॥**

भाष्यम्— अथ यदुक्तं ऐन्द्रसावित्रवारुणानां पुरोडाशानां सौत्रामणीप्रकरणात् उत्कर्षः प्राप्नोति । तत्रेदमुच्यते । स द्व्यर्थो यागो देवतासंस्कारार्थः छिद्रापिधानार्थश्च । उभयोरर्थयोः श्रुतिभूतत्वात् । अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति । तत्प्रकरणगत एवाय विकारो भविष्यतीति ।

**तस्याप्युक्तमर्थयादत्वम् । ३३ ॥**

भाष्यम्— इति यदुक्तम्, तत्रेदमुच्यते ।

**विप्रतिपत्तौ वासामान्याद्विकारः स्यात् । ३४ ॥**

भाष्यम्— एवं तर्हि अनेन प्रकारेण प्रकरणादुत्कर्षः । देवतासंस्कारस्थानात् प्रकरणादुत्कर्षेण न शक्यते बाधितुम् । तत्र सौत्रामण्यां संप्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः । तत्र इन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः । कथम् ? एकदेशा हि देवाभिधे वर्णान्तरसहिता उच्चारिता इति गम्यते । शक्नुवन्ति हि एकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थं गमयितुम् । यथा गान्धर्वदत्तः । यथा च सरस्वतीदेवताके निगदे ' सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिनः । ' ( ऋग्. ६।६१।३ ) इति बृसयशब्दो बृहच्छन्दार्थं गमयति । किमर्थं पुनरेवं कल्प्यते ? यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानानि अनर्थकानि मन्त्रेषु । तस्मात् पशुदेवतानां अभिधायिनः पुरोडाशदेवताशब्दा इति ।

अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३५ ॥

भाष्यम्— संस्कारपक्षे एव वाशब्दो युक्तिं व्यावर्तयति, न पक्षम्। न वा आख्याविकारः। संस्कारपक्षे अन्यथाऽनुपपद्यमाने आख्याविकारा भवन्ति। अनाख्याविकारेष्वपि संस्कारपक्षः अवकल्पते एव। कथम्? अभ्यास एव पुरोडाशयागस्य भविष्यति। तत्र हि चोदकेन पशुदेवता न प्राप्नोति पुरोडाशश्च। पशुदेवताया अन्यत् द्रव्यं विधीयते ग्रहः। पुरोडाशस्य अन्या देवता। यागस्तु अविकृत एव तिष्ठति। स पशुदेवतासंबद्धश्चैव कर्तव्यो ग्रहसंबद्धश्च। तदुभयमपि अनभ्यस्ते यागे न संभवति इति अर्थादभ्यस्यते यागः। तस्य एकदेशः अन्यदेवत्यः प्रयाजवत्। तद्यथा पशौ पञ्च प्रयाजाः चोदकेन प्राप्तानामेकादशसंख्या विधीयते। सा च अन्तरेणाभ्यासं नावकल्पते इति अभ्यस्यन्ते प्रयाजाः। तेषामभ्यस्यमानानां एकदेशे अन्या देवता। दुरः उपाधानकाले इत्येवमादयः। एवमिहापि अभ्यासः पुरोडाशयागस्य। तस्माद्युक्तं संस्कारपक्षेऽपीति।

टुप्— अस्यां (सौत्रामण्याम्) चोदकेन पशुदेवता (पशुपुरोडाशपक्षे) प्राप्नोति, पशुपुरोडाशश्च। तत्र पशुदेवताया द्रव्यान्तरम् (ग्रहः) विधीयते, पशुपुरोडाशस्य च देवताऽन्तरम् (इन्द्रादि विधीयते)। यागस्तु अविकृत एव (अवतिष्ठते) यथाऽभ्युदितेष्ट्याम्। सः (यागः) अभ्यस्यते यथा सोमयागः।

इमे सूत्रभाष्ये अयुक्ते। अन्या सौत्रामण्या (प्रधानभूता.) पशुयागा आम्नायन्ते, देवतासंस्कारद्वारेण च (तेषु चोदकेन) पशुपुरोडाशाः प्राप्नुवन्ति। तत्र वचनिकोऽयं देवताविधिः। तस्मादप्राकृतकार्याः (पशु-) पुरोडाशयागाः वचनसामर्थ्यात् (भवन्ति)। यो ग्रहो देवतासंबद्धः, स पशुपुरोडाशयागेन न संबध्यते। कथम्? अविपरिवर्तमानत्वात्। कथमविपरिवृत्तिः? अविधानात्। कथमविधानम्? (उत्तरम्-) यत्र (विकृतौ) उपकारा अतिदिश्यन्ते (न पदार्थाः,) तत्र (तु तेषाम्) प्रकरणम्, तत्र विपरिवृत्तिः। नच प्रकृतौ (एव)। अभ्युपेत्य ब्रूमः। अस्तु (नाम पुरोडाशयागस्य इह-) प्रकरणे विपरिवृत्तिश्च, तथापि (ग्रहदेवतासंबन्धेन) न संबध्यते (प्रमाणाभावात्) नैतत् सोमयागेन तुल्यम्। तत्र ('सोमेन यजेत' इति) सोमविशिष्टो यागो विधीयते (ऐन्द्रवायवादीनि च) ग्रहणानि सोमयागद्रव्यस्य संस्कारकाणि। तानि (च सर्वाणि) ग्रहणानि प्रकरणेन गृह्यन्ते। अर्थात् तत्र यागाभ्यासः। इह (तु पशु-) पुरोडाशस्य ग्रहदेवताया वा न कश्चित् संस्कारः (क्रियते)। तस्मात् यागान्तरम् (इदम्)। ननु अभ्युदितेष्टिवत् भविष्यति। नैतत् (अभ्युदितेष्ट्या) तुल्यम्। तत्र निमित्ते (चन्द्राभ्युदये सति देवता-) विभागो विधीयते, यागस्तु विहित एव। न तु इह तथा (विभागवचनम्), येन अभ्युदितेष्ट्या तुल्यं स्यात्। ननु पशवः पुरोडाशयागाः (काम्या इत्यर्थः), आनुमानिकस्तु (कल्प्यस्तु) ग्रहदेवतासंबन्धेन (यागः)। तस्मात् (कल्प्यमानेन) यागान्तरम् (कल्प्यम्)। नैतदेवम्। यदि तस्मिन्नेव यागे केन चित् प्रकारेण निवेशः स्यात्, तथा यागान्तरं न कल्प्येत (न तु संभवति निवेशः) यदि च प्रत्यक्षे यागे सति आनुमानिको न कल्प्येत (तत.) वीधाणीयादीनि अधर्मकाणि भवेयुः। यदि च (सौत्रामण्याम्) एको यागः, तथा (सति) एक एव विभ्यन्तः प्राप्नोति। (चोदयति-) द्वे यान द्रव्ये (अस्यार्थः— यागभेदेऽपि समानतन्त्रत्वात् प्रयाजादयः सकृदेव कर्तव्याः, द्रव्यसंस्काराणामेव तु आवृत्तिः। ते चैकस्मिन्नपि यागे द्रव्यभेदात् आवर्तन्ते एव इति कोऽत्र अनिष्टापत्तिः इति)। उच्यते। तत्र एकस्य (एव द्रव्यस्य) संस्कारः प्राप्नोति, द्वितीयस्य (तु द्रव्यस्य) चोदक एव न (प्राप्नोति। किञ्च-) एकस्य (एव) च प्रदानं भवति, द्वितीयं तु प्रोक्षणादिवत् अदृष्टार्थं (प्राप्नोति) देवतयोस्तु यदि (एकत्र) निवेशः (स्यात्) विकल्पेन स्यात्। (यत्तु प्रयाजवत् स एव यागोऽभ्यस्त' देवताऽन्तरेण युज्यते इति, तदपि न तुल्यमित्याह-) प्रयाजानुवादेन च संख्या विधीयते, (अतः) तत्र यागान्तराशङ्कैव नास्ति। (इह तु यागान्तरमिति वैषम्यम्)। [आनन्दाश्रमीयः टुप्-टीकापाठस्तु तन्त्रत्वेन न सङ्गतः इति न स्वीकृतः]।

शा— अग्नीषोमीये पशौ पशुपुरोडाशः किं पशोर्यागादुपकारकः, उत पशुदेवतासंस्कार इति संदेहे आरादुपकारक इति प्राप्तम् । नैवम् ' दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना । पशुधर्मैश्च संदंशात् तदङ्गत्वं सुनिश्चितम् ॥ '

सोम— पूर्ववदिहापि देवताऽन्तरत्वात् अपकर्षस्य इत्युत्थितेः संगतिः ।

वि— ' उपकारी समृतिर्वा पुरोडाशः पशुदितः ( पशौ उदित इत्यर्थः ) । , तद्दिनोक्त्या द्वयोर्देवभेदादुपकृतिर्मता ॥ , सदंशाच्छिन्नेऽङ्गत्वे दृष्टोऽर्थः स्मृतिसंस्कृतिः । देवान्तरं चेद् विकृतावग्नीषोमनिवर्तनम् ॥ '

भाट्ट— देवे ' अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनु निर्वपति ' इति श्रुतः पशुपुरोडाशयागोऽपि नोद्देश्यत्वेन पशुदेवतासंस्कारकः, उभयस्य तद्दिनान्तर्निर्देशाविशेषेण उभयोरपि आरादुपकारकत्वावगमात् । न च पशुयागस्य ज्योतिष्टोमाङ्गत्वेन फलवत्त्वात् अस्यैव तदीयदेवतासंस्कारकत्वमिति वाच्यम् । सोमप्रकरणाविशेषेण तस्यापि विनियमनाविरहात्, पशुपुरोडाशसमाम्नायाः परस्परकत्वेन तदुत्तरकालकत्वेन वा उपपत्तेः । न च यथाऽम्नायसमाम्नायस्य तत्राप्यभिप्रेतम् । अतः पूर्ववत् आरादुपकारक एवायम् । एवं च सौत्रामण्यां आश्विनसारस्वतमुख्यादेवत्येषु पशुषु ' ऐन्द्रवाजसनिनः पुरोडाशा भवन्ति ' इत्यादिना अपूर्वा विधीयमाना नोत्कृष्टा भवन्ति । इतरथा यत्र तद्देवत्याः पशुयागाः तत्रोत्कर्षापत्तिः । इति प्राप्ते, वाचनिकपशुयागधर्मसंदंशपठितत्वात् अस्य तदङ्गत्वावगतेः तदीयदेवतासंस्कारकत्वमेव । अत एव पशुपुरोडाशसमाम्नायस्याऽपि परस्परत्वेनैव उपपत्तिः, इति न तस्य यथाऽम्नायसमाम्नातत्वापत्तिरपि आशङ्क्या । पशुपुरोडाशस्यापि स्ववाक्ये श्रुतत्वात् न यथाऽम्नायसमाम्नाते वैयर्थ्यापत्तिशङ्काऽपि । अतश्च ' वपया प्रचर्य ' इत्यत्र कालार्थ एव संयोगः क्रमार्थो वा इत्यन्यदेतत् ।

यत्तु सौत्रामण्यां अन्यदेवताकानां उत्कर्षापत्तिरिति, तन्न । इन्द्रादिदेवत्यपशुषु न्यायादेव ( ' यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः ' इति न्यायात् ) तत्तद्देवत्यपुरोडाशसिद्धेः विधिवैयर्थ्यात् । अतश्च तद्वाक्ये न पशुपुरोडाशयागोद्देशेन देवताऽन्तरविधिः, तथात्वे पुरोडाशपदे तद्द्वयकयागलक्षणाऽऽपत्तेः । किन्तु पुरोडाशोद्देशेनैव अभ्युदितेष्टिवत् । तत्र च यागापेक्षाया योगवशेन पशुपुरोडाशयागस्यैव अतिदेशप्राप्तस्य संबन्धः, अन्यस्य पुरोडाशद्वयकयागाभावात् । अतस्तस्य कार्यत्वाभावेन प्राप्तस्यापि वाचनिकदेवताऽन्तरसंबन्धात् प्राकृतकार्याभावे तस्य अप्राकृतकार्यान्तरकल्पनया तत्रैव निवेशात् नोत्कर्षः ।

यानि तु सौत्रामण्यांप्रकरणे एव तत्तत्पशुदेवत्यानि ' आश्विनं धूम्रं लभेत ' इत्यादिना सुराग्रहसंबन्धीनि ग्रहणानि विहितानि, तेषु ऐन्द्रवायवादिग्रहणेष्विव यागापेक्षायां अतिदेशप्राप्ते पशुपुरोडाशयागे एव देवताविशिष्टग्रहणसंस्कृतद्रव्यविनियोगविधिः नान्यत्र, आश्विनादिदेवत्यत्वस्य अन्यत्र असंभवात् । प्रधानभूतपशुयागेषु च उत्पत्तिशिष्टपशुत्वविरोधेन द्रव्यान्तरनिवेशानुपपत्तेः । अतो विभिन्नदेवतासंबन्धद्वयात् उपयुक्तवाक्यविध्यात् प्रयाजेषु ऐन्द्रत्वन्यायेन पशुपुरोडाशयागस्य अभ्यासः सम्पद्यते । तत्र च आश्विनादिदेवत्यस्य प्राकृतमेव कार्यम्, ऐन्द्रादिदेवत्यस्य तु ( अवध्यादिदेवत्यस्य, इन्द्रादिदेवत्यस्य तु इति पाठस्तु युक्तः ) अप्राकृत इति सूत्रभाष्यकारयोरभिप्रायः । वार्तिककारस्य तु न तावत् पुरोडाशद्वयस्य पशुपुरोडाशे विनियोगः संभवी, तस्य एकद्रव्यभावे देवताऽन्वयपरत्वेन आश्विनादिदेवत्यत्वस्य तत्र प्रकृतौ विकृतौ वा अप्रसिद्धेः । वक्ष्यमाणरीत्या तत्र पुरोडाशद्वयकत्वस्यापि औपदेशिकत्वेन पुनः आदिष्टस्य निवेशानुपपत्तेश्च । नापि अतिदेशप्राप्तपशुयागे निवेशः, तत्र अङ्गभूतकल्पितदेवताऽविरोधेन ग्रहणाङ्गभूतदेवतायाः प्रसङ्गेन उपकारकत्वानुपपत्तेः । अतो गुणात्कर्मान्तरमेव प्राकृतपशुपुरोडाशकार्यापन्न दर्शपूर्णमासप्रकृतिकं विधीयते । न चैवमावाहनमन्त्रेण देवतास्मरणेऽपि स्वाहाकारादिमन्त्रेण दार्ढ्याय पुनः स्मरणवत् पशुपुरोडाशस्यापि पुनःकरणापत्तिः, प्रकृतौ आम्नानावधूर्तनेन तथा कल्पनेऽपि विकृतौ आधारत्वेन प्राकृतमन्त्रवाधस्यैव इहापि पशुपुरोडाशयागेऽपत्तेः । ननु एवं पशुपुरोडाशस्य सौत्र

मण्यामप्राप्तेः कथं तत्र ऐन्द्रादिदेवताऽन्तरविधिः, कथं चित् प्राप्तावपि ना उपकारप्रत्युभावेनैव पदार्थप्राप्तेः। प्रकृते च देवतान्तरविधानेन प्राकृतोपकारस्य बस्तुत. अनतिदेशात् तत्प्रयुक्तत्वेन पशुपुरोडाशयागस्य अतिदेशासंभवात् कथं तत्र देवतान्तरविधिः इति चेत्, अत एव ऐन्द्रादिवाक्ये अन्यदेवताविशिष्टाप्राकृतपशुपुरोडाशयागस्यैव ग्रहमेधीये ' आज्यभागौ यजति ' इतिवत् अप्राकृतकार्यार्थतया विधेयत्वा(न)ङ्गीकारात्। न च तद्वदिह पशुपुरोडाशयागान्येव प्रत्यभिज्ञाऽभावः ' यद्वै सौत्रामण्या व्यृद्धं तदेव तमृद्धम्, यदन्यदेवताः पशुपुरोडाशाः अन्यदेवत्याः पशवः ' इत्यर्थवादस्यैव प्रत्यभिज्ञापकत्वात्। अत अप्राकृतकार्ये एव पशुपुरोडाशाः, सुत्याऽऽदियागास्तु कर्मान्तरमेव प्राकृतकार्यापन्नम्। अत एव ' नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः ' इति लिङ्गमपि पुरोडाशाः तदन्यदेवतास्मरणानि न विद्यन्ते, अपि तु ग्रहजन्यान्येव तानि इति व्याख्येयम्।

मण्डन-- ' पशोः पुरोडाश उतस्वरोति। '

शंकर-- ' नैवं पशुपुरोडाशः। ' ११. (सन्निपाती)।

* ज्योतिष्टोमे ' तीर्थे स्नाति ' इत्यत्र तीर्थस्नानस्य प्रकरणादेव आरादुपकारकत्वं प्राप्तं पशुपुरोडाशन्यायेन श्यवभृथकरणार्थत्वलिङ्गेन बाधित्वा भवभृथधर्मत्वम्। भाट्ट ३।४।९.

* पशुपुरोडाशयाग। इद हविष्टोमयागार्थ द्रव्यसंस्कारक सन्निपत्योपकारक अत्यर्थ प्रवृत्तिरूप वैदिक कर्म। बाल. पृ. ८३-८४. * पशुपुरोडाशयाग. पशुयागीयदेवतासंस्कारकः। १०।१।३।१९-३५. मीको. पृ. २५१८ ' पशुपुरोडाशन्याय. ' इत्यत्र द्रष्टव्यम्।

* पशुपुरोडाशयागादिः प्रसङ्गी पश्वङ्गस्य प्रयाजादेः स्वोपकारिणोऽपि अप्रयोजकः। बाल. पृ. १०८.

* पशुपुरोडाशयागादिक्रियाया एकस्याः सन्निपत्योपकारित्वसंभवे अनपेक्षितानेकादृष्टकल्पनाऽऽपादकस्य आरादुपकारित्वस्य अयुक्तत्वैव। सु ३१७ पृ. ६७.

* पशुपुरोडाशस्थानं वपाप्रचारात् परत.। अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं प्रधानदेशत्वात्तेषाम्। भा. १२।३।२।५.

* पशुप्रकृतिलिङ्गानि आलम्भतित्वं प्राणिद्रव्यकत्वं सुत्याकालत्व पशुगणत्वमित्यादीनि। बाल. पृ. ११९.

* पशुप्रभवगतिभिद्--द्रव्यकत्वं इष्टिप्रकृतिलिङ्गम्। बाल. पृ. ११९.

* पशुप्रयुक्तं गोदोहन स्वतन्त्रपशुकामनायामेव कर्तव्यम्। भाट्ट. ४।१।२ वर्णकं ३.

* पशुप्रयोजकत्वं शकृल्लोहितयोर्नास्ति अग्नीषोमीये पशौ। ४।१।१२।२७.

* पशुबन्धः ज्योतिष्टोमोपकारकः। वा. १।३।१।४. * ' पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः ' इति कर्तॄणां नियमविधिः। अर्थापत्त्या तु षाड्विकी प्राप्तिः ( अध्वर्युः प्रतिप्रस्थाता ब्रह्मा होता आग्नीध्रः मैत्रावरुणश्च )। वि. ३।२।९. * पशुबन्धेषु सर्वेषु सर्वेष्टिषु च नारिष्ठहोमाः, तेषु च स्वाहाकार.। भा. ८।४।५।१८.

* पशुबन्धयाजी सर्वान् लोकानभिजयति। भा. १।२।१।८.

* पशुमन्ति त्रीणि सवनानि कर्तव्यानि। तत्रेदं वचनम् ' पशुना प्रात.सवने चरन्ति पुरोडाशेन माध्यंदिने सवने अङ्गैस्तृतीयसवने ' इति। टुप्. १२।२।१२।३२. * पशुमत्सु चातुर्मास्येषु परिधिरुभयधर्मा। तेन यूपपरिधिधर्मविरोधे परिधिधर्म एव कर्तव्यः, न यूपधर्माः। सत्वकृत्वम् उपशयत्व च परिधिधर्माः। यूपधर्मश्च तक्षणम्, उच्छ्रयणम्, निखननमिति। १२।१।११।२७-२९. * पशुमत्सु चातुर्मास्येषु परिधि, परिधिधर्मा यूपधर्मा चेति उभयधर्मा स्यात्। तत्र अविरुद्धाः यूपधर्माः पवमानीभिः अद्भिः प्रोक्षणम्, अञ्जनम्, परिव्याणमिति। परिधिधर्माः इध्मसंनहनम्, समार्जनम्, स्रुवा अञ्जनम्, अभ्याधानमिति। १२।२।१०।२६. * पशुमत्सु चातुर्मास्येषु ' परिधौ पशुं नियुञ्जीत ' इति यूपधर्म. पशुनियोजनं परिधौ कर्तव्यम्। ९।२।१२। परिधिश्चात्र मध्यमः स्थूल.। परिधेश्च तक्षणोच्छ्रयौ न कर्तव्यौ। अञ्जनादयस्तु कर्तव्या एव। प्रैषे तु ' यूपायाज्यमानाय ' इत्येव ब्रूयात्, न तु ' परिधयेऽज्यमानाय ' इति। वि. ९।२।१३.

अतश्च पशुक कर्म पुरोडाशेषु प्रसज्यते, न विकल्पः इति सिद्धान्तः । के.

* पशु-(अग्नीषोमीय-सवनीय)साधारण्यं रशना-धर्माणाम् । ३।६।१०।३१.

* पशुसोमयोः प्रदेयप्रकृतिस्त्वेनैव साधनता । सु. पृ. ७९७.

₰ पशुसोमाधिकरणम् । 'अग्नीषोमीयं पशुमालभते', 'सोमेन यजेत' इति आलम्भन यागश्च अपूर्वं कर्म विधीयते ॥

द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन । २।२।६। १७ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते— 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमामनन्ति 'हृदयस्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इति । तथा 'सोमेन यजेत' इति, तथा 'ऐन्द्रवायवं गृह्णाति', 'मैत्रावरुणं गृह्णाति', 'आश्विनं गृह्णाति' इत्येवमादि । तत्र संशयः, किमयजतिगृह्णातिचोदितानां कर्मणामेव आलम्भतियजती समुदायस्य अनुवदितारौ, अथ अपूर्वयोः कर्मणोर्विधातारौ इति । किं तावत् प्राप्तम्? समुदायस्येति । कुतः? ये इमे आलम्भतियजतिभ्यां कर्मणी विधीयेयातामिति चिन्त्येते, पूर्वमेव ते अवद्यतिगृह्णातिभ्यामवगमिते । न च अवगमितोऽर्थो विधीयते । हृदयादींस्तु पशुशब्देन अनुवदति, सोमशब्देन च रसम् । तस्मात् 'सोमेन यजेत' इत्यनुवादो यजतिः । यजेत स्वर्गकामो यजन्ते यजन्ते इति फलगुणसम्बन्धार्थः । 'पशुमालभेत' इति च आलम्भतिरग्नीषोमसम्बन्धार्थः । अपि च 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयो दृश्यते । तथा 'आश्विनो दशमो गृह्यते तृतीयो हूयते' इति च क्रमः । यदि च अपूर्वौ यागौ विधीयेते, ऐन्द्रवायवादिभिर्देवता विधीयेरन्, ता एकार्थाः सत्यो विकल्पेरन्, यथा 'खादिरे बध्नाति' 'पालाशे बध्नाति' 'रौहितके बध्नाति' इति । तत्र क्रमसमुच्चयदर्शने नोपपद्येयाताम् । अथ पुनरस्मिन् समुदायवचने यजतौ सम्यगेतदवकल्पते भवति । तस्मात् समुदायानुवादो । एवं प्राप्ते, ब्रूमः । अपूर्वयोः कर्मणोः विधानचोदने पशुसोमयोः । कुतः? सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धो न रसे । आकृतिवचनो हि सोमशब्दो न व्यक्तिवचनः । तथा शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्द आकृतिवचनमुपचरन्ति । न च एवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते, येषामिमौ समुदायस्यानुवदितारौ भवेयाताम् । ननु पशुविकारो हृदयादिः पशुशब्देन अग्नीषोमसम्बन्धार्थमनूद्यते । नैतदेवम् । पशुरग्नीषोमीयो भवति इत्येतावदुच्यते, नायं प्रकृतो हृदयादिः पशुरिति । तत्र यदि लौकिकस्य पशोर्ग्रहणम्, ततो मुख्यः पशुशब्दः । यदि हृदयादेः, ततो जघन्यो विकारसम्बन्धेन । तथा सोमशब्दोऽपि विकारसम्बन्धेन अनुवादः स्यात् । तस्मात् अपूर्वे कर्मणी विधीयेयाता नानुवादौ । अथ ऐन्द्रवायवादिषु प्रकृतेषु यागेषु कथं विधीयेतेति । उच्यते । न सा शक्या वाक्येन ऐन्द्रवायवी ज्ञातुम् । श्रुत्या हि सा ऐन्द्रवायवः । तस्मात् द्रव्यसंयोगवचनः प्रकृतेषु यागेष्वपि सत्सु विधातुं अनुवदितुं वा न शक्नुवन् अनर्थकः स्यात् । तस्मादपूर्वकर्मणी विधीयेयाताम्, न प्रकृतानामनुवादौ इति ।

वा— पशोः सम्प्रतिपादनतरत्वात् पूर्वाभिधानम् । द्वौ चात्र शब्दौ समुदायानुवादत्वेन आशङ्क्येते पशुशब्दः तदग्नीषोमसम्बन्धानुमितश्च यजिः । ईदृशं हि एतद्वाक्यं अनानुमितैकदेशनिष्पन्नम्, यत् 'अग्नीषोमीयेण पशुना यजेत' इति । तत्र किं हृदयादीनां पशुशब्द-अनुवादः अवद्यत्यनुमितानां यागानां च यजिः, उत अपूर्वः पशुः यागश्च विधीयते, तत्र इतरे गुणविधय इति सन्दिह्यते । तथा ऐन्द्रवायवादिवाक्यैः द्रव्यदेवतासम्बन्धानुमिता यागाः तद्द्रव्यश्च सोमरसः किं यजतिसोमशब्दाभ्यामनूद्येते किंवा उत्पत्त्युक्तं कर्म विधीयते इति । 'किमयजतिगृह्णातिभ्यां चोदितानाम्' इति (भाष्यम्) । अनयोः यागपर्यायत्वाभावात् तत्सम्बन्धानुमितानां तद्वाक्यातप्रत्ययविहितानां वा इत्येतत्प्रदर्शनार्थं तद्भाष्यम् । आलम्भतिरपि च तदनुमितयागोपलक्षणार्थः । अथवा अवद्यतौ नैव यागानुवादः इत्युपन्यस्यते । कथं तर्हि? तदाक्षिप्तस्य सम्पर्शनस्य आलम्भतिरनुवादः तद्-

द्वारेणैव च प्रत्यवदानं देवतासंयोगात्, तावता च यागानामनुमानम्, उत पशुसंयुक्तः एको यागोऽनुमीयते इति। तथा सोमेऽपि अयमेव यागो यद्देवतोद्देशेन द्रव्यग्रहणमिति। तथा सति यथाश्रुतेनैव भाष्येण संदेहोपन्यासः।

तत्र पौर्णमासीवदेव समुदायानुवादत्वम्। तथाहि

**'यथाऽऽग्नेयादिवाक्यानां न प्राग् यागानुमानतः। स्वार्थपर्यवसायित्वं तथा सोमेऽपि गम्यताम्॥'**

नहि ऐन्द्राग्नमेव इत्यादिद्रव्यदेवतासंयोगः अननुमिते यागे निराकाङ्क्षी न भवति। न च अपरिपूर्णं वाक्यं वाक्यान्तरमाकाङ्क्षति, येन अनुमानवेलायाम् 'सोमेन यजेत' इत्ययमनुप्रविशेत्। एतद्विहितस्य वा देवताविरहात् अरूपस्य तदुक्तैः देवता विधीयते। यदा तु तैः परिपूर्णो यागः, तदा नैव यागस्य यागान्तररूपं भवति इति बलात् प्रकृतानुवादत्वमापद्यते। यश्चात्र पक्षे विशिष्टविध्याश्रयणदोषः स मत्पक्षेऽपि अविशिष्टः, सोमद्रव्यकयागविधानात्। अपि च, तत्र इह च, ऐन्द्रवायवादिवाक्येषु च। मत्पक्षे तु तेष्वेव केवलेषु इति विशेषः। किञ्च, **'यादृशं द्रव्यसंबद्धं भवान् कर्म विधित्सति। तादृशस्याविधेयत्वमनन्तरमुदाहृतम्॥'** एकस्यैव ईदृशे गुणे श्रूयमाणे विधिशक्तिः संक्रामति इति अग्निहोत्रे (२।२।५) अभिहितम्। अतो न कर्मानुवादबुद्धिरपैति इत्यनुवादत्व पक्षे। तत्र सोमशब्देन द्रव्यमेव गृह्णानेन सामान्याश्रितं नियम्यते। अथवा 'सोमं क्रीणाति' 'सोममभिषुणोति' 'सोमं पावयति' इत्यादिभिः प्राकरणिकैर्गुणवाक्यैः सोमत्वे कल्पिते प्रकृतिचोदना प्रवृत्ता इति सोमो न विधीयते। ततश्च स्वाभाविककरणत्वयुक्तयागाभिधानाधिकरणात् 'तत्प्रख्यं चान्यशास्त्रम्' (१।४।३।४) इति नामधेयं भवति। ननु ज्योतिष्टोमः इत्यपरं नामधेयमस्त्येव। यदि इदमपि भवेत् किं नो बाध्यते? तथा च याज्ञिकानां व्यवहारेषु नामद्वयमुपलभामहे। समस्तवाक्यानुवादस्य तु तदेव प्रयोजनम्, यत् प्रत्येकवाक्यगतैकत्वप्रत्ययजननं नाम। तस्मादनुवाद इति। भवेदत्र द्रव्यदेवतासंयोगादेवम्, पशौ तु 'पशुमालभेत' इत्येतस्योद्देशेन देवतासहितहृदयादिद्रव्यमात्रसंयोगिना अवत्तिना कथं यागविधानम्, कथं वा हृदयाद्यनुवादः पशुग्रहणेन इति वक्तव्यम्। उच्यते। **'यथैव पशुसामान्ये मन्त्राच्छागः प्रतीयते। तथैव हृदयादीनां समासौ प्रकृतिर्भवेत्॥'** हृदयादिभिः प्रकृतिद्रव्ये अपेक्षिते मन्त्रवर्णाच्छागे लब्धे तदन्तर्गतं पशुत्वं तावदनूद्यते। तत्र तु देवताया विहिताया यागो विधीयतां नाम। अथवा 'सान्नाय्यं वा तत्प्रभवत्वात्' इत्यनेनैव न्यायेन अयमवयविः सारूप्यात् सान्नाय्यावयविप्रकृतिः। न च दर्शपूर्णमासयागद्रव्यसंस्कारार्थं प्रसिद्धः। तत्र यदि हृदयादीनि यागद्रव्याणि, ततः तत्संयोगभाञ्जि भवन्ति, नान्यथा। तेन यथैव पूतीकानामभिषवसंबन्धे श्रूयमाणे तद्वृत्त्या अन्यथाऽनुपपत्त्या यागसंगतिः अश्रूयमाणाऽपि गम्यते, तथा अङ्गेष्वपेक्ष्यमाणे यागमनुमाय तदनुपपत्तेर्यागोऽप्यस्तीति गम्यते, तथा अनुमितानां च प्रतिद्रव्यमवस्थितानां समुदायोऽनूद्यते। साधारणश्चायं तत्रापि आनुमानिकयागाभ्युपगम इति न एतेन असाधारणदौर्बल्यम्। सोमयागेऽपि तुल्यार्थानां इन्द्रवाय्वादीनां विकल्पे सति क्रमसमुच्चयदर्शनं नोपपद्यते। यस्य, **'यथैकस्मिन्धनार्थत्वात्पलाशखदिरादयः। तत्संबन्धे विकल्पन्ते यागेऽस्मिन् देवतास्तथा॥'** मम तु भिन्नवाक्यविषयत्वात् देवतानां यागानां च अदृष्टार्थानां युगपदेकवाक्येन फले विधानात् उपपत्स्यते। पशावपि 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः' इति क्रमदर्शनम्, 'एकादश वै पशोरवदानानि' इति च समुच्चयदर्शनं तदपि नोपपन्नम्, एकयागत्वेऽपि समस्तपशुसाधनत्वेन तदुपपत्तेः। नहि हृदयादिषु असमुच्चीयमानेषु उत्पत्तिवाक्यश्रुतेन समस्तेन पशुना इष्टं स्यात्। यस्मात्तत्र वचनान्तरकल्पनापेक्ष्यते, तस्माद्व्यतिरिक्तेन सर्वेण यष्टव्यं इति न्यायः। सोमे तु नैव समस्तचोदनोत्पत्तौ अस्ति इति उदाह्रियते। तस्मात् समुदायानुवादी। इति प्राप्ते, अभिधीयते। **'प्रवृत्तप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते। तत्र स्यादनुवादत्वं न चात्रैवं प्रतीयते॥'** यदि पौर्णमासीवत् अशेषरूपप्रत्यभिज्ञानं भवेत्, ततोऽनुवादः कल्प्येत। यदि वा दर्शितमात्रस्य अनुवादत्वमिष्यते, ततः परित्यक्तविशेषणोऽनुवाद इत्यवधार्येत। अत्र पुनः प्रकृता हृदयादिद्रव्यका रसद्रव्यकाश्च

यागाः। इमौ च पशुसोमद्रव्यौ। न चैवं सति प्रथमिशब्दमस्ति इत्यनुशब्दत्वासम्भवः। तत्र एतत् स्यात् विशेषेषु प्रकृतिवदुपचारात् हृदयादिष्वेव रसे च पशुसोमशब्दौ वर्त्स्येते इति। तन्न, विना कारणेन लक्षणाऽनाश्रयणात्। विस्पष्टे हि पशुशब्दसामानाधिकरण्ये सति अनन्यथासम्भवे च लाक्षणिकः शब्दो भवति। न चैतदुभयमप्यस्ति। शक्यं हि मुख्यं पशुसोमद्रव्यं यागात् विधातुम्। न च प्रकृतेषु अनिर्दिश्यमानौ एतौ शब्दौ नोपपद्येते। तेन यद्यपि तावत् अवदानगृह्यमाणाभ्यां चोदिता यागाः, तथापि कर्मान्तरत्वप्रसङ्गः। कस्मात् तेष्वेव यागेषु स्वाश्रयप्रकृत्यपेक्षेषु पशुसोमौ न विधीयेते, तत्राह- 'श्रुत्या हि वस ऐन्द्रवायवः' इति। पशुत्वावत् देवतानिर्धिसंबन्धात् अनुत्पत्तिवाक्ये सति अशक्य एव विधातुम्, इति नैव उपलभ्यते। सोमत्वाऽपि वाक्यविशेषा श्रौतत्वविरोधे सति न समध्यते। कथं पुन अनुपात्तद्रव्यविशेषेषु ऐन्द्रवायवादिविधिषु रसस्य श्रौतत्वम्, अधिकारलभ्यो ह्यसौ, ततश्च वाक्यप्राप्तत्वेन लघीयसी स्यात्। उच्यते। 'श्रुत्यैव द्रव्यसम्बन्धो देवतातद्धितैः कृतः। अधिकारेण तस्यैव केवलेष्टा विशेष्यता॥' 'गुणश्चापूर्वसंयोगे' इत्यत्राधिकरणे विस्तरेणाभिधास्यते। यथा तद्धितश्रुत्या वाक्यप्रकरणादिलभ्यस्य विशेषस्यैव अन्य-शब्दवाच्यस्य देवतासम्बन्धे कृते कोऽसौ द्रव्यविशेष इत्यपेक्षायां वाक्यप्रकरणादिभिः उद्धारि केवलम्, न तु तैरेव देवतासम्बन्ध इति।

किञ्च 'उत्पत्तिवाक्यशिष्टश्च रसो, वाक्यान्तराङ्गता। प्रकृतापेक्षिणा तेन दुर्बलेनाऽऽक्रम्यते॥' ततश्च गुणादपि ते भेदं प्राप्नोति। तत्परिहार तु इदम्। कुतः? 'यथैवाष्टाकपालादौ श्रौतेऽपि सति वाक्यतः। व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥' विधीयमानं हि दुर्बलं विरुद्धं बाध्यते नानुगुणम्। अनुगुणश्च सोमो रसस्य प्रकृत्यपेक्षिणः चोदनैव सम्बन्धात्। यथा 'आग्नेयोऽष्टाकपालः' इति श्रुतिविहितेऽपि अष्टाकपाले सति व्रीहियवौ विधीयमानौ न विरुध्येते, पुरोडाशापेक्षितप्रकृतिरूपत्वात्। नहि व्रीहीन् गृह्णन् अष्टाकपालं न करोति। तेन चात्र न कर्मान्तरता। तथाऽत्र न सोमे गृह्यमाणे रसः परित्यक्तः इत्यविरोधात् पूर्ववैर समानत् न गुणो भेदकः स्यात्। अपि च सिद्धान्तेऽपि एतत् तुल्यम्। अनभिधुतलताऽऽदानानभ्युपगमात्। तत्र यथा तत्र रसप्रकृतित्वेन भवति, तथा पूर्वपक्षेऽपि भविष्यति। अपि च विरुद्धतर तत्रापद्यते। कथम्? 'उत्पत्तिवचनात् सिद्धा लता चैवाङ्गसाधनम्। न सा वाक्यान्तरैः पश्चाद् रसीभवितुमर्हति॥' रसस्य प्रकृत्या विना निष्पत्त्यभावात् आकाङ्क्षितः प्रकृतिसम्बन्धो वाक्यान्तरेणापि क्रियमाणो न विरुध्येत। प्रकृतेस्तु अविकृताया एव सामर्थ्यादपेक्षिता विकारापत्तिः उत्पत्तिवाक्यविरोधिनी न युक्ता वाक्यान्तरैः कर्तुम्। तस्मात् व्रीहियवसुद्रासुवितत्वात् अनुवादत्वेन गुणविधित्वं सम्प्रदायानुवादमात्रं निराकार्यम्, पशौ तन्मात्रेणापि सिद्धेः। सोमे तु व्रीहिवाक्यानुरूपत्वामाशङ्क्याधिकां नियन्तुं उत्तरं सूत्रं प्रस्तोतव्यम्।

अथवा भङ्क्त्वैव पूर्वोपपत्तिं उत्तरैव निर्णयः। पूर्वसूत्रेण वा पूर्वपक्षं परिगृह्य उत्तरं तु सूत्रं तुशब्दस्थानपाठाद् उत्तरपक्षे योजयितव्यम्। कथं पुनः द्रव्यसंयोगात् इत्यनेन पूर्वपक्षोऽभिधीयते। तदुच्यते। 'हृदयस्याग्रेऽवद्यति' 'ऐन्द्रवायवं गृह्णाति' इत्येवाः किं दध्यादिवत् गुणार्थाः श्रुतय, ततश्च उत्पत्तिचोदनार्थत्वम्, उत एता एव कर्मचोदना इति। किं प्राप्तम्? नैताः पूर्ववत् गुणार्थाः पुनः श्रुतय, किन्तु उत्पत्तिचोदनाः। कथम्? द्रव्यसंयोगात् हृदयादिद्रव्यसंयोगात् तैरेव वाक्यैः चोदना पशुसोमयोः। किं कारणम्? इतरथा हि प्रकरणेन हृदयादिसंयोगो यागाङ्गत्व प्रतिपद्येत। न चासौ तस्य गुणार्थेन सम्भवति, उत्पत्तिवाक्यशिष्टगुणविरोधात्। अथवा पूर्वोक्तेन न्यायेन अन्यत एव पशुसोमयोः सिद्धत्वात् अस्मिन् प्रकरणे पुनरनर्थको द्रव्यसंयोगः स्वपक्षे भवेत्। मम तु सोमशब्दो नामधेयम्, अग्नीषोमीयवाक्यं च देवताविधानार्थमिति न किञ्चिदनर्थकम्। तस्मात् अप्रकृतिगृह्यतिमत्त्वेव यागोत्पत्तिचोदना स्यात्।

अचोदकाश्च संस्काराः ॥ १८ ॥

भाष्यम्— एवं तावत् प्रकृतेषु सत्स्वपि नानुवादो इत्युक्तम्। अथेदानीं प्रकृता एव यागा न सन्तीत्युच्यते। कुतः ? अचोदकाः संस्काराः। न च ऐन्द्रवायवादिभिर्यागा विधीयन्ते। तेन ग्रहणमुपकल्पनमात्रं दृष्टार्थम्। उपकल्प्यमाने तु देवतासंकीर्तनमदृष्टाय। अतः 'ऐन्द्रवायवं गृह्णाति' इति इन्द्रवाय्वोः संकल्पयति इति एवार्थता भवति। तत्र यागमन्तरेण संकल्पयति इत्येतन्न युज्यते इति यागः कल्प्येत। स एवाम्नातो यागो यस्मिन् सति संकल्पोऽवकल्प्येत। तस्मात् 'ऐन्द्रवायवं गृह्णाति' इत्येवमादिभिर्यागा विधीयेरन्। प्रकृतानां यागानामभावात् न समुदायशब्दो भवति। तथा आलभतिशब्द इति।

वा— नैव पशौ समुदायानुवादो, 'चोदना चाऽप्रकृतत्वात्' ( २।२।४।१० ) इत्येतस्मादेव हेतोः। कथं प्रकृता न संभवन्ति ? यतः अवघातिप्रकृतवन्न यागानां चोदना, किं तर्हि ? संस्कारमात्रविषयः, तन्मात्रपर्यवसानात्। तन्मात्रपर्यवसायिनि वाक्ये निष्प्रमाणकत्वात् न अश्रुतयागकल्पनं वाक्यम्। एवं हि स कल्प्यमानः कल्प्येत, 'देवतोद्देशेन गृहीतं द्रव्यं न यावत् यागेन सम्बध्यते न तावत् तद्देवतं द्रव्यं कृतं भवति' इति। तत्र यदैव अन्यथाऽनुपपत्त्या यागं कल्पयितुमारभन्ते तदैव सन्निहितः प्रयाजो यत्नि अविशेषात् सर्वान् द्रव्यदेवतासंयोगान् उपपादयितुमुपतिष्ठन् यागान्तरकल्पनाप्रमाणं निरुणद्धि। तस्मिंश्चाम्नातं वस्य समुदायानुवादो भविष्यति॥।

यदुक्तं अग्नेयादिवत् नापरिकल्पिते यागे वाक्यान्तरं परैति। तत्र ब्रूमः। 'पुव्यापारनियोगेन वाक्यं सर्वत्र पूर्यते। तदलाभे त्वपूर्णत्वं तल्लाभे वाक्यसङ्गतिः ॥' 'आग्नेयोऽष्टाकपालो भवति' इति न यागाद्यन्य पुंव्यापारः प्रतीयते इति प्राक् तदनुमानात् अपरिपूर्णं वाक्यम्। इह तु 'ऐन्द्रवायवं गृह्णाति' इति ग्रहणभावनायां पुरुषो नियुज्यते। तत्र यागमपि यत्र नुमानात् अस्ति निर्विषयः इति समाप्यते वाक्यम्। [illegible] तु अन्यत्, यत् तत्र परमपि किञ्चिदपेक्ष्यते। सर्वेण हि वाक्यं स्वार्थे पर्यवसिते अर्थान्तरापेक्षा न जहाति, न च तावता तदसमाप्तं भवति। या तु अतो अपेक्षा, सा वाक्यान्तरेण पूरयिष्यते इत्यवश्यमात् न वाक्यान्तरसम्बन्धं न सहते। तेन यद्यनुमानवेलायां प्रतिवाक्यम् 'सोमेन यजेत' इत्यस्योपस्थानं न विरुध्यते। 'आग्नेयोऽष्टाकपालः' इति तु भवते अपुरुषव्यापारात्मकत्वात् प्राक् यागे न किञ्चित् विहितं न किञ्चित् प्रतिषिद्धम्, इति असमाप्ते वाक्ये, वाक्यान्तरे चानपेक्षिते यजिः अनुमीयमानः न वाक्यान्तरगतः सम्बध्यते इति वैषम्यम्। अथ यदुक्तं उत्पत्तिशिष्टयोः पशुसोमयोः न वाक्यान्तरगतः विकारापत्तिर्युक्ता इति, तत्र ब्रूमः। 'द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम्। हृदयादिरसद्वारमज्ञस्य पशुसोमयोः ॥' यत्र श्रौतसिद्धौ पशुसोमौ परित्यज्य अत्यन्तव्यतिरिक्तं किञ्चित् द्रव्यं विधीयते, ततो विरोधः स्यात्। इह तु पशुनैव हृदयादिद्वारेण यागः साध्यते, सोमेन च रसद्वारेण। न च हविर्निर्वर्तनतायामपि कश्चिद्विरोधः। पशुसोमौ हि यागसाधनत्वेन चोद्यमानौ हविर्निर्वर्तकत्वमाकाङ्क्षतः। तच्च रसहृदयादिनिष्पत्तिद्वारेण द्रव्येण कथम्भावं पूर्यते। तेन अनुग्राहकत्वात् न तत्कल्पने विरोधापत्तिः। यत्तु भाष्यकारैः क्रयादिवत्पर्वरेव प्राप्तत्वात् इह द्रव्ययोगोऽनर्थक इति। तत्रापि 'अचोदकाश्च संस्काराः' इत्यत्रोत्तरम्। नहि ते निधयः सोमस्य पशोर्वा चोदकाः। किं तर्हि ? लब्धस्य संस्कारकाः। तेन चोदितस्य द्रव्यस्य यथाकथञ्चित् उपादानेन यागसाधनत्वे प्राप्ते क्रयोपात्तेन अभिषवादिसंस्कृतेन च साधयितव्यमिति विधीयते। न च भवनगस्यात्यन्ताविहितस्य यागप्रापणसामर्थ्यम्, पशुचोदनाविहितस्य तु सदेहावयवमात्रमुपयुज्यते। न चानुवदि एकान्तेन यागमनुमापयति, विनाऽपि तेन खण्डनमात्रतया लोके वेदे चोपपत्तेः। द्रव्यदेवतासंयोगस्तु न कथञ्चित् यागाद्विना सिध्यति इत्यनुमानवैषम्यम्। न च सानाय्यवत्तावत् प्रकृतौ चोदितं, अर्थगृहीतत्वात्, यतस्तद्वत् प्राप्तिरपि स्यात्। न चास्य यागद्रव्यत्वं इतिकर्तव्यता, येन तदतिदिश्येत। न च ईदृशोऽर्थे सामान्यतोदृष्टं प्रक्रमते। पूर्णमासाभिमतपञ्चमसमभव्ययोस्तु वाक्यप्रकरणाभ्यां तात्पर्यनिश्चयः इत्यसमानता। सोमवाक्येऽपि निर्दिष्ट

विधौ प्रत्यक्षोपात्ते सति आनुमानिकसमवायादेः अतुल्यत्वम् । न च ऐन्द्रवायवादिवाक्येऽपि अग्नीषोमीयादिवाक्येष्विव गुणवाक्यत्वेऽपि वाक्यभेदः । कुतः ? 'विधेयानेकभावेऽपि देवताग्रहणात्मना । क्रियाऽन्तरप्रसादेन विशिष्टविधिसंभवः ॥' ग्रहणे हि इन्द्रवाय्वादिविशिष्टग्रहणभावनाविधिः आश्रयितव्यः । अर्थप्राप्ते च ग्रहणे समासोपात्तैन्द्रवायवादिदेवताविधानमात्रमविरुद्धम् । प्रकरणगम्यश्च प्रधानसंबन्धः , इति गुणवाक्यत्वेऽपि अदोषः । तस्मात् एषा सत्त्वसत्त्वात् अन्यतो यागमपेक्षमाणा अविरुद्धोऽन्येन यागविधिः । एवं च सति ज्योतिष्टोमेन इत्येकत्वं मुख्यमेव भवति । न च सोमशब्दः वशेषेण अनर्थकं द्वितीयनामत्वं प्रतिपत्स्यते । न च आग्नाग्नीषोमीयपूर्वपक्षवदनः समन्त्रानवानुवादः अनर्थकः आश्विनो भविष्यति । तेन चोदना पशुसोमयो इति सिद्धम् ।

तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात् ॥ १९ ॥

भाष्यम् — पशौ कृत्वा कथं दधनि पुनः करिष्यति । सोमे इदानीं वर्तते, कथं क्रमसमुच्चयाविति । इन्द्रवाय्वाद्याः देवता नैव श्रूयन्ते, इन्द्रवायुभ्यां यागो निर्वर्तयितव्यः, मित्रावरुणाभ्यां यागो निर्वर्तयितव्य इति । यदि एवमश्रोष्यन्त यागं प्रति देवता व्यकल्पिष्यन्त । केनचित् हि देवतया तदा यागो निर्वर्तते इति विहितमभविष्यत् । अथ पुनरिमा अदृष्टार्थं ग्रहाभिसम्बन्धं प्रति देवता विधीयन्ते, तत्र इन्द्रवायुग्रहणात् अन्यो मित्रावरुणग्रहः , तेन ग्रहान्तरे तद्गतादृष्टात् अदृष्टान्तरमुत्पादयति । एकमेकस्मिन्नपि ग्रहेषु । तस्मात् समुच्चय' । ग्रहणं च नियतपरिमाणेषु ऊर्ध्वपात्रेषु प्रदेशमात्रेषु नियतपरिमाणेषु उदककालेषु संस्कृतस्य दशमुष्टिपरिमितस्य कृत्स्नस्य सोमस्य नावकल्पते । यद्यपि चावकल्पेत, तथापि नियतनिर्दिष्टाना देवताना विकल्पपक्षे नानर्थ प्रयोगवचनो भवति इति अवग्रहणेन व्याप्यम् । कृत्स्नग्रहणे हि तदेव इन्द्रवायुभ्यां सकल्पितं तदेव मित्रावरुणाभ्याम् इति नावकल्पेत । तस्मात् कल्पनभेदात् पृथगवस्थितः सोमः नानादेवतत्वादेव नैकेन शक्यः कर्तुम् । न च असति देवताभागे देवताभ्यः शक्यते संकल्पयितुम् । तस्मात् अपरं यथासंकल्पिता देवता यष्टव्याः । तासु चेज्यमानासु 'ज्योतिष्टोमेन यजेत' इति श्रुतो यागो निर्वृत्त एव भवति, न देवतान्तरमाकाङ्क्षति । कृत्स्नेन च दशमुष्टिना सोमेन यागः कृतः, सोऽसति अभ्यासे नावकल्पते इति अर्थात् गुणो भविष्यति इति अभ्यसितव्यो यागः । नहि भक्ष्यमाणः सर्वाभिर्देवताभिः सोमेन च सोमेन संपन्नो भविष्यति । तस्मिंश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्तावेव भवतः । तस्मात् भेदोद्देशेन युक्त एवेति ।

वा — क्रमसमुच्चययोः पशौ अपरिचोदितत्वात् कृत्वा कथा । पर्याग्निकरणविधानं ( १०।७।१।२ ) इत्यत्र वक्ष्यति । किं समस्तादवदातव्यम्, उत प्रत्यङ्गम्, उतैकस्मात् अथवा हृदयादिभ्यः परिगणितेभ्य इति । सोमे तु परिचोदनापरिहारः अभिधीयते । 'वाक्येन यदि यागस्य श्रूयेरन् देवताः पृथक् । व्यकल्पिष्यन्त, सर्वास्तु युगपद्यागसंगताः ॥ यत्र वाक्येन संबन्धो निरपेक्षेण चोद्यते । तत्र तुल्यार्थवर्तित्वान्नोपपन्नः समुच्चयः ॥' यदि ऐन्द्रवायवेन यजेत, इन्द्रवायुभ्यां यागं निर्वर्तयेत् इति वा श्रूयेत ततः अन्योन्यनिरपेक्षसंबन्धैः तुल्यार्थत्वेन आगमा वा विकल्पभाजो भवेयुः । इमाः पुनर्ग्रहणसंबद्धाः श्रुताः प्रकरणेन यागसंबन्धं प्रतिपद्यन्ते । न च प्रकरणव्यापारः पर्यायः (स: १), येन अन्योन्यनिरपेक्षाः भवेयुः । सर्वग्रहणेषु हि युगपत् इतिकर्तव्यतात्वेन गृहीतेषु तद्गता देवताः तन्मात्रेणापवर्गप्रसक्तेः प्रकरणिना यागेन आकाङ्क्षिताः युगपदेव संबध्यन्ते । तत्र नाम विकल्पो युज्यते, यत्र इतरेतरनिरपेक्षा समानार्थे नियुज्यन्ते । किं कारणम् ? 'प्रत्येकं हि समर्थत्वं वाक्यादेवावधारितम् । सापेक्षत्वे निपद्येतैवं सर्वं विकल्पते ॥' न त्विह प्रत्येकं ज्योतिष्टोमनिर्वर्तनसामर्थ्यं इन्द्रवाय्वादिनामवगम्यते, तदङ्गिनियोजकाभावात् । सत्यपि च प्रत्येकं यागनिर्वर्तनसामर्थ्ये तद्विनीयज्योतिष्टोमनिर्वृत्तिः नैवावगम्यते इति नैव प्रत्येकं तुल्यार्थत्वम् । प्रत्येकं तुल्यार्थाश्च व्रीहियवादयो विकल्पन्ते । ज्योतिष्टोमिनो हि न परस्परनिरपेक्षाः

स्वनस्थेन वाक्येन विनियुज्यते । ननु 'ऐन्द्रवायवं गृह्णाति' इति वाक्यमेव विनियोजकमुपलभ्यते । अतश्च 'मैत्रावरुणम्' इत्यस्य पूर्वनिरपेक्षमेव देवताविधिसामर्थ्यं विज्ञायते । सत्यम्, ग्रहणं प्रति अन्योन्यनिरपेक्षा विधीयते । न तु तेनैकार्थत्वम् अदृष्टार्थत्वात् । कथम् दृष्टार्थत्वमिति चेत्, उच्यते । 'पूर्वे प्रधानसम्बद्धसंस्कारे श्रूयते यदि । तद् दृष्टार्थं विना तेन, यदि वाऽसौ न सिध्यति ॥' यदि हि प्रथमं यागेन सम्बद्धा सती देवता निर्वापावहनादिष्विव ग्रहणेषु पुनः श्रूयेत, यदि वा ताभिर्विना ग्रहणमेव न निर्वर्तेत ततस्तत्र श्रवणं दृष्टार्थं अनागतस्मृतिरूपेण कल्प्येत । न तु इन्द्रवाय्वादयः प्रथमं ज्योतिष्टोमे श्रुताः । नापि तदभावेन ग्रहणं सिध्यति । तत्र एव सत्यपि यत् देवतायुक्तं ग्रहणं कर्तव्यमिति श्रूयते तत्र अदृष्टादृते न किञ्चित् प्रयोजनमस्ति । ननु च यागस्यैता देवता भविष्यन्तीति ज्ञात्वा विनाऽपि प्रथमविनियोगेन तद्विषयस्मृत्यर्थत्वं विज्ञायते । नैतदस्ति । कुतः । 'सर्वेण विधिवेलायां प्रयोजनमपेक्ष्यते । तद्वेलायामतः कल्प्यो दृष्टादृष्टार्थनिर्णयः ॥' 'ऐन्द्रवायवं गृह्णाति' इत्येतद्वाक्यप्रवृत्तिकाले 'किं प्रयोजनम्' इत्यपेक्षा भवति । तत्र यद्यपि प्रकरणवशात् इतिकर्तव्यतात्मकस्य ग्रहणस्य यागसम्बन्धः कथमपि भवति इत्यवधार्यते, तथापि देवतानामप्रयुक्तत्वात् अक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्वं विज्ञायते इत्यवश्यं यागसम्बन्धनिरपेक्षं तावत् ग्रहणं प्रति प्रयोजनं कल्प्यमिति अदृष्टकल्पनमाश्रयते । तस्मिंस्तु शास्त्रवेलायां अवधारिते, यदि अनुष्ठानकाले दृष्टमपि अनुनिष्पादि भवति, येन तन्निवार्यते । न तु तेन शास्त्रप्रवृत्तिं प्रति बध्यते । तेन प्रतिवाक्यं देवतासंयोगानामदृष्टार्थत्वात् समुच्चयः । तत्र 'न च वसतिसंज्ञपनेन क्रियते तत्तत्तन्नाध्यायस्थेन' इत्यनेन न्यायेन ( भा ३।२।२।२ पृ ४७२ ) भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नाम्नैव इति प्रतिदेवतं सोमो गृहीतव्यः । एवं तावत् सूत्रार्थः – तद्भेदात् देवतासंयोगभेदात् ग्रहणकर्मणः अभ्यासः देवतायुक्तग्रहणसंस्कार्यस्य पृथक्त्वात् अनर्थकं हि प्रयोगान्तरश्रवणमननुष्ठीयमानमनर्थकं स्यात् । तेन ग्रहणस्य भेदः संस्कार्यं द्रव्यं प्रति गुणभावात् । एतद्देवतावन्ति ग्रहणानि यागप्रकरणात् न यागादृते देवतार्थं द्रव्यं संस्कर्तुं शक्नुवन्ति इत्येवमपेक्षिते भविष्यति कश्चिद्यागः, य एतानि द्रव्याणि देवतासम्बन्धं प्रापयिष्यतीति । यागोऽपि च अविहितदेवताकः श्रुतिलिङ्गवाक्यैः देवतामलभमानः प्रकरणस्य च ईदृशे वस्तुनि अक्रियात्मके व्यापाराभावात् ग्रहणेषु तावत् विनियोजको भवति । तानि च अपर्यायविधानात् भिन्नादृष्टसम्बन्धित्वाच्च युगपत् गृह्यन्ते तद्वशेन देवतानामपि समुच्चयसिद्धिः । ननु प्रकरणगृहीतानामपि एकार्थानां पुरोडाशविभागमन्त्रप्रभृतीनामिष्यत एव विकल्पः । सत्यमिष्टः, न तु तत्र प्रकरणं केवलं व्याप्रियते । लिङ्गानुमितया श्रुत्या प्रत्येकं विभागाङ्गत्वं क्रियते दर्शपूर्णमासविभागार्थत्वमात्रं प्रकरणाद्भवति, विभागान्तरेऽपि आनर्थक्यात् । तत्र यद्यपि दर्शपूर्णमासौ समुच्चयेन गृहीतौ, तथापि न विभागद्वारनिरपेक्षयोः सामर्थ्यमस्ति । यच्च द्वारं तत् विकल्पेनावरुद्धम्, न समुच्चयगम्यम् । इह पुनर्विपरीतमेतत् । यान्येव हि द्वाराणि ग्रहणानि तेष्वेव देवता समुच्चिता । तत्र प्रत्येकं ग्रहणयोग्योऽपि द्वारसमर्पणवशेन प्रवर्तमानः किमिदानीं करिष्यति ? । ननु ग्रहणानामपि प्रत्येकं द्रव्यसंस्कारद्वारेण देवतासमर्पणेन च प्रधानोपकारसामर्थ्यमस्ति इति विभागमन्त्रवत् विकल्पेन भवितव्यम् । भवेदेवम्, यदि पूर्वं नानादेवतो यागोऽवगतः स्यात्, तदा तदर्थोऽयं द्रव्यसंस्कारभेद इत्यवगम्यते न तु असौ एवमवगतः इति प्रकरणभेदान्नानादृष्टार्थं विज्ञायते । अतश्च गुणात् प्रकल्पनानि भेत्स्यन्ति । नहि एकस्मिन् प्रकल्पने युगपत् पर्यायेण वा देवता संकल्पयितुं शक्यन्ते । यौगपद्यं तावत् क्रमवर्तिन्या वाचा नैव शक्यम् । अदेवताभूत एव समुदायः संकल्पितः स्यात् । नहि इन्द्रवाय्वादिसमुदाये देवतात्वं केन चिदुक्तं प्रतिपदोत्पन्नैस्तद्धितैः प्रत्येकं प्रतीयमानत्वात् । न च क्रमेणोद्देशः । कथम् ? 'द्रव्यस्य गृह्यमाणस्य देवतोद्देशचोदना । न चैकां देवतां मुक्त्वा तदुद्देशस्य सम्भवः ॥' यदि तु

प्रागूर्ध्वं वा ग्रहणात् उद्दिशेत् अचोदितमेव कुर्यात् ।
किञ्च 'एतस्या इति संकल्प उद्देशोऽत्राभिधीयते ।
अन्यस्मिन् क्रियमाणे च पूर्वस्तत्र विपद्यते ॥'
यद् द्रव्यं इन्द्रायामुष्मा दातव्यमिति सकल्पितम्, तस्य त्यक्तप्रायत्वात् अनीशो यजमानः कथमिव यष्यति मित्रावरुणाभ्यामेतदेव इति ? । तमेवामुद्दिश्य देवतान्तर सबन्धे क्रियमाणे पूर्वदेवताया तदत्यन्तमाच्छिन्न स्यात् । पूर्वसङ्कल्पालोचनेन वा नैयोत्तरः पारमार्थिकत्वं प्रतिपद्येत इति अनवस्थव्यवहारमात्रमेव अनुष्ठीयेत, न चोदनार्थः । तेनावश्य यावद्देवतं ग्रहणभेदः कर्तव्यः । किञ्च
'शक्यते चागृहीतेऽपि यत्र कश्चिद्वस्थिते ।
द्रव्येऽस्मिन् देवतोद्देशुमित्यदृष्टार्थता विधेः ॥'
देवतोद्देशस्त्यागात्मको हि यागः, शक्यते च पूयमानावस्थेनापि सोमेन कर्तुमिति ॥ सर्वावस्थाधिषुनेनापि निर्वर्तयितुमिति अदोषोत्तमसंस्कारविधानमदृष्टार्थम् । यत्र तु पुरोडाशादि द्रव्यं चोद्यते तत्र यावत् अवहन्त्यादिविधानम्, तत्सर्वं हविष्पर्यवसानात् दृष्टार्थं भवति । न च ग्रहणमन्तरेण सोमेन यष्टव्यमिति उत्पत्तिचोदना, एतावन्मात्रपर्यवसानात् । तेन आत्मीयादृष्टभेदनिर्वृत्त्यर्थमपि ग्रहणानि समुपेतव्यानि । 'दश मुष्टीर्मिमीते' इति च प्रकृतौ परिमाणं श्रुतम् । अत 'सोमेन यजेत' इत्येतद्वचनमेव विशेष्यते 'दशमुष्टिना सोमेन यजेत' इति । स च नियतपरिमाणेन उद्देशेनाभिषुत अल्पपरिमाणेषु भिन्नेषु ग्रहणासेषु न ग्रहणभेदमन्तरेण शक्यते ग्रहीतु इति भेदेन गृह्यते । तथाऽवस्थेन च यागो निर्वर्तयितव्यः । सोऽपि अनन्यस्थ तथाऽवस्थित न शक्नोति सर्वं संभावयितुम्, इति प्रयोजनवशेन अभ्यस्यते । तेन तत्रापि भूयम् । तद्भेदात् प्रकल्पितसोमभेदात् आनुक्रमेण, अभ्यासव्यतिकृतद्रव्यपृथक्त्वात् अदोषमत्यज्यमान अनर्थक स्यात् । अतः उत्पत्तौ सकृत् श्रुतस्यापि वाक्यान्तरप्रकल्पितावस्थौत्पत्तिकद्रव्यगुणत्ववशेन अनुष्ठानभेदः । तद्धि द्रव्यमवश्य यथागृहीतमेव दातव्यम् । पुनरेकीकरणे पूर्वकृतग्रहणभेदवैयर्थ्यप्रसङ्गात् । न च यथासंकल्पिताः स्वैर्भागैः देवताः सम्भवेरन् । न च त्यागकाले सर्वाः संकल्पयितुं शक्यन्ते, येनाभ्यासमीने, सर्वोद्देशेन सकृदेव सर्वं द्रव्यं मिश्रीकृत दीयेत । तथाकृतेऽपि च भागभवः प्राप्नोत्येव । प्रक्षिप्ते च भागनाशान्ते वचनादृते अवश्य परिहार्यौ सङ्करापत्तिः । तस्मात् यथासंकल्पितस्य प्रदानात् सर्वदेवतासमुच्चये सति उपपन्नमेतत् 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' 'आश्विनो दशमो गृह्यते' 'तं तृतीयं जुहोति' इति । तेन सिद्धमेककर्मत्वम् ।

प्रयोजनं पूर्वपक्षे सोमविकारेषु एकस्यैव ग्रहस्य धर्मैः सकृदनुष्ठानेन भवितव्यम् । सिद्धान्ते तु प्रकृतितुल्यमेवानुष्ठानमिति ।

**संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् ॥ २८ ॥**

भाष्यम्— यदप्युच्यते यथा 'खादिरे बध्नाति', 'पालाशे बध्नाति' इति खादिरादयः संस्कारे विकल्प्यन्ते, तद्वत् देवता विकल्पयिष्यन्ते इति । तन्नैव युक्तम् । तत्र संस्कारधर्मानिर्वर्तयितु खादिरादयः श्रूयन्ते । यदि च इन्द्रवाय्वाद्या अपि ग्रहदेवताः यागमभिनिर्वर्तयितु श्रूयेरन्, तत अत्रापि विकल्पः स्यात् । न तु एता यागे श्रुता । तस्मात् समुच्चीयेरन् ।

शा— 'ऐन्द्रवायवमित्यादिद्रव्यदैवतसंगतेः ।
याग एव विधातव्यो गृह्णातौ नहि देवता ॥'
द्वेधा पूर्वं पक्षः, सोमशब्देन द्रव्यं विधीयते, प्रकृतिद्रव्यं वा नामधेयं वेति । सर्वथाऽपि आलभतियजती समुदायानुवादः । इति प्राप्तेऽभिधीयते । 'द्रव्यान्तरेण संयोगाभावानुवादोऽप्यवकल्पते । तेन यागविधौ एतावन्ये गुणविधायिनः ॥'

सोम— दध्यादिवाक्येषु गुणाश्रयशक्तिकत्वात् न कर्मविधि, किन्तु कर्मानुवादेन गुणविधिः इत्युक्ते तद्वदेव पशुसोमवाक्ययोरपि ॥ कर्मविधिः इति प्रत्यवस्थानात् संगतिः । यद्वा दध्यादिवाक्येषु कर्मविध्यभावेन अग्निहोत्राघारवाक्ययोः अनुवादाभावेऽपि हृदयादि-ऐन्द्रवायवादिवाक्येषु कर्मविध्यसम्भवेन पशुसोमवाक्ययोः अनुवादो भवति इति प्रत्यवस्थानात् संगतिः ।

प्रयोजनं पूर्वपक्षे ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तस्य यागस्य स्वार्थतया विनियुक्तदेवताकत्वा-

स्थानम् । सोमपद तु संस्कारविध्यन्यथाऽनुपपत्त्या समरस्याप्तिक्लृप्तेऽपि सक्तुन्यायवृत्तिफलकसोमनियमार्थं न विरुध्यते । यथा च एव सति ग्रहणाना समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिः तथा सर्वं कौस्तुभे एव निरूपितम् । प्रयोजनं पशुविकारे हृदयादियागानन्तमप्रकृतित्वात् नैकादशावदानगणप्राप्तिः पूर्वपक्षे, सिद्धान्ते सा इति द्रष्टव्यम् । सोमे त्वागमकल्पसिद्धिरेव ।

मण्डन— 'सोमेन (इत्यत्र) यागविधिरस्य गुणो ग्रहोक्तिः ।'

शंकर—'पशुसोमरचोक्तथा' (यज्ञविधि. यागविधि.) ।

* पशुसोमाधिकरणं अभ्यासापवादत्वेन उत्थितम् । श्री. २।२।७।२० पृ २३२, * पशुसोमाधिकरण आघाराग्निहोत्राधिकरणवदुदाहरणम् । २।२।६।१७ पृ. २०७ * पौर्णमास्यधिकरणा (२।२।३)नन्तरं पशुसोमाधिकरणम् । वा. २।१।१।१. * पशुसोमाधिकरणे भट्टसोमेश्वरेण शेषपरिसंख्योदाहरणमुक्तम् "न्यायात् सर्वावयवप्राप्तावपि 'एकादश वै पशोरवदानानि' इत्यस्य अनन्यप्रयोजनत्वात् अवदानान्तरपरिसंख्याऽर्थत्वाभ्युपगमेन दार्शमिक सिद्धान्त." इति, (१०।७।१।१-२) तदेतदस्माभि दशमे 'पशोरेकहविष्ट्वम्' इत्यतोऽग्रिमेऽधिकरणे दूषितम् । मिथ्या हि तत्र अस्य 'त्रिर्द्विरवद्यति' इति संख्याविधिना एकवाक्यतामेवाहुः । यदि पर हृदयादिवाक्यानामेव 'इमामगृभ्णन्' इतिवत् कस्य. परिसंख्यात्व तत्परमाम्यक्तदुक्त स्यम्, तदपि विनिगमनेऽपि पशुप्रत्यभिज्ञानात् हृदयादिवाक्याभावे पशोरेव मध्यात् पूर्वार्धाच्च सकृदवदानं प्राप्नुवत् अवयवेभ्यः इति निरस्तम् । यत्तु तत्र मिश्रैः पशोर्विनशनेन साधनत्वायोगात् शरीरावयवेभ्योऽवदानप्रसक्तिरुक्ता, सा आपाततः एव दूषिता तत्रैव (अस्माभिः) । तदुक्तं आकृत्यधिकरणवार्तिके (पृ. ३०५।५) 'पश्वादिषु अपनीतद्रव्येषु विशेषबुद्ध्यभावात् सामान्यरूपेण निरूपणादिविशिष्टा बुद्धिर्दृष्टा' इति । बाल पृ. २८-२९, * पशुसोमाधिकरणे वत्सस्यैव विनियुक्तदोहादृगोदृश्योपकारकतया 'वत्समालभेत' इत्यत्र आलम्भसंस्कार्यत्वमिति भवदेवः । पृ. ८२. * न च पशुसोमाधिकरणे पशुसोमयोः प्रधानया यागकारकत्व कथमुक्तमिति वाच्यम् । तत्र प्रकृतिविकृत्योः अत्यन्तानतिरिक्ततया हृदयादिगणसोमरसात्मना साक्षादेव पशुसोमयोः यागकारकत्वसंभवेऽपि आरादुपकारकस्य स्तोत्रस्य यागे कारकत्वासंभवात् । कु. २।१।१२।२७, * गृह्णस्तोत्रमेकमनेक इति पक्षद्वय सद्भावात् एकमिति पक्षमाश्रित्य अङ्गानुरोधात् प्रधानावृत्तिपराहता, बहुयागसमुच्चये एवेदमुदाहरणम्, न तु एकस्य यागस्याङ्गानुरोधादभ्यासे, इति शङ्का पशुसोमाधिकरणे सोमोदाहरणविषयसिद्धान्त दर्शयन् परिहरति । परिमल. ३।२।२।७ ब्रह्म. * प्रमाणान्तरेण अर्थादिना संभवत्प्राप्तिमता तत्तद्ग्रहाणा तत्तद्देवतासंयोगाना च तत्तद्विधिभिः पुनर्विधानस्य आरादुपकारकविषया मतनर्थक्यता पशुसोमाधिकरणे कौस्तुभे व्यवस्थापितम् । भाट्ट. १०।४।१७. * 'सोमेन यजेत' सोमपदानुवादशङ्का तु सक्तुविनियोगविधिकल्पनान्यायवृत्तिफलकतयाऽपि विध्युपरतौ अनुवादत्वे वैयर्थ्यापत्ते. पशुसोमाधिकरणे एव निरस्ता । कौ. ३।२।१७।३८. * 'हृदयस्याग्रेऽवद्यति' इत्यादीनि हृदयादिवाक्यानि तेषामवदानात्वसंस्कारविधिनाय हविष्ट्वबोधकानि सन्ति इतरेषा हविष्ट्वपरिसंख्यार्थानि इत्युक्तं पशुसोमाधिकरणे कौस्तुभे । भाट्ट. १०।७।२.

* ऐन्द्रवायवादिविषयो यागानामचोदकाः, यतो ग्रहणलक्षणसंस्कार एवात्र चोद्यते इति पशुसोमाधिकरणगुणसूत्रार्थः (२।२।६।१८) । सोम. १०।६।१३.

¶ पशुसोमाधिकरणन्यायः । (पशुसोमाधिकरणोक्ता युक्ति) । साहस्री. ८६६.

* पशुसोमाधिकरणव्युत्पादितः यजिरात्मकर्मविधि. । सु पृ. ९३१.

* प्रधानाभ्यासवत् ग्रहाभ्यासेऽपि अनुष्ठानभेदचोदनया धर्मग्रहणतत्कार्यभेदात् पशुसोमाधिकरणपूर्वपक्षवत् सिद्धान्तेऽपि सोमविकारेषु एकस्यैव ग्रहणस्य धर्मे. सकृदनुष्ठानेन च भविष्य इति प्रकृतिवत्कृत्यानुष्ठान पशुसोमाधिकरणसिद्धान्तप्रयोजनं न सेत्स्यति । सु. पृ. ७१८.

* पश्चादाम्नात पूर्वाम्नातेन बाध्यते यथा अध्वरकल्पाया आग्नावैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् आमावास्यतन्त्रेण सरस्वत्या आज्यभागाया आग्न पौर्णमासतन्त्रम् । बाल. पृ. १४१.

* 'पश्य मृगो धावति' इत्यादौ पश्य इत्यस्य कर्मान्वयं विना शाब्दबोधाजनकत्वात् मृगो धावन भावनाया. कर्मत्वेन तस्यान्वय. । रहस्य. पृ ७४.

* पाकः अन्वाहार्यस्यानापन्नेऽपि पक्षे नानुष्ठेय आग्रयणे । १०।३।८।१६, * पाकः अन्वाहार्यस्याना पन्ने वाससि नानुष्ठेय· आग्रयणे । १०।३।९।३७. * पाकः कृष्णलेषु औष्ण्यकरूप· कार्य· । १०।२।१, मीको. पृ. १४७५ 'कृष्णलेषु मुख्यपाकासंभवात्' इत्यत्र द्रष्टव्यम् । * पाकः कृष्णलचरौ 'घृते श्रपयति' इति प्रत्यक्षशिष्टत्वात् अदृष्टार्थ. कर्तव्यः । १०।२।१।१–२ * पाकः नाम 'येय तण्डुलाना विक्लित्तिः' इति महाभाष्ये विक्लेदनस्य पाकस्योक्तिः । विक्लित्तिफलस्य अधिश्रयणादिव्यापारसमूहस्य पचिवाच्यत्वम् , नापि श्रयणादिमात्रस्य एकैकस्य इत्येवमर्थकेन 'विक्लित्ति. पाकफलम् ' इति प्रयोजनशाब्दार्थशब्दाभ्युपगमेन भाष्य व्याख्येयम् । मु· पृ. १४२४. * पाक. लौकिकयोः स्याद्यागेन । १०।१।११. 'लौकिको पाक.' इत्यत्र द्रष्टव्यम् । * पाको हविर्भूतस्य मासस्य नियत· । वि. १०।७।२

■ पाकस्य चात्रपारितत्वात् । १०।३।९।३७॥

आग्रयणे 'पाको दक्षिणा' श्रुता । तत्र वासमि पाको न कर्तव्यः । पाकस्य हि अन्वाहार्ये अपकारित्वात् । अन्वाहार्यो हि ओदन· अन्नम् । तेन पाकः कारित । नहि पाक विना अन्नं भवति । वासस्तु नाम्नम् । तस्मात्तत्र पाको न कार्य. । इति सिद्धान्त. । के.

* पाकस्य पुरुषार्थस्य दीक्षितकर्तृकस्वर्यदाम. ज्योतिष्टोमे । नदीक्षितादिसमाप्तम् । १०।८।७।१२–१५.

* पाकादिक्रियाकर्मणः तण्डुलादे. क्रियाजन्यातिशयाश्रयत्वदर्शनात् कर्मत्वेन ज्ञानक्रियाकर्मणोऽपि क्रियाजन्यातिशयाश्रयत्वमनुमीयते । ■ पृ. ६६१.

* पाकभेदात् नानाजातीयेषु पशुषु कुम्भ्यादीना भेद. । ११।४।१०।४०–४१, मीको. पृ. १९३६ 'तन्त्र नं०' इत्यत्र द्रष्टव्यम् ।

* पाकयज्ञ· पाक निर्वर्त्य क्रियमाणो यज्ञ. । सकर्ष. २।४।१०.

■ पाकयज्ञेषु 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्वि प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति धर्मा भवन्ति ॥

पाकयज्ञप्रकरणकमावस्याः कथम्भावाकाङ्क्षायामाधेयस्थै सन्निपातिभिरेव अङ्गानामिव आकाङ्क्षानिवृत्ति । इति प्राप्ते, 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्वि प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति प्रकरणिन· होमित्वेन विहिता अपि धर्मा. पाकयज्ञेऽपि प्राप्नुयुः । 'यद्येतान् नालभेत वायव्यस्यैव शिर उपदध्यात्' इत्येकस्या एव श्रुते· पशुशीर्षादिविकल्पवाच यज्ञशीर्षोपधानोभयत्रापत्त दर्शनात् । सकर्ष. २।४।१२.

■ पाकयज्ञशब्दः दर्विहोममात्रवाचकः ॥

पाक निर्वर्त्य क्रियमाणो यज्ञ इति व्युत्पत्त्या होमयागान्यतिविल्यागपरोऽयं शब्द· । इति प्राप्ते, 'यद् चातुर्मास्याना पाकयज्ञ सैव तदेषां पशव्य गृहमेधीयो यो पाकयज्ञो न इध्मा बर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते' इत्यादिना पैठिकाङ्गाना अभावबोधनेन दर्विहोममात्रवाचक । सकर्ष. २।४।१०.

■ पाकयज्ञशब्दः नाहुतिपर्यायः ॥

पाकयज्ञशब्दस्य आहुत्यादिशब्दवत् स्मार्तश्रौतसाधारण्येन यागमात्रवाचनत्वे प्राप्ते, 'मनुर्वै पाकयज्ञ आसीत् स इमामिरा यज्ञमनयत्' इत्यादिना पाकयज्ञेन कतिपयाहुतिष्वेव शक्तिग्रहात् न आहुतिपर्यायः । सकर्ष २।४।९.

■ पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः॥

दर्विहोमत्वाविशेषात् लौकिकवैदिकसाधारण्येन खिलानां वाचक । इति प्राप्ते, लौकिकानामेव दर्वि·

होमानामेव वाचकः । 'त्रिवीना पाकयज्ञः, ततीनयणा पाकयज्ञः' इत्यादेः स्मार्ते एवं व्यवहारस्य दर्शनात् । 'यदाऽन्यम्र हविषः सुच्यन्त्रवति, सर्वमेतदग्नौ जुहोति' इति विधाय 'अथ कस्मात् द्विर्जुहोति' इत्यादिना 'तदस्य पाकयज्ञस्यैव' इत्यनेन द्विर्होमादिनिर्लेहनान्त-पदार्थाः पाकयज्ञीयाः अत्र विमिति क्रियन्ते इत्याक्षेपेण वैदिकानामेषां न पाकयज्ञता इति ध्वनयाच । संकर्ष. २।४।११.

* पाकहोमयोः (अनाहिताग्निहोमहोमयोः) अर्थतः क्रमः । ५।१।१।२.

* पाकहोमवतानां दीक्षाकालोत्कर्षः । ६।५।१०।३८-३९. मीको. पृ. २१०८ 'दीक्षोत्कर्षे॰' इत्यत्र द्रष्टव्यम् ।

* पाचकादिशब्दाः न शक्तिपराः, किं तर्हि ? शक्त्यन्तरायोगित्वात् शक्तिमत्पराः । मा. ३।४।८।१३ पृ. ९३४.

* पाञ्चदश्यं सामिधेनीनां ब्राह्मणराजन्यविषयं दर्शपूर्णमासयोः । साप्तदश्यं तु विकृतिषु वर्णत्रयसाधारणम्, वैश्यस्य च दर्शपूर्णमासयोरपि । ६।६।७।२६-१९. मीको. पृ. ५८३ 'अधिकारः अध्वरकल्पादिषु॰' इत्यत्र द्रष्टव्यम् । * पाञ्चदश्यस्य नित्यस्य, वैश्यनिमित्तकस्य च साप्तदश्यस्य प्रतिज्ञाऽर्थेन वाक्येन (सामिधेनीनाम्) एकविंशतित्वेन बाधः । बाल. पृ. ११२.

* पाञ्चरात्राद्यागमानां वैदिकविरुद्धांशागमप्रचुरत्वात् सर्वथैवाप्रामाण्यम् । कु. १।३।३।४.

* पाञ्चसांवत्सरिकावृत्तावपि चातुर्मास्येषु वैश्वानरपार्जन्यचातुर्होतृहोमानां सकृदेवानुष्ठानम् । संकर्ष. ३।१।२१. मीको. पृ. १६९२ 'चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तौ॰' इत्यत्र द्रष्टव्यम् ।

* पाञ्चसांवत्सरिकपक्षोऽपि चातुर्मास्येषु । संकर्ष. ३।१।१९. मीको. पृ. १६९१ 'चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे॰' इत्यत्र द्रष्टव्यम् ।

※ पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणं इति न्यायः । पाटच्चरश्चोरः । यामिकः प्रहरकः । प्रयोजनाऽनुपयुक्तवैलक्षण्यमयमन्त्रतावीति तण्डने स्पष्टः । साहस्री. ६७२.

* पाठनमन्तरेण विषज्वलनां नोपशान्तिः । वि. ३।८।४.

* योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात् पाटलिपुत्रं याति इति शक्यते वदितुम् । इति भाष्योक्तपाटलिपुत्रगमनन्यायेन 'तेजः परस्यां देवतायाम्' इति निर्देशः प्राणप्रसिद्धस्थानेऽपि उपपन्नतरः । आभरणम्. ४।२।१।५ ब्रसू.

* पाठः क्रमं कल्पयन् वस्तुसामर्थ्यं अनुसृत्यैव कल्पयति । वि. ५।४।१. * पाठः क्रमबोधकं प्रमाणम् । मणि. पृ. १३, बाल. पृ. ८. * पाठः न क्रमस्याभिधायकः, किन्तु अन्यथाऽनुपपत्त्या क्रमं कल्पयति । वि. ५।४।१. * पाठः नियमयोगविधिपरिग्रहस्थले पारायणादौ उपयुज्यते । भाट्ट. ५।३।१२. * पाठं बाधित्वा श्रुत्यर्थौ क्रमं नियच्छतः । वि. ५।८।१. * पाठस्य स्मारकक्रमविधयेन क्रमनियामकत्वम् । भाट्ट. ५।१।१९.

※ पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् (भाट्ट.) ॥

मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः । ५।१।९।१६॥

भाष्यम्— दर्शपूर्णमासयोराग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र संदेहः क्रमः पाठो बलीयानिति । उच्यते । अनियमः । नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्ते, ब्रूमः । मन्त्रपाठो बलीयान् । कुतः ? प्रयोगरूपसामर्थ्यात् । प्रयोगाय मन्त्रस्य रूपसामर्थ्यम् । तदस्य सामर्थ्यम्, येन मन्त्रः प्रयुज्यते । तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति । ननु च ब्राह्मणपाठस्यापि तदेव प्रयोजनम् । उच्यते । उत्पत्तिदेशः सः । अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति ।

टुप्— मन्त्रतस्तु विरोधे स्यात् ॥ आग्नेयस्य पूर्वो मन्त्रपाठः (उत्तरो ब्राह्मणपाठः), अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठः (मन्त्रपाठस्तूत्तरः) । तत्र ब्राह्मणपाठात् किमग्नीषोमीयस्य पूर्वं धर्माः, उत मन्त्रपाठात् आग्नेयस्येति (इति मन्त्रब्राह्मणपाठयोर्बलाबलं चिन्त्यते) ।

किं प्रमाणम् ? पूर्वो मन्त्रः उत्तर (मन्त्र पाठेन प्रत्यक्षेण) उपस्थापयति। (यथा) 'समिधो यजति' इति समाप्यमानं तनूनपातमुपस्थापयति। अतो द्वयोरपि समाम्नायपाठयोः प्रत्यक्षत्वात् अनियम। इति प्राप्ते, (ब्रूमः)। मन्त्रपाठो बलीयान्। कुतः? (ब्राह्मणपाठस्य विप्रकृष्टत्वात्। तथाहि,) 'समिधो यजति' इत्यनेन पदार्थो विहितः। स अनुष्ठानवेलाया येन वाक्येन विहितः, तत् वाक्यं स्मारयति। तेन वाक्येन स्मृतेन अनुष्ठानवेलायां स पदार्थं स्मारितः सन् अनुष्ठीयते, (अनुष्ठितश्चासौ द्वितीयेन) द्वितीय पदार्थं न स्मारयति (अर्थात् प्रत्यानपेक्षरूपेण पौर्वापर्यस्य अनव स्थत्वात्)। किं तर्हि? अनुष्ठानोत्तरकालं योऽसौ कृत. पदार्थः, तमालोचयति। स चालोच्यमानः येन (समिधो यजतीत्यनेन) ब्राह्मणखण्डकेन विहित, तत् स्मारयति। तच्च (स्मृतम्) स्वादुत्तरं ब्राह्मणखण्डकम् (तनूनपातं यजति इत्येतत् ब्राह्मणखण्डकम्) स्मारयति पाठात्। तत् ब्राह्मणं पुनः पदार्थं विदधाति (पुनःशब्दः तु-शब्दार्थकः)। अनुष्ठानवेलायां तत् (ब्राह्मणम्) स्मारनमपेक्षितम्। अथ (मन्त्रपाठात् ब्राह्मणपाठे) विप्रकर्षः। मन्त्र. पुनः (मन्त्रपाठः प्रत्युत्पन्नः.) परिसमाप्यमानः उत्तर मन्त्र पर्युपस्थापयति। स च (उत्तरो मन्त्र.) पर्युपस्थाप्यमान उत्तर पदार्थं पर्युपस्थापनेन पर्युपतिष्ठते। तस्मात् तत्र (आलोचना-) अपेक्षाऽभावान् नास्ति विप्रकर्षः। 'उत्पत्तिदेशः स.' इति (सूत्रस्य अयमर्थः—) पूर्व. पदार्थो विहितः, उत्तर. पदार्थो विहितः इति निर्धारणानाम् स क्रम, तेन अर्थवान् ब्राह्मणपाठक्रमः, नानुष्ठानक्रमेणेति। (तस्मात् मन्त्रक्रमो बलीयान्)।

शा— 'विधिक्रमबलीयस्त्वमुत्पत्तावबधारणात्। उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् ॥, नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत्। स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते ॥ मन्त्राम्नानस्य चार्थत्वात् स्मृत्यर्थो विषयः पुनः। विधिनैव कृतार्थत्वादाम्नायस्यं स्मारका मता ॥' तस्मात् मन्त्रक्रमेणैवानुष्ठानम्, तदभावे तु विधिरपि स्मारकः इति तत्रैव तत्क्रमस्य प्रामाण्यम्।

सोम— प्रथमावगतत्वात् यथा पूर्वत्र पाठक्रमस्य प्राबल्यमेव इहापीति प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु—मन्त्रब्राह्मणक्रमविरोधे मन्त्रपाठक्रमात् पदार्थक्रमः स्यात् प्रयोगसामर्थ्यात् मन्त्रस्य प्रयोज्यपदार्थस्मारणे सामर्थ्यात्, ब्राह्मणपाठस्तु उत्पत्तिदेशः इति न प्रयोगकाले स्मृत्युपयुक्तः इति।

वि— 'अग्नीषोमीय आग्नेयात् पूर्वो नो वा, ऽस्तु पूर्वता। ब्राह्मणक्रमतो, नैव मन्त्रक्रमबलित्वतः ॥ स्मृतिक्रमादनुष्ठानं मन्त्राणां स्मारकत्वतः। प्राबल्यं ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता ॥'

भाट्ट— पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, न तु ब्राह्मणपाठः, तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविशेषेण क्रमनियामकत्वोक्तेः, मन्त्रत्वे च तस्यैव स्मारकत्वविधानोपयुक्तस्वसमर्थस्य च विधेः स्मारकत्वाभावात् मन्त्रपाठक्रम एव बलीयान्। तेन याज्याऽनुवाक्यादि मन्त्रपाठक्रमात् आग्नेयस्य प्रथमानुष्ठानम्, पश्चात् उपांशुयाजोत्तरमग्नीषोमीयस्य। न तु ब्राह्मणपाठक्रमादग्नीषोमीयस्य प्रथमम्, पश्चादुपांशुयाजोत्तरमाग्नेयस्य। अत एव तत्र पाठक्रम स्वाध्यायादावुपयुज्यते।

मण्डन— 'मन्त्रक्रमो बली तत्र।' मन्त्रब्राह्मणपाठविरोधे। ११.

शंकर— 'विधिपाठान्मन्त्रपाठः।' बली। ११.

• पाठे आनुमानिको विधि. प्रत्यक्षेण विधिना बाध्यते। भा. ८।४।५।१६.

• पाठाधिकरणे ब्राह्मणस्य स्मारकत्व विधायकत्वं चेत्युभयार्थत्व वक्ष्यते। सु. पृ ६६६.

• पाठादीनां क्रमापेक्षाया नियामकता तत्रैव, यत्र एकप्रयोगविधिपरिग्रहः अनेकेषाम्। भाट्ट. ५।१।१२.

• पाठोपस्थितस्य क्रमस्य विनियोजकत्वं कल्पनया अङ्गत्वे आगते प्रयोगविधिना प्रयोगनियमनम्। भाट्ट. ५।१।१४.

* पाठक्रमोऽपि पदार्थबोधकवाक्यानां पदार्थक्रमनियामकः। पदार्थबोधकत्वं च क्वचित् अनुष्ठेयपदार्थबोधकत्वम्, क्वचिच्च तत्सम्बन्धिद्रव्यदेवतादिबोधकत्वम्। तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः। भाट्ट. ५।१।४, * पाठक्रमः अर्थक्रमेण बाध्यते 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादौ। ५।४।१. * पाठक्रमः आतिदेशिकः औपदेशिकमुख्यक्रमाद् बलवान्। ५।१। १०।१७–१८. * पाठक्रमः उपदेशविषयः एव। टुप्. ५।१।१।१ पृ. १२८७. * पाठक्रमः काम्यानुष्ठाने न नियामकः, किन्तु यथाकाममनुष्ठानम्। ५।१।१२।३२–३६. * पाठक्रमः चोदकाश्रितस्वा द्बलीयान्, मुख्यप्रवृत्तिक्रमौ तु प्रयोगवचनाश्रितत्वात् दुर्बलौ। टुप्. ५।१।१०।१८, * पाठक्रमः प्रत्यक्षः, मुख्यक्रमस्तु आनुमानिकः, तेन पाठक्रमो मुख्यक्रमात् बलवान्। तेन दर्शपूर्णमासयोः आज्यनिर्वापः पूर्वं न कार्यः, अग्नीषोमीयनिर्वाप एव आज्यात् पूर्वं कार्यः। ५।१।८।१५.

ॐ पाठक्रमः मुख्यक्रमापेक्षया बलीयान् ॥

प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत। ५।१।८।१५॥

**भाष्यम्**— दर्शपूर्णमासयोः पूर्वमौपधधर्माः समाम्नाताः, तत आज्यस्य। तत्र संदेहः किमग्नीषोमीयधर्माणां मुख्यक्रमेण पूर्वमाज्यस्य धर्माः कर्तव्याः, उत यथापाठमिति। मुख्यक्रमानुग्रहेण आज्यस्य पूर्वम्। इति प्राप्ते, ब्रूमः। प्रकृतौ यथापाठं प्रतीयेत। स्वशब्दो हि तेषां पाठक्रमः। सोऽन्यथा क्रियमाणे बाधितः स्यात्। सहत्वस्य पुनरुपसंग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे सन्निकृष्यमाणे न बाधितो भविष्यति। अपि च पाठक्रमे स्वशब्दः 'आग्नेयोऽष्टाकपालः' इति। मुख्यक्रमे प्रयोगवचनैकवाक्यता सूक्ष्मा।

**टुप्**— (इह तावत् पूर्वाधिकरणापवादरूपेण सिद्धान्ताभिधानं मुख्यपाठयोर्बलाबलं चिन्त्यते)। आज्यनिर्वाप इहोदाहरणम्। पूर्वेण न्यायेन तथैव (मुख्यक्रमेण अनुष्ठाने) प्राप्ते अपवाद आरभ्यते। पाठक्रमेणानुष्ठानं स्वाध्यायेन (अन्यानपेक्षतया) अवगतत्वात् प्रत्यक्षम्। (मुख्य आनुमानिकः। कल्पना च विलम्बते इत्याह–) सह पदार्थाः कर्तव्याः इति पदार्थेषु अयं धर्मः सहत्वं नाम (अपेक्षितः)। तत्र प्रयोगवचनेन सहत्वमवबोध्यते। सहत्व (च) अवबोधयत् अन्यथाऽनुपपत्त्या क्रममनुमापयति प्रधानानामत्वै (प्रधानासत्तिसिद्ध्यर्थम्)। तत्र (अङ्गेषु) यत् अश्रुतक्रमानुष्ठानम्, तत् प्रत्यक्षेण (पाठ–)क्रमेण बाध्यते। ततो यथा–(पाठ–)क्रमं व्यवस्था। (भाष्यं व्याचष्टे–) मुख्यक्रमे प्रयोगवचनेन एकवाक्यता सूक्ष्मा, अश्रुतः क्रमः कल्प्यते इत्यर्थः।

**शा**— 'तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरः क्रिया। पाठतस्त्वौपधस्यैव प्राथम्यमनपेक्षतः ॥'

**सोम**— पूर्वाधिकरणोक्तप्रधानप्रत्यासत्त्यनुग्रहात् मुख्यक्रमः युक्तः। अत एव संगतिः। सूत्रार्थस्तु– प्रकृतौ यथाक्रमं यथापाठक्रमं निर्वापक्रमः प्रतीयते, पाठक्रमस्य स्वशब्दत्वात् अङ्गावगमकशब्दधर्मतया प्रत्यक्षेण शब्दित्वात्वगमादिति।

**वि**— 'उपांशुयाजे पूर्वेऽग्नीषोमीयकेऽथवा। धर्मानुष्ठान(ने), आद्योऽस्तु मुख्ययोस्तादृशक्रमात् ॥, युक्तमौपधधर्माणां प्राथम्यं पूर्वपाठतः। पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः ॥'

**भाट्ट**— तदेवं षड् प्रमाणानि निरूपितानि। तेषां चाद्याधिकरणोक्तक्रमेण पारदौर्बल्यं द्रष्टव्यम्, न तु सूत्रक्रमेण। तत्र श्रुतिविरोधे अर्थस्यैव अन्यथाकल्पनात् दौर्बल्यम्। अर्थविरोधे पाठस्य वक्ष्यते। एव वैकृतपाठविरोधे प्राकृतस्थानबाधोऽपि। प्राकृतकदनस्थानविरोधे प्रधानप्रयोगविध्याश्रितमुख्यक्रमस्य दौर्बल्यं वक्ष्यते एव। मुख्यक्रमविरोधे प्रवृत्तिक्रमस्य दौर्बल्यमपि तथैव।

तदिह पाठक्रममुख्यक्रमयोः बलाबलं चिन्त्यते। दर्शपूर्णमासयोः आग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमात् आज्यस्योपांशुयाजीयस्य प्रथमं निर्वापः, पश्चादग्नीषोमीयद्रव्यस्य। पाठक्रमात्तु विपरीतः क्रमः। तत्र पाठस्य स्मारकवाक्यप्रवृत्तिरूपेण प्रत्यक्षत्वात् शीघ्रोपस्थितेश्च बलवत्त्वम्। मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्सान्निध्यसम्पत्त्यै कल्प्यमानो विलम्बित इति दुर्बलः।

मण्डन— 'मुख्यात् पाठक्रमो बली ।' १०.

शंकर— 'पाठो मुख्यक्रमाद् बली ।' ११.

● नैमित्तिको हि पाठक्रम- इतर पाठक्रम बाधित्वा निविशते । टुप्. ४।३।१६।३९, ● पूर्वः पदार्थः समाप्यमान. उत्तर बुद्धौ अभिनियस्यति इत्यय पाठक्रमः बाध्यते । ५।१।६।१३, ● यत्र आनुपूर्व्येण पदार्था निर्दिश्यन्ते स पाठक्रमः । यथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस.' इति । ५।१।१।१ पृ.१२८९. ● पाठक्रमेण एव क्रमः आगमयितव्य. आगमेन छन्दःपूरणे, एकविंशे त्रिणवे त्रयस्त्रिंशे चातिरात्रे । भा ५।१।६।१३. ● पाठक्रमेण स्थानक्रमो बाध्यते । यथा— साद्यस्क्रहोम—उपाकरणादपूर्वपदार्थान् विधाय दीक्षणीयाऽऽदयः प्राकृता. समुणा. श्रुताः । तत्र प्राकृतेन दीक्षणीयाप्राचीनेन पदार्थेन उपक्षिप्तत्वात् दीक्षणीयादीना स्थानेन प्रागनुष्ठाने तत. प्राक् पाठः साद्यस्क्रहोमादेः न स्यात् इति (पाठक्रमेण स्थानक्रमो बाध्यते) । इद 'प्राकृताच्च पुरस्तात्' (५।२।११) इत्यधिकरणे उक्तम् । बाल. पृ १३७.

‌ पाठक्रमादर्थक्रमो बलीयान् इति न्यायः । यथा—'अनड्वाहमुदहारि या त्व हरसि शिरसा कुम्भ भगिनि साचीनमभिधावन्तमद्राक्षी.' इति । तस्य यथेष्ट मभिमन्त्रो भवति, उदहारि भगिनि या त्व कुम्भ हरसि शिरसा, अनड्वाह साचीनमभिधावन्तमद्राक्षीरिति । अत एव 'आनुपूर्व्येण सन्निविष्टाना यथेष्टमभिसंबन्ध' इति न्यायोऽप्यन्तरतरतीति । 'न पद्यान्त०' (पा १।१।५८) इति सूत्रमहाभाष्यप्रदीपयो. स्पष्ट । साहस्री ५९९. ● 'पाठक्रमादर्थ०' इति न्यायेन 'सुभूमा त्वा स भरामि' 'अदित्यै रास्नाऽसि' इति मन्त्रद्वयस्य व्यत्यासेन विनियोगः कर्त्रे दर्शित । तैसंभा. १।१।२।२. ● 'असिद्ध बहिरङ्गमन्तरङ्गे' इति परिभाषाया बहि रङ्गस्य प्रयमोपस्थितावपि 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन प्रथममन्तरङ्गपदार्थं विनिनक्ति । भूति पृ. १६८.

● पाठक्रमात् ययासख्यत्वात् दधिमन्थो मध्यमर्शी मध्यमर्तिन. उपानुयाजस्याङ्गम् । ३।३।५, मीको. पृ १५०९ 'क्रमाधिकरणम्' इत्यत्र द्रष्टव्यम् । ● पाठक्रमस्य श्रुत्यर्थसमाख्या बाधः । क्रमभेदाधिकरणम् । ५।४।१।१.

‌ पाठक्रमाधिकरणम् । पाठक्रमन्याय. । प्रधानेषु पाठक्रमो नियामकः ॥

क्रमेण वा नियम्येत क्रत्वेकत्वे, तद्गुणत्वात् । ५।१।४।४॥

भाष्यम्— दर्शपूर्णमासयोराम्नातम् 'समिधो यजति, तनूनपात यजति, इडो यजति, बर्हिर्यजति, स्वाहाकार यजति' इति । तत्र संशय किमनियतेनैव क्रमेण एषामनुष्ठानम्, उत य. पाठक्रम, स एव नियम्येत इति । किं प्राप्तम् ? नियमकारिण शास्त्रस्याभावात् अनियम इति । एवं प्राप्ते, ब्रूमः । क्रमेणैव नियम्येत एकस्मिन् क्रताविति । कुत ? तद्गुणत्वात् । तद्गुणता हि गम्यते पदार्थानाम् । यथा 'स्नायात् अनुलिम्पेत् भुञ्जीत' इति च क्रमेणानुष्ठानमवगम्यते वाक्यात् पदार्थानाम् । यथा च अदृष्टार्थेष्वपि दृष्टार्थेषु कश्चित् ब्रूयात् 'देवाय धूपो देय', पुष्पाण्यवकिरत यानि, चन्दनेनानुलेपय', उपहारोऽस्मै उपहर्तव्य, एव इते देवस्तुष्यति' इति । तमन्य प्रतिब्रूते— 'नैतदेवम्, न प्रथम धूपो दातव्य', प्रथम पुष्पाण्यवकिरितव्यानि' इति । एव मन्यते धूपदानस्य प्राथम्यमनेनोक्तमिति । तस्मात् वाचनिक एवायेव क्रम इति ।

अशाब्द इति चेत् स्याद्वाक्यशब्दत्वात् । ५॥

भाष्यम्— इति चेत्पश्यसि, अर्थेन गम्यमाने अशाब्द एव क्रम । कथम् ? पदार्थपूर्वको वाक्यार्थ. । पदेभ्यश्च पदार्था एवावगम्यन्ते न क्रम । स्यादेतदेवम्, यदि पदाना समूहस्य भावे प्रत्यायकत्वमर्थस्य स्यात् । न तु समुदायः प्रत्यायक इत्युक्तम्, 'तद्भूताना क्रियार्थेन समाम्नाय' इत्यत्र । तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एव क्रमोऽवगम्यते । एव पूर्वापरविरतुमहीष्यते । इतरथा सतोऽपि विप्रकृष्येत घटीयन्त्र इव । दर्शयिष्यति च 'हृदयस्याग्रेऽवद्यति, अथ जिह्वाया., अथ वक्षस.' इति । यदि नियामक पाठक्रमस्ततो न विद्यात यमेतत् । नियामके हि पाठक्रमे पाठक्रमादेव प्राप्नुयात् ।

अर्थकृते वाऽनुमानं स्यात् क्रत्वेकत्वे परार्थत्वात्, स्वेन त्वर्थेन संबन्धस्तस्मात् स्वशब्द मुच्येत ॥ ६ ॥

भाष्यम्— एकस्मिन् क्रतौ एकत्वात् क्रतोः अनेकस्मिन् पदार्थे अर्थकृतत्वात् क्रमस्य । तेनैव एव क्रमो नियम्येतानुमानेन । कुतः ? परार्थत्वाद्वेदस्य । परार्थो हि वेदो यत्नेन शक्यते कर्तुं तस्मैतस्मै प्रयोजनायैव समाम्नायते । शक्यते चानेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्माद्वेदः पदार्थांश्च विधातुमुपादेय, क्रियाकाले च प्रतिपत्तुम् । न गम्यते विशेषः विधातुमयं समाम्नायते न प्रतिपत्तुमिति । अगम्यमाने विशेषे उभयार्थमुपादीयते इति गम्यते । प्रतिपत्तुं चानेन क्रमेण शक्यते नान्येन । अत एव च कृत्वा पाठक्रमापचारे विनष्ट. इत्युच्यते । इतरथा हि यत्नस्य प्रयोजनं तस्मिन्निर्वर्तमाने एव किं नष्टं स्यात् । अदृष्टं कल्प्येत, तचान्याय्यं दृष्टे सति । तस्मात् स्वशब्दः क्रमः । य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि ।

टुप्— 'स्वाध्यायोऽध्येतव्यः' इति (वाक्यस्य तावदयमर्थः) स्वाध्यायाध्ययनेन भावयेत्, (तत्र) किमिति (भाव्यविशेषापेक्षायाम्) तत्र विश्वजिद्वत् फलं न कल्प्यते, न च रात्रिसत्रन्यायेन अर्थवादस्थं फलम् (कल्प्यम्) । भवितव्यं न फलेन । तस्मात् स्वाध्यायाध्ययनेन यदवबोध्यते, तदत्र फलम् (कर्मावबोधनमेव इष्टं फलमित्यर्थः) । पदार्थाश्च अनवबुद्धा अनेन बोध्यन्ते (तेषाम्) क्रमश्च । तस्मात् यथा पदार्थस्वरूपमनवबुद्धमवबुध्यते, एवं क्रमोऽपि अनवबुद्ध एव । अतः स्वाध्यायेन पदार्थज्ञानं भावयेत् क्रमज्ञानं चेत्यर्थः । तस्मात् स्वशब्दः (क्रमः प्रतीयते) ।

तथा चान्यार्थदर्शनम् ॥ ७ ॥

भाष्यम्— एवं चान्यार्थं दर्शयति, 'व्यत्यस्तमृतया उपदधाति । व्यत्यस्तं षोडशिनं शंसति' 'आश्विनो दशमो गृह्यते । तं तृतीयं जुहोति' इति । यदि अनियमेनोपधानं शंसनं च, व्यत्यासवचनमनर्थकं स्यात् । नहि कथञ्चिदव्यत्यास इति । तथा आश्विनस्य तृतीयस्य होमानुवादो नावकल्पेत, यदि पाठक्रमेणानियम इति । तथा 'अभिचरता प्रतिलोमं होतव्यम् । प्राणानेवास्य प्रतीचः प्रतियौति' इति क्वचित् प्रतिलोमं निदर्शयदनुलोमं दर्शयति । तदुपपद्यते यदि पाठक्रमेण प्रयोगः । इतरथा सर्वमनुलोमं स्यात्, प्रतिलोमदर्शनं नोपपद्येत । तथा चतुर्थोत्तमयोः प्रतिगमानयतीत्युक्ते सति 'अतिहायेडो बर्हिः प्रति समानयति' इत्युच्यते । तेन बर्हिषश्चतुर्थता दर्शयति । सा पाठक्रमे नियामके अवकल्पते ।

शा— अनियमः इति प्राप्ते, ब्रूमः । 'यथापाठमनुष्ठानं तथैव प्रतिपत्तितः । स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥'

सोम— पूर्ववत् अनियमः इति प्रत्यवस्थानात्, श्रुत्यर्थाभ्यां जघन्यप्रमाणत्वात् संगतिः । सूत्रार्थस्तु— एकक्रतुगतत्वे पाठक्रमेणैवानुष्ठानं नियम्येत 'गन्धो देयः, पुष्पाणि देयानि' इत्यादौ पाठक्रमस्य पदार्थक्रमबोधकत्वात् गुणत्वगमात् इति ।

वि— 'प्रयाजेषु क्रमो नास्ति विद्यते वा, न विद्यते । पुरुषार्थाभावतो, नैव क्रमः पाठाद्धि यम्यताम् ॥'

भाट्ट— पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः । न च विधीनां तत्तत्पदार्थविधायकत्वात् क्रमस्य च स्वाध्यायत्वसिद्ध्यर्थत्वेन अध्ययनविध्युपयुक्तत्वात् पदार्थक्रमनियामकत्वम्, पदार्थानामनुष्ठानकाले स्मारकापेक्षायां मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात् तत्क्रमेणैव अनुष्ठानक्रमनियमोपपत्तेः । अत एव यत्र मन्त्राम्नानम्, तत्र तत्क्रम एव नियामकः । यत्र तु न तत्, तत्र विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्यैव उपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम् । पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनया अङ्गत्वेऽवगते प्रयोगविधिना प्रयोग विधानम् । लक्षणे पदार्थबोधकत्वं च क्वचिदनुष्ठेयपदार्थबोधकत्वम्, क्वचिच्च तत्सम्बन्धिद्रव्यदेवतादिबोधकत्वम् । तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः । अत एव देवताबोधकयाज्याऽऽदिक्रमादपि यागक्रमः । अतः पाठोऽपि क्रमनियामकः अपेक्षितत्वात् । अत एव यत्र न क्रमापेक्षा यथा सान्नाय्यादौ एकप्रयोगविधिपरिग्रहेऽपि सम्प्रतिपन्नदेवतात्वेन सहानुष्ठानात्, यत्र वा भिन्न-

प्रयोगविधिपरिग्रहो यथा तत्तत्प्रकर्मणाम्, तत्र न पाठो नियामकः । तत्र तु स्वाध्यायत्वसिद्ध्यर्थं एवोप युज्यते इति द्रष्टव्यम् ।

मण्डन— ' समिदादौ क्रम पाठात् । ' ५

शंकर— ' पाठक्रमात् क्रमश्च स्यात् । ' ६

* पाठक्रमन्याय । ५।१।४।४–७ । पाठक्रमन्यायानुसारेण प्रयोक्तृप्रधानप्राक्स्मृतिद्वारा प्रयमहविषोपस्थैव प्राक् स्मृति । सु पृ १५४२.

* पाठसादेश्य द्विविधम्– यथासंख्यपाठ सनिधिपाठश्चेति । ऐन्द्राग्नादीष्टीना काम्ययाज्यानुवाक्याना चाङ्गाङ्गिभाव , यथासंख्यपाठात् । वैकृताङ्गाना विकृत्यर्थत्व सनिधिपाठात् । मीन्या

* पाणिनिना नार्थानुशासन कृतम्, किं तर्हि ' यथा लोके अवस्थितोऽर्थस्तथास्थितस्य शब्दानुशासन कृतम् । था ६।१।६।२२ पृ १३७४

* पाणिनिकात्यायनपतञ्जल्यो व्याकर्तार भव विद्यमाना । वि १।३।९

* पातञ्जला ईश्वर जगत्कारण मन्यन्ते । ( इद चिन्त्यम् । के ) । सु पृ १२१

* ' पात्नीवतमुत्सृजन्ति ' इति न कर्मान्तरम्, पूर्वस्यैव उत्सृजतिशब्देन अवच्छेदो विधीयते । उत्सर्गान्तमेवेद पशुकर्म । २।३।८।१९. * पात्नीवत ग्रह आग्रयणात् ग्रहानुग्रहेण गृह्णाति । भा ३।२।१३।३१ * पात्नीवतस्य पशो पर्यग्निकरणान्तत्व गुण ' पर्यग्निकृत पात्नीवतमुत्सृजन्ति ' इति । नि २।३।८

※ पात्नीवते तु पूर्वत्वादवच्छेद । २।३।८। १९ ॥

त्वाष्ट्र पात्नीवत विधायाह– ' पर्यग्निकृत पात्नीवतमुत्सृजन्ति ' इति । तत्र सदेह किं त्वाष्ट्रस्य पर्यग्निकृतस्यैव उत्सर्गो विधीयते, उत तस्माद्यागान्तरमिति । आरम्भनिर्वापयो प्रत्युदाहरणत्वेन यज्ञिमदभिधान निराकृत्येदानीं प्रकृतोदाहरणेऽपि यज्ञिमदभिधान निराक्रियते । अत्राय पूर्वपक्षिणोऽभिसंधि – यद्यपि ' त्वाष्ट्र पात्नीवतमालभेत ' इति याग विधाय त प्रकृत्य श्रूयते ' पर्यग्निकृत पात्नीवतमुत्सृजन्ति ' इति, तथापि पूर्वेण गुणविधानासभवात् कर्मान्तर विधिरेवायम् । तथाहि, न तावत् पूर्वस्मिन् यागे विकल्पेन पात्नीवतशब्दोपनीता एका देवता विधीयते, उत्पत्तिशिष्टदेवताऽवरोधात् । नापि पर्यग्निकरणम्, अतिदेशप्राप्तत्वात् । नाप्युत्सर्ग , उत्पत्तिवाक्येनोपलब्धत्वात् । तेन थाय यथावाक्यगत् पत्नीवच्छब्दाभिधेयद्रव्य देवतान्वयार्थमनन्यतोऽय विधि कल्पितयज्ञिशब्दप्रतिपाद्य यागान्तरमेव द्रव्यदेवताविशिष्ट देवतागुणसामान्येन पूर्वयागप्रकृतिकम्, अग्नीषोमीयप्रकृतिकमेव वा निर्वापवि इति । एव प्राप्ते, अभिधीयते । भवेदेव यदि प्रकृतगुणविधिर्न सभवेत् । तत्र यद्यप्यन्ये गुणा न विधीयन्ते तथापि पर्यग्निकरणान्तानि अङ्गान्येव अत्र विधास्यन्ते । तथाहि, कथम्भावाकाङ्क्षी त्वाष्ट्रप्रयोगवचन प्रकृतौ क्लृप्तोपकारकाण्यङ्गानि अपेक्षमाण पर्यग्निकृतशब्दोपनीतान्येव तदन्तानि अङ्गानि औपदेशिकानि गृहीत्वा चरितार्थो नातिदेशलभ्यानि अङ्गान्तराण्यपेक्षते । ननु ' इडान्ता आतिथ्या सतिष्ठते ' इत्यादिवच्च नात्र पर्यग्निकरणान्ताङ्गप्रतिपादक शब्दोऽस्ति । अत कथ तदन्ताङ्गविधानम् । उच्यते । पर्यग्निकृतशब्दो हि निर्वृत्तयथाप्रसिद्धपर्यग्निकरणविशिष्ट द्रव्यमुपादत्ते । तच्च पर्यग्निकरण पूर्वाङ्गेषु कृतेष्वेव प्रकृतौ निर्वृत्तम्, तेन पर्यग्निशब्दोऽत्र प्रकृतचोदनाप्रतिपादितमन अङ्गकलापमुपनयति । स एवात्र उत्सृजत्याख्यातवर्तिना विधिना उत्सर्गानुवादेन विधीयते नैवोत्सर्ग । विधिप्रत्ययसनिधिनिक्षेपेण भाष्यकारेणोक्तम् ' उत्सर्गो विधीयते ' इति । न च वाच्यम् ' अतिदेशतोऽपि प्राप्स्यत किं विधिना ' इति । उत्तराङ्गावच्छेदफलत्वेन विधिसाफल्य स्यात् । न चैव सति परिसख्या, अतिदेशाप्राप्ते प्राप्तेन विधिप्राप्ते । नापि वाच्यम् ' यदुत्सृजन्ति तत्पर्यग्निकृत मित्येतावतैव वाक्यसमाप्तौ पुन पात्नीवतमिति विशेषणे विशिष्टानुवादात् वाक्यभेद स्यात् ' इति । यतो नोद्देश्य विशेषण पात्नीवतशब्दार्थ , विनाऽपि विशेषण प्रकरणादेव पर्यग्निकरणविधे त्वाष्ट्रसनिधानात् । किञ्च नियमानुवादो ऽयम् । अनुवादस्य च यद्यपि अन्यत्प्रयोजन नास्ति, तथापि भिन्नतद्धितान्तपदाभिधेयदेवतयो समुच्चये एकेनापि तद्धितान्तेन पदेन तदभिधान शक्यम्, नत्वेकतद्धितान्त पदाभिधेययो समुच्चितदेवतयोरग्नीषोमयो अन्यतरपदेनेति

ज्ञापनार्थं प्रकृतमन्त्राभिधानोक्तमेव प्रयोजनम् । अतः प्रकृतमन्त्राभिधाने त्वष्टुर्याग एव पर्यग्निकरणान्ताङ्गरीतिविधानमिति सिद्धम् । तदुक्तम् — 'प्रकृतमन्त्राभिधानात् प्रयोगोऽन्योऽवगम्यते । पर्यग्निकरणात् तस्मिन्नङ्गरीतिर्विधीयते ॥' इति । (वा.पृ.६०७) ।

नन्वेवं सति पूर्वोक्तेन न्यायेन सहास्य को विशेषः ? उच्यते, अत्र देवताऽभिधानं निराकृत्य गुणविधित्वव्युत्पादनेन स एव न्यायः स्थिरीक्रियते इति नानुपपन्नं किञ्चित् । प्रयोजनम्— पूर्वपक्षे केवलपत्नीवद्देवताकयागान्तरानुष्ठानम् । सिद्धान्ते नेति । सूत्रं तु पात्नीवते पत्नीवत्त्वसंबद्धस्य पूर्वत्वानुपदेशेनैव प्राकृतधर्मवत्त्वसंभवात् पर्यग्निकरणान्ताङ्गातिरिक्ताङ्गानामवच्छेदः फलं विधेरित्यर्थः । सौमा.

☐ पात्नीवते तु पूर्वत्वादवच्छेदः । २।३।८।१९ ॥

त्वाष्ट्रं पात्नीवतं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्युच्यते । अत्र किं त्वाष्ट्रस्य पर्यग्निकृतस्य एव उत्सर्गो विधीयते उत तस्माद्यागान्तरम्, उत्सृजन्तिरपि अग्नेरभिधाने न वा, उत्सृजतिः गुणविधिः, उत कर्मान्तर इति विचारे यागान्तरमिति पूर्वपक्षे सिद्धान्तमाह । तुशब्दः पूर्वपक्षं व्यावर्तयति । पात्नीवते 'पर्यग्निकृतं पात्नीवतम्' इति वाक्ये न कर्मान्तरविधिः । किन्तु पूर्वत्वात् प्रकृतमन्त्राभिधानात् पर्यग्निकरणान्ताङ्गकलापविधानेन उत्तराङ्गानामवच्छेदः निवृत्तिरुक्ता । तस्मात् पूर्वस्य कर्मणः अवच्छेदः पर्यग्निकरणान्ताङ्गकलापेन परिसमाप्तिः उत्सृजतिवाक्येनोक्ता इति सिद्धान्तः । के.

☐ पात्नीवते तु पूर्ववत् । ३।२।१३।३३ ॥

अग्निष्टोमे प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विनाः द्विदेवत्या ग्रहाः सन्ति । तेषु हुतेषु तदीयाः शेषाः आदित्यस्थाल्यामवनीयन्ते । अस्ति च तृतीयसवने आदित्यग्रहः । स च सशेषं हूयते । अस्ति च तृतीयसवने आग्रयणग्रहणविधिः । 'चतसृभ्यो धाराभ्यः आग्रयणं गृह्णाति' 'आग्रयणादुत्सिच्य द्वितीयां धारां करोति' 'आदित्यस्थाल्याः तृतीयाम्' 'आदित्यग्रहपात्रात् चतुर्थीम्' इति । तदेवस्मात् आग्रयणात् पात्नीवतग्रहग्रहणमाम्नातम् 'आग्रयणात् पात्नीवतं गृह्णाति' इति । अथ तस्मिन् पात्नीवते हुते तच्छेषे भक्ष्यमाणे भक्षमन्त्रे कथं देवतानिर्देशः कर्तव्यः इति विचारे पूर्वपक्षमाह । पूर्ववत् पूर्वाधिकरणसिद्धान्तरीत्या पात्नीवते सोमभक्षे सर्वेषां देवतानामुपलक्षणं कर्तव्यम् 'बाहिन्द्रवायुमित्रावरुणाश्व्यादित्यपत्नीवत्पीतस्य' इति पठनीयम् ।

ग्रहणाद् वाऽपनीतः स्यात् । ३४ ॥

वाशब्दः पूर्वाधिकरणसिद्धान्तवैलक्षण्यं सूचयति । पुनरभ्युन्नीतात्स्थैव उन्नयनेन मित्रावरुणादिदेवताऽन्तर्भूततया गतस्यापि ऐन्द्रवायवस्य मित्रावरुणादिदेवताऽन्तरसम्बन्धाभावात् न पूर्वदेवताऽपनयः इति युक्तम् । 'आग्रयणात् पात्नीवतं गृह्णाति' इति पात्नीवते तु द्विदेवत्याविशेषसंसृष्टात् आग्रयणात् गृह्यमाणस्य संसृष्टरूपेणैव पत्नीवद्देवताऽन्तरार्थतया ग्रहणात् पूर्वशेषः पूर्वदेवतासंबन्धादपनीतः स्यात् । तस्मात् पात्नीवतशेषभक्षमन्त्रे 'पत्नीवत्पीतस्य' इत्येवोहः । के.

* पात्नीवते त्वष्टुरतन्त्रता । वा. ३।१।१५।२६ । 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र पात्नीवच्छब्दस्य यागलक्षणार्थत्वात् त्वष्टुरनादरः 'पात्नीवतेऽनुपूर्वत्वादवच्छेदः' (२।३।८।१९) इत्यनोक्तः । सु. पृ. १०७३.

☐ पात्नीवते पशौ 'आज्येन शेषं संस्थापयति' इति वाक्येन कर्मान्तरविधानम् ॥

आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात् । ९।४।१४।५६ ॥

भाष्यम्— 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते 'आज्येन शेषं संस्थापयति' इति । तत्र सन्देहः किमाज्यं पूर्वस्मिन् (कर्मणि) प्रतिनिधीभूतम्, अथवा आज्यद्रव्यकं पूर्वस्मात् कर्मान्तरं विधीयते इति । किं प्राप्तम् ? प्रतिनिधिरिति । कुतः ? पात्नीवतमिति द्रव्यमुच्यते । उत्सृजति इति तस्यैव उत्सर्गः श्रूयते । शेषं इति उपयुक्तेतरत् विशसनं गम्यते । तत् आज्येन संस्थापयति इति पशोः कार्ये आज्यं श्रुत भवतीति । ननु पूर्वकर्म परिसमाप्तमित्युक्तम् । अत्रोच्यते ।

द्रव्योत्सर्गवचने भवत्ये, शेषशब्दे वा अपरिहृते पुन रसमाप्त पूर्वकर्म इत्याशङ्क्यते । तस्मात् प्रतिनिधीयते आज्य इत्याशङ्कामहे । संस्थापयति इति चापूर्वे नोपपद्यते ।

समाप्तिवचनात् ॥ ५७ ॥

भाष्यम्— इत्थमाशङ्कामहे । समाप्तिवचनमिद भवति 'संस्थापयति' इति । तेन मन्यामहे यत् पूर्वं पशुना आरब्धम्, तत् उत्सृष्टे पशौ आज्येन परिसमाप्यते इति । अपूर्वस्याम कर्मण उच्यमानस्य आरम्भ एव वक्तव्यो भवति । यत्तु अनभिधाय आरम्भ परिसमाप्तिरेवोच्यते, ततोऽवगच्छाम पूर्वस्यैव परिसमाप्तिः, नापूर्वं कर्म चोद्यते इति ।

चोदना वा, कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५८ ॥

भाष्यम्— कर्मान्तरचोदना वा । कुतः ? पूर्वस्य कर्मणः परिसमाप्तत्वात् । ननूक्त द्रव्योत्सर्गे शेषवचने वा अपरिहृते पूर्वकर्मण असमाप्तिराशङ्किता भवति । अथोच्यते । इद द्वयमपि परिह्रियते । संस्थापयति इति मङ्गलेन पात्नीवतशब्देन समाप्यते । तत्रायमर्थः, 'पात्नीवत संस्थापयति' इति । स एव यागो विधीयते । सपूर्वश्च स्थापयतिः प्रयुज्यते । अस्त्य कश्चित् धातुः सपूर्वो भावनावचनस्य प्रयोक्तव्य इति । तथा विरुद्धो भावनायामुच्यमानाया अर्थप्राप्तः संस्थापयति आलम्भतिरिव प्रयुज्यते, शेषशब्दश्च एव सादृश्यात् प्रयुज्यते । द्रव्योत्सर्गश्च अविरुद्धः एव यागे उच्यमाने । तस्मात् यथा अन्ये निर्वपत्यादय कर्मान्तरविधाने भवन्ति, एव तेऽविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति ।

अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५९ ॥

भाष्यम्— प्रसिद्धां वनस्पतेरनिज्या अत एव दर्शयति । कथम् ? 'यत् त्वष्टार च वनस्पतिं( निं चाया )नावादयन्ति, अथ यैतौ वारयन्ति, त्वाष्ट्री नग्र्मा प्रसवेन्ता, पानस्फन्ता दद्यादी । अथैतौ इष्टौ सिद्धन्' इति अन्तान्तरेण अनुमद्र ब्रुवन् वनस्पतीज्याया अभाव दर्शयति । नैयवरिष्क्यामी वन्याम् 'वनस्पतिं जुहोति' इति वनस्पतीज्या क्रियते । अथ परिसमाप्त पूर्वं कर्म, ततो हुता स्यात्, तत्र अभावदर्शनमुपपद्यते । तस्मात् पूर्वकर्म परिसमाप्तम् । इदमपि कर्मान्तरमिति ।

संस्था तद्देवतत्वात् स्यात् ॥ ६० ॥

भाष्यम्— अथ यदुक्तम् 'संस्थापयति इति चापूर्वे नोपपद्यते' इति, तत् परिहर्तव्यम् । अथोच्यते । अवस्थाया संस्थावचनमेतत् । तदपि पूर्वं पात्नीवतमिति समानदेवतत्वात्, समाप्तिसादृश्यं ज्ञायते । तत्र तत् पात्नीवतमारब्धम्, इह परिसमाप्तमिति । स एव सादृश्यात् संस्थापयति इति शब्द अवकल्पते इति ।

सोम—पूर्वाधिकरणे 'आज्येन शेष (सं)स्थापयति' इत्यादि लिङ्गदर्शनेन प्रसक्तम् । तत्र च यागान्तरविधिरेव एव तस्य लिङ्गत्वमुपपद्यते इति तस्य यागान्तरविधित्व समर्थनात् संगतिः । सूत्रार्थस्तु— 'आज्येन शेष (सं)स्थापयति' इत्यत्र आज्य प्रतिनिधिः स्यात् पशुद्रव्यस्य उत्सृष्टत्वेन कर्मणो द्रव्यापेक्षत्वादिति ।

वि— 'आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् । कर्मान्यद् वा, ऽपिमन्त्याप्तशेषसंस्थापनोक्तितः ॥ अङ्गरीत्या समाप्तवाद् देवतोक्त्यनुवर्तनात् । वाक्यच्छेदः सम्भवितु याग आलम्भनादिवत् ॥'

भाट्ट— पात्नीवतवाक्ये पुनराक्षेपः । तत्र हि 'पर्यग्निकृत पात्नीवतमुत्सृजति' इत्युक्त्वा 'आज्येन शेष संस्थापयति' इति श्रुतम् । अपूर्वत्वे हि शेषत्वस्याऽनुपपत्ते. पर्यग्निकरणवाक्ये पर्यग्निकरणानन्तर्यानीतोचमेव प्रधानयागकर्तव्यता अपहृत्य विधीयते । तत्करणे च विशसनादिपदार्थलोपेऽपि अन्याङ्गलोपे प्रमाणाभावात् शेष यत् स्विष्टकृद्यागादि, तत् आज्येन संस्थापयति इति विधीयते । यद्यपि च प्रयाजादौ आज्य प्रसक्तम्, तथापि स्विष्टकृद्वनस्पतियागादौ आज्यविधिर्न विरुध्यते । न च विशसनाभावादेव स्विष्टकृद्वनस्पत्यादीनाम् 'यस्य सर्वाणि हवींषि' इत्यनेनैव स्विष्टकृत्यपि आज्यप्राप्ति यद्यपि, नाभ्यादिनिमित्ताभावेन तदप्राप्ते. । विशसनस्य अङ्ग प्रधानमात्रप्रयुक्तत्वेन स्विष्टकृदर्थत्वमपि प्रयुक्तत्वेन । वनस्पतियागादौ आज्यविधेरपि उपपत्तेश्च । नहि अत्र कर्मान्तरे किञ्चित् प्रमाणमस्ति, प्रत्युत शेषसंस्थापनदोषोऽप्यापाति ।

इति प्राप्ते, 'यत् त्वष्टारं च वनस्पतिं (च) आवाहयसि अथ वैतौ यक्ष्यसि' इति पृष्टे 'त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, अनेनैतौ इष्टौ विद्यात्।' इति वनस्पतियागस्य अङ्गान्तरेण अनुग्रहवचनेन अभावावगमेः, तस्य च अपूर्वत्वमन्तरेण अनुपपत्तेः न पूर्ववाक्ये प्रधानापूर्वमात्रविधिः, अपितु तदन्ताङ्गरीतिविधिरेव अपूर्वत्वफलकः। यद्यपि चाक्रियमाणस्य वनस्पतियागस्य देवताऽऽवाहनमपि नैव प्राप्यते, तथापि सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव आवाहनविधिकल्पना। त्वष्टुस्तु प्रधानदेवतात्वादेवावाहनाविरोधः, प्रधानयागाभिप्रायेण च नवम्या अनुग्रहोक्तिः। अतश्च पूर्वकर्मणि शेषाभावेन आज्यविधानानुपपत्तेः गुणात् कर्मान्तरमेवेदं आज्यद्रव्यक अनुपहतपात्नीवद्देवत्यं उपांशुयाजप्रकृतिकम्। शेषवत्त्वावाक्यौ तु पूर्वस्य कर्मणः अत्यमात्समाप्यत्वया कथञ्चित् अनुवादकाविति। सिद्धिरिति रूढः। १३.

मण्डन— 'सशाख्येन पृथग्यतिः।' १४.

शंकर— 'आज्यरोपवचस्त्वपि।' यागः। १५.

* पात्नीवताधिकरणम्। ३।५।१३।३३–३४. 'पूर्वदेवतानुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्। * पात्नीवताधिकरणम्। २।३।८।११. मीको पृ. १११० 'त्वाष्ट्रपात्नीवताधिकरणम्' इत्यत्र द्रष्टव्यम्।

* (देवताकर्तृक)स्वीकाराङ्गीकरणावश्यकत्वं पात्नीवताधिकरणाद्यौ उपपादितम्। कौ. ३।२।१८।४०.

* विधिसत्त्व नि.सन्दिग्धस्य पात्नीवतपदस्य देवतापरत्वोपपत्तेः मानानुमापकत्वं इति पात्नीवताधिकरणपूर्वपक्षन्यायस्वरूपम्। कौ. २।३।८।११ पृ ५५.

* पात्नीवतपदस्य यान्यामन्त्रः 'ऐभिरग्ने सरथं याह्यर्वाङ्०' इति। भा. ३।२।१५।१७. * पात्नीवतग्रहस्य होममन्त्रः 'अग्ना३इ पत्नीवा३न् सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा' इति। वि. ३।२।१४. * पात्नीवतग्रहे पत्नीवानेव उपलक्षणीयः नान्यदेवता। या. ३।२।१३।३३–३४.

* पात्नीवतभक्षणाधिकरणम्। पात्नीवतग्रहभक्षणे पूर्वदेवता इन्द्रादयो नोपलक्षणीयाः, किन्तु 'पत्नीवत्पीतस्य' इत्येव पठनीयम्। (कुत्वाचिन्ता। वस्तुतस्तु 'इन्द्रपीतस्य' इत्येव पठनीयम्। के.)। ३।२।१३।३३–३४. 'पूर्वदेवताऽनुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्नीवतयागे साक्षात् पशुरेवाङ्गम्, न तु हृदयादीनि 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति उत्सर्गविधानात्। मीन्या.

* पात्नीवतसोमभक्षणे भयजितता देवाना नोपलक्षणम्। क्रत्वाचिन्ता। ३।२।१५, मीको. पृ. १९६७ 'निरादधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्नीवतसोमभक्षणमन्त्रे ('पत्नीवत्पीतस्य' इति) त्वष्टुर्नोपलक्षणम्। (क्रत्वाचिन्ता)। ३।२।१४. मीको. पृ. १९८९ 'त्वष्ट्रधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्रं अनुयाजार्थपृषदाज्यधारणार्थं प्रयाजान्यपात्रमित्यग्नीषोमीये पशौ। ५।२।८।१६. * पात्रं प्रयाजशेषधारणार्थं शेषधारणं च वाजपेयगतपशावन्यपशुवपाऽभिधारणार्थं न कर्तव्यम्। ४।१।१४. * पात्र धारणनैकत्वादिजन्यं दर्शपूर्णमासादिसर्वयागेषु विनियुज्यते। वि. ३।१।१२. * पवित्रं हि सोमः, न तस्मिन् भक्षिते पात्रं व्यापद्यते। तत चमसेन शक्यते होतुम्। भा. ३।५।७।२२. * पात्राणि 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति यज्ञपात्राणां प्रतिपत्तिः। 'दक्षिणे पाणौ जुहूमासादयति'। ततश्च यज्ञपात्राणि प्रथमप्रयोगमारभ्य आमरणान्तं धार्याणि। इति पुनः पुनः प्रयोगान्तरेषु तान्येव प्रयोक्तव्यानि। वि. ११।३।११, * पात्राणि एकस्मिन् प्रयोगे प्रयुक्तान्यपि पुनः प्रयोगान्तरे प्रयोगानर्हाणि न भवन्ति। प्रक्षाल्य प्रक्षाणि। ११।३।१२। तान्येव पात्राणि प्रक्षाल्य पुनः पुनर्ग्राह्याणि, न [illegible] इच्छया भेदः। अन्त्येष्टिपर्यन्तं तद्धारणस्यावश्यकत्वात्। ११।३।१२. * 'पात्राणि तु ददेदग्नौ यजमाने वृथा मृते' अयं क्रियाप्रतिनिधिनियमविधिः। बाल. पृ. २३. * पात्राणि सर्वे साधारणानि पृथक्त्वेन कर्तव्यानि। ६।६।६।३३–३४. * पात्रैः ऐष्टिकैरेव सौम्यचरोः उपनीयपुरोडाशादीनां च ज्योतिष्टोमे होमः, न तु सौमिकैः चमसादिभिः प्रसङ्गसिद्धिः। १२।१।८।१०–११, * पात्राणां यजायचरवाक्येन प्रकरणादाधानाङ्गत्वबाधः।

सु. पृ. १०६३. ● पात्राणां यज्ञियानामाधानमारभ्यैव यावज्जीवं धारणं कर्तव्यम् । ११।३।१४. ● पात्रे एकस्मिन् बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः । ३।५।१३।३६–३९.

■ पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् । १२। १।४।१०॥

. सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि यथा सवनीयः पशुः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः इति, तेषां होमः दार्शिकैः पात्रैः कर्तव्यः । पात्रेषु च तेषां किं प्रसङ्गः स्यात् । यथा सौमिक्या वेद्या दार्शिक्या प्रसङ्गः, तथा सौमिकैः पात्रैः दार्शिकपात्राणां प्रसङ्गः । होमार्थत्वात् सौमिकान्यपि पात्राणि होमार्थानि । तत्प्राप्तैः सिद्धिः इति पूर्वः पक्षः ।

न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् । ११ ॥

सोमे यानि दर्शपूर्णमासप्रकृतिकानि कर्माणि, तेषां होमे दार्शपूर्णमासिकानि पात्राणि प्रयोक्तुं न्याय्यानि । दार्शिकैः पात्रैः तादृशो होमः कर्तव्यः । प्रयुक्तत्वात् सौमिकतन्त्रस्य प्राक् आज्यासादनान्तस्य प्राकृतस्य तन्त्रस्य प्रशान्तत्वात् 'अथ यद्गृहीत्वा आज्यानि सोममासाद येयुः अपघ्नन्ति यजमानम्' इति वाक्येन । अप्रयुक्ते यदि दार्शिकं पात्रं प्रयुक्तं न स्यात् तदा सौमिकैः पात्रैः दार्शिकानां पात्राणां प्रसङ्गः स्यात् । तानि तु अत्र प्रयुक्तान्येव पूर्वं इति दार्शिकैरेव सवनीयपुरोडाशादि होमः स्यात् इति सिद्धान्तः । के.

● पात्रेषु दार्शपौर्णमासिकेषु सवनीयपुरोडाशसौम्य चरुहोमयोः सौमिकैः पात्रैर्न प्रसङ्गः । ज्योतिष्टोमे । १२।१।४।१०–११.

■ पात्रापात्रविचारस्तु धेनुपन्नगयोरिव, इति न्यायः । यथा– 'तृणाभ्यवहारे क्षीरं क्षीराभ्यवहारे विषम्' इति । गावस्तृणं खादन्ति क्षीरं ददति । सर्पाश्च क्षीरं पिबन्ति विषं ददति । एवं ज्ञात्वा पात्रापात्रविचारः कर्तव्य इति भावः । माद्दशी. ७७७.

● पात्रन्यायेन प्रधानगुणापेक्षया संमार्गमुचां भेदेन कर्तुं शक्यत्वात् न प्रसङ्गोपपत्तिः ( पात्रभेदन्याय एवायम्। ५।२।८।१६ ) । कौ. २।१।५।१२ पृ. ८५, ● न च एवमपि पात्रन्यायेन हविरासादनरूपस्य कार्यस्य पृथगनुष्ठेयत्वात् न प्रसङ्गोपपत्तिः, कर्तृप्रचारार्थमनुष्ठितेनैव सौमिकवेदिकरणेन अदृष्टविशेषावच्छिन्नाहवनीयप्रदेश-रूपाया वेदेः सिद्धत्वात् वैष्टिकवेदिकरणनिवृत्त्या प्रसङ्गोपपादनात् । २।१।५।१२ पृ. ८४–८५.

● सानाय्यपात्रप्रोक्षणे 'शुन्धध्वम्' इत्यादिर्मन्त्रः संनिधिपाठात् विनियुज्यते । वि. ३।३।५

■ पात्रभेदन्यायः । पात्रन्यायः । अग्नीषोमीये पशौ अनुयाजार्थस्य पृषदाज्यस्य धारणार्थं पात्रं भिन्नम् ॥

विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते 'पृषदाज्येन अनुयाजान् यजति' इति । तत्र संदेहः किं प्रयाजानुयाजानामेकं पात्रं आज्यस्य पृषदाज्यस्य च धारणार्थम्, उत भिद्यते । किं प्राप्तम् ? एकमिति । कुतः ? प्रकृतौ एकम् । प्रकृतिवदिहापि एकेन भवितव्यम् । एवं प्राप्ते, ब्रूमः । पात्रभेदः स्यात् । कुतः ? अर्थभेदात् । शुद्धस्य प्रयाजा अर्थः, पृषतोऽपि अनुयाजाः । पृषति गृह्यमाणे प्रयाजानां वैगुण्यम्, शुद्धे अनुयाजानाम् । न च एकस्मिन् पात्रे विविक्तं ग्रहणं कर्तुम् । मर्यादायामपि क्रियमाणायां प्रदीयमानं संसृज्येत । अपि च आकारभेदात् उपभृतः उपभृता विहन्येत । पाणिमात्रपुष्करा हि सा एकपुष्करा च । अथोच्येत पृषदाज्यमपि आज्यमेव इति मिश्रत्वं न दोषायेति । नैतदेवम् । प्रकृतौ उत्पवनावेक्षणयोः प्रयोजनभेदात् यत् आज्यस्य अपरेण द्रव्येणासंसर्गः । एवं चेत् अनुपयन्, यत् प्रयाजाः पृषदाज्येन इज्येरन्निति । अपि च एवं सति अन्यस्य हविषः पात्रे विन्यासः अपनीयते । न च शक्यं प्रयाजकार्ये अवसिते अनुयाजार्थं ग्रहीतुम् । प्रकृतौ एककाले ग्रहणम् । इहापि एककाल्येन कर्तव्यम् । तस्मात् पात्रभेद इति ।

टुप्—( पूर्वपक्षमाह— ) प्रकृतौ उपभृत एकत्वम् ('अष्टावुपभृति गृह्णाति' इत्युपादेयगतत्वात्) भिन्नमिति ( चेत्ः ) तत्रैव पृषदाज्यग्रहणे प्रसक्ते

कालान्तरे। तत्र यथा सत्यपि प्रधानकालत्वे अङ्गाना कर्तुरेकत्वाद्विप्रकर्षं, न तु विप्रकर्षदोषात् कालान्तरमुपादीयते, एवमाज्यग्रहणद्वयोर्भेदेऽपि नैव पात्रान्तरमुपादेयम्। (तदेतन्नानुग्रहार्थं तु विप्रकर्षं एवाङ्गीकर्तव्य इति) एवं प्राप्ते, ब्रूमः। यथैव हि प्रकृतौ एकपात्रता निरपेक्षिता एवमेवात्रापि। इह तु (यत्र द्रव्यभेदात् उभयानुग्रहार्थमेव) पात्रान्तरं निराश्रितम् (नैक पात्रत्वम्)। किं कारणम् 'प्रयाजान् गृह्णमाण मन्त्रःभ्यासगतक्रमात् अनुयाजान्यग्रहणमुपन्यापयति। (एव तावत् निराश्रितमपि पात्रैकत्वमिह बाध्यते इति सिद्धान्तितम्। मतान्तरमाह–) अथवा, 'अष्टावुपभृति गृह्णाति' इति अपयुक्तोत्पन्नस्य (चतुर्ग्रहणद्वयस्य केवलम्) वाक्यान्तरेण ('अष्टावुपभृति, प्रयाजानुयाजेभ्यस्तत्' इत्यनेन) प्रयाजानुयाजार्थता कृता, न तु द्वयमूर् (प्रयाजानुयाजार्थेन) विधीयते (अतश्च तदेकत्वम्)। अर्थान्यथा तु सा (यतश्च पात्रे ग्रहीतये सति शुक्लधूमसे आज्यानयापाल्वे व्यापृतत्वात् अप्रयाजा उपभृत् अनुगते)। न च अर्थप्राप्त विवक्षितमित्युच्यते। तस्मात् भिन्नत्वात् द्रव्ययोः अर्थात् पात्रभेदः। (अत्र विचारे प्रसङ्गे कथमुपनिपतितेन अत आह–) पूर्वोत्तरपक्षयोः क्रमान्यत्वेन उपनिपात। (पूर्वपक्षे प्रयाजहोमानन्तरं पृथङ्गृहणम्, सिद्धान्ते तु प्रकृते एव स्थाने इति)।

शा— किं पात्रभेदेन सह्यमेवोपभृति प्रयाजानां अनुयाजार्थस्य च [illegible] ग्रहीतव्यम्, उत एककाले पात्रभेदेनेति चिन्त्यते। तत्र 'पदार्थत्वाद् श्रुतत्वाच्च पात्रैकत्वस्य सम्भवः। गुणत्वात् पाठकल्प्यत्वात् क्रममात्रं [illegible] बाध्यते॥' तत्र एकस्मिन्नेव पात्रे प्रयाजार्थं प्रथमं गृहीत्वा प्रयाजेषु हुतेषु पश्चात् पृथगेव ग्रहीतव्यम्। इत्येवं प्राप्ते, उच्यते। 'उभयोर्ग्रहणाद्भिन्नात् पात्रैकत्वस्य सम्भवः च। विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम्॥' तथा च आज्यग्रहणकाले एव पात्रान्तरमुपादाय पृथगेव ग्रहीतव्यम्। ७.

सोम— पूर्वत्र तद्रूपैक्यदर्शनात् इह तद्भेदेऽन्य इति प्रत्यवस्थानात् सङ्गतिः। सूत्रार्थस्तु– विकारे पशौ अनुयाजानामर्थभेदात् द्रव्यभेदात् पात्रभेदः स्यादिति।

वि— 'प्रयाजानूयाजसिद्ध्यै पात्रैक्यमुत भिन्नता।, एकोपभृद् द्वयोरर्थे दृष्टाऽतो विकृतौ तथा॥, विकृतौ पात्रभेदोऽस्तु तुल्यत्वात् पृथगाज्ययोः। एकपात्रे प्रहाशक्तेः ऐक्यं प्रकृतौ द्वयोः॥' तस्मात् पृथक् पात्रम्।

भाट्ट— देशे पशौ अनुयाजानाम् 'पृषदाज्येनानूयाजान् यजति' इति पृषदाज्य श्रुतम्। प्रयाजाना तु शुद्धमेवाज्य प्रसिद्धम्। प्रकृतौ च उपभृति एकस्मिन्नेव पात्रे प्रयाजार्थमपि चतुर्गृहीत गृहीत्वा तस्मिन्नेव काले अनुयाजार्थं चतुर्गृहीत गृहीतमासीत्। अत्रापि तथैव ग्रहणे प्रयाजाज्यस्य दधिमिश्रणेन तत्पृथनावैषम्यो अप्रद्वा-र्थत्वप्रसङ्गेन अप्राकृतकार्यान्तरितापत्तेः तदानयनवेलाया प्रयाजाज्यस्य न्यूनत्वापत्तेश्च। अतोऽत्रापि पात्रैकत्वमनुरोध्य क्रमो बाध्यता विपरीतं वा इति चिन्तायाम्, पात्रैकत्वस्य श्रुतत्वात् पदार्थत्वाच्च बाधानुपपत्तेः क्रमस्यैव मन्त्रपाठ कल्प्यत्वेन पदार्थगुणत्वेन च दौर्बल्यात् विप्रकर्षोपाधिकरण-न्यायेन (११३।३४–६) बाधः। एवम् 'अष्टावुपभृति' इत्येतद्वाक्याविगमनानुपपत्त्यादिस्वतन्त्रत्वैककालत्वस्यापि बाधः। न च प्रकृतौ तयोः स्वतन्त्रकल्पनादिना नलाभेऽपि विकृतौ अतिदेशेन प्राप्तयोस्तयोः समरात् न अन्यानन्तमिति शङ्क्यम्। स्वतन्त्रकल्पनया विकृतौ असंभवेऽपि पदार्थतद्गुणत्वादिकृतबलाबलस्य विकृतावपि निश्चयकत्वोपपत्तेः। सम्प्रति विकृतौ नियामकान्तराभावे प्रकृत्यापि नयत्वस्य गत्वक्तत्वात्ये चयै चतु वत्या मुष्टिनिष्ठायस्य नयन्यसम्येव नियामकता। अतः तस्मिन्नेव पात्रे अनुयाजकयनेनापि पृषदाज्यग्रहणम्। इति प्राप्ते, पात्रैकत्वस्य पदार्थत्वेऽपि अनुष्ठेयपदार्थप्राप्तिक्रमस्य तदभावाभावात्, प्रयुत साक्षाद्ग्रहणादभूतक्रमस्वाला-चरेक्षया ग्रहणद्वयभूतसाक्षाद्विरत्वस्य अङ्गगुणविरोधन्यायेन दौर्बल्यात् तदेव उपभृद्द्वय संपाद्य शुद्ध दधिमस्तु च चतुर्गृहीतद्वय ग्राह्यम्।

मण्डन— 'भिन्न पशौ स्यात् पृषदाज्यपात्रम्।'

शंकर— 'पृषदाज्ये पात्रभेदः।'

* पात्री तन्त्रेणैव राजसूये नानाबीजेष्टौ । भाट्ट. ५।२।७ * पात्र्याम् ' स्योन ते सदनम् ' इत्यादिपूर्वार्धरूपमन्त्रेण आज्येन पुरोडाशस्य सदन कृत्वा ' तस्मिन् सीद ' इति मन्त्रेण पुरोडाशासादनं कार्यम् । वि. ३।३।८.

* पाथिकृतादीनां नैमित्तिकाना यागाना पाठक्रमो न नियामकः, किन्तु यथानिमित्तमनुष्ठानम् । ५।३।१२.

* पाथिकृतीष्टिर्वैश्वानरेष्टिर्वा दर्शस्य पूर्णमासस्य वा स्वकाले अकरणे प्रायश्चित्तं विकल्पेन । १२।३।९।१६.

* पादनिचृत् गायत्री । पादेषु अक्षराणि ७।७।७। उदा० ' त्यावतः पुरूवसो ' ( ऋसं. ८।४६।१ ) । के.

* पादप्रग्रथनेन व्रतसामगान गवामयने । वि ९।२।६ वर्णके ४.

* पादव्यवस्था ऋक्षु अयसंवलितेऽर्थे वृत्तवशेन । धा. २।१।१०।३५.

* पादसंगतिः । पादाना ऐकार्थ्यनियमाभावात् नावश्यं सर्वत्र पादसंगतिः अपेक्षणीया । एकप्रकरणगताना तु अधिकरणाना प्रकरणप्रतिपाद्यैकार्थ्यनियमाय प्रकरणसंगतिः अवश्यापेक्षणीया । सु. पृ. ३७०.

* पादिनः ऋत्विजः । पादोऽस्ति प्रत्येक येषा दक्षिणायाश्चतुर्थांशः ते पादिनः । द्वादश गावः पूर्णा दक्षिणा, तत्पादः तिस्रो गावः । उन्नेता अध्वर्योः, पोता ब्रह्मण., प्रावस्तुत्. होतु , सुब्रह्मण्य उद्गातु', एते पादिनः । वि. १०।३।१३.

**पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥**

' सौमेन्द्र चरु निर्वपेत् श्यामाक सोमवामिनः ' इति श्रूयते । अथ चरु. किं लौकिके सोमवमने यत् क्षत्रयज्ञेषु दशगवेषु वा धातुसाम्यार्थं भावेऽन्यमाने सोमे सति यदा चित् जायमाने, किंवा ज्योतिष्टोमे तद्विकृतिषु वा सोमे पीते जायमाने वमने स्यात् इति विचारे पूर्वपक्षमाह । पानव्यापत् यदि पीतस्य सोमस्य व्यापत् वमन स्यात् लौकिकविषयम्, तदा इय श्यामाकेष्टिः स्यात् । तद्वत् अवस्थितिहेतिपूर्वपक्षवत् । लोके धातुसाम्यार्थमासेविते सोमे वमनेन विनष्टे धातुसाम्य न स्यात् । इन्द्रियवीर्यहानिः स्यात् इति लौकिके सोमवमने दोषः स्यात् । वैदिके तु न दोषः स्यात् । तत्र हि ' शेषः पातव्य. ' इति शास्त्रात् चोदिते निष्पादिते यद्यपि वम्यते तथापि कृतः शास्त्रार्थः इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि वमने सोमेन्द्रश्चरुः स्यात् इति पूर्वः पक्षः ।

**दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् । ३३ ॥**

पूर्वपक्ष सूत्रेण प्राप्त तुशब्देन निरस्यन् सिद्धान्तमाह । वैदिके सोमपाने वमने सति सोमेन्द्रश्चरुः स्यात् न लौकिके । दोषात् वमने दोषश्रवणात् ' इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमति ' इति । लौकिके हि यस्मात् अर्थात् धातुसाम्य प्रयोजनमभिप्रेत्य सोमपाने कृते, तत्रापि वमने न दोषः स्यात् । वमनायैव हि तं पिबन्ति लोके । तस्मात्र लौकिके सोमेन्द्रश्चरुः स्यात् । वैदिके दोषात् चरुः, लौकिके तु दोष एव नास्ति इति सिद्धान्तः । के.

* पानव्यापदि वैदिकस्य पीतसोमपानस्य वमने एव सोमेन्द्र श्यामाकश्चरुः प्रायश्चित्तम्, न लौकिकस्य । ३।४।१२।३२–३३ । स च यजमानस्यैव वमने, न ऋत्विजः । ३।४।१३।३४–३६.

* पानव्यापदधिकरणम् । ' वमनाधिकरणम् ' द्रष्टव्यम् । ३।४।१२।३२–३३.

* पापमपि अप्रतिग्राह्यात् प्रतिगृह्णतः वैदिकेऽपि प्रतिग्रहे । भा. ३।४।१०।२८. * पापाभिवर्तधर्मप्रतिषेध. । या. ३।४।४।१३ पृ. ९११. * पापाभिवृत्तस्य प्रायश्चित्तश्रवणम् । सोम. ६।८।४.

* ' पापक्षयो हि शुद्धस्य धर्मयोग्यत्वमेव वा । ' या १।३।२।८ पृ. १८९.

* पापक्षयक्रतूपकारादिशेषत्वेन प्रयुज्यते दर्शादिक भेदनहोमादिक च । बाल. पृ. १०७

* पापफलं हि ( कर्म ) अकर्तव्यम् । भा ३।४। १०।२८. * विधेय कर्म पापफलं न समवैति । या ३।४।१०।२८ पृ. ९५८.

* यदा द्रविडादिभाषायामीदृशी स्वच्छन्दकल्पना तदा पारसीबर्बरयवनरोमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्मः । या. १।३।५।१० पृ. २३६.

* सत्रान्तरधर्मभूतपश्वाज्ञानाच्चोदकत्वेन ज्योतिष्टोमस्य परार्थतया उपादानात् 'पारार्थ्ये चैक इष्यते' इत्यनेन न्यायेन एकस्यैव ज्योतिष्टोमस्य प्राथम्यावगमात् नैतद्वशेन सर्वभाग्गणानां द्वादशाहानां ज्योतिष्टोमपश्वाज्ञानानुगतिः। सु. पृ. ९८२.

● पारिप्लवत्वम्। परितः प्लवन्ते इति परिप्लवाः। ते एव पारिप्लवाः। तेषां भावः पारिप्लवत्वम्, अव्यवस्था इति यावत्। सोम ७।१।१.

■ पारिषद्न्यायः। 'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः पारिषदः सभ्यः। तेषामेकस्मिन् मृतेऽपि अवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति, तथा प्रकृतेऽपीत्यर्थः। साहस्री. १५.

■ 'पार्थिवावयवमायाः दोषतोयाद्यनुग्रहात्। जरायुजाद्यो देहा दृष्टा भुवि चतुर्विधाः॥' या. ३।१।७।१२ पृ. ७०२.

* पार्थुरश्मं राजन्यस्य ब्रह्मसाम कुर्यात्। भा. ६।१।७।२८। इति द्वादशाहे भवति वचनम्। ६।६।३। १७। इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। ४।३। २।४. (वस्तुतस्तु इदं वचनं द्वादशाहे एव, ज्योतिष्टोमे नौधसं ब्रह्मसाम, न तु बार्हद्गिरादीनि तत्र श्रूयन्ते। भाष्यकारेण ज्योतिष्टोमग्रहणमन्यावशया कृतमिति तन्त्ररत्नादौ स्पष्टम्)। * पार्थुरश्मं साम अश्वमेधे समाम्नायते। टुप्. ६।१।७।२८.

* पार्वणौ होमौ स्रुवेण जुहोति 'स्रुवेण पार्वणौ जुहोति' इत्युक्तत्वात्। या. २।६।१।१.

■ पार्वणन्यायः। पार्वणहोमयोर्विकृतौ नातिदेशः॥

पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि। ९।२।१८।५०॥

भाष्यम्— स्तो दर्शपूर्णमासौ। तयोः समामनन्ति 'स्रुवेण पार्वणौ जुहोति' इति। सौर्यादिषु वैकृतेषु कर्मसु भवति सन्देहः, किं तेषु पार्वणहोमौ कर्तव्यौ, न वेति। तत इदं तावत् परीक्ष्यम्, किं कालाभीज्या पार्वणहोमौ उत समुदायाभीज्येति। कालाभीज्यायां तयोः प्रवृत्तिः। समुदायाभीज्यायामप्रवृत्तिः। कुतः उभयथा। उभयत्र प्रसिद्धेः। उभयत्र हि पर्वशब्दो लोके प्रसिद्धः, काले समुदाये च, आ हिमात् आ च कुमारीभ्यः। किं तावत्प्राप्तम्? कालाभीज्येति। ततः कालगता प्रसिद्धिर्व्यपदिश्यते। एवं प्राप्ते, ब्रूमः। पार्वणयोर्विकृतेषु कर्मस्वप्रवृत्तिः। कुतः? समुदायार्थसंयोगात्। सत्र समुदाये प्रसिद्धिर्व्यपदिश्यते। काले प्रसिद्धिं परिहरिष्याम इति। अतः समुदायवाचित्वात् पर्वशब्दस्य समुदायस्याभिधायकत्वात् वैकृतेष्वप्रवृत्तिरिति।

कालस्येति चेत्। ५१॥

भाष्यम्— इति चेत्पश्यसि, कालस्य पर्वशब्दो वाचकः, तस्मात् कालाभीज्येति। तत् परिहर्तव्यम्। आभाषान्तं सूत्रम्। प्रकरणेन विशेष्यते।

(अत्र आनन्दाश्रमीये 'प्रकरणेन विशेष्यते' इति उत्तरसूत्रस्य अवतरणात्वेन सूत्रात् प्राक् मुद्रितम्। जीवानन्दीये विवलकरीये च 'परेण विशेष्यते' इति पङ्क्तिः, सा च पूर्वसूत्रभाष्यान्ते लिखिता।)

नाप्रकरणत्वात्। ५२॥

भाष्यम्— नास्ति कालस्य प्रकरणम्। अस्ति तु समुदायस्य। तस्मात् प्रकरणेन विशेषेण समुदायवाची गृह्यते, न कालवाची। अत्राह। न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचिता बाधितुम्। दुर्बलं हि लिङ्गात् प्रकरणम्। उच्यते। नायमुभयत्र पर्वशब्दो वर्तते। यदि कालवचनः, तत्सम्बन्धात् समुदाये गम्यते। यदि वा समुदायवचनः, तत्सम्बन्धात् काले। अन्यतरवचनो युक्तः, नोभयवचनः। तत्र समुदायवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति। अपि च, पृणातेः पर्वशब्दः। पृणातिश्च दाने प्रसिद्धः। दानानि च समुदायाः। तस्मात् समुदायाभीज्या। एवं शब्दावयवप्रसिद्धिरनुगृहीता भवतीति। तस्माद्विकृतेषु पार्वणयोरप्रवृत्तिः।

मन्त्रवर्णाच्च। ५३॥

भाष्यम्— मन्त्रवर्णाच्च पत्न्यादनुवादो भविष्यति। 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इति च। तस्मादपि समुदायाभीज्येति।

तदभावेऽग्निर्वदिति चेत् ॥ ५४ ॥

भाष्यम्— नैतदस्ति, यदुक्तं वैकृतेष्वप्रवृत्तिरिति । तदभावेऽपि, यद्यपि समुदायवचनोऽयम्, न च वैकृते ष्वयमस्ति समुदाय, तथापि पार्वणहोमौ भवेतामेव । कुत । अग्न्या एवशब्दिका देवता भविष्यन्ति । समुदायो वा असंनिहितोऽपि यक्ष्यते चोदकानुग्रहार्थेन । यथा 'अग्निमग्न आवह' इति संनिहित असंनिहितो वा अग्निरावाहनार्थेन आवाह्यते । एवमिहापीति ।

नाधिकारिकत्वात् ॥ ५५ ॥

भाष्यम्— नैतदेवम् । आधिकारिक हीद वचन अधिकार मतम्, यस्याधिकारस्तस्य गुण विदधातीति । आग्नेयादीना चाधिकार । ते चात्र देवता । तेषा होमौ देवताय । एव यत्र सा देवता नास्ति, तत्र तदर्थौ होमौ न करिष्यते । तस्मात् पार्वणहोमयोर्वैकृतेभ्यो निवृत्ति ।

( ये—८०—८५ इति षट् सूत्राणि भाष्ये एकाधिकरणत्वेन व्याख्याय उत्तरे द्वे ( ८६—८७ ) सूत्रे अधिकरणान्तरत्वेन व्याख्याते । वार्तिककारेण तु तत् दूषयित्वा प्रकृताधिकरणप्रयोजनप्रतिपादनपरत्वेन ते सूत्रे व्याख्याते । तत्र वार्तिक अत्र वा अधिकरणे निवेश्य उत्तरस्मिन् भाष्यकारीयाधिकरणे वा निवेश्य इति सन्दे पतिता वयम् । परन्तु 'पार्वणहोमयोर्मन्त्रस्यैव' इत्युत्तराधिकरणे एव निवेशितमस्माभिरिति तत्रैव द्रष्टव्यम् । )

शा— 'स्रुवेण पार्वणौ जुहोति' इति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिषु अतिदिश्येते, नेति संशय । ( तदर्थं च किमारादुपकारकौ होमौ, उत संस्कारार्थौ इति, तदर्थं च किं पर्वशब्द कालवचन, उत आग्नेयादिसमुदायपर इति चिन्ता । ) तत्र 'काले शब्दस्य मुख्यत्वात्' कालार्थौ इत्येह मन्यते । ( सिद्धान्तमाह— ) पृणातेर्दानकर्मत्वात् कर्मण्यपि च मुख्यता ॥' पृणातेर्दानकर्मण पर्वशब्द । स च दीयते यस्मिन् इत्यधिकरणव्युत्पत्त्या कालेऽपि मुख्य, भाव व्युत्पत्त्या कर्मण्यपि ।

सोम— सूत्रार्थस्तु— पार्वणहोमयोर्विकृतिषु अप्रवृत्ति, पर्वशब्दस्य कर्मसमुदायार्थपरत्वात् । तत्त्व तद्भीष्यति ।

वि— 'पौर्णादौ पार्वणौ होमौ स्तो न वा, कालदेवतौ । न, सदेवतौ समाविकारतात्र तौ ॥' ( 'पूर्णम नाजिन वय पूर्णमास यजामहे' इत्यादि पूर्णमासयागदेवताहोममन्त्र । 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' इत्यादि दर्शयागदेवताहोममन्त्र । )

मण्ड— दर्शपूर्णमासयो 'स्रुवेण पार्वणौ होमौ जुहोति' इति श्रुतम् । तत्र सप्तम्यभिन्न कर्मद्वय श्रुतस्व देवताविशिष्ट विधीयते । न च हवि समभिव्याहाराभावान् नाय देवतातद्धित, सर्वसामान्यवाचिन एव योग्यता देवतापरत्वोपपत्त । तदिद होमद्वय विकृतावतिदिश्यते न वेति चिन्तायाम्, प्रयाजवदतिदेशसंभव । न च पर्वशब्दवाच्यकर्मसमुदायस्यैवात्र देवताभूतस्य उद्देश्यत्वेसस्कारात्, तस्य च विकृतौ अभावान्नातिदेश, पर्वशब्दस्य काले मुख्यतया कर्मणि लक्षणाङ्गीकारे प्रमाणाभावात् । अतोऽत्र कालस्यैव देवतात्वात्, तस्य चासंस्कार्यत्वात् आरादुपकारकयोरनयोर्युक्त एवातिदेश । यदि तु कालस्यापि कर्मासाद्गुणोपयोगात् स्मृतिमत्त्वेन यजदेशस्य स्यापि पुनरावृत्त्युपक्रमसमानानिमित्तकाश्रद्धापरिहारार्थं अनन्तरदेव सर्वेषोपपत्ते आयतनविकल्पलाभाय कालसंस्कारकत्वमिष्येत, तथापि विकृतौ तत्कालीनायामतिदेशे बाधकाभावात् । अन्यकालीनायामपि पशुपुरोडाशादिवत् उद्देशेनातिदेशोपपत्तेर्न काचित् क्षति । अस्तु वा पर्वशब्दस्य पृणातेर्दानवाचित्वात् अधिकरणव्युत्पत्त्या कालवाचित्ववत् भावव्युत्पत्त्या कर्मवाचित्वस्यापि समत्वात् प्रकरणात्कर्मपरत्वमेव, तथापि पर्वशब्दवाच्यस्यापि आग्नेयादिसमुदायस्य निरुक्तानपि देवतात्वसंभवादारादुपकारकयो अनयोरतिदेशे न किञ्चिद्बाधकम् । यदि तु सन्निपत्योपकारकत्वलाभार्थं देवतासंस्कारकत्वमिष्येत, तथापि पर्वत्वस्य दानत्वपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावादपूर्वसाधनत्वेन रूपेण आग्नेयादीना प्रत्येकमेवोद्देश्यत्वावगते हविरभिमर्शनमन्त्रवत् विकृतावतिदेशोपपत्ति । न च

एकसमुदायाभावे न तत्सम्कारकहोमातिदेश इति नावमिकप्रयोजनम् । सङ्कर्ष २।२।३

■ पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् ॥

उभयोरविशेषात् । ९।२।१९।५६ ॥

**भाष्यम्**— इदमिदानीं संदिह्यते । किमुभौ होमौ पौर्णमास्याममावास्यायां च, उत पौर्णमासीहोम पौर्णमास्यां अमावास्याहोम अमावास्यायामिति । किं प्राप्तम् ? उभावपि उभयत्र । कुत ? उभयोर्हि प्रकरणे उभावपि आम्नातौ । तस्मादुभयत्र भवितुमर्हत ।

यदभीज्या वा, तद्विषयौ । ५७ ॥

**भाष्यम्**— वाशब्द पक्ष व्यावर्तयति । नैतदस्ति, उभयत्रोभयत्रेति । यदभीज्या, स तत्र भवेत् । तस्य हि स उपकारक । अनुपकारक इतरस्य । न च अनुपकारक कर्तव्य । समुदायप्रधानौ अत्र होमौ इत्युक्तम् । तस्मात् यदभीज्या, तद्विषयौ भवेतामिति ।

**टुप्**— ( अनन्तरम् 'उभयोरविशेषात्' इत्यादि सूत्रद्वयम् । तत् अधिकरणान्तरमिव [ इयशब्दो घोतक मनुसृत्य ] भाष्यकारेण व्याख्यातम् । तदाक्षिपति— ) 'उभौ होमौ पौर्णमास्याममावास्यायां च' इत्येतदयुक्तम् ( अधिकरणान्तरस्य पूर्वपक्षाभावात् । तदाह— ) यदा समुदायस्य संस्कारकौ होमौ अवगतौ, तदा य पौर्णमासीलिङ्ग ( मन्त्र ), स पौर्णमास्यामेव प्राप्नोति, इतरोऽपि ( अमावास्यालिङ्ग ), सोऽपि तत्रैव ( अमावास्यायामेव प्राप्नोति ) इति नास्त्यनियम ( अनियमप्रसङ्ग । अथ स्वमतेनाह ) तस्मादन्यथा वर्ण्यते । ( पार्वणन्यायाधिकरणस्य ९।२।१८ ) प्रयोजनसूत्रे एते । यदि पर्वशब्द कालवचन, तथा सति कालस्य असंस्कार्यत्वात् आरादुपकारकौ स्याताम् । कथम् ? यद्यपि कालस्य कर्माङ्गता अवगम्यते तथापि सकृदेव ( आदौ स्मृत्वा ) चोदिते ( काले ) कर्म प्रस्तूयते । न तस्य भूयोभूय स्मृत्या प्रयोजनम् ( येन कर्ममध्ये स्मर्येत ) । यथा अन्या यज्ञाङ्गानि भूयोभूय स्मारकमपेक्षन्ते, नैव काल । तस्मात् कालवचने पर्वशब्दे ( सति ) अदृष्टार्थौ होमौ प्राप्नुत । अत आह ( भाष्यकार पूर्वाधिकरणे ) 'कालमीज्यायां विकृतिषु प्रवृत्ति' इति । ( वैकृतेषु इति स्तलपाठ । वस्तुतस्तु एतादृशी पङ्क्ति भाष्ये नोपलभ्यते । तत्र शाबरभाष्ये 'कालमीज्यायां तयो प्रवृत्ति' इति ५१ सूत्रे सिद्धान्त भाष्यान्ते च 'वैकृतेषु अप्रवृत्ति' इति ) । न च प्रकरणादुत्कृष्य कालस्य संस्कारकौ कल्प्येते, फलकल्पनाभयात् । तस्मात् यदि कालवचन पर्वशब्द ( पूर्वपक्षे ), तथा सति ( आरादुपकारकौ स्याताम् ) आरादुपकारकत्वात् न लिङ्ग व्यवस्थां करोति । अत आह ( सूत्रकार— ) उभयो ( पर्वणो पूर्वपक्षे स्याताम् ) अविशेषात् इति । ( सिद्धान्ते तु— ) समुदायवाचकत्वेन तस्य ( समुदायस्य ) संस्कार्यत्वात् भवति व्यवस्थाकरणे लिङ्गम् । अत आह— 'यदभीज्या वा तद्विषयौ' इति ।

**सोम**— पूर्वोक्तार्थे एव विशेषविचारात् सगति । कालमीज्यापक्षे उभयो पर्वणो उभावपि होमौ स्याताम्, आरादुपकारकत्वेन लिङ्गेन विशेषासिद्धे इति 'उभयोरविशेषात्' इति सूत्र पूर्वाधिकरणपूर्वपक्षप्रयोजनकथनपरम् । 'यदभीज्या वा तद्विषयौ' इति सूत्र च यस्य समुदायस्य यत्र संस्कार्यत्वसंभव, तद्विषयौ होमस्तत्र इति संस्कार्यत्वात् व्यवस्था इति सिद्धान्तप्रयोजनकथनपरम् ।

**वि**— 'सङ्कीर्णौ सर्वयोर्होमौ न वा, प्रकरणादुभौ । सङ्कीर्णौ, स्वकार्यस्य भेदादेतौ व्यवस्थितौ ॥'

**भाट्ट**— सत्यथा कर्मभेदावगते एकवाक्योपात्तकर्मद्वयस्यापि सन्निधानात् अवान्तरप्रकरणाद्वा एकैकमन्त्र प्रति शेषित्वावगते कर्मद्वयस्यापि पूर्णमासदेवताकतया तत्संस्कारकत्वम्, अमावास्यादेवताकतया चामावास्यासंस्कारकत्वम् । प्रधानद्वयानुरोधेनैव मन्त्रद्वयस्यापि तन्त्रत्वावृत्ति । एकपदोपादानावगतकर्मद्वयसाहित्यवत्त्वाच्च सकृत्स्मृतस्यापि पुन स्मरणम् ... चतुर्भि 'इतिवचनानुपपन्नम् । नहि अत्र यथाक्रम पाठ येनैकस्य कर्मण एक एव मन्त्रो भवेत् । एकपदोपादानात्तु उभयोरपि उभयाङ्गत्वम् । अत एव नात्र सूत्रवाक्यविभागन्याय । इति प्राप्ते, समसंख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध इति न्यायस्यौत्सर्गिकत्वात् एकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाच्च, अश्रुतत्वावृत्तिकल्पने पुन स्मारकाकाङ्क्षावत्त्वे च

प्रमाणाभावात् एकस्य एकसंस्कारार्थत्वमेवेति प्रयोजन-वशाद्विभागः । १८.

मण्डन— ' पर्वणोस्तौ व्यवस्थितौ । ' २६.

शंकर— ' व्यवस्थोक्ता पार्वणयोः । ' ३०.

● ' पार्वणहोमयोस्त्वप्रवृत्तिः ' इति विशेषातिदेशापवादः फलनियमकर्तृसमुदायवत् अष्टमे एव वक्तव्योऽपि कथञ्चित् प्रसङ्गात् नवमे उक्तः । प्रमेयं तु आष्टमिकमिति इहैव तत्र किञ्चित् विन्यस्यते । ' स्रुवेण पार्वणौ जुहोति ' इति तत्स्वरूपं कर्मभेदात् द्वौ पर्वदेवत्यौ होमौ विधीयेते । तत्र पर्वशब्दः पृणातेर्दानकर्मणो निष्पन्नः कर्मवचनः । तेन कर्मैव देवता । सा च स्वर्णार्थत्वेन सत्कार्या । तत्र यदि एकैको होमः षट्कर्मदेवत्यः स्यात् ततः अक्रियमाणकर्मांशे अदृष्टार्थता आपद्येत । तत्परिहाराय एकः पौर्णमासीदेवत्यः अपरः अमावास्यादेवत्य इति कल्प्यते । तेन प्रकरणविशेषेऽपि सूक्तवाकन्यायेन संस्कार्यत्वात् व्यवस्था । सौर्यादौ च संस्कार्यस्य समुदायस्याभावात् नातिदेशः इत्यधिकरणार्थः । बाल. पृ. १२१–१२२.

■ पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि । ९।२।१८।५० ॥

दर्शपूर्णमासयोः समामनन्ति ' स्रुवेण पार्वणौ जुहोति ' इति । एतौ पार्वणहोमौ सौर्यादिषु विकृतिषु स्यातां न वेति विचारः, पार्वणहोमौ कालाभीज्या समुदायाभीज्या वा इति च विचारः । कालं अभिलक्ष्य इज्या यागः कालाभीज्या । समुदायं पौर्णमासयागत्रयं अमावास्यायागत्रयं चाभिलक्ष्य इज्या समुदायाभीज्या । तत्र सिद्धान्तमाह । पार्वणहोमयोः ' ऋषभं वाजिनं वयम् ' इति मन्त्रेण पौर्णमासे स्रुवेण आज्यहोमः ' अमावास्या सुभगा सुशेवा ' इति मन्त्रेण अमावास्यायागे स्रुवेण आज्यहोम इतीमौ पार्वणहोमौ नाम । तयोः सौर्यादौ विकृतौ अप्रवृत्तिः प्रवृत्तिर्न स्यात् । समुदायार्थसंयोगात् पौर्णमाससमिलितेन दार्शिकसमिलितेन च समुदायरूपेण अर्थेन पार्वणहोमयोः संयोगात् सम्बन्धात् । हि यस्मात् पार्वणहोमौ तदभीज्या न समुदायं अभिलक्ष्य इज्या यागः । तस्मात् विकृतौ पार्वणहोमयोर्नातिदेशः इति सिद्धान्तः ।

कालस्येति चेत् । ५१ ॥

पार्वणहोमयोः समुदायाभीज्यत्वात् सौर्यादौ विकृतौ नातिदेश इति सिद्धान्ते उक्ते पूर्वपक्षी आह । कालस्य पर्वशब्दो वाचकः, इति कालाभीज्या पार्वणहोमौ । तस्मात् पर्वकाले क्रियमाणे सौर्यादौ तयोरतिदेशः स्यात् । इति चेत् ।

नाप्रकरणत्वात् । ५२ ॥

पूर्वपक्षशङ्कां निषेधति सिद्धान्ती । नेमौ कालाभीज्यौ । कालस्य अप्रकरणत्वात् प्रकरणेन समुदायवाची पर्वशब्दो गृह्यते न कालवाची । अपि च पृणातेः पर्वशब्दोऽयम् । पृणातिश्च दाने प्रसिद्धः । दानानि च समुदायौ । तस्मात् समुदायाभीज्या पार्वणौ होमौ । तस्मात् वैकृतेषु पार्वणयोरप्रवृत्तिः ।

मन्त्रवर्णाच्च । ५३ ॥

' ऋषभं वाजिनं वयं पूर्णमासं यजामहे ' ' अमावास्या सुभगा सुशेवा ' इति मन्त्रवर्णात् पूर्णमासामावास्याशब्दाभ्यां यजिसमानाधिकरणाभ्यां पार्वणहोमयोः समुदायाभीज्यत्वावगमः । न तयोः कालाभीज्यता ।

तदभावेऽग्निवदिति चेत् । ५४ ॥

पूर्वपक्षी आह । तदभावे सौर्यादौ तस्य आग्नेयादिसमुदायस्य अभावेऽपि सौर्यादौ असन्निहितयोरपि पार्वणहोमयोः अनुष्ठानं स्यात् । अग्निवत् यथा ' अग्निमग्न आवह ' इत्यावाहननिगदे असन्निहितोऽप्यग्निः आवाह्यते । एवमिहापि असंनिहितयोरप्यनुष्ठानम् । इति चेत् ।

नाधिकारिकत्वात् । ५५ ॥

पूर्वपक्षिणा उक्तं निषेधति सिद्धान्ती । न असंनिहितयोः अनुष्ठानम् । आधिकारिकत्वात् अधिकारे भवत्वात् पार्वणयोः । आग्नेयाद्यधिकारे हि तौ पठितौ । तस्मात् सौर्यादौ विकृतौ पार्वणहोमयोर्न प्रवृत्तिः इति सिद्धान्तः । के.

● पार्वणहोमयोः स्वाहाकारस्यार्थवत्त्वं प्रकृतानेन । भा. ८।४।५।१५.

● **पार्वणहोममन्त्रौ** । ' ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहतां सुवीर्यम् । रायस्पोषं

सहस्रिणम् । प्रजाभ्यः सुराधसे । पूर्णमासाय स्वाहा ॥' (तैब्रा. ३।७।५।१३) इति पूर्णमासे । 'अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्यम् । रायस्पोषं सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा ॥' १४ । इत्यमावास्यायाम् । अत्र प्रथमपादद्वयेन एकमर्धर्चं कृत्वा अनन्तरपादद्वयेन उत्तरार्धर्चं कृत्वा होमकाले मन्त्रौ प्रयोक्तव्यौ । प्रतिमन्त्रं च होमार्थमेकैकं स्वाहाकारं बाह्मणेनैव समोक्तिम् । मन्त्रौ तु पङ्क्तिच्छन्दस्कौ पञ्चपदायेव । के.

● पार्ष्णिकबोधः यादृशोपपदद्वयमपि याहारे आगोपालाङ्गनं तदर्थयो यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयो अन्योन्यव्युत्पत्तौ पार्ष्णिकबोधविषयत्वम् । अत एव अरुणैकहायनीस्थले परिच्छेद्यपरिच्छेदकभाव एव पार्ष्णिकबोधविषय. । भाट्ट. १०।८।२.

● विशिष्टकर्मविधित्वेऽपि विशेषणानां पार्ष्णिकसम्बन्धावगम. । सहकारितामात्रेण च पार्ष्णिकसम्बन्धायोगः । कौ २।४।२।१०.

पार्ष्णिकान्वयन्यायः । (अरुणाधिकरणोक्तोऽयम्) । समस्तपदाभ्यां स्तोत्रात्मत्वेनावगतानामृचाम् अभिव्यक्तिं कुर्वत् साम तद्द्वारा स्तुतिं निर्वर्तयितुं शक्तमिति श्रुतस्तुत्यर्थत्वनिर्वाहकानुष्ठानविशेषणभावपार्ष्णिकान्वयेन स्तुत्यर्थासु ऋक्षु अवतरति । रसायनम्. पृ. ६९

● 'पालाशं ब्रह्मवर्चसकामस्य' यूपं कुर्यात् इति फलविधि । भा ४।३।१।११, ● 'पालाशे बध्नाति' 'खादिरे बध्नाति' 'रौहितके बध्नाति' । एकार्थाः सन्तो विकल्प्यन्ते खादिरादय. । २।२।६।१७.

● 'पावकाग्निर्नयनाय वक्तव्यौ मगुणाविमौ' (अग्नीजरणे) । वि १०।४।१९.

पावकाग्निन्यायः । विकृतौ देवतानिर्गुणवाचिपदस्यापि त्यागादौ प्रयोग. ॥

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् । १०।४।१४।२६ ॥

भाष्यम् — अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति । तत्र पवमानहवींषि श्रूयन्ते 'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तत्र सन्देहः क्रियते किं सगुण अग्नेरभिधानं कर्तव्यम्, उत निर्गुणमिति । किं प्राप्तम् ? प्राकृतस्य निर्गुणस्य सगुणेनाभिधानं कर्तव्यमिति ।

अविकारो वाऽर्थशब्दानपायात्स्याद् द्रव्यवत् । २७ ॥

भाष्यम्— अविकारो वा स्यात् निर्गुणमभिधानम् । कुत ? अर्थशब्दानपायात् । एवं शब्दः अर्थश्च अनपेतौ भवति । य एवासावग्निः, स एव पवमानः पावकः शुचिश्च । या देवता निर्देष्टव्या, सा निर्दिष्टैव भवति असत्यपि गुणवचने । द्रव्यवत् । यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकाम' इति । अजावशाशब्देन चोदिते कर्मणि छागशब्देन काचित् निगमा भवन्ति । अर्थः शब्दः अनपेत इति कृत्वा । एवमिहापि द्रष्टव्यम् । तस्मात् निर्गुणेनाभिधानं कर्तव्यमिति ।

आरम्भासमवायाद्वा चोदितेनाभिधानं स्याद्‌र्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् । २८ ॥

भाष्यम्— अथवा चोदितेन सगुणेनाभिधीयेत । कुत ? आरम्भासमवायात् । नहि आरम्भेण देवता कर्मणि समवैति । न स्वेन रूपेण देवताया कर्मणि साधनभाव इत्युक्तम् । यदि हि रूपेण समवेयात् तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत । कथं तर्हि साधनभाव ? श्रुतिसमवायित्वात् देवतार्थस्य । देवताशब्दस्य च हविषश्च संबन्धः साक्षादुच्यते । यस्य शब्दस्य सम्बन्ध स शब्दो वदितव्य । एवमसौ सम्बन्ध कृतो भवति । यदि च गुणाभिधानं न क्रियते गुणशासनमनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि सम्बध्येतेति । यदि गुणो न सम्बध्येत गुणवचनवैयर्थ्यं स्यात् । तस्मात् सगुणेनाभिधानं कर्तव्यमिति ।

द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात् । २१ ॥

भाष्यम्— अथ यदुक्तं द्रव्यवदिति, 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकामः' इति, अजावशाशब्देन चोदिते कर्मणि छागशब्देन निगमा याज्येषु भवन्ति इति यदुक्तम्, तत् परिहर्तव्यम् । अत्रोच्यते । युक्तं द्रव्येषु आरम्भसमवायः । रूपेण समवायं गच्छति द्रव्यम् । तत्र छागशब्देन याऽसौ आलब्धा यदि वशा यदि अवशा, तत्र सा अभिधीयते इति गम्यते । तस्मात् अर्थे साधने सति अविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यते इति विना गुणवचनेन अभिधानं स्यात् चोदकानुग्रहाय । इह श्रुतिसमवायित्वात् अयस्य चोदकप्राप्तस्य विकारः कर्तव्य इति ।

शा— तत्र संशयः तद्वाक्येषु निगमेषु किं एक एवाग्निशब्दो वक्तव्य, निगुणो शब्दौ वक्तव्यौ 'अग्नये पवमानाय निर्वपामि' 'अग्निं पवमानमावह' 'अग्नेः पवमानस्याहमुज्जितिमनूज्जेषम्' इति । 'तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः । न चाग्निशब्द एवैकश्चोदकानुग्रहो भवेत् ॥' स्यादेव यदि प्रथममर्थं विधाय पश्चा-च्छब्दाश्रयणं स्यात् । शब्द एव तु भावनाङ्गत्वेन विधीयते इत्युक्तम् । तस्मादुभयोर्विधानात् उभौ वक्तव्यौ ।

सोम— सिद्धे विशिष्टशब्दनिगमे किमेक एव उत उभौऽपि इति विशेषचिन्तनात् संगतिः । सूत्रार्थस्तु— आहवनीयाग्नौ पावकादिश्रुतौ तच्छब्देनाभिधानं स्यादिति ।

वि— 'निगमे पावकाग्न्यादि विभक्तिः स्यादथोभयम् । , अग्निश्चोदकतो, मैवं वैधोऽग्निः सगुणो यतः ॥' तस्मात् अग्निशब्दः पावकादिशब्दश्चेत्युभयं पठनीयम् ।

भाट्ट— अर्थस्य देवतात्वपक्षे शब्दस्य वा देवतात्वपक्षे यथार्थद्वयं शब्दद्वयेनोच्यते, यथा 'अग्नये कृत्तिकाभ्यः' इत्यादौ तत्र द्वयोरेवावयोपादानेन समुच्चयप्रतीतेः उभयोरपि त्यागे आवाहनादिमन्त्रेषु [illegible] उच्चारणं निर्विवादमेव । यत्र तु प्रकृत्या तत्स्थानापन्नस्य वा कस्मिन् गुण श्रुत., 'अग्नये दात्रे' 'अग्नये पवमानाय' इत्यादौ तत्र किं गुणवाचकपदमपि त्यागकाले आवाहनादिनिगमेषु च प्रयोक्तव्यम्, न वेति चिन्तायाम् 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत' इत्यत्र प्रकृतिप्राप्तद्रव्ये वशात्वगुणविधानेऽपि न तस्य 'छागस्य वपायाः' इति मन्त्रे वशात्वगुणप्रकाशनार्थं तत्पदप्रयोगः । एवमिहापि विहितेऽपि अर्थरूपदेवतागुणे तत्प्रकाशस्य प्रयोजनाभावात् न तद्वाचकं पदं त्यागकाले आवाहनादिमन्त्रेषु वा उच्चारणीयम् । इति प्राप्ते, वशात्वगुणस्य स्वरूपेण क्रियाऽन्वयवत् इह देवतागुणस्य स्वरूपेण क्रियाऽन्वयाभावात् तद्वाचकशब्दस्यापि अप्रयोगे निधिवैयर्थ्यापत्तेः अर्थदेवतापक्षेऽपि तद्वाचकपदप्रयोग आवश्यक एव । शब्दस्य देवतात्वपक्षेऽपि सुतराम् । यत्र तु द्वयोः पर्यायता पुराणादिपर्यालोचनया एकस्यैव विशिष्टार्थवाचकत्वम्, पदान्तरं तु सामान्यवाचि, यथा 'अग्नये पावकाय' इत्यादौ पावकशब्दस्य अग्निविशेषस्याग्निसन्ततिवाचित्वस्य पुराणादौ प्रसिद्धत्वात्, तत्र पावकादेनैव विशिष्टार्थप्रतीतिसिद्धौ अग्निपदप्रयोगो यद्यपि अर्थस्य देवतात्वपक्षे तथा नोपपादयितुं शक्य, तथापि शब्ददेवतात्वस्यैव पूर्वं साधितत्वात् तत्रापि पदद्वयप्रयोगो न्याय्यः ।

मण्डन— 'सगुणा देवता वाच्या ।' १७.

शंकर— 'सगुणाया गुणस्यापि ।' १७. सगुणाया देवताया विहिताया गुणस्यापि विधिशब्दः वक्तव्यः स्यात् ।

* पावके इष्टयादौ शुद्धयर्थे क्रियमाणे 'एकविंशत्या दर्भपिञ्जूलैः पावयति' इत्युक्तरीत्या द्विपदद्वयमपनीय एकविंशतिसंख्यया अनुसमयः । के. ( भा. ५।२।१। ४-५ ).

पाशाधिकरणम् । अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्विकल्पः ॥ ( पाशाधिकरणम् ( ९।३।५ ), पाशन्यायः ( ९।३।४ ) इति द्वे अधिकरणे । तत्र पाशाधिकरणे विकल्पः साधितः, पाशन्याये तु ऊहः साधितः । तस्मात् साऽपवादतया उपयोगो ज्ञातव्यः । के. )

**विप्रतिपत्तौ विकल्पः स्यात् समत्वाद्, गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ ९।३।५।१५ ॥**

भाष्यम्—अस्ति पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र पाशैकत्वाभिधायी ('अदिते पाशं प्रमुमोक्त्वेतम्' तै॰ ३।१।११।२२) पाशबहुत्वाभिधायी च ('अदिते पाशान् प्रमुमोक्त्वेतान्' मै॰ १।२।१०८, का॰ ३०।४९) मन्त्रौ समाम्नातौ। तयोः एकत्वाभिधायी प्रकरणे निविशते, बहुत्वाभिधायी प्रकरणादुत्कृष्यते, उत उभावपि प्रकरणे अभिनिविशेते इति। किं प्राप्तम्? बहुत्वाभिधायी उत्कर्ष्य इति। कुतः? बहूनां हि स पाशानां मोचकः। न च प्रकरणे बहवः पाशाः सन्ति। तस्मात् प्रकरणे असम्भवमानो यत्र बहवः पाशास्तत्र नीयेत। यथा 'युवं हि स्थः स्वःपती' इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति। 'एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यात्' इति प्रतिपद्विधानमुत्कृष्यते। यथा च पौष्णपेषणादिवाक्यानि दन्तादिरहितेऽपि संचरन्ति, एवं पाशबहुत्वाभिधाय्यपीति। एवं प्राप्ते, ब्रूमः। विप्रतिपत्तौ एतस्याम्, का विप्रतिपत्तिः? यत् प्रकृतावेकः पाशः, पाशबहुत्वाभिधायी च मन्त्रः, एतस्यां विप्रतिपत्तौ किं मन्त्र उत्कृष्यते, नेति। उच्यते। नोत्कर्ष्यः। ननु प्रकृतावयोग्यो मन्त्रः। उच्यते। तेन सः विकल्पो भविष्यति। कुतः? पाशप्रातिपदिकार्थस्य प्रकृतौ विद्यमानत्वादुत्कर्षो न न्याय्यः। ननु बहुपाशवचन एष मन्त्रः। प्रकृतौ चैकः पाशः। तस्मात्तत्र न समवैतीति। उच्यते। बहुत्वमसौ पाशान् वदन् बहुत्वाभिधानं द्रव्यं प्रकाशयिष्यति। यदि न प्रकाशयेत्, न पाशविशिष्टं बहुत्वं गम्येत। प्रकाशयति चेत्, तावता न प्रयोजनम्। तस्य प्रमोचनं क्रियते, न बहुत्वस्य, पाशाकृतेर्वा। तस्मात्तस्य प्रकाशनं कर्तव्यम्। तत्प्रातिपदिकेन क्रियते, नोत्कृष्यते। अथोच्यते। अस्त्येव हि एकवचनान्तं प्रातिपदिकम्, तत् तस्य प्रकाशनं करिष्यतीति। अत्रोच्यते। न हीदं तस्मादन्यत्। एकवचनान्तं प्रातिपदिकं नोत्कृष्यते, प्रकरणादित्युच्यते, किमस्यार्थानुलयस्तदेवेदमिति। ननु बहुवचनस्य बहुपाशाप्रयोगे अयथार्थता, तस्माद् उत्कर्ष्यम्। तदुत्कृष्यमाणमेकदेशत्वात् प्रातिपदिकमुत्कर्षतीति। उच्यते। गुणे त्वन्यायकल्पना स्यादिति, न प्रधाने। गुणश्च विभक्त्यर्थः। प्रधानं प्रातिपदिकार्थः। प्रातिपदिकार्थविशेषो विभक्त्या अभिधीयते। सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम्। न च विकृतौ प्रातिपदिकमस्ति। अनारभ्यापि अभिहितं प्रकृतिं प्रविशति, विभक्तिः पुनः प्रकृतावेव अभिहितम्। तस्मात् यत्र प्रातिपदिकार्थः, तत्र विभक्त्यर्थो भविष्यति। ननु विकृतौ अपि चोदकेन प्राप्तं प्रातिपदिकम्, प्रातिपदिकार्थश्च उच्यते। बाढम्। विप्रकृष्टस्तु चोदकः। बहुवचनसमर्थकं प्रातिपदिकं चोदको नोत्कर्ष्यति। तस्मात् प्रातिपदिकमेकदेशत्वात् बहुवचनमानेष्यतीति। न च प्रकृतौ अनर्थकमेव बहुवचनम्, पाशाकृतिकस्य हि तद् मोचने कमसंबन्धं करोति। तस्मात् गुणे बहुवचने अन्यायकल्पना, न प्रधाने प्रातिपदिकार्थे इति। किं पुनः न्याय्यम्? यत् बहुत्वं गम्यमानमविवक्षितमित्युच्यते तत्कल्प्यताम्, न तु प्रकृतौ प्रातिपदिकस्य प्रातिपदिकार्थाभिधानमन्याय्यं कल्पयितव्यम्। अस्य हि गुणस्य अवाच्यमेव वेदवचनम्, सन्निधानाभावात्। तस्मात् प्रकृतौ बहुवचनान्तस्यापि निवेश इति।

**प्रकरणविशेषाच्च ॥ १६ ॥**

भाष्यम्—प्रकरणविशेषाच्च एतदध्यवसीयते, प्रातिपदिकं बहुवचनमाकर्षति, न प्रातिपदिकं बहुवचनेनोत्कृष्यते इति। प्रकृतौ हि प्रातिपदिकार्थो विद्यते अग्नीषोमीये पशौ। बहुवचनार्थो विकृतिषु। तस्मादपि बहुवचनान्तस्य प्रकृतौ निवेश इति।

**उत्कर्षो वा द्वियज्ञवत् ॥ १७ ॥**

भाष्यम्—इति यदुक्तं तत् परिहर्तव्यम्।

**अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ॥१८॥**

भाष्यम्—(तत् परिह्रियते)। युक्तं यत् प्रतिपद्विधानमुत्कृष्यते, नास्ति प्रकृतौ यजमानद्वित्वं यजमानबहुत्वं वा। तत्र न भवेत् विषय एतयोः प्रतिपदोः। इह तु गुणमात्रं नास्ति बहुत्वम्। अयन्तु बहुवचनस्य प्रयोजनम्, मुक्तिर्नाम सम्बन्धः। न चानेकप्रयोजनमन्यतमेन प्रयोजनेन न प्रयुज्यते। नहि, उल्का प्रकाशनेन

अप्रयुज्यमाना मन्त्रेण न प्रयुज्यते । तस्माद्विषम प्रतिपद्यामिदमिति ।

द्यावोस्तथेति चेत् । १९ ॥

भाष्यम्— अथ यदुक्तम्, द्यावापृथिव्यादीनामनुमन्त्रणाना यथोत्कर्षः, तथा अस्येति । तत् परिहर्तव्यम् ।

नोत्पत्तिशब्दत्वात् । २० ॥

भाष्यम्— नैतदनुमन्त्रणेन तुल्यम् । नहि दर्शपूर्णमासयोर्द्यावापृथिव्यादीनामुत्पत्तौ शब्दोऽस्ति । अस्ति त्विह पाशस्योत्पत्तौ शब्दः । तस्माद्विषममनुमन्त्रणेनेति ।

शा— एकस्मिन् बहुवचनस्य असमवेतार्थत्वात् उत्कर्षे प्राप्ते, अभिधीयते । 'प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः । उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्यावकल्प्यते ॥'

सोम— बहुवचनान्तमन्त्रस्यापि प्रकृतिनिवेशस्य पूर्वोक्तोहनिर्वाहस्य चिन्तनात् संगतिः । सूत्रार्थस्तु— अनुष्ठेयपाशस्य एकत्वात् मन्त्रस्य बहुत्वाभिधायित्वाच्च विप्रतिपत्तौ विरोधे इति न मन्त्र उत्कृष्यते, किन्तु एकवचनान्तेन सह अस्य विकल्पः स्यात्, उभयोरपि पाशविशिष्टकर्मप्रतिपादकत्वेन समत्वात् । गुणे तु बहुवचने अन्याय्य कल्पना । ततश्च एकदेशबहुवचनाश्रयेण नोत्कर्ष. इति ।

वि— 'उत्कृष्यो न वा मन्त्रो बह्वर्थो, ऽसमवेतत. । उत्कर्षो, न विकल्पोऽसौ गुणे त्वन्यायकल्पना ॥'

भाट्ट— बहुवचनान्तपाशमन्त्रस्य दैक्षे एव निवेश मङ्गीकृत्य विकृतौ ऊहश्चिन्तित. ( ९।३।४ इत्यत्र ) । स एव तु इह चिन्त्यते, [illegible] बहुपाशिकायामुत्कर्षः, उत दैक्षे एव निवेश. इति । तत्र बहुत्वप्रकाशनलिङ्गात् अनुष्ठानसादेश्यादेर्बाधे पृष्ठ्याऽनुमन्त्रणादिवत् विकृत्यनुकर्षः । न च तद्वत् सामान्यसम्बन्धबोधकप्रमाणाभाव., ज्योतिष्टोममहाप्रकरणस्यैव आनर्थक्यतदङ्गन्यायसहकृतस्य क्रतुपशुषु सामान्यसम्बन्धबोधकस्य सत्वात् । न च एवमपि पाशप्रातिपदिकार्थस्य करणस्य, द्वितीयाऽर्थस्य कर्मणस्य, प्रमोचनभावनायाश्च प्रधानभूतायाः, दैक्षेऽपि संभवेन तत्प्रतिपादकपदाना लिङ्गविरोधाभावेन अनुष्ठानसादेश्यादिबाधे प्रमाणाभावात् न गुणभूतबहुवचनमात्रानुरोधेन उत्कर्षकल्पना युक्ता इति वाच्यम् । अनेकेषामपि पदाना एकव्रीह्यादिपदानुरोधेन व्रीहिप्रयोगे एव सङ्कोचवत् उत्कर्षस्याप्युपपत्तेः । इतरथा एकपूषपदानुरोधेन इतरपदानामुत्कर्षानापत्तेश्च । गुणभूतलिङ्गानुरोधेन प्रातिपदिकादे मैत्रीवर्णे सङ्कोचवत् गुणभूतवचनानुरोधेनापि बहुत्वोपपत्तेश्च । प्रातिपदिकार्थवत् लिङ्गसंख्यादेरपि कारके एवान्वयेन प्रातिपदिकार्थं प्रति संख्यादेर्गुणत्वे प्रमाणाभावाच्च । एवं च एकवचनान्तपाशमन्त्रेण विकल्पोऽपि अष्टदोषदुष्टो न भवेत् । इति प्राप्ते, नास्त्युत्कर्षः गुणभूतबहुवचनानुरोधेन प्रधानभूताना बहूनामुत्कर्षे प्रमाणाभावात्, विभक्त्युपात्तलिङ्गसंख्याऽन्वयितत्कपदस्यैव प्राधान्याऽनुरोधेन पार्ष्णिकान्वयवेलाया लिङ्गसंख्याऽऽदेः प्रातिपदिकार्थप्राधान्येनैव अन्वयाच्च । न चैव लिङ्गाद्यनुरोधेन प्रधानभूतबहुतरेतरपदसङ्कोचस्याप्यनापत्ति, गुणभूतानुरोधेन प्रधानभूतस्य सङ्कोचेऽपि प्रकरणादिबाधप्रसङ्गेन उत्कर्षे प्रमाणाभावात् । सङ्कोचे तु अवर्जनीयतया नान्तरीयकनिषिद्धबाधेऽपि उत्कर्षे नान्तरीयकत्वाभावेन तद्बाधस्य अन्याय्यत्वाच्च । पूषादिपदाना तु गुणत्वाभावात्, तद्व्यतिरेकेण इतरपदाना प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्च उत्कर्ष इति वैषम्यम् । प्रकृते तु पशुपाशकर्मकोन्मोचनभावनाप्रकाशनस्यैव उपयोगित्वात् संख्यायाः स्वरूपेण प्रकाशनानपेक्षत्वात् संख्यावाचकपदवैयर्थ्यपरिहारार्थं तस्य पाशसंख्याप्रकाशनोपयोगकल्पनेऽपि नेतरपदाना तद्व्यतिरेकेण प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावमिति विशेष. । अत एव बहुवचनम् 'सुपा सुलुक्' ( पा० ७।१।३९ ) इत्येव स्वतन्त्रबहुत्वाश्रयीभूतप्रधानपदजन्यप्रतीत्युपाधिविभक्तिलमकत्वेन एकत्वप्रत्यायकमेव । एव च पर्युदासत्वात् विषमशिष्टोऽपि विकल्पो न दोषाय इति ध्येयम् । इतरथा उत्कर्षपक्षेऽपि एकवचनान्तमन्त्रस्यैव ऊहेन बहुपाशिकायामन्यस्यापि क्रतुपशुष्वपि बहुवचनान्तरोपपत्तेः तत्पाठफल मन्त्रत्वप्रातिसिद्धिरूप मन्द स्यात् ।

मण्डन— 'द्वौ चापि मन्त्रौ प्रकृतौ निविष्टौ।'

शङ्कर— 'बहुपाशार्थं प्रकृतौ।'

* 'पत्नीं सन्नह्य' इति विन्त्यते। अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च। तत्र सर्वस्य प्रयोग मधिकृत्य पत्नीशब्द उच्चरित इत्येतद् पाशाधिकरणे नैव निर्णीतम्। भा ९।३।६।१० * प्रकृतौ बहुवचनस्य असमवेतार्थत्वे विकृतावपि अविकृतस्यैव प्रयोग इति नवमे पाशाधिकरणे स्थितम्। भाट्ट मयूख पृ ७९ * यदि पत्नीप्रातिपदिकार्थं प्रधान मभ्यन्, तत एकद्विबहुपत्नीकेषु प्रयोगेषु प्राति पदिकार्थोऽस्तीति तद्द्वारेण विभक्तिरपि एकवचन निष्पत्ति मनर्थमान आहवनीयस्याऽभिप्रायम्। अथ विभक्ति प्रधानम्, ततो यत्र स स्वार्थं लभते, तत्रैव पर्यवसित प्रातिपदिकार्थ, इति द्विबहुपत्नीके मन्त्र एव न स्यात्, इत्येतयो पक्षयो किं न्याय्य मन्यतत् पाशाधिकरणे वर्णितम्। टुप् ९।१।६।१०

* पाशाधिकरणन्यायेन 'गुणे त्वन्याय्यकल्पनैकदेशत्वात्' इति प्रातिपदिकार्थप्राधान्यात् एकस्मै एव उद्गाने चमसो दातव्य श्रूयते। तस्मादेको भक्षयेत्। शा ३।५।८।२३ * पाशाधिकरणन्यायेन द्विवचनस्या प्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्धया काल्योगिनामेव वा अतर्थैव वा द्वित्वस्यापि कथञ्चिदुपपत्ते फल सम्भव, न तु षण्णामेव आग्नेयादीनाम् (इद पूर्वपक्षे)। भाट्ट २।२।३, * पाशाधिकरणन्यायेन बहुवचनातिरिक्तमस्त्रमन्त्रस्य (उपहवमन्त्रस्य) प्रत्येकावृत्ति प्रतीते बहुवचनस्यापि तदनुरोधेन पूजार्थत्वेन व्याख्यान द्रष्टव्यम्। ११।४।१९ * पाशाधिकरणन्यायेन लक्षणया, साधुत्वमात्रेण आश्रयणीयतया वा लिङ्गसंख्ययोरुपपत्तौ प्रातिपदिके लक्षणाऽनापादकत्वम्। बौ ३।१।६।१२ पृ १८७ * पाशाधिकरणन्यायेन लिङ्गप्रत्ययोरपि सामानाधिकरण्येन पार्ष्ठिको जातिगुणश्च च। भाट्ट १।३।१० * अहाने विश्वजिति 'अग्नयथादुदेत्य वस्त्रतन परिधत्ते' इति एकवचनस्य पाशाधिकरणन्यायेन बहुत्वलक्षणायामपि उपपत्तौ प्रातिपदिको पदेशस्य सर्वरिपरत्वमात्रविषयत्वसंशोचे प्रमाणाभावात् इति प्राप्ते। १२।३।१, * आग्नेयादीना षण्णा विद्वाक्यविहितयोश्च कर्मणो काल्योगस्य अविशेषात् दर्शपूर्णमासपदेन ग्रहणोपपत्त, द्विवचनस्य च पाशाधिकरणन्यायेन बहुत्वलक्षणार्थत्वेऽपि बाधकाभावात् अगत्या मेव फलमत्रघोपपत्ते न षण्णामेव त। घौ २।२। ३।३ पृ १६२ * 'एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य' (प्रतिपद कुर्यात्)। अत्र पाशाधिकरणन्यायेन लिङ्गानुरोधेन प्रकरणबाधानुपपत्ते व्यत्ययानुशासनेन पुंलिङ्गस्य स्त्रीत्वपरत्वावगते पत्नीबहुत्वे द्वितीयो मन्त्र इति पूर्वपक्ष। भाट्ट ३।३।९, * 'ग्रह सम्मार्ष्टि' इत्यत्र गुणभूतैकवचनानुरोधेन प्रत्यये करण त्वाभ्युपगमाङ्गीकारस्य युगपत् श्रुतिद्वयविरोधेनैकस्यावश्याभ्युपगमात्, तत् वर अनुवादके एकवचने तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम्। ३।१।७, * इदं कस्यापि लक्षणीयत्वाभावात् तत्पुरुषापेक्षया तस्य प्रबलत्वम्। यदि पर एकवचनस्य (रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति) द्वित्वादौ लक्षणा उदाह्रियेत, तथापि तस्या अप्येकवचननिष्ठत्वात् पाशाधिकरणन्यायेन अदोषतया तत्पुरुषापेक्षया प्रबलत्वमेव। १०।४।२, * न चैवमपि ऊहितमन्त्रपाठमात्रस्य प्रयोजनाभावेऽपि 'यदि द्वौ' इत्यादिविनियोगप्रयोजनाभाव दैवतनिधिपठिताना ग्रहणमेषा पाशाधिकरणन्यायेन तत्रैव विकल्पप्रसक्तौ तत्कर्षसिद्धयर्थत्वात्। इति प्राप्ते ('यद्येक यूप मुपस्पृशेत्' इत्यादिवाक्यविषयकमिदम्)। ९।३।१ * न न दर्शपूर्णमासप्रातिपदिकस्य काल्योगित्व प्रसिद्धार्थकत्वेऽपि द्विवचनस्याप्रसिद्धे, कथ तस्य यथाश्रुतत्वं च इति वाच्यम्। प्रातिपदिकप्रसिद्धिबलेन पाशाधिकरणन्यायेन द्विवचनानुरोधेन तत्त्यागानुपपत्ते। घौ २।२। ३।३ पृ १५५ * नवमाद्यस्य पश्वङ्गे अधिकरणे अग्नियोगे पुनश्चमादायापि निवेशसम्भवात् न लक्षणा आश्रिता इह तु यजमानद्वित्वस्य प्रकृतौ सर्वथा निवेशासम्भवात् पाशाधिकरणन्यायेन लक्षणैव युक्ता। भाट्ट ३।३।१९ टिप्पणी, * 'पृष्ठैरुपतिष्ठते' इत्यत्र पाशाधिकरणन्यायेन बहुवचनानुरोधेन पृष्ठप्रातिपदिके गौण्यर्थतायाः स्वीकारस्यायुक्तत्वात् बहुवचनेन एकत्वादि लक्षयित्वा न्याय

नाङ्गतया ज्योतिष्टोमप्रकृतिविधिरेवायम् । इति प्राप्ते । ७।३। १२. * पुंप्रातिपदिकस्य गौणत्वकल्पनापेक्षया पाशाधिकरणन्यायेन बहुवचनस्य एकत्वलक्षणया स्तोत्रमन्त्रोपपत्तौ तदसम्भवापादकं गौणताकल्पनं नोपपद्यते इत्यत् । कौ. २।४।३।३ पृ ११४. * 'प्राप्ता अग्नि भरत' पुंलिङ्गस्य मेष्याममसमर्थत्वेऽपि अस्मै इति प्रातिपदिकार्थचतुर्थ्यर्थयो प्रधानभूतयोः मेष्या समवेतत्वात् पुंलिङ्गस्य च गुणभूतस्य पाशाधिकरणन्यायेन निर्देशमात्रार्थत्वात् समस्तस्य मन्त्रस्य प्रकरणात् मेष्यर्थत्वमपि अविरुद्धम् । इति पूर्वपक्षे । भाट्ट. ९।१।१६, * 'प्रोद्गातृणाम्' इत्यत्र पाशाधिकरणन्यायेन उद्गातैवैकः पिबेत् उद्गातृशब्दस्य प्रचुरप्रयोगेण उद्गीथापरपर्यायसामद्वितीय( तृतीय ) भागोद्गानकर्तरि रूढत्वात्, गुणभूतबहुवचनानुरोधेन स्वदुष्कायां निविधाया अपि अन्याय्यकल्पनाया पाशाधिकरणन्यायेनानुपपत्तेः, इति पूर्व. पक्ष. । ३।५।६ पृ. ७, * विकृतौ द्विबहुपत्नीकप्रयोगयोः एकवचनस्य प्रमाणान्तरानवधृतपत्न्येकत्वाद्यप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रवृत्त्युपपत्ति । ९।३।७.

* विभक्त्यर्थे गणनाया नामार्थस्य विशेषणत्वासम्भव । अन्यथा पाशाधिकरणविरोधात् इति चेत् । चन्द्रिका, पृ ४५०.

☞ पाशन्यायः । पशुद्वयवत्या विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ ॥ [ पाशाधिकरणम् ( ९।३।५ ) पाशन्याय. ( ९।३।४ ) इति द्वे अधिकरणे । तत्र पाशाधिकरणे निरूपः साधितः, पाशन्याये तु ऊहः साधितः । तस्मात् सावधानतया उपयोगो ज्ञातव्य । कै. ]

अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वाद्विशेषाच्च तेनास्य । ९।३।४।१०॥

भाष्यम्— अस्ति पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र पाशैकत्वाभिधायी मन्त्र. 'अदिति पाश प्रमुमोक्त्वेतम्' ( तैस. ३।१।४।११ )। तथा पाशबहुत्वाभिधायी 'अदितिः पाशान् प्रमुमोक्त्वेतान्' इति ( मैस. १।२।१०८, काठसं. ३०।४५ )। प्रकृतौ तयोः समुच्चयं वक्ष्यति ( उत्तराधिकरणे ) । अस्ति द्विपशुर्विकृतिः 'मैत्रं श्वेतमालभेत, वारुणं कृष्णं अपां चौषधीनां च सन्धौ अन्नकाम' इति । तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ । तयोः संशय किं बहुवचनान्तः अविकारेण प्रवर्तेत एकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तो निवर्तेत एकवचनान्त ऊहितव्यः, उत उभयोरपि प्रवृत्तिः अभिधानविप्रतिषेधाच्च, उत एकवचनान्त ऊहितव्यो बहुवचनान्तोऽपि न निवर्तेत । किं प्राप्तम् ? अन्यायस्तु अविकारेण । अन्यायनिगदः बहुवचनान्तः अविकारेण प्रवर्तेत, एकवचनान्तो निवर्तितुमर्हति । कुतः ? नास्य एकस्मिन् पाशे प्रवर्तमानस्य दृष्टः प्रतिघातः । यथैव एकस्मिन् पाशे प्रवर्तते तथा द्वयोरपि प्रवर्तितुमर्हति । नासौ एकस्य वाचको न द्वयोः । एवमर्थं चोदकोऽनुगृहीतो भविष्यति । इतरथा हि ऊह्यमाने यथाप्रकृति मन्त्रो न कृतः स्यात् । न द्वयोः पाशयो एकस्मिंश्च पाशे कश्चित् विशेषोऽस्ति । तस्मादविकारेण बहुवचनान्त. प्रयुज्यते, एकवचनान्तस्य निवृत्तिरिति ।

टुप्— 'तयो. समुच्चय वक्ष्यति' ( इति भाष्यमनुपपन्नम् । नहि समुच्चयो वक्ष्यते । अत आह– ) प्रकृतौ उभयोर्निवेश इत्यर्थः. ( अङ्गत्वाभिप्रायं समुच्चयवचनं न प्रयोगाभिप्रायमित्यर्थः ) । ननु अथ पाशमन्त्रः ( पाशोन्मोचनस्य ) करणत्वात् ( द्वयोरपि पाशयोः ) पर्यायेण स्यात् । ( तेन उभयोरपि मन्त्रयोः ) नार्थं ऊहेन । ( परिहरति– ) अथोऽय पाशोन्मोचनकाले, क्रियमाणानुवादो वा ( न तु करणः । असिद्धे मन्त्रयोः समावेशे कथमिदमधिकरणं चिन्त्यतामत आह– ) अथवा उक्तस्मात् ( अधिकरणात् ) उत्तरमधिकरणम् ( इदम् ) । प्रकृतौ विचारितायां विकृतेर्विषयः ।

विकारो वा तदर्थत्वात् । ११ ॥

भाष्यम्— वाशब्दः पक्ष व्यावर्तयति । विकारो वा स्यात् । एकवचनान्त ऊहेन प्रवर्तेत, बहुवचनान्तनिवृत्तिरिति । कुत. ? तदर्थत्वात् । यौ पाशौ विकृतौ वक्तव्यौ, तौ च प्रयोगवचनानुग्रहात् यौगपद्येन, न पर्यायेण । तत्र न गम्यते विशेषः, पाशशब्दे उच्चरिते कस्य पाशस्याभिधान कस्य नेति । अविशेषात् द्वयोरपि पाशयोः ।

तत्र तयो कर्मत्वाभिसम्बन्ध द्वितीयाद्विवचनमेव शक्नोति वदितुम्, नान्यत्। तस्मात् द्विवचनमूह्येत। बहुवचनमेकवचनं च निवर्तितुमर्हत इति।

**अपित्वन्यायसम्बन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात्। १२ ॥**

भाष्यम्— अपितु इति पक्षो व्यावर्तते। न बहुवचनं निवर्त्येत। यथा प्रकृतौ बहुवचनान्त एकवचनान्तं न प्रवृत्तम्। अन्यायसम्बन्धात् बहुवचनान्तम्। एवं विकृतावपि एकवचनान्तं द्विवचनान्तमूह्येत। अन्यायसम्बन्धाच्च बहुवचनान्तं प्रवर्तेत। यदि प्रकृतौ प्रातिपदिकार्थमात्रं पक्षे प्रकाशितम्, विकृतावपि तत् पक्षे प्रकाशयितव्यम्। अथ बहुवचनान्तेन एकत्वमुक्तम्, इहापि बहुवचनान्तेन द्वित्वं वक्तव्यम्। तस्मात् अभिधानविप्रतिपत्तिं वर्तयेति।

**यथार्थं त्वन्यायस्याचोदितत्वात्। १३ ॥**

भाष्यम्— तुशब्दस्तमपि पक्षं व्यावर्तयति। नाभिधानविप्रतिपत्तिं कर्तव्येति। किं तर्हि? यथार्थं द्विवचनमूहितव्यम्। बहुवचनमेकवचनं च निवर्तयाताम्। यदि द्विपाशाभिधायिना पाशशब्दात् परं बहुवचनमेकवचनं वा न शक्नोति कमसन्न्य वदितुम्। लोको हि शब्दार्थावगमे प्रमाणम्। न च लोके द्वयोरर्थयो बहुवचनान्त एकवचनान्तो वा प्रवर्तमानो दृश्यते। तस्मादूहेन द्वयो पाशयो बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्य।

**छन्दसि तु यथादृष्टम्। १४ ॥**

भाष्यम्— कथं प्रकृतौ एकस्मिन् पाशे बहुवचनान्त इति चेत्– (छन्दसि तु यथादृष्टम्)। यावद्दर्शनं प्रामाण्यमभ्युपगन्तव्यं छन्दसि, न दर्शनमतिक्रमितव्यम्। यो हि दर्शनमतिक्रम्य अन्यदपि कल्पयेत्, न तेन छान्दसं कृतं स्यात्, न लौकिकम्, नापि लक्षणसिद्धम्।

यदुक्तं चोदकेन अभिधानविप्रतिपत्तिश्चोद्यते इति, नैतदेवम्, अन्यायस्याचोदितत्वात्। (नचोदकसूत्रवपनोऽयं तत्र न व्याख्यातः, स इदानीं व्याख्यायते। 'यथार्थं तु' इति प्रथमावयवस्तु तत्र व्याख्यात। एवं च मयोदाससूत्रव्याख्यामध्ये चतुर्दश सूत्र व्याख्यातमिति विचिन्त्यैव कथितम् व्याख्यापद्धतिर्भाष्यकाराणाम्। के) नहि चोदक अन्याय्या अभिधानविप्रतिपत्तिर्भिप्रापयति। किं कारणम्? प्रकृतौ एकत्वात् पाशस्य प्रयुक्तत्वाच्च बहुवचनान्तस्य, प्रत्यक्षा अभिधानविप्रतिपत्ति। केयमभिधानविप्रतिपत्तिर्नाम? यत् अन्यथाऽभिधानम्, अन्यथाऽभिधेयम्। न च प्रकृतौ एकस्मिन् बहुवचनान्तप्रयुक्तं अभिधानविप्रतिपत्तिं कर्तुम्, किं तर्हि? यत् तेन शक्यते, तत् कर्तुम्। किं पानेन शक्यते? अस्य सिद्धे प्रयोगे अथमन्विच्छन्तो यदवगम्यते तदर्थं शब्द इत्यवधारयाम। यस्माच्च पाशद्वयस्य मोचनेन सम्बन्धोऽवगम्यते, तदर्थता शब्दस्य भवितुमर्हति, नैकत्वेन बहुत्वेन वा प्रयोजनम्। इह तु विकृतौ पाशस्य च पाशस्य च यौगपद्येन मोचनेन सम्बन्धो वदितव्य। बहुवचनं च द्वयो पाशयोरन्याय्यम्। कर्माभिधाने इह पुनर्न प्रयोग सिद्ध। किन्तु प्रयोग एव चिन्त्यते क शब्द प्रयोक्तव्य इति। तत्र प्रयोगे असमवायत्वे किमिति अवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके। न चायं द्वयो छन्दसि दृष्टो बहुवचनान्त। सोऽयं मन्त्र प्रयुज्यमान अपभ्रंश एव स्यात्, न छान्दस। न च बहुवचनं द्वित्वप्रत्ययार्थं लभ्यते लौकिके वैदिके वा। न च अभिधित्सिते द्वित्वे द्वयोर्बहुवचनं भवति। तद्यथा देवदत्तयज्ञदत्ताभ्यामानय इति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं न विभक्त्या अभिधास्यते, तथापि द्विवचनमेव भवति न बहुवचनम्। तस्मात् विकृतौ ऊहितव्यमिति।

सोम— प्रधानभूतप्रकृत्यूहचिन्तानन्तरं गुणभूतवचनोहचिन्तनात् सङ्गति। अत्रेदं चिन्त्यम्– पाशमन्त्रस्य पाशमोचनकरणत्वेन द्वयोरपि पाशयो युगपन्मोचयितुमशक्यत्वेन यथाशक्तिरपि पर्यायेण प्रयोगस्योक्तत्वेन च पर्यायेण प्रयोक्तव्यतया युगपत् पाशद्वयाभिधानस्य अनपेक्षितत्वेन कथमूहोदाहरणत्वम्। न च क्रियमाणानुवादित्वमेवास्य न करणमन्त्रत्वम्, अत तन्त्राभिधानसम्भवात् ऊहोदाहरणत्वं युक्तमिति वाच्यम्। तथा सति द्वादशे क्रियमाणानुवादिना समुच्चयप्रतिपादनेन प्रकृतौ द्वयोरपि समुच्चयप्रसङ्गात्। न च इष्टापत्ति, अत एव भाष्ये तयो समुच्चयं वक्ष्यति इत्युक्तमिति वाच्यम्। प्रकृतौ उभयोर्निवेशोऽस्ति इत्येतदभिप्राय भाष्यम्, न तु

एकस्मिन् प्रयोगे उभयोः समुच्चयः इत्यभिप्रायम्, इति दूषयित्वा तत्त्वरत्नयोः व्याख्यातत्वेन सूत्रकाराप्रतिपत्तेः । यथायथं ऊहेन अनूहेन च विकल्पेन प्रयोगः इति मूलग्रन्थानुसारेण ग्रन्थकारस्यापि ( शास्त्रदीपिकाकारस्यापि ) विकल्पस्यैव सम्मतत्वाच्च । उत्तराधिकरणे सूत्रकारश्चाप्याह ' विप्रतिपत्तौ विकल्पः स्यात् ' इति । अत एव च तन्त्ररत्ने द्वितीयचतुर्थपक्षयोः अनुष्ठाने विशेषाभावेऽपि न्याय्यत्वात् चतुर्थपक्ष एव स्वीकृत इत्युक्तं सङ्गच्छते । अन्यथा द्वितीयपक्षे बहुवचनान्तस्याप्रवृत्त्या एकस्यैव मन्त्रस्य प्रयोगः । चतुर्थपक्षे तु द्वयोः समुच्चयेन प्रयोग इति अनुष्ठानविशेषसम्भवात् अयुक्तमिदं तन्त्ररत्नवाक्यं स्यात् । एतेन जयसन्तताश्रयणेनापि ऊहोदाहरणस्य निरस्तम् । तथापि समुच्चयापरिहारात् जयमन्त्रे द्व्यर्थत्वेन अविवक्षितार्थतया सर्वथा ऊहाप्रसङ्गाच्चेति । तस्मात् उदाहरणान्तरमन्वेष्टव्य इति । सूत्रार्थस्तु- अन्यायः अन्याय्यनिगदो बहुवचनान्तः अविकारेण प्रयोज्यः, एकस्मिन् बहुवचनस्य प्रतिषिद्धदर्शनात् द्वयोश्चैकस्मात् विशेषाभावात् ।

वि— ' पाशा पाशात् द्वयोः पशोरेको मन्त्रोऽथवा द्वयम् । एकैकत्वे द्वयत्वे किमेकस्योहोऽथवा द्वयोः ॥, एकेनैव कृतार्थत्वादेको मन्त्रस्तदाऽपि च । अविकारेण बह्वर्थ एकार्थः सन्नवाचकः ॥, प्राकृतत्वाद्गुणाभूत एकार्थोऽत्र विवक्षया । बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरनूहितः ॥ '

भाट्ट— दैक्षे एव पशुपाशप्रमोचने अनुमन्त्रणद्वयमाम्नातम् । ' अदितिः पाशं प्रमुमोक्त्वेतम् ' इत्येकवचनान्तमेकम्, ' अदितिः पाशान् प्रमुमोक्त्वेतान् ' इति बहुवचनान्तमपरम् । तत्र अन्त्यस्यापि विकल्पेन एकपाशिकायामेव प्रकृतौ निवेश इति वक्ष्यते । तदेतन्मन्त्रद्वयं द्विपाशिकायां विकृतौ अतिदेशेन प्राप्तम् । तत्र एकवचनान्तस्य तावत् प्रकृतौ समवेततया पाशमात्रप्रकाशकत्वात् द्विवचनेनोहः इत्यविवादमेव । न च प्रतिपाशमभ्यावृत्तेः अनूहः शङ्क्यः, अस्य अनुमन्त्रणमन्त्रत्वेन तन्त्रेणैव प्रयोगात् । बहुवचनस्य तु प्रकृतौ असमवेतार्थकत्वेन अदृष्टार्थं साधुत्वार्थं वा प्रयोगात् विकृतौ अनूहः । अस्तु वा लक्षणयाऽपि अर्थप्रकाशकत्वे सम्भवति साधुत्वाद्यर्थकत्वस्य अन्याय्यत्वात् बहुवचनस्य एकत्वलक्षणार्थकत्वम्, तथापि स्वगतस्याश्रयावयवस्यावयविबुद्धिविषयत्वसम्बन्धेन प्रकृतौ एकत्वलक्षणाया इव विकृतौ द्वित्वलक्षणाया अपि सम्भवादनूहः । न चेयं ( लक्षणा ) निषिद्धा, ' सुपां सुलुक् ' इत्यनुशासनेनैव विहितत्वात् । न च ' दृष्टानुविधिश्छन्दसि ' इत्यनुशासनात् प्रकृतौ अस्य दृष्टत्वेन एकत्वलक्षकत्वेऽपि विकृतौ अदृष्टत्वेन द्वित्वलक्षकत्वानुपपत्तिः इति वाच्यम् । प्रकरणेन प्रकृतौ दृष्टत्ववत् अतिदेशेन विकृतावपि दृष्टत्वात् । इतरथा उत्कर्षेणापि अस्य मन्त्रस्योपपत्तेः एकत्वस्यापि लक्षणाऽनापत्तेः । अतो द्विपाशिकायामपि विकल्पेन द्विवचनवत् बहुवचनप्रयोगः । इति प्राप्ते, सत्य निरूढसम्बन्धेन द्वित्वलक्षणासम्भवः, तथापि सा किम् ' सुपां सुलुक् ' इत्यनुशासनसिद्धतया निरूढलक्षणा वा स्यात्, गङ्गायां घोष इतिवत् सामयिकी वा । नाद्यः, अनुशासनस्य ' दृष्टानुविधिश्छन्दसि ' इत्यनेन यत्रैव पाठाद्यदर्शनं तद्विषयत्वेनैव नियमितत्वात् । अन्यथा वैदिकप्रमाणप्रमितमानस्य द्रव्यपदार्थत्वे विश्वजिति स्वर्गकामपदे ऊहादौ च छान्दसविधिप्रवृत्त्यापत्तेः । अतश्छान्दसविधेः पठितमात्रविषयत्वात् विकृतौ अतिदिष्टमन्त्रे अप्रवृत्तेः नानुशासनिकनिरूढलक्षणया द्वित्वोपस्थितिः । नान्त्यः, अनुशासनाविषयीभूतेऽपि बहुवचनस्य लक्षणाऽङ्गीकारे अनुशासनवैयर्थ्यापत्तेः । अस्तु वा सा, तथापि प्रकृतौ यथा वृत्त्या एकत्वोपस्थितिः, न तथा विकृतौ द्वित्वोपस्थितिः, इति प्राकृतवृत्तिबाधादुद्धारकस्य बहुवचनस्यापि बाधे द्वित्वप्रकाशनरूपकार्यानुरोधेन शुद्धद्विवचनप्रक्षेपावश्यम्भावः, ' स्वाधीने शब्दप्रयोगे किमित्यवाचकं पदं प्रयोक्ष्यामहे ' इति न्यायात् । अत एव द्वित्वोपस्थित्यर्थं अङ्गुलिविन्यासोऽपि अनाशङ्क्यः, मन्त्रपदान्तराणामपि अर्थबोधकत्वानापत्तेः । अत एव बहुपाशकस्थले बहुवचनप्रयोगेऽपि न तस्य मन्त्रत्वम् । प्रकृतौ निरूढलक्षणया एकत्वप्रकाशके एव तस्मिन् मन्त्रत्वात् । इह शक्त्या बहुत्वप्रकाशके तस्मिन् मन्त्रत्वानुपपत्तेः ।

प्रैशागामाम्नानात्, तेषां च लिङ्गात् आज्यभागमात्रा दृष्टान् आज्यभागयोरपि करणप्रतीते. विहितप्रतिषिद्धत्वात् विकल्प इति । अतः सिद्धम् 'न तौ पशौ करोति' इत्ययं प्रतिषेधः इति । नञर्थवादश्च ' न सोमे ' इति । यथा सोमे आज्यभागौ अप्रसिद्धौ तथा पशावपि इति निन्दा । नहि अयं सोमे आज्यभागयोर्निषेधः पर्युदासो वा सम्भवति, सोमस्याप्रकृतत्वेन तत्र आज्यभागाप्रसिद्धत्वात् । न च सोमाङ्गभूतदीक्षणीयाऽऽदिषु प्रसक्ताज्यभागपर्युदासः, तथात्वे तत्र एव पशावपि तत्सिद्धेः ' न तौ पशौ ' इत्यस्य वैयर्थ्यम् । पूर्वप्रतिषेधैकवाक्यत्वे सम्भवति वाक्यभेदस्य अन्याय्यत्वाच्च । अतोऽत्र आज्यभागकर्तव्यताप्रतिषेधेन अभावः सोमे प्राप्त एव निन्दाऽर्थमनूद्यते । प्रतिषेधो च तदपूर्वमनारभ्य प्रसिद्ध , इति विधानस्य 'नान्तरिक्षे न दिवि ' इतिवत् निन्दानुवादत्वम् ।

मण्डन— 'न सोमे इति तु श्रुतिः ।' श्रुतिः अर्थवादः । ( स्तुतिः इति पाठस्तु युक्तः । )

शंकर— ' न तौ पशाविति न सा ।' ( सा पर्युदासता ) । २ 'न सोम इति तु स्तुतिः ।' ३.

* प्रकृतिः प्राप्तानामाज्यभागयोः निषेध्यत्वे प्रतिषेधे पाशुकाम्यमागन्यायेन विकल्पापत्तेः पर्युदासपक्ष एवाश्रयणीय. इति पूर्वपक्षः । संकर्ष. ३।३।८.

* पाशुकाम्यभागर्थेन भक्तीयपुरोडाशादिषु प्रसङ्ग. । १२।२।१२।३०–३२. ' भक्तीयादिन्याय ' इत्यत्र द्रष्टव्यम् ।

* पाशुकप्रयोगविधिविहितानां समिष्टयजुष्पत्नीसंयाजानां क्रमः व्यवधायकप्रभावाङ्गिष्टकृतिष्टभोर्त्वापर्यालिख्यानि । भाट्ट. ५।१।१५.

* पाशुकाम्यभागस्य पौर्णमासीकाद्याहारङ्गरेश्वप्रदानस्थले विमर्शः । ११।३।८।१८. मीको. पृ १२२ ' अग्नीषोमीयं पशौ पशुविंशत्यं. ' इत्यत्र द्रष्टव्यम् ।

* पाषाणेष्टकान्यायः । यथा इष्टकायोपद्ये पाषाणस्यानिर्दहनम्, तथा प्रकृतेऽपि । अत्र न्यायः वैयर्थ्यनिवर्तनप्रकार(अन्यत्रोद्ध)न्यायापेक्षया अन्यवैयर्थ्यनिरासाय बोध्य. । माहसी. ११२.

* ' पिकमालभेत ' इत्यत्र पिकः कोकिलः, अनार्यप्रसिद्धेः । वि.१।३।६.

पिकनेमाधिकरणम् । आर्यम्लेच्छाधिकरणम् । क्वचित् म्लेच्छप्रसिद्धार्थस्य प्रामाण्यम् ॥

चोदितं तु प्रतीयेताविरोधात् प्रमाणेन । १।३। ५।१०॥

भाष्यम्— अथ यान् शब्दान् आर्या न कस्मिंश्चिदर्थे आचरन्ति, म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते, यथा पिक–नेम–सत–तामरसादिशब्दाः । तेषु सन्देहः किं निगमनिरुक्तव्याकरणवशेन धातुतोऽर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति स शब्दार्थ इति । शिष्टाचारस्य प्रामाण्यमुक्तम्, नाशिष्टस्मृतेः । तस्मान्निगमादिवशेन अर्थकल्पना । नियमादीनां चैवमर्थवत्ता भविष्यति । अनभियोगश्च शब्दार्थेषु अशिष्टानाम्, अभियोगश्चेतरेषाम् । तस्माद्धातुतोऽर्थः कल्पयितव्यः इति । एवं प्राप्ते, ब्रूमः । चोदितमशिष्टैरपि शिष्टानवगतं प्रतीयेत, यत् प्रमाणेनाविरुद्धं तदवगम्यमानं न न्याय्यं त्यक्तुम् । यत्तु शिष्टाचारः प्रमाणमिति, तत् प्रत्यक्षानवगतेऽर्थे । यत्तु अभियुक्ताः शब्दार्थेषु शिष्टा इति । ततोऽप्यन्ते । अभियुक्ततराः पक्षिणां पोषणे बन्धने च म्लेच्छाः । यत्तु निगमनिरुक्तव्याकरणसामर्थ्यमुक्तमिति, तत्रैवामर्थवत्ता भविष्यति, न यत्र म्लेच्छैरपि अवगतः शब्दार्थः । अपि च निगमादिभिरर्थे कल्प्यमाने अन्यत्रापि शब्दार्थो भवेत्, तत्रानिश्चयः स्यात् । तस्मात् पिक इति कोकिलो ग्राह्यः, नेमोऽर्धम्, तामरसं पद्मम्, सत इति दारुमयं पात्रम्, परिमण्डलं शतच्छिद्रम् ।

वा— ' ये शब्दा न प्रसिद्धाः स्युरार्यावर्तनिवासिनाम् । तेषां म्लेच्छप्रसिद्धोऽर्थो ग्राह्यो नेति विचिन्त्यते ॥ ' तथा ' निरुक्तव्याकरणाद्यादारप्रसिद्धिः किं बलीयसी । समुदायप्रसिद्धिर्वा म्लेच्छस्थैवाथ वा भवेत् ॥ ' म्लेच्छप्रसिद्धिपरत्वेऽप्यन्येऽपि समुदायसिद्धत्वेन स्वरूपेण ज्यायसी प्रतिभाति । ' तत्र प्रयोक्तृदौर्बल्यमस्यपरतस्तयोः । किं तु (नु) न्याय्यतरं युक्तं ज्ञातुमित्यत्र चिन्त्यते ॥

तथा. 'निरुक्तव्याक्रियाद्वारा किं शास्त्रस्था बलीयसी। किं वाऽवयवविक्षेपजननात् सैव दुर्बला॥ एवं नानोपपत्तित्वात् संदेहे, तावदुच्यते। निरुक्तव्याक्रियाद्वारा प्रतिपत्तिर्बलीयसी॥ शास्त्रस्था वेदनेनासौ कल्प्याऽपि हि बलीयसी। सम्मूलस्य प्रमाणत्वं साध्यस्यापि यदं श्रितम्॥ न सिद्धमप्यसम्मूलमाश्रयेण हि दूषितम्। कथं वेदगतैः शब्दैर्म्लेच्छस्थोऽर्थः प्रतीयते॥ येषां दर्शनमात्रेऽपि वेद एव न पठ्यते। संभाषाऽपि च न म्लेच्छैः महार्यावर्तवासिनाम्॥ तत्र तेषु प्रसिद्धोऽर्थः कथमार्यैः प्रतीयताम्। एवं च सति यस्यापि प्रसिद्धिर्नोपलभ्यते॥ तस्यापि म्लेच्छदेशेषु सर्वैरप्यन्वेष्यतां व्रजेत्। ततश्च निगमादीनां न कश्चिद्विषयो भवेत्॥ अनन्तम्लेच्छदेशांश्च कः सर्वानुपलप्स्यते। य एव स्यादनिष्टमत्र शङ्का प्रसज्यते॥ अनन्तेषु हि देशेषु कः सिद्धः क्वेति गम्यताम्। निगमादिवशाद्वा धातुतोऽर्थः प्रकल्पितः॥ द्विरेफनखरंस्तु बाध्येत प्रयोगान्म्लेच्छचोदितान्। म्लेच्छाचाराप्रमाणत्वमथ स्वध्यवसीयते॥ आर्यावर्ते ततः शस्या प्रसिद्ध्यन्वेषणक्रिया। तस्माच्चाल्पेन कालेन सदसद्भावनिर्णयः॥ ततश्च निगमादीनां सुप्रातः स्वार्थगोचरः। तस्मात्तदर्थवत्त्वाय म्लेच्छाचाराप्रमाणता॥ धर्मे चानादरात्तेषां भ्रश्येतार्थोऽपि शब्दवत्। न चास्ति संस्कृत. शब्दः कश्चिन्म्लेच्छापभाषणे॥ संस्कृतप्रतिरूपा हि तद्भाषाऽर्थान्तरे स्थिता। न चावाचकरूपाणां वाचकत्वं कथं चन॥ आर्याश्च म्लेच्छभाषाभ्य. कल्पयन्तः स्वकं पदम्। पदान्ताक्षरोपेतं कल्पयन्ति कदा चन। न्यूनाक्षरं कदाचिच्च प्रक्षिपन्त्यधिकाक्षरम्॥' तथा द्राविडादिभाषायामेव तावद् व्यञ्जनान्तभाषापदेषु स्वरान्तविभक्तिस्त्रीप्रत्ययादिकल्पनाभिः स्वभाषानुरूपानर्थान् प्रतिपद्यमाना दृश्यन्ते। तद् यथा 'ओदनं चोर्' इत्युक्ते चोरपदवाच्यं कल्पयन्ति। 'पन्थानमतर्' इत्युक्ते अतरः इति कल्पयित्वा आहुः सत्यं दुस्तरत्वादतर एव पन्था इति। तथा पाप्शब्दं पकारान्तं सर्पवचनमकारान्तं कल्पयित्वा सत्यं पाप एवासाविति वदन्ति। एवं माल्शब्दं स्त्रीवचनं मालेति कल्पयित्वा सत्यमित्याहुः। वैर्शब्दं च रेफान्तमुदरवचनं वैरिशब्देन प्रत्याम्नायं वदन्ति। सत्यं सर्वस्य क्षुधितस्याकार्ये प्रवर्तनादुदरं वैरिकार्ये प्रवर्तते इति। तद्यदा द्रविडादिभाषाणामीदृशी स्वच्छन्दकल्पना, तदा पारसीबर्बरयवनरोमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्म.। 'तस्मान्म्लेच्छप्रसिद्धं यत् पदमार्यैर्विकल्प्यते। न कश्चित्तत्र विश्वासो युक्तः पदपदार्थयोः॥ निरुक्तव्याक्रियाद्वारा यस्त्वर्थः परिगम्यते। पिकनेमादिशब्दानां स यथार्थो भविष्यति॥' इति प्राप्तम्।

'एवं प्राप्ते, यदामोऽत्र पदं निपुणदर्शिभिः। विज्ञायेताविनष्टं यत् तत् तदर्थं भविष्यति॥' देशभाषापभ्रंशपदानि हि विप्लुतिभूयिष्ठानि न शक्यन्ते निर्वक्तुम्। 'यत्तु वेदतदङ्गेषु पदं दृष्टमविप्लुतम्। म्लेच्छभाषासु तद्रूपमर्थे क्व चन चोदितम्॥ तत्तथैव प्रतीयेत प्रमाणेनाविरोधतः। पिकनेमादि तद्ध्येवं निपुणैरवधारितम्॥ चोदितं ह्युपदिष्टं वा प्रयुक्तं वा क्रियागतम्। म्लेच्छैरवधृतं पश्चादार्यैर्भाषितैः क्वचित्॥ तादृशं तु प्रतीयेत प्रामाण्येनेति निश्चितम्। न तद्धर्मप्रमाणेन वेदार्थेन विरुध्यते॥' अपि च 'पदार्थपदसंबन्धज्ञानापेक्षप्रवर्तनात्। प्रसिद्धिर्यत्र तत्रस्था वाक्यार्थायानुगम्यते॥ पिकादिशब्दवाच्यं वा म्लेच्छैर्यदवधारितम्। अविरोधात् प्रमाणेन तद्विद्याद्वेदचोदितम्॥ चोदितं वा प्रमाणेन वेदेनेत्यस्य संगतिः। आर्यैः सहाविरुद्धत्वात् तस्य तैरप्यपेक्षणात्॥' यथैव होमादयः पशवश्च वेदे चोदिताः सन्तः अध्वर्य्वादिभिः स्ववमज्ञायमानार्थत्वात् नित्यं ये प्राणिवधाभियुक्ताः, तेभ्य एवावधार्य विनियुज्यन्ते, यथा च निषादेष्ट्याम्, 'कूटं दक्षिणा' इति विहिते ये एतेन व्यवहरन्ति, तेभ्य एवार्थतत्त्वं ज्ञात्वा दीयते, तथेह पिकनेमतामरसादिचोदितं सत् वेदार्थानभिज्ञेभ्यस्त्वप्रदीयमानं म्लेच्छेभ्योऽपि प्रतीयेत लोकप्रत्यक्षनिबन्धनशब्दार्थस्मरणाविरोधात्

६।८।१।१८. * पिण्डपितृयज्ञः दर्शेष्ट्यभावेऽपि कार्यः दर्शविकारेषु च नातिदेशोऽस्य । भाट्ट. ४।४।८.

■ पिण्डपितृयज्ञः दर्शदिनेऽपि स्वकाले एव ॥

अमावास्याया पिण्डपितृयज्ञोत्तरणेन दर्शेष्टितन्त्र प्रक्रान्तव्यम् । सोमयागे दर्शपौर्णमासोत्तरकालत्वेन 'दर्शे पितृयज्ञोत्तरस्य प्रस्तरस्यमेव प्रथम निरूप्यताम्' इति पितृयज्ञितत्वरदानार्थवादेनाग्न्यमिनयात् । 'यत्पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एव तत्स निष्क्रीय यजमानः प्रतनुते' इति श्रुतेश्च । अत एव 'प्रातरग्निहोत्र हुत्वाऽन्यमाहवनीय प्रणयति' इति विहित प्रणयनमपि पितृयज्ञाङ्गमेव । इष्ट्यङ्गत्वे अग्नि. परेद्यु. कर्मापवर्गे एव तदपनयेन पितृयज्ञस्यान्यभावापत्तेः । न च निशीष्टिवत् दार्शिकप्रणयनोपकार्यत्वम्, पितृयज्ञस्यापूर्वत्वात् । न वा ऐष्टिकानामिव सौमिकप्रणयनोपकार्यत्वम्, तस्य दर्शानङ्गत्वात् । प्रणयनस्य पितृयज्ञाङ्गत्वे तु तदपवर्गे दर्शार्थं पुनः प्रणयनसंभवात्, हुत्वा इति क्त्वाप्रत्ययस्य पूर्वकालमात्रपरत्वेन अपराह्णे एव प्रणेतुमुचितत्वात्, वचनादपकर्षो वा । तस्मात् पितृयज्ञ समाप्यैवान्वाधानम् । इति प्राप्ते, पूर्वाह्णापराह्णकालविहितयोः अन्वाधानपितृयज्ञयो. कालातिक्रमायोगात् प्रणयनस्यापराह्णे करणे प्रातरग्निहोत्र हुत्वेत्यस्य अनतिप्रयोजनकत्वापत्ते., पितृयज्ञस्यापूर्वत्वेऽपि दार्शिकप्रणयनेन प्रसङ्गादुपकारसिद्धे., प्रणयनविध्यनन्तर दार्शिकानेकपदार्थविधानदर्शनेन च तदङ्गत्वस्यासंदिग्धत्वात् दर्शतन्त्रप्रक्रमोत्तरमेव स्वकाले पितृयज्ञः । पूर्वेद्युरिति वचनो यत्प्रार्थनार्थवादस्य च प्रधानयागाभिप्रायेणोपपत्तेः । संकर्ष. १।२।९.

* पिण्डपितृयज्ञ. न दर्शाङ्गम् । अत एव स्वर्गार्थं इति मूलानुयायिन. । वस्तुतस्तु नित्य एकावम् । भाट्ट. ४।४।८. * पिण्डपितृयज्ञः यदि पौर्णमासामावान तदा अनन्तरायाममावास्यायां कर्तव्यः, कुण्डपायिनामयने 'मास दर्शपूर्णमासाभ्या यजेत' इत्यत्र न कर्तव्य. । भा ४।४।८।२१, * पिण्डपितृयज्ञ· सफल । ४।३।५।१०–१२, पिण्डपितृयज्ञ. एककर्तृकः, न सर्वार्थः । ४।३।६।१३–१४. पिण्डपितृयज्ञ. स्वर्गफलकः । ४।३।७।१५–१६.

■ पिण्डपितृयज्ञः सिनीवालीकुह्वोः संनिपाते उत्तरस्मिन् दिन कार्यः ॥

यदा सिनीवाली कुहूश्चेति द्वे अपि क्रमेणापततः तदाऽपि पूर्वाधिकरणन्यायेन पूर्वस्मिन्नेव पर्वणि पितृयज्ञे प्राप्ते, परस्मिन्नेवेत्युच्यते । 'यदहरेव पुरस्तान्न दृश्यते तदहर्दद्यात्' इति 'यत् पितृभ्यः पूर्वद्युः' इति 'अपराह्णे ददाति' इति वचनत्रयैकवाक्यतया लब्धस्य चन्द्रादर्शनापराह्णविशेषणद्वितयविशिष्टामावास्याकालस्य तत्रैव लाभात् । चन्द्रादर्शने 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्येकस्मिन्नेव वाक्ये विशिष्टकालविधि, प्रतीक्षाविषयतया उपादेयत्वाच्च न विशेषणयोरविवक्षेति तु भाष्ये स्थितम् । न च पूर्वदिने चन्द्रदर्शनाभावस्यैव परदिनापराह्णे अमावास्यायाः अमावादन्यतरपरित्यागावश्यकत्वे यत्पूर्वेद्युरिति वचनानुसारेण चन्द्रादर्शनस्यैव हान युक्तमिति वाच्यम् । 'या तिथि समनुप्राप्योदय याति दिवाकरः' इति स्मृत्या परदिने अमावास्यायाः पूर्णत्वोक्तेः । अपराह्णे सूर्याचन्द्रमसोरतीव संनिकर्षात् ।

ननु 'पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते' इति स्मृत्यन्तरेण चन्द्रादर्शनपदस्य चन्द्रक्षयोपलक्षकत्वेन व्याख्यानात् चन्द्रक्षयस्य च 'अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमा. । अमावास्याऽष्टमांशे च पुनः किल भवेदणु· ॥' इति स्मृत्या चतुर्दशीयुक्तामावास्यायामेवोपलम्भात् सिनीवाल्यामेव पितृयज्ञः, अत एव 'यदहस्त्वेव चन्द्रमा न दृश्यतेताममावास्या कुर्वीत' इत्यादिवचनैर्व्याख्यानस्थापि काले चन्द्रादर्शनस्य विशेषणत्वात् तुल्यन्यायेन परदिने तदनुष्ठाने प्रसक्ते 'पक्षान्ते कर्म निर्वर्त्य वैश्वदेव च साग्निकः । पिण्डयज्ञ ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥' इत्यादिना अन्वाधानपितृयज्ञश्राद्धाना एकदैव यथाविधानात् अन्वाधानसमयस्थचन्द्रादर्शनपद चन्द्रक्षयोपलक्षणमेवेत्युक्त कर्मप्रदीपे इति चेत्, न । 'अर्वाक्षयसमयाच्च द्वितीया तु प्रदृश्यते । तत्र यागा न कुर्वीत सर्वे देवा पराङ्मुखाः ॥' इति वचनेन साय चन्द्रदर्शनविशिष्टप्रतिपदि प्रधानयागनिषेधादुभयोरपि चन्द्रादर्शनस्यावश्यकत्वे द्व्यहकालनियमाणयोः अङ्गप्रधानयोस्तदसंभवे अङ्गगुणविरोधन्यायेन अन्वाधाने

एव तदाधस्य युक्तत्वात्। अत एव 'तद्धैके दृष्ट्वा उपवसन्ति' इति श्रुतिः दृश्यमानेऽपि कदा चिदिति गोभिलश्च। पितृयज्ञस्य तु 'यदहरेव पुरस्तान्न पश्चाच्च दृश्यते' इति श्रुत्यन्तरेण कुहामेव विधिस्य विधानान्न स्मृत्या क्षीणचन्द्रोपलक्षकत्वेन व्याख्या युक्ता, अपितु अमावास्यापदस्येव सूर्याचन्द्रमसोः संनिकर्षपरत्वं पञ्चदशाद्याधिकरणसिद्धं सूत्रोक्तं युक्तम्। न च 'यदहः पश्चाच्चन्द्रमा अभ्युदेति तदहर्यजन् इमाँल्लोकानभिजयति' इत्यादिश्रुतिभिः चन्द्रदर्शनदिने यागनिषेधस्मृतेरपि बाधोऽस्तु इति वाच्यम्। चन्द्रदर्शनदिनं प्रशस्तमपि तद्दर्शनात् प्रशस्ततरात् हीनमेवेति रीत्या अश्लिष्टवेधुकस्तुतेः क्षीरविधिशेषत्ववत् चन्द्रादर्शनदिने यागविधिशेषत्वेनापि अस्यार्थवादस्योपपत्तेः, अमावास्याऽष्टमप्रभृति चन्द्रोदयस्य सत्यामुदितमात्रस्य लोकैरदर्शनात् श्रुतिस्मृत्योरविरोधः इति केचित्। तस्मात् सिनीवाल्यामन्वाधानं कुहां यागोत्तरं पितृयज्ञः। पदार्थानां यागादिश्च पूर्णयोः पर्वप्रतिपत्त्रोरुपपन्नः। संकर्ष. १।२।१०.

* पिण्डपितृयज्ञस्य अतिप्रणीताग्नौ विहितस्य आहवनीयानधिकरणत्वम्। सु. पृ. ७८०.

## पिण्डपितृयज्ञे अनाहिताग्निना अतिप्रणीत औपासनो वा उपायेयः॥

'यदन्तरिक्षम्' (-पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम) इति मन्त्रेण गार्हपत्यस्योपस्थानं पितृयज्ञे विहितम्। तच्च आहिताग्निकर्तृकत्वात् प्रकृतौ अनाहिताग्निकर्तृकविकृतौ प्राप्तं इति तदर्थं गार्हपत्य उत्पादनीयः। प्रकृतौ होमार्थाग्नेः उपस्थेयस्य विधानात्। इति प्राप्ते, संस्कारविशेषविशिष्टस्यैव गार्हपत्यत्वात् तदुत्पादने च अनाहिताग्नित्वभङ्गात् प्रकृतौ आर्थिकस्य भेदस्य चोदकेन अनतिदेशात् आयतनमात्रभेदेऽपि गार्हपत्यदक्षिणाग्न्योरभेदात् 'यस्मिन्नेव प्रणीयते तमेवोपतिष्ठेत' इति वचनाच्च अतिप्रणीताग्नेः औपासनाग्नेर्वा उपस्थानम्। संकर्ष. १।२।१४.

## पिण्डपितृयज्ञे अनाहिताग्नेरप्यधिकारः॥

अग्निसाध्येषु दर्शपूर्णमासादिष्विव पितृयज्ञेऽपि अनाहिताग्नेर्नाधिकारः। यत्तु श्रूयते 'अप्यनाहिताग्निना कार्यमेव, इदं पित्र्यं कृतम्, इदमविघ्नम्, इदं पिच्छकराम, पितरश्चिन्माऽऽवेदयन्ति' इति, तदनाहिताग्निनाऽपि एतत्कर्तव्यम्, किं पुनराहिताग्निना, इत्येवमर्थवादत्वेनापि उपपन्नम्। इति प्राप्ते, अवधारणार्थकेन अपिशब्देन कर्तव्यमेवेति स्पष्टविधिना च अनाहिताग्नेरपि अधिकारावगतेः इत्यंश एव तत्रार्थवादः। संकर्ष. १।२।१२.

## पिण्डपितृयज्ञे उपस्थानमन्त्रस्थगार्हपत्यपदलोपः (आहिताग्नेरिदम्)॥

तस्मिन्नेव मन्त्रे 'अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु' इति गार्हपत्यशब्दस्य असमवेतार्थत्वेऽपि मन्त्रानुग्रहायाश्रिकरेण प्रयोगे होमाधिकरणत्वेन संस्कार्यत्वात् गार्हपत्यपद अपनीय आवसथ्यपदप्रक्षेपरूपे ऊहे वा प्राप्ते, गार्हपत्यशब्दमात्रं लुप्यते, तावन्मात्रस्य अननिर्वचनत्वात्। उपतिष्ठेत इत्याम्नातपदेन मन्त्रस्य करणत्वेन प्राप्तेः, प्राकृतस्य तस्य गार्हपत्यपदविनिर्मुक्तस्यैव समवेतार्थकत्वात्। अग्नेः अदृष्टपुञ्जरूपस्य अत्यन्तरेण मन्त्राम्नायाभावेन पदान्तरप्रक्षेपासंभवात्। अत एव 'न देवताऽग्निशब्दक्रियम्' इति प्रान्ते न्यायः सङ्गच्छते। ईदृशपदघटितमन्त्रस्येव लोप इति याज्ञिकपक्षः क्वाचित्कस्तु चिन्त्य एव। संकर्ष. १।२।१५.

* पिण्डपितृयज्ञे विशेषाणां अन्यतोऽसिद्धेः तेषामभावे च विधेस्तत्रानुपपत्तेः तद्विशेषाभिधायिशब्दकल्पना (तद्विशेषाः विनियोगाधिकारप्रयोगाः)। कणिका. पृ. ३८० * पिण्डपितृयज्ञे 'समूलं बर्हिर्भवति' इति दर्भाणां समूलत्वमुक्तम्। तत्स्तुतये च 'यत् पर्वणि दितं तद् देवानाम्, यदन्तरा तन्मनुष्याणाम्' इत्यनुवादः। पर्वविदिताधिकरणम्। ३।४।१।११.

## पिण्डपितृयज्ञाधिकरणम्। पिण्डपितृयज्ञन्यायः। पिण्डपितृयज्ञः पुरुषार्थो न दर्शाङ्गम्॥

नाङ्गं स्यादिति । प्रयोजनम्– पूर्वपक्षे दर्शविकारेषु प्रवृत्तिः, सिद्धान्ते तु न प्रवृत्तिः ।

वि— ' अत्राङ्गं स्याद्वा पिण्डपितृयज्ञः, क्रतौ हि सः । अमावास्योक्तितो, मैवं तत्कालत्वोक्तेः पुमर्थता ॥ '

भाट्ट— अनारभ्य श्रुतम् ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इति । तत्राय पिण्डपितृयज्ञो दर्शेष्ट्यङ्गम्, अमावास्यापदेन कर्मवाचिना ' तत्र जयान् जुहुयात् ' इतिवत् वाक्याद्दर्शाङ्गत्वप्रतीतेः । यद्यपि चायं कालेऽपि मुख्य, तथापि फलकल्पनाभियाऽत्र कर्मपरत्वमेव युक्तम् । वस्तुतस्तु यद्यपि काल एव मुख्यः कर्मणि सम्योगाधिकृतलक्षणा, प्रकृते च कालपर एव, अपराह्णसामानाधिकरण्यात्, तथापि ' तस्मात् पितृभ्यः पूर्वेद्युः क्रियते ' इति वाक्ये दर्शेष्टिपूर्वेद्युःकालश्रवणात् वैमृधन्यायेन दर्शेष्टिरुपस्थितत्वात्तदङ्गत्वम् । इति प्राप्ते, अमावास्याशब्दस्य कर्मवाचित्वं भवतैव निराकृतम् । लक्षणा तु प्रमाणाभावात् कालत्वामानाधिकरण्यविरोधाच्च दूरतोऽपास्तैव । पूर्वेद्युर्वाक्यमपि इष्टेरुपस्थितत्वाच्च तत्प्रतियोगिकत्वं विधत्ते, अपि तु तिथिद्वैधे पूर्वेद्युःकालम् ' यदाऽसौ वर्धिता याति पितरस्तामुपासते ' इति प्राप्तमनूद्य देवतात्वाभावम् । के चित्तु द्वैधे चन्द्रदर्शनात् पूर्वेद्युरिति व्याख्याय नष्टपर्वणि परेद्युः पितृयज्ञमनुतिष्ठन्ति । सर्वथा न दर्शाङ्गं पितृयज्ञः । एवं च ' पौर्णमासीमेव यजेत भ्रातृव्यवतामावास्याम्, हत्वा भ्रातृव्यममावास्यया यजेत, पिण्डपितृयज्ञेनैवामावास्यया प्रीणाति ' इति दर्शप्रयमाथेऽपि पिण्डपितृयज्ञदर्शनं संगच्छते । एतद्बलेनैव ' पितृभ्य एव तस्य निष्क्रीय यजमानः प्रतनुते ' इत्यादिपिण्डपितृयज्ञार्थवादे फलोपस्थितावपि न क्षतिः ।

यत्तु ' न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः । ' इति मनुवचनम् ( मनु. ३।२८२ ), तत्र श्राद्धं कृष्णपक्षश्राद्धं दर्शन अमावास्यया विना आहिताग्नेर्न भवति अनाहिताग्नेरिव विध्यन्तरेष्विति व्याख्येयम् । न तु दर्शेन दर्शेष्टिं विना श्राद्धं पितृयज्ञो न भवतीत्येव व्याख्येयम्, दर्शपदे लक्षणायां प्रमाणाभावात् । तेनायं स्वर्गार्थ इति मूलानुयायिनः । वस्तुतस्तु अकरणे अग्निहोत्रहोमरूपप्रायश्चित्तस्य आपस्तम्बादिभिः स्मरणात् ज्योतिष्टोमादिक्रतुभिस्तुल्यवत्पठनाच्च नित्य एवायम् । प्रयोजनं दर्शाभावेऽपि करणम्, तद्विकारेषु च नातिदेशः । यत्तु भाष्यकारेण पौर्णमासमाधाने कृते अग्रिमामावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षे अकरणमित्युक्तम्, तत् द्वादशरात्रेषु पवमानेष्टिपक्षे आधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम् । यदा तु तदुत्तरदिने कालस्तत्र पौर्णमासस्य, तदा आधानदिने एव सेष्टि सान्वारम्भणीयं पौर्णमासस्यान्वाधानं कृत्वा श्वोभूते पौर्णमासेनेष्ट्वा अग्रिमदर्शेष्टयङ्गत्वेन पितृयज्ञानुष्ठाने न कश्चिद्विरोधः ।

मण्डन— ' दर्शयत्नैव शुचः पितृयज्ञः । '

शंकर— ' पितृयज्ञो न दर्शाङ्गम् । '

* पिण्डपितृयज्ञन्यायः । ' अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इत्यनारभ्याधीतवाक्ये श्रुतः पिण्डपितृयज्ञः क्रत्वर्थः पुरुषार्थो वा इति संशये कर्मवाच्यमावास्याशब्दसमभिव्याहारात् तदङ्गत्वम् । यद्यपि कालस्यापि साधारणोऽयं शब्दः, तथापि फलकल्पनापरिहाराय कर्मसम्बन्धेन । अतः क्रत्वर्थः । इति प्राप्ते, सिद्धान्तः । कालकर्मसाधारणोऽपि अमावास्याशब्दः अपराह्णशब्दसमानाधिकृतः इति कालपर एव । न च साधारण्यम्, काले रूढत्वात्, कर्मणि च तत्सम्बन्धेन लाक्षणिकत्वात् । तस्मात् स्वर्गफलः पिण्डपितृयज्ञः । कल्पतरु. १।१।४ पृ. ११२ प्रम.

* पिण्डपितृयज्ञेऽपि दर्शपूर्णमासधर्मा न भवन्ति । भा. ३।७।१।३–४.

**पिण्डपितृयज्ञहोमो दक्षिणाग्नौ, नाहवनीये ॥**

पितृयज्ञे एव दक्षिणाग्नौ श्रपितस्यापि हविषः आहवनीये एव होम, गार्हपत्ये श्रपितस्यापि तथा दर्शनात् । ' यदाहवनीये जुहोति ' इति वाक्यस्य बाधे मानाभावात् ' दक्षिणाग्नेरोल्मुकं घृणायन् उद्धरति ' इति वचनान्तरेण प्रणीताग्नेरपि सत्त्वात्, तस्य च पक्षे अविप्रणीतत्वात् दृष्टार्थत्वाय तत्रैव वा होमः । इति प्राप्ते, ' यस्मिन् श्रपयति तस्मिन् जुहोति ' इति वचनेनैव सिद्धान्तः, प्रणीतस्य तु आहवनीयादिर्धिकारणैव दत्तो भिन्नत्वात् । अत एव तस्यादृष्टार्थत्वमपि न दुष्यति, ' ये रूपाणि

**पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । ४।४।१९ ॥**

**भाष्यम्**— अस्ति आमावास्ये कर्मणि पितृयज्ञः 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति । तत्र संशयः किमामावास्यस्य कर्मणः पिण्डपितृयज्ञोऽङ्गम्, उतानङ्गमिति । किं प्राप्तम् ? अङ्गम्, फलवत्सन्निधावफलं तदङ्गं भवति । फलवचनाभावात् । आह, ननु फलवत्सन्निधावफलं तदङ्गं भवति । फलवत्वेऽकल्प्येत स्वर्गेणेति । उच्यते । सत्यम् । अमावास्यया एकवाक्यत्वान्न शक्यः स्वर्गः कल्पयितुमिति । आह । कालवचनत्वान्न कर्मणैकवाक्यता संभवतीति । उच्यते । लक्षणयाऽपि तावत्कर्मैकवाक्यता संभवति । स्वर्गे कल्प्ये न लक्षणा, न श्रुतिः । एवं चामनन्ति, 'यत्पितृभ्यः पूर्वेद्युः करोति, पितृभ्य एतद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते' इति । अमावास्यां प्रति निष्कृतं प्रतनितुं च श्रूयते । तस्मात्तदङ्गभूतमिति । एवं प्राप्ते, ब्रूमः । पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । अनङ्गभूतः पिण्डपितृयज्ञः । कस्मात् ? स्वकालत्वात् । स्वशब्दाभिहितेन कालेनास्य सम्बन्धः, न कर्मणा लक्षितेनेति । यथा 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति । यथा 'पुरस्तादुपसदां सौम्येन चरन्ति' इति । अत्र काले एवायं मुख्यः शब्दो न कर्मणि । कर्मणि लक्षणा । श्रुतिश्च लक्षणाया बलीयसी । यच्चोक्तं लक्षणया कर्मैकवाक्यता भविष्यतीति, तच्च न । कस्मात् ? अनुवादे हि लक्षणा न्याय्या, न विधौ । विधिश्चायम् । तस्मादमावास्याकर्मणा सम्बन्धः । एकस्मिन् काले द्वे कर्मणी परस्परेणासम्बद्धे इति ।

**टुप्**— पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ (सिद्धान्तमाह–) 'अमावास्यायामपराह्णे' इति सामानाधिकरण्यम् (अवगम्यते) । तच्च कालवचनत्वे (सति) उपपद्यते । इतरथा अमावास्याशब्देन आमेयादीनि उच्येरन् । तेषामङ्गत्वेन पिण्डपितृयज्ञो विधीयते (विधीयेत) । तस्य अपराह्णः कालः (विधीयते) इत्यनेन द्वारेण सामानाधिकरण्यं कीदृशमपि स्यात् (न स्यादित्यर्थः) । क्लिष्टा चेयं (वैयधिकरण्यद्वारा सामानाधिकरण्य–) कल्पना (न संभवति) । तस्मात् (कालवचनत्वात्) अमावास्याशब्दार्थे (काले) निमित्ते कालाय कर्म विधीयते । (तस्मात् फलप्रयुक्तः पिण्डपितृयज्ञः, न क्रतुप्रयुक्त इति) ।

**तुल्यवच्च प्रसंख्यानात् । २० ॥**

**भाष्यम्**— तुल्यवच्चान्यैः प्रधानैः प्रसंख्यायते । 'चत्वारो वै महायज्ञाः अग्निहोत्रम्, दर्शपूर्णमासौ, ज्योतिष्टोमः, पिण्डपितृयज्ञः' इति महायज्ञैस्तुल्यवत् प्रसंख्यायते । नाऽस्य महायज्ञता स्यादन्यतः परार्थतायाः । तस्मादनङ्गम् ।

**प्रतिषिद्धे च दर्शनात् । २१ ॥**

**भाष्यम्**— इतश्चानङ्गम् । प्रतिषिद्धे हि आमावास्ये पिण्डपितृयज्ञं दर्शयति । 'पौर्णमासीमेव यजेत भ्रातृव्यवान् नामावास्याम्, हत्वा भ्रातृव्यममावास्यया यजेत, पिण्डपितृयज्ञेनामावास्यायां प्रीणाति' इति । असत्याममावास्यायां पिण्डपितृयज्ञं दर्शयति । तदनङ्गत्वे उपपद्यते । तस्मादपि नाङ्गं पिण्डपितृयज्ञ इति ।

किं प्रयोजनं चिन्तायाः । यदि पौर्णमास्यामाधानम्, ततोऽनन्तरायाममावास्यायां न क्रियते, यथा पूर्वपक्षः । यथा तर्हि सिद्धान्तस्तथा कर्तव्यः । इदमपरं प्रयोजनम् । कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' 'मासं दर्शपूर्णमासाभ्यां यजेत' इति । यथा पूर्वः पक्षस्तथा कर्तव्यः पिण्डपितृयज्ञः । यथा सिद्धान्तस्तथा न कर्तव्य इति । श्लोकमप्युदाहरन्ति 'आधानं पौर्णमास्यां चेद् वृत्ते दर्शे करिष्यते । अनङ्गं पितृयज्ञश्चेन् मन्त्रे च न करिष्यते ॥' इति ।

**वा**— (सिद्धान्तमाह–) 'नैवं साधारणत्वेऽपि सामानाधिकरण्यतः । कालवाचित्वमेव स्यात् तत्सापेक्षश्च कर्मणि ॥' यद्यपि तावत् (कर्मकालयोः) साधारणः अमावास्याशब्दः, तथापि अपराह्णसामानाधिकरण्यनिष्ठया कालवाचित्वमध्यवसीयते ।

**सोम**— पूर्वेण (षट्चितिरित्यत्र) अर्थवादोपनीतत्वात् फलस्य अस्तु नैमित्तिकत्वम् । प्रकृते तु अत्यन्तानुपस्थितं फलं कल्पनीयं इत्ययुक्तं इति वैधर्म्येण प्रत्यवस्थानात् सङ्गतिः । सूत्रार्थस्तु– अमावास्याशब्दस्य कालवाचित्वेन स्वशब्दाभिहितकालयोगित्वात् पितृयज्ञो

सिद्धान्तस्तु यत्ने यत्नप्रतिपादनात्मकविधिविरोधित्वेन अकर्तव्यत्वप्रतिपादनात्मकनिषेधे आग्रति विकल्पापत्तेः तत्परिहाराय पर्युदासोऽत्र अङ्गीक्रियते। तस्य विषयसमर्पणेन अनुकूल्नया विकल्पानासञ्जकत्वात् तन्मात्रसंयोजनार्थोपसंहारात् तदन्यमात्रसकोननार्थेभ्य पर्युदासस्य स्पष्ट वैलक्षण्य इति। सु पृ. ८.

पित्तं यदि शर्करया शाम्यति, कोऽर्थः पटोलेनेति न्यायः। स्वल्पप्रयत्नेन कार्यसिद्धौ बहुप्रयत्नान्तर व्यर्थमिति विषयेऽस्य प्रवृत्तिरिति। अत्र पटोलशब्देन पटोलपत्र गृह्यते, तस्य शीतगुणत्वात्। उक्त च 'पटोलपत्र पित्तघ्न मूल तस्य विरेचनम्। फल तस्य त्रिदोषघ्न नाडी तस्य कफापहा॥' इति। साहस्री. ७११.

● पित्तधर्मस्य पीतत्वस्य चाक्षुषरश्मीना शङ्खमातो रश्मिसम्पुनाना पित्तान्वयानामपि शङ्खमाने. शङ्खसंयुक्तसमवायनिमित्तारोपदर्शनात् सादृश्यादिना येन चित् संबन्धेन आरोपो भवति। सु. पृ ५०८.

● पित्र्याणि कर्माणि अपरपक्षे अपराह्णे। ६।८।६।२५ ● पित्र्यायां अग्नि कव्यवाहन स्विष्टकृद्देवता आयापिहस्त्विष्टकृति। तत्र उत्तमानूयाजेऽपि 'देवो अग्नि. कव्यवाहनः स्विष्टकृत् सुद्रविणा मन्द्र कवि' इति मन्त्रे ऊह., त्यागे च तदे प्रयोगः कर्तव्य। याज्ञिकास्तु एव न कुर्वन्ति। तत्र मूल चिन्त्यम्। भाट्ट. १०।४। २०. ● पित्र्यायामिष्टौ 'मित्रावरुणौ त्वोत्तरत' इत्युत्तरपरिधिपरिधानमन्त्र. वाजसनेयिना कर्मणि 'मित्रावरुणौ त्वा पुरस्तात्' इत्यूह्यते। तथा आहवनीयावेक्षणे 'सूर्यस्त्वा पुरस्तात् पातु' इति प्रकृतौ मन्त्र. 'सूर्यस्त्वा दक्षिणत. पातु' इत्यूह्यते। सम्प्रदायमते तु अत्र मन्त्रद्वयेऽपि ऊहो नास्ति। बाल पृ १२७. ● पित्र्याया यागानु हन्ति पूर्वं कर्तव्या। हन्ति कृत्वा याकः कार्यं। १०।२।२४।७५.

● पित्र्येष्टौ विधिवलात् कर्मैक्येऽपि अनुवाक्याद्वयम्। सु पृ. १०६४.

पित्र्यकर्मणामपरपक्षादिः काल॥

इतरेषु तु पित्र्याणि। ६।८।६।२५॥

भाष्यम्-- श्राद्धादीनि अपरपक्षे अपराह्णे च, स्मृतिरूपान्यार्थदर्शनात्। (भाष्यकारेण न व्याख्यातमिदं टुप्टीका, तस्मात् अय ग्रन्थो न भाष्यकारस्येति भाति)।

टुप्— पित्र्याणि (कर्माणि कानि चित्) एतानि-- उदकतर्पणमहरह. (कार्यं न दक्षिणायनादिक काल्यमपेक्षते)। पिण्डपितृयज्ञ अमावास्यायाम् (सर्वस्याम्)। उभयो. पक्षयो. श्राद्धम् (चन्द्रसूर्योपरागनिमित्तम्। नित्य च द्रव्यदेशब्राह्मणसंनिधानवशाच्च विहितम्)। पित्र्या चातुर्मास्यकाल (महापितृयज्ञाख्या साकमेधकाले) पौर्णमास्याम्। (नात्र अपरपक्षकालसंभव)। तानि न नियोगत इतरेषु (वैककालेतरेषु। यथासंभव तु इतरेषु तेषु वा कर्तव्यानि)।

(वि— इदमधिकरण नास्त्येव। भाट्ट— इदमधिकरण पूर्वाधिकरणे एवान्तर्भावितम्।)

मण्डन-- 'पित्र्य दर्शाद्यपराह्णादिकाले।'

शंकर— 'पित्र्य कृष्णेऽपरायणे।'

पिपीलिकाभिर्मन्थानगिरिचिक्षेपनन्यायः। यथा आहु-- 'श्रद्धत्स्व मन्थानगिरिं पर्यक्षिपन्पिपीलिका' इति। अश्रद्धेयस्योपन्यासे अय प्रवर्तते। साहस्री ८७९.

पिपीलिकागतिन्यायः। यथा पिपीलिका वृक्षशिर स्थितमधुरफलरसास्वादने आसक्तमानसा सत्यपि महायासेन गच्छन्ती कालान्तरे तद्रसमनन्यमास्वादते, तथैव अज्ञानी पुरुष. श्रुतिस्मृतिपुराणविहितकर्मोपासनादिमार्गसंचारतशुद्धान्त.करणतया जन्मान्तरेषु कदा चित् प्राप्तपूर्णज्ञानोऽवश्य ब्रह्मानन्दमनुभवतीति। साहस्री. ५१५.

● पिपीलिकमध्या अनुष्टुप्। पादेषु अक्षराणि १२।८।१२। उदा० 'पर्यू षु प्रधन्व' (ऋसं. ९।११०। १)। के. ● पिपीलिकमध्या उष्णिक्। पादेषु अक्षराणि १३।६।११। उदा० 'हरी यस्य सुयुजा' (ऋसं. १०।१०५।२)। के ● पिपीलिकमध्या बृहती।

प्रतिनुद्यमानाः' इति मन्त्रे तस्य रक्षोहननार्थत्व-श्रवणात् । संकर्ष. १।२।११.

■ पिण्याकयाचनार्थं गतस्य खारिकातैलदातृत्वाभ्युपगम इति न्यायः । सर्वस्वेनग्रहे पूर्णग्रहणे अयं न्यायः । साहस्री. ७०९.

● पिता पितामहः सोम न पिबेत् इति (भाष्यम्) । पितुः पितामहस्य वा असोमपत्वे नायमसोमनिमित्तत्वे-नोच्यमानं साहित्यविरहात् सिद्धम् । वा. ३।१।६।१२ पृ. ९९६. ● पिता वार्धके पुत्रमुपजीवति । यथा च 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः । अप्य-कार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥' इति स्मृतिः । के. ● 'पित्रा पितरं वा समानीते' इव कर्मणि तृतीया कारकविभक्तिरूपा विनियोजिका श्रुतिः । बाल पृ. ४४.

■ पितृदुहितृस्नानन्यायन्यायः । पिता यथा स्नानपरः बालमनुसृत्य वर्तते, तथा विदुषा अज्ञो जनोऽनुवर्तनीयः । संग्रहः.

● पित्रादीनामदेयता विश्वजिति सर्वस्वदाने । नहि पित्रादीना शक्यते स्वत्वं परित्यक्तुम् । न चैतत् न्याय्यं यत् पित्रादीना परित्यागकरणम् । भा. ६।७।१। १–२.

● पितृधने पुत्राणां लोके समविभागो दृष्टः । वि. १०।३।१३.

● पितापुत्रन्यायः । तदपेक्षया स एव कं प्रत्यपि पिता भवति, कं प्रत्यपि पुत्रो भवति । एवं शब्दोऽपि श्रोत्रमिति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (पा० १।१। ६६) इति सूत्रभाष्ये स्पष्टम् । साहस्री. ६०७.

● पितृमातृमातुलादयः तत्तत्संबन्धविशेषवाचक-शब्देन यथा उच्यन्ते ■ तथा स्वनामग्रहणेन, मनुष्य उच्यन्त एव । वि. १०।८।१४.

■ पितृयज्ञः स्वकालत्वादनङ्गं स्यात् । ४।४। ८।१९ ॥

'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति श्रुतम् । अत्र पिण्डपितृयज्ञः किं अमावास्यस्य कर्मणः अङ्गम्, उत नेति विचारे अमावास्यायागाङ्गं पिण्ड-पितृयज्ञः इति उक्ते पूर्वपक्षे सिद्धान्तयति । पितृयज्ञः पिण्डपितृयज्ञः अमावास्यायागस्य अनङ्गम्, न अङ्गं स्यात् । स्वकालत्वात् । स्वः स्वीयः कालो यस्यासौ स्वकालः, स्वकालत्वात् । अमावास्यैव अस्य स्वः कालः । तत्राय विहितः । अमावास्यायागकालेऽपि यद्यपि सैव तिथिः, तथापि एकस्मिन् काले द्वे एते कर्मणी परस्परेण असंबद्धे । तस्मादनङ्गम् ।

तुल्यवच्च प्रसंख्यानात् । २० ॥

पिण्डपितृयज्ञः स्वप्रधान एव, न अमावास्याया अङ्गम् इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । इतरैर्महायज्ञैः तुल्य-मिव पिण्डपितृयज्ञस्य प्रसंख्यानं परिगणनं श्रूयते 'चत्वारो वै महायज्ञाः अग्निहोत्रम्, दर्शपूर्णमासौ, ज्योतिष्टोमः, पिण्डपितृयज्ञः' इति । तुल्यता च प्रधा-नत्वेन स्वप्रधानत्वम् । तस्मात् नाङ्गम् ।

प्रतिषिद्धे च दर्शनात् । २१ ॥

पिण्डपितृयज्ञः स्वप्रधान एव नामावास्यायागस्याङ्ग इति सिद्धान्ते तृतीयहेतुप्रतिपादनार्थं सूत्रम् । प्रतिषिद्धे-ऽपि आमावास्ये कर्मणि पिण्डपितृयज्ञानुष्ठानस्य दर्शनात् पिण्डपितृयज्ञो नामावास्याङ्गम् । किञ्च यदा पौर्णमास्या-माधानं तदा अन्तराले अप्राप्तत्वामावास्यायां तिथौ अमा-वास्यायागो न भवति, पिण्डपितृयज्ञस्तु भवति । तस्मात् नामावास्याङ्गं पितृयज्ञः । के.

● पितृयज्ञे अतिदेशप्राप्तस्य होतृवरणस्य 'न होतारं वृणीते' इति निषेधः श्रूयते । अत्र नञ: पर्युदासार्थ-त्वेऽपि विकल्पः अपरिहार्यः । तथापि पर्युदसनीयप्राप्ति-सापेक्षत्वात् । अन्यथा 'न सौम्येऽध्वरे' इत्यस्यापि पर्युदासत्वापत्तेः । किञ्च अन्यत्र एव तदन्येषु प्राप्तेः, तदन्यमात्रबोधार्थत्वे च पर्युदासेऽप्रहारयोरभेदापत्तेः न पर्युदासत्वनिष्कन्तदोषापत्तिः । तस्मात् प्रतिषेध एवायम् । ततश्च विहितप्रतिषिद्धत्वात् विकल्पः इति । तत्र प्राप्तिसापेक्षस्यापि सुवर्णादिनिषेधस्य विशेषनिष्ठत्वात् वर्जनीयत्वं स्यात् इत्याशङ्क्य विशेषनिष्ठेनापि निषेधेन आत्मन्यभावबोधापत्तेः सामान्यरूपस्यापि विधेः स्वविष-यत्वेनानुसन्धानात् अनवसीतस्य च शास्त्रस्य अन्यत्र-प्रसक्तेर्न विकल्पो दुष्परिहरः इत्युक्तम् 'न तुल्य-हेतुत्वादुभयं शब्दलक्षणम्' (१०।८।१।३) इति ।

प्रयोगजा ॥ तत्र किं तुल्यता युक्ता किमेकैव बलीयसी । समा विप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् ॥ आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥ ’ सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते, अर्थश्च संव्यवहारप्रसिद्धमर्थमभिधीयते । ‘ तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा । तत्रापि तस्य सामर्थ्यमनाधेय प्रतीयते ॥ यथैव ह्यार्यगम्येऽर्थे संबन्धानादितामतिः । म्लेच्छगम्ये तथैव स्याद्विशिष्टं हि कारणम् ॥ न प्रयोगावधिस्तस्य म्लेच्छेष्वपि हि दृश्यते । अनाद्योर्यशक्त्योश्च विशेषो गम्यतां कथम् ॥ यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः । एवं स्वार्थे प्रयोगात् तैरिष्टः शब्दोऽपि वाचकः ॥ तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने । समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥ ’ इति प्राप्ते, अभिधीयते । ‘शास्त्रस्था वा’ इति पूर्ववदेव सकलसूत्रव्याख्या योजनीया । ( शब्दापभ्रंशवत् अर्थापभ्रंशस्याप्युपपत्तेः न प्रतीतिप्रयोगमात्रेण एकान्तत सर्वेषामर्थानां एकस्माच्छब्दात् प्रतीयमानानां वाच्यत्वनिर्णयः संभवति इति कल्पनालाघवात् एकस्यैव वाच्यत्वे निर्णीते, कस्यैकस्य इत्यपेक्षायां शास्त्रस्थाना अभिधेयाभियोगविशेषात् तत्प्रयोगवशेन वाच्यत्वावधारणं इति व्याख्यान्तरमाह— ) किञ्च ‘ यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥ ’ शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति । ते शास्त्रस्थैरेव अविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते साध्वसाधुकार्षापणवत्पाथेयवत् परीक्षिभिः विवेक्तुम् । अभियुक्तानभियुक्तज्ञानयोश्च अभियुक्तज्ञानं बलवत् इतरस्य तुल्भापवादत्वात् । ‘ अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥ ’ एतेन आर्यावर्तनिवासिष्वप्यपि ‘ अभियुक्तनरा येये बहुशास्त्रार्थवेदिनः । तेतं यत्र प्रयुञ्जीरन् सतोऽर्थस्तत्त्वतो भवेत ॥ ’ वा. १।३।४।९ पृ. २१९–२२०.

शा— लोकप्रसिद्धिगम्यत्वात् शब्दार्थयोरुभयोरपि । समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलम् ॥ ’ इति प्राप्ते, ब्रूमः । ‘ प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते । अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥ ’ १।३।५ वर्णक २.

सोम— प्रयोजनं पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वात् हस्तिवाचकत्वाभिप्रायेण पीलुशब्दप्रयोगस्य अपशब्दप्रयोगत्वाभावात् आहिताग्नेः अपशब्दप्रयोगनिमित्तं प्रायश्चित्तं न भवति, सिद्धान्ते तु भवति इति । भवदेवस्तु ‘ पैलवौदुम्बरौ वैश्यस्य दण्डौ ’ इति गौतमस्मृतौ हस्तिभक्षास्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्पः पूर्वपक्षे, सिद्धान्ते तु पीलुवृक्षदण्ड एव इत्याह ।

भाट्ट— प्रयोगरूपाचारस्य यत्र आर्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः, यथा पीलुशब्दस्य वृक्षविशेषे आर्याणाम्, अन्येषां हस्तिनि । तत्र तुल्यबलत्व व्यवहारे आर्याणामिव म्लेच्छानामपि, अभियुक्तत्वाविशेषात् अरण्यशास्त्रस्य उभयत्रापि समानत्वात् । इति प्राप्ते, अभिधीयते । शक्यताऽवच्छेदकमेवेन अनेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिर्नोभयत्र । न च विनिगमनाविरहः आप्तप्रसिद्धेरेव नियामकत्वात् । आर्या हि शब्देकममधिगम्यधर्माधर्मयोः अविप्लुतिलिप्सया शब्दार्थतत्त्व विविच्य परिपालयन्ति, न म्लेच्छाः, दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः । अतः क्लृप्तसिद्ध्या वृक्षविशेषे एव शक्तिः । गजप्रतीतिस्तु लक्षणया शक्तिभ्रमाद्वा ।

यत्र तु नियामकाभावः तत्राऽगत्या भक्ष्यादिशब्देषु उभयत्रापि शक्तिः, आर्याणामेवोभयत्रापि प्रयोगात् । तत्रापि कदाचिद्वाक्यशेषस्य नियामकता । ‘ यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति ’ इत्यनेनैव यवशब्दस्य दीर्घशूकविशिष्टे शक्ति, प्रियङ्गुषु तु लक्षणया प्रयोगः । १।३।४.

शंकर— ‘ पील्वाद्यर्थस्तथाऽऽर्यतः । ’ ८.

🙚 पीलुपत्रफलन्यायः । यथा पीलुवृक्षस्य पत्राणि कटुकानि फलानि न मधुराणि । द्वयोः पत्रफलयोः पीलुजन्यत्वात् साम्यमिति तर्कः । अयं च अत्यन्तासंगतमूर्ख-

पादेषु अक्षराणि १३।८।१३ । उदा० 'अभि वो वीर' (ऋस ८।४६।१४)। के

* नहि स्निग्धस्य स्नेहन शक्यं कर्तुं पिष्टस्य वा पेषणम् । भा ९।२।२।३-

* पिष्टनिर्वृत्तिपर्यन्त पेषणं अभ्यसितव्यम् । यदि सकृदेव उपलाया प्रकर्षणाकर्षणे कृत्वा उत्सृज्येत यदेपा कार्यं तन्नैव निर्वर्तेत । भा ११।१।५।२७

𝕮 पिष्टपेषणन्याय । यत्र निष्फला क्रिया तत्रास्य प्रवृत्ति । साहस्री ३०१ * नहि अविद्वान् विहितो-ऽस्ति इत्यवश्यं तावदधीता आमीया पदार्था प्रागेव कर्मप्रक्रमादवगन्तव्या । तत्र प्रैष पिष्टपेषणन्यायेन अर्थं ज्ञापयितु अशक्नुवन् अदृष्टार्थो भवति । भा १।२।४।२१-१

* भत चोपेतमनुत्सृ० पुनरुपेतुमशक्यम् । उपेय मानं च पिष्टपेषणवदकिञ्चित्कर स्यात् । भा. १२।२। ५।१६

* पिष्टलेपफलीकरणहोमो नाम, दृषदुपलकपाला दिषु आश्लिष्टो य पिष्टलेप, तमुद्धृत्य शुष्क चातुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति, फलीकरणशब्देन तण्डुलकणा उच्यन्ते, तानपि तथा जुहोति इति । वि ५।१।१५ * पिष्टलेपफलीकरणहोमौ पशुपुरोडाशाद्भक्षा-भक्षणोत्तरमेव ज्योतिष्टोमे, न तु अनुयाजे सहोत्कर्ष । ५।१।१५ * पिष्टलेपफलीकरणहोमौ प्रतिपत्तिकर्मणी । प्रतिपत्तित्वात् अपकर्षे एव निर्वपणादीना धर्माणाम् । भा ८।४।५।२७ * पिष्टलेपफलीकरणहोमयो दाक्षिणाग्निकयो नोत्कर्षे अनुयाजो कर्षेऽपि । ५।१।१५ मीको पृ २०९६ 'दाक्षिणाग्निकहोमानपकर्षाधि करणम्' इत्यत्र द्रष्टव्यम् ।

* 'पीपिवास सग्भव' इति याज्यानुवाक्ये पुदेवत्य होतृकाण्डे स्त्रीदेवत्यात् पश्चात् पठिते, चित्रायागे पञ्चमहविष । वि ५।१।७

𝕮 पील्वधिकरणम् । (१।३।४।९ वा पृ २१९-२२० 'शास्त्रस्था वा०' इति सूत्रान्ते) । अतो ऽन्यथा एतदधिकरण वर्ण्यते । अविद्यमानवाक्यनोष आर्यम्लेच्छप्रयोगविप्रतिपत्तिमात्र पील्वादिशब्दा एव अत्रोदाहरणम् । आर्या हि पीलुशब्द वृक्षविशेषे प्रयुञ्जते । तदाह गौतम – 'पैल्वौदुम्बरौ वैश्यस्य दण्डौ' इति । म्लेच्छास्तु हस्तिनि । तत्र सदेह किं द्वयोरपि पीलु शब्दाभिधेयत्वम्, उतान्यतरस्याऽभिधेयत्व अन्यतरस्य गौणत्वमिति । अत्राथ पूर्वपक्षिणोऽभिसधि उभावेता वर्थौ पीलुशब्दात् प्रतीयेते । प्रतीतिश्चोभयत्रापि शक्तिं कल्पयति, विशेषाभावात् । न च लौकिके शब्दार्थव्यवहारे आर्यम्लेच्छकृत कश्चिद्विशेषोऽस्ति । नहि घटादिजातीयेषु आर्या एव परं घटशब्द प्रयुञ्जते, न म्लेच्छा इति शक्य वक्तुम् । तस्मादेवविधेषु शब्दार्थव्यवहारेषु वैदिकेषु भावेन आर्यम्लेच्छयोर्विप्रतिपत्ते समत्वात् पील्वादि शब्दानामुभयवाचकत्वमिति । एव प्राप्ते, अभिधीयते । आर्याणामेव प्रसिद्धिर्बलीयसी । शास्त्रस्था हि ते पारमा र्थिकशास्त्रार्थानुष्ठानाय पारमार्थिकमेव शब्दार्थमवधार यन्ति । तेन येष आर्याणामनादिशब्दार्थावधारणपरम्परा सैव वाच्यवाचकत्वावधारणे प्रमाणम् । म्लेच्छाना तु वाहच्छिकव्यवहारिणा पारमार्थिकशब्दार्थतत्त्वनिरूपणा-नभिज्ञाना हस्तिगोचरत्वेन आर्यप्रयुक्तपीलुशब्दार्थवृक्ष स्थूलत्वश्यामलत्वादिसादृश्यात् गौणपीलुशब्दाश्रयणेन मुख्य त्वभ्रमादेव शब्दस्य व्यवहारोपपत्तौ न पारमार्थिक शब्दार्थावगम । तदुक्तम्– 'अभियुक्ततरा येन बहुशास्त्रार्थदर्शिन । येते यत्र प्रयुञ्जीरन् सतोऽर्थस्तत्र वलो भवेत् ॥' इति (वा पृ २२०)। तस्मादार्यप्रसिद्धि-रेव शब्दार्थावधारणे प्रमाणम्, न म्लेच्छप्रसिद्धिरिति ।

**प्रयोजनम्**— 'पैल्वौदुम्बरौ वैश्यस्य' इत्यत्र हस्तिमत्तस्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्प पूर्व-पक्षे । सिद्धान्ते तु पीलुवृक्षदण्ड एव । सूत्रे तु ये 'शास्त्रस्था' तेषामेव प्रसिद्धिर्बलीयसी । तेषामेव शास्त्रार्थानुष्ठानाय शब्दार्थनिरूपणे 'निमित्तत्वात्' इति । वैता

𝕮 पील्वधिकरणम् । आर्यम्लेच्छप्रयोगविप्रतिपत्ति बलाबलचिन्तनम् ॥ ('शास्त्रस्था वा०' इति सूत्रान्ते)।

वा— '**तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम्** (यस्मात् भाष्योक्तोदाहरणानि न युक्तानि तस्मात् इत्यर्थ)। यत्र विप्रतिपत्ति स्यादार्यम्लेच्छ-

प्रयोगजा ॥ तत्र किं तुल्यता युक्ता किमेकैव बलीयसी । समा विप्रतिपत्तिः स्याद् दृष्टार्थव्यवहारिणाम् ॥ आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु । दृष्टार्थेषु तु तुल्यत्वमार्यम्लेच्छप्रयोगिणाम् ॥ ' सर्वो हि शब्दः अर्थप्रत्यायनार्थं प्रयुज्यते, अर्थश्च संव्यवहारप्रसिद्ध्यर्थमभिधीयते । ' तत्र यस्य विशिष्टस्य म्लेच्छेष्वर्थान्तराभिधा । तत्रापि तस्य सामर्थ्यमनाद्येव प्रतीयते ॥ यथैव ह्यार्यगम्येऽर्थे संबन्धानादितामतिः । म्लेच्छगम्ये तथैव स्याद्-विशिष्टं हि कारणम् ॥ न प्रयोगावधित्वस्य म्लेच्छेष्वपि हि दृश्यते । अनाद्योरर्थशब्दयोश्च विशेषो गम्यतां कथम् ॥ यथा च म्लेच्छदेशेऽपि धूमोऽग्नेरवबोधकः । एवं स्वार्थे प्रयोगात् तैरिष्टः शब्दोऽपि वाचकः ॥ तस्मात्पील्वादिशब्दानां वृक्षहस्त्यादिबोधने । समा विप्रतिपत्तिः स्यादार्यम्लेच्छप्रयोगतः ॥ ' इति प्राप्ते, अभिधीयते । 'शास्त्रस्था वा' इति पूर्ववदेव सकलसूत्रव्याख्या योजनीया । ( शब्दापभ्रंशवच्च अर्थापभ्रंशस्याप्युपपत्तेः न प्रतीतिप्रयोगमात्रेण एकान्ततः सर्वेषामर्थाना एकस्माच्छब्दात् प्रतीयमानानां वाच्यत्वनिर्णयः संभवति इति कल्पनालाघवात् एकस्यैव वाच्यत्वे निर्णीते, कस्यैकस्य इत्यपेक्षायां शास्त्रस्थाना अभियुक्ताभियोगविशेषात् तत्प्रयोगवशेन वाच्यत्वावधारणं इति व्याख्यान्तरमाह — ) किञ्च ' यथा साधुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥ ' शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति । ते शास्त्रस्थैरेव अविप्लुतार्थक्रियाभिमतपुण्यार्थिभिः शक्यन्ते शास्त्रसाधुकार्षापणाध्याध्यादिव तत्परीक्षिभिः विवेक्तुम् । अभियुक्तानभियुक्तज्ञानयोश्च अभियुक्तज्ञानं बलवत् इतरस्य सुलभापवादत्वात् । ' अतः शास्त्राभियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥ ' एतेन आर्यावर्तनिवासिभ्योऽपि ' अभियुक्ततरा येये बहुशास्त्रार्थवेदिनः । तैते यत्र प्रयुञ्जीरन् सर्वोऽर्थस्तत्त्वतो भवेत् ॥ ' वा. १।३।४।९ पृ २१९–२२०.

शा— लोकप्रसिद्धिगम्यत्वात् शब्दार्थयोरुभयोरपि । समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलम् ॥ ' इति प्राप्ते, ब्रूमः । ' प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते । अविप्लुतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥ ' १।३।५ वर्णकं २.

सोम— प्रयोजनं पूर्वपक्षे हस्तिनोऽपि पीलुशब्दार्थत्वात् हस्तिवाचकत्वाभिप्रायेण पीलुशब्दप्रयोगस्य अपशब्दप्रयोगत्वाभावात् आहिताग्नेः अपशब्दप्रयोगनिमित्तं प्रायश्चित्तं न भवति, सिद्धान्ते तु भवति इति । भवदेवस्तु ' पैल्वौदुम्बरौ वैश्यस्य दण्डौ ' इति गौतमस्मृतौ हस्तिप्रमाणदण्डेन सह पीलुवृक्षदण्डस्य विकल्पः पूर्वपक्षे, सिद्धान्ते तु पीलुवृक्षदण्ड एव इत्याह ।

भाट्ट— प्रयोगस्याचारस्य यत्र आर्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः, यथा पीलुशब्दस्य वृक्षविशेषे आर्याणाम्, अन्येषां हस्तिनि । तत्र तुल्यबलत्वं व्यवहारे आर्याणामिव म्लेच्छानामपि, अभियुक्तत्वाविशेषात् अव्यभिचरणस्य उभयथापि समानत्वात् । इति प्राप्ते, अभिधीयते । शक्यताऽवच्छेदकभेदेन अनेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिर्निर्णेया । न च विनिगमनाविरहः आर्यप्रसिद्धेरेव नियामकत्वात् । आर्या हि शब्देकत्वसन्धिताध्यधर्माधर्मयोः अविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, न म्लेच्छाः, दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः । अतः तदभिमते वृक्षविशेषे एव शक्तिः । गजप्रतीतिस्तु लक्षणया भ्रान्तिप्रमादाद्वा ।

यत्र तु नियामकाभावः तत्राऽगत्या अक्षादिशब्देषु उभयत्रापि शक्तिः, आर्याणामेवोभयत्रापि प्रयोगात् । तत्रापि कदाचिद्वाक्यशेषस्य नियामकता । ' यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति ' इत्यनेनैव यवशब्दस्य दीर्घशूकविशिष्टे शक्तिः, प्रियङ्गुषु तु लक्षणया प्रयोगः । १।३।४.

शंकर— ' पील्वाद्यर्थस्तथाऽर्यतः । ' ८.

पीलुपत्रफलन्यायः । यथा पीलुवृक्षस्य पत्राणि कटुकानि फलानि च मधुराणि । द्वयोः पत्रफलयोः पीलुजन्यत्वात् साम्यमिति तर्कः । अयं च अत्यन्तासंगतमूर्ख-

पादेषु अक्षराणि १३।८।१३। उदा० 'अभि वो वीर' (ऋग् ८।४६।१४)। के

* नहि स्निग्धस्य स्नेहनं शक्यं कर्तुं पिष्टस्य वा पेषणम्। भा. १२।२।३.

* पिष्टनिर्वृत्तिपर्यन्तं पेषणं अभ्यस्तिव्यम्। यदि सकृदेव उपलाया प्रकर्षणापकर्षणे कृत्वा उत्सृज्येत यदेषा कार्यं तदैव निर्वर्तेत। भा ११।१।५।२७.

■ पिष्टपेषणन्याय । यत्र निष्फला क्रिया तत्रास्य प्रवृत्ति । साहस्री ३०१ * नहि अस्मिन् विहितोऽस्ति इत्यनेन तावदमीषा आमीया पदार्था प्रागेव धर्मप्रक्रमाद्वगन्तव्या । तत्र प्रेप पिष्टपेषणन्यायेन अर्थं ज्ञापयितुं अशक्नुवन् अदृष्टार्थो भवति । भा. १।२।४।११-२.

* अत्र चोपेतमनुसृत्य पुनरर्पेतुमशक्यम्। उपेयमानं च पिष्टपेषणवदकिञ्चित्करं स्यात्। भा १२।२।५।१६.

* पिष्टलेपफलीकरणहोमौ नाम, दृषदुपलकपालादिषु आश्लिष्टो य पिष्टलेप, तमुद्धृत्य जुहू। चतुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति, फलीकरणशब्देन तण्डुलकणा उच्यन्ते, तानपि तथा जुहोति इति । वि ५।१।१५ * पिष्टलेपफलीकरणहोमौ पशुपुरोडाशाङ्गेनाग्नीषोमीयस्येव ज्योतिष्टोमे, न तु अन्यत्रैव ठहोतव्यौ । ५।१।१५ * पिष्टलेपफलीकरणहोमौ प्रतिपत्तिकर्माणी। प्रतिपत्तित्वात् अग्नीषोमीये एव निर्वपणादीना धर्माणाम्। भा. ८।४।५।२७ * पिष्टलेपफलीकरणहोमयो दाक्षिणाग्निकयो नोत्कर्षं अनुयाजोत्कर्षेऽपि। ५।१।१५ मीको पृ २०९६ 'दाक्षिणाग्निकहोमानपकर्षाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* 'पीपिप्रास सरस्वत' इति याज्यानुवाक्ये पुरेवस्य हौत्रकाण्डे स्विष्टकृतः पश्चात् पठिते, चित्रायागे पञ्चहविष । त्रि ५।११७.

🞗 पील्वधिकरणम् । (१।३।४।९ वा पृ. २१९-२२० 'शास्त्रस्था वा०' इति सूत्रान्ते)। अतोऽन्यथा एतदधिकरणं वर्ण्यते । अविद्यमानवाक्यदोषा आर्यम्लेच्छप्रयोगविप्रतिपत्तिश्चात्र पील्वादिशब्दा एव अत्रोदाहरणम्। आर्या हि पीलुशब्दं वृक्षविशेषे प्रयुञ्जते। तदाह गौतम – 'पैल्वौदुम्बरौ वैश्यस्य दण्डौ' इति। म्लेच्छास्तु हस्तिनि । तत्र सन्देह किं द्वयोरपि पीलुशब्दाभिधेयत्वम्, उतान्यतरस्याऽभिधेयत्वं अन्यतरस्य गौणत्वमिति । अत्राय पूर्वपक्षिणोऽभिसन्धि उभावेतावर्थौ पीलुशब्दात् प्रतीयेते। प्रतीतिश्चोभयत्रापि शक्तिं कल्पयति, विशेषाभावात्। न च लौकिकशब्दार्थव्यवहारे आर्यम्लेच्छकृत कश्चिद्विशेषोऽस्ति। नहि यवादिजातीयेषु आर्या एव यवशब्दं प्रयुञ्जते, न म्लेच्छा इति शक्यं वक्तुम्। तस्मादेवंविधेषु शब्दार्थव्यवहारेषु वेदविरोधाभावेन आर्यम्लेच्छयोर्विप्रतिपत्ते समत्वात् पील्वादिशब्दानामुभयवाचकत्वमिति। एवं प्राप्ते, अभिधीयते। आर्याणामेव प्रसिद्धिर्बलीयसी। शास्त्रस्था हि ते पारमार्थिकशास्त्रार्थानुष्ठानाय पारमार्थिकमेव शब्दार्थमवधारयन्ति। तेन तेषां आर्याणामनादिशब्दार्थावधारणपरम्परैव वाच्यवाचकसम्बन्धावधारणे प्रमाणम्। म्लेच्छाना तु याद‍ृच्छिकव्यवहारिणा पारमार्थिकशब्दार्थतत्त्वनिरूपणानभिज्ञाना हस्तिगोचरत्वेन आर्यप्रयुक्तपीलुशब्दार्थवृक्षस्थूलत्वश्यामलत्वसादृश्यात् गौणपीलुशब्दाश्रयणेन मुख्यत्वभ्रमादेव शब्दस्य व्यवहारोपपत्तौ न पारमार्थिकशब्दार्थाभ्यवधानम्। तदुक्तम्– 'अभियुक्ततरा येऽत्र बहुशास्त्रार्थदर्शिन । तैर्येऽत्र प्रयुज्यीरन्, तथोऽर्थस्तत्त्वतो भवेत् ॥' इति (वा पृ २२०)। तस्मादार्यप्रसिद्धिरेव शब्दार्थावधारणे प्रमाणम्, न म्लेच्छप्रसिद्धिरिति।

प्रयोजनम्— 'पैल्वौदुम्बरौ वैश्यस्य' इत्यत्र हस्तिमवास्थिदण्डेन सह पीलुवृक्षदण्डस्य विकल्प पूर्वपक्षे । सिद्धान्ते तु पीलुवृक्षदण्ड एव । सूत्र तु ये 'शास्त्रस्था' तेषामेव प्रसिद्धिर्बलीयसी । तेषामेव शास्त्रार्थानुष्ठानाय शब्दार्थनिरूपणे 'निमित्तत्वात्' इति। तौवा

🞗 पील्वधिकरणम् । आर्यम्लेच्छप्रयोगविप्रतिपत्तिकरणाल्पचिन्तनम् ॥ ('शास्त्रस्था वा०' इति सूत्रान्ते)।

वा— 'तस्मादन्यदुदाहृत्य विचार्यमिदमीदृशम् (यस्मात् माष्योक्तोदाहरणानि न युक्तानि तस्मात् इत्यर्थ)। यत्र विप्रतिपत्ति स्यादार्यम्लेच्छ-

सति तच्छेषत्वादूहेन सर्व एवेन्द्रमित्रावरुणादय उपलक्षणीया इति ।

**अपनयाद्वा पूर्वस्यानुपलक्षणम् । ३१ ॥**

अनया पूर्वपक्षः । यद्यपि चमसेष्वैन्द्रशेषत्वमस्ति, तथापि मित्रावरुणोद्देशेन प्रक्षिप्तरससम्पर्कादेकत्वापन्नो रसः कृत्स्न एव मित्रावरुणार्थोऽऽश्रावणप्रत्याश्रावणाभ्यामपनीतेन्द्रसम्बन्धः प्रदानकाले मित्रावरुणार्थ एव जातः । तेन पूर्वेन्द्रसम्बन्धस्यापनीतत्वात् प्रकृतौ चापनीतदेवतासम्बन्धस्यानुपलक्षणात् नेन्द्र उपलक्षयितव्यः, किन्तु मित्रावरुणावेव । तेन इन्द्रस्यापनयात् नेन्द्र उपलक्षणीय इति । एवं प्राप्ते, अभिधीयते ।

**अग्रहणाद्वाऽनपायः स्यात् । ३२ ॥**

अयमभिप्रायः । भवेदेवं यदीन्द्रसम्बन्धोऽपनीतो भवेत् । देवतान्तरसम्बन्धेन हि पूर्वदेवतासम्बन्धो नापनीतः देवतान्तरसम्बन्धश्च द्रोणकलशादभ्युन्नीयमानस्यैव सोमरसस्य । तस्यैव ग्रहणवेलाया देवतान्तरसम्बन्धस्य शास्त्रेण प्रतिपादितत्वात् । यथागृहीतस्यैव द्रव्यस्य देवतोद्देशेन त्यागात् । आश्रावणप्रत्याश्रावणयोरपि तदर्थत्वेन । तदुक्तम्– 'देवतां यां यदुद्दिश्य द्रव्यं स्वत्वेन गृह्यते । तस्यास्तदेव संबन्धि नान्यत्तन्मध्यपात्यपि ॥' इति ( वा. पृ ७९० ) ।

तेन यद्यपि संसर्गैकरूप्येण द्रव्यस्य विभागो नावगम्यते, तथापि शास्त्रगतस्य विभागस्य विद्यमानत्वादिन्द्रार्थगृहीतस्य वचनमन्तरेण मित्रावरुणार्थत्वेन सम्बन्धयितुमशक्यत्वात्तेन सम्बन्धोऽपनीत इति इन्द्रशेषस्यापि विद्यमानत्वात् सोऽप्युपलक्षयितव्य इति । तस्मात् 'इन्द्रमित्रावरुणपीतस्य' इत्येवमूहः कर्तव्य इति ।

ननु प्राकृतपदोद्धारेण तस्य स्थाने पदान्तरनिक्षेपः खलु ऊहः । 'इन्द्रमित्रावरुणपीतस्य' इति तु प्रयोगे प्रकृतमिन्द्रपदं विद्यत एवेति कथमूहः । उच्यते । इन्द्रमित्रावरुणयोर्भिन्नत्वादेकेन समासमन्त्रस्यापि प्रयोगो भवेत्, स नैवोचितः । तत्र इन्द्रशेषस्याभावे ऐन्द्रपदस्थाने मित्रावरुणादिपदोहो नैव युक्तः । किन्तु शेषयोर्मिश्रितत्वात् तन्त्रे सत्युभयोरपि तन्त्रेणैव प्रयोगः । तत्रेन्द्रपदस्य साधारणत्वात् सन्तु तन्त्रोच्चारणम् । देवतान्तरस्य तु यथावस्थितेन्द्रपदव्यवहितमित्रावरुणपदस्यैव भिन्नत्वेन तन्त्रोच्चारणासम्भवात् ऊहितानूहितपदयोः आवृत्तमेवोच्चारणमिति न दोषः । तेनेन्द्रमित्रावरुणपीत भक्षयामीत्येवरूप एव मन्त्रप्रयोग इति सिद्धम् । क्त्वाचिन्ताधिकरणत्वादत्र पृथक् प्रयोजनम् । सूत्रं तु इन्द्रार्थस्य शेषस्य मित्रावरुणार्थमग्रहणे तत्र इन्द्रस्य देवतायाः अनपायः स्यादिति । तीका.

**८ पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् । ३।२।१२।३० ॥**

सन्ति ज्योतिष्टोमे दश चमसाः । तत्र मध्यतःकारिणां होतृब्रह्मोद्गातृयजमानानां वैकल्पिकसदस्युक्तानां चमसाः पञ्च, मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकाग्नीध्राणां होत्रकाणां च षट् । एते प्रातःसवने शुक्रामन्थिग्रहप्रचारे अच्छावाकसदस्यचमसवर्जं नव चमसाः प्रथममिन्द्राय हूयन्ते । तच्छेषेषु सर्वेष्वामक्षितेषु पुनरपि द्रोणकलशात् सोममुन्नीय मित्रावरुणादिदेवताभ्यो हुत्वा तेषु चमसेषु हुतशेषः सोमः भक्ष्यते इति स्थितिः । तत्र भक्षणमन्त्रे 'इन्द्रपीतस्य' इति पदस्य स्थाने 'मित्रावरुणपीतस्य' इत्येव रीत्या मित्रावरुणादय एव केवला देवता इन्द्ररहिता उपलक्षणीयाः, उत इन्द्रसहिताः 'इन्द्रमित्रावरुणपीतस्य' इत्येवं पूर्वहोमदेवता इन्द्रोऽपि च उपलक्षणीय इति विचारे सिद्धान्तमाह । उन्नीतेषु चमसेषु इन्द्राय हुतेषु मित्रावरुणादिप्रदानार्थं तच्छेषोपरि पुनरुन्नीताः सोमाः पुनरभ्युन्नीताः । तेषु पुनरभ्युन्नीतेषु चमसेषु भक्ष्यमाणेषु इन्द्रस्य मित्रावरुणादीनां च इति सर्वेषां उपलक्षणं कीर्तनं ऊहः कर्तव्यः । द्विशेषत्वात् भक्ष्यमाणस्य शेषस्य ऐन्द्रमैन्द्रेतरप्रदानशेषत्वात् ।

**अपनयाद्वा पूर्वस्यानुपलक्षणम् । ३१ ॥**

सिद्धान्तमुक्तं वाशब्देन व्यावर्तयन् पूर्वपक्षी आह । पुनरभ्युन्नीतसोमभक्षमन्त्रे पूर्वस्य पुनरभ्युन्नयनात् प्राचीनस्य इन्द्रस्य अनुपलक्षणं उपलक्षणं उच्चारणं न कर्तव्यम् । कुतः ? अपनयात् मैत्रावरुणाद्युत्तरप्रदानदेवतानां मित्रावरुणादीनां संबन्धे कृते पूर्वस्य इन्द्रस्य अपनीतत्वात् बाधितत्वात् । तस्मात् मित्रावरुणपीतस्य इत्येव वक्तव्यम्, न तु इन्द्रमित्रावरुणपीतस्य इति ।

अग्रहणाद्वाऽनपायः स्यात् । ३२ ॥

सिद्धान्ती पुनराह । वाशब्दः उक्तपक्षनिरासार्थः । पूर्वदेवस्य मित्रावरुणपूर्वदेवत्वऽर्थत्वेन अग्रहणात् भक्षणकाले अभ्युन्नीतमात्रस्य करिष्यमाणयागार्थत्वावधारणाच्च । पूर्वदेवताया इन्द्रस्य अनपायः स्यात् अपायो बाधो न स्यात् । तस्मात् पुनरुन्नीतसोमभक्षमन्त्रे इन्द्र-मित्रावरुणपीतस्य इति सर्वेषामुपलक्षणं कार्यम् । कृत्वा-चिन्ता । के.

* पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् । सोमस्य भक्ष्यमाणस्य द्वयोर्देवतयोः शेषत्वात् शेषोपलक्ष-णार्थं कीर्तनार्थं भक्षणं स्थेन अक्षणवाचिनः क्षोदेरर्थे ( भक्षमन्त्रे ) सुसूत्रोग. । सु. वृ. ११४१–४४.

‡ पुनरभ्युन्नीताधिकरणम् । ज्योतिष्टोमे होत्रक-चमसभक्षमन्त्रेषु मित्रावरुणादिभिः सह इन्द्रोऽपि उप-लक्षणीयः ॥

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् । ३।२।१२।३०॥

भाष्यम्— एवं स्थितं तावत्पर्वनमितम् । तत एवं सति चिन्तान्तरं वर्तिष्यते । सन्ति पुनरभ्युन्नीताः सोमाः, शुक्रामन्थिप्रचारे एव सवनमुखीयाः । तेषां होतुर्वषट्कारे अनुवषट्कारे च चतुर्भिर्भक्षणकारिणा चमसे. हुत्वा होत्रकाणां चमसैः सकृत्सकृत् वषट्कारे एव हुत्वा पुन. शेषेभ्येन पात्रेषु सोमोऽभ्युन्नीय । एवं हि समाम्नायः संप्रेष्यति ' भक्षणकारिणा चमसा ध्वर्यो वषट्कृतेऽनुवषट्कृते जुहुत । होत्रकाणां चमसा-ध्वर्यवः सकृत्सकृत् हुत्वा शुक्रस्याभ्युन्नीय उपावर्तध्वम् ' इति । तत्र होत्रया नानादेवता यजन्ति । मैत्रावरुणो मित्रा-वरुणौ ' मित्र वयं हवामहे ' इति, ब्राह्मणाच्छंसी इन्द्रम् ' इन्द्र त्वा वृषभं वयम् ' इति, पोता मरुतः ' मरुतो यस्य हि क्षये ' इति, नेष्टा त्वष्टारं पत्नीश्च ' अग्ने पत्नीरिहा-ऽऽवह ' इति, आग्नीध्रोऽग्निम् ' उक्षान्नाय ( उक्षा अन्न यस्य तस्मै ) वशान्नाय ' इति । तत्र वैश्यमनैः पूर्वस्मिन् वषट्कारे इन्द्र इष्टः । पुनरभ्युन्नीय मित्रावरुणादयो देवता इष्टाः । शेषस्तोत्रेन्द्रस्य मित्रावरुणादीनां च । तत्र संदेहः किं प्रथितदेवतात्वस्य इन्द्रस्य मित्रावरुणादीनां च उप-लक्षणम् , उत इन्द्रो नोपलक्षयितव्य इति । किं तावत् प्राप्तम् ? पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणम् । कस्मात् ? द्विशेषत्वात् । चमसेचमसे तत्र द्वयोः शेषः । प्रकृतौ यस्मै हुतं तच्छेषः भक्षीत इत्युक्तम् । इहापि तद्वदेव वदितव्यम् । तस्मात् चमसेचमसे द्वयोरुपलक्षणम् ।

वा— एवं पूर्वपक्षस्थे एकाधिकरणे कृत्वाचिन्तया ऊहविषयस्य चिन्तयति । हुतेषु चमसेषु सशेषेष्वेव अभ्यु-न्नीताः सोमाः पुनरभ्युन्नीता इत्युच्यन्ते । तेषां तु यथा पुनरभ्युन्नीतत्वम् , यथा च ऊहचिन्ताविषयता, तथा विभज्य दर्शयति । सन्ति दश चमसाः । तेषां ये भक्ष णकारिणां ब्रह्मादीनां ( ब्रह्म-होतृ-उद्गातृ-यजमानानां ) चत्वारः , तैः होतुः वषट्कारानुवषट्कारयोः द्विर्द्विः हुतम् । होत्रकचमसेषु ( मैत्रावरुण- ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अच्छावाक-आग्नीध्रा होत्रकाः ) सकृत् वष-ट्कारे एव हुतम् । सर्वेषु च इन्द्रो देवता । ततः चमसेषु सशेषेष्वेव सोम. अभ्युन्नीय हूयते । कथमव-गम्यते ? तत् सर्वं प्रैषेण दर्शयति ( भाष्यकारः ) । तत्र द्वितीये होमे होत्रकाः नाना देवता यजन्ति । मैत्रावरुणः मित्रावरुणौ ' मित्र वयं हवामहे ' इत्यादिभिर्याज्याभिरेव दर्शयति । तत्र यदा एते चमसा. हुत्वा भक्षणार्थमानीयन्ते, तदा द्वौ शेषौ इष्येते पूर्वहोमशेषश्च ऐन्द्रः , उत्तरश्च मित्रावरुणादिदेवत्यः । तत्र उपलक्षणे क्रियमाणे संदेहः किं प्रथितदेवता अतिक्रान्तोऽपि इन्द्रः उपलक्षयितव्यः उतस्य मित्रावरुणयोः ' इन्द्रमित्रावरुणपीतस्य ' इत्येवम् , उत मित्रावरुणावेव ( अत्र पुनः इन्द्रशब्दोऽपि श्रुतिः आनन्दाश्रमादौ, स चायुक्तः ) केवलः इति । कुतः संशयः ? किं देवतान्तरसंचारेण पूर्वदेवतासम्बन्धः अपनीतः , उत नेति । यदि अपनीतः , ततः केवल-मित्रावरुणानुपलक्षणम् , अथ अनपनीतः , ततः इन्द्रोऽपि उपलक्षणीय इति । किं प्राप्तम् ? सिद्धान्तेनैव तावदुप-क्रमः ' सर्वेषामुपलक्षणं द्विशेषत्वात् ' इति ।

अपनयाद्वा पूर्वस्यानुपलक्षणम् । ३१ ॥

भाष्यम्— अपनीतं प्रथितदेवत्वम. शेषं मन्या-महे । कुतः ? मित्रावरुणादिभ्यः तस्यैव अभ्याभाश्यते । कथमेतत् ? उच्यते । मित्रावरुणादयो हूयन्ते । तदया

आचार्यशेष देवदत्तो भुञ्जानो यदि शेषं पूर्णकाय प्रयच्छति, पूर्णको देवदत्तमुपस्थकराति देवदत्तशेषं भुङ्क्ते इति, नाऽऽचार्यशेषम् । तस्मान्न प्रसिद्धदेवता इन्द्र उपलक्षयितव्य इति ।

वा— आश्रावणप्रत्याश्रावणादिभिः प्रदानकाले देवताऽन्तरसंवादात् अस्य द्रव्यस्य अपनीता पूर्वदेवता । न च प्रकृतौ अपनीतदेवतासंबन्धोपलक्षणं कृतम् । तस्मात् इहापि न कर्तव्यमिति ।

अग्रहणाद्वाऽनपायः स्यात् । ३२ ॥

भाष्यम्— न चैतदस्ति इन्द्रो नोपलक्षणीयः इति । तस्यापि हि असौ शेषः प्रत्यक्षमवगम्यते । ननु अपनीतः इति, उच्यते, नासौ अपनीयते । कस्मात् हुतान् चमसान् अभि प्रोणरन्मात् गकाति । तच्छेषः चमसः उन्नय अन्यस्य उन्नीयमानस्य । न च चमसगणः होतुमुपेतव्यः (उन्नीत.) प्रेषितो वा । यत्तु यक्ष्यमाणा देवताः प्रति आश्रावितः इति, उच्यते, आश्राव्यते तत्र देवताभ्यः, न तु इदं वा तद् वा इति । तेन यत् होतु गृहीतम्, तत् आश्रावितमिति गम्यते । न च आश्रावणवेलया देवताऽभिसंबन्धः । यतत् देवताभिसंबद्धम्, तत् आश्राव्यते । तस्मात् अस्ति इन्द्रशेषः भक्ष्यते च । अतः उपलक्षणमिति ।

टुप्टीका— नाम प्रयोजन वक्तव्यम् । पूर्वाधिकरणस्यैव एतत् प्रयोजनमवधार्यते ।

वा— अथवा नापनीतमिन्द्रस्य देवतात्वम् । कुतः । ' देवतां यां समुद्दिश्य द्रव्यं स्वत्वेन गृह्यते । तस्यास्तदेव संबन्धि नान्यत् तन्मध्यपातपि ॥ ' ग्रहणलक्षणो हि देवतासंबन्धः ग्राह्येण ग्रहणवेलया देवताऽर्थत्वं प्रकल्प्यते । यथ प्रकल्प्यते, तदेव समाप्यते नान्यत् । इह च वचनात् सहोमेषु चमसेषु अन्यत् उत्तरदेवताऽर्थं द्रव्य ग्रहीतव्यमिति गम्यते । तत्र चमसोपलक्षणत्वेन उपपन्नः दोषः । यदा च ग्रहणवेलायामस्य देवताऽर्थत्व नावधृतम्, तदा प्रदानवेलाया यथागृहीतहोमात् सन्निहितोऽप्यसौ असङ्कल्पितत्वान्न देवताऽर्थो भवति । न चा अस्य तदानीं सङ्कल्पान्तरमस्ति, वचनाभावात् । न च इन्द्रसंबन्धेन प्रसङ्गात् संस्पृष्टस्ते, विमतवेलायां सङ्कल्पितत्वात् । न च प्रदानकाले पुनः सङ्कल्पान्तरमस्ति । सङ्कल्पकल्पितस्य पुनः सङ्कल्पयितुमशक्यत्वात् । न हि एकमेव द्रव्यमसकृत त्यज्यते । तस्मान्न प्रदानकाले संकल्पोऽस्तीति । यद्यपि तावत् देवता प्रयत्न भुञ्जीत, तथापि हंस इवोदकात् क्षीरं पश्चात्तनमेव सा सोमं विविच्य भुञ्जीत, किमुत यदा उद्देशमात्रोपकारिणी देवता पुनरभ्युन्नीतस्यैव उद्दिश्यते, न पूर्वशेषस्य । तेन पुनरभ्युन्नीते दीयमाने पूर्वशेषः केवलमुत्सृज्यते, न तु दीयते । यस्तु भक्षणवेलाया तदेकदेशः कश्चित्, सः अनपनीतेन्द्रसंनिधानात् तथैव उपलक्षयितव्य इति ।

वि— ' ऊहपक्षे यदूह्यं तच्चिन्त्यते न्यायसङ्ग्रहके । इन्द्रे हुतेऽथ तच्छेषे होत्रकैश्चमसस्थिते ॥ सोमोऽभ्युन्नीय देवेभ्यो हुत्वा समश्यते तदा । इन्द्रो न लक्ष्यो लक्ष्यो वा, न शेषेऽन्यार्थता यतः ॥, उन्नीत एव सम्बद्धो न पूर्वो देवताऽन्तरैः । अत इन्द्रस्य सिद्धयर्थं लक्ष्योऽसवितैः सह ॥ '

भाट्ट— सवनमुखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसाः, तेषु अभक्षितेषु एव पुनः सोमोऽभ्युन्नीय देवताऽन्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र पूर्वप्रदानदेवताभूत इन्द्रोऽपि उपलक्षणीयो न वेति चिन्तायाम्, उन्नयनकाले न देवताऽन्तरोद्देशः, येन उन्नीतस्यैव तत्संबन्धात् पूर्वशेषस्य पूर्वदेवतासंबन्धो नापेयात् । भक्षणकाले तु याग्यस्यैव देवताऽन्तरसंबन्धात् पूर्वदेवतासंबन्धापनयप्रतीतेर्नोपलक्षणम् । इति प्राप्ते, उन्नयनकाले देवतासंकल्पाभावेऽपि सामर्थ्यादेव उन्नयनस्य करिष्यमाणकर्मार्थताप्रतीते. पूर्वशेषस्य तत्सम्बन्धेऽपि एतदर्थत्वे प्रमाणाभावात् अनपनीतसंबन्धा पूर्वदेवताऽपि उपलक्षणीया ।

मण्डन— ' अन्यत्रापि चोदेत् पुनरुन्नतेषु । '

शंकर— ' प्रसिता देवता नोह्या । '

* पुनराधानम्, अस्तामये उदये वा आहवनीयगार्हपत्ययोर्द्वयोर्नाशे एव न एकैकस्य नाशे । ६।४।८. * पुनराधानं प्रायश्चित्त अग्निहोत्रे उभयाग्निनाशे । ६।४।८. मीको. पृ. ९४ ' अग्निहोत्रे उभयाग्निनाशे ' इत्यत्र द्रष्टव्यम् । * पुनराधानम् ' मायशःश्रीकामाना

पुनरादधीत ', 'योऽग्नीनाधाय भ्राम्यद्यानि पुनर्यानि वा जीयेत स पुनरादधीत ' इति । भा १०।३।५।१०, * पुनराधाने दक्षिणा 'पुनस्त्स्यूत वासो दक्षिणा पुनरुत्सृष्टोऽनड्वान् ' इति । १०।३।५।१० * पुनराधाने नैमित्तिके श्रुतया दक्षिणया वामाद्यविहितया पक्वादिदक्षिणया बाध । १०।३।५।१०–११ * पुनराधाने 'पुनर्निष्कृतो रथो दक्षिणा ' । वि १०।३।५

## * पुनराधेयमोदनवत । ६।४।८।२६॥

अग्निहोत्रे श्रूयते 'यस्योभावग्नी अनुगतौ अभि निम्लोचेत् यस्य वाऽभ्युदियात् पुनराधेयमेव तस्य प्रायश्चित्ति ' इति । इह प्रायश्चित्तरूप पुनराधेय ओदनवत् पञ्चशरावक्त् अन्यतरस्याऽपि अग्नेरनुगमने स्यात् न केवल उभयोरेव इति पूर्व पक्ष । सूत्रार्थस्तु यस्य आहिताग्ने उभौ गार्हपत्याहवनीयौ अग्नी अनुगतौ शान्तौ अभिलक्ष्य, शान्तयो सतो इत्यर्थ । निम्लोचेत् अस्त मियात् आदित्य । यस्य च शान्तौ अभिलक्ष्य उदियात् उदय प्राप्नुयात् आदित्य , तस्य प्रायश्चित्त पुनराधानम्, इति ।

## द्रव्योत्पत्तेर्वोभयो । २७ ॥

पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन निरस्यन् सिद्धान्तमाह। उभयो द्रव्योत्पत्ति उभयो द्रव्यो गार्हपत्याहवनीययो उत्पत्ति प्रायश्चित्तम् । तथा च उभयोरनुगमने एव आधानेन उभयोरुत्पत्ति प्रायश्चित्तम् । न एकैकस्यानुगमने । अत्र उभयो इति पदस्य समासैकदेशे द्रव्यशब्दे अन्वय । अथ उभयो गार्हपत्याहवनीययो अनुगमने एव द्रव्योत्पत्ति द्रव्यस्य अग्ने आधानेन उत्पत्ति प्रायश्चित्तम् । अन्यतरस्य विनाशे आधाने कृते तु द्रव्योरुभयो रुत्पत्तिर्विरुध्येत एकतमस्य सत्त्वात् । तस्मात् नैमित्तिक पुनराधेय समुदायानुगमने एव, न तु अन्यतरस्यानुगमने । के

* 'पुनराधेयमोदनवत् ' इत्यत्र 'यस्योभावग्नी अनुगतौ अभिनिम्लोचेदभ्युदियाद्वा पुनराधेय तस्य प्रायश्चित्तम् ' इत्यत्र विधेयसामर्थ्यात् निमित्तविशेषणानां साहित्यविवक्षा लभ्यते इत्युक्तम् । बाल पृ १२२

* पुनराधेयन्यायेन ( ६।४।८ मीमां पृ १४ ' अग्निहोत्रे उभयाग्निनाशे० ' इति निर्दिष्टे ) विधेयसामर्थ्यानुरोधेन उद्देश्यसंकोच । मुरारि पृ ११८०

* पुनरुक्त ग्रन्थगौरवभयेन नेच्छति । भा ४।२।४।१३

* पुनरुक्त्या न महान् दोष । बहुकृत्वोऽपि पथ्य वदितव्य भवति । ग्रन्थगौरवभयेन पुनरुक्त नेच्छति । अर्थग्रहणन्तु विस्पष्ट पुन पुनरभिधीयमान बहु मन्यते एव । भा ४।२।४।१३

* पुनरुक्ति । उक्तस्य पुनर्वचनमन्याय्यम् । उच्यते । कार्येवचन बहुशोऽपि उच्यमान न्याय्यमेव, अकार्यमनुसकृदपि अन्याय्यम् । आह, सकृद्वचनेन ज्ञातस्य पुनर्वचने न प्रयोजनमस्तीति । उच्यते । भवति अस्मरणमपि प्रयोजनम् । भा ५।१।१।१ वर्णकम् १

* पुनर्जन्म अस्मिन् देहे स्वर्गस्य भोक्तुमशक्यत्वात् अश्रुतमपि अन्यदेहोत्पत्ति अर्थापत्त्या कल्प्यते । वि ४।३।१२

* 'पुनर्निष्कृतो रथो दक्षिणा ' पुनराधाने । भग्न सन् पुन समाहित पुनर्निष्कृत । वि १०।३।५

* पुन पदा । 'एषा वै प्रतिष्ठिता बृहती या पुन पदा ' । बृहद्रथन्तरयोराधारभूते प्रगाथे प्रथमा या बृहती 'अभि त्वा शूर ' इति, तस्या 'ईशानमिन्द्र तस्थुष ' इति चतुर्थ पाद , स पुनर्गृहीत्वा उत्तराया ऋच पूर्वार्धेन प्रपठ्यते । तेन सा 'पुन पदा ' नाम भवति । वि ९।२।६

* पुन श्रवण निर्गुण इतरेषामश्रुताना परिसंख्यापक भवति । भा १०।७।२।४

* पुन श्रुतिप्रयोजनानि गुणविधि , परिसंख्या, अर्थवादत्व ( स्तुति ), अन्यविधानम् । के

* पुन स्तोमस्य यज्ञस्य । 'रथवृषिर्पाने ( नाम सामनी ) पुन स्तोमस्य यज्ञस्य ' 'अपवितिवस्य (ऋच ) पुन स्तोमस्य यज्ञस्य ' । 'पुन स्तोमस्य सवन मध्यम द्वादश स्मृतम् । वरया नवदशस्तोमावमित उभये उभे ॥ ' ( प्रात सवन नवस्तोमकम् , तृतीयसवन दश

स्तोमकम्, मध्यमं तु द्वादशस्तोमकमित्यर्थः )। भा. १०।४।१०।२०.

* 'पुमान् देवदत्तः' इति पुस्त्वाभिन्नलिङ्गवान् देवदत्तः इति बोधः। इति वैयाकरणाः। मणि. पृ. १२४. * पुमान् स्त्री नपुंसकमिति द्रव्यविशेषा वेदे। भा. ३।१।६।१२ पृ. ६८१, * पुमांसो द्रव्यवन्तः, न स्त्रियः इति पूर्वपक्षः। स्त्रियोऽपि द्रव्यवत्यः इति सिद्धान्तः। ६।१।२।१०-१६, * पुंसः एकस्यैवाधानेऽधिकारः सस्त्रीकस्य। ६।१।५।२२-२३. * पुंसः एकस्यैव स्त्रीसहितस्य दर्शपूर्णमासादावधिकारः। ६।२।२।३-१३, मीको. पृ. २९३ 'अधिकार. दर्शपूर्णमासादौ०' इत्यत्र द्रष्टव्यम्। * पुंसः पत्न्युपस्थानाद्यधिकारः न स्त्रियाः। वेदाधनश्रुत्यायः। ६।१।६. * 'स्त्रियः पुंसोऽतिरिक्ताः तस्मादुतैको बह्वीर्जाया विन्दते नैका बहून् पतीन्' इति यूपैकादशिन्याम्। वा. १।३।४।९ पृ. २२१.

* पुंयन्मिथुने। आपश्रौ. ३।९।१२। मिथुनमिति स्त्रीपुंसयोः समाहार उच्यते। अस्मिन् समाहारे पुंलिङ्गेनैव ऊहः कर्तव्यः इति नियम्यते। नारायणवृत्तिः.

* 'पुंवाक्येऽप्यन्यथोक्तत्वं यावन्नान्येन गम्यते। तावद्यथाश्रुतं मुक्त्वा नान्यथात्वपरिग्रहः॥' वा ३।१।७।१३ पृ ६९९.

पुंविषयन्यायः। ( पुमान् जीवः विषयः घटादिः एतौ यथा भिन्नौ, तद्वत् जीवेश्वरावपि भिन्नौ इत्यत्र एष न्यायः )। माहस्री. ८२१.

* पुंस्त्वादिलिङ्गस्य विवक्षा 'कृष्णग्रीवानालभते' 'अश्व ऋषभो वृष्णिः' इत्यादौ। ४।१।६।१७.

'पुरोऽध्वर्युर्विभजति' इति देशवाद एव॥

'ऋत्विग्भ्यो वाचं विभजति होतर्यज पोतर्यज नेष्टर्यज अग्नीत् यज अच्छावाक यज' इति प्रैषरूपाया वाचो विभाग विधाय श्रूयते 'ता पुरोऽध्वर्युर्विभजति मैत्रावरुणः पश्चात्' इति। अत्र पुरःपश्चाच्छब्दौ देशवादौ कालवादौ वा, उभयत्रापि प्रसिद्धत्वात्। तेन एकस्मिन्नेव देशे स्थित्वा अध्वर्युमैत्रावरुणौ पूर्वापरकालभेदेन प्रैषान् विभज्य प्रयातावेकस्मिन् वा काले प्राक्प्रत्यग्देशभेदेन स्थित्वा। इति विकल्पे प्राप्ते, देशवाद एवायम्, आहवनीय गच्छतीति प्रकृत्य एतदाम्नानात्। पाटलिपुत्रं गच्छतीत्यादौ तदभिकरणदेशभ्योऽपसिद्धत्वात्। तेनोत्तरवेद्यामध्वर्युः, सदसि मैत्रावरुणः प्रेष्यति। संकर्ष. २।३।१२.

* पुरोऽनुवाक्या इति समाख्या। पूर्वमनूच्यते इति पुरोऽनुवाक्या। आपेक्षिकः पूर्वशब्दो याज्यामपेक्ष्य भवति। भा. १२।४।३।४. * पुरोऽनुवाक्या ( 'अग्ने नय सुपथा' इति ) मनोता च कृष्णग्रीवयोः पश्वोः आवर्तते कालभेदात् सौम्येन व्यवायात्। ११।४।२०।५७-५९. * पुरोऽनुवाक्याः प्रैषान्तानि अनुवचनानि। न तु केवला अनुवाक्याः। ज्योतिष्टोमे पश्वादौ। वा. ३।७।२३।४२ पृ. ११०७, * 'पुरोनुवाक्यां प्रथम प्रयुङ्क्ते' इति गान्धर्वमः। ३।२।५।१२ पृ. ७६०. * आसीनः पुरोऽनुवाक्यामन्वाह। भा. १०।४।२०।४२.

* पुरउष्णिक् उष्णिक्। पादेषु अक्षराणि १२।८।८। उदा० 'युञ्जन्ति हरी' ( ऋग्. ८।९८।९ )। के.

पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात्। १०।५।२०।७०॥

ज्योतिष्टोमे फलविशेषाय श्रूयमाना आश्विनादिग्रहाग्रता प्रतिकर्ष उक्तः। स प्रतिकर्षः ऐन्द्रवायवस्य पुरस्तात्, न तु सर्वोदितः यतः कृतभिन्ना। अग्रस्य कृतदेशत्वात्। कृतो ज्ञातो देशो यस्य तादृशत्वात्। एषोऽग्रस्य देशो विज्ञातो यत् उपांश्वन्तर्यामाभ्यामूर्ध्वं पुरस्तादैन्द्रवायवस्य इति। तस्मात् ऐन्द्रवायवात् पुरस्तात् प्रतिकर्ष इति सिद्धान्तः।

तुल्यधर्मत्वाच्च। ७१॥

ज्योतिष्टोमे फलविशेषार्थं श्रूयमाणा आश्विनाद्यग्रताः ऐन्द्रवायवाग्रतया तुल्यधर्मत्वात्। तुल्यो धर्मो यासा ताः तुल्यधर्माणः। तासां भावस्तुल्यधर्मत्वम्, तस्मात्। तत्र धारासंयोगो दृश्यते तस्मात् धाराग्रहानुद्दिश्य एतदग्रता विधीयते।

तथा च लिङ्गदर्शनम्। ७२॥

ज्योतिष्टोमे फलविशेषार्थं आश्विनग्रहाद्यग्रता विधीयते, सा च आश्विनाग्रता ऐन्द्रवायवात् प्राक् ग्रहणेन,

* पुरुषार्थैकसिद्धित्वात्तस्यतस्याधिकारः स्यात् ( ६।२।१।१ ) इति षष्ठाधिकरणन्यायेन सत्रिणः प्रत्येकं कृत्स्नं फलं लभन्ते । मु. पृ. ५४४.

Ⅱ पुरुषार्थैकसिद्धित्वात् तस्यतस्याधिकारः स्यात् । ६।२।१।१ ॥

सत्रेषु एकप्रयोगनिर्वाहकं समुदायपुरुषनिष्ठं कर्तृत्वं व्यासज्यवृत्ति स्यात् । तथा सति फलमपि सर्वेषां मिलित्वा एकमेव स्यात् न तु प्रत्येकं संपूर्णं इति प्राप्ते पूर्वपक्षे सिद्धान्तमाह । तस्यतस्य प्रत्येकम्, अधिकारः ऋद्धिफलस्वाम्यं कार्त्स्न्येन स्यात् न तु सर्वेषामेकं व्यासज्यवृत्ति फलम् । अधिकारस्य पुरुषार्थैकसिद्धित्वात् । पुरुषार्थस्य एकस्य सिद्धिर्यस्मात् सः पुरुषार्थैकसिद्धिः अधिकारः । एकपुरुषार्थसिद्ध्या अधिकारसिद्धिः । सत्रकर्तृत्वं च प्रत्येकं इतरसापेक्षं न व्यासज्यवृत्ति । फलमपि च प्रत्येकमेव संपूर्णं न व्यासज्यवृत्ति ।

अपिचोत्पत्तिसंयोगात् यथा स्यात् सत्त्वदर्शनं तथा भावोऽविभागे स्यात् । २ ॥

सत्रे सत्रदयानां यजमानानामेव ऋत्विक्त्वेन प्रत्येकं सत्रकर्तृत्वं इतरसापेक्षं पृथक्पृथगेव । फलं तु संपूर्णं प्रत्येकेन लब्धव्यम् । अपिच नैतद्विरुद्धम्, यदेकं कर्म बहुभिः क्रियते इति, उत्पत्तिसंयोगात् । ' ऋद्धिकामाः सत्रमासीरन् ' इति उत्पत्तिवाक्ये बहुवचनेन एकेन सत्र कर्मणा साकं अनेकेषां कर्तृत्वेन संयोग उक्तः । उत्पत्तिशिष्टत्वादेव एकस्य कर्मणः अनेककर्तृकत्वेऽपि न विरोधः । यथा स्यात् सत्त्वदर्शनं अविभागे । यथा लोके रथवाहनादिवहनरूपस्य कर्मणः अविभागे एकत्वेऽपि सत्त्वानां अश्वबलीवर्दादीनां बहूनां प्राणिनां कर्तृत्वेन दर्शनं स्यात्, तथा भावोऽविभागे स्यात् । तथा सत्रकर्तृ सत्ररूपस्य कर्मणः अविभागे एकत्वेऽपि बहूनां कर्तॄणां भावः अस्तित्वं स्यात्, न विरोधः कश्चित् । विरोधशङ्कापरिहारार्थं सिद्धान्तसूत्रं द्वितीयमिदम् । अपिच इति हेतुसमुच्चये ।

सुधायां तु ' अपिचोत्पत्ति...तथा भावविभागे स्यात् ' इति पाठः । व्याख्या चेत्थम्– (पृ. ९६२–९६३) ' ऋद्धिकामाः सत्रमासीरन् ' इति वर्तमानप्रत्ययेन बहुवचनेन ऋद्धिकामबहुत्वोक्तेः प्रत्येकं ऋद्धिकामत्वागमात् प्रत्येकं अधिकारमुक्त्वा आख्यातस्थेन बहुवचनेन कर्तृबहुत्वोक्तेः प्रत्येकं कर्तृत्वावगमादपि प्रत्येकमधिकारः इति उत्पत्तौ अनिर्धारितकर्तृसंख्ये कर्मणि कर्तृबहुत्वसंयोगः इत्यवयवेनोक्ते, प्रत्येककर्तृत्वे कर्मभेदापत्तिरनर्थकः आशङ्क्य यथा सत्त्वस्य द्रव्यगतादेः युगपत् बहुभिर्दर्शनं भावस्य नर्थक्यापादकं तथा भावस्य कर्मणः विभागे पृथक्त्वेऽपि न कर्मान्तरानर्थक्यम् । इति । के

* पुरुषार्थक्रिययोर्न्यायकाम्यो विकल्पः एकार्थकाम्येष्टीनाम् । बाल पृ. १५४.

* पुरुषार्थत्वं नाम पुरुषनिष्ठप्रत्यवायजनकक्रियाफलत्वम् । भाट्ट. ३।४।८. * पुरुषार्थत्वं फलस्य फल पदोपादानादेव गम्यते । या. ३।१।३।५. * पुरुषार्थत्वं स्वयप्रार्थितसाध्याधीनानुष्ठानत्वं इति तन्त्ररत्ने । तत्र इनिकर्तव्यताकेन अन्वितत्वं क्रत्वर्थत्वं तद्भिन्नत्वं च करणफलभूतपुरुषार्थत्वं इति शास्त्रदीपिकायाम् । तदपि न । किन्तु स्वयंप्रार्थितसुखदुःखाभावतानिरूपितविधेयताकत्वम् । स्वयप्रार्थितत्वं च ज्ञानाधीनेष्टसाधनताज्ञानजन्येच्छाविषयत्वम् ( स्वर्गस्य देशविशेषरूपत्वपक्षे ), ज्ञानाधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वम् (सुखविशेषरूपत्वे ) । भाट्ट. ४।१।२

* पुरुषार्थदानपाकहोमानां दीक्षितकर्तृकत्वपर्युदासः ज्योतिष्टोमे । ( तत्वर्थभिन्नानां प्रतिषेधः ) । १०।८।७।१२–१५.

* पुरुषार्थनिषेधातिक्रमे पुंसो नरकपाताख्य प्रत्यवायः । सु. पृ. १३९५.

* पुरुषार्थभूयस्त्वं च विश्वासके भेदे पुरुषप्रवर्तनयोक्तयादिष्यते । वा. २।२।१३।२८ पृ. ५६१.

* ' पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् । विशेषतश्च सामान्ये, पूर्वप्राप्ते प्रवर्तनात् ॥ ' पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयासः इति तदत्यासन्नं वस्तु बलीयो भवति । वा. १।८।१३।२१ पृ. ३५२ । सुधा– काम्यस्य नित्यबाधकत्वे अयमेव मुख्यो न्यायः ' नैमित्तिके तु प्रकृतौ• ' ( ३।६।३।१० ) इति तृतीयाधिकरणे वक्ष्यमाण । पृ. ८८८. * ' पुरुषार्थसमासत्तेः

काम्यं नित्यस्य बाधकम् ' इति न्यायात् ( बा. ११।८।११।२१ ) काम्यो गुणः अश्वत्थिशिष्टत्वेनापि शक्यते विधातुम् । सोम. ११४।११ पृ. ८३.

▣ पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्, यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येतस्मिन् विधिकालत्वात् । ६।६।७।३६॥

पूर्वाधिकरणे सप्तदशकर्तृसमुदायमुद्दिश्य यत् सत्रकर्म विहितं तत्र ब्राह्मणविशेषाणामेवाधिकारः इत्युक्तम् । अत्र तु ततो वैलक्षण्यं इति सूचनार्थं वाशब्दः । यत्र तु पुरुषकल्पेन विधिः न समुदायकल्पेन, एकैकं पुरुषमुद्दिश्य यः कर्मविधिः तत्र इत्यर्थः । एवं पुरुषकल्पेन पुरुषविशेषकर्तृकत्वेन विधीयमानायां विकृतौ अध्वरकल्पा आग्रयणं पशु. इत्येवमादौ कर्तृनियमः स्यात्, वैश्य एव कर्ता नियम्येत । यज्ञस्य अध्वरकल्पादेः तद्गुणत्वात् सप्तदशसंख्याकसामिधेनीगुणकत्वात् । इतरान् प्रति अभावात् सामिधेनीसाप्तदश्यस्य न वैश्यभिन्नान् ब्राह्मणक्षत्रियान् प्रति अभावात् । नहि तेषां सप्तदश सामिधेन्यो विहिताः । एतस्मिन् वैश्ये एव विधिकालत्वात् । सामिधेनीसाप्तदश्यविधेः कृत्स्नता संभवति, वैश्य एव एतत्कर्म कृत्स्नं कर्तुं समर्थः । तस्मात् अध्वरकल्पादिषु येषु यागेषु सप्तदश सामिधेन्यो विहिताः तेषु यागेषु वैश्यस्यैवाधिकारः न ब्राह्मणस्य राजन्यस्य वा इति पूर्व. पक्षः ।

लिङ्गाच्चेज्याविशेषवत् । ३७ ॥

येषु यागेषु सप्तदश सामिधेन्य उक्ताः तेषु वैश्यस्यैवाधिकारो नान्यस्येति पूर्वपक्षे हेत्वन्तरमाह । ' सप्तदशो वै वैश्य ' इति सप्तदशत्वलिङ्गात् वैश्यस्यैव साप्तदशसामिधेनीकेषु यागेषु अधिकारः । चकारो हेतुसमुच्चये । इज्याविशेषवत् । यथा ' वैश्यो वैश्यस्तोमेन यजेत ' इति वैश्यस्तोमरूपः इज्याविशेषः यागविशेषः वैश्यस्यैव एवं साप्तदश्यमपि तस्यैव ।

न वा संयोगपृथक्त्वाद्, गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना । ३८ ॥

पूर्वपक्षं सूत्रस्थ वाशब्देन निरस्यन् सिद्धान्तमाह । न वैश्यस्यैवाधिकारः, किन्तु अध्वरकल्पादौ त्रयाणामपि वर्णानामधिकारः । संयोगपृथक्त्वात् । पृथगेतौ संयोगौ । ' सप्तदश वैश्यस्य ' इत्येकं वाक्यं दर्शपूर्णमासयोः वैश्यनिमित्तकं सामिधेनीनां साप्तदश्यं विधत्ते । ' सप्तदशानुब्रूयात् ' इति तु वाक्यान्तरं वर्णानां त्रयाणामपि अध्वरकल्पादिविकृत्यर्थतया चोदकप्राप्तपाञ्चदश्यबाधेन साप्तदश्यं विधत्ते । गुणस्य तु साप्तदश्यस्य इज्याप्रधानत्वात् साप्तदश्यं गुणः यागप्रधानः, न कर्तृप्रधानः । हि यस्मात् चोदना विकृतिषु सामिधेनीसाप्तदश्यविधिः वैश्येन असंयुक्ता । साप्तदश्यविधिः इज्यया संयुक्तः, न पुरुषेण वैश्यादिना इत्यर्थः । तस्मात् सामिधेनीसाप्तदश्यवतीषु इज्यासु त्रयाणामपि वर्णानामधिकारो न वैश्यमात्रस्य इति सिद्धान्तः ।

इज्यायां तद्गुणत्वाद् विशेषेण नियम्येत । ३९ ॥

अध्वरकल्पाऽऽग्रयणादिषु सप्तदशसामिधेनीकेषु यागेषु वैश्यस्यैवाधिकारः इति पक्षं ब्रुवता पूर्वपक्षिणा वैश्यस्तोमदृष्टान्तः प्रदर्शितः इज्याविशेषवत् इति पदेन । तद्वैषम्यमाह सिद्धान्ती । इज्यायां इज्याविशेषे वैश्यस्तोमे तु ' वैश्यो वैश्यस्तोमेन यजेत ' इतिश्रुत्या विशेषेण नियम्येत वैश्य एवेति युक्तम् । तद्गुणत्वात् वैश्यस्तोमस्य वैश्यगुणकत्वात् वैश्यकर्तृकत्वात् । अथवा वैश्यस्य वैश्यस्तोमगुणकत्वात् वैश्यस्तोमकर्तृत्वात् । वैश्यस्तोमस्य वैश्यकर्तृकत्वस्य श्रुत्या विधानादित्यर्थः । अध्वरकल्पाऽऽदिषु तु न तथा इति त्रयाणामप्यधिकारः इति सिद्धान्तः । के.

* पुरुषकारात् दैवस्य अधिक प्रभावः । सु. पृ. १३२.

* पुरुषकृतो न शब्दस्यार्थेन सम्बन्धः । भा. १।१।८।२७.

▣ पुरुषकेशलोमन्यायः । यथा पुरुषात् केशलोमानि सम्भवन्ति, तथा अक्षरात्सम्भवतीह विश्वमिति शारीरकभाष्येऽभिहितम् । लाहुरी. ७६ ९.

* पुरुषप्रणीतानि यानि वाक्यानि तानि पुरुषनिश्वासाधीनरचनत्वात् समयव्याहारादिप्रायान्तप्रमाणान्तरसापेक्षाणि भवन्ति । तत्र प्रतीतोऽप्यर्थः चक्षुरभि-

प्रेतत्वात् अविवक्षा स्मेत । [illegible] च द्वेधा विज्ञायते । यद्वा वक्तैव कथयति 'अयपर ममेदमभिप्रेत प्रमादेन वा, तस्मादेतमात्रमिह न ग्रहीतव्यम्' इति । यद्वा प्रमाणान्तरदर्शनेन अन्यथाऽर्थे अवधारिते वक्त्रनपेक्षा श्रोतार एव अभिप्रायान्तर प्रमाद वा अध्यवस्यति । धा ३।१।७।१२ पृ ६९९

* पुरुषप्रयत्नस्य फलार्थता (स्वभावत )। भा ६।२।१।१ पृ १३४६ * पुरुषप्रयत्नस्य फलोद्देश्यकत्व विजातीयस्य अप्राप्तत्वेन विधेयता । भाट्ट ६।२।२

* पुरुषप्रवृत्ति । स्वतः पुरुषप्रवृत्ति द्विधा लोके दृश्यते । क्वचित् स्वेच्छया अर्थेषु स्वाय प्रवर्तते, क्वचिद् परप्रेरित 'आचार्यप्रेरितोऽह गा आनयामि न स्वेच्छया' इत्यादि व्यवहारदर्शनात् । यद्यपि आचार्यादिरपि अनिच्छन्त न शक्नोति प्रवर्तयितुम्, तथापि स्वारसिकेच्छारहितमपि शिष्यादिक स्वप्रवर्तनाबलेन इच्छामुत्पाद्य प्रवर्तयति इति सर्वसाक्षिकम् । तस्मात् शब्दश्रवणानन्तरभाविन्यां प्रवृत्तौ आचार्यादे प्रवर्तना ज्ञापनेन प्रवर्तकत्वमवधीयते । मु पृ २९-३०

* पुरुषभेदा उच्चारणभेदाश्च यथायोग उदात्तादिभेदै षड्जमृदुत्वादिभेदैश्चोपेतान् ध्वनिविशेषान् उत्पाद्य चरितार्था । वर्णास्तु नित्या एव । वि १।१।६

* पुरुषवचनादर्थानिश्चयात्, वक्तृबुद्धिनिश्चये चानुमानत्वम् । अर्थो हि न कारण वचनस्य, वक्तृबुद्धिस्तु कारणमेव । कार्यतस्तु कारणावगति अनुमानमेव । अनुमानमपि पौरुषयवाक्यप्रमुत्पत्ताने व्युत्पन्नम् । ऋजु पृ २४ * पुरुषवचनात् तिशातोऽयमनेनार्थ इति निश्चयो भवति । न पुन प्रमाणान्तरबुद्धिरुपजायते । बृहती पृ २५

* 'पुरुषशीर्षमुपदधाति' (चयने) इति वचन सामर्थ्यात् शवशिरसा स्पर्शन स्मृतिविप्रतिषिद्धमपि क्रियते । भा ६।६।२।२.

* पुरुषसस्कारा पुरुष प्रति फलप्रतिपादकत्वमर्थं कुर्वन्ति, न यागनिर्वृत्तिसमर्थम् । भा ३।७।२।६

* पुरुषसस्कारार्थो वाग्यम । ३।१।१४।२४

* पुरोडाश तप्तेषु कपालेषु अथ पाकायमधिश्रीयते, उपरि च अङ्गारा अभ्युह्यन्ते । भा ६।४।५।१७

पुरोडाशत्वनिर्देशो वचुक्ते देवताभावात् । ५।४।६।१९॥

ब्राह्मणस्य आधान सोमपूर्वं वा इष्टिपूर्वं वेति विकल्प उक्त । 'यदेवाद पौर्णमास हवि तत्तर्हि अनुनिर्वपेत्' इत्यनेन एकमेव हवि सोमादूर्ध्वमुत्कृष्यते इति च पूर्व सूत्रे उक्तम् । इदानीं किं तदेक हवि इति प्रश्नस्योत्तरमाह । तदेक हवि अग्नीषोमीय पुरोडाश एव स्यात् । तुशब्देन इतरहविर्निरास । केवलस्याग्ने केवलस्य वा सोमस्य पूर्वं अनिर्देशे निर्देशाभावे सति तद्युक्ते अग्नियुक्ते सोमे देवताभावात् केवलाग्नि देवतान्तरस्य व्यासङ्गवृत्तेरभावात् सत्त्वात् अग्नीषोमीयपुरोडाश एव तदेक हवि सोमादूर्ध्वं उत्कृष्यते इति सिद्धान्त ।

इद सूत्र पूर्वाधिकरणशेषत्वेन व्याख्यातु युक्त शक्य चेति मत्वा अस्माभिस्तथा व्याख्यातम् । भाष्यादौ सर्वत्र तु उत्तराधिकरणाद्यसूत्रत्वेनैवेद व्याख्यातम् । तत्र सूत्राक्षरार्थस्तु स एव । अवतरण तु भिन्नम् । तदित्थम् । पौर्णमासगतस्य एकस्यैव हविष उत्कर्ष सोमात् इति पूर्वमुक्तम् । तत्रेयमाशङ्का । ननु अस्तु एकस्य हविष उत्कर्ष । स तु आग्नेयस्यैव स्यात् 'आग्नेयो वै ब्राह्मणो देवतया' इति अत्र पूर्वमुक्तत्वात् 'यदेवाद पौर्णमास हवि' इति अद शब्देन आग्नेयोऽपि ग्रहीतु शक्य । तथा च आग्नेयस्यैव हविष सोमादुत्कर्षोऽस्तु इति । तत्राह । पूर्वं अग्नेरुक्तत्वेऽपि सोमोऽप्युक्त एव । प्रत्युत 'सोमेनेष्ट्वा अग्नीषोमीयो भवति' इत्युक्तम् । तथा केवलस्याग्ने अनिर्देशे सति, तद्युक्ते अग्नियुक्ते सोमे देवताभावात् देवतात्वस्य उक्तत्वात् अग्नीषोमीय पुरोडाश एव सोमादूर्ध्वं उत्कृष्टव्य इति (सिद्धान्तसूत्रमिदम्) । तुशब्द आग्नेयस्य केवलस्य निरासार्थ ।

आज्यमपीति चेत् । २० ॥

ब्राह्मणस्य आधाने सोमादूर्ध्वं एक हवि, तच्च अग्नीषोमीय पुरोडाश उत्कृष्टव्य इत्युक्तम् । तत्रेयमाशङ्का सूत्रेणोच्यते । एक अग्नीषोमीय हवि उत्कृष्यताम् ।

परन्तु तत् आज्यमपि स्यात्, न पुरोडाश एव। उपांशुयाजाज्यमपि अग्नीषोमीयं भवत्येव। इति चेत्।

न, मिश्रदेवतत्वादैन्द्राग्नवत्। २१॥

■ उपांशुयाजाज्य उत्कर्षः अशक्यम्। तस्य मिश्रदेवतात्वात्। तद्धि अग्नीषोमीयं वा प्राजापत्यं वा वैष्णवं वा। यद्यपि यजमानः सोमात् प्राक् अग्नीषोमौ यष्टुं न शक्नोति तथापि प्रजापतिं यक्ष्यति विष्णुं वा। तस्मात् आज्यस्य अग्नीषोमीयत्वेन सोमादूर्ध्वमुत्कर्षेऽपि प्राजापत्यत्वेन वैष्णवत्वेन वा सोमात् प्रागपि संभवात् उपांशुयाजाज्यस्य नोत्कर्षः किन्तु पुरोडाशस्यैव। ऐन्द्राग्नवत्। 'आग्नेयं चतुर्धा करोति' इति चतुर्धाकरणे यथा आग्नेयशब्देन ऐन्द्राग्नः पुरोडाशो न गृह्यते, तस्य मिश्रदेवतत्वात्। तद्वितत्र उपांशुयाजेऽप्युपपन्नं। तथा आज्यमपि। तस्मात् उपांशुयाज. सोमात् नोत्कृष्यः। के.

* पुरोडाशः द्विविध प्रधान गुणश्च। तत्राग्नेयादि. प्रधानम्। पशुपुरोडाशश्च पशुदेवतासंस्काररूपो द्वितीय.। के. (वि. १०।१।९). * पुरोडाशः न स्विष्टकृद्यागप्रयोज्यः, किन्तु आग्नेययागप्रयुक्तः। ४।१।१२।१८–२२. * पुरोडाशो मध्यमः यवमयः एव मैत्रावरुण्याम्। भा. १०।७।३६।५३–५७. * पुरोडाशः यागे श्रूयते न होमे। सोऽपि धनदानस्य विहितो न समस्तपुरोडाशस्य। समस्तस्य पुरोडाशस्य देवतां प्रति उत्सृष्टत्वात् विनापि प्रक्षेपात् यागव्यवहार उपपद्यते निरवदानस्य शेषविधिः। भा. ३।४।१४।४१ पृ. ९८३. * पुरोडाशः चारुभ्यां निष्कासेन बाध्यते। बाल. पृ. १३२. * 'पुरोडाशौ क्षायतः' इत्यत्र एकस्य बहूनां वा क्षामेऽपि प्रायश्चित्तम्, न द्वयोरेव क्षामे। के. (टुप्. ६।४।६।२३). * पुरोडाशाः सवनीया. अनुसवनं निरुप्यन्ते। भा. ११।२।२।८. * पुरोडाशाः सवनीयाः मासगणाः षट्त्रिंशत्संवत्सरेषु कर्तव्ये शाखान्तरायामयने। वि. ३।८।२३. * 'पुरोडाशं चतुर्धा करोति' इत्यस्य 'आग्नेयं चतुर्धा करोति' इति श्रुत्यर्थ. उपसंहारविधि.। बाल. पृ १७. * 'पुरोडाशं पर्यग्नि करोति' इति दर्शपूर्णमासयोः पुरोडाशशब्दः जातिशब्दः एव, न संस्कारशब्दः। भा. ३।४।७।१०, * 'पुरोडाशं पर्यग्नि करोति' इति पर्यग्निकरणं गुणकर्म, न प्रधानकर्म। २।१।४।९–१२, * 'पुरोडाशं पर्यग्नि करोति' इति सर्वानेव पुरोडाशान्, न ■ एकमेव। एकवचनमविवक्षितम्। ३।१।७।१३–१५.

■ पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत्। १०।८।१४।३५॥

दर्शपूर्णमासयोः 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्च, सांनाय्येन तु सोमयाजिनम्' इति श्रूयते। अत्र पुरोडाशाभ्या इति वाक्यात् अधिकृताना असोमयाजिना पुरोडाशयोः उपदेशः प्रतीयते। असोमयाजिन. पुरोडाशयोरधिकारः इत्युपदेशः प्रतीयते इत्यर्थः। तच्छ्रुतित्वात् तस्य असोमयाजिन एव 'असोमयाजिनं याजयेत्' इति श्रवणात्। वैश्यस्तोमवत् यथा 'वैश्यो वैश्यस्तोमेन यजेत' इत्यनेन वैश्यस्यैव वैश्यस्तोमे अधिकारः तद्वत्। तस्मात् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्य 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्' इति वाक्यशेषः। असोमयाजी स्वर्गकाम पुरोडाशाभ्यां यजेत इति। इति प्रथमः पूर्वपक्ष.।

न त्वनित्याधिकारोऽस्ति, विधेर्नित्येन संबन्धस्तस्मादवाक्यशेषत्वम्। ३६॥

वाक्यशेषपक्षं दूषयित्वा पक्षान्तरमाह। अनित्याधिकारो न तु अस्ति। असोमयाजित्वं हि अनित्यम्, सोमयागोत्तरं तस्य सोमयाजित्वात्। दर्शपूर्णमासौ तु नित्यौ। तथा च अनित्यस्य असोमयाजिनः सतः नित्यदर्शपूर्णमासाधिकारो न संभवति। 'दर्शपूर्णमासाभ्यां यजेत' इति विधेः नित्येनैव संबन्धः। तस्मात् एतस्मात् हेतोः अवाक्यशेषत्वं यत् पूर्वपक्षिणा वाक्यशेषत्वमुक्तं तन्न संभवति। किन्तु असोमयाजिनः स्वर्गकामस्य प्राकृताग्नेयैन्द्राग्नधर्मकौ कर्मान्तरभूतौ आग्नेयैन्द्राग्नौ विधीयेते अभिनवौ।

**सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् । ३७॥**

'पुरोडाशाभ्यामेवासोमयाजिनम्' इति 'दर्शपूर्णमासाभ्यां यजेत' इत्यस्य वाक्यशेष इति पक्ष प्रकारान्तरेण दूषयति । सति च वाक्यशेषत्वे एकदेशेन दर्शपूर्णमासैकदेशभूताभ्यां पुरोडाशाभ्यां कर्तुः असोमयाजिनः संबन्धो वक्तव्यः, स च नोपपद्यते । अथवा सति च वाक्यशेषत्वाभावे एकदेशेन पुरोडाशाभ्यां कर्तुः असोमयाजिनः संबन्धः उपपद्यते । कर्तुः प्रधानत्वात् प्रधानत्वेन निर्देशात् । तस्मात् न वाक्यशेषत्वम्, किन्तु कर्मान्तरविधिः ।

**कृत्स्नत्वात्तु तथा स्तोमे । ३८ ॥**

पूर्वपक्षिणा उक्तं वैश्यस्तोमदृष्टान्तं विघटयति । स्तोमे वैश्यस्तोमे तथा अधिकारश्रुतिशेषत्वं युक्तम् । कृत्स्नत्वात् वैश्यस्तोमस्य । स हि न कस्य चिदेकदेशः, स्वतन्त्रत्वात् । फलवत्त्वाच्च । पुरोडाशौ तु एकदेशौ न फलसाधकौ । तस्मान्नाधिकारशेषत्वम् । किन्तु कर्मान्तरविधिः ।

**कर्तुः स्यादिति चेत् । ३९ ॥**

न कर्मान्तरविधिः । किन्तु कर्तुः अङ्गकर्तुः यजयितुः ऋत्विजः 'पुरोडाशाभ्यां असोमयाजिनं याजयेत्' अयं विधिः स्यात् । स चाभ्युदयाय भविष्यति । इति तृतीयः पक्षः । इति चेत् ।

**न गुणार्थत्वात्, प्राप्ते च नोपदेशार्थः । ४० ॥**

नाङ्गकर्तुः ऋत्विजः उपदेशः । तस्य गुणार्थत्वात् गुणभूतस्य अङ्गस्य अनुष्ठानार्थत्वात् प्रधानकर्तुर्यजमानस्य गुणभूत एव ऋत्विक् । न च तस्य किञ्चित् फलम् । प्राप्ते च याजने अर्थप्राप्ते सति तदनुवादः उपदेशार्थो न भवति । तस्मान्न याजयितुरुपदेशः । तस्मात् कर्मान्तरस्यैव विधिः ।

**कर्मणोस्तु प्रकरणे तन्न्यायत्वात् गुणानां लिङ्गेन कालशास्त्रं स्यात् । ४१ ॥**

तुशब्दः कर्मान्तरपक्षं व्यावर्तयति । न कर्मान्तरविधिः किन्तु कर्मणोः पुरोडाशकर्मणोः प्रकरणे प्रकर्षेण करणे अनुष्ठाने लिङ्गेन 'असोमयाजिनम्' इति असोमयागेन विशेषलिङ्गेन कालशास्त्रं कालस्य शासनं विधानं स्यात् । सोमयागकरणात् प्राक्काले पुरोडाशाभ्यामेव यजेत, न सान्नाय्येन इति । गुणानां सौम्यचर्वादीनां यो न्याय उक्तः 'अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य' (४।४।३।६) इति, तन्न्यायत्वात् सोऽत्रापि न्यायः । तस्मात् कालविधिः । कुतूहले तु- 'पुरोडाशाभ्यामेव' इति परिसङ्ख्यानस्य कर्मभेदस्य कर्तुश्च इति त्रयाणामपि गुणानां निरासस्य वाच्यत्वात् विधेयान्तरलाभात् कालविधिः इत्युक्तम् ।

**यदि तु सांनाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् । ४२ ॥**

तुशब्दः कालविधिपक्षं निराचष्टे । यदि सान्नाय्यं सोमयाजिनः निश्चितम्, तत ताभ्यां पुरोडाशाभ्यां आग्नेयैन्द्राग्नाभ्यां सान्नाय्यस्य समवायः नास्ति विभक्तकालत्वात् पुरोडाशयोः कालः सोमयागात् प्राक्तनः, सान्नाय्यस्य कालः सोमादूर्ध्वमिति । इति तदर्थं न कालविध्यपेक्षा सिद्धत्वात् । तस्मात् न कालार्थं श्रवणम् । किन्तु कर्मान्तरविधिरेव ।

**अपि वा विहितत्वाद् गुणार्थाया पुनःश्रुतौ संदेहे श्रुतिर्द्विदेवतार्था स्याद् यथाऽनभिप्रेतस्याऽऽग्नेयो दर्शनादेकदेवते । ४३ ॥**

अपिवाशब्दः कर्मान्तरपक्षं व्यावर्तयति । 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् याजेतौ आग्नेयश्चैन्द्राग्नश्च' इत्यत्र आग्नेयस्य अनुवादः । अमावास्यायां पौर्णमास्यां च अविशेषेण विहितत्वात् । आग्नेयस्य पुनःश्रुतिः गुणार्था ऐन्द्राग्नविधानार्थमनुवादार्था इति स्वीकार्यम् । ऐन्द्राग्नस्य तु अविशेषेण विधानाभावात् तस्य संदेहे सति प्रकृता श्रुतिः द्विदेवतार्था द्विदेवतस्य ऐन्द्राग्नपुरोडाशस्य विधानार्था । तत्रापि अमावास्यायां तस्य प्राप्तत्वात् पौर्णमास्यां चाप्राप्तत्वात् पौर्णमास्यामेव ऐन्द्राग्नस्य विधिरयम् । 'आग्नेयस्य विहितत्वात् तस्य पुनःश्रुतौ गुणार्थायां सत्याम्, द्विदेवत्यस्य च संदेहे सति द्विदेवतार्था एव प्रकृता श्रुतिः स्यात्' इति सौत्रपदानामन्वयः । आग्नेयस्य तु एकदेवते साकप्रस्थायीयादावपि 'आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन प्रचरति'

इति दर्शनात् पौर्णमास्यामपि विहितत्वाच्च प्राप्तिरस्त्येव इति प्रकृतायां श्रुतौ उच्चारितोऽपि आग्नेयः यथा अनभिप्रेतः स्यात् विधेयत्वेन अभिप्रेतो न स्यात् तथा उच्चारितः । विधेयत्वेन नोच्चारितः, किन्तु ऐन्द्राग्नविधानार्थमनूदितः । तस्मात् आग्नेयस्यानुवादः ऐन्द्राग्नस्य तु पौर्णमास्यां विधिः इति पञ्चमः पक्षः ।

विधिस्तु बादरायणः । ४४ ॥

नैतदेवम् । किन्तु कालविधिरेव इति बादरायण आचार्यो मन्यते स्म । ' तद् गौनपेदेव ' ' तयेद साकुगौपायनाः सान्नाय्यमेवासोमयाजिनः ' इति असोमयाजिनोऽपि सान्नाय्यं श्रूयते इति सोमात् प्राग्ध्वं च सान्नाय्यस्य काल एव इति तद्वैकल्पिकस्य ऐन्द्राग्नस्य सोमात् प्राग्ध्वं च प्राप्तौ प्राक्काल एव नियम्यते । तेन प्राक् सोमात् ऐन्द्राग्नसान्नाय्ययोर्विकल्पः । तस्मात् ऐन्द्राग्नस्य उभयोः कालयोर्विधिः ।

कुतूहले तु " असोमयाजिनः आग्नेयैन्द्राग्नावनूद्य ' सांनाय्येन तु सोमयाजिनम् ' इति सोमयाजिनः सान्नाय्यनियमविधिः इति बादरायण आचार्यो मन्यते " इति सिद्धान्तपरं सूत्रमिदं व्याख्यातम् ।

' नैतदेवं आग्नेयेऽनुवादः ऐन्द्राग्ने विधिरिति । उभयोः कालविधि. स्यात् ' इति भाष्यात्तु आग्नेयैन्द्राग्नयोरुभयोः सोमात् प्राक्तनकालविधिः इति सूत्रार्थो भाति ।

प्रतिषिद्धविधानाद्वा । ४५ ॥

सिद्धान्तमाह । सोमात् प्राक् प्रतिषिद्धस्य सान्नाय्यस्य सोमयाजिनः ' सांनाय्येन तु सोमयाजिनम् ' इत्यनेन विधानात् तदर्थोऽयमनुवादः आग्नेयैन्द्राग्नयोः तस्मादुभयोरनुवादः इति सिद्धान्तः ।

तथा चान्यार्थदर्शनम् । ४६ ॥

तथा च आग्नेयैन्द्राग्नयोः कर्मान्तरत्वाभावे अन्यार्थदर्शनं भवति, ' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम् ' इति । कर्मान्तरोत्पत्तौ तु अधिका आहुतयो भवेयुः । तस्मात् उभयोरनुवादः इति सिद्धान्तः । के.

* ' पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्च ' इति उभयोरनुवादः ' सानाय्येन तु सोमयाजिनम् ' इत्यस्य स्तुत्यर्थः । १०।८।१४।३९–४६. * पुरोडाशात् इत्यार्थात् वचनप्रामाण्यात् स्विष्टकृदिज्यते यागश्च स भवति प्रतिपाद्यते च ( प्रतिपत्तिः ) पुरोडाशः दर्शपूर्णमासयोः । भा. ३।२।५।१५. * पुरोडाशस्यापूपत्वात् कपालगतोष्मणा पाको भवति । वि. १०।१।११. * पुरोडाशस्य अवदानं द्विरेव । उपस्तरणाभिघारणसहितस्य तु चतुरवत्तत्वं संपद्यते ' चतुरवत्तं जुहोति ' ' द्विर्हविषोऽवद्यति ' । १०।८।१२. * पुरोडाशस्य अवदानं मध्यात् पूर्वार्धाच्च । कृत्स्नपुरोडाशगते च मध्यपूर्वार्धे अपादानत्वेन श्रूयेते, न तु अवशिष्टभागगते । ततो मुख्यस्य हविषो नाशे आज्यं प्रतिनिधाय यष्टव्यम् । ६।१।१. * पुरोडाशस्य आग्नेयस्य चतुर्धा कृतस्य निर्देशम् ' इदं ब्रह्मण., इदं होतु:, इदमध्वर्यो., इदमग्नीध. ' इति मन्त्रैः यजमानः कुर्याच्चाध्वर्युः । वि. ३।४।२१. * पुरोडाशस्यैव साक्षात् प्रधानभूतयागसाधनत्वं वार्तिकमतेन । भाष्यमतेन तु अवदानस्य ( सु. पृ. २४. * पुरोडाशस्य कपालेभ्यो अुद्धृत्य वेद्यां आसादनं क्रियते दर्शपूर्णमासयोः । भा. १०।१।१०।५८, * पुरोडाशस्य कपालेषु प्रथनं क्रियते दर्शपूर्णमासयोः ' उरु प्रथा उरु प्रथस्व ' इति मन्त्रेण । १०।१।१७।५५, * पुरोडाशस्य काल. वपाप्रचारादूर्ध्वम् । १२।१।१।१, * पुरोडाशस्य कृत्स्नस्य दाहे एव प्रायश्चित्तम् । ६।४।५।१७–२१. * पुरोडाशस्य चतुर्धाकरणं आग्नेयस्यैव दर्शपूर्णमासयोः । न तु ऐन्द्राग्नाग्नीषोमीययोः । ३।१।१५, तच्च भक्षार्थमेव । ३।४।१७. * पुरोडाशस्य चतुर्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते दर्शपूर्णमासयोः । ' ब्राह्मणानामिदं हविः सोम्यानां सोमपीथिनाम्, नेहाब्राह्मणस्यास्ति ' इति । भा १२।४।१५।४६, * पुरोडाशस्य दर्शपूर्णमासगतस्य धर्माणामतिदेशः सौत्रामणीगतसुराग्रहेषु । ८।२।१।१–९. * पुरोडाशस्य निर्वापावघातपेषणसंयवनपिण्डकरणादिनिष्पादकविधिदर्शनेन प्रयोगकाले निष्पादनावगमः । सु. पृ. ७९४. * पुरोडाशस्य पात्र्या सादनं ' तस्मिन् सीदामृते० ' इत्याद्युत्तरार्धान्त्यमन्त्रेण कार्यम् । लिङ्गेन वाक्यस्य बाधात् । '.स्योनं ते सदनम् ' इत्या-

विना पुरार्थेन तु पाध्यामायेन सदन कर्तव्यम् । वि ३।३।८, ● पुरोडाशस्य पूर्वसिद्धस्यैव शकल ऐन्द्रवायवपात्रे निधेय ज्योतिष्टोमे । ३।८।१८ ● पुरोडाशस्य श्रपणे 'य शृत स देव ' इत्यनेन विधिविहितस्य यथोचितपाकस्य स्तुतये 'यो विदग्ध स नैर्ऋत , योऽशृत स रुद्र ' इत्यनूद्यते । ३।४।३ ● पुरोडाशाना प्रात सवनीयाना तत्र प्रात सवने प्रचारश्रूयते । इतरे पुन पुरोडाशा भक्षणाय पक्षो प्रात सवनीयाना वा तत्समध्ये पतिता । भा १२।२। १२।३२, ● पुरोडाशे अभ्यूह (साङ्गारभस्मारोप) क्रियते दर्शपूर्णमासयो 'वेदेन भस्मना अङ्गारानभ्यूहति ' इति । १०।१।१८।५६, ● पुरोडाशे अवज्वलन (ज्वलद्दर्भारोपणम्) क्रियते दर्शपूर्णमासयो 'दर्भ पिञ्जूलैरभिज्वलयति ' । १०।१।१९।५७ ● पुरोडाशे एकस्मिन्नन पर्यग्निकरण पूर्वपक्षे, सर्वपुरोडाशे च वक्तव्य सिद्धान्ते । वा २।१।४।१२ पृ ४१५ ● पुरोडाशे ऐन्द्रे आमयस्य विध्यत । भा ८।१।१७।३४, ● पुरोडाशे जलेन श्लक्ष्णता क्रियते दर्शपूर्णमासयो 'स ते तथा तनू श्लक्ष्णता इति नि परिमार्ष्टि ' इति । १०।१।१७।५५ ● **पुरोडाशेषु** तृतीयसवनगतेषु पाशुकात् भेदेन हविष्कृदाह्वानाभाव ज्योतिष्टोमे । १२।२।४।१२–१३ ● पुरोडाशेषु सवनीयेषु पाशुकतन्त्रस्यैव प्रसङ्ग । १२।२।१२।३०–३२ ● पुरोडाशेषु सवनीयेषु पिष्टलेपफलीकरणहोमयो आग्निमारुतादूर्ध्वं सुक्तैरनुयाज सह नोत्कर्ष , अनुयाजाना पदार्थत्वात् , होमयो पुरोडाशार्थत्वात् , उभयो प्रयोगभेदेन सम्बन्धाभावात् । नि ५।१।१५ ● पुरोडाशेषु सवनीयेषु सौमिकपात्रैर्ग्रहचमसै दार्शिकपात्राणा जुह्वादीना प्रसङ्गसिद्धिर्नास्ति । १२।१।४।१०–११ ● पुरोडाशेषु सवनीयेषु हविष्कृदाह्वान न कार्यं ज्योतिष्टोमे । कुला- चितेयम् । १२।२।३।११ ● पुरोडाशेषु सवनीयेषु हविष्कृदाह्वानमत्र आवर्तनीय , ■ तन्त्रम् , काल भेदात् । ११।४।२१.

● **पुरोडाशाभावे** प्रणीतानाममाव यथा पयस्यायाम् । भा ४।२।७।१५.

● **पुरोडाशाभिवासनान्तस्य** दर्शेऽपकर्ष । वेदैः पूर्वेषु करणेऽपि । ५।१।१६

● **पुरोडाशालङ्करण** नाम 'देवस्त्वा सविता मध्वाऽनक्तु ' इति मन्त्रेण पुरोडाशाभिघारण स्रुवेण । सोम ५।१।१३.

● **पुरोडाशालङ्कारप्रैष** 'अग्नीदग्नीन् विहर, बर्हि स्तृणीहि, पुरोडाशानलङ्कुरु ' इति । चि ५।१।१३.

● **पुरोडाशावदाने** हस्त करण सामर्थ्यात् । नि १।८।२०

● **पुरोडाशादिश्रपण** ज्योतिष्टोमे शालामुखीये कर्तव्यम् , न शामित्रे । १३।१५।१२

● **पुरोडाशकपाल** तुषोपवाप प्रति कारकत्वेन अङ्गमपि न तदयोग्यम् , न च तद्वयाप्यम् । भाट्ट. ४।१।१ ● पुरोडाशकपाल पुरोडाशार्थं कपालम् । भा ४।१।११।२६ ● पुरोडाशकपाल श्रपणप्रयुक्तम् , न तुषोपवापप्रयुक्तम् । ४।१।११।२६ ● 'पुरोडाशकपालेन तुषानुपवपति ' इत्यत्र ■ पुरोडाशार्थतया उपादानमेवाश्रित्य भूतसत्त्वोपपत्ति । सोम १०।२।२७

‡ **पुरोडाशकपालन्याय** । तुषोपवापन्याय । दर्शपूर्णमासयो कपाल न तुषोपवापप्रयुक्तम् , किन्तु श्रपणप्रयुक्तम् ॥

**अर्थाभिधानकर्म च भविष्यता सयोगस्य तन्निमित्तत्वात् , तदर्थो हि विधीयते । ४।१।११।२६ ॥**

भाष्यम्— दर्शपूर्णमासयो श्रूयते ' कपालेषु पुरोडाश श्रपयति ' इति, तथा ' पुरोडाशकपालेन तुषानुपवपति' इति । तत्र सदेह किमुभय कपालानि प्रयोजयति पुरोडाशश्रपण तुषोपवापश्च, उत श्रपण प्रयोजकम् , न तुषोपवाप इति । किं प्राप्तम् ? विनिगमनाया हेतोरभावात् उभयम् । इति प्राप्ते, उच्यते । अर्थाभिधान प्रयोजनसबद्धमभिधान यस्य, यथा पुरोडाशकपालमिति, पुरोडाशार्थं कपाल पुरोडाशकपालम् । कथमेतदवगम्यते ? पुरोडाशस्तावत् तस्मिन् काले नास्ति, येन वर्तमान संबन्ध कपालेन स्यात् । तेनैव हेतुना न भूत । स एष कपालस्य पुरोडाशेन भविष्यता सबन्ध । भविष्यता सबन्धश्च तन्निमित्तस्य भवति । तस्मात् पुरोडाशेन प्रयुक्त

यत् कपालम्, तेन तुषा उपवप्तव्या इति । एवं च सति चरौ पुरोडाशाभावे यदा तुषानुपवप्तुं कपालमुपादीयते, न तत् पुरोडाशकपालं स्यात् । न चेत्, तेन तुषा उपवप्तव्या भवन्ति । तस्मान्न तुषोपवापः कपालस्य प्रयोजकः । प्रयोजकं तु श्रपणमिति ।

टुप्—( सिद्धान्तमाह– ) स्वप्रयोजनसंयोगेन पुरोडाशकपालं निर्दिश्यते पुरोडाशस्य कपालमिति । वर्तमानसंयोगे पुरोडाशकपालं मुख्यम् । भूतभविष्यतोः ( संयोगयोर्मध्ये ) भूते ( सम्बध्यमाने ) लक्षणा ( स्यात् । कथमित्याह– ) आसीत् अन्यस्मिन् काले ( संयोगः ) । भविष्यति ( तु संयोगे ) नास्ति लक्षणा । (कथमित्याह–) पानासादनकाले प्रयोजनम् ( पुरोडाशरूपम् ) उररीकृत्य तानि ( कपालानि ) धार्यन्ते । तस्मात् वर्तते एव तेषां प्रयोजनम् । तस्मात् ( लक्षणाऽभावात् ) भविष्यतैव संयोगेन यत् ( यस्मात् ) निर्दिश्य अन्यत्रोपदिश्यते, तत् ( तस्मात् ) अप्रयोजकम्, परकीयत्वात् द्रव्यस्य । अवघातकाले यत् तुषनिरसनं तदिहोदाहरणम् । ( तुषनिरसनमेवोदाहरणम्, न तु वाजसनेयिभिः समाम्नातः प्रणीतानिनयनकालीनस्तुषोपवापः ) ।

शा—'सत्रोपवापशेषत्वं कपालस्य तृतीयया । निर्विवादमतः सोऽपि कपालस्य प्रयोजकः ॥' ( सिद्धान्तमाह– ) 'सत्यमस्ति तदङ्गत्वम्, तथापि त्वप्रयोजकः । पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् ॥'

सोम—पूर्वाधिकरणेन प्रत्यवस्थानात् संगतिः । प्रयोजनं पूर्वपक्षे लब्ध्वापि कपालं सपाद्य तेन तुषोपवापः कर्तव्य, सिद्धान्ते तुषोपवापस्य कपालप्रयोजकत्वाभावात् न कपालेन तुषोपवापः, किन्तु हस्तेन । सूत्रार्थस्तु—अर्थेन पुरोडाशरूपप्रयोजनेन सह अभिधीयमानं यत् पुरोडाशकपालादि तत्साधनकं तुषोपवापादिकर्मापि अप्रयोजकम् । न च कथं कपालस्य पुरोडाशसम्बन्धः, सम्प्रति तदभावात् इति वाच्यम् । भविष्यताऽपि पुरोडाशेन तदुद्देशेन आसादनमात्रात् सम्बन्धोपपत्तेः, तस्य च सम्बन्धस्य पुरोडाशनिमित्तकत्वात्, तदर्थस्यैव सतः कपालस्य तुषोपवापे विधानेन पुरोडाशप्रयुक्तत्वात् कपालस्य इति ।

वि—'श्रपणं तुषवापश्च कपालस्य प्रयोजनौ । उत श्रपणमेवाऽऽद्यो वाक्यार्थत्वात् तृतीयया ॥, पुरोडाशकपालेति नाम्ना स्याच्छ्रपणार्थता । प्रयुक्तस्य प्रवृत्तिर्नो तस्य वापे प्रसञ्जनम् ॥'

भाट्ट—दर्शपूर्णमासयोः 'पुरोडाशकपालेन तुषानुपवपति' इति श्रुतम् । तत्र कपालस्य 'कपालेषु पुरोडाशं श्रपयति' इति श्रपणे विनियुक्तस्यापि तृतीयया तुषोपवापार्थत्वेनापि आर्थिकविशेषणविधिना विनियोगादुभयप्रयुक्तत्वम् । न च पुरोडाशार्थकपालत्वेनैव तुषोपवापे विनियोगान्न तुषोपवापप्रयुक्तत्वम्, प्रकृतिविकारभावाभावेन तादर्थ्यसमासायोगात् । षष्ठीसमासे च सम्बन्धमात्रावगतेः, तस्य च कपालत्वेनैव विनियोगेऽपि पुरोडाशार्थोपात्तस्यैव प्रसङ्गेन ग्रहणोपपत्तेः अनुवादत्वात् । यदि तु प्रसङ्गलक्षणाभावात् उपादेयस्थले प्रकृतग्रहणस्य च 'तानि द्वैधम्' इत्यत्र निराकृतत्वात् न पुरोडाशकपालनियमः इत्याशङ्क्येत, ततोऽस्तु नाम पुरोडाशसम्बन्धविशिष्टस्यैव विधानम् । तत्फलं च तद्भिन्नकपालव्यावृत्तिरेव, न तु अप्रयोजकत्वमपि, सम्बन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालग्रहणानुपपत्तेः चर्वादौ तन्नियमाभावरूपस्य अप्रयोजकत्वफलस्य असम्भवात् । इति प्राप्ते, पुरोडाशसम्बन्धस्य प्रमाणान्तरसम्बद्धस्य आलोचने तत्प्रयुक्तत्वस्यापि अवगतेर्न पुनस्तुषोपवापविधिरपि तत् प्रयुङ्क्ते । अतो न्यायतः अवघातकालीनस्तुषोपवापः पुरोडाशप्रयुक्तकपालोपजीवितया न कपालोपादानासादनयोः प्रयोजकः । निनयनकालीनस्तु कपालधारणस्य प्रयोजको भवत्येव । उपादानस्य तु सोऽप्यप्रयोजकः । प्रयोजनं चर्वादौ न कपालनियमः । अग्निहोत्रहवण्या तु वक्ष्यते ।

मण्डन—'कपालं न तुषार्थितम् ।'

शंकर—'अर्थाभिधानकर्मैतम् ।' सौनपदेन अधिकरणार्थं उक्तः । १४.

* पुरोडाशकपालेन इतिवच्च प्रयोजकयुक्ताभिधानाभावात् ( व्यतिरेकेण दृष्टान्तः ) न व्रीहीणामवघाते पुरोडाशकपालन्यायः । कौ. २।१।४।५ पृ ५८.

* **पुरोडाशकपालन्यायेन** निर्वापवाक्ये अग्निहोत्र संबन्धित्वश्रवणात् तत्प्रयुक्तत्वावगतेः न निर्वापः अग्निहोत्रहवण्याः प्रयोजकः । अत एव ' अग्निहोत्रहवण्या अग्निहोत्रं जुहोति ' इत्यत्र ' परिधीन् परिदधाति ' इतिवत् पुरोडाशकपालन्यायाभावात् अग्निहोत्रस्य प्रयोजकत्वावगतेः आप्याग्निहोत्रप्रयोगे भूतव्युत्पत्तेः असंभवेऽपि नाग्निहोत्रहवणीबाधः । भाट्ट. १०।२।२६. * ' परिधीन् समार्ष्टि ' इत्यत्र परिधिशब्देन परिधीयते अनेन इति व्युत्पत्त्या अग्निपरिधानोपलक्षितद्रव्याभिधानात् पुरोडाशकपालन्यायेन फलागाप्रयोजकत्वात् नोक्तप्रयोजनसिद्धिः । कौ. २।१।५।१२ पृ. ८५. * ' परिधौ पशुं नियुञ्जीत ' इत्यत्र न परिधौ यूपधर्माः, तत्रापि परिधेः पशुनियोजनं प्रति सप्तम्या अङ्गत्वे पुरोडाशकपालन्यायेन अग्निपरिधानप्रयुक्तस्यैव परिधेः पशुनियोजनशेषत्वेन तत्प्रयुक्तत्वाभावात् । इद पूर्वपक्षे । भाट्ट. ९।२।१२, * ' परिधौ पशुं नियुञ्जीत ' इत्यत्र पुरोडाशकपालन्यायेन अग्निपरिधानसाधनरूपपरिधिनेनैव पशुनियोजनसाधनत्वावगतेः परिधानप्रयुक्तत्वानपायात् तद्धर्माणामेव कल्पनत्वम् । १२।२।११, * यो नाम प्रयोगान्तरकाले रमणीयानि नवानि पात्राणि लभेत तस्येच्छावशेन पूर्वस्यागेनान्योपादानेऽपि न कश्चिद्दोषः स्यात्, दाहस्य पुरोडाशकपालन्यायेन धै. कैश्चिदपि यजमानेऽनुपपत्तेः । इद पूर्वपक्षे । ११।३।१३.

* न च तथापि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात् पुरोडाशकपालन्यायापत्तिः, तथात्वे फलाभावेन ( तस्याः षट् पदानि इति– ) तच्छब्दवैयर्थ्यापत्तेः तस्य एकहायनीस्वरूपमात्रपरत्वाङ्गीकारात् ( इति पूर्वपक्षी ) । भाट्ट. ४।१।१०.

**पुरोडाशगणेऽपि उत्तमयोः पिण्डयोः यथाप्रकृति ' यथाभागं व्यावर्तेथाम् ' इति प्रयोगः ॥**

अन्त्योपान्त्यपिण्डविभागेऽपि हविर्बहुत्वानपायादूहेन प्रयोगे प्राप्ते, यथाप्रकृति अविकृत एव मन्त्रः, पूर्वहविषा व्यावर्तितत्वेन द्वयोरेव हविषोर्व्यावर्तनीयत्वात् । संकर्ष. १।३।१९.

**पुरोडाशगणे देवतानिर्देशः अन्त्ययोः पिण्डयोः देवताज्ञानार्थो न सर्वेषाम् ॥**

पुरोडाशगणे एव देवतानिर्देशो विभागन्यायेन सर्वेषां हविषां स्यात् । इति प्राप्ते, महतः पिण्डादेकैकस्य हविषः क्रमेण पृथक्करणात् यागक्रमादेव तत्तद्देवतावधारणस्य सुकरत्वादन्त्योपान्त्यपिण्डयोर्मध्ये कः पिण्डः कियेवत्य इति निर्धारणायोगात् तदर्थो देवतानिर्देशोऽपि तयोरेव । संकर्ष. १।३।२०.

**पुरोडाशगणे ' यथाभागं व्यावर्तेथाम् ' इत्यूहः कार्यः ॥**

यत्र बहूनां पुरोडाशानामेकः पिण्डः, तत्रापि ' यथाभागं व्यावर्तेथाम् ' इत्यविकृत एव मन्त्रः प्रयोक्तव्यः, विभागस्य पिण्डद्वैधीकरणार्थत्वात् । इति प्राप्ते, ' व्यावर्तध्वम् ' ' भगो वो विभजतु ' इत्यादिरीत्या ऊहेन प्रयोगः, पिण्डद्वित्वेऽपि हविषां बहुत्वेन तेषां परस्परव्यावृत्तेरभिधेयत्वात् । संकर्ष. १।३।१८.

* **पुरोडाशचतुर्धाकरणं** भक्षार्थमेव । ३।४।१७.

* पुरोडाशद्वयभक्षणे अनुवादः दर्शपूर्णमासयोः असोमयाजिनः । ( द्वय आग्नेयश्चैन्द्राग्नश्चेति ) । १०।८।१४।३५–४६.

* पुरोडाशधर्मः. पर्यग्निकरण अग्नीषोमीये पशौ चोदकप्राप्तः ( तत्र पुरोडाशस्य द्वित्रैर्दर्भैः, पशोस्तु आहवनीयोल्मुकेनेति विशेष ) । भा ८।२।३।१२, * पुरोडाशधर्मः. प्रोक्षण अग्नीषोमीयपशौ चोदकप्राप्तः । तत्र ' अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि ' इति मन्त्रः । ८।२।२।११. * **पुरोडाशधर्माः** पूर्वं कर्तव्या उपांशुयाजाज्यधर्माः पश्चात्, पाठक्रमप्राबल्यात् । ५।१।८. * पुरोडाशधर्माः– ' पेषणं मर्कल वापस्तापश्चोपहितिः प्रथा । मार्जनाभ्यूहनज्वालास्तया व्युद्धृत्य सादनम् ॥ ' इति । (एतेषां चरौ बाध. । एते अपूपधर्माः । अपूपश्च नाम पुरोडाश· ) । अत्र पेषणं चूर्णनम्, यत्र अयत्र पिष्टस्य उदकेन मिश्रणम् । तत्र संवापः उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेप. । ताप. सन्तापनं कपालानामङ्गारैः प्रतापनम् । उपहितिः उपधान अङ्गारेषु कपालस्थापनम् । प्रथा प्रथन कपालेषु अवस्थापितस्य पुरोडाशस्य हस्त-

संघट्टनेन सर्वेषु कपालेषु प्रसारणम्। मार्जनं श्लक्ष्णीकरणम्। अभ्यूहनं अभ्यूहनं भस्मना अङ्गारैश्च उपर्याच्छादनम्। ज्वालाः दर्भपिञ्जूलैः प्रज्वालनम्। व्युद्वासनं कपालेभ्यः पुरोडाशस्य पृथक्कृत्य अन्तर्वेदि अवस्थापनम्। वि. १०।१।१।११.

* पुरोडाशनिष्पादने व्रीहीणां ये व्रीहित्वजात्युपलक्षिता अंशाः तेषामेव मुख्यद्रव्यत्वम्। तच्च व्रीहिष्विव नीवारेष्वप्यस्त्येव। तत एव व्रीहीणां नीवाराः प्रतिनिधिः। अयमेव न्यायः सर्वत्र प्रतिनिधिषु। वि. ६।३।११.

* पुरोडाशप्रकृतितया व्रीहियवयोर्विकल्पः, एकार्थत्वात्। वि. १२।३।८.

* पुरोडाशप्रथने द्वौ मन्त्रौ 'उरु प्रथस्वेति पुरोडाशं प्रथयति', 'उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति' इति ब्राह्मणाभ्यां विनियुक्तौ। तयोरन्योन्यनिरपेक्षत्वात् विकल्पः, न समुच्चयः। १२।३।१५.

* पुरोडाशप्रयोजकत्वं भिन्दन्नो नास्ति दर्शपूर्णमासयोः। ४।१।१३।२८–३२.

* पुरोडाशमन्त्रे 'व्रीहीणा मेध' इत्यत्र नीवारग्रहणे 'नीवाराणा मेध' इत्यूहः कर्तव्य। परन्तु यत्र नैयारश्चरुरेव विहितस्तत्रायमूहः। नीवाराणां प्रतिनिधित्वेन ग्रहणे तु नास्त्यूहः। के. (वि ९।२।१).

* पुरोडाशयागः देवतासत्त्वार्थः। १०।१।९।१९–३५.

* पुरोडाशविधिवाक्यं दारुपात्रं च सांनाय्ये स्तुत्यर्थम्। संकर्ष. १।२।४. 'सानाय्ये पुरोडाशविधिवाक्यं' इत्यत्र द्रष्टव्यम्।

* पुरोडाशविभागार्थानां एकत्रयाणाम् 'पूषा वा विभजतु, भगो वा विभजतु, अर्यमा वा विभजतु' इति मन्त्राणां प्रयोगे विकल्पः दर्शपूर्णमासयोः। १२।३।१३।२९.

ष्ठ पुरोडाशशकलाधिकरणम्। ज्योतिष्टोमे ऐन्द्रवायवादिपात्रेषु प्रकृतपुरोडाशशकलादीनामेव निधानम्॥

अपनयस्त्वेकदेशस्य, विद्यमानसंयोगात् ३।८।१८।३३॥

भाष्यम्— ज्योतिष्टोमे श्रूयते 'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे' इति। तत्र संशयः किमन्यत एषां क्रियेत, उत प्रकृतेभ्य इति। किं प्राप्तम्? पूर्वेण न्यायेन अन्यत इति। तत्रोच्यते। तत एकदेशस्यापनयः। कुतः? विद्यमानसंयोगात्। विद्यते हि तत्र पुरोडाशो धानाः पयस्या च। तत्संयोग एव न्याय्यः, नान्यसंयोग इति। पुरोडाशादीनामेव संस्कारः, नैन्द्रवायवादीनाम्। कुतः? पुरोडाशादिषु द्वितीयादर्शनात्। प्रत्यक्षश्च एकदेशापनयेनोपकारः, नैन्द्रवायवादिसंबन्धेन। एवं प्रकृतानुग्रहो भविष्यति। तस्मात् प्रकृतस्योपदेशेन तत् क्रियेत। न चात्रोपदिष्टोपदेश आश्रयः अनेकगुणभावश्च। अन्येन शकलेन होमः अन्यश्च प्रतिपाद्यते।

वा— पुरोडाशधानादीनां सवनीययागार्थत्वात् पूर्वेणैव न्यायेन प्रकृतभक्षणार्थत्वाद् पुरोडाशशकलादयः। इति प्राप्ते, अभिधीयते। 'एकदेशद्रव्य च' इत्यनेन अंशयोगकल्पनाऽऽपत्तेः अन्यस्य च शकलस्य अभावात् प्रदानमात्रे च हुते शेषस्य प्रतिपाद्यमानस्य द्रव्यार्थत्वात् द्वितीयानिर्देशानुग्रहाय कश्चिद्विरोधो दृश्यते। तस्मादत्र प्रकृतोपादानम्।

वि— 'पुरोडाशस्य शकलमैन्द्रवायवपात्रके। अपदृश्यात् पुरोडाशो नवोऽथ सवनीयगः॥, निधानस्य वचनार्थत्वात् नवं संस्कृत्य तत्क्रिया।, सवनीयेन तत्कार्यं संस्कार्यत्वाद् द्वितीयया॥' १९.

भाट्ट— सोमे 'पुरोडाशशकलं ऐन्द्रवायवपात्रे प्रास्यति, आमिक्षा मैत्रावरुणपात्रे, धाना आश्विनपात्रे' इति श्रवम्। तत्र शकलपदस्य उत्पत्त्यादिपदवत् एकदेशवाचित्वेन स्वातन्त्र्यपुरोडाशासंपर्कत्वाप्रसक्तेः प्रातःसवनिकसवनीयपुरोडाशावयवपरत्वं तावन्निर्विवादम्। आमिक्षाऽऽदौ तु तदभावात् 'पयसा मैत्रावरुणं श्रीणाति' इतिवत् लौकिकामिक्षाऽऽदिग्राहकत्वेनोपपत्तौ वस्तुप्रतिपत्त्यैव सवनीयगततद्ग्राहकत्वे प्रमाणाभावः। इति प्राप्ते, द्वितीयया प्रास्तस्य आमिक्षादिप्रतिपत्त्यावगमात्, तदंशे औपदेशिक्या तया आतिदेशिकप्रतिपत्तिबाधोप-

पत्तः प्रातःसवनिकसवनीयसंनिधानामेव पुरोडाशादीनां ग्रहणम् ।

**मण्डन**— ‘धाना. पयस्या शकलश्च शेषात् ।’ २०.

शंकर— ‘शकले प्रकृतग्रहः ।’ २२.

* **पुरोडाशशब्दः** जातिवाची न तु संस्कारवाची । ‘पुरोडाशेन मे माता प्रहेल्कं ददाति’ इत्यादौ यथा । तेन अग्निष्टोमे प्रसर्गे रौहिणौ पुरोडाशौ चवस्यौ तूष्णीं कर्तव्यौ । सोम. १।४।८. * पुरोडाशशब्दः धानादिषु भक्तः संनिहितेषु प्रयुक्तो ज्योतिष्टोमे । भा. ३।८।३२।४५.

* **पुरोडाशशेषभक्षणं** यजमानपञ्चमैर्ऋत्विग्भिरेव कर्तव्यम्, भक्षणमन्त्रक्रमात् ‘यजमानपञ्चमा इडां भक्षयन्ति’ इति लिङ्गाच्च । के. ( भा. ६।४।३. )

* **पुरोडाशिनः** अनिष्टप्रथमयज्ञाः । शाम्वते सत्रे ‘ये पुरोडाशिनः ते उपवसन्ति’ इत्यत्र । भा. ३।४।३।८ पृ ६३४.

* **पुरोरुक्** सौत्रामण्यां सुराग्रहेषु एका ‘एका पुरोरुक् एका याज्या’ इति । भा. ८।२।१।४.

* **पुरोरुक्शब्दस्य** शाखागतमन्त्रविशेषवाचित्वेऽपि इह ( ‘तथा याज्या पुरोरुचोः’ ७।१।५।१९ इत्यत्र) याज्यासाहचर्येण अनुवाक्यावाचित्वम् । सु. पृ. ६५५.

* **पुरोहितः** एकस्य यज्ञः एक एव उपादेयत्वेन श्रूयते ‘पुरोहितं करोति’ इति । एकत्वं विवक्षितम्, संस्कारशब्दत्वात् पुरोहितशब्दस्य । भा. ६।६।२।१३, * पुरोहितः । ‘एतेन ( बृहस्पतिसवेन यागेन ) राजपुरोहितौ सायुज्यकामौ यजेयाताम्’ । ३।३।९।१७ * पुरोहितो राज एव भवति नाग्रजः । वि ६।६।२. * पुरोहितस्य राज्ञश्च भिन्नकल्पयोरपि कुलाययागे न ह्यधिकारः । ६।६।२.

■ **पुष्करपलाशन्यायः** । यथा पद्मपत्रं जलेन लिप्तं न भवति, तत्प्रकृत्याप्यसंगत्वम् । यथोक्तम्— ‘पद्मपत्रमिवाम्भसा’ इति । साहस्री. ७२४.

. ■ **पुष्टलगुडन्यायः** । बहूनां शुनां मध्ये एकस्य प्रहारार्थं प्रक्षिप्तेन पुष्टेन लगुडेन इतरेऽपि श्वानो निराक्रियन्ते । तथा सांख्यवादनिराकरणयुक्त्या इतरेऽपि वादिनो निरस्ता भवन्ति । तदुक्तम् ‘एतेन सर्वे व्याख्याता व्याख्याताः’ इति । संग्रहः.

■ **पुष्पवन्तोपकारन्यायः** । ‘एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ’ इत्यमरः । पुष्पवन्तशब्दो मतुबन्तः अकारान्तोऽपि । ‘पुष्प विकसने’ । भावे घञ् । पुष्पः प्रकाशस्तद्वन्तावित्यर्थः । एकयोक्त्येति वचनात् पुष्पवन्त इति पुष्पवानिति वा सूर्यश्चन्द्रो वा न वक्तव्यः । यथा रोदसी इत्येकयोक्त्या द्यावापृथिव्यावुच्येते इति । अकारान्तपक्षे ‘अव रक्षणे’, ‘जॄविशिभ्यां झच्’ ४०६ इत्यौणादिकसूत्रेण बाहुलकाज्झच्प्रत्यये ‘झोऽन्तः’ ( पा. ७।१।३ ) इत्यन्तादेशे अवन्त इति सिद्धम् । पुष्पस्य प्रकाशस्यावन्तौ रक्षकौ आधाराविति यावत् । शकन्ध्वादित्वात् साधुः । ‘रविशशिनौ पुष्पवन्ताख्यौ’ इति ‘धरणीधरशिखरस्थितपुष्पवन्ताभ्याम्’ इत्यादिनाममालादिप्रयोगदर्शनादिति । अत एव प्रकृतन्यायेऽपि पुष्पवन्ताभ्यां कृत उपकारः पुष्पवन्तोपकारः । मध्यमपदलोपिसमास इति । यथा पुष्पवन्ताभ्यां स्वस्वप्रकाशादन्येभ्यो मङ्गलादिग्रहेभ्यो द्वौद्वौ राशी दत्त्वा स्वपार्श्वे चैकैको राशिः स्थापितः, एवमुदारतया परोपकारतया बहुभ्यो बहु दत्त्वा किञ्चिदवशिष्टेनापि सन्तुष्य सर्वोपरि विराजन्ते । साहस्री. ८९५.

* **पूजयतेः** प्रीत्युत्पादनार्थत्वम् । सु. पृ. ७५०.

* **पूजा** पूजनीयं प्रति गुणभूता लोके दृश्यते । भा. ९।१।४।६. * पूजा लौकिकः पदार्थः । टुप्. ९।१।४।९ पृ. १६५५. * पूजायाः प्रीत्युत्पादनात्मकत्वेन कर्मार्थत्वम् । सु. पृ. ७५०.

* **पूज्यानां** प्रत्यक्षनामग्रहणमयुक्तम् ‘परोक्षप्रिया इव हि देवाः’ । वि ३।७।४.

■ **पूतिकूष्माण्डन्यायः** । अथ सर्वदर्शनसंग्रहे जैमिनीये । पूतिशब्दोऽत्र दुर्गन्धिवाचकः । पूतिकूष्माण्डवत् अनेकयुक्तिखण्डितो वादोऽपी उच्यते । साहस्री. ७७४.

■ पूतीका सोमस्य प्रतिनिधिः श्रौत ॥ वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य । ६।३।१३।३१ ॥

भाष्यम्— इदमामनन्ति 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति । तत्र सन्देहः किमयमभावे निमित्ते विधिः, उत प्रतिनिधिनियम इति । किं प्राप्तम् ? अभावे विधिरिति । कुतः ? विधानात् । नहि प्रतिनिधिर्विधीयते । साध्यसिद्धये साधनं स्वयमेवो पादीयते । इदं तु विधीयते । तत् कल्पान्तरपक्षेऽर्थवद् भवति । तस्मात् प्रतिनिधिरिति । एवं प्राप्ते, ब्रूमः । प्रतिनिधिः स्यात् । कुतः ? विनष्टे हि साधने साध्यसिद्ध्यर्थं साधनान्तरमुपादीयते, श्रुतस्याभावात् । ननु अयाज्या पूतीका, अन्यद्धि सदृशतरमस्तीति । उच्यते । वचनात् । सदृशे प्राप्ते, बहुषु वा असदृशेषु पूतीका अल्पसदृशा नियम्यते । कथम् । तद्धि प्रकान्तं कर्माभिरत्नं कर्तव्यम् । तस्यामन्नाथामन्तरेणैव वचनं प्रतिनिधेय द्रव्यान्तरं प्राप्तमेव । प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तेरयमनुवादो भवितुमर्हति । किमर्थमनुवाद इति चेत् । उच्यते । अल्पसादृश्यमप्राप्तम् । तद्विधानार्थमनुवादः । प्रयोजनं पक्षोक्तम् । प्रतिनिधिपक्षे सोमसदृशतरोपादानं पूतीकविनाशे । द्रव्यान्तरविधौ पूतीकसदृशमुपादेयम् ।

सोम— प्रक्रान्तेऽपि प्रयोगे वचनात् द्रव्यान्तरमङ्गमिति प्रत्यवस्थानात् सङ्गतिः । सूत्रार्थस्तु— मन्दसदृशत्वात् अन्याय्यमपि पूतीकद्रव्यं वचनात् प्रतिनिधिः स्यात् वचनस्याभावेऽपि इतरस्य मुख्यस्याभावात् तत्सामान्येन प्रतिनिधिरिति ।

वि— 'सोमाभावे भवेत् पूतीविधिः प्रतिनिधावुत । नियमो, वचनाद्यो, लाघवात् तन्नियम्यते ॥'

भाट्ट— 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यादौ किं सोमाभावे पूतीकत्वेन रूपेण पूतीकानां विधानम्, उत प्रतिनिधिविधया पूतीकगतसोमावयवानां नियमः । इति चिन्तायाम्, प्रतिनिधिनियमे पूतीकपदस्य तद्गतसोमावयवे लक्षणाऽऽपत्तेः अभावे विधिरेवायम् । न च नियमविधिलाघवानुरोधेन तदङ्गीकरणमप्यदोषः, नियादृशपत्यधिकरणन्यायेन अपूर्वविधिगौरवस्य फलमुखत्वात् । अभावे विधिपक्षेऽपि प्रतिनिधिनियमस्य अर्थसिद्धत्वात् लाघवस्य असम्मतेऽपि सत्त्वाच्च । नहि अत्र सम्मतेऽपि शाब्दः प्रतिनिधिनियमः । अपितु फलतः । तच्च फलं ममाप्यविशिष्टमेव । किञ्च, सोमाभावे मुख्यसदृशान्यस्येन प्राप्ते मन्दसदृशानां पूतीकानां पक्षप्राप्त्यभावादेव नियमविधित्वानुपपत्तिः । अतः पूतीकत्वेन रूपेण पूतीकानामपि सोमाभावे विहितत्वात् तदपचारे पूतीकसदृशमुपादेयम् । इति प्राप्ते, नाभावे विधिरयम् । तथात्वे पूतीकत्वस्य तदवच्छिन्नपर्णेस्तद्वयवान्तराणां च सोमावयवविशालीयत्वात् कारणत्वकल्पना गौरवापत्तेः । प्रतिनिधिनियमे तु क्लृप्तसोमावयवनिष्ठकरणताऽऽश्रितोपादानकपूतीकपरिच्छेदकत्वेन यागोद्देशेन पूतीकत्वनियममात्रविधानात् पूतीकयत्स्यावयवानां यागकरणत्वाकल्पनात् लाघवम् । अत एव न लक्षणाऽपि । 'पूतीकानभिषुणुयात्' इत्यत्र तु तृतीयाया अश्रवणात् द्वितीयया यागप्रयोजकत्वस्यैव निरूक्तसम्बन्धेन लक्षणेऽपि न दोषः । यत्रापि च तेन सम्बन्धेन पूतीकत्वस्य पक्षे प्राप्तिर्न पक्षे प्राप्तिः 'पूतीकानां मन्दसदृशत्वेन सोमाभावे मुख्यसदृशस्यैव प्राप्तेः । तथापि कर्मचोदनया यत्किञ्चित्प्रतिनिधिप्राप्तौ सादृश्यन्यायेन नियमकरणात् पूर्वमेव एतद्वचनप्रवृत्त्या नियमोपपत्तेः । अत एव पूतीकगतसोमावयवनियमफलस्य पूतीकत्वनियमकरणेऽपि न पूतीकानां मुख्याभावे उपादानम्, किन्तु सोमाभावे एव, वचनस्यैव सोमप्रवृत्तिकतया नियामकत्वात् 'यदि सोमम्' इति अनुवादसामर्थ्याच्च । एवं च पूतीकापचारे सोमपूतीकोभयसदृशं ग्राह्यम् । पूतीकस्याभावे शरणकोटौ प्रवेशात् ।

यत्तु शास्त्रदीपिकायामेतादृशविषये सोमसदृशमेव ग्राह्यमित्युक्तम्, तत्तु तरनविरोधादुपेक्षितम् । तदभावे तु सोममात्रसदृशं पूतीकत्वावच्छिन्नसंसर्गस्य सोमावयवाङ्गत्वेन 'गुणलोपे च' (१०।२।२७।६४) इति न्यायेन बहुतरसोमावयवानामेवानुग्राह्यत्वात् । अभावे विधिपक्षे तु सोमाभावे निमित्ते पूतीकानामेव अङ्गत्वाच्च तत्सदृशमेवेति विशेषः । अत एव यत्र मीमांसादौ तद्वयन

त्वेनैव नीवारप्रतिनिधिः तत्र नीवारत्वस्य अनङ्गत्वात् तदपचारे व्रीहिसदृशं नोपादेयं न तु यवसदृशमित्यपि सुवचम् । अत एव गूढे उभयविषयप्रतिनिध्यपचारे अधिकरणद्वयं कृतम् । तत्तु मया स्पष्टत्वादुपेक्षितम् ।

मण्डन— ' पूतीकास्तु नियम्यन्ते । '

शंकर— ' पूतीकश्च प्रतिनिधिः । '

* पूतीकानां अभिषवसम्बन्धे श्रूयमाणे तदङ्गत्वान्यथानुपपत्त्या यागसङ्गतिरश्रूयमाणाऽपि गम्यते । वा. ३।२।६।१७ पृ ५११.

* पूतीकापचारे सोमसदृशस्य एव प्रतिनिधित्वम्, न पूतीकसदृशस्य । ६।३।१५।३२ .

* पूतीकादिषु श्रुतेष्वपि प्रतिनिधिषु अभिषवक्रयादिविधिस्तुल्यः । ३।६।१५।४० .

* पूतीकासोमयोर्न वैकल्पिकत्वम्, किन्तु सोमाभावे पूतीका एव प्रतिनिधिर्नान्यत् । ६।३।१३।३१ .

* ' पूयति वा एतदृचोऽक्षरं यदेनदूहति, तस्मादृचं नोहेत् ' इति ऊहनिषेधात् प्राकृतयाज्याऽनुवाक्यासु न्यूङ्खनिषेधः अथ विकृतिष्वतिरिक्तदृष्टार्थसंनिपातिनिषेधः । बाल पृ १८.

* पूर्णाहुतिः अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गम् । सु. पृ. १६. * पूर्णाहुतिः स्रुचि चतुर्गृहीतं गृहीत्वा ' सप्त ते अग्ने समिधः ' इति मन्त्रेण होमः । क्वचित् आज्यपरिमाणाधिक्यं मन्त्रान्तरं च । के * पूर्णाहुतिमकृत्वा नहि अग्निहोत्रादयः क्रियन्ते । भा १।२।१।४, * ' पूर्णाहुतिं जुहोति ' इति विधेः ' पूर्णाहुत्या सर्वान् कामानवाप्नोति ' इति शेष. । फलवचनं स्तुतिः अधिकृताधिकारे च सर्वत्र । १।२।१।१६. * पूर्णाहुतेरग्निसंस्कारकत्वम् । वा १।२।१।४.

* पूर्णाहुतिपशुपुरोडाशयोरुत्पत्तेः स्वरकर्मानधिकार. । वा. १।२।१।४ । अत्र सुधा— अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गत्वात् पूर्णाहुतेः । पशुपुरोडाशस्य अग्निषोमाङ्गभूत अग्नीषोमीय ।

* पूर्णमासे पूर्वमाग्नेयस्य, पश्चात् अग्नीषोमीयस्यानुष्ठानम्, मन्त्रपाठस्य प्राबल्यात् । ५।१।९. मीको. पृ. २५३५ ' पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् ' इत्यत्र द्रष्टव्यम् । * पूर्णमासे बर्हिरुपलक्षितः कालः ' बर्हिषा वै पौर्णमासे व्रतमुपयन्ति ' इति विधीयते । (व्रतोपायन व्रतग्रहणम्) । ' अमावास्यायां वत्सानपाकरोति ' इत्यनेन व्रतस्य पूर्वं सिद्धत्वात् । भा. ६।४।१२।३४–३५. * पूर्णमासे बर्हिः सम्पादनकाले व्रतमुपेयात् । ६।४।१२. मीको. पृ. २०६० ' दर्शपूर्णमासयोः व्रते० ' इत्यत्र द्रष्टव्यम् । * पूर्णमासे वार्त्रघ्नीयुगलम्, अमावास्यायां वृधन्वतीयुगलं च आज्यभागाङ्गम् । ' अग्निर्वृत्राणि ', ' त्वं सोमासि ' इति वार्त्रघ्न्यौ, ' अग्निः प्रत्नेन मन्मना ', ' सोमगीर्भिष्ट्वा ' इति वृधन्वत्यौ । वार्त्रघ्न्यधिकरणम् । वि. ३।१।१३.

* पूर्णमासयागे शाखाप्रहरणं नास्ति शाखाया एवाभावात् । वि. ४।२।४.

* पूर्णमासशब्दः सूर्याचन्द्रमसोर्विप्रकर्षवचनः । संकर्ष. ३।१।१, मीको. पृ. २०७८ ' दर्शपूर्णमास० शब्दौ० ' इत्यत्र द्रष्टव्यम् ।

* पूर्विका ( अनध्ययनकर्त्री. कस्मिंश्चित् ग्रामादेर्निर्मितम् ) स्वाध्यायकाले अनध्यायं करोति, माणवकोऽनध्यायमन्त्रमधीते, नासौ तेन मन्त्रेण तदभिधानं गमयति । भा. १।२।४।११–७ .

* ' पूर्वं परमजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादान्न त्वबाधेन संभव. ॥ ' अन्यादौ धीमतत्वात् प्रथम प्रवृत्ते, लिङ्गादीनि प्रवर्तन्ते । अत्र यदि प्रत्ययबाधसिद्धयर्थं पश्चात् प्रवर्तमानमपि लिङ्गं श्रुतिमनुमापयति, ततः सा तुल्यविषयत्वनिविष्टा पूर्वागताभिरतो नात्मानं लभते इति मृगतृष्णिकादिष्विव मिथ्यात्वं कल्प्यमानैव बाध्यमाना बाधिका स्यात् । वा. ३।३।७।१४ पृ. ८५९, * पूर्वं परेण बाध्यते पौर्वापर्येण विरोधे । अपासरावः । ३।३।७।१४ पृ ८६०. * पूर्वं धूमं प्रतिपद्यते पश्चादग्निम् । यश्च धूमप्रत्ययेनैव कृतार्थो भवति, नासावग्निमपेक्षते । भा. ८।३।३।७ .

☞ पूर्वं हि अपराद्धा अभिनिविशन्ते, पश्चादुत्पन्ना इति न्यायः । स्पष्टः । संग्रहः., शेषराट्पंरि० ६३ च .

* सर्वापेक्षणेषु च पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात् पूर्वसाल्गोचनं भवति। वा. ३।३।१४।२४ पृ. ७४०. * पूर्वः इति स उच्यते यस्यापरोऽस्ति । तेन 'पूर्वो धावति' इत्युक्ते अपरो गम्यते । भा. ४।३।५।१४.

■ पूर्वैश्च तुल्यकालत्वात् । १०।८।५।८॥

चातुर्मास्येषु साकमेधेषु द्वितीयदिने त्र्यम्बकनामानः एककपाला: पुरोडाशाः बहवो विहिताः । तथा च 'सत्याषाढः' 'यावन्तो यजमानस्य अमात्याः सस्त्रीकाः, ▯ एकाधिकान्' इति (५।५।२) । तत्र 'अभिघार्या अनभिघार्या इति मीमांसन्ते ब्रह्मवादिनः' इत्युक्त्वा 'अभिघार्या एव' इति उक्तम्। तथा आधाने 'होतव्यमग्निहोत्र न वा इति मीमांसन्ते ब्रह्मवादिनः' इति विचार्य 'तूष्णीमेव होतव्यम्' इति उक्तम् । अत्रापि पूर्वैः पूर्वाधिकरणोदाहृतैः वाक्यैः तुल्यकालत्वात् तुल्यरूपत्वात् पूर्ववदेव निर्णयः प्रत्येतव्यः । 'अभिघार्या एव' इति विधिः इतरत् सर्वं अर्थवादः । तथा 'तूष्णीं होतव्यम्' इति विधिः इतरत् सर्वमर्थवाद इति । के.

■ पूर्वात् परं बलीयः इति न्यायः । स्पष्टार्थः । संग्रहः .

* पूर्वस्मिन् पक्षसि गवामयने पत्नीका निविशते । सा निविशमाना अग्ने द्वे अहनी वर्जयित्वा भवति, तयोः ऐन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । टुप्. १०।५।२५।८५ पृ. १९७९. * 'पूर्वयोः वर्णयोः (विप्रक्षत्रिययोः) वेदाध्यायिनं हत्वा' इति ब्रह्महा द्वादशाब्दानि' इति सामान्यविधेः पुरुषार्थः उपसंहारविधिः । बाल. पृ १७ .

■ 'पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सेत्स्यति' इति न्यायः । अनेन हि अत्युक्तकान्याधिकरणकभोजनादेः प्रवृत्तिमत्पुरुषविषयतया विहितस्य सदोषत्वादिबोधकवचनसंकोचकतया संकुचितवाक्यार्थस्य यथावदनुष्ठानेन निष्फलत्वेन यथोक्तफलसंपादकत्वमिति बोध्यमिति । माहत्री. ६१८.

* पूर्वान्तस्यायिनश्च बलीयांसो बभन्न स्थायिनः । भा. १२।२।१३।२३.

* पूर्वाम्नातेन पश्चादाम्नातं बाध्यते । बाल. पृ. १४१.

* पूर्वोत्तरपदार्थयोः क्रम एव तदन्तत्वतदादित्वनियामकः । तेन ज्योतिष्टोमे अग्नीषोमीये पशौ प्रयाजान्तानामपकर्षः. वसतीये च अनुयाजादीनामुत्कर्षः । सोम. ५।१।१२.

■ 'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते' इति न्यायः । अदृष्टविशेषो धर्म. । ■ च 'पूर्वजन्म०' इति न्यायेन पूर्वार्जितकर्मरूप दैव वा भवतु अन्यद्वा, सर्वथा धर्माधर्मयोरनुमेयत्वमेव न प्रत्यक्षत्वम् । सना. ध. प्र. पृ. ७०.

■ पूर्वदेवतानुपलक्षणाधिकरणम् । पात्नीवतभक्षणे पूर्वदेवतानुपलक्षणम् ज्योतिष्टोमे ॥

पात्नीवते तु पूर्ववत् । ३।२।१३।३३ ॥

भाष्यम्– अस्ति पात्नीवतो ग्रहः, 'उपांशुपात्रेण आग्रयणात् पात्नीवतं गृह्णाति' इति । द्विदेवत्यानां शेषाः आग्रयणस्थाल्यामुपनीताः । ततः पात्नीवतो गृह्यते । अथ हुते पात्नीवते तच्छेषे भक्ष्यमाणे भवति संदेहः किं इन्द्रवाय्वादयः उपलक्षयितव्या न वेति । किं प्राप्तम् ? उपलक्षयितव्याः । तेषामपि हि असौ शेषः, यथा अश्विदेवत्यस्य इति ।

वा— पूर्वपक्षार्थमारम्भः । द्विदेवत्यानां ऐन्द्रवायवादीनां शेषा आदित्यस्थाल्यां निक्षिप्यन्ते । ततोऽपि पुनः आग्रयणस्थाल्यामागच्छन्ति । ततश्च पात्नीवतग्रहणं श्रूयते 'उपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति' इति । तस्य हुतशेषे भक्ष्यमाणे पूर्ववदेव 'इन्द्रवायुपत्नीवत्पीतस्य' एवमाद्युपलक्षणं कर्तव्यमिति पूर्वपक्षः ।

ग्रहणाद्वाऽपनीतं स्यात् । ३४ ॥

भाष्यम्— अपनीयते हि स शेषः इह, न यथापूर्वकत् । तत्र हि पात्रलक्षणत्वेन संकीर्त्यते, न सोमो भागत्वेन । इह तु 'आग्रयणात् गृह्णाति' इति स्थालीस्थ. सोमो निर्दिश्यते होतुं वक्ष्यमाणदेवतां प्रति । ननु स्थाल्या आग्रयणः अनाग्रयणश्च, तत्र यः तस्मादाग्रयणाद् गृह्यते, स पात्नीवतः । यत्तु रूपातात्, नासौ पात्नीवत इति । उच्यते । आग्रयणोऽपादानम् । तस्मात्

योऽपैति आग्रयण अनाग्रयणो वा, स सर्व पात्नीवत । आग्रयणाच्च एप सर्वोऽपेत । ननु अनाग्रयणादपि अपेत । नैप दोष । आग्रयणाचानदपेत । तेनासौ पूर्व देवताभि पीत इति न शक्यते वक्तुम् । यो हि इन्द्रार्थस्य सोमस्यावयव शेष, स इन्द्रपीत इति प्रकृतौ उच्यते । इहापि तद्देव पूर्वदेवताथस्यावयवो वदित य । ननु योऽसौ पूर्वदेवताऽर्थे तस्यैवाय अवयव । नेति ब्रूम । नहि हुतस्यावयवो दृश्यते । ननु प्रकृतावपि हुतस्यावयवो न दृश्यते । उच्यते । हुताहुतस्य समुदायस्य तत्रावयव उपलक्ष्यते तद्देवतस्य । ननु इहापि समुदाय एव आसीत् तद्देवत्य, तस्यैवायमवयव । नेत्युच्यते । आसीदस्य समुदायस्तद्देवत्य । इदानीं तस्यावयव अन्य देवत्यो जात । तेन समुदाय तद्देवत्यत्वादपेत । आह, पूर्वदेवतापीतस्यासौ अवयव आसीत् तेन भूतपूर्वगत्या भविष्यति । उच्यते । प्रकृतौ न भूतपूर्वगत्या अभिधान कृतम् । इहापि तद्देव न कर्तव्यमिति । अपिच इन्द्र दैवत्य तत्र इन्द्रपीत इत्युक्तम् । अनपनीतता च तस्य इन्द्रदेवत्यता । अस्य पुन पूर्वदेवतासंबन्ध अपगत । तस्मादाम पूर्वदेवत्य ( इन्द्रवाय्वादय देवताद्वादानि ) उपलक्षणीयेति ।

वा— नैतत् पूर्वेण सदृशम् । श्रुत १ ' यस्य ग्रहणवेलाया सन्निधि सोऽपनीयते । सहतेन हि सकल्प कर्तव्यस्तत्र चोद्यते ॥ ' आग्रयणाग्रेषु हि द्विदेवत्येषु पत्नीवत्प्रसङ्ग श्रूयते । तत्र यद्यपि तावत् परकीय एव सकल्प तथापि प्रसङ्गसिद्धिरनिवार्या । किन्तु यत्र सोऽपि सकल्पनीय श्रुत एव । तथाहि ' योऽपैत्याग्रयणात् सोम स पात्नीवत इष्यते । शेषश्चेन ततोऽपैति तेन सकल्प्यते तदा ॥ ' यदा हि ' आग्रयण पात्नीवत करोति ' इति श्रूयेत, तत सनिहितो पि अनाग्रयणत्वात् पात्नवत्येन शेष कश्चित् सकल्पादपनीयेत । अत्र पुन ' आग्रयणाद् गृह्णाति ' इति श्रूयते, न आग्रयणस्य आग्रयण इति वा । तद्यथा ' वृक्षात् पर्णं पतति ' इत्युक्ते कङ्कुरादिपत्र मपि प्रतीयते, वृक्षस्य अपादानमात्रोपक्षीणत्वात् । एव मिहापि आग्रयणात् अपेतस्य पत्नीवत्त्व यथाप्राप्तम्, नाग्रयणत्वम् । समानदेवतयोश्च संपाताग्रयणयो य एवापैति ॥ एव आग्रयणादपेत इति शक्यते वक्तुम् । तावच्चेह निमित्तम् । यत्तु तन्मिश्रात् अनाग्रयणादपि अपैति, न तत्प्रतिषेधे विधौ वा उपयुज्यते । नहि अनाग्रयणात् अपेत स पात्नीवत इति वचनमस्ति । यदि वा अयमर्थ स्यात्, ततो योऽपि आग्रयण तोऽपैति, सोऽपि आग्रयणानाग्रयणापेतत्वात् अपात्नी वत प्राप्नोति । तस्मात् आग्रयणादेर इत्यस्यानर्थकत्वात् अप्रमाणकत्वाच्च अवश्यमेवमाश्रयितव्य आग्रयणात्त वदपेत इति । तत्र सपातस्यापि अविशिष्ट इति उपपन्न देवतासंबन्धित्वम् । न च पूर्वदेवताथ स्यानपनीय उत्तरसंबन्धोऽभ्युपगते इत्युपपन्न पूर्णकमोजनवदनुप लक्षणम् । ' ननु योऽसौ पूर्वदेवताथ, तस्यैवाय मवयव ' इति ( भाष्यम् ) भूतपूर्वगत्यभिप्रायम् । आचार्यस्तु स्वयमेवैन अभ्युपगमयामीति मन्वान परिहरति तावत् ' नहि हुतस्यावयवो दृश्यते ' इति । नहि हुतादन्यत् तस्या देवताया विद्यते तत्पापनीतत्वात् इत्यभिप्राय । परस्तु अयुक्तत्वाभिप्राय आह ' ननु प्रकृतावपि ' इति । सकल्पवेलाया तत्र देवतापदेश इत्युत्तरम् । इतर आह अत्राप्येवमेवासीत् इति । सिद्धान्तवादी वदति एतदेव प्रकृतिविलक्षण इति । न च अपनीतस्य तत्रोपलक्षण कृतम् । इह तु स्फुटमपनीतत्व मुक्तम् । तस्मात् पत्नीवानेवोपलक्षणीय इति सिद्धम् ।

सोम— पूर्ववत् प्रत्यवस्थानात् सगति । प्रात सवने ऐन्द्रवायव–मैत्रावरुण–आश्विना ग्रहा द्विदेवत्या । तेषा होमानन्तर तदीया शेषा आदित्यस्थाली प्राप्य तृतीयसवने आदित्यस्थालीत आग्रयणस्थाली प्राप्नुवन्ति ।

वि— ' द्विदेवशेष आदित्यस्थाल्या आग्रयणाभिधाम् । स्थाली प्राप्तस्तत पात्नीवतस्य ग्रहणे सति ॥ तद्भक्षणे द्विदेवा किं सार्धं पात्नीवतेन ते । उपलक्ष्या न वा पूर्वन्यायेनास्त्युपलक्षणम् ॥ अत्र आग्रयणात् पात्नीवतो नैतस्य विद्यते । आकाङ्क्षा पूर्वदेवेषु पत्नीवानेव लक्ष्यते ॥ '

भाट्ट— द्विदेवत्यानामैन्द्रवायवादीना शेषा आदित्य स्थाल्या आगत ततोऽपि आग्रयणस्थालीमागच्छन्ति ।

पात्नीवतश्च आग्रयणाद् गृह्यते । तस्मिन् भक्ष्यमाणे द्विदेवत्या अपि उपलक्षणीयाः पूर्ववत् आग्रयणस्यैन पत्नीवद्देवतासम्बन्धात् । इति प्राप्ते, 'पात्नीवतमाग्रयणाद् गृह्णाति' इत्यपादानत्वश्रवणात् तस्मादेवैतस्य पात्नीवतत्वम्, न तु आग्रयणस्थेन । आग्रयणाच्च अनाग्रयणमपि समुद्धरणात् तस्मादेव इति, द्विदेवत्यस्यापि देवताऽन्तरसम्बन्धापन्नत्वात्, भूतपूर्वगत्या च प्रकृतौ अनुपलक्षणात् नोपलक्षणीयाः ( इन्द्राग्न्यादयः ) ।

मण्डन— 'पात्नीवते नु प्रदेशः पूर्वाम् ( देवताम् ) ।'

शंकर— 'तथा पात्नीवते ग्रहे ।' ( देवता नोह्या ) ।

• पूर्वदौर्बल्यन्यायः । एकवाक्यस्थानां पदानामन्योन्यज्ञानानपेक्षज्ञानोत्पादकतया एकवाक्यत्वमङ्गापत्तेः अन्योन्यसापेक्षज्ञानोत्पादकत्वावश्यायात् पूर्वपदजन्यज्ञानविरोधिनो ज्ञानस्य उत्तरेण पदेनानुत्पादितस्य बाधकत्वानुपपत्तेः नाम पूर्वदौर्बल्यन्यायः सम्भवति । मु. पृ. ११७२. • पूर्वदौर्बल्यन्यायः । ६।५।१९. मीको. पृ. ४९५ 'अपच्छेदन्याय.' इत्यत्र द्रष्टव्यम् ।

• पूर्वनिमित्तो हि उत्तरशब्दः उत्तरनिमित्तश्च पूर्वशब्दः । भा. १०।३।४।२७.

• पूर्वपक्षवादिना सिद्धान्तवादिनं प्रतिपेद्धव्यं न यत्किञ्चित् । भा.३।१।३।६ पृ. ६६३.

• पूर्वपदार्थक्रम एव प्रयोगविध्यवगतप्रयाताव्यनुपस्थितोत्तरपदार्थक्रमनियमे प्रमाणम् । अत्र पूर्वेत्तुपलक्षणम्, उत्तरेऽपि तौल्यात् । ( प्रावृत्तिकक्रमन्यायोऽयम् ) । ५।१।५।८-१२.

• पूर्वपूर्वस्य प्राबल्यं श्रुतिलिङ्गादीनाम् । ३।३।७।१४.

• पूर्ववान् अनुवादो भवति । ( पूर्वमस्ति अस्य उत्तरस्य, स पूर्ववान् उत्तरः ) । भा. ७।१।३।२ पृ. १५२८.

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये । १।४।११।१७ ॥

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति जातेष्टिः श्रूयते । तत्र 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालः त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन् अन्नाद्यं दधाति, यदेकादशकपालः त्रिष्टुभैवास्मिन् इन्द्रियं दधाति, यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति । यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्वी अन्नाद इन्द्रियावी पशुमान् भवति' इति अष्टाकपालादयः एकादशकपालपर्यन्ताः कपालविकल्पाः श्रूयन्ते । ते अष्टत्वादयः किं गुणविधयः, उतार्थवादाः इति विचारे पूर्वपक्षमाह । अग्न्यादयो गुणाः पूर्ववन्तः प्रापकशास्त्रवन्तः मन्त्रादिना प्राप्ताः । अतः तेषां अग्निहोत्रादिशब्दाः अविधानार्थाः विधानार्था न भवन्ति । प्रकृते समाम्नाये अष्टाकपालादिशब्दसमूहे तत्सामर्थ्यं गुणविधानसामर्थ्यं स्यात् । तस्मान्नार्थवादाः, किन्तु गुणविधयः ।

अत्र सुधा- ये वैश्वदेवादिशब्दाः पूर्ववन्तः वाक्यान्तरेण गुणविशिष्टे कर्मणि पूर्वमुत्पन्ने तद्विरुद्धगुणान्तराभिधायिनः, ते स्ववाक्यस्थेन गुणेन निराकाङ्क्षे कर्मणि तद्विरुद्धगुणान्तराभिधानशक्तेः अविधानार्थाः । अष्टाकपालादिशब्दानां तु समाम्नातत्वात् सहोच्चारणत्वात् एकवाक्यगतत्वात् उत्पत्त्युत्पन्नशिष्टत्वविशेषानवगमात् वैश्वदेवशब्दस्य पूर्वपक्षे सामर्थ्यं तदेषामस्ति, यस्तु उत्पत्तिशिष्टेन उत्पन्नशिष्टस्य बाधस्त्वपेक्षः, सोऽत्र नास्ति इति सूत्रार्थः ।

गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति । १८ ॥

पूर्वपक्षं तुशब्देन निरस्यन् सिद्धान्तमाह । गुणस्य अष्टत्वादेः विधानार्थे वाक्ये स्वीकृते सति अतद्गुणाः वैश्वानरयागस्य गुणा न भवन्ति अष्टत्वादयः । तस्मात् ते प्रयोगे वैश्वानरानुष्ठाने अनर्थकाः स्युः । हि यस्मात् तं पुरोडाशं प्रति यागं प्रति वा अर्थवत्ता सफलता नहि अस्ति । अर्थवादत्वे तु वैश्वानरयागस्य स्तुतिरुपपद्यते । तस्मात् अष्टाकपालादयः अर्थवादाः इति सिद्धान्तः ।

तच्छेषो नोपपद्यते । १९ ॥

तत्राह पूर्वपक्षी । अष्टत्वादिः तच्छेषः तेषां अष्टत्वादीनां अविहितत्वात् शेषः सन्नपि वाक्यशेषो नोपपद्यते इति चेत् ।

अविभागाद् विधानार्थे स्तुत्यर्थेनोपपद्येरन् । २० ॥

अष्टाकपालादिशब्दानां द्वादशकपालवाक्यशेषत्वमाह सिद्धान्ती । विधानार्थे विधीयते इति विधानं कर्मणि ल्युट्, विधिविषयीभूते द्वादशकपाले स्तुत्यर्थेन स्तुतिरूपेण प्रयोजनेन अष्टाकपालादिशब्दा उपपद्येरन् । अविभागात् विभागाभावात् द्वादशसु अष्टादीनामन्तर्भावात् । अतो द्वादशकपालस्य स्तुत्यर्थत्वेन अष्टत्वाद्यवयवस्तुतिः उपपद्यते । सुधायां तु 'तत्सामीप्याच्च शक्नुवन्ति अष्टादिशब्दाः तदेकदेशप्रतीतिं कर्तुम्' इति वार्तिकानुसारेण अविभागशब्दः सामीप्यवाची इत्युक्तम् ।

कारणं स्यादिति चेत् । २१ ॥

तत्राह पुनः पूर्वपक्षी । अष्टत्वादिकं ब्रह्मवर्चसादिफलस्य कारणं स्यात् । 'पूत एव तेजस्वी' इत्यादिना फलमुच्यते । 'गायत्र्यैवैनम्' इत्यादिश्रुतेः फलान्वितो विधिः । 'यदष्टाकपाल' इत्यादिभिः सार्थवादकैः प्रत्येकं विहितानां यथासंख्येन पूत एवेत्यादिभिः फलसम्बन्धः क्रियते । तस्मात् विधयः । इति चेत् ।

आनर्थक्यादकारणं, कर्तुर्हि कारणानि, गुणार्थो हि विधीयते । २२ ॥

अत्र ब्रह्मवर्चसादिफलार्थत्वेन अष्टाकपालादीनां यागानां विधयः स्युः, न तु द्वादशकपालस्य अवयवस्तुतिः इति 'कारणं स्यात्' इति सूत्रेण पूर्वपक्षिणा उक्ते सिद्धान्ती आह । वैश्वानरमित्यारभ्य पशुमान् भवति इत्यन्तमेकं वाक्यम् । अष्टाकपालादिवाक्योक्तान्येव फलानि 'यस्मिन् जाते एतामिष्टिं' इत्यादिना उपसंहृतानि । तस्मात् अष्टत्वादिकं पुत्रगतब्रह्मवर्चसादिफले अकारणं कारणत्वेन विधानानर्हम् । आनर्थक्यात् निष्फलत्वप्रसङ्गात् । कथम् ? कर्तुः पितुः हि यस्मात् तानि कारणानि पूतत्वतेजस्वित्वरूपफलकारणानि भवन्ति । हि तस्मात् अष्टाकपालादिशब्दः न नामधेयम्, न कर्मणि गुणविधिः, नापि फलेषु गुणविधिः, किन्तु गुणार्थः गुणेन स्तुतिरूपेण अर्थः प्रयोजनं यस्य सः वैश्वानरयाग एव विधीयते । तस्मात् अष्टाकपालत्वादिकं अवयवस्तुत्यनुवादः अर्थवादः इति सिद्धान्तः । के.

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये । १।४।१२।१७ ॥

'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन् अन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति । यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव (स) तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति कपालविकल्पाः श्रूयन्ते । तत्र सन्देहः किमष्टत्वादयो गुणविधयः, उतार्थवादा इति । अत्र प्रभाकरेण संगतिल्लेखात् इत्थमधिकरणमुपवर्णितम्— 'यदष्टाकपालो भवति' इत्यादीनां विहितस्मारकत्वाभावात् न मन्त्रत्वेनान्वयः, भावार्थप्रमाणाधिकरण्याभावात्र नामधेयत्वेन, अष्टत्वादिगुणान्वययोग्यभावार्थासंनिधेः नापि गुणविधित्वेन । न च वैश्वानरयागे गुणविधानम्, तस्य द्वादशसंख्याऽवरुद्धत्वेन संख्यान्तरविधानासंभवात् । अष्टत्वादिना विशेषद्वादशसंख्यास्तुत्यसंभवात् नार्थवादत्वेन । इति सर्वथा विधित्वाभावात् अप्रामाण्यमेव 'यदष्टाकपालो भवति' इत्यादीनाम् । इति पूर्वः पक्षः । सिद्धान्तस्तु अर्थवादत्वेन यथाभाष्यमेवेति । तदयुक्तम्, वक्ष्यमाणपूर्वपक्षन्यायेन गुणविधित्वेनैवान्वयसंभवात् । इति यथावार्तिकमेव अधिकरणं प्रस्तूयते । गुणविधिप्रतियोगिकं नामधेयत्वं निरूप्य, प्रसङ्गेनेदानीं गुणविधित्वप्रतियोगिकः अर्थवादत्वं निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यत्र द्रव्यदेवताविशिष्टकर्मविधानात् द्वादशकपालविधानं तावत् व्यवस्थितमेव । नापि तदनन्तरश्रुतानां अष्टाकपालादीनामेकादशकपालपर्यन्तानां अन्या गतिरस्ति । यतो न तावत् नामधेयत्वेन अस्य गतिः, द्वादशकपाले कर्मणि अष्टाकपालनाम्नः प्रवृत्तिनिमित्ता-

भावात् । नापि अर्थवादत्वेन, द्वादशकपालस्य अष्टाकपालत्वेन स्तुत्यसम्भवात् । ननु द्वादशकपाले अष्टाकपालं अन्तर्गतं एव, अतो नामधेयत्वमर्थवादत्वं वा भविष्यतीति । नैवम् । महासंख्यायामेकस्याविरिक्तावान्तरसंख्याया अभावात् । अपेक्षाबुद्धिजन्या हि संख्या । नहि यावत् संख्येयमनपेक्ष्य द्वादशसंख्योत्पद्यते, तावत् एकापेक्षा अष्टसंख्याऽप्युत्पद्यते । ( यत ? ) संख्यान्तरोपत्तौ न संख्यान्तरोत्पत्तिहेतुभूतबुद्ध्यन्तराभावात् संख्यान्तराभावाच्च । नहि संख्या स्वचामानेण संख्येयमवच्छिनत्ति, किन्तु संख्याऽन्तरव्यवच्छेदेनैव, इति न द्वादशसंख्यया अष्टत्वादिसंख्याऽन्तर्गतेति । किन्तु संख्याऽन्तरोत्पत्तियोग्यान्यधिकरणानि परं सन्ति । न चाष्टाकपालादिशब्देन अधिकरणानि अभिधीयन्ते, येन यथाकथञ्चिदपि नामधेयत्वमर्थवादत्वं वा भवेत् ।

अभ्युपेत्यवादेनाप्युच्यते । अस्तु वा महासंख्यासु अवान्तरसंख्या, तथापि ' अष्टासु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपाल ' इति संस्कृतलक्षितोऽयम् । न च द्वादशकपालवाक्ये अष्टत्वस्य द्वादशसंख्यापूरकचतुष्टयनिरपेक्षस्य पुरोडाशसंस्कारार्थकपालविशेषणत्वमवगतम्, किन्तु चतुष्ट्वापेक्षस्यैव तत् । यदपि अष्टाकपालवाक्येऽपि अष्टत्वस्य चतुष्ट्वापेक्षस्यैवोपादानमभिमतम्, न च तत् सम्भवति, सापेक्षत्वेन समासतद्धितयोरुत्पत्त्यसम्भवात् । अथ चतुष्ट्वनिरपेक्षस्यैव द्वादशकपालान्तर्गतस्याष्टत्वस्य पुरोडाशसंस्कारार्थकपालविशेषणत्वमुच्यते, तथा सति द्वादशकपालवाक्ये तथाभूतस्याष्टत्वस्य प्राप्तत्वान्न नामधेयत्वम्, नाप्यर्थवादत्वम्, किं तर्हि ? गुणविधित्वमेव । तदुक्तम् ' यद्यप्यर्थात्मनाऽस्त्येव महासंख्यास्ववान्तरा । अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥ ' ( वा पृ ३४९ ) इति । तथा ' पूर्वज्ञानार्थवाचित्वे नामधेयार्थवादते । अप्राप्तत्वादिहैते स्युर्वैश्वदेवविकल्पवत् ॥ ' ( वा पृ. ३४९ ) इति । न च प्रकृतस्य वैश्वानरयागस्य उत्पत्तिशिष्टद्वादशत्वावरुद्धत्वात् कथं तत्राष्टत्वादिगुणविधानमिति वाच्यम् । यस्मादेकमिदं वाक्यमनेकसंख्याविशिष्टवैश्वानरयागविधायकम् । अत सर्वेषामेवोत्पत्तिशिष्टत्वान् न बलाबले कश्चिद्विशेष । एकवाक्यविहितत्वेऽपि संख्यासम्भवादेव च विकल्पः । यस्यैव तु द्वादशकपालस्य विहितत्वात् पुनर्विधानं न सम्भवति तस्यैवान्ते कीर्तनमनुवादार्थमेवेति । अत पूर्ववन्तो ये विदितपूर्वमर्थमभिदधति ते अविधानार्था,, अतः अष्टत्वादिसमाम्नाये तत्सामर्थ्यं विधानसामर्थ्यमेवेति ।

एवं प्राप्ते, अभिधीयते—

गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थकाः, नहि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥

अयमभिप्रायः । भवेदेव यदि उत्पत्तिशिष्टद्वादशत्वावरुद्धे वैश्वानरयागे अष्टत्वादयो विधातुं शक्येरन् । न च एकवाक्यत्ववशेन सर्वेषामेवोत्पत्तिशिष्टत्वात् न द्वादशत्वेन अवरोध इति वाच्यम् । गुणविधौ सति एकवाक्यत्वसंभवाभावात् । ' अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ' ( २।१।१४।४६ ) इति ह्यत्र एकवाक्यत्वलक्षणम् । न चैकार्थत्वम्, परस्परविरुद्धानां संख्यानामेकस्मिन्नन्वयित्वासम्भवात् । नापि विभज्यमानसाकाङ्क्षत्वम्, परस्परनिरपेक्षत्वादेव अन्योन्याकाङ्क्षाया अभावात् । अतो न तावत् द्वादशकपालवैश्वानरयागे गुणविधानं सम्भवति । नापि विपरिणतवैश्वानरपदानुषङ्गेण ' अष्टाकपालो वैश्वानरो भवति ' इति गुणविशिष्टयागान्तरविधानम्, विपरिणतानुषङ्गदोषादेव । अगत्या हि विपरिणतानुषङ्गः क्रियते । अस्ति चार्थवादत्वेनैव अत्र गतिरिति वक्ष्याम । तदुक्तम् ' वैश्वानरपदं नापि यागाधानानुपद्यते । विभक्त्यन्तरयोगित्वाच्चर्वेऽस्मादनर्थकम् ॥ ' ( वा. पृ. ३५० ) इति । ननु एवं तर्हि प्रकृतं वैश्वानरयागमाश्रित्य यथासंख्यं पूतत्वादिफले अष्टत्वादयो विधीयन्ताम्, ' गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति ' इत्यस्य ( इत्यादे. ) अर्थवादत्वं भविष्यति । नैवम् । ' वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते ' इत्युपक्रम्य अन्ते च ' यद् द्वादशकपालो भवति, यस्मिन् जात एतामिष्टिं निर्वपति ' इत्युपक्रमोपसंहारयो द्वादशकपालकीर्तनात् द्वादशकपालविधानपरमेकमिदं वाक्यमवगम्यते । तत्रापि यदि ' गोदोहनेन पशुकामस्य ' इतिवदष्टाकपालादौ कामनोपबन्धेन फलसम्बन्धः स्फुटतरमवगम्येत, तदा वाक्यभेदः स्वीक्रियेतापि,

किन्तु न चैवमस्ति । अतोऽत्र न गुणफलसंबन्धः, एकवाक्यतासत्त्वात् अर्थवादत्वमेवेति । नच द्वादशकपाले अष्टाकपालादेरभावस्योक्तत्वात् कथमर्थवादत्वमिति वाच्यम् । यतः स्तुतिर्भवन्ती न यथाभूतार्थकीर्तनेनैव भवति, सता असता वाऽर्थेन स्तुत्युपपत्तेः । तत्रापि द्वादशकपालसंस्कृतपुरोडाशस्य महापरिमाणत्वात् अष्टाकपालादिसंस्कृतपुरोडाशसदृशो भागोऽस्ति इति सादृश्यनिबन्धनेयं स्तुतिः, इत्यर्थवादत्वेनैवोपपत्तेर्न गुणविधानं किन्तु अर्थवादत्वमेवेति । प्रयोजनम्, अष्टाकपालादीनां द्वादशकपालेन सह विकल्पेनानुष्ठानं ( पूर्वपक्षे ) सिद्धान्ते तु नित्यं द्वादशकपालेन एवेति । सूत्रे तु गुणस्य तु विधानार्थे अष्टाकपालादिवाक्यानां गुणविधित्वे सति तद्गुणाः यागप्रयोगे अनर्थका भवेयुः । नहि तं यागप्रयोगं प्रति तेषां गुणानामर्थवत्त्वाऽस्ति तस्य द्वादशकपालद्व्यादित्यर्थः । कौस्त.

* पूर्वमरणे क्षीणे दीर्घायुषः ( पशवः ) प्रियकृतश्च भवन्ति । भा. ११३।४।१.

* पूर्वाह्णस्यैव प्रायेण वैदिकव्यापारकालत्वम् । सु. पृ. ११६३.

* पूर्वाह्णच्छायान्यायः । यथा दिनपूर्वार्धच्छाया प्रथमं महती पश्चात् क्षीणा, तथा खलस्य मैत्री ज्ञातव्येति भावः । साहस्री. ३११.

* पूर्वाह्णमध्यंदिनादयः समस्तप्रयोगकालाः । वा. ११३।१।८ पृ. १९७.

* 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वेदिरपकृष्यमाणा हविरभिवासनं नापकर्षति । टुप्. ५।१।१६।२९. * 'पूर्वेद्युरमावास्यायां वेदिं करोति' इदं मत्वर्थस्य अर्थवादः वाक्यस्य । मणि.पृ. ११.

* 'पूषा प्रपिष्टभागः' अत्र द्रव्यदेवतयोर्लक्षणात् भाग. कल्पते । वि. ३।३।२०. * 'पूषा वां विभजतु', 'भगो वा विभजतु', 'अर्यमा वा विभजतु' एषां मन्त्राणां पुरोडाशविभागे विकल्पः न तु समुच्चयः । १२।३।१३।२९.

* पूषाधिकरणम् । पौष्णपेषणाधिकरणम् । ३।३।१३।३४.

* पूषाधिकरणसिद्धान्ताक्षेपपरिहारः । वाक्यपादान्ते ( ३।३।१५।३९-४६ ) 'पूषा प्रपिष्टभागः' इत्यत्र अनारभ्याधीते सिद्धान्तितम् । भज्यते इति भागः इति व्युत्पत्त्या भक्ष्यं स्वीकार्यं वा भागशब्दार्थः । एवञ्च देवताऽधिकरणन्यायेन ( ९।१।४।६-१० ) देवताविग्रहादिपञ्चकनिरासेन भक्षयितृत्वस्वीकर्तृत्वासंभवात् तदुद्देशेन त्यागं भागशब्देन लक्ष्यते । तदुक्तम् 'देवता निष्फला नैव पेषणस्य प्रयोजिका । त्यागानं च यागस्य भागशब्देन विद्यते ॥ मुख्यार्थासंभवाद्यागलिलक्षयिषयाऽत्र हि । श्रूयते भागशब्दोऽयं नानुपादानमत्त्वतः ॥' (शा. ३।३।१५) इति । तत्र चोदयन्ति, केवलपूषोद्देशेन प्रपिष्टता न विधेया चरुादिगत् पूष्णः अव्यभिचाराभावेन अत्यनुपस्थानेन आनर्थक्यापातात् । न च यागमात्रोद्देशेन प्रपिष्टताविधिः, नित्यवत् पूष्णोऽनुवादस्य प्राप्त्यभावेनायोगात् । अतोऽवश्यं यागविशिष्टपूषोद्देशेन पूषविशिष्टयागोद्देशेन वा प्रपिष्टता विधेया, तत्र च विशिष्टानुवाददोषः । तथा न परं स एव किन्तु 'अग्नेः स्विष्टकृत यजति' 'वषट्कर्तुः प्रथमभक्षः' इत्यादाविव एकस्मिन् समासपदे उत्तरपदार्थोद्देशात् पूर्वपदार्थविधेश्च एकप्रसरत्वाभावात् समासविघातोऽपि स्यात् । न च 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादौ 'क्षौमे वसानावग्निमादधीयाताम्' इत्यत्र च यथा सायमनुवादेन वचनानुवादेन च देवताया. क्षौमस्य च विधौ प्रकरणप्राप्तयोः होमाधानयोरनुवादात् विशिष्टानुवाददोषपरिहारः, एवं पूषाक्ये सम्भवति अप्रकरणाधीतत्वात् । तस्मादिह विशिष्टानुवादकृतवाक्यभेदस्य कः परिहार इति । अत्र ब्रूमः । यथा 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इति उपात्तमेव लौहित्यं ऋत्विज उद्दिश्य विधीयते, अन्यथा गैरिकादिना साक्षादेव ऋत्विजां लौहित्यकरणं प्रसज्येत । समासोपात्तविशिष्टार्थविधौ वाक्यभेदश्च नास्ति, लौहित्यमात्रपरश्च विधिर्भवति, 'उष्णीषिणः प्रचरन्ति' इति प्रकृतितः उष्णीषप्राप्तेः । यथा वा 'एक साम तृचे क्रियते स्तोत्रीयम्' इत्यत्रापि स्तोत्रोद्देशेन ऋग्गतमेव त्रित्वं विधीयते, अन्यथा स्तोत्रे एव साक्षात्त्रित्व-

विध्यापत्ते. त्रीणि स्तोत्राणि क्रियेरन् । यत्रापि च स्तोत्राणा-मुत्तमो एकत्वं निरधारि, तथापि आवृत्त्या इव त्रित्व-संख्या मपाद्येत, स्तोत्रावृत्तिश्च न ऋगावृत्तिं विना उप-पद्यते इति ऋगावृत्तिरेव स्यात् न तिस्र ऋचः । तस्मात् यादृशी ऋग्गता त्रित्वसंख्या समासात् प्रतीयते, तादृश्येव विधीयते, मस्त्याधानपरश्च विधिर्भवति । एवं पूषवाक्ये-ऽपि भागः स्याज्य हविरिति यावत् । तत्रश्च समासान्त-र्गतं हविर्गतमेव पेषणं पूषोद्देशेन विधीयते पेषणमात्र-परश्च विधिर्भवति । न च हविर्गतं पेषणं अदेवताभूते पूष्णि हविरभावात् शक्यं कर्तुं इति पूष्णो देवतात्वा-क्षेपेण देवताभूते एव पूष्णि पेषणं विधीयते इति न विशिष्टानुवाददोषः, न च समासवैरूप्यदोषः इति सर्वं सुस्थम् । इति पूषाधिकरणसिद्धान्ताक्षेपपरिहारः । बाल. पृ. १०१ –१०२.

॥ पूषानुमन्त्रणमन्त्रन्यायः ॥

संस्कारकत्वादचोदिते न स्यात् । ३।२।१।२ ॥

भाष्यम्— अथ यदुक्तं पूषानुमन्त्रणादीनामुत्कर्षो न भविष्यतीति, युक्तस्तेषामुत्कर्षः । संस्कारको हि मन्त्रः । सः असति संस्कार्ये अनर्थकः इति यत्रार्थवान् तत्र नाययिष्यते । न च कश्चिद्दोषो भविष्यति ।

वा— अचोदिते पूषादौ दर्शपूर्णमासयोः ये मन्त्रा न विनियुज्यन्ते, युक्तमेव तत् । संस्कारस्य संस्कार्यपरत्वात् लिङ्गेन च प्रकरणबाधात् । कथं पुनः एषामुत्कृष्टाना वैदिकैः कर्मभिर्योगः, कथं वा कृत्स्नसामान्यविनि-योगमन्तरेण लिङ्गं देवताभ्यामेव केवलाभ्या विनियोजक-मिति, तदुच्यते– ' यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी । तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥ ' यागानुमन्त्रणसमाख्या हि एषा यागसंबन्धादृते अनुपपद्यमाना यागसामान्याङ्गत्वं गमयति । ' अतो विशेषचिन्तायामशक्येष्वनियोजनात् । शक्यार्थ-विनियोगाय लिङ्गव्यापारसंभवः ॥ '

कुतूहलम्— ' पूषाऽहं देवयज्यया प्रजया च पशुभिश्च जनिषीय ' इति मन्त्रो हि पूष्णो देवतायाः प्रयाजनलक्षणसंस्कारजनकः । स च यत्र सत्कार्यस्तत्र गच्छति । दर्शपूर्णमासयोस्तु न पूषा देवतात्वेन चोदितः । .....अत. पूषानुमन्त्रणमन्त्रस्य विकृतौ उत्कर्षो युक्तः ।

* उपवीतं सामिधेन्यङ्गं तदवान्तरप्रकरणात् ( तच्च संदंशेन श्रूयते ) इति प्राप्ते, निर्विवृद्ध्यर्थवधानात् नोपवीतस्य सामिधेन्यङ्गता । न च पूषानुमन्त्रणमन्त्र-न्यायः ( ३।२।१।२ ), यत्र हि उत्तरकाल बहूनि वाचनिकाङ्गानि, तत्र एकस्य पूषानुमन्त्रणमन्त्रादेः पर-प्रकरणसन्निकल्पना । यत्र तु विच्छेदकानि बहूनि उत्तर-कालं न वाचनिकाङ्गं स्वल्पम् , तत्र वाचनिकाङ्गस्य एव अनारभ्याधीतन्यायेन अङ्गत्वोपपत्तेः न प्रकरणानुवृत्ति-कल्पना । भाट्ट.३।१।११.

* पूषाद्यनुमन्त्रणानि दर्शपूर्णमासप्रकरणे असंबद्धा-न्यपि न पुरस्तात् प्रकरणं विच्छिन्दन्ति । वा. ३।१।११। २१ पृ. ७३१, * पूषाद्यनुमन्त्रणानि लिङ्गप्रकरणविरोधे उदाहर्तव्यानि । यावत् प्रकरणेन वाक्यत्वं कल्प्यते, तावत् लिङ्गेन श्रुतिः । तथा यावदितरत्र अकृतान्याद्विप्रकाशन-सामर्थ्यम् , तावदिह विनियोगः इति बाधः । ३।३।७। १४ पृ. ८३६, * पूषाद्यनुमन्त्रणेषु अपकर्षः पत्न-मादीना ( देवतादिनाचित्रम्हानाम् ) । ३।२।६।१७.

* यत्तु यत्प्रयत्नरमहृष वत् प्रकृतयशामाधात् अना-रभ्यवादरूपेण सर्वत्र विदधाति । तद्वैतत् पूषाद्यनु-मन्त्रणन्यायेनैव सेत्स्यति इति नार्थोऽधिकरणेन । वा. ३।१।१२।२२ पृ. ७३८.

* पूषादिपदानां गुणत्वाभावात् , तद्व्यतिरेकेण इतरपदाना प्रकृतोपयोग्यर्थप्रतिपादकत्वाभावाच्च विकृतौ उत्कर्षः । भाट्ट. ५।३।५ .

* पूषशब्दः ' अदन्तको हि सः ' इत्यादिवाक्य-शेषेण वैदिकप्रसिद्ध्या चार्थविशेषे रूढः , न तु पुष्णाति इति व्युत्पत्त्या अन्याभिधायी । मीन्या.

* ' पृणीयादिन्नाधमानाय तव्यान् ' । ऋसं. १०। ११७।५ । भोज्यान् पदार्थान् याचमानाय दद्यात् इति विधि. । सु. पृ. ६७३.

* ' पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति ' इत्यनेन ' मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् ' इति सामान्यप्रतिषेधस्य उपसंहारः । बाल. पृ. ३४.

* ' पृथक्त्वेनाभिधानयोर्निवेशः ' ४।४।११। ३४ । अत्रत्यन्यायस्वरूपं तु ' ( दर्शः समुदाय ) द्वित्वानुसारिणो दर्शपूर्णमासशब्दो तद्विषयो भवतः ' इति । वा. २।२।३।३ पृ.४८१ । सुधा– पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वाद्दर्शपूर्णमासशब्दयोः समुदायविषयत्वमिति । पृ ७३२. * ' पृथक्त्वेनाभिधानयोर्निवेश० ' । गमानिर्देशेन फलवत्त्वात् फलवत्त्वस्यैव प्राधान्यापरपर्यायमुख्यलक्षणत्वात् सन्निहितस्य फलवत्कस्य अङ्गत्वकारणभागित्वात् अश्रुतान्यफलान्वयकल्पने च गौरवापत्तेः आधारादीनां अङ्गत्वैव युक्ता इति सूत्रार्थः । सु. पृ. ७२२.

* पृथक्त्वनिमित्ता हि ' अयाज्या वै निगदा ऋचैव यजन्तीति ' व्यपदेशा भवन्ति । भा. २।१।१३। ४५.

**§ पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात् ॥ २।२।७।२१ ॥**

अस्ति वाजपेयः ' वाजपेयेन स्वाराज्यकामो यजेत ' इति । तत्र प्राजापत्याः पशवः ' सप्तदश प्राजापत्यान् पशूनालभते, सप्तदशो वै प्रजापतिः, प्रजापतेराप्त्यै, श्यामास्तूपरा एकरूपा भवन्ति, एवमेव हि प्रजापतिः समृद्ध्यै ' इति । तत्र संदिह्यते किं सप्तदशैतानि कर्माणि, अथवा सप्तदशपशुकमेकमेव कर्म इति । सपरिकरमभ्यासप्रमाणं प्रतिपाद्य इदानीं संख्यानिबन्धनं कर्मभेदो निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसन्धिः— प्राजापत्या नित्यत्र द्वेधा विग्रहवाक्यं प्रतिभाति । प्राजापत्यश्च प्राजापत्यश्चेति तद्धितान्तानामयमेकशेषः । अथ पशुश्च पशुश्च पशुश्च पशवः, प्रजापतिर्देवता एषां ताः प्राजापत्या इति कृतैकशेषाणां प्रजापतिदेवतासम्बन्धः । तदुक्तम् ' किं न्वयं तद्धितान्तानामेकशेषः कृतो भवेत् । किं वा कृतैकशेषाणां पश्चात्तद्धितसंगतिः ॥ ' इति । ( वा. २।२।७।२१ पृ. ५२३ ) । तत्र कृतैकशेषाणामेव तद्धितसंगतिरिति युक्तम् । येन हि तद्धितान्तस्यैकशेषः क्रियते, तेन प्रजापतिपशुरूपयोः प्रकृतिप्रत्ययार्थयोर्द्वयोरेव करणीयः, न च तत्र प्रमाणमस्ति । बहुवचनं हि प्रमाणमेकशेषे । तच्च विशेष्यभूतप्रत्ययार्थगतत्वेन प्रत्यक्षमुपलभ्यते, न तु विशेषणीभूतप्रकृत्यर्थगतम् । तेन प्रत्ययार्थभूतानां पशूनामेकशेषः प्रतीयते इति सप्तदशानां पशूनां एकप्रजापतिदेवतासम्बन्धात् सप्तदशपशुद्रव्यकमेकं कर्मेति । तदुक्तम्– ' प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते । तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेत् ॥ ' इति । ( वा. २।२।७।२१ पृ. ५२३ ) । एवं च सति कर्मैकत्वात् कल्पनालाघवं भवति । ननु एकयागपरत्वे अतिदेशात् एकदैव एकादशावदानगणः प्राप्यते । तस्य च सप्तदशसु पशुषु यदि एकत्र अवदानगणस्य सम्बन्धः, तदा पशुषु न स्यात् । अथ भिन्नभिन्नस्य, तदा षोडशसु पशुषु न स्यादिति कथमेककर्मत्वम् । नैवम् । एवं हि मन्यते, नायं साक्षात् यागधर्मः, किन्तु यागसाधनभूतपशुधर्मोऽयं पशुद्वारेण यागोपकारकः । तदत्र यागेनापि स्वसाधनीभूतपशुद्वारेण आकाङ्क्ष्यमाणः प्रतिपशु भेदेनैव अवदानगणः सम्बध्यते इति सप्तदशपशुद्रव्यकः एक एव याग इति । एवं प्राप्ते, अभिधीयते । भवेदेव यदि कृतैकशेषाणां तद्धितसम्बन्धो भवेत् । किं तर्हि ? तद्धितान्तानामेवायमेकशेषः । न च बहुवचनसम्बन्धात् प्रत्ययार्थस्य पशोरेव एकशेषो न प्रकृत्यर्थस्य प्रजापतेः, बहुवचनसम्बन्धाभावादिति वाच्यम् । यतो बहुवचनसम्बन्धयोग्यस्य हि तदभावेन एकार्थपरत्वाभावं गमयति । न चोपसर्जनभूतायाः प्रकृतेः बहुवचनसम्बन्धयोग्यता समस्ति । तेनात्र बहुवचनसम्बन्धाभावस्य अनिर्णायकत्वात् अयमत्र संदेहः किं कृत्स्नस्यैव प्राजापत्यशब्दस्यायमेकशेषः, अथवा प्रत्ययार्थभूतपशुशब्दस्य इति । तत्र वाक्यशेषगतप्रकृतिशब्दवशादेव निर्णयो भवति । प्रकृतौ हि एकपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वमेवावगतम् । तदत्र प्रत्येकं सप्तदशपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वे सति न समवतीति प्रतिपशु यागभेदोऽवगम्यते । स च तद्धितान्तानामेकशेषपक्षे भवतीति तद्धितान्तानामेकशेषः इति निर्णीयते । यथोक्तम्- पशुधर्मोऽयमेकादशावदानगणो न यागधर्मः । स च यागैकत्वे सति अतिदेशात् प्रतिपशु सम्बध्यते । तदयुक्तम्, तत्र एकादशावदानगणशब्दे नैकादशावदानतिक्रियाणो-

ऽभिप्रेत. । किं तर्हि । अवदीयते इति व्युत्पत्त्या एकादशावदेयप्रदेयद्रव्यगणः । न चासौ पशुधर्मः, पशुसंस्कारत्वाभावात्, किन्तु यागसाधनत्वात् यागधर्मः । अतश्च एकयागत्वे सति एकपशुसम्बन्धैकादशावदेयगणसम्बन्धः, न तु एकपशुसम्बन्धः । तथा सति एकपशुगतस्य एकादशावदानगणस्य एकयागसाधनत्वप्रतिपादकातिदेशबाधप्रसङ्गात् । तेन सप्तदशपशूनां यागसाधनत्वसंपत्तये सप्तदशैव एते यागा इति सिद्धम् ।

एतत्तु भाष्यकारेण द्रव्यगताऽपि सङ्ख्या कर्मभेदिका इति प्रतिपादयितुमुक्तम् । कर्मगतसङ्ख्या सकृत् श्रुतात् आख्यातपदात् एकभावनाभिधानात् कृतार्था, न भावनाभेदमापादयतीति भावनाभेदे प्रमाणाभावात् एकैव भावना विधीयते । ननु होमभेदादेव भावनाभेदो भविष्यति । होमभेदश्च 'तिस्र आहुतीः' इति पृथक्निवेशित्वसङ्ख्यासम्बन्धादेव प्रतीयते । तत्कथं भावनैकत्वमिति ? नैवम्, प्रथमं तावत् स्वपदे एकैव होमभावना प्रतीयते । पश्चात्तु पदान्तरसम्बन्धावगम्यमान' सङ्ख्याभेदः प्रथमावगतैकत्वसङ्ख्याविरोधेन 'एकादश प्रयाजान् यजति' इतिवत् अभ्यासेनैव उपपन्नत्वान्न भावनास्वरूपभेदमापादयितुमलमित्येकैव भावनेति । एवं प्राप्ते, अभिधीयते । यद्येवं यदि उत्पत्तिगतेयं सङ्ख्या न भवेत् । तथाहि, 'तिस्र आहुतीर्जुहोति' इत्येतेन वाक्येन त्रित्वविशिष्टो होमो विधीयते । न तु विहिते होमे प्रत्ययात् सङ्ख्यावत् वाक्यान्तरेण अत्र सङ्ख्याविधानम् । याऽपि जुहोतीतिपदात् एकत्वसङ्ख्या प्रतीयते, साऽपि न होमस्य, अपि तर्हि कर्तुरिति कर्तृसमानाधिकरणे त्यास्यति । तेन उत्पत्तिशिष्टत्रित्वसम्बन्धात्त्रयो होमाः । तत्र तेषां भेदात् तत्तदनुबन्धास्तिस्रो भावना विधीयन्ते इति सिद्धम् ।

प्रयोजनम्— पूर्वपक्षे सप्तदशपशूनामेकयागसाधनत्वे असत्त्वात् साधनाभावस्य पदार्थानुष्ठानसमापने सप्तदशसु पशुषु धर्मानुष्ठानम् । तद्वत् सस्कृते एकस्मिन् पशौ विनष्टे व्यागाङ्गसाधनत्वस्यापि नष्टत्वात् पश्वन्तरमुपादाय प्रथमतः पशुधर्मः कर्तव्य । सिद्धान्ते तु यागभेदे प्रतिपशु साधनताभेदात् एकस्मिन् पशौ नष्टे तन्मात्रस्यैव धर्मावृत्तिर्नेतरेषामिति ।

सूत्रं तु— पृथक्त्वेन सह संख्यया एकार्थनिवेशात् उत्पत्तिशिष्टया सङ्ख्यया कर्मभेदो भवेदित्यर्थः ।

तौता

पृथक्त्वनिवेशात् संख्यया कर्मभेदः स्यात् । २।२।७।२१॥

शब्दान्तरेण अभ्यासेन च कर्मभेद उक्तः । इदानीं सङ्ख्यया कर्मभेद उच्यते । 'सप्तदश प्राजापत्यान् पशूनालभते' इति वाजपेये श्रुतम् । तत्र किं सप्तदश एतानि कर्माणि, उत सप्तदशगुणकमेकं कर्मेति विचारे सिद्धान्तमाह । संख्यया कर्मणां भेदः स्यात् । संख्यया सह पृथक्त्वस्य निवेशात्पृथक्त्वैकार्थनिवेशात् । यत्र उत्पत्तिवाक्ये 'तिस्र आहुतीर्जुहोति' इत्यादौ कर्मसमानाधिकरणा, देवताविशिष्टद्रव्यसमानाधिकरणा 'सप्तदश प्राजापत्यान् पशून्' इत्यादौ वा संख्या श्रूयते, तत्र 'स्वाश्रयसमवेतत्वसंबन्धेन स्वाश्रयावधिकं पृथक्त्वम्' इति नियमात् कर्मणो भेदः स्यात् । तस्मात् सप्तदश यागा एते इति सिद्धान्तः । के.

* पृथक्त्वनिवेशिनी हि सङ्ख्या असति पृथक्त्वे अभ्यासेन कल्प्येत । यावति असंभवो भेदस्य तावत्येव अभ्यस्येत । मा. ९।३।१।२.

* 'पृथक्त्वनिवेशित्वात् सङ्ख्यया कर्मभेदः स्यात्' इति वक्ष्यमाणन्यायेन सङ्ख्यया कर्मभेदः निश्चितः । कु. २।२।२।२ पृ १५९. * यदि 'पृष्ठैः स्तुवते' इत्युत्पत्तिः स्यात् तत उत्पत्तिगतया बहुत्वसंख्यया बहूनि पृष्ठानि स्युः । शा. ९।२।१५ । 'पृथक्त्वनिवेशित्वात्' इति न्यायेन इति भावः । सोम. ९।२।१५.

* 'पृथिव्यै स्वाहा' इति पृथिव्यै इत्यनेन देवतोच्यते । तदयं 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इतीदं आम्नानम् । तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम् । टुप्. १०।८।१०।२०.

* 'न पृथिव्यामग्निश्चेतव्य.' इति पृथिवीनिषेधः हिरण्यनिधानस्तुत्यर्थः, न प्रतिषेधमात्रफल. । या. ८।२।११।१८.

* ‘पृषदाज्येन अनुयाजान् यजति’ इति पृषत्ता गुणो विधीयमानः अनुयाजं भिनत्ति। भा. १०।६।१७।६४, * पृषदाज्येनापि इज्यमाना अनुयाजाः आज्येनेष्टा भवन्ति। नहि पृषत्त्वं आज्यत्वं नाशयति। १२।१।१।४, * पृषदाज्येन चातुर्मास्येषु अनुयाजान् यजति। १०।४।२५।५०, * पृषदाज्येन वनस्पतिं यजति पशौ। १०।४।१६।३२, * ‘पृषदाज्ये समुच्चयात् ग्रहणस्य गुणार्थत्वम्।’ पृषत्त्वसम्पादनार्थं दधि। आज्येन च समुच्चयः। १०।७।१३।६१.

☸ पृषदाज्याधिकरणम्। चातुर्मास्येषु अनुयाजीयदेवतावाहनार्थावाहननिगमेषु आज्यपशब्दस्यैव प्रयोगः न पृषदाज्यपशब्दस्य॥

**उभयपानात् पृषदाज्ये दध्नः स्यादुपलक्षणं, निगमेषु पातव्यस्योपलक्षणात्। १०।४।२५।५१॥**

भाष्यम्— सन्ति चातुर्मास्यानि, ‘चातुर्मास्यैः स्वर्गकामो यजेत’ इति। तत्रानुयाजान् प्रकृत्य समामनन्ति ‘पृषदाज्येनानुयाजान् यजति’ इति। अस्ति तु प्रकृतावावाहनम् ‘देवानाज्यपानावह’ इति। तदिह चोदकेन प्राप्तम्। तत्र संशयः, किमविकारेणाऽऽवाहनं कर्तव्यमुत ऊहेनेति। यदा ऊहेन, तदा किमाज्यपान् दधिपानिति कर्तव्यमुत दधिपानिति, अथवा पृषदाज्यपानिति। किं प्राप्तम्? दध्नोऽप्युपलक्षणं स्यादाज्यस्यापि। कस्मात्? उभयपानात्। उभयं हि तत् देवतामुद्दिश्य त्यज्यते। यच्च त्यज्यते, तत् पीयते इति मन्त्रेणोच्यते। यच्च पातव्यं तदुपलक्षितं मन्त्रे आज्यपानिति। इह आज्यस्य दधिसर्पिषी श्रूयेते ‘अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननम्, मिथुनमेवैतत्प्रजननं क्रियते’ इति। तदपि दधि आज्येनोच्यते। तस्मादुभयमप्युपलक्षयितव्यम्, दधि च आज्यं चेति।

**न वा, परार्थत्वाद् यज्ञपतिवत्। ५२॥**

भाष्यम्— न चैतदेवं दध्युपलक्षयितव्यमिति। कुतः? परार्थत्वात्। परार्थं हि पातव्यं इह पानेनोपलक्षणम्। तत्र आज्येन चेदुपलक्ष्यते, कृतोऽर्थ इति न पुनर्दध्नोपलक्षयितव्यम्। यज्ञपतिवत्। यथा ‘य इमं यज्ञमानं ये च यज्ञपतिं वर्धान्’ इति। यज्ञपतिर्मनुष्याणां होतॄणां प्रशंसार्थः, न स्वार्थं कीर्त्यते इत्यविकारेण प्रयुज्यते। न सर्वान् यजमानान् प्रति आदरः। एवमिहापि पातव्यं पानोपलक्षणार्थं प्रयुज्यते, न स्वार्थम्। सर्वेणैवापि येनकेनचिदुपलक्षिताः पातार इति कृत्वा, न द्वितीयः प्रयोक्तव्य इति।

**स्याद् वाऽऽवाहनस्य तादर्थ्यात्। ५३॥**

भाष्यम्— स्याद्दध्न उपलक्षणम्। न यज्ञपतिवत् स्यात्। यज्ञपतिशब्दो हि न स्वार्थमुच्चार्यते, इडास्तुत्यर्थेन स उच्यते। आवाहनं पुनः स्मरणार्थम्। तत्र पाताऽपि स्मर्तव्यः, देयमपि। तस्माच्चोदकानुग्रहाय देयान्तरमुपलक्षयितव्यमिति।

**न वा, संस्कारशब्दत्वात्। ५४॥**

भाष्यम्— न वा दध्युपलक्षयितव्यम्। संस्कारशब्दोऽत्र विद्यते आज्यस्य, ‘पृषदाज्येनानुयाजान् यजति’ इति। पृषदाज्येन चित्रेणेत्यर्थः। संस्कारेण हि मिश्रणे संस्कृतं चित्रमाज्यं भवति। तां च चित्रतामस्य प्रत्यक्षतो दध्युत्पादयति। तस्मात् परार्थं चित्रतासंजननार्थं न पातव्यम्। अतो नोपलक्षयितव्यमिति।

**स्याद् वा, द्रव्याभिधानात्। ५५॥**

भाष्यम्— स्याद्वा दध्युपलक्षणम्। द्रव्यं हि दधि तुल्यमाज्येन प्रधानभूतमुपदिश्यते इत्युक्तमस्माभिः। ‘अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननम्, मिथुनमेवैतत्प्रजननं क्रियते’ इति। किम्? पृषदाज्यं गृह्यते, सर्पिश्चैव दधि चेति। सर्पिषा दध्ना च यागः कर्तव्य इत्यर्थः। पृषदाज्यमिति न द्रव्यान्तरमुच्यते। तस्मात् दधि अप्युपलक्षयितव्यमिति।

**दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात्। ५६॥**

भाष्यम्— न चैतदस्ति तुल्यं दधि आज्येन प्रधानभूतमिति। ग्रहणे हि तत् तुल्यमाज्येन, न यागे। यागो हि आज्येन विशेष्य श्रूयते। तस्मात् श्रुतेराज्यप्रधानत्वात् यागं प्रति गुणभूतं दधि स्यात्। नहि ग्रहणे श्रूयमाणं यागे श्रुतं भवतीति। दधिग्रहणे श्रूयमाणं न यागार्थं भवति। तत्र श्रुत्या आज्यं करणम्, दधि

* पृष्ठं ज्योतिष्टोमे एकेन साम्ना साधितम् । विकृतौ ( गवामयने पृष्ठ्ये षडहे ) अपि एकेन साधितयं चोदकानुग्रहाय । भा. १०।६।२।५, * बृहद्रथंतरे पृष्ठे ( प्रथमाहद्विवचनम् ) प्रकरणस्य तुल्यत्वात् समानधर्मिणी । १०।५।२४।७९. * पृष्ठानि इति 'पृष्ठैः स्तुवते' इतिविहितकर्मनामधेयं अवयवप्रसिद्ध्या, स्पर्शनात् पृष्ठानि । भा. १।४।२।१ । 'तासां वायुः पृष्ठे व्यवर्तत' इति यस्मादपां पृष्ठे स्पृष्टे रथंतरादीनि जातानि, तस्मात्तानि पृष्ठानि स्पर्शनादात् विज्ञानम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । भा. पृ. ३११-३२२. * पृष्ठानि माहेन्द्रस्तोत्रादीनि चत्वार्येव ज्योतिष्टोमे, न सर्वाणि षडपि । भा. ७।३।३।६. * पृष्ठानि विश्वजिति पवमाने रथंतरम्, आर्भवे बृहत्, वैरूपं होतुः, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य । ७।३।३।८, * 'पृष्ठैरुपतिष्ठते' इति वचने श्रूयते । तत्र पृथिवीत्वमुद्धादिप्रस्तावादयो हिंकारादयो वा पृष्ठधर्मा न कर्तव्याः, किंतु तैर्मन्त्रैरुपस्थानं कर्तव्यम् । पृष्ठशब्दोऽत्र तदीयमन्त्रपरः । ७।३।१४।२५-२६. * 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दः ऋग्वचनः । ७।३।१४. मीको. पृ. ३८ 'अग्निचयने पृष्ठैरुपतिष्ठते' इत्यत्र द्रष्टव्यम् । * 'पृष्ठैरुपतिष्ठते' । ऐन्द्राधिकरणन्यायेनतुभोगन्यायेन लक्षणया अभिधानमेव मन्त्रामिकर्मकं धातुना विधीयते तेनैव पृष्ठसदर्थस्य करणत्वम् । ( कौस्तुभोक्तेन 'लक्षणया अभिधानमेव' इत्यादिना अनतिप्रन्थेन प्रतिपादितम् । उदाहरणान्तरलाभात्तु वर्णानुपूर्वीभेदमानम् । इति न कौस्तुभदर्शने मनः खेदनीयम् । के.) । भाट्ट. ७।३।१२. * 'पृष्ठैः स्तुवते' इत्युपक्रम्य षट् ऋच आम्नाताः । 'अभि त्वा शूर नोनुमः' इति आद्या, तत्र रथंतरं साम । 'त्वामिद्धि हवामहे' इति द्वितीया, तत्र बृहत् । 'कया नश्चित्र आभुवत्' इति तृतीया, तत्र वामदेव्यम् । 'तं वो दस्ममृतीषहम्' इति चतुर्थी, तत्र नौधसम् । 'अभि प्र वः सुराधसम्' इति पञ्चमी, तत्र श्यैतम् । 'तरोभिर्वो विदद्वसुम्' इति षष्ठी, तत्र कालेयम् । तत्र बृहद्रथंतरयोर्विकल्पः । एवं नौधसश्यैतयोरपि विकल्पः । स च रथंतरपक्षे नौधसम्, बृहत्पक्षे श्यैतं इति व्यवस्थितः । तदेव ज्योतिष्टोमे नियतानि चत्वारि पृष्ठस्तोत्राणि । 'षडहानि पृष्ठानि' ( प्रकृतौ ), 'एकत्रिंशं होतुः पृष्ठम्' 'त्रिणवं मैत्रावरुणस्य' 'सप्तदशं ब्राह्मणाच्छंसिनः' 'पञ्चदशमच्छावाकस्य' (विकृतौ) । कौ. १।४।३।२ पृ. १८९-१९०. * 'पृष्ठैः स्तुवते' इति स्तोत्रं प्रधानकर्म, न गुणकर्म । भा. २।१।५।१३-२९, * पृष्ठस्य एकस्य पृष्ठकार्ये निवेशः अन्येषां परिशामकार्ये । विश्वजिति सर्वपृष्ठे । १०।६।५।१३-१४, * पृष्ठानां षण्णां षाडहिकानां विश्वजिति सर्वपृष्ठेऽतिदेशः । ७।१।३।६-११. * पृष्ठं ( होतुः ) बृहतो नियमः क्वचित् विकृतौ । भा. १०।७।१६।५१-५७. 'वाजपेयादिविकृतौ वैकल्पिकानां' इत्यत्र द्रष्टव्यम् ।

※ पृष्ठार्थेऽन्यद् रथंतरात् तद्योनिपूर्वत्वात् ऋचां प्रविभक्तत्वात् । १०।४।२२।४४ ॥

वैरूपस्तोमे 'कण्वरथंतरं पृष्ठं भवति' इति श्रूयते । तत् कण्वरथंतरं कस्यां योनौ गेयं इति विचारे पूर्वपक्षमाह । पृष्ठार्थे पृष्ठस्तोत्रार्थं यत् रथंतरादन्यत् कण्वरथंतरं श्रूयते तत् 'अभि त्वा शूर' इति रथंतरयोनौ स्यात्, तद्योनिपूर्वकत्वात् ज्योतिष्टोमे या रथंतरयोनिर्भवति सैव योनिः कण्वरथंतरस्य इति तद्योनिपूर्वकत्वं कण्वरथंतरस्य । ननु वैरूपस्तोमस्य ज्योतिष्टोमपूर्वकत्वात् बृहतो योनावपि कण्वरथंतरं स्यात् । न । बृहत्साम्नः ऋक्स्य. कण्वरथंतरस्य ऋचां प्रविभक्तत्वात् भिन्नत्वात् । कण्वरथंतरे रथंतरशब्दो धर्मनिमित्तः । तस्मात् वैरूपस्तोमे कण्वरथंतरं साम रथंतरयोनौ गेयं इति पूर्वः पक्षः ।

स्वयोनौ वा, सर्वाख्यत्वात् । ४५ ॥

पूर्वपक्षं सूत्रस्थेन वाशब्देन परिहरन् सिद्धान्तमाह । कण्वरथंतरं स्वयोनौ गेयम् । ( पुनानः सोमधारया इत्यस्यां इति कु. ) सर्वाख्यत्वात्, सर्वविशेषणविशिष्टस्य हि कण्वरथंतरशब्दो वाचकः । प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्य सर्वस्य सस्तोभस्वरकालाभ्याससस्य कण्वरथंतरमित्याख्या भवति । तत्र योनिरपि विशेषणम् । तस्मात् स्वयोनौ गेयम् । इति सिद्धान्तः ।

यूपवदिति चेत् ॥ ४६ ॥

कण्वरथंतरे रथंतरशब्दः रथंतरधर्मेषु सत्सु यूपवत् उपपद्यते । यथा यस्मिन् काष्ठे यूपधर्माः सन्ति तस्मिन् यूपशब्दः प्रवर्तते तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, कर्मसंयोगात् ॥ ४७ ॥

कण्वरथंतरशब्दः यूपशब्दवत् कर्मसंयोगात् न प्रवृत्तः । यूपशब्दो हि संस्कारसंयोगात् प्रवृत्तः । कण्वरथंतरशब्दस्तु न तथा किन्तु रूढोऽयं शब्दः । अतः स्तयोनौ कण्वरथंतरं गातव्यमिति सिद्धान्तः । के.

● 'उक्थ्यो वैरूपसामा, षोडशी वैराजसामा' इत्यादिषु 'पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात्' (१०।६।६।२६) इत्यनेन न्यायेन वैरूपादेः पृष्ठसाधनत्वचोदनार्थत्वेन साम्नः पृष्ठलक्षणार्थत्वात् तृतीयाख्या सामान्तरापेक्षा । सु. पृ. ८९४.

● पृष्ठास्फोटः । धरणिगतानेकद्रव्यैकनिरीक्षणे पुनः पुनः पृष्ठं कुटिलीक्रियते इति तत्सामान्येन पृष्ठास्फोटाभिधानम् । (साहसया तु पृष्ठास्फोटशब्दः, अर्थोऽपि भिन्नः) । शा. २।१।७।१२. ● पृष्ठास्फोटः पृष्ठस्य आस्फोटः यत्रत्ये अस्मिन् व्यापारे स पृष्ठास्फोटः । सु. पृ. ६५०.

● कः पुनः पृष्ठदेशः ? ऊर्ध्वं माध्यंदिनपवमानात् प्राक् मैत्रावरुणशस्त्रात्, इदमन्तरालं पृष्ठदेशः । भा. १०।६।५।१३.

● पृष्ठधर्माः सामान्यधर्मा हिंकारादयः, विशेषधर्माः 'रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्, बृहति समुद्रम्' इत्येवमादयः । भा. ७।३।३।१५.

● पृष्ठप्रतिपदोः उपसद्यभिषवयोः (उपाम्बे, प्रसुतो यावो) प्राकृतयोः नैमित्तिकयोः सत्त्वादिविकृतौ नानुष्ठानम् । १०।८।१६।५९-६१.

● पृष्ठशब्दः अभिप्लवगतो रथंतरादिसामोपेतमन्त्रोपलक्षकः, न सोमधर्मान् अतिदिशति । 'पृष्ठैरुपतिष्ठते' इति । ७।३।१४. ● पृष्ठशब्दः ज्योतिष्टोमे माध्यंदिनसवनगतस्तोत्रविशेषाणां नामधेयम् । वि. १।४।२. ● पृष्ठशब्दः 'पृष्ठैरुपतिष्ठते' इति ऋग्द्वयवाचकः । ७।३।१४. ● पृष्ठशब्दः सोमपर एव, न सामपरः । सोम. ७।३।३. ● पृष्ठशब्दः स्तोत्रविशेषवाचकः । प्रगीतमन्त्रसाध्या स्तुतिः स्तोत्रम् । 'पृष्ठैः स्तुवते' इत्यत्र । वि. २।१।५. ● सप्तदशानि (सप्तदशस्तोमकानि) पृष्ठानि इति पृष्ठशब्दः नामधेयम्, न गुणविधिः । भा. १।४।२।३.

● पृष्ठशमनीयः ज्योतिष्टोमविकृतिभूतः 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' । अयं न सत्राङ्गम् । तत्र सहस्रदक्षिणाऽपि लोपं नार्हति । १०।२।१२. ● पृष्ठशमनीयः (उदवसानीयः) सत्रसमाप्त्युत्तरं सत्रिणामेकैकेनैव ऋत्विगन्तरसंपादनेन कर्तव्यः, न सहत्य । १०।२।११-१४।४१-४३. ● पृष्ठशमनीयेन यागेन सत्रसमाप्तिः । सु. पृ. १५३९. ● पृष्ठशमनीये ऋत्विग्भ्यो दक्षिणादानं परिक्रयार्थम् । १०।२।१२।४०-४१. ● पृष्ठशमनीये कर्तृत्वं न सत्रिणामेव यजमानत्वेन, किन्तु अयजमाना ऋत्विजः कर्तारः । तत्र सत्रिणामपि ऋत्विक्त्वेन केवलेन परिक्रये न दोषः । के. (वि. १०।२।१३.)

ॐ पृष्ठशमनीये सत्रिभ्योऽन्ये ऋत्विजः, न तु त एव ॥

तत्रान्यानृत्विजो वृणीरन् ॥१०।२।१४।४३॥

भाष्यम्— अन्तरा चिन्तान्तरस्य सूत्रं तावद् वर्णयिष्यामः । अस्मिन्नेवोदाहरणे एषोऽर्थः सांशयिकः किं त एव सत्रिण ऋत्विजः, उतान्ये वा वरीतव्या इति । किं प्राप्तम् ? त एव । कुतः ? समानकर्तृकता हि गम्यते 'उदवसाय यजेरन्' इति । ये एव उदवसातारः, त एव यष्टार इति भवति प्रत्ययः । यथैव वचनप्रामाण्यात् चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यान् ऋत्विजो बाधित्वा वचनप्रामाण्यात् त एव भवितुमर्हन्तीति । एवं प्राप्ते, ब्रूमः । तत्रान्यान् ऋत्विजो वृणीरन् इति । नहि पृष्ठशमनीये ये सत्रादुदवसातारः, ते कर्तारो विधीयन्ते । न तेषामुपादेयत्वेन चोदनेत्युक्तम् । न चाविहितमङ्गं भवति । न चाङ्गे हीने निर्गुणता काचित् भवति । सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः । अपि चात्र यावति कर्मणि सत्रं क्रियमाणम्, तावति ते एव कर्तारः ।

तदेतत् उपग्रहविशेषादवगम्यते । न च ऋत्विजः प्रति यागस्य कर्त्रभिप्रायं क्रियाफलम् । तस्मात् नार्त्विज्ये ते एव कर्तारः । प्रधानयागे तावत् कर्तृनवगच्छामः । ऋत्विजः पुनरन्ये वरीतव्या इति ।

टुप्— ये एव उदवसाने कर्तारः, ते एव उदवसानीये विधीयन्ते । (यदि तु अन्येऽपि कर्तारः पृष्ठशमनीयस्य भवेयुः, ततः) सामानाधिकरण्यं न स्यात् । (इति प्राप्ते,) उच्यते । प्रधानयागे हि (समानकर्तृकत्व–) वचन (भवति 'यजेरन्' इति) नहि विशेषणं श्रूयते साङ्गत्वे पृष्ठशमनीयः कार्यः इति । वचनाभावात् किमिति चोदकप्राप्तो भवतीति । प्रधानकर्तृत्वेऽपि (प्रधानभूतनजमान यागकर्तृत्वेऽपि) सामानाधिकरण्यमुपपद्यते एव । (तस्मात् अन्ये ऋत्विजो वरीतव्याः इति ।)

वि— 'तदर्त्विजः सत्रिणः किमन्ये वा स्युर्, स्वर्तुत्विजः । त एव, यद्भेदेऽपि कीतत्वाद्दत्विजः परे ॥'

भाट्ट— अनङ्गत्वे अङ्गत्वेऽपि वा उदवसानसमानकर्तृकत्वानुरोधात् यजमानैरेव आर्त्विज्यं कर्तव्यम् । न च तस्य प्रधानमात्राभिप्रायत्वेन उपपत्तिः, साङ्गे समानकर्तृकत्वश्रवणेन 'अप्सु अवभृथेन चरन्ति' इत्यादौ अद्भिः आहवनीयादेरिव औत्सेदिकेन यजमानकर्तृकत्वेन अङ्गेष्वपि ऋत्विक्कर्तृकत्वबाधात्, दक्षिणादानस्य अदृष्टार्थत्वेनापि उपपत्तेश्च । इति प्राप्ते, प्रयोजककर्तृत्वेनापि प्रकृताविव यजमानकर्तृकत्वोपपत्तेः अङ्गत्वे अनङ्गत्वेऽपि वा सौत्रामण्यामिव अतिदेशप्राप्तऋत्विग्बाधे प्रमाणाभाव । एत च दक्षिणाश्रुतिः आनुरूप्येन उपपद्यते । १०।२।१३.

मण्डन— 'ततोऽन्ये स्युरिहर्त्विजः ।'

शंकर— '(तत्राधिकारः प्रत्येकं–) चेत् सहत्वं तदर्त्विजः ।'

* 'सत्राद्दुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र हि उदवसानसमानकर्तृकत्वश्रवणेन पृष्ठशमनीये वहुत्वादेः प्रातत्वात् युक्ता साहित्यविवक्षा । भाट्ट.५।२।२.

पृष्ठशमनीयन्यायः । उदवसानीयस्य ऋत्विग्-न्तरसम्पादनेन प्रत्येकं कर्तृत्वम् ॥

तेषां तु वचनाद् द्वियज्ञवत् सहप्रयोगः स्यात् । १०।२।१३।४२॥

भाष्यम्— इदमेवोदाहरणम् 'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति । तत्रैषोऽर्थः समधिगतः न सत्राङ्गं पृष्ठशमनीयः इति । अथेदानीमिदं सन्दिह्यते किं संहत्य तैस्तत् कर्तव्यम्, उत एकैकेनेति । किं प्राप्तम्? संहत्येति । कुतः? उपादेयत्वेन यागे चोद्यमानस्य बहुत्वस्य श्रवणात् । स चेदेकैकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्यात् । द्वियज्ञवत् । यथा 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति । यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते, एवमपि यजेयातामिति यागः उपादेयत्वेन । यागे चैतत् कर्तृद्वित्वं श्रूयते, यजेयातामिति । तद्वत् पृष्ठशमनीयेन यजेरन्निति । तस्मात् संहत्य पृष्ठशमनीयं प्रयुञ्जीरन्निति । एवं स्थित तावत् अपर्यवसितम् ।

टुप्— (पृष्ठशमनीयेन) यजेरन् इत्युपादेयत्वेन श्रुतत्वात् बहुवचनस्य विवक्षा । ननु (इतरेतर–) निरपेक्षाः उदवसाने (कर्तारः) । तथैव स्थितानां च (उदवसानीय–) यागो विधीयते (अतः) स (अपि परस्पर–) निरपेक्षाणामेव । सत्यम् । यद्यपि उदवसाने निरपेक्षाः, तथापि यागे सापेक्षाः (भवन्ति) द्वियज्ञवत् । (यथा) राजपुरोहितौ फलं प्रति प्रधानभूतौ (परस्परनिरपेक्षौ) यागं प्रति (तु) गुणभूतौ (सापेक्षौ)। कथम्? (उत्तरम्–) यागो हि विधीयमानः कर्तारमाकाङ्क्षति । तत्र (यागे) संख्या श्रूयते स्वपदगता (यजेयाताम् इति । ततश्च सापेक्षाः कर्तारः ।) सैव (संख्या यागाङ्गत्वेन) विधीयते (न तु कर्ता । यथ तर्हि अनुज्ञनमत आह–) कर्तृगामिनि (उपग्रहविशेषात्) क्रियाफले, अर्थात् क्रिया करिष्यति । ईदृश्यामवस्थायां द्विवचनं विवक्ष्यते । यदि च राजपुरोहितौ द्विवचनं विशेषणार्थमुच्चार्येयाताम्, तथा सति यागं प्रधानभूतं न कश्चित् कुर्यात् । अतस्तद्योगः (अङ्गत्वेन) विधीयते, यथा 'मन्त्रैः स्नायात्' इति । अपिच पदैकवाक्यता

( अवसाय इति पदमनपेक्ष्य यजेरन् इति पदालोचन-वेलायाम् ) बहुवचनं विधीयते । तादृशं च पदान्तरेण गंस्यते । तस्मात् विवक्षितं ( यागे ) बहुत्वम् । ( तद्गतेन च ) सापेक्षाश्च कर्तारः ( यागे उदवसाने कर्तारो भवन्ति ) ।

एकैकशास्त्वविप्रतिषेधात् प्रकृतेश्चैवसंयोगात् ॥ ४४ ॥

भाष्यम्— स्थितादुत्तरम् । बुद्ध्यन्ते पश्चं व्यावर्तयति । न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन् । किं तर्हि ? एकैकशः । कुतः ? अविप्रतिषेधात् । उदवसानेन हि पुरुषा लक्ष्यन्ते । ये एताबुदवस्यन्तीति । तत्र चैकोऽपि उदवसाता भवति । ये च उदवसानलक्षितास्तेषां याग इत्येकैकस्यापि यागो विहितो भवति । न च केन चित् प्रतिषिध्यते । तस्मादेकैकोऽपि यजेत । ननु बहूनां प्रयोग उच्यते । तेन एकैकस्य न भवति । नैष दोषः । एकैकस्यापि न वार्यते । तेन चोदकसामर्थ्यादेकैकश एव यजेतेति । आह । बहु-संयुक्तः प्रयोगः एकैकेन न शक्यते कर्तुमिति । एवमपि न दोषः । नात्र बहुवचनं विधीयते । ये एताबुदवसातारस्तेषामेव यागः । ते च बहवः । तेषां बहूनामन प्राप्तानामयमनुवादः । एकैकस्येनापि च ते उदवसातारः । तस्मात्तेषां तथैव यागो भविष्यति । यथैवोदवसाने तेषामसंहतानां बहुवचनम्, एवं यागेऽपि असंहताना-मेव भविष्यति । अत्रोच्यते । न बहुवचनमनुवादः, अप्राप्तत्वात् । नहि बहुवचनं यागे प्राप्तम्, यदनूद्येत । सन्निधानादिनेत्युक्तमुदवसातृणां यागः, ते च बहव इति । उच्यते । बहुत्वं तेषामुदवसाने, न यागे ।

ननु वाक्यसामर्थ्यात् यागेऽपि भविष्यति । नेत्याह । परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति । अयं च यागः प्रागेव बहुवचनेन संबद्धः । न तस्यादव-सातां वाक्येन उदवसातारः प्रमाः । उपादेये तु तदा बहुत्वम् । ततो बहुवचनसंयुक्तः पदान्तरगतात् उदव-सानमपेक्षते । तस्माद्बहुत्वसंयुक्तः प्रयोगः कर्तव्यः । यथा द्विपक्षे सत्रेषु चेति । आह । नैतदेवम् । यत्र केन चित् प्रकारेणानुवादः संभवति, तत्रानुवादो वा स्यात्, विधिर्वेति । भवति अपूर्वत्वात्तस्य विधि-त्वमप्राप्तत्वात्, तथाऽपि अनानुवाद एव बहुत्वस्य भवितुमर्हति । तथाहि यागसम्बन्धो बहूनां न कृतो भवति । तत्र इदमेव प्रयोजनम्, इतरस्मिन् पक्षे बहु-त्वस्य यागसम्बन्धेऽदृष्टं कल्पनीयं स्यात् । तस्मादनुवाद इति । ( स एव ब्रूते आहेति— ) आह । द्विपक्षेऽपि तथैवमेव प्राप्नोति, सत्रेषु चेति । अत्रोच्यते । अस्त्यत्र विशेषः । उदवसाय यजेरन्निति । 'राजपुरोहितौ यजेयाताम्' 'ऋद्धिकामाः सत्रमासीरन्' इति । यत्र संख्याऽन्तः शब्दो भवति, तत्र द्वौ प्रयोगौ गम्येते । समानाश्च कर्तारः श्रवणादेव । ततोत्तरप्रयोगवचनेन केवलं साहित्यं विधीयते । तदाश्रयः प्रयोगः, कर्तारश्च, तद्गता च संख्या, एवं सर्वमेतत्कारस्य विधीयमाने प्राप्त-मेवानूद्यते । द्विपक्षे सत्रेषु च साहित्यं विधीयते, प्रयोगोऽपि, कर्तारः, तद्गता च संख्येति, सर्वमेव नना-प्राप्तम् । नहि राजपुरोहितौ इत्येव शक्नोति प्रयोगं वदि-तुम्, तत्र च कर्तारम्, तद्गतां संख्याम् । तथा ऋद्धि-कामा इति । तस्मादेवंजातीयकेषु संख्या उपादेयत्वेन श्रूयते । अतो द्विपक्षादिषु नानुवादः । तेषु बहुत्वसंयुक्तः प्रयोगः कर्तव्यः । इह तु न तथा । तस्मादेकैकः पृष्ठ-शमनीयेन यजेतेति ।

टुप्— इतरेतरनिरपेक्षा उदवसाने कर्तारः, अर्थ-प्राप्तत्वात् उदवसानस्य, अप्राप्यत्वाच । यादृशाश्चोदव-साने ( कर्तारः ), तादृशा एव पृष्ठशमनीये । तस्मात् ( तत्रापि ) विवक्षितं बहुवचनम् । ननु राजपुरोहितवत् ( एकत्र निरपेक्षाः इतरत्र सापेक्षा भवन्ति ) इत्युक्तम् । यजेरन् इति च श्रुत्यैव ( पदान्तरमनपेक्ष्य ) बहुत्वं गम्यते । सत्यं गम्यते, न तु विधीयते । कथम् ? प्राप्तत्वात् ( संख्यायाः ) । कुतः प्राप्तिः ? वाक्याश्रयणात् द्वौ प्रयोगौ गम्येते । ये च पूर्वस्मिन् प्रयोगे कर्तारः, त एवोत्तरस्मिन् ( इत्यपि तत एव गम्यते )। पूर्वस्मिंश्च यागे ( अवसानप्रयोगे उदव-सानाख्ये ) इतरेतरनिरपेक्षाः ( ते ) तादृशा एव उत्तर-स्मिन् ( प्रयोगे । किं तर्हि विधीयते इत्यत आह— ) क्रियाविशेषः अप्राप्तः स एव विधीयते ( न संख्या । बहुत्वं तु उदवसातृणामनुवादः इति ) ।

**सोम**— ऋत्विग्गतबहुत्ववत् एककर्तृकत्वस्यापि अनाथ इत्युदिपते सगति । **सूत्रार्थस्तु**— येषां रश्मिभिः सह प्रयोगः स्यात्, यजेरन् इति बहुवचनात् । यथा 'राजपुरोहितौ यजेयाताम्' इति द्विवचनात् द्वियज्ञे सहप्रयोगः, तद्वत् इति ।

**वि**— 'सभूयैकैकशो वाऽत्र यष्टा, ऽऽद्यो बहूक्तितः ।, द्वियागवद् बहुयस्य प्राप्तस्तोऽस्तु सोमवत् ॥' सोमे ऋत्विग्बहुत्ववत् । १४

**भाट्ट**— अनङ्गत्वेऽपि सहत्वैव करणम्, आख्यातोपात्तस्य बहुत्वस्य उपादेयकर्तृगामित्वेन समवाये इव विवक्षितत्वात् । कथञ्चित् प्राप्तत्वेऽपि संहत्य प्रयोगसिद्ध्यर्थं 'तृतीयपदधाति' 'सोमेन यजेत' इत्यादिवत् विशिष्टविध्यङ्गीकारेण प्रयोजनसिद्ध्यर्थं विध्युपपत्तेश्च । (स्थित तावदत्रेवोक्तिनम् । स्थितादुत्तरम्) न पृष्ठशमनीये सहत्य प्रयोगः बहुत्वस्य प्राप्तत्वेन अविधेयत्वात् । उदवसाने हि अनेकेषां समकर्तृणां कर्तृत्वं प्राप्तमेव । अत तत्समानकर्तृकत्वादेव पृष्ठशमनीयेऽपि तत्प्राप्ति । अतोऽयं तावदनुवाद । क्त्वाप्रत्ययस्य हि पूर्वकालत्ववत् समानकर्तृकत्वमपि अनुशासनबलात् वाच्यम् । न च अन्यथाक्रान्तेन अन्य (क्त्व) भाववाचकत्वात् क्त्वाप्रत्ययसंभूतक्रियाया उत्तरक्रियायामन्वये पूर्वकालत्वसमानकर्तृकत्वयो संसर्गत्वेनैव बोधोपपत्ते न तयो तन्मात्रातिरिक्ता शक्ति इति वाच्यम् । पदार्थानुशासनप्रवृत्तपाणिवादे संसर्गानुशासनत्वविरोधात् ।

किञ्च क्त्वाप्रकृतिभूतधात्वर्थस्यैव उत्तरक्रियासम्बन्धः क्त्वा च संसर्गतात्पर्यग्राहक इत्युच्यते, अथवा क्त्वाऽर्थभाव एव निरूढोऽभसंसर्गेण उत्तरक्रियायामन्वेति, इति विवेचनीयम् । तत्र न तावत् आद्य, क्त्वाज्ञानत्वेनैव तात्पर्यग्राहकत्वे अगृहीतसङ्केतस्यापि तात्पर्यग्रहापत्ते, तात्पर्यग्राहकत्वप्रकारकज्ञानत्वेन तत्त्वे आत्माश्रयापत्ते, एकत्वादिवाच द्वितीयाऽऽदे कर्मत्वादिसंसर्गतात्पर्यग्राहकत्वेनैव उपपत्तौ प्रातिपदिकार्थस्यैव कर्मतादिसंसर्गेण क्रियायामन्वयापत्ते कर्मत्वादौ द्वितीयाऽऽदे शक्त्यनापत्तिश्च । अत एव नान्त्य, संख्याया एव स्वसमानाधिकरणकर्मत्वादिसंसर्गेण क्रियाऽन्वयापत्ते । अतोऽनुशासनबलात् कर्मत्वादिवदेव पूर्वकालत्वादेरपि वाच्यत्वम् । अस्तु वा तत्, तथापि न दोष । अत तत् तावदनुवाद । एकेन पदेन अनेकेषामुपादाने प्रतीयमानकर्तृसाहित्यमपि न तावत् उदवसाने विवक्षितम्, निमित्तविशेषणत्वात्, सर्वे संहत्य कर्तृत्वेऽपि तत्फले साहित्य नियमेन कर्तृत्वाय । यो हि संयोगादिरूपो व्यासज्यवृत्तिधर्म, तदभाव प्रत्येकवृत्तिरेव, किमुत यत्र सर्वे बहुवचनानुरोधात् प्रत्येकमेव कर्तृणाम्, कर्तृणां पर समुच्चय, तदा तत्त्यागे साहित्याभावे क संदेह । आख्यातोपात्तबहुत्वावगतसाहित्यं तु बहुत्वस्याविवक्षितत्वे अविवक्षितमेव । उदवसाने हि यादृशा निरपेक्षा कर्तार, तादृशा एव समानकर्तृकत्वबलेन पृष्ठशमनीये अवगम्यन्ते । अत प्रयत्नागतनैरपेक्ष्यत्वेन न साहित्यविवक्षा । न च नैरपेक्ष्याङ्गीकारेऽपि क्त्वाप्रत्ययोपात्तसमानकर्तृकत्वाविरोधात् बहुत्वस्य तद्गतसाहित्यस्य च विवक्षोपपत्ति, विशिष्टविधिगौरवभयेन समवप्राप्तिकस्य बहुत्वस्य अनुवादाङ्गीकारात् । अत एव पृष्ठशमनीयमानविधानात् विधेर्लाघवम् । न च तत्त्वात्पर्यान्यथाऽनुपपत्त्यादिना संभवप्राप्तिकस्यापि सोमादे सक्तु वाक्यादिरूपप्रयोजनसिद्ध्यर्थं विशिष्टविध्याश्रयणवत् इहापि साहित्यसिद्ध्यर्थं बहुत्वविध्याश्रयणमिति वाच्यम् । सोमादिपदवैयर्थ्यभिया तत्र तथा आश्रयणेऽपि प्रकृते बहुवचनस्य अवर्जनीयतया अनुवादत्वोपपत्ते । अत एकैकस्यैव पृष्ठशमनीयं कार्यं, इति न तत्र प्राक्सकर्मकत्वभाव ।

**मण्डन**— 'तमेकैक प्रकुर्वीत ।' त उत्तरयति उदवसानीयम् ।

**शङ्कर**— 'तत्राधिकारं प्रत्येकम् ।' तत्र उदवसाने

* नैमित्तिकस्य च तावत्त्वबहुत्वादे ('यावतोऽश्वान् प्रतिगृह्णीयात् तावत' इत्यत्र) पृष्ठशमनीयन्यायेन अनुवादगतत्वेनाविवक्षितत्वम्- इति वार्तिके । भाट्ट ५।२।२.

* पृष्ठसामानि, पृष्ठस्तोत्रेषु गीयमानानि सामानि । वि १०।६।५ * पृष्ठसामभि षड्भि पृष्ठ्य षडह सम्पद्यते । के (वि १०।६।५)

• पृष्ठस्तुतौ हि साम विनियुज्यते रथंतरं पृष्ठं भवतीति । मा. १०।६।३।५.

• पृष्ठस्तोत्रेषुक्थ्ये वैरूपमेकस्मिन् । तच्च महेन्द्रस्तोत्रस्थाने षोडशिनि च वैराजम् । ' उक्थ्ये वैरूपसामा एकविंशः, षोडशी वैराजसामा ' । वि. १०।६।६, • पृष्ठस्तोत्रं वैश्यस्तोमे बृहद्रथंतरं नाम । प्रकृतौ पृष्ठस्तोत्रे विकल्पितयोर्बृहद्रथंतरयोर्धर्माः , वैश्यस्तोमे विरुद्धा विकल्पेन, अविरुद्धाश्च समुच्चयेन ग्राह्या इति भाष्यम् । उभये धर्मा विकल्पेनैवेति वार्तिकम् । ९।२।१६, • पृष्ठस्तोत्राणि चत्वारि सप्तदशस्तोमकानि माध्यंदिने सवने पवमानानन्तरम् । तत्र रथंतरम् ' अभि त्वा शूर ' इति प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा बृहती उत्तरा पङ्क्तिः ( सतःपङ्क्तिः ) । वामदेव्यं ' कया नश्चित्र ' इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । नौधसं ' तं वो दस्ममृतीषहम् ' इति तृतीयं प्रगाथरूपम् । तत्र बृहतीपङ्क्त्यौ ( बृहतीसतःपङ्क्त्यौ ) । कालेयं ' तरोभिर्वो विदद्वसुम् ' इति प्रगाथरूपं चतुर्थम् । तत्रापि बृहतीपङ्क्त्यौ ( बृहतीसतःपङ्क्त्यौ ) । तत्र प्रगाथेषु प्रथमनेन तृचसंपादनम् । ९।२।६ वर्णकम् २. • पृष्ठस्तोत्रे ऽत्र ( होतुः ) बृहद्रथंतरयोः समुच्चित्य निवेशः सप्तदशे आग्निचित्ये च यागे । १०।६।८।२४–२६. • पृष्ठस्तोत्रे ' ओमये उभे कुर्यात् ' इति बृहद्रथंतरसामद्वयसाध्यता । तत्र च सोमस्यैकत्वेऽपि साम्नोर्भेदात् धर्मव्यवस्था । ९।२।१७. • पृष्ठस्तोत्रेषु ज्योतिष्टोमे बृहत् रथंतरं च विकल्पितं परन्तु उभयधर्माः व्यवस्थिताः कर्तव्याः , न संकरः । बृहद्धर्माः ' उच्चैर्गेयम्', ' बलवद्गेयम्', ' बृहति स्तूयमाने मनसा समुद्रं ध्यायेत् ' इति । रथंतरधर्माः ' नोच्चैर्गेयम् , न बलवद्गेयम् ', ' रथंतरे प्रस्तूयमाने संमीलयेत् ' इति । वि. ९।२।१५, • पृष्ठस्तोत्रेषु सप्तदशस्तोमः , तस्य विष्टुतिः तिसृभिः एकया एकया इति प्रथमावृत्तौ, एकया तिसृभिः एकया इति द्वितीयावृत्तौ, एकया एकया तिसृभिः इति तृतीयावृत्तौ इति । ३।४।३.

• पृष्ठस्तोत्रसाधनतया वैश्यस्तोमे विहितस्य बृहद्रथंतरस्य स्थाने ' पुनानः सोम ' इत्यत्र गानम् । १०।४।२२।४४–४७, उत्तरयोरपि तयोस्तुत्तरयोरेव, न रथंतरगत्युत्तरयोः । १०।४।२३।४८–४९.

• पृष्ठ्यः षडहः इति नामधेयेनैव षडहसंबन्धिनी महाव्रता प्राप्तोऽपि गवामयने । टुप्. १०।५।२५।८९ पृ. १९८०. • पृष्ठ्यः षडहः गवामयने प्रतिमासं पञ्चकृत्वः आवर्तते । अतः तस्मिन्नावर्तमाने तदीयनिमित्तं सर्वमोजनमपि प्रतिमासमावर्तते । १०।६।११।३१. • ' पृष्ठ्यः षडहः , द्वौ स्वरसामानौ ' इत्यत्र ( सप्तदशे ) स्वरसाम्नोः गवामयनगतस्वरसामधर्मातिदेशः स्वरसामनाम्ना । स्वरसामैकरूपतानिश्चाधिकरणम् । ७।३।१०।२७. • पृष्ठ्यः षडहः द्वादशाहे द्वितीयादीनि षट् अहानि । वि. ८।२।५, • पृष्ठ्यः षडहः द्वादशाहगतः प्रकृतिः , गवामयनगतश्च पृष्ठ्यः षडहो विकृतिः । १०।६।१, • पृष्ठ्यः षडहः द्विविधः , त्रयस्त्रिंशान्तः त्रयस्त्रिंशादिश्चेति । त्रिवृत्-पञ्चदश- सप्तदश-एकविंश-त्रिणव-त्रयस्त्रिंशैः स्तोमैर्युक्तानि षडहानि इति त्रयस्त्रिंशान्तः । विपरीतक्रमेण त्रयस्त्रिंशादिः । तत्राद्यो द्वादशाहे गवामयने पूर्वे पक्षसि च । अन्त्यस्तु गवामयने उत्तरे पक्षसि पृष्ठ्ये षडहे । १०।६।१.

॥ पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् । १०।६।३।१४ ॥

' पृष्ठ्यः षडहो बृहद्रथंतरसामा ' इति श्रूयते । अनेन पृष्ठ्ये षडहे द्वे सामनी उक्ते । बृहच्च रथंतरं च सामनी यस्मिन् इति द्वन्द्वगर्भो बहुव्रीहिः । एवं च द्वयोः साम्नोः युगपत् विधेः पृष्ठ्यस्य षडहस्य प्रत्यहं द्विसामत्वं स्यात् । एकाहवत् यथा सप्तदशे गोसवे इत्यादौ एकाहे कृतौ द्विसामत्वं भवति तद्वत् । इति पूर्वः पक्षः ।

विभक्ते वाऽसमस्तविधानात् तद्विभागेऽपि प्रतिषिद्धम् । ५ ॥

पूर्वपक्षनिरासार्थो वाशब्दः । न प्रत्यहं उभयसामत्वं किन्तु विभक्ते सामनी स्याताम् । येषु विषमेषु रथंतरम्, येषु विषमेषु च बृहत् । अगमत्वविधानात् न समस्तयोः साम्नोः विधानम् । ' पृष्ठ्यः षडहो बृहद्रथंतरसामा ' इत्यत्र बृहत् रथंतरं साम यस्मिन् ष. इति

त्रिपदो बहुव्रीहिः, न तु द्वन्द्वगर्भो बहुव्रीहिः । तद्विभागे तयोः बृहद्रथन्तरयो अहर्भेदेन विभागेऽपि बृहद्रथन्तरसामा इति शब्दः अविप्रतिषिद्धः न विरुद्धः । यथा ' मास घृततैलाभ्यां देवदत्तो भोजयितव्य ' इत्युक्ते अर्धमास घृतेन, अर्धमासं तैलेन एवमपि शब्दोऽवकल्पते तद्वत् । किञ्च चोदकमपि एवं अविप्रतिषिद्धम् । एवं विभागे स्वीकृते चोदकानुग्रहोऽपि स्यादित्यर्थः । तस्मात् प्रत्यहं एकैकस्यान्वयमेवेति सिद्धान्त । के.

■ पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रय-स्त्रिंशेऽहनि स्यात् तदानन्तर्यात् प्रकृतिवत् । १०।६।९।२७॥

द्वादशाहे त्रिवृदादिः त्रयस्त्रिंशान्त षडहो भवति । तत्र ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा ' इति श्रूयते । अथ गवामयने आनुलोम्येन प्रवृत्ते पूर्वे पक्षसि न विचार्यता । प्रातिलोम्येन प्रवृत्ते उत्तरे पक्षसि तु आवृत्ते पृष्ठ्ये षडहे त्रयस्त्रिंशेऽहनि संस्थिते समाप्ते, तद्दिने एव रसभोजनं मधुभोजनं स्यात् । तदानन्तर्यात् प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं कृतम् । प्रकृतिव दिहापि । तस्मात् त्रयस्त्रिंशेऽहनि अनुष्ठानोत्तरं रसभोजनं कार्यं इति पूर्वः पक्ष ।

अन्ते वा, कृतकालत्वात् । २८ ॥

पूर्वपक्ष वाशब्देन व्यावर्तयन् सिद्धान्तमाह— न चैतदस्ति त्रयस्त्रिंशानन्तरं रसभोजनमिति । किन्तु षडहस्य अन्ते स्यात् । रसभोजनस्य कृतकालत्वात् ' संस्थिते षडहे मध्वाशयेत् ' इति वचनेन कृतं विहितं निश्चितं कालो यस्य तादृशत्वात् । षडहान्तकालोऽस्य निश्चितः । प्रातिलोम्येन प्रवृत्ते त्रयस्त्रिंशादि त्रिवृदन्त षडहः । तस्मिन् संस्थिते रसभोजनं स्यात् न त्रयस्त्रिंशान्ते । तस्मात् त्रिवृदन्ते षडहे समाप्ते मध्वादिभोजनं इति सिद्धान्तः । के.

■ पृष्ठ्ये षडहे अग्न्यतिग्राह्यस्य अतिदेश । १०।८।११।२३-२८. ■ पृष्ठ्ये षडहे अदिष्टेन मध्वशनेन अतिदिष्टस्य पयोव्रतादेः समुच्चय । भा. १०।४।१।१-२ वर्णकम् १. ■ पृष्ठ्ये षडहे गवामयनगते पूर्वे पक्षसि प्रथमे तृतीये पञ्चमे चाहनि रथन्तरं गातव्यम्, द्वितीये चतुर्थे षष्ठे चाहनि बृहत् गातव्यम् । उत्तरे पक्षसि च प्रथमतृतीयपञ्चमेषु बृहत्, द्वितीयचतुर्थषष्ठेषु रथन्तरमिति । सोम १०।६।३. ■ पृष्ठ्ये षडहे गवामयनगते बृहद्रथन्तरयो प्रत्यहमेकैकस्यैव अनुष्ठानम् । १०।६।३. मीको पृ १५५० ' गवामयने पृष्ठ्ये० ' इत्यत्र द्रष्टव्यम् । ■ पृष्ठ्ये षडहे गवामयनगते सलोमे विलोमे वा अन्ते मध्वशनम् । १०।६।९. ■ पृष्ठ्ये षडहे चयनानि कर्तुं शक्यते । भा. १०।८।११।२३-२८. ■ पृष्ठ्ये षडहे त्रयस्त्रिंशारम्भणे अन्ते (संस्थिते) मध्वशन घृताशन वा न तु त्रयस्त्रिंशेऽहनि संस्थिते । गवामयने उत्तरे पक्षसि । १०।६।९।२७-२८. ■ पृष्ठ्ये षडहे द्वादशाहगते द्वितीयेऽहनि त्रिवृत्स्तोमके पञ्चदशे बहिष्पवमाने वृषण्वत्तृचागमः । कालश्च तस्य चोदकप्राप्तानुरूपपर्यासयोर्मध्यम् । वि. ५।३।४ ■ पृष्ठ्ये षडहे द्वादशाहगते षट्सु अहःसु क्रमेण रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवतानि सामानि गातव्यानि । शा १०।६।३. ■ पृष्ठ्ये षडहे द्वादशाहसत्रगते संस्थिते दीक्षितानां ब्रह्मचारिणामपि मध्वशनं क्रत्वर्थत्वात् कर्तव्यम् । १०।६।१२ ■ पृष्ठ्ये षडहे प्रत्यहमेकैक इति षट् सामानि– रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम्, रैवत चेति । तैर्निष्पाद्यानि षट् पृष्ठस्तोत्राणि । वि. ७।३।१. ■ पृष्ठ्ये षडहे प्रत्यहं बृहद्रथन्तरयोरेकैकस्यैव अनुष्ठानं गवामयने । १०।६।१।४-५. ■ यद्यपि पृष्ठ्ये षडहे श्रूयते ' संस्थिते षडहे मध्वाशयेत् ' इति विहितमध्वशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्य अदृष्टार्थत्वात् एव समुच्चय इत्युक्तम् ( भाष्ये ), तत् मध्वशनस्य देहवृत्त्यनर्हत्वेन पयोव्रतकार्यकारित्वानुपपत्ते. पूर्वपक्षोत्थानाभावानुत्थाया पयोव्रताभावाच्च उपेक्षितम् । अस्तु वा तदपि इहोदाहरणम् । भाट्ट. १०।४।१.

■ पृष्ठ्यगतेषु उक्थ्येषु अतिग्राह्याणां विकल्प, न पर्युदासः । संकर्ष. ३।३।४. मीको. पृ. १८९ ' अतिग्राह्याणां षोडशिकस्थ्येषु० ' इत्यत्र द्रष्टव्यम् ।

■ पृष्ठ्यषडहस्य कर्मान्तरव्यवधानेनावृत्तौ मध्वशनादेरप्यावृत्तिर्गवामयने । १०।६।११।३१ ■ पृष्ठ्यषडहस्य विजातीयषडहव्यवधानेन आवृत्तौ मध्वशना-

देऽपि आवृत्तिर्गवामयने । १०।६।११. मीको. पृ. १५५३ ' गवामयने विजातीय० ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहान्ते गवामयनगते वैकल्पिकमध्य-गतंधृतादानयोरनुष्ठानम् । १०।६।९. मीको. पृ. १५५२ ' गवामयने पृष्ठ्यषडहान्ते० ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वा-धानम्, न तु प्रतिषडहान्ते गवामयने । १०।६।१०। २९-३०. मीको. पृ. १५५४ ' गवामयनादौ पृष्ठ्य-षडहावृत्तौ० ' इत्यत्र द्रष्टव्यम् ।

* पृष्ठ्यषडहगतरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठे निवेशो विश्वजिति । १०।६।३।१३-१४.

* पेटिका । १०।२।१-७ इति सप्तसु अधिकरणेषु कृष्णलचरुविधिविषयको विचारः कृतः इति महाधिकरण-रत्नानि " अस्यां पेटिकायां भवन्तीति रत्नायनकारेणैव कृष्णलपेटिका इत्युक्तम् । यद्यपि ८।१।८ इत्यत्र १०।१।१ इत्यत्रापि च कृष्णलविचार एव तथापि भिन्नदेशत्वात् न पेटिकायामन्तर्भावः । '

अथ कत्वापेटिका । ४।३।१२-१५ इति चतुर्षु अधिकरणेषु क्रत्वध्ययनेन अङ्गानां वा मोक्ष्यते क्रतो वा इति विचारितत्वात् सेयं क्रत्वापेटिका नाम ।

अथ हरिसिद्धिपेटिका । १।४।१२।२३ सूत्रस्य खण्ड-षट्कं कृत्वा गौणवृत्तिनिमित्तानि विवेचितानि इति सेयं षडधिकरणात्मिका हरिसिद्धिपेटिका नाम ।

· अथ ६।३।८-२० इति षोडशसु अधिकरणेषु प्रतिनिधेरेव विचारः कृतः इति सेयं प्रतिनिधिपेटिका महती ।

अथ ३।२।९-१८ इति दशसु अधिकरणेषु सोम-शेषभक्षणविषयक एव विचारः इति सेयं दशाधिकरणी भक्षपेटिका इति भण्यते ।

अथ ३।३।७ इत्यस्मिन् अधिकरणे श्रुतिलिङ्गादीनां विनियोजकप्रमाणानां भूयानेव विचारः कृतः इति सेयं श्रुत्यादिपेटिका इत्युच्यते । सूत्रैकत्वेऽपि अवान्तराणि भूयांस्येवाधिकरणानि इति ।

अथ १०।५।९-१८ इति दशसु अधिकरणेषु षोडशिग्रहविषयक एव विचारः इति सेयं दशाधिकरणी षोडशिग्रहपेटिका इति प्रचक्षते । यद्यपि च ५।१।१८, १०।६।६ इत्यधिकरणयोरपि षोडशिन एव विचार-स्तथापि भिन्नदेशत्वात् तयोर्नास्यां पेटिकायामन्तर्भाव मन्यन्ते ।

ननु तर्हि प्रथमोऽध्यायः प्रमाणपेटिका, द्वितीयः कर्मभेदपेटिका, तृतीयः शेषत्वपेटिका, चतुर्थः प्रयुक्ति-पेटिका, पञ्चमः क्रमपेटिका, षष्ठः अधिकारपेटिका, सप्तमाष्टमौ अतिदेशपेटिका, नवमः ऊहपेटिका, दशमो बाधपेटिका, एकादशः तन्त्रावापपेटिका, द्वादशः प्रसङ्ग-पेटिका, एवं सर्वोऽपि परिचिन्तनीयम् । इति चेत्, सत्यम्, सर्वा द्वादशलक्षणी षोडशलक्षणी वा धर्मपेटिका इति वक्तव्यं स्यात् । किं बहुना विंशतिलक्षणी सर्वा मीमांसैव कर्मज्ञानपेटिका इति वाच्यं स्यात् । न चैतत् मनोरममिति पूर्वोक्तमेव युक्तमिति । के.

* पेषणं गुणकर्म, तण्डुलाः संस्कार्याः । वि. २।१।४. * पेषणं द्विदेवत्ये दर्शयति ' अर्धं पिष्टं भवति अर्धम-पिष्टं द्विदेवत्यत्वाय ' इति । वचनमिदमग्नौ भवति । (सोमापौष्णे चरावित्यदम्) । भा. ३।३।१५।४६. * पेषणं नापूर्वजनकं दृष्टफलकत्वात् । नियमस्तु तु अपूर्वम् । तेन च विधेयता । वि. २।१।३. * पेषणं पुरोडाशार्थ तण्डुलानां कर्तव्यम्, चरौ तु न कर्तव्यम् । पेषणेन हि पिष्टकं वा यवागूर्वा स्यात्, ग्लानिर्वा न चरुः । के. ( भा. १०।१।११।५०). * पेषणं पौष्णे विकृतौ निवेशनीयम् । ३।३।११, तदपि चरावेव । १४, तत्रापि पूर्वैकदेशत्वे एव । १५. * महापितृयज्ञे प्रथमं भर्जनेन धानाः संपाद्य पश्चात् सक्तुभावाय पेषणं कार्यम् । वि. १०।२।१४, * पेषणाय दृषदि तण्डुलावापे ' धान्यमसि धिनुहि देवान् ' इति मन्त्रो विहितः । शाक्यानामयने तु दृषदि पेषणाय मांसमावपन् ' मांसमसि ' ( तत्समर्थं इति युक्तम् । के. ) इति मन्त्रमूहेत् । ९।१।१३ वर्ण-कम् २. * पेषणस्य आपिष्टनिवृत्तेरभ्यासः । भा. ११।१।५।२७, * पेषणस्य ' तण्डुलान् पिनष्टि ' इति नियमविधिः, नानुवादः ( दर्शपूर्णमासयोरिदम् ) । ४।२। ११।२६. * पेषणस्य बाधः सौर्ये चरौ । १०।१।१२। ५२-५३. ' सौर्ये चरौ पेषणस्य बाधः ' इत्यत्र द्रष्टव्यम् । .

* पेषणस्य मन्त्रे न बाधो महापितृयज्ञे । वि. १०।२।३४ वर्णकम् २, 'महापितृयज्ञे धानासु०' इत्यत्र द्रष्टव्यम् । * पेषणे दृषदुपलयोः समुच्चयः, परस्परापेक्षत्वात् । १२।३।४.

* पेषणान्तेन कृष्णाजिनास्तरणादिना एकपदार्थेन अनुसमयः राजसूये नानाबीजेष्टौ । भाट्ट. ५।२।३.

* अक्षरग्रहणादीनां पेषणादिन्यायेन ( पेषणावघातन्यायेन ९।१।२ इत्यर्थः ) अवान्तरव्यापारमात्रत्वात् अध्ययनफलत्वं निराकृतम् । ... विहितस्याध्ययनस्य पुरोडाशार्थावघातवत् वाक्यार्थज्ञानार्थत्वावधारणात् तदन्तरालवर्तिनामक्षरग्रहणादीनां पेषणादिन्यायेन अवान्तरव्यापारत्वमात्रं युक्तम् । सु. पृ. २३.

* कृष्णलचरौ श्रपणमात्राङ्गभूतस्य गार्हपत्यादेरपि पेषणादिप्रतिप्रसवान्तरार्थविधिन्यायेन प्राप्तौ न किञ्चित् बाधकम् । भाट्ट. १०।२।१.

* पेषणजन्यमपूर्वं नास्ति, किन्तु तेन द्रव्यसंस्कारो दृष्टः । पेषणनियमजन्यं तु अपूर्वं स्यात् । वि. २।१।१.

* पेषणन्यायेन ( ९।१।३ ) कृष्णलेषु चार्वा एव भक्षधर्मा मक्षाश्च ( चुम्बुपाकारेण ) । भाट्ट. १०।२।३.

* पैठराणां ( पिठरपाकवादिनां नैयायिकानां ) कार्यद्रव्याण्येव घटादीनि पच्यन्ते । वा. ३।१।६।१२ पृ. ६८२.

* पैतृके कर्मणि ( प्रेताग्निहोत्रे ) दर्भाणां दक्षिणाग्रत्वम्, दैविके तु कर्मणि प्रागग्रत्वं उदगग्रत्वं वा । वि ३।४।४.

* पैप्पलादकं शाखान्तरम् । भा. ३।४।२।८ पृ. ६३१.

* पैलुकाः ( वा. ३।१।६।१२ पृ. ६८३ ) । पीलुपाकवादिनः वैशेषिकाः । ते हि पीलुवाच्यपरमाणुषु पाकं वदन्ति, न अवयविनि घटकपालादौ । के.

* पैतुदारवेण स्नेहेन माध्यंदिने सवने अभ्यञ्जते ( पैतुदारवेण तृतीयसवने इति ताण्ड्यब्राह्मणे ) एकोनपञ्चाशद्रात्रे अञ्जनाभ्यञ्जनाख्ये सत्रे मुख्यायाम्, तेन शैलोपचितिर्भवति । वि. १०।४।७.

* पैष्टीपानं क्षत्रियस्य निषिद्धमेव, मधुसीधुपानं तु न निषिद्धम् । सु. पृ. १९५, * पैष्टीपानं वर्णत्रयस्यापि मनुना निषिद्धम् । पृ. ११५.

* पोता पुनरभ्युन्नीते 'मरुतो यस्य हि क्षये' इति मन्त्रेण मरुतो यजति, ततः सोमो भक्ष्यते । वि. ३।२।१२, * पोता ब्रह्मणः पुरुषः ऋत्विक् । चतुर्थवर्गस्थोऽयम् । अत पादी चतुर्थांशभाक् तिस्रो गा लभते । 'तमुन्नेता दीक्षयति' । ३।७।१७.

* पोत्रीया इति समाख्यानात् समाख्यातपुरुषेण कर्तव्यमिति ज्ञायते । भा. ३।७।२०।४१.

* पौण्डरीकाणि ( सनालपुष्परूपाणि कमलानि ) बहींषि भवन्ति सौद्रे चरौ । भा. ९।३।२।३, * पौण्डरीकः द्वादशाहप्रकृतिकः, न ज्योतिष्टोमप्रकृतिकः । १०।६।१८।७२. * 'पौण्डरीकेण एकादशरात्रेण स्वाराज्यकामो यजेत' । तत्र 'अयुतं पुण्डरीके दद्यात् अश्वसहस्रमेकादशम्' । सकृदेव [illegible] दक्षिणा दातव्या, न प्रत्यहम् । १०।६।१७. पौण्डरीकस्य अहःक्लृप्तिः । 'अभ्यासङ्गः पञ्चाहः षडहस्त्रयस्त्रिंशे [illegible] सवने, षट्त्रिंशमन्त्यम् । ( आनन्दाश्रमीये तु 'पञ्चमः षडहः स्याद्द्वात्रिंशे द्वे सवने षट्त्रिंशतमन्त्यः' इति मुद्रितः पाठः अशुद्ध एव । पृ. ४८४ ) । चतुष्टोमोऽग्निष्टोमः अथच्छन्दोमाः, विश्वजित् सर्वपृष्ठोऽतिरात्र०' इति सत्याषाढः । १७।८।२६ । भाट्टदीपिकायाम् ( १०।६।१७ ) मानवसूत्रे तु 'अभ्यासङ्गः पञ्चाहः, अथच्छन्दोमाः, चतुष्टोमोऽग्निष्टोमः, विश्वजिदतिरात्रः' इति । अत्र सत्याषाढमानवसूत्रयोः अग्निष्टोमस्य छन्दोमानां च पौर्वापर्यव्यतिक्रमो भवति । अभ्यासङ्गस्य स्वरूपं तु आश्व.श्रौ.सूत्रे ( १०।३।४ ) उक्तम्—तथाहि 'अभ्यासङ्गस्वरूपमुच्यते । प्रथमस्याह्नो द्वे सवने त्रिवृत्स्तोमे भवतः, पञ्चदशं तृतीयसवनम् । द्वितीयस्य पञ्चदशे द्वे सवने, सप्तदशं तृतीयसवनम् । तृतीयस्य सप्तदशे द्वे सवने, एकविंशं तृतीयसवनम् । एवमुत्तरेष्वपि योज्यम् । एवमभ्यासङ्गो भवति ।' इति । तथा च चतुर्थस्य एकविंशे द्वे सवने, त्रिणवं तृतीयसवनम् । पञ्चमस्य त्रिणवे द्वे सवने, त्रयस्त्रिंशं तृतीय-

सवनम । षष्ठस्य तु त्रयस्त्रिंशे द्वे सवने षट्त्रिंश तृतीय सवनमिति । के ■ पौण्डरीके अश्वसहस्र इति ■ प्रत्यक्षोपदेशात् सामान्यप्राप्तनिषेधाभावात् न दोषो विशाखे ( तेन ७२ न वारुणोऽपि दाद्य ) । शा ३।८। १०।२८ पृ १६१ ■ पौण्डरीके अश्वसहस्रं सन्या पाठक्रमेण एकादशेऽहनि, माह्नोक्तमानवसूत्रानुसारेण वा दशमेऽहनि अग्निष्टोमे, अतिरात्रेषु अह सु च गवा दश सहस्राणि इति विभज्य दक्षिणा दातव्या । तथा च सत्या पाठ 'अन्वह दश सहस्राणि दद्यात् । अश्वसहस्रम् सुत्यमेऽहनि' इति ( ७।८।१६ ) । मानवे च 'अन्वह निष्ठानि सहस्राणि ददाति, चतुर्थेमेऽश्वसहस्रम्' इति । मानवे सूत्रान्तरे च चतुर्णेमोऽग्निष्टोम पाठक्रमेण दशम इत । के

■ पौण्डरीके गवायुतस्य अश्वसहस्रस्य च दक्षिणाया प्रत्यह विभज्य वेद्योर्मध्येन उत्तरस्या दिशि नयनम् ॥

प्रत्यह सर्वसंस्कार , प्रकृतिवत् , सर्वांसा सर्वशेषत्वात् । १०।६।१८।६९ ॥

भाष्यम्— पौण्डरीक एकोदाहरणम् । तत्रैतत् समधिगत सकृदेव परिक्रय इति । अस्ति तु प्रकृतौ 'माध्यंदिने सवने दक्षिणा नीयन्ते' इति । तत्र संशय किं सर्वासा कार्त्स्न्येन प्रत्यह नयनम्, उत सकृन्नयनम्, अथवा प्रविभज्य नयनमिति । किं प्राप्तम् ? प्रत्यह सर्वासा संस्कार स्यात् । कुत ? प्रकृतिवत् । प्रकृतौ हि सकला दक्षिणास्तस्मिन् काले सस्कृता । इहापि तद्वदेव सर्वा संस्कर्तव्या इति । कथम् ? अह्ना प्राधान्यात् । तद्गुण भावाच्च दक्षिणानाम् । ता एता सर्वेषामह्ना शेषभूता । शेषभूतस्य चावश्य य सस्कार , स तेनतेनाह्ना प्रयुज्यते इति । तस्मात् प्रत्यह सर्वसस्कार ।

एकार्थत्वान्नेति चेत् । ७० ॥

भाष्यम्— न चैतदस्ति, प्रत्यह सर्वसंस्कार इति । किं तर्हि ? सकृदेव संस्कार स्यात् । कुत ? एकार्थत्वा दक्षिणानाम् । एक कार्यमानमनम् । तासा न नयनादि संस्कारसंस्कृताना प्रत्यक्ष कार्यम् । एकस्मिन्नपि चाहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतोऽर्थो नाथ इति भूय सस्कारेण प्रयोजन नास्ति । तस्मात् सकृत् सस्क्रियेरन् इति ।

स्यादुत्पत्तौ कालभेदात् । ७१ ॥

भाष्यम्— न चैतदस्ति, सकृत्संस्कार इति । किं तर्हि ? प्रत्यहम् । कुत ? उत्पत्तौ कालभेदात् । उत्पत्तौ दक्षिणाना विशिष्टकालश्रवण श्रूयते 'तस्मादिसृष्टमो लोके माध्यंदिने सवने दक्षिणा नीयन्ते' इति । सर्वा चैता सर्वेषामह्ना शेषभूता । तेषा चाह्ना माध्यंदिनानि सवनानि भिद्यन्ते । तत्र च अगम्यमानविशेषत्वादन्य माध्यंदिने सवने न सस्क्रियेरन्, तस्यैव संस्कारलोप स्यात् , प्रयोगभेदात् । न चान्यत्र सस्क्रियमाणा अन्यत्र सस्कृता भवन्ति । तस्माद्भेदेन सस्क्रियेरन्निति ।

विभज्य तु संस्कारो वचनाद् द्वादशाहवत् । ७२ ॥

भाष्यम्— न चैतदस्ति, सर्वासा प्रत्यह संस्कार इति । किं तर्हि ? विभज्य सस्क्रियेरन् । कुत ? वचनात् । द्वादशाहे प्रत्यह नयनादिसंस्कारो वचनात् क्रियते । 'अन्वह द्वादशशत ददाति' इति । पौण्डरीकश्च द्वादशाहप्रकृति , न ज्योतिष्टोमप्रकृति । तस्मात् यदि प्रत्येकस्मिन्नपि गति वचनात् भेदेन संस्कार इति ।

शा— प्रकृतौ माध्यंदिने सवने दक्षिणानयन श्रुतम् । पौण्डरीके च अयुत गवा अश्वसहस्र च माध्यंदिने सवने प्रत्यह नेतव्यम्, उत एकस्मिन्नहनि, अथवा विभज्य प्रत्यह गवा सहस्र नेतव्य अश्वसहस्र तु एकादशे अहनि नेतव्यमिति संशय । विभज्य नयनमिति सिद्धान्त ।

सोम— पृथक् प्रत्यह कृत्स्ननयन न साधनीय सिद्धत्वात् सम्पत्ति । सूत्रार्थस्तु— प्रत्यह सर्वासा नयन स्यात्, सर्वेष्वह सु कृत्स्नदक्षिणाया शेषत्वात्, मूलप्रकृतौ ज्योतिष्टोमे माध्यंदिने कृत्स्नदक्षिणाया नयनस्य दृष्टत्वात् इति ।

वि— 'सकृत् किं प्रत्यह वाऽस्य नयन तत्र चोदनम् । सत्यम वा विभक्तस्य, सकृत् संस्कारसिद्धित ॥ प्रतिमाध्यंदिन चोत्कर्ष प्रत्यह तत । यदि नव तदेकत्वाद्, विभज्य द्वादशाहवत् ॥' पौण्डरीके अन्य

शतम्' इत्यनेन प्राप्ताया दक्षिणायाः पुनस्तदङ्गत्वेन विधौ वैयर्थ्यापत्तेः, सङ्कल्प्यमानत्वेन प्रसक्तायाः 'अन्वहम्' इत्यनेन आवृत्तिविधिः। इतरथा अश्वादिपरिसंख्यार्थत्वे अन्वह इत्यस्य आनर्थक्यापत्तेः। सा चावृत्तिः न द्वादशशतस्य, तदन्तर्गतमात्रोपकारकतया एकस्मिन्नप्यहनि दीयमानस्य तस्य प्रयोगैक्येन सुत्यान्तरोपकारकत्वबाधकाभावात्। अपितु तत्तद्योगीयकर्मानतिरूपस्वावान्तरकार्याय द्वादशशतरूपसाधनस्यैव तत्पृष्ठभावेन प्राप्तस्य बाधमङ्गीकृत्य सुत्यासमसंख्य-द्वादशशतसमुदायस्यैव दक्षिणात्वकल्पनया। साऽपि च दक्षिणा सर्वेषामेवाङ्गानां तत्तद्योगीयकर्मानतिद्वारा अङ्ग सत् तन्त्रेण सर्वेषामुपकारिका। प्रत्यह तु तदवयवस्य द्वादश शतं विभज्य पत्नात्दीयते इति विभागोऽपि तदङ्ग प्रकृतौ। तदिह पौण्डरीकेऽपि तत्स्थाने विहितमयुत-मश्वसहस्रमपि तत्तदह्नां तत्तद्योगीयकर्मानतिद्वारा तन्त्रेणैवाङ्गम्। अतिदेशप्राप्तावयवविभागबाधाच्च अवयवशो विभज्य प्रत्यह देयम्। अत एव 'सम्पूर्णमयुतमश्वसहस्रं च प्रत्यह माध्यंदिनसवने नेतव्यम्, अथवा एकस्मिन् कस्मिंश्चिदहनि' इति पूर्वपक्षद्वय मूलोक्त (१८।६१ सूत्र भाष्ये) उपेक्षितम्, अतिदेशप्राप्तविभागबाधे प्रमाणाभावात्। तदर्थमधिकरणान्तररचना तु वृथैव। (१७। ६२-६८, १८।६९-७२ इति भाष्ये)। स च विभाग. न (तन्त्ररत्ने) पार्थसारथिरीत्या 'प्रत्यह गवा सहस्रं अश्वसहस्रं दशमेऽहनि' इत्येवरूपः। मानवसूत्रे 'अन्वह विहितानि सहस्राणि ददाति चतुष्टोमेऽश्वसहस्रम्' इति अश्वसहस्रस्य दशमेऽहनि विधानात्। एव हि पौण्डरीके अहःक्लृप्ति तेनोक्ता, 'एकादशरात्रेण पौण्डरीकेण यजेत पारमेष्ठ्यकामोऽप्याश्रय. षडहः त्रयश्छन्दोमा अनुष्टोमोऽग्निष्टोमो विश्वजिदतिरात्र' इति। अतो दशमेऽहनि अश्वसहस्रं दत्त्वा अवशिष्टेषु गवां सहस्राणीति विभागः।

मण्डन— 'दक्षिणा सहस्रभुवेः।'

शंकर— 'एका। पौण्डरीकस्य दक्षिणा।' १८.

• पौण्डरीकबर्हिषि 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः कर्तव्यो मीद्रे चरौ। ९।३।२।३. मीको. पृ. १२२६ 'ऊहः रक्तपदस्य०' इत्यत्र द्रष्टव्यम्।

* 'पौरुषेयं कथ वस्तु निदध्यात् शाश्वतो विधिः।' वा. १।३।८।२४ पृ. २७२. • पौरुषेय वाक्य यतो लिङ्गभूतम्, अत एव प्रत्ययितस्य नियमेन प्रमाणान्तरपूर्वकार्थाभिधायिनो वचन सत्यम्। तथा श्रोतु. इन्द्रियविषय प्रत्ययितवचनमपि सत्यम्। यत्पुन. अप्रत्ययितवचन श्रोतुश्च न प्रमाणान्तरपूर्वकम्, न तत् सत्यम्। ऋजु. पृ. २१. • पौरुषेयः ऊहमन्त्रश्छन्दोगानाम्। ९.२।१ वर्णकम् २. * पौरुषेयेण वचसा न सर्वत्र साक्षादर्थ एव प्रतीयते, पुरुषेच्छापरतन्त्रत्वात्। असत्यपि अर्थे पुरुषा वाक्यानि प्रयुञ्जाना दृश्यन्ते। तेन अर्थं प्रति निश्चयाभावात् तेभ्यः न अर्थसिद्धिः। वक्तुरभिप्राय तु स्वरूपेण सूचयेयुः। स चाभिप्रायः प्रमाणपूर्वकश्चेत्, ततः तस्य प्रमाणस्य प्रमाऽविनाभावात् तन्मुखेन वाक्यार्थे निश्चयानुमानमेव, तेन अनुमानस्यायं बाधः। अनुमानावसेयं प्रमाणान्तरदर्शनमत्र बाध्यते, न पुनः बाह्यं वस्तु हस्तियूथशतरूपं इति तत्र वचनस्य अव्यापारात्। यत्र विषये यत् प्रमाणं प्रवृत्तम्, तत्र तस्य बाधो भवति, न वचनस्य बाह्येऽप्यर्थे प्रवृत्तिः, तत्र तस्य प्रवृत्तिनियमाभावात्। ऋजु पृ २१. • पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्यय, न तु 'एवमयमर्थः' इति। (वैदिकात्तु वचनात् एवमयमर्थ इति भवति प्रत्यय.)। विप्रलब्धे हि सत्यपि कश्चित् पुरुषकृतात् वचनात् प्रत्ययः। न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति। भा. १।१।२।२ पृ. १७. • पौरुषेये वाक्ये वाक्यभेदादिदोषः। ऋजु पृ. ७०. • पौरुषेये हि वाक्ये प्रमाणान्तरापेक्षमेव शाब्दम्। पृ. ३४. • पौरुषेयेषु वाक्येषु परिग्रहापरिग्रहौ विवक्षाविवक्षयो. फलत्वेन प्रमाणौ। वा. ३।१।७।१२ पृ ७००.

• पौरुषेयत्वमापद्येत (वेदे यथाश्रुतादीषदप्यन्यथात्वे कल्पिते, अत्यन्तातीन्द्रियत्वात्। वा. १।२। १।७ पृ. ११२ तन्त्रटुप्टीका.) • पौरुषेयत्वं न तावत् स्वतन्त्रपुरुषप्रणीतत्वम्, भारते अव्याप्तेः। नापि शब्दा-

जन्यवाक्यार्थगोचरयथार्थज्ञानजन्यजातीयत्वम्, भारतादौ असंभवात्। किन्तु तदुच्चारणेच्छाजन्यवाक्यत्वं तदर्थधीजन्यवाक्यस्य सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वं वा। स्मृतिपुराणादिषु अव्याप्तिवारणाय सजातीयेति। मणि पृ. ७–८. ● पौरुषेयत्वं पुरुषोच्चिरितप्रभवत्वम्। सु. पृ ५३२. ● पौरुषेयत्वं वाक्यस्य नाम प्रमाणान्तरापेक्षस्वार्थप्रतीतार्थप्रत्यायनपरतया प्रयोग, न वर्णादिकर्तृता। ऋजु. पृ. २४.

● पौरुषेयवचसां प्रमाणान्तरप्रतीतार्थप्रत्यायनपरत्वेन प्रमाणान्तरवशात् वाक्यभेदादयो दोषा एव न भवन्ति। ऋजु पृ. ३२.

● पौरुषेयवाक्यानां द्विविधः स्वभावः। तत्रैको यत्किंचि उच्यमानवाक्यार्थज्ञानवत्तावधारणसामर्थ्यात्मकः। यथा आप्तवाक्येषु (पूर्वपूर्व–)वक्तृज्ञानद्वारा अर्थनिश्चयः। अनाप्तवाक्ये तु मूलभूतवक्तृज्ञाने सम्यग्ज्ञानत्व दुर्घटं भवति तत्र अप्रामाण्यमेव इत्यपरः स्वभाव। वैद्यनाथः, १।१।२।२ पृ १६–१७, ● पौरुषेयवाक्येषु अर्थनिश्चयप्रतिष्ठा मूलप्रमाणद्वारैव। १।१।२।२ पृ. १६.

● पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। वा. ३।३।७।१४ पृ. ८५५. ● पौरोडाशिकमिति समाख्याते काण्डे समाम्नातत्वे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रः समाम्नातः। स प्रमस्य बलीयस्त्वात् सान्नाय्यपात्राणां शुन्धने विनियोक्तव्य, न तु समाख्यानेन पुरोडाशपात्राणां शुन्धने। भा. ३।३।७।१४ पृ. ८५५. ● पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्तमानः क्रमेण च अनुमीयमानलिङ्गेन अविनियुज्यमानः पुरोडाशस्यैव वा प्राधान्यात् प्राप्नुवन् श्रुत्या सान्नाय्यार्थतयाऽङ्गत्वेन विधीयते 'इषे त्वेति शाखां छिनत्ति' इति। (तेन श्रुतिः समाख्याया बलवती)। वा. ३।३।७।१४ पृ ८३६. ● पौरोडाशिकानां प्रोक्षणादीनां सौमिकपदार्थपूर्वभावित्वं ज्योतिष्टोमे सुत्यायाम्। ५।१।१३।२५–२६.

🙠 पौरोडाशिकाज्यभागन्यायः। आज्यभागन्यायः। आज्यभागादयः अन्यतोऽलब्धोपकाराः पशुपुरोडाशे कर्तव्याः॥

**जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। १२।१।२।७॥**

भाष्यम्— तस्मिन्नेव पशुपुरोडाशे चिन्ता। किमाज्यभागौ कर्तव्यौ, उत नेति। आह। तत्र एतत् परीक्ष्यम्, किं प्रसङ्गेन चोदको बाध्यते, उत प्रयोगवचन इति। यदि चोदको बाध्यते, ततो न कर्तव्यौ। अथ प्रयोगवचनः, ततः कर्तव्याविति। किं पुनरत्र युक्तम्? चोदको बाध्यत इति। किं कारणम्? आनुमानिकश्चोदकः, प्रत्यक्षः प्रयोगवचनः, प्रत्यक्षं चानुमानाद्बलीय। दुर्बलस्य च बाधो न्याय्यो न च बलीयसः। तत्र चैव कर्तव्यौ। चोदकेन हि तौ प्राप्येयाताम्, स चेह बाधितत्वान्नास्तीति। एवं प्राप्ते, उच्यते। जैमिनेराचार्यस्य मतं कर्तव्यौ आज्यभागाविति। कुतः? यत्र परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। यस्य स्वस्य तन्त्रस्य कार्ये परतन्त्रमापद्यते, तस्य प्रतिषेधः स्यात्। यथा पौरोडाशिकानां पाशुकम्। यस्य तु न किञ्चित्परकीयं कार्यमापद्यते, तद्व्यतिरेको न युक्तः। यथा देवदत्ते यज्ञदत्तयानमारूढे देवदत्तयानं निवर्तते, न तदलङ्कारः। न चेह आज्यभागयोः कार्ये किञ्चित् पाशुकमापद्यते। तस्य प्रतिषेधो न युक्तः। तस्मात्तयोरनिवृत्तिः। यत्तु प्रत्यक्षः प्रयोगवचन इति। नैतत्र प्रयोगवचनस्य प्रवृत्तिः। स हि अङ्गान्युपसंगृह्णीयात्। पाशुकैरेव चाङ्गैः पुरोडाशोऽङ्गवान्। प्रत्यक्षोऽपि तत्र नाज्यभागौ गृह्णाति। प्रकरणानिहितमङ्गं प्रयोगवचनेन गृह्यते। न च पशावाज्यभागौ विद्येते, प्रतिषिद्धत्वात्। 'तौ न सौम्येऽध्वरे न पशौ' इति। अपि चोक्तमेतत्, प्रयोगवचन उत्पन्नानामङ्गानां ग्राहकः। चोदकस्तदर्थो ग्राहकश्च। तस्मात् स बलवान्।

टुप्— जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्। (भाष्यकारीयमुदाहरणं प्रदर्शनार्थमिति दर्शयन्नाह–) अस्यैव (पशुपुरोडाशस्य यत् पशौ अविद्यमानम्) आज्यभागनिर्वर्त्यमेवमादि (तत्) कर्तव्यं न

गुणविधानाभावादेव न वैगुण्यमिति विशेषः । यत्तु अस्मिन्नधिकरणे सूत्रे प्रयोगविधिमङ्गीकृत्य चोदकलोपेन पूर्वपक्षकरणम्, चोदकाङ्गीकारेण प्रयोगविधिमात्रलोपेन च सिद्धान्तकरणम्, तत् निर्युक्तिकत्वात् प्रयोजनाभावाच्च उपेक्षितम् ।

मण्डन— 'तत्राज्यभागाद्यधिकं च किंचन ।' तत्र पशुपुरोडाशे ।

शङ्कर— 'पुरोडाशे त्वस्य तु ।' ३ प्रकृतौ असत् न प्रयुज्यते, सत् तु प्रयुज्यते एव ।

* यदा तु निमित्तनिश्चयः चतुर्थीकरणकाले तदा देवताऽऽवाहनं पौरोडाशिकाज्यभागन्यायेन ( १२। १।२।७ ) कर्तव्यमित्युक्तं तन्त्ररत्ने । मीमा १०।१।१२ पर्णक ३

* पौरोडाशिककर्मार्थे हविष्कृदाह्वाने वाग्विसर्गं कार्यः अग्नीषोमीये पशौ । ११।३।८ मीको पृ १२२ 'अग्नीषोमीये पशौ वाग्विसर्ग •' इत्यत्र द्रष्टव्यम् ।

* पौरोडाशिकशब्दः मन्त्रब्राह्मणयोः अपठितत्वात् अवैदिकः न अङ्गाङ्गिभावः । स च शब्दः अवैदिकत्वेऽपि अनादित्वबाधात् विद्यमानस्मृतिमूलत्वाच्च प्रमाणम् । पौरोडाशिकशब्दोऽन्यस्य वाचक इति नैतद्दीक्षितम् । वा ३।३।७।१४ पृ ८४७

* पौरोडाशिकसमाख्यातत्वाद्ब्राह्मणाम्नातानां प्रयाजादीनां समाख्यया पुरोडाशमात्रार्थत्वे प्राप्ते प्रकरणात् सान्नाय्योपांशुयाजार्थत्वमपि सिद्धम् । प्रकरणं समाख्याया बलवत् । वा ३।३।७।१४ पृ ८३७-८३८

* पौरोडाशिकहविष्कृदाह्वानकाले पाशुकवाग्यमस्य विसर्गः । ११।३।८।१८

* पौर्णमासेष्टिगताग्नीषोमीयहविष एव उत्कर्षो ब्राह्मणस्य । आग्नेयेष्टिपूर्वतासोमपूर्वत्वयोस्तु विकल्प एव ब्राह्मणस्यापि । रत्न ५।४।५।१५-१६

* पौर्णमासहविःशब्देन अग्नीषोमीयपुरोडाशस्यैव ग्रहणं तस्यैव ब्राह्मणस्य सोमादुत्कर्षः । उपांशुयाजाज्यमपि अग्नीषोमीयं ब्राह्मणेन सोमात् प्राङ् न कर्तव्यम् । परन्तु प्राजापत्यं वैष्णवं वा कर्तव्यमेवेति न तस्योत्कर्षः । मा ५।४।८।१९-२१

* पौर्णमासी आग्नेयोपांश्वग्नीषोमीयाणां त्रयाणां यागानां समुदायः । अमावास्या आग्नेयं, ऐन्द्रं दधि ऐन्द्रं पयः इति त्रयाणां यागानां समुदायः । वि २।२।१. * पौर्णमासी न दर्शविकारः, न वा दर्शः पौर्णमासीविकारः । ५।१।१६ * पौर्णमासी सोमादूर्ध्वं द्विपुरोडाशा प्राक् सोमादेकपुरोडाशा । भा १०।८।१८।६२ * पौर्णमासी सोमात् प्राक् अग्नीषोमीयपुरोडाशरहितकेवलाग्नेयपुरोडाशयुक्ता भवति । तत्र च उपांशुयाजोऽपि वैष्णवः प्राजापत्यो वा कर्तव्यः । १०।८।१८

## पौर्णमासीमित्यत्र पौर्णमासीसमुदायविधिः ॥

( 'अग्नीषोमीयेण यजेत पौर्णमासीम्' 'अमावास्याममिचरन्' इति प्राकरणिकं वाक्यद्वयम् ) प्रथमवाक्ये तु प्रकृत एव अग्नीषोमीयो यागः अवेष्टिवत् पृथक्कृत्य फलाय विधीयते, द्वितीयविधिप्रकारे अतीव लाघवात् । तथा चेद्रव्ययागद्वतावत् नित्यकाम्योऽयम् । इति प्राप्ते, समुदायवाचिपौर्णमासीपदवैयर्थ्यापत्तेः उक्तरीत्या चतुर्थ एव विधिप्रकारो युक्तः । सङ्क १।२।१७

* 'पौर्णमासीं यजते' 'अमावास्यां यजते' इत्येतौ मन्त्रौ प्रक्रान्तानां कर्मणामनुवादिनौ । नापूर्वौ विधातारौ । २।२।३।३-८ * पौर्णमास्या मास्या पुरस्तात्चतुरहे यजमानस्य दीक्षा । ६।५।९।३०-३७ * पौर्णमास्या अग्नौ प्रकरणार्थे भारता नोत्पादनिता वा । मा ४।२।४।१०-१३ * पौर्णमास्याममिप्रसहितस्य ( सोमस्य ) चोदितत्वात् केवलस्य ( सोमस्य ) प्रकाशनमदेन्द्राधिकरणे निराकृतम् । वा. ३।१।१२।२३

## पौर्णमास्यामनियमोऽविशेषात् । ६।५।९। ३० ॥

'पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन्' इति गवामयने सत्रे श्रुता या पौर्णमासी सा कस्य मासस्य इत्यत्र अनियमः । पौर्णमास्या कस्या चित् ग्रहीतायामनियमः स्यात् । अविशेषात् विशेषस्य अनुच्चरणात् इति एकः पूर्वपक्षः ।

**आनन्तर्यात्तु चैत्री स्यात् । ३१ ॥**

प्रथमपूर्वपक्षनिराकरणाय तुशब्दः । न अनियमः किन्तु चैत्री पौर्णमासी स्यात् चित्रानक्षत्रयुक्ता चैत्रमासगता । कुतः ? आनन्तर्यात् । उक्तवाक्यादनन्तरं ' फाल्गुने चैषा पौर्णमासी संवत्सरस्य, या चैत्री पौर्णमासी ' इति श्रूयते । सन्दिग्धेषु वाक्यशेषात् इति न्यायेन सा पौर्णमासी चैत्रीति निश्चीयते इति द्वितीयः पूर्वपक्षः ।

**माघी वैकाष्टकाश्रुतेः । ३२ ॥**

पूर्वपक्षद्वयं प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । सा पौर्णमासी माघी माघमासस्य स्यात् । कुतः ? एकाष्टकाश्रुतेः । सोमक्रये हि एकाष्टकाश्रुतिर्भवति । 'तेषामेकाष्टकायां क्रयः सम्पद्यते ' इति । माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे दीक्षितानां एकाष्टकायां माघकृष्णाष्टम्यां क्रयः शक्यते कर्तुम् । तस्मात् माघी पौर्णमासी इति सिद्धान्तः ।

**अन्या अपीति चेत् । ३३ ॥**

पूर्वपक्षी शङ्कते । अन्या अपि अष्टम्यः सर्वाः एकाष्टका एव । द्वादश एकाष्टकाः । तथा च एकाष्टकायां कृष्णाष्टम्यां सोमक्रयसंपादनार्थं पौर्णमासीशब्देन या काचित् पौर्णमासी ग्राह्या अनियमेन । न चैत्री एव, न वा माघी एव । इति चेत् ।

**न, भाक्तत्वादेषा हि लोके । ३४ ॥**

सर्वा एव कृष्णाष्टम्यः अष्टकाः इति पूर्वपक्षोक्तं निरस्यति । सर्वाः कृष्णाष्टम्यः अष्टका यद्यपि भवन्ति । तासु अष्टकाशब्दस्य भाक्तत्वात् । एषा हि एषा एव माघी कृष्णाष्टमी लोके मुख्या । मुख्यगौणयोश्च मुख्ये संप्रत्ययः । तस्मात् माघकृष्णाष्टमी एव अष्टका स्यात् । मीमांसादर्शने तु भक्तित्वादिति पाठः स्वीकृतः । ' घ ' लिखितपुस्तके तु भाक्तत्वात् इत्येव पाठः ।

**दीक्षाऽपराधे चानुग्रहात् । ३५ ॥**

गवामयनस्य दीक्षा एकाष्टकायां यदि क्रियेत तदा तस्याः संमानः स्यात् । परन्तु ' चतुरहे पुरस्तात् पौर्णमास्याः ' इति वचनेन दीक्षा अन्यदा एव उक्ता । तेन दीक्षायाः अपराधः अन्यथाभावः अष्टकायां अनुग्रहः उक्तः । एतादृशे दीक्षापराधे सति अष्टकायाः अनुग्रहोऽप्युक्तः । ' तेषामेकाष्टकायां क्रयः सम्पद्यते, तेन एकाष्टकां न छंबट् कुर्वन्ति ' इति वचनेन एकाष्टकायां सोमक्रयः कर्तव्यो भवति, तेन च दीक्षाया एकाष्टकायाश्च संमान एव भवति, छम्बट् न कुर्वन्ति व्यर्थतां न कुर्वन्ति इत्युक्तम् । अस्मात् अनुग्रहवचनात् एकाष्टकायाः प्राक्तनी पौर्णमासी ' चतुरहे पुरस्तात् पौर्णमास्याः ' इति पौर्णमासीशब्देन ग्राह्या इति सिध्यति । सा च माघी पौर्णमासी एव नान्या इति ।

**उत्थाने चानुप्ररोहात् । ३६ ॥**

' चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्, तेषामेकाष्टकायां क्रयः सम्पद्यते ' इत्युक्ता पौर्णमासी माघी एव न चैत्री इत्यत्र हेत्वन्तरमाह सिद्धान्ती । एकाष्टकायां नाम माघकृष्णाष्टम्यां सोमक्रयं कृत्वा समारब्धं गवामयनं नाम सत्रं समाप्य यत् उत्थानम्, तत् माघान्ते स्यात् । ततो नातिदूरं वसन्तस्यारम्भः, 'मीनमेषौ वसन्त.' इति पद्धतेः स्वीकारात् । चैत्रपौर्णमास्याः समनन्तरगामिन्यां कृष्णाष्टम्यां सोमक्रये तु चैत्रान्ते उत्थानं स्यात्, स च वसन्तसमाप्तिकालः । उत्थानविषयकस्तु अर्थवाद एवं ' तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति ' इति । अत्र सत्त्रिणामुत्थाने सति तदनु ओषधिवनस्पतीनामुत्थानमुक्तम् । ओषधिवनस्पतीनामुत्थानं नाम प्ररोहः । स च प्ररोहः वसन्तादौ भवति न वसन्तान्ते । एतस्मात् ओषध्यादिप्ररोहार्थवादात् ज्ञायते माघान्ते एव गवामयनसमाप्तिरिति । अर्थात् गवामयनारम्भः माघे एव स्यात् । तेन ' पुरस्तात् चतुरहे पौर्णमास्याः ' इति पौर्णमासीशब्देन माघी एव पौर्णमासी ग्राह्या न चैत्री इति निश्चीयते । तदिदमुक्तं सूत्रेण । उत्थाने, गवामयनात् सत्त्रिणां उत्थाने सति, अनु तस्मादनन्तरम्, प्ररोहात् ओषधीनां वनस्पतीनां च उत्थानात् उत्थानप्रतिपादनात् पौर्णमासी माघी एवेति ।

**अस्यां च सर्वलिङ्गानि । ३७ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । अस्यां माघ्यां पौर्णमास्यां सर्वाणि लिङ्गानि युज्यन्ते न चैत्र्याम् । तथाहि, ' आर्तं वा एते संवत्सरस्याभि दीक्षन्ते, य एकाष्टकायां दीक्षन्ते ' इति । आर्तं

यस्मिन् काले भवन्ति तानि. स आर्त. कालः। शीतेन च आर्ता भवन्ति। शीतं च माघे, न चैत्रे। तथा 'व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' इति। अयनपरिवृत्तिः व्यस्तशब्देन उच्यते। अयनपरिवृत्तिश्च माघफाल्गुनयोः, न चैत्रे। तथा 'अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति' इति। माघान्ते शैत्ये सति अवभृथगमने अपामभिनन्दनं न स्यात्। चैत्रे तु अभिनन्दन्त. अवभृथमभ्येयुः। एतेभ्यो लिङ्गेभ्यो ज्ञायते माघ्याः पौर्णमास्याः पुरस्ताच्चतुरहे गवामयनस्य दीक्षा, न चैत्र्याः पौर्णमास्याः पुरस्तात् इति। के.

● पौर्णमास्याममावास्यायां वा ऐन्द्राग्नादयो विकृतयः कर्तव्याः, 'य इष्ट्या पशुना सोमेन वा यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेत' इति वचनात्। भा. ५।४।७।२२-२४. ● पौर्णमास्या आग्नेयादिषु देशकाल-कर्तॄणामेकत्वादङ्गानां तन्त्रेणानुष्ठानम्। ११।१।१०. ● पौर्णमास्यामेकपुरोडाशायामपि उपांशुयाजः। १०।८।१८।६२-७१. मीको. पृ. ११९५ 'उपांशुयाजः एकपुरोडाशायाम्' इत्यत्र द्रष्टव्यम्। ● पौर्णमास्यामेव उपांशुयाज.। तत्र च प्रजापतिः विष्णुः अग्नीषोमौ च विकल्पेन देवता। १०।८।१७।५१-६१. ● पौर्णमास्यां चतुर्दश आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्। (पञ्च प्रयाजाः द्वौ आज्यभागौ आग्नेयाग्नीषोमीयौ पुरोडाशौ उपांशुयाजः स्विष्टकृत् त्रयोऽनूयाजा इति चतुर्दश। अमावास्यायामुपांशुयाजाभावात् आग्नेयः ऐन्द्रं सान्नाय्य इति त्रयोदश)। भा. ४।१।४।१०. ● पौर्णमास्यां चतुर्होत्रा हविरभिमर्शनम्। 'पृथिवी होता' इत्यादिको मन्त्रश्चतुर्होता। वि. ३।७।४. ● 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालस्य नियमविधिः, नानुवाद.। भा. ४।२।७।२१-२४. ● 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालविधानेन अनेकेषां प्रधानानां साङ्गानां साहित्यावगमात् तन्निर्वाहाय पदार्थानुसमयः। मोम. ५।२।१. ● पौर्णमास्यां प्रधानकाले वत्सत्यजनम्, अमावास्यायां पूर्वेद्युः। भा. १२।१।१८।३९. ● 'पौर्णमास्या यजेत' इत्यादिना दर्शपूर्णमासकर्मणा सह कालस्य संबन्धो विधीयते, न कर्मान्तरम्। वि. ७।३।१३. ● पौर्णमास्यां वत्सापाकरणार्थायाः शाखाया अभावात् उपवेषाय शाखाच्छेदो न कर्तव्यः। अङ्गारेषु कपालोपधानार्थं कस्य चित् काष्ठस्योपादानं कार्यम्। ४।२।३. ● पौर्णमास्यां सूक्तवाकस्य प्रयोगे पूर्णमासीदेवतानां निष्कर्षे अमावास्यादेवतानामनन्वयः। इतरत्र चेतरासाम्। (तथा च इतरत्र इतरदेवतानां संकीर्तनमर्थलुप्तम्)। भा. ११।३।१६।९३. ● पौर्णमास्यां सोमात् प्राक् एकपुरोडाशायां सत्यामपि उपांशुयाजः स्यादेव। १०।८।१८. ● पौर्णमास्यां हविरभिवासनोत्तरं वेदिकरणम्। वाल. पृ. १९.

● पौर्णमास्यतिपाते प्रायश्चित्तं कृत्वा यत्र केवलं दर्शोऽनुष्ठीयते, तत्र दर्शाङ्गतया वैमृधो न कार्यः। मोम. ४।३।१४.

● पौर्णमास्यधिकरणम्। पौर्णमासीन्याय.। २।२।१।३-८. ● पौर्णमास्यधिकरणं विना इत्याधिकरणस्य (४।४।११) पूर्वपक्ष एव स्यात् इति इत्याधिकरणस्य पौर्णमास्यधिकरणप्रयोजनत्वेन आरम्भः। सु. पृ. ७१२. ● वार्त्रघ्न्यधिकरणस्य पौर्णमास्यधिकरणेनापौनरुक्त्यम्, विद्वद्वाक्ये कर्मान्तरत्वावेदकप्रमाणाभावात् तत्र मन्त्रविनियोजकत्वानुपपत्तावपि आग्नेयादिषु तदुपपत्तेः नानयोः (वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायां) व्यवस्थाऽर्थत्वं इत्यधिकाशङ्कोत्थानात्। प्रौ. १।१।१३।२३ पृ. २११. ● पौर्णमास्यधिकरणेन अभ्यासापवादः करिष्यते समुदायानुवादत्वात्। पौर्णमास्यधिकरणस्य च उपांशुयाज-(२।२।४) आघाराग्निहोत्र-(२।२।५), पशुसोमाधिकरणानि (२।२।६) अपवाद.। मा. २।१।१।१ पृ. ३७१. ● पौर्णमास्यधिकरणे अनेकगुणोपादानलक्षणस्य पूर्वकर्मसंयोगहेतोर्युत्पादनं कृतम्। सु. पृ. ८२७. ● पौर्णमास्यधिकरणे (२।२।३) अनेकगुणविधाने वाक्यभेदापत्तेः समुदायानुवादकत्वसिद्धिरभिधीयते। वाक्यार्थ. पृ. २० ● पौर्णमास्यधिकरणे एव प्राप्ते कर्मणि अनेकगुणविधानासंभवेन गुणनिमित्तकभेदो व्युत्पादितः। मोम. २।२।९. ● पौर्णमास्यधिकरणे 'गुणस्तु श्रुतिसंयोगात्' 'चोदना वा गुणानां युगपच्छास्त्रात्' इति सूत्राभ्यां प्रमाणान्तरप्राप्तकर्मणि अनेकगुणविधानं प्रपञ्चाभिप्रकृतम्।

कु. २।२।९।२३. ● आग्नेयवाक्ये आग्नेयद्वयं पौर्णमास्यमावास्याकालमित्युक्तं कौस्तुभे पौर्णमास्यधिकरणे। भाट्ट. ८।१।६. ● आमिक्षावाक्ये यावत् प्राप्तकर्मानुवादेन द्रव्यदेवतारूपानेकगुणविधानात् वाक्यभेदापत्तेः पौर्णमास्यधिकरणे प्रसङ्गादुक्तेन वाक्यभेदापादकेन गुणेनैव कर्मविधित्वमविवादम्। कौ. २।२।३।२२ पृ. १९६. ● दर्शपूर्णमासनाम्नः प्रसिद्धार्थकत्वं उपपादितं पौर्णमास्यधिकरणे। भाट्ट. ४।४।११. ● न केवलं अबाधपक्षपातितयैव यादवेन तयोः ( लिङ्गक्रमयोः ) अबाधः, अपितु नियमविधित्वप्रधानुरोधेनापि इत्युक्तं पौर्णमास्यधिकरणे। कौ. २।१।१३।२१ पृ. २११, ● 'य इष्ट्या' इत्यादौ यत्र प्रयोगेऽपि प्रसक्तस्य कर्मानुवादेन कालसंबन्धे विनियोगविधिरेव इत्युक्तं पौर्णमास्यधिकरणे। २। ३।१३।२६ पृ. ९३. ● यत्रानेकार्थविधिव्यापार विना विशेषणवैशिष्ट्यासिद्धिः, तत्र विशेषणविशेष्यसंबन्धसिद्ध्यर्थं विशिष्टविधानार्थं च विधायकप्रत्ययस्य व्यापारभेदात् विध्यावृत्त्या वाक्यभेदः, यथा पौर्णमास्यधिकरणे विद्वद्वाक्यविहितकर्मणि आग्नेयादिवाक्यैर्गुणविधिपक्षे। कु. २।१।१२।२७. ● यथापूर्वभावनाविधि. तत्र विधिफलस्य विशेष्ये एवैकस्मिन् अन्वयात् आर्थिकेन च विध्यन्तरेण विशेषणानां विधानात् नावृत्तिः इति स्पष्टं पौर्णमास्यधिकरणे। कौ. २।२।५।१६ पृ १९९, ● यत्र तु कारकत्वसंबन्धेन वृत्तिः यथा आग्नेयः इत्यादौ तत्र प्राथमिकक्रियाऽन्वयं विना कारकत्वायोगात् वृत्तेश्च पाष्ठिकसंबन्धेनापि निर्वाहोपपत्तेः नादावेव अष्टाकपालसंबन्ध.। अपितु भावनासंबन्धद्वारक एवासौ। विवरिष्यते चैतत् पौर्णमास्यधिकरणे वाक्यभेदोपपादनार्थम्। २।१।२।५ पृ. ३८, ● वार्त्रघ्नीवृधन्वतोः कालकृतव्यवस्थापक्षः पौर्णमास्यधिकरणे एव निराकृतः। भा२।१।३।२२ पृ. २११, ● वार्त्रघ्नीवृधन्वतीमन्त्राणां व्यवस्था च कर्मकृता ( न तु कालकृता ) इत्युक्तमेव पौर्णमास्यधिकरणे। ३।१।१३।२३ पृ. २१२. ● ( दर्शपूर्णमास-) समुदाययोश्च फलभावनान्वयानुपगमे पौर्णमास्यधिकरणे तद्विषयादरोऽपि विरुध्यते। मु. पृ. ६११

● अभ्यासनिमित्तभेदापवादभूता समुदायानुवादचिन्ता ( विद्वद्वाक्ये ) पौर्णमास्यधिकरणकृता। मु. पृ. ८०७.

● पौर्णमास्यधिकरणगुणसूत्रोक्तन्यायः। (२।२।३।६)। 'वाक्यान्तरेण चोदिते कर्मणि गुणानां कर्मार्थत्वात् परस्परार्थत्वाभावेन परस्परवैशिष्ट्याभावे सति एकगुणविशिष्टगुणान्तरविध्यसम्भवात् तत्रत्यतस्य गुणस्य कर्तव्यत्वमुपदिश्यते' इति। मोम. ६।१।२.

● दर्शे पूर्णमासे च विकल्पविकारस्य एकप्रयोगतासिद्धिः पञ्चदशोक्ता पौर्णमास्यधिकरणवार्त्तिकोपपादिता उपपद्या। वाल. पृ. १३.

● पौर्णमास्यमावास्याधिकरणम्। पौर्णमासीन्यायः। २।२।३।३-८.

● पौर्णमास्यमावास्याशब्दौ कर्मवाचिनौ, न तु हविर्वाचिनौ। वि. ३।७।४.

● पौर्णमास्यमावास्याशब्दन्यायेन ( पौर्णमासीन्यायेन २।२।३ ) आघाराग्निहोत्रशब्दयोः प्रत्येकरूपवाचित्वावधारणात् प्रत्येकरूपस्यैव धर्मित्वं वाच्यम्। तत्र विरुद्धम्। सु. पृ. ७६२.

● पौर्णमास्याविपर्यासोऽप्यनादरः सोमाधानपक्षे सोमकाण्डाधे इति केचित्। तत्त्वं तु प्रकृतनक्षत्रयोरेवानादरो नक्षत्रमन्त्रात् ( 'नर्तुं पृच्छेन नक्षत्रम्' )। पर्वपक्षादरस्त्वादरस्तु कर्तव्य एव। भाट्ट. ५।४।५.

● पौर्णमास्यादिसमुदायप्रयुक्तं नाभिमर्शनम्, किन्तु अपूर्वप्रयुक्तं दर्शपूर्णमासयोः। भा. ९।१।५। ११-१९.

● पौर्णमासीकालः वैकल्पिकी विष्ण्वादि। देवता च उपांशुयाजे। १०।८।१७।५१-६१.

● पौर्णमासीगताग्नीषोमीयस्य हविषः ब्राह्मणस्य सोमादूर्ध्वमुत्कर्षः। पौर्णमासेष्टेरेवोत्कर्ष इत्येकदेशिमतम्। भा. ५।४।४।१०-१४.

☒ पौर्णमासीन्यायः। विद्वद्वाक्यद्वयं समुदायद्वयानुवादः॥

प्रकरणं तु पौर्णमास्यां रूपावचनात्। २।२। ३।३॥

भाष्यम्— एवं हि समामनन्ति ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् इति, ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छन्, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम् ' इति । तथा ' आघारमाघारयति ' ' आज्यभागौ यजति ' ' स्विष्टकृते समवद्यति ' ' पत्नीसंयाजान् यजति ' ' समिष्टयजुर्जुहोति ' । तथा ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इति । तत्र संदेहः सर्वाण्येतानि समप्रधानानि उत आग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि आरादुपकारकाण्यङ्गानि । तथा य एवं विद्वानित्येवं संयुक्तौ प्रकृतानां कर्मणामनुवदितारौ अथवा ' य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते ' इत्यपूर्वयोः कर्मणोर्विधातारौ, तन्नैव गुणविधय इति । किं प्राप्तम् ? शब्दान्तरत्वादभ्यासाच्च समप्रधानानि । इति प्राप्ते, ब्रूमः । प्रकरणं तु पौर्णमास्याम्, प्रकृतानामाग्नेयादीनामनुवदितारौ पौर्णमास्यमावास्याशब्दौ । कुतः । रूपावचनात् । य एवं विद्वान् पौर्णमासीसंज्ञकं यागं यजते इति न सर्वे यागा उच्यन्ते । यः पौर्णमासीसंज्ञकः स विधीयते । न चैतदेवमवगच्छाम कीदृशमेतत्संज्ञकस्य यागस्य रूपमिति । तेन न किञ्चित् प्रतिपद्येमहि । अतो ब्रूमो ऽपूर्वस्य विधातारावनर्थकाविति । अथ तु प्रकृताना मनुवदितारौ, तत्र संनिहिता पौर्णमास्यमावास्याशब्दयुक्ता यागा इति गम्यते रूपम् । तस्मादनुवादौ वचनम् । कथं पुनरेकवचनान्तौ बहूनां वाचकौ भविष्यत इति यदुच्यते, समुदायशब्दतया अवकल्प्यते । रूपवन्तो हि पूर्वं प्रकृता यागाः । तेषां च प्रत्ययविशिष्टः समुदायोऽप्यस्ति । तदपेक्षोऽयमेकशब्दः । तस्मादेकवचनान्तता न दोषः । भवति हि बहूनामेकवचनान्तः शब्दः समुदायापेक्षो यथा यूथं वनं कुलं परिषदिति । यदा आग्नेयादीनां समुदायवचनावेतौ, तदा दर्शपूर्णमासशब्दाभ्यामेते एवाभिधीयन्ते । तत्र एषां फलमेव, फलवत्संनिधेस्तु आघारादीनि आरादुपकारकाणीति ।

व्या— समस्तान् दर्शपूर्णमासप्रकरणयागविधीनुदाहृत्य किं सर्वेषां प्रधानत्वम्, उत केषाञ्चिदेव इति भाष्यकारेण विचारः प्रस्तुतः । तत्राभिधीयते ' अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरा । केन नाम प्रसङ्गेन प्रस्तुता भेदलक्षणे ॥ ' अभ्यासलक्षणभेदानन्तरमिदानीं संख्यानिमित्तं भेदमविचार्यैव कथमत्र लक्षणानौपयिकोऽर्थश्चिन्त्यते । केचिदाहुः, अयमपि लक्षणार्थ एव ' अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते ' इति (भाष्य-) वचनात् ( भा. २।१।१ पृ ३७१ ) । तदयुक्तम् । तत्रैव पर्यनुयुज्य वचनस्य अन्यथैव व्याख्यानात् । अपूर्वभेदप्रतीत्यर्थो हि स तृतीयविचारोऽर्थः अत्रोपन्यस्त इत्युक्तम् । अत्र तु कर्मणामङ्गाङ्गिभावो न कथञ्चिद् उपलभ्यते । महता प्रयत्नेन अथ चतुर्थे साधयिष्यते ' दर्शपूर्णमासयोरिज्याः प्रधानानि ' इत्यत्राधिकरणे । स्फुटत्वाच्च नान्यथा कर्तुं शक्यते । तस्मादिह अविचारणीयमेतत् । ' य एवं विद्वान् ' इत्येवं संयुक्तौ प्रकृतानुवादौ, अथवा अपूर्वकर्मविधी ' तन्नैव गुणविधयः ' इत्यपि सर्वं ( भाष्योक्तम् ) यथोपन्यस्तेनापि अधिकरणेन न संगच्छते । अथ तु एतदेव विचार्यते, तत् पूर्वं नोपपादितम् । अपि च ' भेदे च दृष्टसामर्थ्यौ समप्राधान्यसिद्धये । कथं शब्दान्तराभ्यासौ हेतुत्वे नोपवर्णितौ ॥ ' ' शब्दान्तरादभ्यासाच्च भेदस्तावदुच्यते, समप्रधानत्वमपि एताभ्यामेव प्रतिपाद्यते ' इत्ययुक्तिः । न चा अधिकरणद्वयशरीरस्य विविक्ताः पक्षादयो दृश्यन्ते, येन तत्रैव विचारद्वयमिदं प्रस्तुतमित्यध्यवस्येम ।

तस्मादेवं समर्थयितव्यम् । इह अभ्यासलक्षणभेदातिप्रसङ्गापवादार्थे अधिकरणे आरभ्यमाणे यथोदाहृतानां मध्ये द्वे परोदाहरणे ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इति । तत्र संदेहः किमेतौ यजतिशब्दौ अपूर्वयोः कर्मणोर्विधायकौ, उत पौर्णमास्यमावास्याशब्दाभ्यां स्वाभिधेयकालविशेषयुक्तकर्मप्रतिपादकाभ्यां विशेष्यमाणौ प्रकृतानेव कांश्चित् यागान् अनुवदत इति । तत्र इतरेषामाग्नेयादीनां गुणात्, प्रयाजादीनामभ्यासात्, आघारादीनां शब्दान्तरत्वात् सिद्धे भेदे अधिकरणद्वयप्रयोजनभूतसमप्रधान-

भावाङ्गाङ्गिभावविषयत्वेन उपन्यासो नाधिकरणशरीरविषयत्वेन । नहि समप्रधानत्वमङ्गाङ्गिभावश्च अधिकरणपक्षौ इत्युक्तम् । यदिह पौर्णमास्यमावास्यासंयुक्तयोर्विधानद्वयम्, तदभिधेयकर्मभेदः, समस्तानामाग्नेयादीनां समप्राधान्यम्, इत्येवम् त्रयं उत्तरोत्तरफलत्वेन अविनाभावसम्बन्धात् एकः पक्षः । तथा तयोरनुवादत्वम्, तदेकस्य कर्मणोऽभेदः, आग्नेयादीन् प्रति आघारादीनामङ्गत्वम्, इति तेनैव प्रकारेण अपरः पक्षः । निश्चयस्यानिश्चयस्य च स्वागाविनाभावात् एकसिद्धयैव इतरद्वयसिद्धिर्भवति इति पक्षद्वयेऽपि यदेव साधितम्, तेनैव इष्टसिद्धिं मत्वा फलभूतस्तृतीयः तृतीयोऽत्र उपन्यस्तः । तत्र चार्थगृहीतावपि भेदाभेदौ विस्पष्टीकरणार्थं पुनस्ते दर्शितौ । किमर्थं पुनरादौ व्यवहितयोः समप्रधानाङ्गाङ्गिभावद्वारेण भेदाभेदयोरुपन्यासः कृतः ? एषा हि आचार्यस्य शैली इति केचित् ( कल्पत उपन्यासो भाष्यक्रमक्रिया इति ) । तथाहि पूर्वाधिकरणेऽपि अपूर्वभेदमेव उपन्यस्तवान् । ( क्रमतेन लिङ्गदर्शनानुसारेण एवं कृतमिति परिहरति– ) अथवा यत् लिङ्गदर्शनं वक्ष्यति ' विकृतौ प्रकृतावाज्यौ दृश्यन्ते ' इति (चतुर्थसूत्रे), तत् साक्षात् भेदनिराकरणाय असमर्थं समप्रधानभावं निराकरिष्यति । तन्निराकरणे च सति अविनाभावात् विधिभेदावपि निराकृतावेव भवतः, इति तदुपजीवनाय उपन्यासः । केवलभेदोपन्यासे तु तदसङ्गमेव स्यात् ।

तत्र द्वेधा पूर्वपक्षो भविष्यति । एकः समप्राधान्यद्वारेण आग्नेयादीनां कर्मविभिन्नत्वे सत्येव पौर्णमास्यमावास्यासंयुक्तयोः तद्व्यतिरिक्तकर्मविधानात्, अपरः पुनः तयोरेव कर्मविधिर्न इतरेषां तु गुणविधानार्थत्वं इत्येवम् । प्रथमं तावत् व्यतिरेकपक्षं परिगृह्णाति ' शब्दान्तरत्वात् अभ्यासाच्च समप्रधानानि ' इति । यद्यपि चैतौ हेतू साक्षात् समप्रधानत्वेन न सम्बध्येते, तथापि तत्प्रतिज्ञात्वेन योऽर्थात् भेदः प्रतिज्ञातः, तेन संबन्धादेकवाक्यत्वम् । एतदुक्तं भवति– ' यागेभ्यः शब्दान्तरत्वात्, यागेभ्यश्च अभ्यासात् भेदः, ततश्च समप्रधानानि ' इति । न च समस्तानुवादस्य किञ्चित् प्रयोजनमस्ति । न च गुणफलनिमित्तानां किञ्चित् श्रूयते, येन विधिव्यापारतः कर्मस्वरूपविधानमुपेक्षेत । न च एषा संज्ञा केषु चित् प्रकृतेषु प्रसिद्धा । वर्तमानापदेशेऽपि च सति प्रयोगवचनार्थवादपञ्चमलकारादीनामन्यतमेन ' समिधो यजति ' इत्यादिवत् विधिः । अस्यापि च यच्छब्दोपबन्धे ' यदाग्नेयोऽष्टाकपालः ' इत्यादिवत् विधिशक्त्यनवलोपः । न च शाखान्तरीयवत् विधिविकल्पः, शाखाऽन्तरेण पुरुषान्तरं प्रति प्रतिपादनेन अर्थवत्त्वात् । न तु [illegible] कर्मान्तरकल्पनादन्यत् प्रयोजनमस्ति । न च कस्य चिदन्यस्य विधेः श्रुतिः संभवति, एकवाक्यत्वाभावात् । किं पुनरनयोः कर्मणोर्द्रव्यदेवतम् ? तदुच्यते । ' ध्रौवं साधारणं द्रव्यं, देवता मान्त्रवर्णिकी । रूपवन्तावतो यागौ विधीयेते पृथक्तया ॥ ' ' सर्वस्मै वा एतद् यज्ञाय गृह्यते ' इति सर्वार्थत्वात् यथैव उपांशुयाजस्य ध्रौवाज्यद्रव्यकत्वम्, एवमनयोरपि यागयोः । तथा आज्यभागयोः क्रमे चतस्रोऽनुवाक्याः पठ्यन्ते द्वे आग्नेय्यौ, द्वे सौम्यौ । ते बलीयसा वाक्येन अवच्छिद्य अनयोः कर्मणोर्विधीयेते ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' इति । नहि पौर्णमास्यमावास्याशब्दाभ्यां एतत्कर्मव्यतिरिक्तं अन्यदिहोच्यते । ननु कालवचनावेतौ इह प्रयुज्येते । ( परिहरति- ) किं ( हि ) कालस्य मन्त्रसम्बन्धेन । इह च सप्तमीनिर्दिष्टेन कर्मणा प्रधानभावः । यथा ' येन कर्मणेर्त्सेत्, तत्र जयान् जुहुयात् ' इति । तेन अनुवाक्याद्वयस्य तुल्यार्थतया विकल्प्यमानस्य अनुरूपा याज्याऽपि कल्पयितव्या । ( आग्नेय्यनुवाक्यापक्षे याज्याऽपि आग्नेयी, सौमीपक्षे सौमी कल्प्या इति एकः परिहारः ) । अथवा युगपद्विधानात् समुच्चये सति द्विदेवत्यकर्माभ्युपगमात् द्वे द्वे याज्ये अपि कल्पयितव्ये । ( इतरेतरयोर्विहितद्वन्द्वापवादत्वेन एकशेषस्यापि इतरेतरयोगाभिधानात् अनुवाक्याद्वयस्य समुच्चयप्रतीतेस्तद्वशेन अग्नीषोमयोर्देवतात्वकल्पनात् द्वयोरर्थवत्त्वम्, याज्या च तदानुरूप्येणैव आग्नेयी सौमी चान्या कल्प्या इति द्वितीयः प्रकारः । कल्पनागौरवेऽपि एकैव द्विदेवत्या याज्या इति तृतीय प्रकारमाह– ) यद्वा एकैव अग्नीषोमदेवत्या । ( एकस्मिन् कर्मणि अनुवाक्याद्वयानर्थक्यात्,

याज्याऽनुवाक्यात्वेऽपि च इतरेतरयोगोपपत्तौ अनुग्रहस्य च याज्याणामपि प्रैषप्रश्वाद्भावेन अविरोधात्, समुच्चितयोश्च अङ्गत्वेन अग्नीषोमदैवत्यकर्माध्यवसानात्, मनोतान्यायेन एकदेशद्वारा तत्प्रकाशनेन उभयोः सवादोपपत्तेः, अश्रुतकल्पनापरिहाराच्च श्रुतयोरेव मध्ये अनुवाक्या एका, याज्या एका । इति चतुर्थं प्रकारमाह– ) अथवा वार्त्रघ्न्योरेव एका याज्या कर्तव्या, तथा वृधन्वत्योः । अतश्च श्रुतिविहितमन्त्रकर्मभन्त्यान्यथाऽनुपपत्त्या अग्नीषोमौ देवता उभयत्राध्यवसीयते । आज्यभागयोस्तु पृथक्त्वसरूपेण वाक्येन देवता तावत् प्राप्तेव, 'यस्यै कस्यै चिद् देवतायै हविर्निर्वपन् आज्यस्यैव नौ पुरस्ताद् यजन्' इति । याज्याप्रानिधानाधिकैव अनुवाक्याऽऽगमश्च दाशतयीभ्यः कर्तव्य. इति न किञ्चिद् विरुद्धम् । तस्मादेकि कर्मान्तरत्वेऽपि स्वरमिति भेदः । अतश्च समप्रधानानि । ( आशङ्कते– ) भेद इति गृह्णीमः, समप्रधानत्व तु न मृष्यामहे । कुतः ? 'निवेशः केषु चित् त्वेष पृथक्त्वेनाभिधानयोः । फलं च तद्विशिष्टेभ्य इति साम्यं न युज्यते ॥' ( श्लोकं व्याचष्टे– ) दर्शपूर्णमासाभिधाने हि विशिष्टयागवाचिनी, तेन तन्नामत्वैव फलत्वात् इतरेषा तत्संनिधानात् अङ्गत्वेन भवितव्यम् । ( आशङ्का निराकरोति पूर्वपक्षी– ) अत्राभिधीयते । 'प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम् । तस्माद् यथ्यनुरोधेन नामार्थोऽत्र निरूप्यते ॥' सर्वत्र नामयुक्तकर्मविधाने सामानाधिकरण्यात् कदाचित् यत्यर्थविशेषो नाम्ना निरूप्यते, कदाचित् नामार्थो यजिना । यो यत्र पूर्वमप्रसिद्धार्थो भवति, स इतर स्वविषये व्यापयति, यथा 'ज्योतिष्टोमेन' इत्यत्र ज्योतिर्भिः त्रिवृदादिभि. स्तोमैर्योगात् प्रसिद्धा येन नाम्ना दीक्षणीयाऽऽदिभ्यो यजिः निवर्त्य सोमयागे स्थाप्यते । तथा 'राजसूयेन' इत्यत्र नाम यागाख्यविषयत्वेन उपलभ्यमान महाकाशप्रसिद्धेन यजिना स्वविषय नीयते । तदिह प्रातिपदिकद्वयसमासद्विवचनार्थेना दर्शपूर्णमासपदोपात्ताना न प्रसिद्धिरस्ति, यथा यजेतद्विषयत्व विशायेत । यजिः पुनर्दर्शगमाने प्रसक्तः सन् अधिकारेण प्रकृतेषु स्थापित शक्नोति अप्रसिद्धं दर्शपूर्णमासशब्द स्वविषये नियन्तुम् । ततश्च 'दर्शपूर्णमासाभ्याम्' इति अविवक्षितावयवसमासार्थद्विवचनं वर्णलोहीभावमात्ररूपेण ( वर्णपङ्क्तिमात्ररूपत्वेन इति रूढिता उक्ता ) वैश्वदेवत्वादिप्रकृताशेषयागनामत्व राजसूयशब्दवत् प्रतिपद्यते । 'सुपा सुपो भवन्ति' इति बहुवचनस्य स्थाने द्विवचन समस्तसमुदायगतैकवचनस्य वा । कथ पुनः 'दर्शपूर्णमासाभ्याम्' इत्यप्रसिद्धम् ? ( उत्तरम्– ) यदा तावत् 'वाच्यकालयुजो यागाः प्रवृत्ताः सन्ति के चन । द्विसंख्योत्पत्तियुक्ताश्च प्रसिद्धिर्येषु विद्यते ॥' तदाम अशेषस्वार्थपरित्यागेन अन्यन्तरस्यानुरोधिवृत्तिं भजते, यत्र कश्चिदपि अंशः अप्रसिद्धः । ह्य नु दर्शन कालेन पौर्णमासेन च संयुक्ता आग्नेयादियागा विधन्ते । द्वित्वयुक्ताश्च आज्यभागादयः, तेषामयुक्तः परित्याग इति । ( स्वार्थासमासस्य वाक्यस्य वाक्यान्तरानन्वयवत् पदस्यापि स्वार्थासमासस्य पदान्तरानन्वयात् नैवैकाशप्रसिद्धिमात्रेण यजिविशेषकता युक्ता इति परिहरति– ) तदुच्यते । 'प्रकृतिप्रत्ययौ पूर्णौ विशेष्टुं यजतिं क्षमौ । आग्नेयाद्याज्यभागाद्या वेकत्रैकार्थशून्यता ॥' यद्यपि आग्नेयादिषु स्वाभिधेयकालयोगात् प्रातिपदिक वर्तेत, तथापि तेषा बहुत्वाद् द्वित्वानुपपत्तेः असमर्थं पदम् , यत्रापि द्वित्वमस्ति आघारयोराज्यभागयोर्वा, तत्रापि प्रातिपदिकस्य अत्यन्ताशक्तिः । न च अर्थप्रकरणशब्दान्तरैः विस्पष्टं सामानाधिकरण्यमस्ति, येन केनचित् वर्णसामान्यात् आख्याविकारन्यायेन ( आख्याविकारन्यायशब्दे द्रष्टव्यम् ) गौणत्वेन वा तद्विषयत्वमध्यवसीयेत ।

कस्मात् पुनः इमावेव अपूर्वौ पूर्ण– ( पौर्ण– ) मास्यमावास्याशब्दौ द्वौ यागौ फलाय न विधीयेते ? तथाहि, 'सिद्धान्तेऽपि तु याद्दृग्भ्यां शब्दाभ्यामनुकीर्तितौ । तावेव समुदायौ द्वौ विधास्येते फलं प्रति ॥' यदि कश्चित् 'दर्शपूर्णमासशब्दयोः पौर्णमास्यमावास्याशब्दयोश्च वैलक्षण्यात् न पूर्वनर्मप्रसमिशान फलवाक्ये अस्ति' इति ब्रूयात् , स वक्तव्यः 'तुल्यत्वे दोषोऽयम्' इति । तत्रापि हि पौर्णमास्यमावास्यानामकावेव समुदायौ फलवन्तौ इष्टौ, न च तयोः प्रयोगवाक्ये अस्ति

शब्दत्वात् प्रत्यभिज्ञानम्। अथ तत्र विनाऽपि सञ्ज्ञाऽनुसारेण कालयोगात् वृत्तिरिष्यते, स ममापि अस्त्येव कालयोगः 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति। नैतदेवम्। एवमपि हि 'षण्णामग्न्यादियागानामनयोश्च (दर्शपूर्णमासयागयोः) द्वयोरपि। समानः कालसंयोग इति नैष्टावधारणा॥' नहि षण्णां कालसंयोगे सति अवधारणे हेतुरस्ति, येन अनयोरेव फलसंबन्धः स्यात्। स्यादेतत् एतेषां मध्ये ययोः कयोश्चित् फलसंबन्ध इति, तदयुक्तम्। 'विशेषहेत्वभावे हि ग्रहणं निष्प्रमाणकम्। पक्षे चाऽप्रधानत्वं विरोधान्न विकल्पते॥' विना विशेषहेतुना यागद्वयस्य फलसंबन्धग्रहणे सति यावेन गृहीतौ तयोरेव इतरेषां प्राधान्यप्रामाण्याभावात् स्ता अङ्गत्वापादनाद्विरुद्धता स्यात्। अथ विकल्पेन सर्वेषां पाक्षिकोऽनुग्रहः कल्प्येत, तथापि तस्यैव कदा चित् प्रधानत्वम्, कदा चिदङ्गत्वमिति विप्रतिषिद्धम्। उभयात्मना चाङ्गतया प्रवृत्तेः, प्रधानत्वेन च निवृत्तेः आग्नेयादीनां विकृतिगमने यावज्जीवं संशयप्रसङ्गः। सर्वसंख्याश्च केन चित् अवान्तरसामान्यावच्छेदेन संख्येयेषु वर्तन्ते। न वा अपूर्वयोः आग्नेयादीनां वा समस्तानामेकदेशो वा किञ्चिदवान्तरसामान्यं दृश्यते, येन द्वित्वमवधार्येत। य एव हि गृहीतस्तस्यैव यागान्तरापेक्षया तद्भूतेन बहुत्वेन केवलत्वापेक्षेण चैकत्वेन द्वित्वं बाध्यते। ततश्च द्विवचनस्याप्रसिद्धिः। सिद्धान्ते तु शब्दद्वयेन समुदायद्वयप्रतिपादनात् असमुदायीकृतयागवैलक्षण्यात् अवान्तरधर्मयोगात् संभवति द्वित्वयोगः। तद्द्वारेण च कालयोगात् कथञ्चित् दर्शपूर्णमासशब्दयोरपि वृत्तिसिद्धिः, इत्युपपद्यते यागविशेषणत्वम्, न तु पूर्वपक्षे समुदायत्वापादनाभावात् संख्यावृत्तिः इति प्रकृतयागमात्रे एव फलसम्बन्धः। (शङ्कते—) अथ कस्मात् षडेव यागाः पौर्णमास्यमावास्याकालत्वात् द्वित्वापेक्षया लब्धविशेषणाः सन्तो न विधीयन्ते, यथा सिद्धान्ते समुदायगतद्वित्वापेक्षया षट् विधास्यन्ते। (परिहरति—) न ईदृशेन अस्फुटेन प्रकृतयागमात्रावलम्बि आख्यातं शक्यं निवर्तयितुम्। न च अत्यन्तव्यतिरेकात् कालगता संख्या यागसामानाधिकरण्यनिर्देशार्हा भवति। समुदायसमुदायिनोस्तु अव्यतिरेकात् अविरुद्धः संख्यासम्बन्धः सिद्धान्ते। (पूर्वपक्षप्रयोजनमुपपादितमुपसंहरति—) तस्मात् पूर्वपक्षे यजिवशेनैव नामशब्दवृत्तेः अविशेषेण सर्वे यागाः समप्रधानाः। [वस्तुतः पूर्वपक्षोपसंहार एवायम्]।

(सूत्रं द्वेधा योजयन् तत्सिद्धान्तमाह—) तथा प्राप्ते, अभिधीयते। प्रकरणं पौर्णमास्यमावास्याशब्दयुक्तयोः आलम्बनं स्यात्। प्रक्रियते इति प्रकरणम्। अथवा प्रकरणं तयोः सहकारि भवेत्। ततश्च तन्मात्रप्रतिपाद्यः सर्वः प्रहीनः। (पौर्णमासीशब्देन उदाहरणीभूतविधिवाक्ययोः उपलक्षणम्। प्रकरणशब्दस्य कर्मव्युत्पत्तौ आलम्बनपदाध्याहारः, भावव्युत्पत्तौ च सहकारिपदाध्याहारः)। कुतः? 'विधायको नियुङ्क्ते हि सर्वोऽसाधारणे विधौ। न च तत्र प्रवृत्तिः स्यादज्ञातद्रव्यदेवते॥' नहि अनेन यदिना पौर्णमास्यमावास्यापदाभ्यां वा यागमात्रे बुद्धिः क्रियते। न च प्रकृतकर्मग्रहणं स्वपक्षेऽस्ति। तत्र अज्ञातरूपे सति अपूर्वे कर्मणि न कथञ्चित् प्रवर्तेत, ततश्च वाक्यमेव अनर्थकं भवेत्। प्रकृतग्रहणे तु तेषां द्रव्यदेवतायोगात् एतत्कालविशिष्टस्य स्वरूपावगतेरर्थवत्त्वम्। ननु उक्तं मत्पक्षेऽपि अस्ति द्रव्यदेवतमिति, सत्यम् 'यथाकथञ्चिल्लभ्येत द्रव्यं साधारणं स्थितम्। तथापि देवता नास्तीत्यनुपपत्त्या न मुच्यते॥' नहि मान्त्रवर्णिकी देवता संभवति, मन्त्राणां क्रमविशेषेण आग्नेयाद्यर्थत्वात्। न च अस्य वाक्येन बाधः, विरोधाभावात्। सर्वत्र हि अविरोधेन शास्त्रे विधीयमाने विरोधपक्षस्त्याज्यः। इह च ('वार्त्रघ्नी पौर्णमास्याम्, वृधन्वती अमावास्यायाम्' इति वाक्ययोः) पौर्णमास्यमावास्याशब्दौ यदि कर्मवचनावेव स्याताम्, ततो न विरोधः परिह्रियेत। कालवचनत्वे तु अनयोरविरोधः। साधारण्याच्च अविरोधपक्ष एव समर्थनीयः।

किञ्च। 'प्रथमं काल एताभ्यां शब्दाभ्यां प्रतिपाद्यते। पश्चात् तत् कर्म तद्योगादतः कालोऽत्र गृह्यते॥' यदि हि सर्वलोकप्रसिद्धः कालः अत्र न संभवेत्, ततः तद्द्वारकेण कर्मणो ग्रहे-

याताम् । अपिच उपपन्नतरा कालवचनत्वे सप्तमी । तस्य सर्वस्यैव कालस्य अधिकरणत्वात् न कर्मणः । अधिकरणत्वानुपपत्तेः यथाकथञ्चित् कल्पनीया स्यात् । यत्तु किं कालस्य मन्त्रसम्बन्धेन इति, यदि तादर्थ्यलक्षण एवैकः संबन्धो भवेत्, स चात्र अस्माभिरुच्येत, तत एवं युज्यते वक्तुम् । इह तु आज्यभागौ प्रति तादर्थ्ये व्यवस्थिते, सपर्वे च मासे कालभेदेन प्रयुज्यमानयोर्मन्त्रयोः व्यवस्था मात्रं क्रियते 'वार्त्रघ्नी पौर्णमास्यामाज्यभागयोः, वृधन्वती अमावास्यायाः' इति । किञ्च, 'प्रज्ञातदेवतत्वाच्च दृष्टार्थोऽल्पार्थप्रधानता । मत्पक्षे, भवतस्त्वत्र प्रसक्ता बहुकल्पना ॥' सर्वत्रैव आकाङ्क्षापूर्वकः सम्बन्धो भवति । आज्यभागौ च प्रज्ञाताग्नीषोमदेवत्यौ तदभिधानसमर्थमन्त्राकाङ्क्षित्वाद्यत्नेन मन्त्रान् गृह्णीतः । त्वत्पक्षे तु अपूर्वयोः कर्मणोः अज्ञातदेवतत्वात् न मन्त्रापेक्षा । तत्र मन्त्रतद्विशेषद्वित्वादिकल्पनात् अनपेक्षितानेकार्थविधिप्रसङ्गः । पुनश्च मान्त्रवर्णिकानेकदेवताकल्पना । नहि एकस्य कर्मणः अनेकया देवतया, अनेकया अनुवाक्यया (च) कार्यमस्ति । पुनश्च अश्रुतयाज्याकल्पनाश्रयणम्, आज्यभागयोश्च अश्रुतपुरोऽनुवाक्याकल्पनम् । यत्तु 'एका याज्या एका चानुवाक्या भविष्यति' इति, न तत्, अनुवाक्यासमाख्याभावात् । अपिच त्वत्पक्षे लिङ्गस्य अविनियोजकत्वात् वाक्ये च करणत्वेन आश्रयणात् 'वैष्णवीमनूच्य' इत्यादिवत् अदृष्टार्थत्वप्रसक्तेः न मन्त्रकल्पना, मन्त्रत्वेन अनपेक्षितत्वात् । मान्त्रवर्णिकदेवताकल्पनातश्च कर्मणामुपकारकत्वम् । आज्यभागयोः पुनर्द्वित्वात् प्रज्ञातदेवतत्वाच्च प्रकाश्याकाङ्क्षिताः प्रकाशका मन्त्राः लिङ्गक्रमविनियुक्ताः सन्तः एकान्तेन दृष्टार्थतां प्रतिपद्यन्ते । तत्र च मन्त्रतद्विशेषद्वित्वादिषु प्राप्तेषु कालद्वारेण व्यवस्थामात्रविधानात् लाघवं वाक्यस्य, 'न चानर्थक्यम्' (सुधापाठः पृ. ७२८) । नहि सन्निधानात् व्यवस्था सिद्धा । (मान्त्रवर्णिकदेवताप्राप्त्यभावमुपसंहरति—) तस्मात् देवताविधिः अशक्यत्वात् । (सूत्रार्थमुपसंहरति—) अतश्च अरूपत्वात् अकर्मान्तरता । (आनर्थक्यापत्त्या अनुवादस्यानुपपत्तिमाशङ्कते—) किं पुनः समस्तानुवादस्य प्रयोजनम्' (आनर्थक्यमुपपादयति—) यत्र 'यद्वद्भागवाक्यार्थविधिशून्या हि चोदना । धर्मं प्रत्युपयोगित्वं न कथञ्चित् प्रपद्यते ॥' ('दध्ना जुहोति' इति करणत्वेन दधिविधानात् पदार्थचोदना । 'दण्डी प्रैषानन्वाह' इति दण्डप्रातिपदिकार्थविधानात् तद्भागार्थचोदना । 'सोमेन यजेत' इति विशिष्टविधानात् वाक्यार्थचोदना इति । विद्वद्वाक्ययोरपि प्रयोगवचनाङ्गत्वात् धर्मप्रयोपयोगो भविष्यति इति परिहरति—) उच्यते 'यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता । तथैव तदुपादानात् द्वित्वसङ्ख्याऽनयोरपि ॥' (तदुपादानात् द्वित्वस्योपादानात्) । वाक्यद्वयेन हि समुदायद्वये कल्पिते 'दर्शपूर्णमासाभ्याम्' इति द्विवचनं सिध्यति इत्यर्थवत्त्वम् । नहि विधिरेवैकः प्रयोजनवान् इति कश्चित् नियमहेतुरस्ति, अविधेरपि विधिशेषत्वेन अर्थवत्त्वात् । न चात्र विप्रकीर्णानामाग्नेयादीनां एतद्वाक्यद्वयमन्तरेण द्वित्वसंख्यायोगित्वं संभवति । एतदेव चाभिप्रेत्य अस्य पक्षस्य प्रयोजनमेव गुणप्रधानत्वं आदित उपन्यस्तम् (भाष्ये) । इतरथा हि 'अविशेषादनर्थकं हि स्यात्' (२।२।३।२) इत्यस्योत्तरमपरिकल्प्य अनुवादपक्षो दुरुपन्यास एव स्यात् । (अनुवादानर्थक्यपरिहारमुपसंहरति—) तस्मात् अस्ति प्रयोजनं समस्तवाक्यानुवादेऽपि इत्यदोषः ।

कथं पुनः अत्यन्तभिन्नानां कर्मणां समुदायीकरणं शक्यम् । शक्यमिति ब्रूमः । 'एककालत्वसंयोगात् भिन्नानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥' यथैव हि एकदेशस्थितान् वृक्षान् आलोच्य 'वनम्' इति समुदायबुद्धिर्भवति, एवं एककालयुक्तकर्मसमुदायनामधेयबुद्धिः । तद्गतैकत्वावधारणाच्च 'पौर्णमासीम्' इत्येकवचननिर्देशः । समुदायिवचनात्वे चैतौ तल्लक्षितसमुदायगतसंख्याद्वारेण एकवचनान्तत्वं बिभृतो, न समुदाययोरेव नामधेये सतः । तथाहि, 'सामानाधिकरण्येन यागनामत्वनिश्चयः । समुदाये च यागत्वं नाग्नेयादिष्ववस्थितम् ॥' (नञं पूर्वेण सम्बध्य 'किन्तु' इत्यध्याहारेण उत्तरार्धो योज्यः) । 'पौर्णमासीं यजते' इति यजि-

सामानाधिकरण्यात् यागनामधेयमेतत् इति गम्यते । न च आग्नेयादीनां समुदाये यागत्वं समवेतम् । किं तर्हि ? प्रत्येकमाग्नेयादिषु । तस्मात् यथैव एतेषु प्रत्येकं यजिः, एवं नामधेयमपि । न च समुदायोत्पत्तिः एकेन कालेन युक्ता, आग्नेयादीनामुत्पत्तिकाले परस्परानपेक्षत्वेन समुदायत्वानुपजननात् । ततः कालयोगेनापि प्रत्येकं नामधेयं इति शक्यं वक्तुम् । यदि च समुदायिनिरपेक्षत्वेन समुदाययोः एते नामनी स्याताम्, ततः प्रयोगवाक्येनापि समुदायौ फले विधीयेयाताम्, ततः अवयवानाम् असाधनत्वात् समुदायादेकमपूर्वम् । अतश्च प्रत्येकापूर्वाणामभावात् कर्मभेदवैयर्थ्यप्रसङ्गः, सर्वधर्माणां च एकापूर्वनिबन्धनत्वात् सङ्कीर्णवृत्तित्वं स्यात् । न च प्रत्येकमितिकर्तव्यतया आग्नेयादयः संबध्येरन् । ततश्च तद्गततन्त्रावृत्तिप्रयोगादिविचारासमञ्जसत्वं भवेत् । न च प्रत्येकविकारे सौर्यादौ समस्तेतिकर्तव्यतातिदेशः स्यात्, सहस्रादिशब्दवच्च अवयवशून्यभावात् एकपुरोडाशा पौर्णमासी, सान्नाय्यरहिता अमावास्या इत्येवमादिव्यवहारोच्छेदप्रसङ्गः । 'संघातस्य भनोदितत्वात्' (३।३।६।२५), 'संघातस्य गुणत्वात्' (७।४।३।१७) इत्येवमादिषु स्पष्ट एवप्रकाराणां समुदायिवचनत्वमभ्युपगतम् । इतरथा हि स एव शब्दाभिहितत्वात् चोदेत, फलसंबन्धाच्च प्रधानं भवेत् । तस्मादुपसर्जनीभूतसमुदायाः समुदायिन एवाभिधीयन्ते । तेषां तु बहुत्वात् बहुवचनप्रसङ्गेन लक्षणया एकवचनयोगः इत्यभिप्रेत्य समुदायशब्दतया अवकल्प्यन्ते इत्याह (भाष्यम्) । तथा च भवति हि बहूनामेकवचनान्तः (शब्दः) समुदायापेक्षः इति । अपेक्षामात्रमेव समुदायस्य ब्रवीति, नाभिधेयत्वम् । यूथवनशब्दौ अपि यदा समुदायोपसर्जनसमुदायिवचनौ, तदा साकल्येन दृष्टान्तौ, यदा तु समुदायमेव ब्रूतः, तदा तन्निमित्तैकवचनत्वमात्रेण दृष्टान्तत्वम् । एतेन दर्शपूर्णमासशब्दौ एतत्पर्यायौ व्याख्यातौ । तस्मादस्ति समुदायद्वित्वापेक्षानिमित्तैकवचनद्वयप्रत्ययसिद्धिः समुदायानुवादप्रयोजनम् । [ इदमेकं इदमेकं इति एतन्नद्वयस्य यः प्रत्ययः समुदायद्वित्वापेक्षानिमित्तभूतः, तस्य सिद्धिः अनुवादप्रयोजनमित्यर्थः ] यथा वक्ष्यति 'पृथक्त्वेनाभिधानयोर्निवेशः' (पृथक्त्वे त्वभिधानयोः इति भाष्यपाठः । ४।४।११।३४) इत्यत्र । (एवं सिद्धान्तसूत्रावयवं पठित्वा न्यायमभिधत्ते-) तद्द्वित्वानुसारिणौ हि दर्शपूर्णमासशब्दौ तद्विषयौ भवतः (इति) । (पौर्णमास्यमावास्याशब्दोक्तसमुदायद्वित्वानुसारित्वात् दर्शपूर्णमासशब्दयोः समुदायविषयत्वं इति न्यायः) । अस्ति च पौर्णमासीपूर्णमासशब्दयोर्बहु सारूप्यम् । तत्साहचर्याच्च दर्शशब्दस्य अमावास्याविषयत्वम् । विपर्ययहेतुत्वेन वा लघीयस्येव प्रतिपत्तिः यथा काण इति चक्षुष्मान् [ काणः 'चक्षुष्मान् इति इत्यन्वयः । यथाश्रुतोऽप्यन्वयः सम्भवत्येव, उद्देश्यविधेयभावस्तु विपरीतः ] । तथा च वक्ष्यति (४।४।११।३४ सूत्रे भाष्यकारः) शक्यते च चन्द्रमसः अदर्शनात् (अमावास्या) दर्शः इति वक्तुम् (लक्षयितुम्) । तथा अन्वारम्भणीयावाक्यशेषे अमावास्यादर्शशब्दौ समानाधिकरणौ दर्शयिष्यति । ('दर्शो वा एतयोः पूर्वः' इत्युपक्रम्य 'अमावास्या वै सरस्वती' इत्युपसंहारात् दर्शामावास्ययोः सामानाधिकरण्यावगतिः । (भाष्यं व्याचष्टे-) तेन समुदायद्वयोपलक्षितानां फलवत्त्वात् इतरेषामङ्गत्वम् । ननु च एवं सति अनेनैव गतत्वात् चतुर्थे अधिकरणं नारब्धव्यम्, नैष दोषः । स्थिते हि एतस्मिन् प्रस्तुतवर्तिमात्रग्रहणात्तत्र पूर्वः पक्षः, सिद्धान्तस्तु एतदधिकरणप्रसादात् भविष्यति । इतरथा तत्र पूर्वपक्ष एव स्यात् इति प्रयोजनत्वेनाभिधानम् । इदमपरं समुदायानुवादप्रयोजनम् 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति कालसंयोगः । तत्र एतत् स्यात् । एतदपि वाक्यमनर्थकम्, उत्पत्तिवाक्यादेव कालसंयोगसिद्धेरिति । उच्यते । 'अन्यथैव ह्ययं कालः करणांशेन युज्यते । अन्यथोत्पत्तिवाक्यस्थो निरपेक्षैः परस्परम् ॥' उत्पत्तिवाक्ये हि अन्योन्यनिरपेक्षाणामाग्नेयादीनां निरङ्गानां च कालसंयोगः, तद्रूपत्वेन उपादानात् । अयं पुनः तृतीयायोगात् करणभूतानाम् । तेषां च करणत्वं प्रयोगवाक्यादितरेतरयुक्तानां मन्त्रसहितानां चावगतम्, इति तद्रूपाणां तदुपादेयम्, कालं प्रति उपादीयमानत्वात् । समस्तरूपविशिष्टत्वेन चाङ्ग-

त्रिकः परस्परसहितश्चैकपौर्णमास्या युक्तः एवमा चामावास्ययेति । यस्मिन् क्षणे एको यागः आरभ्य क्रियमाणः समाप्तिमनुभवति, तस्मिन्नेव इतरौ, अव्यवधानात् त्रिकस्यत्रिकस्य तन्त्रेण प्रयोगः सिद्धो भवति । औत्पत्तिककालानुरोधे तु भेदेन अङ्गयुक्तानां च प्रयोगः स्यात्, इत्यस्ति विशेषः । ननु च एवं सति समुदायद्वयस्य इतरेतरयुक्तस्य करणत्वात् नाङ्गसाहित्यवत् न परस्परतद्विवक्षाऽपि ( परस्परतद्विवक्षा न इति न इति द्वौ नञौ प्रकृतमर्थं द्रढयतः ) इति यथैव अङ्गानां तत्कालविज्ञानम्, एवं पौर्णमास्या अमावास्या आश्रिता, अमावास्यया च पौर्णमासी इत्युभयोरुभयत्र प्रसङ्गः, न वा उत्पत्तिवाक्यशिष्टकालविरोधः, तत्राप्यनुष्ठानात् । नहि यः पौर्णमास्याममावास्यां करोति, तेन अमावास्यायाममावास्या न कृता भवति, तथा पौर्णमासी । न च उत्पत्तिवाक्येन कालान्तरं निषिद्धम्, स्वकालप्रतिपादनमात्रोपक्षयात् । अत्रोच्यते । '**कालो यस्य न विज्ञातः स्वरूपं च न नश्यति । तस्य कालः परोपाधिरुच्यमानो न दुष्यति ॥**' अमावास्या हि उत्पत्तिकालनिराकाङ्क्षा पौर्णमासीसाहित्यलम्भे पौर्णमासीकालं न प्रतीच्छति, एवं पौर्णमासी अमावास्याकालम्, इति द्वयोः समुदाययोः कालान्तरत्वे सति औत्पत्तिकरूपविसंवादात् अदर्शत्वमपूर्णमासत्वं च स्यात् । अङ्गानां तु अनिर्ज्ञातकालत्वेन साकाङ्क्षत्वात् उत्पत्तिविसंवादाभावाच्च अविरुद्धः साहित्यापेक्षोऽन्यः कालः । आह– '**अङ्गानां मुख्यकालत्वाद् वाक्यादानाद्विनाऽप्ययम् । कालोऽस्त्येवेति नैतस्य वचनोऽत्र निमित्तता ॥**' उच्यते । '**मुख्यकालत्वमङ्गानां न स्थितं मान्त्रवर्णिकम् । इदमेव हि तद्वाक्यम्, यद्बलेनैतदुच्यते ॥**' ननु दूरस्थानि उपकर्तुं न शक्नुवन्ति । ( अपर आह– ) संनिकृष्टस्योपकर्तव्यं इत्येतद्वा कुतः ? सर्वत्र वचनानुसारेण उपकार्योपकारकौ विज्ञायेते । तत्र संनिकर्षवचनाभावे विप्रकृष्टं नोपकरोतीति इति न किञ्चित् प्रमाणम् । ननु च अन्येनैव वाक्येन एष तन्त्रप्रयोगः सिध्यति 'य इष्ट्या पशुना सोमेन' इत्यादीनां तत्रापि करणविभक्तिनिर्देशात् इष्टेः समुदायित्वाद्वयसहितायाः कालं प्रति उपादानात् ईदृशी विवक्षा लभ्यते । **सत्यं लभ्यते, न तु इष्टेः प्रयोगः सिध्यति । तथाहि, 'इष्टिशब्दः समस्तं वा प्रत्येकं वाऽवलम्बते । न तावत् त्रिकमित्येकमन्यादृक् चेष्टितं भवेत् ॥**' न तावत् त्रिकस्य इष्टिशब्देन ग्रहणमित्यवधार्यते । तत्र प्रत्येकं यागत्वेन इष्टिशब्दप्रवृत्तेः एकैकस्याममावास्यया पौर्णमास्या वा प्रयोगः, इति न सम्यक्प्रयोगसिद्धिः । अथ समस्तानामाग्नेयादीनां कथञ्चित् रूढेः 'प्रकृत्त्वादिष्टेः सोमे प्रवृत्ति' इतिवत् ग्रहणम्, एवमपि प्रयोगवचनैकत्वात् समुदायद्वयस्यापि पौर्णमास्याममावास्यायां वा अनुष्ठानं स्यात्, तत्र स एव उत्पत्तिशिष्टकालविरोधः । तदनुरोधेन व्यवस्थितविकल्पाश्रयणमिति चेत्, एवमपि यथोत्पत्त्यनुरोधात्प्रत्येकानुष्ठानप्रसङ्गः । तथा अङ्गानां भेदेन पौर्णमास्यमावास्ये प्रति उपादानाभावात् यत्रकचन एकत्र प्रदेशे अनुष्ठानं स्यात् । तस्मात् न ( य इष्ट्या इति– ) एतद्वाक्यं ताभ्यां ( पौर्णमास्यमावास्यावाक्याभ्यां ) तुल्यार्थमिति प्रकृतौ अकिञ्चित्करत्वात् विकृतीरेव सद्यस्कालतां गमयति । ननु अनेन तन्त्रप्रयोगः सिध्येत् 'समे दर्शपूर्णमासाभ्यां यजेत' इति देशस्यानुपादेयत्वात्साहित्यविवक्षोपपत्तेः । तत्रोच्यते । '**समस्य केवला चैव तन्त्रता प्रतिपाद्यते । तेन सर्वैरसावेको भाव्यो, न बहवः समाः ॥**' भेदेनापि हि प्रयुज्यमानानामनन्यदेशगमनमात्रेण देशतन्त्रत्वसिद्धिः । अथ इतरेतरयोगश्रवणात् यदैव एकः यागो प्रयुज्यते, तदैव इतरेऽपि इति तन्त्रत्वमुच्यते । तथा सति षण्णामपि युगपदुपादानात् तथैव प्रयोगप्रसक्तेः [redacted] एव विरोधः । यदि पुनः उत्पत्तिवाक्यानुरोधेन प्रवर्तते, ततः प्रत्येकं कालयुक्तानां सम प्रति साहित्यं संपादनीयं इति षट्स्वेव पौर्णमास्यमावास्यासु प्रयोगः समाप्येत । अङ्गानि च तावतः कालात् अनुत्कृष्यमाणानि प्रत्येकं यानि इति यत्रक्वचन अन्तराले क्रियेरन् । अथवा प्रतिप्रधानावृत्तेर्न्याय्यत्वादेकैकं प्रधानं साङ्गमपवृज्येत । अथ तु यावता उत्पत्तिकालो निरुध्यते, तावन्मात्रं परिहाय यौगपद्येन

समसम्बन्धः कर्तव्यः इत्यवधार्येत, तत्र एकस्यामेव पौर्णमास्याममावास्यायां वा तिथ्योः प्रयुज्यमानयोः यस्यकस्यचित् समीपे अङ्गानि प्रयुज्येरन् । अथवा तदर्धमासान्तराले यस्मिन्कस्मिन्नहनि । सर्वो हि असौ प्रधानकालः, प्रधानकालमद्दिर्भावश्च समावधितव्यो नात्यन्तसामीप्यम्, अशक्यत्वात् । तस्मात् नैनेनापि अभिप्रेतप्रयोगसिद्धिः । अनेनैव फलवचनमपि प्रत्युक्तम्, फलस्यापि देशान्तरे अनुपादेयत्वात् । सर्वान् इतरेतरयुक्तान् साङ्गान् प्रति तत्कर्ते सिद्धे न प्रयोगतत्त्वसिद्धिः, विप्रकृष्टकालैरेव हि एकं फलं साध्यते । अयोग्येत, फलं भवत् भावयेदेते. इत्थं इति साङ्गानि प्रधानानि युगपत्फलभवनकालेऽनुष्ठातयानि श्रूयन्ते, ततश्च न विप्रकृष्टानीति । तत्रापि समुदायकवस्य युगपत्प्रयोगापत्तिदोषः । उत्पत्तिवाक्यानुरोधेन वा पूर्ववदेव प्रत्येकं प्रयोगादियोजना । न च फलभवनकालः असत्प्रत्याशः । सोऽपि हि प्रधानैरिकर्तव्यताकालेनैव परिच्छिद्यते । ततश्च उत्पत्तिकालालोचनेन यावन्त प्रयोगकाले अङ्गप्रधानानि व्याप्नुवन्ति तावानेव फलभवनकाल, तादृगेव तद्विषय यौगपद्यम्, इति सर्वथा पट्सु पौर्णमास्यमावास्यासु द्वयोर्वा साङ्गानां चापवर्गः । एकसमुदायसमीपे वा अङ्गप्रयोग. अर्धमासान्तराले वा यत्रकचित् इति प्रसङ्गात् नैतद्वाक्यद्वयः भिन्नस्थभिन्नस्य साङ्गस्य सकाले प्रयोग. वाक्यान्तरात् सिध्यतीति । तस्मादर्थवान् 'पौर्णमास्यां पौर्णमास्या यजेत' इति कालविधिः । ननु एवं सति उभयतो कालयोः अकार्य । कथमनर्थक । यस्य, 'यद्युत्पत्तौ न विद्येत यागानां कालसंगतिः । समुदायानुवादत्वं निर्निमित्तं न लभ्यते ॥' पौर्णमास्यमावास्याशब्दौ स्वाभिधेयकालयुक्तयागानुवादौ इष्येते । तदभावे नैव शायेत का पौर्णमासी का अमावास्येति । तदज्ञानात् अलब्धार्थदर्शपूर्णमासपदानिशेषित प्रकृतयागमात्रग्रहणात् सर्वाणि समप्रधानानि इत्येतदेव स्यात् । तस्मात् अवश्यं भवितव्यं प्रथम कालसंयोगेन । अत एव च उपांशुयाजस्य अनुत्पत्तिवाक्यमपि सन् पौर्णमासीसयुक्तमुदाहृतम् ।

विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ।४॥

भाष्यम्— यदि च सर्वाणि समप्रधानान्यभविष्यन् न विकृतौ प्रयाजा इष्यन्ताम् । इष्यन्ते तु 'प्रयाजे-प्रयाजे कृष्णलं जुहोति' इति । असति आग्नेयगुणत्वे प्रयाजस्य तन्नोपपद्यते । अतो न सर्वाणि समप्रधानानि ।

वा— यदि नैते कर्मान्तरे स्याताम्, तत आग्नेयादीनि समप्रधानानि स्युः । ततश्च 'कर्मणस्तत्प्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्यशक्तत्वान्धनत्वात्' इत्यनेन न्यायेन आग्नेयादिवत् प्रयाजादीना करणायोपनिपातात् विहितकरणस्य विकृतिभावनया कथंभावाकाङ्क्षिण्या तत्पूरणासमर्थानामग्रहणात् प्राप्तप्रयाजानुवादेन कृष्णलविधान नोपपद्येत । तस्मादाग्नेयगुणत्वं प्रयाजादेः कथं स्यादिति समुदायानुवादौ ।

गुणस्तु श्रुतिसंयोगात् । ५ ॥

भाष्यम्— नैतदस्ति पौर्णमास्यमावास्याशब्दौ समुदायशब्दाविति । किन्तु अपूर्वयोः कर्मणोर्विधातारौ । तत्र न लक्षणशब्दो भविष्यति । नन्न रूप नास्ति । वाक्यान्तरेण रूपमवगमिष्यामः । पौर्णमास्यामाग्नेयोऽष्टाकपालो भवतीति । यदेतत् पौर्णमासीनाम कर्म, तस्य एतद् रूपमग्निर्देवता, पुरोडाशो द्रव्यमिति । अत आग्नेयादिभिर्गुणो विधीयते इति ।

वा— पौर्णमासीमित्येकत्वं प्रातिपदिकार्थगतमेव भविष्यति, न तल्लक्षितसमुदायगतम् । प्रत्यक्षश्रुतश्च यजिर्द्रव्यदेवतासंबन्धात् क्लेशेनानुमातव्यो न भविष्यति । सोऽपि वा अनेकस्तदपूर्वमप्यनेकम्, समुदायानुवादत्वाच्च विधित्व गुणवत्तरम् । प्रयाजादिदर्शनमपि 'यत्र नित्यानुवादवचनानि स्युः' इत्येव विशिष्टविधानेन वा प्रकृतिस्थप्रयाजगुणविधिना वा सुपरिहर मन्यमानः एतानेव कर्मविधौ, शेषा गुणविधय इत्यरूपतापरिहारमाह— अष्टाकपालादिवाक्येषु पौर्णमास्यमावास्याशब्दयोः कर्मवचनत्वात् वाक्यसिद्धमेव रूपत्वमिति ।

**चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत । ६ ॥**

भाष्यम्— कर्मचोदना वा आग्नेयादयः स्युः । कुतः ? गुणानां युगपच्छास्त्रात् । एकेनैव वाक्येनानेको गुणो विधातुमिष्यते भवता । न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसम्बन्धे च्यसति शक्यते विधातुम् । कथम् ? यदि तावत् 'पौर्णमास्यामष्टाकपालो भवति ' इति संबन्धो विवक्षितः, न तदा अयमर्थः अष्टाकपालः तस्या अभिसंबध्यते इति । कर्हि ? अष्टाकपालः पौर्णमास्या अभिसंबध्यते इति । तत्र तदा भावविवर्तने । तदानीं ' आग्नेयः ' इत्ययं अस्यान्तिकादपि उपनिपतितः भवतिसम्बन्धाभावात् नानेन संबन्धुमर्हति ' अष्टाकपाल आग्नेयो भवति ' इति । अथ ' आग्नेयः पौर्णमास्यां भवति ' इति विवक्ष्यते, तदा आग्नेयपुरोडाशयोः असंबन्ध एव स्यात् । अथ पौर्णमास्यामष्टाकपालस्य आग्नेयता विधीयते, वक्तव्य येन तस्यामष्टाकपालो विहितः इति । अथ तस्यामाग्नेयस्याष्टाकपालता, तथाप्येष दोषः । अथ पौर्णमासीत्युभाभ्यां संबध्यते, परस्परेण द्रव्यदेवतयोरसंबन्ध एव स्यात् । अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या संबध्येयाताम्, उच्यते आग्नेयोऽष्टाकपालो यः स पौर्णमास्यां भवतीति । तस्य अप्रसिद्धत्वात् एतदप्ययुक्तम् । अथ येन विद्यमाने सङ्कल्पितः पौर्णमास्यां विधीयते, तथापि देवताया अविधानात् रूपाभावः एव । अथाग्निर्देवता भविष्यतीति कश्चिद् ब्रूयात् ॥ वक्तव्यो विषयश्चानर्थसम्बन्ध इति, नहि आग्नेयशब्दोऽनुवादो विधिश्च भवतीति । कल्पयिष्यामो देवतामिति चेत्र । असति विधाने देवताया अभावात् । सम्बन्धिशब्दोऽयं देवतेति । स एवाग्निरष्टाकपालस्य देवता, नान्यस्य । तस्मादवश्यमाग्नेयाष्टाकपालसम्बन्धो विधातव्य , स एव यागो भवतीति । तेन पौर्णमासीयागस्यापरो यागः संबन्धी विधीयते, न द्रव्य देवता वा । न च यागस्य यागान्तरं रूपं भवति । अतो रूपावचनात् पौर्णमास्यमावास्यायुक्तौ नापूर्वयोः कर्मणोर्विधातारौ । यत्तूक्तं पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागाननुवदितुं शक्नुतो नाग्नेयेनेति । नैष दोषः । यदा आञ्जस्येन शब्दार्थो नावकल्पते, तदा लक्षणयाऽपि कल्प्यमानः साधुर्भवति । यथा अग्नौ तिष्ठति अवटे तिष्ठति, अग्निसमीपे अवटसमीपे तिष्ठतीति भवति संव्यवहारः । लक्षणाऽपि हि लौकिक्येवेति ।

वा— नैते अष्टाकपालादयो गुणविधयः । कुतः ?

**' प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ '**

कर्मोत्पत्तिवाक्ये हि प्रत्ययो भावनाप्रधानत्वात् विधातुमुपक्रमते । सा च ( भावना ) यावत् धात्वर्थकारकैर्न परिपूर्यते, तावत् अनुष्ठातुमयोग्या इति न विधित्वपर्यवसानम् । तत्र भावना आत्मांशभूतपदगतकारकसामान्यान्यथानुपपत्त्या आश्रितविशेषोपलिप्सया स्ववाक्योच्चारितकारकविभक्त्यन्तपदप्रतीतैर्विशेषैः भावनामात्राकाङ्क्षिभिः शाब्दयैव विशेष्यते । प्रतिपदं च यत्किञ्चित् द्रव्याश्रितं जातिलिङ्गसंख्यादि, तत् सर्वं एकपदोपादानलक्षणश्रुतिप्रवितरूपविशेषणविशेष्यभावं अप्रतिपन्नपरस्परशेषशेषित्वं विभक्तिश्रुत्यैव कारकात्मना भावनाशेषत्वं प्रतिपद्यते । एवं यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि, तानि सर्वाणि अनुषङ्गाधिकरणोक्तेन मार्गेण अनादृत्य संनिकर्षविप्रकर्षौ युगपद् संनिपतन्ति । ततः सर्वविशेषणविशिष्टा अनुष्ठानयोग्या भावनामाश्रित्य विधिः समाप्यते । स च एकेनैव प्रयत्नेन तां विशिष्टां विदधाति इति नानेकवाक्यकल्पनाऽऽपत्तिदोषः । तथाहि, **'श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ '** विशिष्टायां भावनायामाश्रय श्रौतं विधित्वं यदि अन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत, तत पुनरुच्चारणदोषं अवैदिकत्वापत्त्या लभेत । अथ पुनः सकृत् विधाय निवृत्तव्यापारः स्वार्थान्यथाऽनुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराणि आविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते । **' विशेषणविधिश्चायं पश्चाद्यद्यपि गम्यते । तथापि स्वाकृतिन्यायात् ततः प्रागेव जायते ॥ '** विशिष्टनिमित्तत्वात् अर्थापत्तिः पश्चात् भवन्ती यद्यपि विशेषणविधीन् उत्तरकालमवगमयति, तथापि ▪ आकृत्यधिकरणन्यायेन विशेषणानि अनु-

पादस्य विशिष्टव्यापारासम्भवात् नूनं पूर्वतरं विशेषणविषयो निष्पन्नः, यत तदधीनसिद्धिः विशिष्टपरयो दृश्यते इति। तेन बहव एवैते विधयः इति प्रत्यसायोपच्छिन्नाः युगपत् क्रमेण वा व्याप्रियन्ते इति अनेकविध्यन्तरप्रसव समर्थैर्वा विशिष्टविधिप्रवादेन अनेकगुणविधान अपूर्वभावनाविधिपक्षे सुलभम्, नेतरत्र। कथम्? 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति। अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः॥' यदा हि भावना अन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत् प्रति हतशक्तिर्विधायकः तामविदधानो न तत्संगतार्थानेकविधि व्यापारप्रसवहेतुत्व प्रतिपद्यते। विशिष्टविधाने हि अर्था पत्त्या विध्यन्तराणि कल्प्यन्ते, न चात्र तत् सम्भवति, इति अनुपयुक्तभौतव्यापारावसर एव फलश्च 'आनर्थक्यात् तदङ्गेषु' इत्यनेन न्यायेन भावनातः प्रकृतीयं तत्सम्बद्धानि कारकाणि उपसर्पति। तत्र यानि एकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्याऽऽदीनि, तानि विशिष्टभावनाविधिन्यायेनैव तत्कारकाक्षेपात् सर्वाणि विधीयन्ते इति भिन्नायामपि भावनायां अनेकार्थनिष्पत्तिः। यदा तु अनेकपदोपात्तानेककारकोपनिपातो भवति, तदा कारकाणां परस्परसंबन्धाभावात् उक्तपदेष्वपि असम्बध्यमानेषु यदि एकत्र विधिर्गच्छति, तदा नेतरत्र गतो भवति, एकमित्युपगमनेऽपि अन्यगमनानुपपत्तिः, असम्भवात्। एवं च न भावनावत् एकेन विहितेन इतरत् अर्थादाक्षेप्तुं शक्यते। तत्र अर्थलभ्यविध्यन्तरप्रसक्तौ असत्यां एकात्मकः श्रौतो विधिः एकपदोपात्तमात्रपि अन्यत्रापि अस्तीति कल्प्यते, तत् नासकृदुच्चारणादृते सिध्यति इति पौरुषेयः अनेकोच्चारणप्रसङ्गः। तदर्शयति (सूत्रकारः) चोदिते हि प्राप्ते कर्मणि तदर्थत्वात् गुणार्थत्वात् तस्यतस्य गुणस्य विधेये पुनःपुनः उपदिश्येत उच्चार्येत, प्रत्ययः इत्यर्थः। 'परस्परसम्बन्धे चाशक्तिः' इति भाष्यं अर्थापत्तिमूलोच्छेदप्रदर्शनार्थम्। लोकेऽपि च यत् प्रधानं राजप्रभृति क्वचिन्नीयते, तत् आत्मना अविनाभूतानि अमात्यादीनि अङ्गान्यपि अत्रोपाणि आक्षिपति। यदा तु कश्चित् भृत्यानां क्वचित् गच्छति, तदा तदसम्बन्धीनि भृत्यान्तराणि पदमपि न चलन्ति, तत्रावश्यं प्रयत्नान्तरमास्थेयम्। न च तत् एकव्यापारसाध्यमिति अशक्यं सकृत् श्रुतौ उपादातुमिति। एतमेवार्थं प्रपञ्चयति (भाष्यकारः)। यदि हि पौर्णमास्युद्देशेन अष्टाकपालो विधीयते, तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लभ्या किमुत पदार्थान्तरविधानम्। तदाह (भाष्यम्) मन्त्रतिसम्बन्धाभावात् नानेन सम्बध्यते। अथाग्नेयः पौर्णमास्यामित्यनापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्यः इति तमप्रदर्श्यैव अष्टाकपालसम्बन्धाभावः प्रदर्शितः।

एव पौर्णमासीविशिष्टान्यतरानुवादेऽपि अनूद्यमानस्योत्पत्तिः, पौर्णमासीसम्बन्धः, विधीयमानस्याप्युत्पत्तिः, इतरेतरसम्बन्धश्च, इति अतिगौरवम्। पौर्णमासीपदतन्त्रेऽपि उभयोरुत्पत्तिः कर्तव्या, परस्परं सम्बन्धश्च इति दोषौ। न च अरुणैकहायनीवत् परस्परनियमसिद्धिः, विशिष्टविधानदोषात्। अतः अष्टाकपालानुरक्तया पौर्णमास्या आग्नेयः सम्बध्यते, तदननुरक्तया वा (आग्नेयाननुरक्तया पौर्णमास्या वा इत्यर्थः) अष्टाकपालः इत्यसंबन्धः। एतत्परिहारार्थं परस्परसम्बन्धं द्रव्यदैवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिः, अन्यतरस्य च अन्यतरत्र विधानम्, इति युगपद्विधीयमानपरस्परसम्बन्धक्लेशमनुभूय पुनः पौर्णमासीसम्बन्धक्लेशः। तत्परिहारार्थं अन्यतः सिद्धं देवतासम्बन्धमनूद्य केवलकर्मसम्बन्धं दर्शयति— 'अथ केन विदग्ने सङ्कल्पितः' इति। सङ्कल्पितशब्दवशेन केचिदाहुः 'केनचिदनुज्ञया संकल्पित' इति। न तु एतत् युक्तमिव 'अन्येन अर्थकर्मणि उदीयस्य हविषो ग्रहणम्' इति। अस्मात् हि विज्ञानः सङ्कल्पितशब्दः केन चित् वाक्येन ('आग्नेयमष्टाकपालं निर्वपेत् रुक्कामः' इत्यनेन) रुक्कामादिगुणेन विहितः इत्यर्थः। तथाहि अष्टाकपालसम्बन्धसिद्ध्यर्थं आग्नेयशब्दे अनूद्यमाने पौर्णमासीगतस्य का देवता इति न ज्ञायते। युगपदुपलक्षणविधिपक्षे वाक्यभेद इति। अनेनैव मार्गेण न्यायकृत्यविकरणमुपप्रदर्शितैः वचनव्यक्तिप्रकारैः वाक्यभेदानन्त्य प्रपञ्चयितव्यम्। तेन अगत्यविधानपक्षे द्रव्यदेवतासम्बन्धः। न च स पूर्वप्राप्ते कर्मणि सम्भवति, इति 'गुणश्चापूर्वसंयोगे' इति कर्मान्तरत्वम्। कर्मान्तरत्वे

फलस्य विद्दर्शनात् । पौर्णमासीत्यनूद्यते 'पौर्णमास्या पौर्णमास्या यजेत' इत्यनेन विरमनूद्यते । अमेत्यपि 'अमावास्यायाममावास्यया यजेत' इत्यनेनापि अमावास्यायुक्तं विरमनूद्यते । अनुवादस्य प्रयोजनं तु समूहस्य द्वित्वसिद्धिः । 'पौर्णमास्यां पौर्णमास्या, अमावास्यायाममावास्यया' इत्युक्तिभ्यां तु विशेषिके सहस्थितिः सहानुष्ठान सिध्यति । विद्धाक्ययोः विधौ स्वीकृते तु आग्नेयादिना 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिना वाक्येनैव विहितत्वात् विधेः आनर्थक्यम् । तस्मात् विद्वद्वाक्ये न विधिः । विहितस्य आग्नेयादियागषट्कस्य फलित्वेन फलवत्त्वेन प्राधान्यं दर्शेष्टौ प्रयाजादीनां गुणत्वं च ज्ञेयम् । इति । के. )

भाट्ट—तत्र्य एव 'य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति, य एवं विद्वानमावास्यां यजते यावदतिरात्रेण' (तैत्त. ११६।९) इत्यादिवाक्येऽपि अभ्यासात् कर्मभेदः । न चात्र लट्, लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धात् विधिपुनःश्रुत्यभाव । 'समिधो यजति' (तैत्त. २।६।१) इतिवल्लिङ्गाद्यभावतः । यच्छब्दस्य 'यो दीक्षित.' इतिवत् वेदनाङ्गत्वमात्रविधिप्रतिबन्धकत्वात् । अत एव पौर्णमास्यमावास्याशब्दावपि नामधेयम् । 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयेन एतद्वाक्यविहितकर्मणोरेव कालविधानात् । न च रूपाभावः 'यावती पूर्णमासेऽनूच्यते, द्वयवती अमावास्यायाम्' (तैत्तं. २।५।१२) इति वचनेन आग्नेयमाग्नमाज्यमावास्याना-मपि मन्त्राणां कर्म वाचिना एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् । माग्नेयमग्निषोमीयमैन्द्राग्नं 'अग्नये वा एतत्वाय यजते यद् पक्षावामावास्यम्' (तैत्त. ३।३।९) इति वचनेन न द्रव्यस्य प्राप्तत्वम् । अथवा, आग्नेयादि वाक्यैरेव पौर्णमास्यमावास्यादिवत्कालपौर्णमाल्यवाक्यविहित-कर्मानुवादेन द्रव्यदेवताविधानात् रूपलाभोऽस्त्येव । न धर्मविधानात् वाक्यभेदः । अद्रिवेन देवताविशिष्टद्रव्य-वाचिना सम्बन्धरूपस्य मुख्यत्वेन विशिष्टविध्युपपत्ते. । प्रधानत्वेऽप्य एकाभाषा सेवजते एव द्रष्टव्य । सर्वथा विद्वद्वाक्ये कर्मान्तरविधि. । एवं च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येन प्रधानविध्यर्थवादेन सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोरेव प्रथमपक्षे फलसम्बन्ध. । द्वितीये तु तत्साधारण्येन तयोरेव दर्शपूर्णमासप्रातिपदिकस्य कालयोरेव प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात्, आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धत्वात् । अत्र पचमून्यायेन नाम्नः कर्मैव-त्वानुपपत्ते. प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः । पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः । न तु षण्णामाग्नेयादीनाम् । इति प्राप्ते, लिङ्गक्रमाम्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानां अपेक्षितपयस्याविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गत्वबोधकत्वम् । अत एव कालद्वारेण कर्मद्वारेण वा व्यवस्थापरत्वेन तदिति यक्ष्यते । अतश्च न तावदनेन देवताप्राप्ति , नाप्याग्नेयादिवाक्येन, प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदात् । विधिवाक्यस्य हि अज्ञातज्ञापनस्य एकविषयत्वमेव सर्वत्र क्लृप्तम् । तस्यानेकविषयत्वे वाक्यभङ्गः । न च विशिष्टविधानाद्वाक्यभेद , विशिष्टस्यानुत्पन्नत्वात् । उत्त येन कारकाद्यन्वयेन यत्र तद्धितादिवृत्ति. , न तत्र परस्परान्वय., अपि तु यत्र अध्याभिधानीमिक्त्यातो तदतिरिक्तसम्बन्धेन वृत्तिलभ्य स इति । अतश्च प्रकृते देवतात्वस्य सम्प्रदानकारकत्वात् परस्परान्वयानुपपत्तेः उभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथञ्चित् रूपलाभः । तथापि न विद्वद्वाक्ये कर्मविधि. , यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनःश्रवणस्याभावात् । न च तत्र वेदनाङ्गविधानाद्विधिप्रतिबन्धकत्वम्, यच्छब्दादेः तच्छब्दाद्यपेक्षानिबन्धकत्वस्यैव स्पष्टप्रतिसिद्धत्वात् । किञ्च, अन्यथाप्यत्र कालनामत्वसिद्धिः । तथा हि, अत्र विद्वद्वाक्यस्यान्वयानुपपत्तिना प्रकरणात् आग्नेयादयाग एव तत्फलयोगिनः तत्तत्कालयोगवशात् अनूद्यन्ते । कालयोगेन च तयोः सर्वत्रा अनेकयागानामनुवादसिद्धिः । तस्मात् प्रयोजन फलवाक्ये यागमेव कर्मसम्बन्धसिद्धिः, प्रातिपदिकस्य षट्सु यागेषु योगेन

प्रसिद्धत्वात्, द्विवचनस्य च स्वाश्रयाश्रयसमुदायघटक समुदायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणार्थत्वात् । लक्षणा तात्पर्यग्राहकमेव च शक्यसम्बन्धघटकसमुदायसिद्धिद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैव एकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलत्रप्राप्तिः । यथा च 'यदाग्नेयोऽष्टाकपाल' इत्यत्र आग्नेयत्वसिद्धिः तथा कौस्तुभे एव प्रपञ्चितम् । अतः एष्या फलसंबन्धसिद्धिरेव उक्तविधया विद्वद्वाक्यप्रयोजनं इत्यन्यपरत्वादपि न 'नैमित्तेन यजेत' इतिवत् अभ्यासस्वरूपसिद्धिः । न चैव 'पौर्णमास्या पौर्णमास्या' इति वाक्यद्वयवैयर्थ्यापत्तिः, तस्य समुदितयागनित्यप्रयोगविधित्वेन सार्थकस्य एकादशे वक्ष्यमाणत्वात् । अन्यथा हि उत्पत्तिवाक्येषु प्रत्येक फलयोगात् प्रत्येकमेव पूर्वोत्तराङ्गसहितैःप्रधानप्रयोगा भवेयुः । एवं चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थसंनिपत्यवोधार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेतौ, न कर्मान्तरविधी इति सिद्धम् ।

मण्डन— 'वाक्यं न धर्मं विदधाति च एवमादि ।'

शंकर— 'विद्वद्वाक्येऽनुवादः स्यात् ।'

● पौर्णमासीन्यायं अमावास्यायामपि दर्शयति । 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यम्, उत्तरामिति कौषीतकम्' । 'या पूर्वा पौर्णमासी सा अनुमतिः, या उत्तरा सा राका' इति पौर्णमासीन्यायः, तस्य अमावास्यायां अतिदेशः 'या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः' इति । ऐब्राभा ३२।१२-३.

● पौर्णमासीमात्राङ्गता वैमृधस्य । ४।३।१३। १२-१५.

● पौर्णमासीमात्रकालिकत्वमुपांशुयाजस्य । १०। ८।१७।५१-६१.

⧗ पौर्णमासीवदुपांशुयाजः स्यात् । २।२।४।९ ॥

'यानि च एतस्य त्रिणी यदन्तरा पुरोडाशावुपांशुयाजमन्तरा यजति' इति । तथा 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तत्र सन्देहः किं विष्णवादिगुणकानां प्रकृतानां यागानां समुदायानुवादकम्, उत अपूर्वस्य यागस्य इति । इदानीमधिकरणत्रयेण पौर्णमास्यधिकरणोक्तसमुदायानुवादे कर्तव्ये सर्वात्मना पौर्णमास्यधिकरणसिद्धान्तोपजीवनात् उपांशुयाजपूर्वपक्षस्य अनन्तरमारम्भः । अत्राय पूर्वपक्षिणोऽभिसन्धिः । यथा पौर्णमास्यधिकरणे रूपवत्तामाग्नेयादीनां सन्निधिसमाम्नातस्य विद्वद्वाक्ययुगलस्य रूपाभावात् आग्नेयादिसमुदायानुवादकत्वम्, तथेहापि 'उपांशुयाजमन्तरा यजति' इत्यस्य विष्ण्वादिवाक्यविहितप्रकृतकर्मसमुदायानुवादकत्वम् । तथाहि विष्ण्वादिवाक्यानां तव्यप्रत्ययवशात् विधित्वं तावदसंदिग्धम्, देवता च विष्ण्वादिपदैः प्रतीतैव । द्रव्यमपि धौवाज्यम् । उपांशुयाजवाक्ये वर्तमानरूपात् विधित्वमेव तावत् सन्दिग्धम् । यथाकथञ्चित् धौवाज्यप्राप्तावपि न देवता समस्ति । न चोपांशुयाजक्रमसमाम्नातमन्त्रसम्बन्धात् देवतालाभः, विष्ण्वादिदेवताप्रकाशका मन्त्रा यागेष्वेव लिङ्गबलेन संबध्यन्ते, नान्तरालवाक्ये । न च कर्मानुशिष्टतव्यप्रत्ययेन विष्ण्वादिदेवतानामेव कर्तव्यतावगमात् न यागविधानमिति वाच्यम् । यवतीलादौ उपसर्जनस्यापि यागस्य प्राधान्यावगतदेवताविशिष्टस्य अगत्या प्राधान्यविधानात् । न चात्र गत्यन्तरमस्ति, अन्तरालविध्यभावात् रूपाभावाच्च कर्माभिधायकत्वस्य वक्तव्यत्वात् । तदुक्तम्—

'यागान् विष्ण्वादिसंयुक्तैर्विहितान् रूपवत्तया ।
अरूपमन्तरायुक्तमागत्यैवानुवक्ष्यते ॥' इति (वा. पृ. ४८९)। न च अन्तरालवाक्यस्य अनुवादकत्वात् तस्यैव कर्मण उपादानात् अनुवादत्वेन अन्तरालवाक्ये एव कर्मणो विधेयत्वमिति वाच्यम् । बुद्धिविच्छेदे हि सति अनुवादं प्रति उपादानं प्रकरणान्तरन्यायेन कर्मभेदकं भवति । न चात्र बुद्धिविच्छेदोऽस्ति, विष्ण्वादिवाक्योत्पादितस्यैव सन्निधानात् । ननु आमिनोर्यर्म अजामित्वाधानेऽक वाक्यवत्तगम्यते, जामित्वाजामित्वयोरेकविषयत्वात् । तयोः संभवति, यदि अन्तरालवाक्यस्य विधायकत्वं विष्ण्वादिवाक्यानां च अर्थवादत्वम् । विष्ण्वादिवाक्यानां विधायकत्वे विधिभेदेन वाक्यभेदात् अङ्गीकारात्तत्र विहन्यते । एक-

वाक्यसम्भवे हि वाक्यभेदो दोष एवेति । अत्र च अन्तरालवाक्यस्य अविधायकत्वस्योक्तत्वात् विष्ण्वादिशुक्तानां विधायकत्वम्, तथा सति भिन्नविधिप्रयोजकत्वेन वाक्यभेदस्यैव प्रमाणबलादायातत्वान्न दोषावहत्वम् । यच्च जामित्वाजामित्वयोः एकविषयत्वम्, तद्भिन्नवाक्येऽपि जामित्वे तस्य तु अनुषङ्गकल्पनया अवरुद्धत्वम् । तेन यथा 'तनूः' ('तनूर्वर्षिष्ठा गह्वरेष्ठा यशो अपाघ्नी देवं गन्तो अपाघ्नी स्वाहा' इति मन्त्रः ।) इत्यस्य तन्त्रोच्चारितस्यैव 'रजाशया, हराशया' इत्येतत्संबन्धः, तथा जामित्वस्यापि विष्ण्वादिशुक्तवाक्यभेदेऽपि तन्त्रेण संबन्धः । न च वाक्यसंबन्धिजामित्वोपक्रमात् तस्यान्तरालवाक्यव्यवहितस्य कथं विष्ण्वादिवाक्यैः संबन्धः, अन्तरालवाक्यस्यापि तदनुवादकत्वेन तद्व्यवधायकत्वाभावात् । ननु भवतु विष्ण्वादिवाक्यानां कर्मविधायकत्वम्, अन्तरालवाक्यस्य तु कथं सर्वानुवादकत्वम्, अन्तरालस्यैव अप्राप्तत्वेन विधानात् । मैवम्, जामिताभीरुभिः विष्ण्वादिवाक्येऽपि अजामित्वानुवादेन अन्तरालस्यापि प्राप्तत्वात् । भवति च अनुवादतोऽपि स्थाननियमः । यथा 'न गिरागिरेति ब्रूयात्' इति गिरापदनिषेधानुवादकत्वात् इरापदस्थानविधित्वम् । इति न किञ्चिदेतत् । अनुवादप्रयोजनं च 'उपांशुयाजमन्तरा यजति' इत्यनेन विष्ण्वादिशुक्तकर्मणां सर्वेषामुपांशुयाजनामत्वं गमति । तथाच श्रुतिः 'उपांशु पौर्णमास्यां यजन्' इति सर्वैकदेशेन अनूदितानां पौर्णमासीकालसम्बन्धः । ततश्च फलवाक्ये सर्वेषामेवोपादानमिति । अतः पौर्णमासीवत् 'उपांशुयाजमन्तरा यजति' इत्येतदपि वाक्यं समुदायानुवादकमेवेति ।

चोदना वाऽप्रकृतत्वात् ॥ १० ॥

एवं प्राप्ते, ब्रूमः । भवेदेवं यदि विष्ण्वादिवाक्यैः शास्त्रविधानं भवेत् । न त्वेतदस्ति । तथाहि यथा 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्युपक्रम्य 'यद् द्वादशकपालो भवति' इत्यादिना द्वादशकपालस्यैव स्तुतिदर्शनात् उपक्रमोपसंहारयोरेकविषयत्वे सति तदन्तर्गतानामष्टत्वादीनां न पृथग्विधिविषयत्वम्, तथात्रापि 'जामि वा एतद्यज्ञस्य क्रियते' इत्युपक्रमे पुरोडाशयोर्जामितादोषोपक्रमात् अन्ते च तदपनयनरूपाजामित्वोपसंहारादेकवाक्यत्वम् । तच्च तदैव संगच्छते, यदि एकस्यैव विधित्वं इतरेषामर्थवादत्वम् । उपक्रमस्थजामित्वदोषश्च अन्तरालसंबन्धिकर्मविधानमेवापेक्षते । तस्यैव जामित्वदोषापनयनहेतुत्वात् । तथाभूतं च 'उपांशुयाजमन्तरा यजति' इति वाक्यम् । ततस्तदेव विधायकम्, विष्ण्वादिशुक्तानां चार्थवादत्वमेव निर्णीयते । यदुक्तम्, यथा 'तनूः' इति पदस्य तन्त्रोच्चारितस्यैव रजाशयाहराशयावाक्यसंबन्धः, तथा जामित्वस्यापि तन्त्रोच्चारितस्य विष्ण्वादिवाक्यत्रयसंबन्धात् प्रत्येकमेवोपक्रमोपसंहारयोरेकविषयत्वमिति । तदयुक्तम्, तत्र हि एकवाक्यत्वेन विष्ण्वादिशुक्तानां अन्तरालयुक्तविधिविशेषत्वासंभवात् वाक्यभेदे सति अवश्यं कल्पनीयत्वात् पदान्तरसम्बन्धस्य अध्याहारात् तन्त्रोच्चारितपदान्तरकल्पनाया एव लघुत्वात् तथा आश्रितमिति जानीमः । इदं तु प्रथमावगतैकवाक्यत्वेन विष्ण्वादिशुक्तानामन्तरालयुक्तविधिविशेषत्वेनैव वाक्यान्तरत्वासम्भवात् जोपक्रमस्य तन्त्रत्वकल्पनाया प्रमाणमस्ति । एवं च सति अर्थवादसंबन्धाद्विधित्वमसंदिग्धम् । न च रूपाभावात् न कर्मविधित्वमिति वाच्यम् । तथाहि, द्रव्यं तावत् साधारणं औषधमेव इमिति । देवताऽपि च मान्त्रवर्णिकी । उपांशुयाजकर्मे हि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानि आम्नायन्ते । तैश्च तुल्यार्थतया विकल्प्यमानैर्वैकल्पिका एव देवताः प्राप्यन्ते । नहि अन्यथा क्रमागतता मन्त्रा अङ्गभावं प्रतिपद्यन्ते, समवेतार्थप्रकाशनेनैव मन्त्रस्याङ्गत्वात् । न च एकवाक्यतानुरोधेन अर्थवादस्यैव देवतासमर्पकत्वमिति वाच्यम् । अर्थवादानां स्वार्थाभिकस्तुतिपरत्वेन मुख्यार्थस्तुतिपरत्वाभावात् । तमस्य तात्पर्ये वाक्यभेदप्रसङ्गात् । मं च गत्यन्तरं नास्तीति नार्थवादत्वेन संबन्धः । किञ्च 'विष्णुरुपांशु यष्टव्यः' इत्याद्यभिधानात् उपसर्जनीभूतो यागः प्रतीयते, विष्ण्वादयश्च प्रधानतया । यागाभ्युपगमे च विष्णुदेवतानो यागः कर्तव्य इति निष्कृष्य रूपमनेन यागे विष्ण्वादयः अप्रधानभूता इत्यर्थात् कल्पनीयम् । न च 'उपांशुयाजमन्तरा यजति' इति यागस्य प्राधान्येन प्रत्यक्षविधौ सति कल्पनामर्हति । 'विष्णुं यजति' इत्यादिषु मुख्या

अन्तरालवाक्ये हि कर्मोत्पत्तौ द्रव्यदेवतयोरनियमः सं- भाव्यते। तत्र द्रव्यदेवतयोरश्रवणात् 'तावनूताम्' इत्यत्र उपांशुयाजोत्पत्तौ स्ववाक्ये एव द्रव्यदेवतयोर्लाभात् अनियमाशङ्का कुतः। तथा 'विष्णुर्वा ग्राह्योऽभिमान- सामर्थ्यात्' इति। तथा 'मौनाद्वा सर्वसंयोगात्' इति च। सिद्धान्तेऽपि मान्त्रवर्णिकदेवतालाभो वाक्या- न्तरावगतप्रैयाय्यलाभे सति संभवति, न तूत्पत्तिगत- द्रव्यदेवतालाभे सति, इति यत्किञ्चिदेतदिति यथा- वार्तिकं अन्तरालवाक्यमेव उत्पादकमिति साधीय इति। तौता.

✱ पौर्णमासीवदुपांशुयाजः स्यात्। २।२।४।९॥

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्योऽजामि- त्वाय' 'प्रजापतिरुपांशु यष्टव्योऽजामित्वाय' 'अग्नी- षोमावुपांशु यष्टव्यावजामित्वाय' इति श्रूयते। तत्र किं उपांशुयाजशब्दः विष्ण्वादिगुणकानां भट्टानां यागानां समुदायस्य वाचकः, किंवा अपूर्वस्य यागस्य इति विचारे पूर्वपक्षमाह। उपांशुयाजः इति शब्दः समुदाय- वाचकः स्यात् पौर्णमासीवत् सिद्धवदुत्पन्नपौर्णमास्य- मानाख्याशब्दवत्।

चोदना वाऽप्रकृतत्वात्। १०॥

पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह। उपांशु- याज इति शब्दः चोदना कर्मान्तरवाचकः स्यात्। यागानां अप्रकृतत्वात्। 'विष्णुरुपांशु यष्टव्य' इत्या- दयस्तु न विधयः, किन्तु अर्थवादाः। तस्मात् यागा- न्तरमुपांशुयाजः।

गुणोपबन्धात्। ११॥

'उपांशुयाजमन्तरा यजति' इत्युपांशुयाजशब्देन उपांशुत्वगुणस्यैव उपबन्धात् विधानात् विशिष्टविधानाच्च न वाक्यभेदः। किंवा 'उपांशु पौर्णमास्यां यजन्' इति कालमन्त्रपरे वाक्ये उपांशुत्वगुणस्य उपबन्धात् विधानात् तन्निमित्तं उपांशुयाजनामधेयम्। उत्पत्ति- वाक्यस्थेन उपांशुयाजशब्देन उपांशुत्वस्य गुणस्य उप- बन्धात् उपांशुयाजशब्दार्थज्ञानं भवति। इति अन्तराल- वाक्ये एव कर्मचोदना।

प्राये वचनाच्च। १२॥

प्राये बहुप्रधानकर्मसमभिव्याहारे 'शिरो वा एत- द्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः' इत्यर्थवादे उपांशुयाजस्य वचनात् पठनात् उपांशुयाजस्य प्राधान्यावगमात् अन्तरालवाक्ये उपांशुयाजविधिरेव। तस्मात् नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदाया- नुवादः इति सिद्धान्तः।

'प्रधानेति भाष्येण (प्रधानप्राये वचनं प्रधानकर्म- तामुपोद्बलयति) उपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्यावगतेः विष्ण्वादिवाक्यैश्च त्रिधा उपांशुयाजभेदे सति अग्नीषोमीयस्यैव उपांशुयाजस्य कालविधिप्रसङ्गात् विद्वद्वाक्यानुदितत्वात् फलवाक्यप्रकृते प्राधान्यात् वैष्णव- प्राजापत्ययोरुपांशुयाजयोः गुणत्वापत्तेः उपांशुयाजमान- प्राधान्यानवच्छेदप्रसङ्गात् नोपांशुयाजवाक्यं पौर्णमासी- वाक्यवत् समुदायानुवाद इत्येवं सूत्रं व्याख्यातम्।' इति सुधा. पृ. ७५९। के.

✱ पौर्णमासीशब्दः त्रिषु आग्नेयादिषु यः समुदायः, तत्र (तद्वाचकः इत्यर्थः)। भा. ४।४।१३।३४.

✱ पौर्णमासीस्थयोराज्यभागयोः वार्त्रघ्नी, वृधन्वती अमावास्यायामः इति व्यवस्था। भा. २।२।१।१ पृ. ४७८.

✱ सर्वत्र हि तुल्यरूपाणां तुल्यधर्माणां विभागे पौर्वापर्यं भवति। तद्यथा देवदत्तमनुगच्छतीति। यदि देवदत्तोऽपि गच्छति एवमनुगमनमवकल्पते। तथा अनु- यजनमपि। भा. २।३।१०।२१, न चावश्यं तुल्यजाती- ययोरेव पौर्वापर्यं भवति अतुल्यजातीययोरपि पौर्वापर्यं भवति। तथा पाकमनुभुङ्क्ते इति अविरोधोपपत्तेः। यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीति एतत्तुल्यकर्मत्वे गम्यते इति युक्तम्, तत्र वर्तमानोपादाने सति क्रियाऽन्तरानु- पादानात्। २२, ✱ पौर्वापर्येण विरोधे पूर्वं परेण बाध्यते। प्रातर्बाधोऽत्र। ३।३।७।१४ पृ. ८६०. ✱ पौर्वापर्ये अपच्छेदयोः परनिमित्तकं प्रायश्चित्त- कार्यम्। अपच्छेदन्यायः। ६।५।१९।५४ ✱ 'पौर्वा- पर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरण- न्यायेन उपक्रमगतस्य परेण बाधः, इति चेन्न, परस्य

स्थ्यात्मकत्वे एव तन्न्यायप्रवृत्ते । कु ३।३।१।२ * 'पौर्वापर्ये०' इति न्यायेन काम्य नित्यस्य बाधकम् । ( वाजपेये द्वादशकपालस्य अष्टाकपालादिबाधक ) पूर्व पक्षे ) । सु पृ ८८८, * 'पौर्वापर्ये०' इति न्यायेन पश्चाद्भाविविध्यनुरोधेन अर्थवादव्याख्यया उभयो सम्प्रति पत्त्यायत्त्वात् आनर्थक्यपरिहार । इति शङ्का । पृ १९०० * 'पौर्वापर्ये०' इति न्यायेन प्रथमोत्पन्नाया अपि कर्ता भोक्त्रादिविषयमुत्तरेण भक्षामन्त्रानन्तत्वं बाध्यत्वम् । उप देशसाहस्री पद्य प्र २ श्लो ३ रामतीय * 'पौर्वापर्ये०' इति न्यायेन श्रुतस्य प्रामाण्य शाब्दोपक्रमे उक्तम् । कल्पतरु ४।१।२।३ ब्रसू. * ननु 'पौर्वापर्ये०' इत्यनेन ( न्यायेन ) उपक्रममपि अर्थवादात् मुख्यवेच्छान बाधितमा विध्युपक्रमेणैव एकेत । वा ३।३।१।१२ पृ ८०६, * साक्षात् ( आधान ) प्राप्ताङ्गकर्म ( उद्वैमन्य ) र्थापकत्वमवगम्यते । प्रयोगवचनमहणोत्तर काल तु पश्चात्तन एव प्रधानधर्म ( उपांशुत्व ) 'पौर्वापर्ये०' इत्यत्र बाधते । ३।३।२।९ पृ ८११ * 'पौर्वापर्ये०' इति न्यायस्य अन्योन्यानपेक्षबुद्धिजन्यविषयत्वात् बाधक लिङ्गादौ अप्राप्ति । सु पृ १२२०

**पौर्वापर्ये पूर्वदौर्बल्य प्रकृतिवत् । ६।५।१९।५४ ॥**

यस्मिन् ज्योतिष्टोमप्रयोगे बहिष्पवमानार्थं विपी लिकापङ्क्तिवत् अन्वारभ्य गच्छता ऋत्विजां मध्ये उद्गातु प्रतिहर्तुश्च अपच्छेदे येन चित् क्रमेण जातौ यौ अपच्छेदौ पूर्वं चान तन्निमित्तक प्रायश्चित्तं कर्तव्यम्, नोत्तरनिमित्तक इति पूर्वपक्षे सिद्धान्तमाह । अपच्छेदयो पौर्वापर्ये सति पूर्वदौर्बल्यस्य पूर्वस्य उत्तरापेक्षया दुर्बलत्व ज्ञेयम् । उत्तरस्य अपच्छेदस्य प्रबलत्वम् । तेन उत्तरापच्छेदनिमित्तक यत् प्रायश्चित्त तत् कर्तव्यम् । प्रकृतिवत् प्रकृतिगत पूर्वं भवति विकृतिगत च उत्तरम् । तत्र प्रकृतिगत अवाधिका विकृतिगत प्रबलतत्त्वं भवे । यथा दर्श प्रकृति पशुर्विकृति । दर्शात् पशौ पञ्च प्रयाजा प्राप्नुवन्ति । पशौ तु एकादश प्रयाजा विहिता । तत्र वैकृत एकादशत्व प्राकृत पञ्चत्व बाधित्वैव प्रवर्तते, नान्यथा । तद्वत् अपच्छेदेऽपि उत्तरापच्छेदनिमित्तकमेव प्रायश्चित्त कर्तव्य भवति न पूर्वापच्छेदनिमित्तकम् । यत्र पौर्वापर्येण द्वय प्राप्त तत्र द्वयोरनुष्ठाने विरोधे सति अयं पौर्वापर्यन्याय प्रवर्तते । यत्र तु उभयोरनुष्ठाने न विरोधप्रसङ्ग तत्र नाय न्याय । यथा उत्तराधिकरणे । के

* 'पौर्वापर्ये पूर्वनिमित्तस्यैव बाधनम् ।' वा ३।६।३।१० पृ १०३३

* नित्यनैमित्तिकयो , नित्यकाम्ययो , प्राकृतवैकृतयोश्च पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाध । टुप् ६।५।१९।५४

* पौर्वापर्यन्याय । पौर्वापर्यबलीयस्त्वन्याय । ६।५।१९।५४ मीको पृ ४९९ 'अपच्छेदन्याय ' इत्यत्र द्रष्टव्यम् । * ज्येष्ठप्रमाणस्यापि पौर्वापर्यन्यायेन बाधाशङ्का । कल्पतरु १।१।१ ब्रसू पृ ९

* आद्ये प्रयोगे केवलोद्गात्रपच्छेदे, द्वितीयप्रयोगे च केवलप्रतिहर्त्रपच्छेदे पौर्वापर्यन्यायप्रवृत्ति । बाल पृ ११७

* पौर्वापर्यप्रत्यासत्तिक्रमात् यथासंख्यक्रम बलीयान् । काम्ये या याज्याके पौर्वापर्यप्रत्यासत्तिक्रमेण एकस्मिन्नयुगल्यो द्वित्वेऽपि अनियमेन प्राप्नुवतो यथासंख्यक्रमेण अत्यन्तदेशसाम्येन प्रमाणवत्त्वात् विनियोगो भवति । वा ३।३।७।१४ पृ ८४०

* पौर्वापर्यबलीयस्त्व तत्र नाम प्रतीयते । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' ये हि भिन्नवाक्यगता परस्परानपेक्षा विरोधिनोऽर्था श्रूयन्ते, तेषां पूर्वस्य उत्तरानुपमर्देनैव लब्धात्मकत्वात् उत्तरस्य पूर्वोपमर्देन विना आत्मलाभानुपपत्ते पौर्वापर्यबलीयस्त्वन्यायो भवति । यत्र तु एकवाक्यतया परस्परापेक्षाणां श्रवणम्, न तत्र एवद्गति । तत्र हि आकाङ्क्षावशेन एकवाक्यता भवति । पूर्वप्रतीते च उत्तरमात्रानुगुण अधिक वा आकाङ्क्षते । अतश्च यत् अनधिक व्यनुगुण वा, तद् नपेक्षितत्वात् नैव तस्मिन् वाक्येऽस्ति । न चाविद्यमानेन पूर्वबाध शक्यते इति पूर्वस्यैव बलीयस्त्व भवति । वा ३।३।१।१२ पृ ८०६

* श्रुत्यादिकल्पनाद्वाराऽपि लिङ्गादीनां प्रामाण्य-विरोधेऽपि स्मृतिवत् प्रत्यक्षादिचतुष्ट्यान्यतरमूलकतापेक्षेण श्रुत्यादिकल्पनस्य दुर्वारत्व उक्तकल्पनापेक्षत्वेन श्रुत्यादिभ्य. पश्चात् प्रवृत्तेः कल्प्यश्रुत्याद्यपेक्षत्वेऽपि च विरोधि-श्रुत्याद्यनपेक्षश्रुतत्वात् पौर्वापर्यबलीयस्त्वन्यायेन एव (६।५।१९) दौर्बल्य मुक्तमित्येव । सु. पृ. १२१८.

* पौष्कलं नाम साम ' यज्ञा यज्ञा वो अग्नये ' (६१२-१३) इति ककुप्-सतोबृहतीरूपत्र्यृचात्मके सूक्ते गेयं तृतीये सवने आर्भवपवमाने । ( इति पूर्वपक्षे उक्तम् ) । पौष्कलं च तृचे न गेयं किंतु एकस्यामेव ऋचि ' ककुभि ' इत्येकवचनेन विशेषविधानात् ( इति सिद्धान्ते उक्तम् ) । वि. ९।२।६ वर्णके ३.

* पौष्णं पेषणं केवलपूषदैवत्ये, न तु सोमापौष्णादौ द्विदैवत्ये । ( सोमापौष्णः, ऐन्द्रापौष्णः चरुः इत्यादौ । ) । ३।३।१५.

% पौष्णं पेषणं चरावेव ॥

तत् सर्वार्थमविशेषात् । ३।३।१४।३५॥

भाष्यम्— पौष्णं पेषणं प्रकृतौ भूयमानं विकृतौ इत्युक्तम् ( पूर्वाधिकरणे ) । तत्र संदेहः किं चरौ, पशौ, पुरोडाशे च, उत चरावेवेति । किं तावत् प्राप्तम् ? तत् सर्वत्र स्यात् चरौ पशौ पुरोडाशे च । कुतः ? अविशेषात् । न कश्चित् विशेषः आश्रीयते । तस्मात् सर्वत्रेति ।

वा— तत् सर्वार्थमविशेषात् ॥ (सूत्रमात्रं पठितम्, न व्याख्यातम् ) ।

चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् । ३६ ॥

भाष्यम्— चरौ पौष्णं पेषणं विनियुज्येत । पुरोडाशं तावत् पेषणमर्थादेव प्राप्नोति । नैवान्यथा पुरोडाशो भवति । तदर्थं तावन्न वचनम् । पशौ च न स्यात् । हृदयादिषु पिष्यमाणेषु तेषामाकारविनाशः स्यात् । तत्र को दोषः ? ' हृदयस्याग्रेऽवद्यति ' इति न हृदयादवदायिष्यते । तथा अन्यदपि अवदानं न यथाश्रुतादवदास्यते । ननु शक्यते पिष्टेभ्योऽपि हृदयादिभ्योऽवदातुम् । नेति ब्रूमः । आकारा हृदयादयो न मांसानि । उक्तमेतत् आकृतिः शब्दार्थ इति । यद्यपि पुनस्तदाकृतिकः क्रियते, तथापि अस्योत्पादनप्रदेशं प्रति मुह्येयुः । तस्मात् चरौ पौष्णं पेषणं भविष्यतीत्येवमर्थं वचनम् ।

वा— चरौ वाऽर्थोक्तम्० ॥ यदि कश्चिद्वदेत् लौकिकपिष्टोपादानेनापि पुरोडाशसिद्धेर्नैकान्तेन अर्थाक्षिप्त इति, तं प्रति उच्यते । अर्थो नाम प्राकृत उपकारः । तस्य प्रकृतौ पेषणं साधनमासीत् अतस्तेन पूर्वतरप्राप्तेन उक्तं पुरोडाशे पेषणम् । पशौ च प्रधानवैगुण्यं स्यात् । तद्धि हृदयाद्याकृतीकेन सर्वश्च अयत्नेन साधयितव्यम् । न च पिष्टे तदाकृतिरुद्दर्शयेत । पुनस्तदाकारकरणेऽपि मृद्घटादिवत् गौणाद्वदीयमाने वैगुण्यमेव । ' उत्पादनदेशादवद्यति ' इति च श्रूयते । न च हृदयादेः पिष्टस्य ज्ञायेत कतरेण प्रदेशेनेदं पयोत्पत्तमिति । तस्मात् चरुत्वप्रतिषिद्धं अनर्थप्राप्तं च पेषणमिति तत्रैव विधीयते । ननु ' अदन्तको हि ' इति हेतुविशेषात् पशुपुरोडाशयोरपि प्राप्ते. द्वयवदानानि उच्छेत्स्यन्ति पिष्ट्वा दास्यन्ते । न च प्राप्तिविप्रतिषेधौ भविष्यत. । उच्यते । द्रव्यवचनस्य प्रधानप्रक्रमत्वात् नान्तरा पेषणेन व्यवधानं युक्तम् । हेतुवन्निगदस्य च स्तुतिमात्रार्थत्वं वक्ष्यते । तेन स्वक्रमस्थस्यैव पेषणस्य विधिः । उपनीतमात्रमेव च पेषणं पुरोडाशे अनुवादबुद्ध्या श्रूयते, चरौ च निवर्तमानं प्रतिप्रसवत्वेन, पशौ पुनरत्यन्तमप्राप्तनिषिद्धत्वेन । न चैतानि एकस्यैव वाक्यस्यैतावन्ति रूपाणि विज्ञायन्ते । वचनद्वयमेकरूपं अभ्युपगम्यते साधनान्तरप्रयत्नाच्च प्रतिप्रसवत्वमेवावधारणीयम् । एवं सिद्धं केवलचरुविषयत्वम् ।

चरावपीति चेत् । ३७ ॥

भाष्यम्— इति चेत्पश्यसि भवान्, अर्थविप्रतिषेधान्न पश्यामीति । ननु चरावपि अर्थविप्रतिषेध. । विशदसिद्धे ओदने चरुशब्दमुपचरन्ति । पिष्यमाणो हि पिष्टकं यवागूर्वा स्यात् सक्तवो वा ।

वा— चरावपीति चेत् ॥ ( सूत्रपाठमात्रं कृतम् ) ।

न, पक्तिनामत्वात् । ३८ ॥

भाष्यम्— अत्रोच्यते । सत्यं विशदसिद्धे ओदने चरुशब्दः प्रयुज्यते । विशदसिद्धश्चरुर्दीयते इति, न तस्य

विशदसिद्धिर्निमित्तम्। यदि विशदसिद्धिर्निमित्त स्यात्, न पिष्टसिद्धे प्रयुज्येत। तथापि हि प्रयुज्यते, 'पिष्टक चरु साध्यते' इति। अतोऽन्यदेतयो सामान्य तन्निमित्तम्। तदेतदुच्यते न पक्तिनामत्वादिति। न चरौ विप्रतिषेध। कथम्? पक्तिनामत्वात्। पक्तिनामैतत् चरुरिति। अनवस्रावितान्तरूष्मपाकेन अभिनिर्वर्त्यस्य भवति चरुशब्दो वाचक। तेन पिष्टे ओदने विशदेऽस्ते च प्रयोक्तारो भवन्ति चरुरिति। पक्षोक्तमेव प्रयोजनम्। पूर्वपक्षे पशावपि पेषणम्। सिद्धान्ते चरावेव।

वा— न, पक्तिनामत्वात्॥ न चरावर्थविप्रतिषेध। कथम्? 'गति सर्वपदार्थाना लौकिकव्यवहारत। तत्र पाकविशेषश्च चरुत्वेनावधार्यते॥' ओदनपिष्टक चरुप्रयुक्तस्य चरुशब्दस्य अनेकार्थत्वमयाय्यमिति उभय सामान्यवचनत्व विज्ञायते। तयोश्च सामान्यमनवस्रावितान्तरूष्मपक्वत्वम्। तस्मादविप्रतिषेध। पक्षोक्त प्रयोजनमिति। मन्द प्रयुक्तम्। एतावान् समाधि अविशेषेऽपि न पुरोडाशाघातस्य प्रयोजनम्। किं तर्हि? पक्षधर्मत्वमिति।

शा— सर्वत्र स्यात् इति प्राप्ते, उच्यते। 'पुरोडाशेऽन्यत सिद्धम्, पशावाकृतिनाशनम्। पेषण तेन न तयोर्विधातव्य चरौ पुन। अविघातक-मप्राप्तमिति तत्र विधीयते॥'

सोम— प्राकृतिकी सगति।

वि— 'चरौ पशौ पुरोडाशे चरावेवोत पेषणम्।, विशेषादर्शनादेतत् सर्वेष्वपि विधीयते॥, प्राप्तत्वाच्च पुरोडाशे ह्रदायाकारनाशनात्। न पशौ पारिशेष्येण चरावेव हि पेषणम्॥' १९

भाट्ट— तत् पेषण पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यात्, उत चरावेवेति चिन्तायाम्, अविशेषाददन्तकत्वहेतुत्वाच्च सर्वत्र। इति प्राप्ते, पुरोडाशे तावत् पाकात् पूर्व पेषणस्य प्राप्तत्वादेव विधान व्यर्थम्, तदुत्तर तु पुरोडाशपदवाच्याकृतिविनाशापत्ति। एव पशुहृदयादावपि। तेषामपि आकारविशेषविशिष्टत्वाच्चितत्वात्। न च उभयत्र अवदानोत्तरकाल पेषणविधि, अत्यन्तप्राप्तपेषण विधौ गौरवापत्ते। चरौ अतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम्। प्रकृतौ हि प्रदेयपुरोडाशसिद्धे अन्यथोपपादयितुमशक्यत्वात् अर्थप्राप्तमपि पेषण आध्वर्युकर्तृत्वादिप्रयोजनसिद्ध्यर्थं सधर्मक विहितम्। तत् चरौ प्रदेयसिद्धे तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्न प्रति पेषणस्य अकारणत्वात् निवर्तमान प्रतिप्रसूयते। अत एव प्रसक्त प्रतिषिद्धस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधि प्रतिप्रसव। तत्र चोत्पत्तिविनियोगाद्युपरबादौ यथासम्भव विपर्ययाभावात् लाघवम्। अत एव पेषणस्य प्रदेयसिद्धिरूपप्रकृतप्रयोजनलोपेन अत्र अदृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघात। धर्माणा तु पेषणस्य कर्मान्तरत्वाभावेन 'प्रधान नीयमान हि तदङ्गान्यपकर्षति' इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्ताना अनेनादृष्टरूपकार्यान्तरप्रयुक्तत्वकल्पन न दोषाय। इष्यते च अयमर्थ अग्निसंस्कारकर्मयत्नादे पशुप्रकरणाम्नातस्य वचनात् चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणा कार्यान्तरप्रयुक्तत्वकल्पनायो। वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि, प्रदेयसिद्ध्यर्थत्वादेव। यद्यपि हि चरुत्वावच्छिन्न प्रति पेषणस्याकारणत्वम्, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च 'पौष्ण चरुम्' इत्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात्, तस्य च प्रदेयस्य पेषणमन्तरेण असिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि। अत एव चरुर्नाम अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकद्रव्यम्। अत एव भट्टपादैरनवस्राविते इति। माण्डूक्यपादैरपि भक्तमिति। सूपशाकादियुक्ते तण्डुलेति। अत एव पिष्टकचरावपि तत्सम्भवाच्च पेषणस्य विधातव्यत्वमिति तत्रैव पेषणम्।

मण्डन— 'चरावेव पिपि पौष्णे।' १९

शकर— 'चरावेव तु सोत्कृष्या।' इति प्रपिष्टता।
१९

ह पौष्ण पेषण पूषमात्रदेवत्ये चरौ॥

एकस्मिन्नेकसयोगात्॥ ३।३।१५।३९॥

भाष्यम्— पौष्ण पेषण विकृतौ भवति चरौ एके-

स्युक्तम् । अथेदानीं सन्दिह्यते । किं एकदेवत्ये पौष्णे एतत् भवति, उत द्विदेवत्येऽपीति । किं द्विदेवत्ये उदाहरणम् ? राजसूये उत्तरे त्रिसंयुक्ते 'सौमापौष्ण एकादशकपाल., ऐन्द्रापौष्णश्चरुः (पौष्णश्चरु.) श्यामो (गौ ?) दक्षिणा' इति । तत्र ऐन्द्रापौष्ण उदाहरणम् । किं प्राप्तम् ? एकदेवत्यस्यैव पेषणमिति, केवलसंयोगात् यथा चतुर्थीकरणे ।

वा— एकस्मिन्नेकसंयोगात् ॥ इदानीं किमन्यसहिते पूषणि देवतायां ऐन्द्रापौष्णे चरौ पेषण भवति, उत एकस्मिन्नेव इति सन्देहे चतुर्थीकरणेन्द्रपीतन्यायात् सिद्धान्तेनैव तावत् उपक्रमते । पूषा इत्येकसंयोगश्रवणात् तथाभूते एवार्थे स्यादिति ।

धर्मविप्रतिषेधाच्च ॥ ४० ॥

भाष्यम्— द्विदेवत्ये विप्रतिषिध्येत धर्मः । पूष्णः पेषणं नेतरस्य । तत्र यदि पूष्णो भागः पिष्येत, अपिष्ट इतरस्य स्यात् । तत्र विषमः पाको भवेत् । पाकनिमित्तश्च चरुशब्दः, स विप्रतिषिध्येत । अथाविरोधं मन्यमाना अपरस्यापि भागं पिंषु., भागसमोहः स्यात् । तत्र को दोष. ? अन्यस्य भागोऽन्यस्मै अवदीयेत । तथा अयथाश्रुत क्रियेत । तस्मादपि एकदेवत्ये पेषणमिति ।

वा— इतश्चैकदेवत्ये । कुत. ? 'पिष्यादर्धं समस्तं वा द्विदेवत्ये चरौ भवान् । पूर्वस्मिन् पाकवैषम्यं परस्मिन् भागसंकर. ॥' अर्धपेषणे हि पिष्टोऽर्धः शीघ्रतर सिध्यति, इतरश्चिरेण । तत्र पिष्टपाकानन्तरमुद्वासने इति इतरस्य आमत्वं भवेत् । तत्पाकप्रतीक्षणेऽपि वा पिष्टस्य विन्धनात् अचरुत्वं स्यात् । पाकवैशद्येन हि पिष्टस्यचरुरपि चरुर्भवति । चैतदस्मिन् पक्षे भवति । अथ तण्डुलान् पूर्वं प्रक्षिप्य पश्चात् पिष्टं निक्षिपेत्, ततो यौगपद्य गम्यमान बाध्येत ( पिष्टतण्डुलभागयोर्द्वयोरपि एकयागसाधनत्वेन एकहविष्ट्वात् कृत्स्नस्य च हविषः 'हवींषि श्रपयति' इति युगपच्छ्रपणविधानात् श्रपणार्थनिक्षेपस्यापि यौगपद्यमिह अतिदेशात् गम्यमानं बाध्येत --मु. पृ. १३२९ ) । पूषानुरोधेन तु ऐन्द्रेऽपि भागे पिष्यमाणे भागसंकरात् अन्यदीये भागे अन्यस्मै दीयमाने वैगुण्यं प्राप्नोति । ननु नैतत् सर्वं द्विदेवत्येषु भवतोऽपि समानम् । तथाहि, 'चरौ पशौ पुरोडाशे दीयमाने द्विदैवते । पूर्वं हविष एकत्वाज्जायते भागसंकरः ॥' स चाङ्गीकृतः, मिश्रस्य हविषो मिश्रदेवतोद्देशेन युगपद्दाने विरोधाभावात् । उच्यते । 'यागापूर्वप्रयुक्तेषु धर्मेष्वेवं भवेदिदम् । भवतः पेषणं त्वेतद्देवताधर्मसंमतम् ॥' अस्मत्पक्षे पुनः पूषदेवत्ययागापूर्वप्रयुक्त पेषणम् । न च तत् द्विदेवत्ये तथावस्थितं इत्यप्रवृत्तिरेव । हविरन्तरेष्वपि च द्विदेवत्येषु एवंप्रकारत्वमेवेति देवता गुणभूता । न च गुणानुरोधेन प्रधानमावर्तनीयमिति सकृद्दानाभ्युपगमात् सर्वस्मिन् सह क्रियमाणे सकृद्दोषानाश्रयणम् । भवता पुनरस्मदभ्युपगमेन द्विदेवत्ये पेषण चक्तुमशक्नुवता अवश्य देवतानिमित्तत्वमभ्युपगन्तव्यम् । ततश्च देवतयोः प्रधान्याद्देवैका स्वभागमसंकीर्णं प्रार्थयते इति तथैव दानमनुष्ठेयम् । आदितश्चैक एव भाग. पेषणार्ह इत्यवधारितम् । ततश्च पङ्क्तिदोषः स्यात् । अथ तण्डुलात्मकोऽपि भाग. पाकसाम्यार्थं पिष्यते । तत्र ब्रूमः । यावत्तुल्यभागविवेक हविः, तावत् कियान् कस्य भाग. इत्यनवधारणात् संकरदोषो न जायते । कल्पिते तु विवेके वचनादृते पुनरेकीकरणानुपपत्तेरसंकीर्णदानं प्राप्नोति । तत्रान्यस्य भागात् अन्यस्मै अवदीयमाने वैगुण्यं भवति । पात्रभेदेन पक्ष्यामीति चेन्न । चरुमिति याग प्रति उपादीयमानत्वेन विवक्षितैकत्वस्य पात्रकृतभेदाश्रयणे शास्त्रबाधप्रसङ्गात् । अतो न कथञ्चिदपि प्रतिषिद्धधर्मके द्विदेवत्ये पेषणं भवतीति न कर्तव्यम् ।

अपि वा, सद्वितीये स्यात् देवतानिमित्तत्वात् । ४१ ॥

भाष्यम्—देवतानिमित्तमेतत् पेषण श्रूयते । पूषा प्रपिष्टभाग. कर्तव्य इति । स च द्विदेवत्येऽपि भागे पिष्यमाणे प्रपिष्टभाग. कृतो भवति । यथा चतुर्थीकरणे । तत्र हि तद्धितो निरपेक्षस्य भवति, न सद्वितीयस्य । इन्द्रपीत इति समासोऽपि निरपेक्षस्य, न सद्वितीयस्य । इह तु प्रपिष्टशब्दस्य भागशब्देन सह अन्यपदार्थो बहुव्रीहिः समास. । एषोऽपि समर्थयोरेव,

न तु अत्र द्विदेवत्ये कश्चिदेवंजातीयको दोषः । तस्मादेकदेवत्ये द्विदेवत्येऽपि वा चरौ अस्य भागः पेष्य एव ।

वा — सद्वितीयेऽपि वा पूषणि स्यादेव पेषणम् । कुतः ? 'हविषो यदि पौष्णस्य तद्भागाङ्गस्य वा भवेत् । अनुक्तत्वाद् द्विदेवत्ये न भवेत् पेषणं ततः ॥' पूषभक्षणनिमित्तमेतत् पेषणं न च तत् विशेषितवस्तुनिमित्तम् । व्यासक्तत्वाच्च [ व्यासज्यवृत्तित्वाच्च ] देवतात्वस्य द्विदेवत्ये पूषनिमित्तता न स्यात्, न तु पूषा तद्भागे वा नास्तीति । यथा वक्ष्यति (भाष्यं पृ. १९३१) 'तथाग्निः अदेवता, न तु असमवेतः' इति । तेन असत्यपि अत्र पूष्णो देवतात्वे समवायमात्रेण उभयोरुपादानात् द्वयोर्देवेनापि च सम्यमानस्य 'समं स्यादश्रुतत्वात्' इत्यनेन न्यायेन अर्धं पूष्णो भाग इति गम्यते । तस्य पेषणे नियमाणे यदि तावत् कात्स्न्यमोनिन्यायेन अमुख्येऽपि इत्येन इतरभागपेषणमपि क्रियते, तथापि न किञ्चित् दुष्यति । यद्यपि किमेतेन अश्रुतेन कृत्स्नेन इत्येन अर्धमात्रपेषणमेव अध्यवसीयते, तथापि तेन किञ्चित् सौष्ठवेन पाकसंपादनात्, युगपद्विशेषस्यानेकरूपोर्वा गुणत्वात् वर बाधः । इति निरूप्य ( पाके दोषाभावानुपपादेरर्थः ) कार्येण पेषणमिति । अथ यदुक्तं चरुग्रहणेऽन्वर्थपतनदिति, तत्राभिधीयते । 'समासतद्धितोत्पत्तिर्नासमर्थपदाश्रया । असमर्थत्वमेकस्य द्विदेवत्येषु नेष्यते ॥' तेन आग्नेये इवैतच्छब्दाभ्यां समर्थाभ्यामिन्द्रादिभ्यां द्विदेवत्यग्रहणं युक्तम् । इह पुनः पूषशब्दस्य असमासमासकरणात् प्रविष्टभागशब्दयोश्च समर्थेऽपि पूषणि सामर्थ्यविघातात् न किञ्चित् दुष्यतीत्युपलक्षणता ।

लिङ्गदर्शनाच्च ॥ ४२ ॥

भाष्यम्— लिङ्गमप्येवं भवति, 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इति, देवतानिमित्तं पेषणमिति श्रुतिर्दर्शयति । तथा 'सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपिष्टतां दर्शयति । तथा 'अर्धं पिष्टमर्धमपिष्टं भवति द्विदेवत्यत्वाय' इति देवतानिमित्तेनैव पेषणं दर्शयति ।

वा— 'अदन्तको हि' इति हेतुर्देवताधर्मत्वं दर्शयति । न च सद्वितीयस्य पूष्णो दन्ता जायन्ते इति हेतुसाम्यात् युक्तं पेषणम् । तथा च सौमापौष्णे नेमपिष्टतानुवादः अन्यत्र च द्विदेवत्ये 'अर्धं पिष्टमर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मत्वदर्शनमवकल्पिष्यते ।

**वचनात् सर्वपेषणम्, तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति ॥ ४३ ॥**

भाष्यम्— इदं पदोत्तरं सूत्रम्, नेमपिष्टं भवतीति कस्मादेतत् वचनमिति । उच्यते । यदि वचनमेतद्भवेत्, सौमापौष्णमाम्नातं सर्वत्र पेषणं विदध्यात् चरौ पशौ पुरोडाशे च । तत्र सौमापौष्णस्य चरुसम्बन्धे नेमपिष्टसंबन्धे च उभयस्मिन् विधीयमाने वाक्यं भिद्येत । तस्मात् योऽयं सौमापौष्णः तत्तत्र नेमपिष्टता । तं प्रति सौमापौष्णमात्रं प्रति शास्त्रवत्त्वं अर्धपेषणस्य । पुरोडाशे अर्थात् सर्वपेषणे प्राप्ते अर्थाभावाच्च पशौ चरौ वा अपेषणे प्राप्ते वचनमिदं भवेत् । तत्र चरुशब्दो न विवक्षितस्वार्थः स्यात् । प्रदर्शनार्थः कल्प्येत । पेषणानुवादपक्षे पुनर्नैव विरोधो भवति । तस्मात् भवत्येव लिङ्गम् । ननु अङ्गनाशभयात् पशोरपेषणम् । नेति ब्रूमः । अर्धपेषणे नाङ्गनाशः, अपिष्टादवदास्यते । पेषणं चादृष्टार्थम् ।

वा— विधित्वात् नेमपिष्टत्वमलिङ्गं विपर्ययसाधनं च इत्यत आह ( भाष्यम् ) 'यदि एतत् वचनं भवेत्' ततः अनेकार्थविधानप्रसङ्गात् नेमपिष्टत्वं विधीयमानं चरुं वा उद्दिश्य विधीयेत सौमापौष्णं वा । तत्र य एव उद्दिष्टः तस्यैव इतरेण विशेषणाशक्यत्वात् सार्वत्रिकत्वप्रतीतेः सर्वपेषणं प्राप्नोति । ततश्च अन्यतरस्यानर्थक्यप्रसङ्गः । तत् यदि तावत् 'चरुः, स नेमपिष्टः' इति विधीयते, ततः सर्वचरुविषयत्वकारणे सति सौमापौष्णशब्दः एकदेशानुवादः अनर्थकः स्यात् । अथ सौमापौष्णमनूद्यते, ततोऽपि सर्वपेषणमेव, तद्देवत्यपशुविधिसन्निधाने पशुपुरोडाशयोरपि प्रसङ्गात् । ततश्च पूर्ववत् चरुशब्दानर्थक्यप्रसङ्गः । न प्रति हि सौमापौष्णमविशेषितं प्रति पेषणस्य शास्त्रस्य विशेषणार्थमवगन्तुम् ।

एतस्मिन् पक्षे चरौ अपेषणं भवति । ननु अर्थप्राप्तत्वात् पुरोडाशस्य अपेषणं पशोश्च अर्थविप्रतिषेधात् इत्युक्तम् [ 'चरौ वा, अर्थोक्तं पुरोडाशे, अर्थविप्रतिषेधात् पशौ न स्यात्' ( पेषणं ) इति ३।३।१४।३६ सूत्रे ] इति चेत्, न, अत्र तयोरुभयोरपि अप्रसङ्गात् । सर्वपेषणे हि प्राप्ते पुरोडाशस्य अर्धपेषणं विधीयते, तावतापि च कथञ्चित् पुरोडाशो निष्पद्येत । हृदयादीनामपि उत्सादनेन उद्धारेऽपि पिष्यमाणानां नार्थविप्रतिषेधो भवति । न चालङ्कारः किञ्चिदपैति । न चोत्सादनेऽभेदः स्यात् । इत्येवमादेशस्य व्यवधानेन च पिष्टोऽपि सन् पूषभागः उपलभ्यते, न सर्वपेषणस्य मुख्येन । अथवा अस्मिन् पक्षे वाचनिकत्वाददृष्टार्थे पेषणे सति अपिष्टावेवाग्नीयेत । न हि तदैतत् देवतानिमित्तं पेषणं स्यात् । तस्मात् सार्थनिकरमप्रसङ्गात् परिशेषसिद्धं चरोः पेषणमिति तच्चोदितविरोधिका प्राप्तोत्येवेति चरुदेवतासम्बन्धनिधिपरे वाक्ये नैमित्तिकमनूद्यते इत्यनन्यसमम्युपगन्तव्यम् । अतश्च लिङ्गसिद्धिः ।

एकस्मिन् पाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् । ४४ ॥

भाष्यम्—एकदेवत्ये वा पौष्णं पेषणं भवितुमर्हति, नैन्द्रापौष्णे । कुतः ? नैव देवताधर्मो विधीयते, पूष्णो भागः पिष्ट उपवोच्य इति । कस्य तर्हि ? अर्थस्य धर्मः । कः पुनरर्थः ? भागः । कथमवगम्यते न देवताधर्म इति ? उच्यते । न हि तस्या भागोऽस्ति । ननु यद् देवतायै दीयते, तत् तस्या भागो भवति । उच्यते । एतद्धि देवतामुद्दिश्य त्यज्यते । न च त्यागमात्रेण देवतास्वं भवति । परिग्रहणेन हि स्वस्वामिसम्बन्ध आपद्यते । न च परिगृहीतं देवतयेति किञ्चन प्रमाणमस्ति । यद्य यं भजते, स तस्य भागः । न च हविर्देवता भजते । तस्मान्नास्ति पूष्णो भागः । अथापि कथञ्चिद्भवेत् भागः, तथापि न देवताया धर्मः पेषणं भवितुमर्हति । निष्प्रयोजनो हि तथा स्यात्, अभागधर्मत्वात् । कथं तर्हि प्रकरणान्तरे समाम्नातो भागधर्मो भविष्यतीति । उच्यते । वाक्यसंयोगात् ।

ननु च देवतयैव संयोगः श्रूयते, न भागेनेति । उच्यते । भागाभावादनर्थकत्वाच्च न देवतासंयोग इत्युक्तम् । तथापि तु यथा भागसम्बन्धो भवति, तथा वक्तव्यम् । तदुच्यते । अयमत्र पूष्णो भागो यः पूषणमुद्दिश्य त्यज्यते । यस्य द्रव्यस्य त्यागे पूषा देवता । न चैन्द्रापौष्णे भवति पूषा देवता, न स चरुः पूष्णः स्वत्वेन सम्बध्यते । तस्मादैन्द्रापौष्णे न कश्चिदस्ति पूष्णो भागेन सम्बन्धः । केवले तु पूषणि देवताभूते तस्मै सङ्कल्पितो भागो भवति । कथम् ? यमुद्दिश्य सङ्कल्पो भवति, स तस्य भाग इति प्रसिद्धिरेषा । तेन यद्यपि पूषा संयोगपाठेन इन्द्रापूष्णोरुपकारकमुच्चारणं कुर्वन्नुपकारको भवेत्, तथापि न तस्य द्विदेवत्यो भाग इत्युच्यते, असाकल्यात् । केवले पूषणि देवताया चरोः पेषणं क्रियते, नैन्द्रापौष्णेषु द्विदेवत्येष्विति ।

वा—एकस्मिन्नेव पूषणि देवतायामेतत् पेषणं भवेन्न सद्वितीये । 'न ह्येष देवताधर्मो न तद्भागस्य गम्यते । पूषदेवत्ययागार्थं धर्मस्त्वेष प्रतीयते ॥' न तावद्देवताया भागोऽस्ति यस्यैष धर्मः कल्प्येत । नहि तदुद्देशत्यागमात्रेण भागो भवति । किं तर्हि ? परिग्रहेण । कर्मसाधनो हि भागशब्दः । भज्यत इति भागः सेव्यत इत्यर्थः । तेन यं यो भजते, स तस्य भागः । न च हविरत्रं देवता भजते । भोक्तृत्वस्य नवमे निषेधात् । अथापि भवेत् तथापि तस्याः प्रयोजनं तनैव निवारयिष्यते । तेन देवतावत् भागधर्मत्वानुपपत्तेर्यागद्वारा अपूर्वधर्म एवाय नवमाद्यन्यायेन देवताधिकरणन्यायेन च विज्ञायते । भाष्यकारेण तु देवताधर्मत्वनिराकरणपरेण यागधर्मत्वमभिहितमिति द्रष्टव्यम् । 'कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यति' इति वाक्यसंयोगस्य देवताविषयत्वात् प्रकरणेन च विना अपूर्वसाधनत्वस्यानुपपत्तेर्न कथञ्चिद्यागेनापूर्वेण वा संबन्ध इति मन्यमानस्य प्रश्नः । तत्र 'वाक्यसंयोगात्' इत्युक्ते परेण स्वामिसम्बन्धे विज्ञाते भागशब्देनैव मुख्यार्थासंभवात् यागोपादानमिति दर्शयति । परस्वत्वीकरणात्मकस्य भागरूपस्य अविद्यमानत्वात् यदुद्देशेन त्यज्यमानत्वमात्रमसौ विधते, तेन भागो लक्ष्यते । स चैकदेवत्ये पूषविशिष्टो भवतीति तद्भागत्वदेशो घटते । द्विदेवत्ये पुनर्व्यासक्तौ विभः

सकल्पोऽन्यतरेण व्यपदेष्टुमशक्य इति । यथैव ऐन्द्राग्नस्य पुरोडाशस्य अग्नेश्च आग्नेयेन्द्राग्निशब्दाभ्यामग्रहणम्, तथैन्द्रापौष्णादेः पूषभागत्वेन । यद्यपि च एवंविधशब्दोच्चारणादिह समासोपालम्भो नास्ति, तथाप्ययं एव भागशब्दग्राह्यो न विद्यते इत्यप्रवृत्तिः । यद्यपि च द्वयोरर्थयोर्देवतात्वं प्रतिपद्यमानयोः समुदायप्रसिद्ध्यर्थत्वेन अवयवौ उपयुज्येते, तथापि सकलस्य अन्यतरेण व्यपदेशादनुपलक्षणत्वं सिद्धम् ।

हेतुमात्रमदन्तत्वम् । ४५ ॥

भाष्यम्—यदुक्तम्, अदन्तको हीति देवताधर्मं दर्शयतीति । अर्थवाद एष इतरस्मिन्नपि पक्षे उपपद्यते ।

वा—यत्तु 'अदन्तको हि' इति हेतुनिदर्शनात् देवताधर्मत्वमिति । तत्रोच्यते । हेतुवन्निगदार्थवादत्वादस्य यागधर्मप्रशंसार्थत्वाद् अनिरुद्धमित्यवगन्तव्यम् ।

वचनं परम् । ४६ ॥

भाष्यम्—अथापर यत्कारणमुक्तम्, नेमपिष्टमिति द्विदेवत्ये पेषणं दर्शयति, 'अर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मं दर्शयतीति । अत्रोच्यते । एवं सति वचनमिदमप्राप्ते भवतीति । ननु अनेकार्थविधानमेकं वाक्यं प्राप्नोति । उच्यते । सति पक्षान्तरे अनेकार्थविधिः पक्षान्तराश्रयणेन परिहियते । असति पुनः पक्षान्तरे तद्व्यापारानर्थक्यप्रसङ्गपरिजिहीर्षया अनेकार्थं वाक्यमभ्युपगन्तव्यं भवति । तस्मान्न द्विदेवत्ये पेषणमिति सिद्धम् ।

वा—नेमपिष्टादिषु प्राप्त्यभावाद्वचनं भविष्यति । विशिष्टविधानाच्च वाक्यभेदाभावः । अतश्चैकहायनीवच्च परस्परनियमादर्शनविषयत्वम् । अविशिष्टविधिं चापेक्ष्य विशिष्टविधिर्दुर्लभो भवति न तु अत्रासावस्ति । तस्माद्विभिन्नमित्येकदेवताविषयत्वमिति ।

शा—'यत्तप्रकरणाभावाद् वाक्ये चाश्रवणादिदम् । पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥ तत् स्वरूपप्रयुक्तं सद् द्विदेवत्येऽपि विद्यते ॥' इति प्राप्ते, अभिधीयते । 'देवता निष्फलत्वान्नैव पेषणस्य प्रयोजिका । उपादानं च यागस्य भागशब्देन विद्यते ॥ मुख्यार्थासंभवाद् यागलिङ्गविषयाऽत्र हि । श्रूयते भागशब्दोऽयं नानुपादानमस्त्यतः ॥'

वि—'द्विदेवकेऽपि किं पिष्टमुत पूषैकदेवके ।, द्विदेवकेऽपि तत् पूष्णः सत्त्वात् पेषणभागिनः ॥, देवता निष्फलत्वेन पेषणं न प्रयोजयेत् । यागस्य तत्त्वे भागोक्तेर्न यागान्तरगामि तत् ॥' २० तत्त्वे पेषणप्रयोजकत्वे ।

भाट्ट—यत्र अन्यसहितः पूषा देवता यथा राजसूये 'ऐन्द्रापौष्णश्चरुः' इति तत्रापि पेषणम्, उत यत्र केवल एव देवता तत्रैव इति चिन्तायाम्, 'अदन्तको हि सः' इत्यर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेः, तत्स्वरूपस्य च अन्यसहितेऽपि सत्त्वात् युक्तमेव पेषणम् । अत एव 'सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपदस्यान्यार्थविधित्वानुवादोऽपि सङ्गच्छते । यदि तु ननमायन्यायेन पूषस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत, तदाऽस्तु पूर्वोक्तविधया पूषपिष्टसम्बन्धज्ञानजन्ययागानुमितैव अपूर्वसाधनलक्षणायाः सत्त्वात् साऽपि पूषपदे । परन्तु अर्थवादानुरोधात् पूषाधिष्ठानदेवताप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकारात् द्विदेवत्येऽपि पेषणमर्थस्य । यथा चैवं सति पात्रसपत्नीस्थापि यतितव्यं अन्तरायकरणेन वा क्रमिकनिक्षेपेण वा पात्रभेदेन वा । इति प्राप्ते, आनर्थक्यपरिहाराय अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्, अधिष्ठानद्वारकत्वकल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः, तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैव आनर्थक्यपरिहारात्, द्विदेवत्ये च चतुर्थीकरणाधिकरणन्यायेन केवलस्य पूष्णो देवतात्वाभावात्, यत्र केवल एव पूषा तत्रैव पेषणम् । न च अपूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूष्णोपरि माने स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तिविवक्षणात्, तस्य च द्विदेवत्येऽपि एकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यत्वोपपत्तेः कथं न पेषणमिति वाच्यम् । व्यासज्यवृत्तिधर्मप्रकारतायां एकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्तेः । अन्यथा एको द्वित्ववानित्यापत्तेः 'एको द्वित्ववान्' 'एको द्वौ' इत्यादिशाब्दबोधापत्तेः । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धे-

मात्रविधि' इति चिन्तायाम्, न तावत् भागशब्दलक्षित-यागोद्देशेन पेषणविधिः, एकप्रसरताभङ्गापत्तेः, पूषपदेन विशेषणे वाक्यभेदाच्च, कल्प्यमानार्थद्वयोपसर्जनस्य पेषणस्य यागान्तरानुपपत्तेश्च । अत एव न पूषपदमेव वाक्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम्, पूष्णः अन्यस्मिन्नपि तत्संबन्धस्याभावेन कल्प्योपस्थितौ प्रमाणाभावाच्च । अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायम् । इति प्राप्ते, प्रपिष्टभागपदेन तावत् भागो भजनीय संयमस्येति व्युत्पत्त्या सेवनासंभवेऽपि संबन्धमात्र देवत्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णः प्रतीयते । तच्च यागं विना अनुपपन्नमिति यागमनुमापयति इत्येतावत् उभयोरविवादः । तत्र च विशेषणमात्रविधिसंभवे विशिष्टविध्यादिकल्पनस्य अन्याय्यत्वात् प्रमाणान्तरेण न अपूर्वयागान्तरानुमितिः इत्यपि प्रथमतोऽवगतमेव । अतश्चानुमीयमाने यागे अनुमापकपूषसम्बन्धेन प्रसिद्धपूषदेवत्ययागस्योपस्थितिरपि सुलभैव । अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात् पूषपद विजातीयपूर्वसाधनीभूतपूषदेवतापरम् । तदुद्देशेनैव च स्वसम्बन्धियागप्रदेयद्रव्यप्रकृतित्वसम्बन्धेन प्रपिष्टद्रव्यस्य प्रपिष्टभागसमासार्थो विधीयते । संभवति च द्रव्योद्देशेन देवताविधिवत् देवतोद्देशेनापि निरूढसंबन्धेन द्रव्यविधिर्विशेषणमात्रविधिरूपः । यद्यपि च प्रकृतिद्रव्यस्यापि अनिर्देशेन समस्यमानिकता, तथापि तत्र पूर्वं विधानादङ्गीकाराच्च प्रसक्तलाभतात्पर्यमेव । पेषणमात्रविधिश्च फलमिति गुणादिप्रमाणभावाच्च कर्मान्तरता । एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदलक्षितपेषणविधिरिति प्रकारोऽपि निषादस्थपत्यधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वात् 'वषट्कर्तुः प्रथमभक्षः' इत्यादौ अतिप्रसङ्गापत्तेश्च उपेक्षितः । तत्र अस्मदुक्तप्रकारेण भक्षस्य प्रयत्नविधिनैव प्राप्तत्वेन तत्पूर्वत्वमात्रविधानुपपत्तेरभावात् । तदेतत्सर्वं सिद्धमेवोत्तरनिरासाय स्मार्यते इति प्राञ्चः ।

मण्डन–'विकृतौ पौष्णपेषणम्।' १८.

शंकर–'पूष्ण्युद्दृष्टया प्रपिष्टता।' १८.

* पौष्ण–सावित्र–सारस्वत–द्यावापृथिवीयान्यनुमन्त्रणानि ( दर्शपूर्णमासप्रकरणात् तत्तद्देवत्ये कर्मणि ) उत्कृष्यन्ते । भा. ९।३।५।१९.

* 'प्रास्मै' इत्यस्य अग्निगुणेऽपक्षस्य न विकारो यत्र अग्नीषोमीयः सवनीयाश्च समानविधानाः । ९।३।८।२३. * 'प्रोद्गातॄणाम्' इत्यत्र विभक्तिवचनस्याय प्रातिपदिकस्यान्यथानयनम् । न च षष्ठीबहुवचनस्य प्रथमैकवचनवत् अन्यतराविधानेन तस्यान्यथानयनमसंभवीति बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छन्दोगेषु लक्षणा आश्रिता इति वाच्यम् । 'सक्तून् जुहोति' इत्यनेन अन्यत्र नयनस्य सम्भावितत्वात् । अद्वैत. २।२९ (३०)।३७. * 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' अयं मन्त्रः गुणसूक्तद्वयनिधिः । बाल. पृ. ६४. * 'प्र णो देवी सरस्वती' इत्यादिना होत्रकाण्डे चित्रयणीयचतुर्थपञ्चमहविषोः सारस्वतयोर्मध्ये स्त्रीदेवतस्य याज्यानुवाक्ये प्रथमतः पठिते, ततः पुंदेवत्यस्य 'पीपिवांसं सरस्वतः' इत्यादिना । चि ५।१।७. * 'प्र वो वाजा अभिद्यवः' इति ऋक् दर्शपूर्णमासयोः सामिधेनीषु प्रथमा । क्वचिद् विकृतौ तु अन्याऽपि प्रथमा । यदा सा प्रथमा सैव त्रिर्वक्तव्या । ( उपसदिष्टौ 'उपसद्याय मीळ्हुषे' (ऋग्. ७।१५।१) इति त्रिस्र एकैका त्रिरन्वाह ताः सामिधेन्य.' (आश्वश्रौ. ४।८) अत्र 'उपसद्याय' इत्येषा प्रथमा । महापितृयज्ञे तु 'उशन्तस्त्वा' इत्येषैव सामिधेनी । ) । वि. ९।१।१०.

* प्र–शब्दः प्रकर्षे सिद्धः । भा. १।१।८।२१.

* प्रउगं नाम शस्त्रं होत्रा शंसनीयम् । अग्निष्टोमे प्रातःसवने बहिष्पवमानोत्तरं ऋतुयाजोत्तरं आज्यशस्त्रशस्त्रान्तमनुष्ठाय ततः परं प्रउगं शस्यते । के. * 'प्रउगं शंसति' इति शस्त्रं प्रधानकर्म, न गुणकर्म । स्तुतशस्त्राधिकरणम् । २।१।५।१३–२९.

* 'प्रउगचितं चिन्वीत पशुकामः' इति श्रुतम् । चयनविशेषोऽयम् । अत्र प्रउगं नाम शकटस्य यवाद्यम् । यत् पुरतः चक्रद्वयच्छिद्रप्रोतमयष्टेहमयान्यस्तदण्डमध्ये बध्यते, आरतश्च युगमध्ये बध्यते ।

एतादृशप्रयुगाकारं चयनं प्रउगचितम् । तच्च द्विविधं एकतः प्रउगचितं उभयतः प्रउगचितं चेति । के.

* प्रकरणमपि विनियोगे प्रमाणम् । ३।३।४।११. * प्रकरणं अभिधीयमाना आकाङ्क्षा, आकाङ्क्षावती वा भावना । शा. ३।३।७।१४ पृ. ८५२. * प्रकरणं अवान्तर संदंशोद्भूतिकर्मेव । तच्च प्रकृत्वेर्नास्त्येव । प्रकृत्यन्तरस्य तु भवति यथा प्रयाजानामभिक्रमे । बाल. पृ. ११. * प्रकरणं उभयाकाङ्क्षा ( फलाकाङ्क्षाविशिष्टकथम्भावाकाङ्क्षा । वैशिष्ट्यं च स्वाश्रयभावनाभिनिहितभावना ऽऽश्रितत्वसंबन्धेन, न तु एकपुरुषानुगतत्वादिना । उक्तसम्बन्धेन यदीयफलाकाङ्क्षाविशिष्टा अनिर्णीतसम्बन्धगता या कथम्भावाकाङ्क्षा, सा तद्विनियोजकं प्रकरणं इति तु निष्कर्षः ) यथा प्रयाजादिषु । तदिदं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोः । तयोस्तु क्रियायोगात् विनियोजकम् । मीन्या. पृ. १६५, १७२. * प्रकरणं कथम्भावात्मकं क्रतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमाने अत्यन्तं बाधितं भवति । शा. २।४।१।१. * प्रकरणं कर्तव्यस्य इतिकर्तव्यताऽऽकाङ्क्षस्य वचनम् । आरम्भो हि स तस्याः वचनक्रियायाः । स एव विध्यादिः विभक्त्यपेक्षः । भा. ३।३।७।१४ पृ. ८५१. * प्रकरणं क्रमाद् बलीयः । तेन विदेवनादयो न अभिषेचनीयादम् । अभिषेचनीयस्य तु मध्ये स्यात् विदेवनादीनाम् । ४।४।२।८. * प्रकरणं क्रमाद्यपेक्षया प्रबलम् । ' अक्षैर्दीव्यति ' ' राजन्यं जिनाति ' ' शौनःशेपमाख्यापयति ' एतेषां राजसूयाङ्गत्वम् । न तु अभिषेचनीयाङ्गत्वम् । वि. ३।३।१०.

※ प्रकरणं तु पौर्णमास्यां रूपावचनात् । २।२।३।६ ॥

एवं समामनन्ति ' यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति ' ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति ' ' ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् ' ' ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम् ' इति । तथा ' आघारमाघारयति ' ' आज्यभागौ यजति ' ' स्विष्टकृते समवद्यति ' ' पत्नीः संयाजयति ' ' समिष्टयजूंषि जुहोति ' ' य एवं विद्वान् पौर्णमासीं यजते ' ' य एवं विद्वानमावास्यां यजते ' इति । तत्र संदेहः किं सर्वाण्येतानि समप्रधानानि, उताग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि उपकारकाङ्गानि । तथा ' य एवं विद्वान् ' इत्येवं प्रयुक्तौ प्रकृतानां कर्मणामनुवदितारौ, अथवा पूर्वयोः कर्मणोर्विधातारौ, तयोरेव गुणविधय इति । पूर्वाधिकरणेन अभ्यासतो भेदमभिधाय इदानीं तदपवादः क्रियते । अत्र ' य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते ' इति वाक्यद्वयमेव विचारविषयत्वेनोदाहरणम् । यत्तु भाष्यकारेण दर्शपूर्णमासप्रकरणपठितानि बहूनि अङ्गप्रधानवाक्यानि उदाहृत्य किं तन्मध्यपातिनां अङ्गाङ्गिभावो वेति संशयप्रदर्शनं कृतम्, न तद्विचार्यत्वेन, किं तर्हि ? प्रस्तुताधिकरणपूर्वपक्षसिद्धान्तप्रयोजनत्वेनेति मन्तव्यम्, शोधनेऽपि विचारस्य करिष्यमाणत्वात् । अत्रायं पूर्वपक्षिणोऽभिसंधिः । विद्वद्वाक्यद्वयप्रतिपादितयोः कर्मणोः आघारादिभ्यस्तावत् अयागरूपेभ्यः शब्दान्तरादेव भेदः, यागरूपेभ्यः आग्नेयादिभ्यः अभ्यासादेव भेदः । अतः पृथगेवेदं कर्मद्वयम् । ननु वर्तमानापदेशत्वस्य सत्त्वात् कर्तृयोगिशब्दोपबन्धेनैव विधिरूपतिरस्कारात् नानयोर्विधित्वम्, विध्यभावाच्च भेदकत्वानुपपत्तिः, तत् कथमनयोर्विध्यभावात् कर्मभेदप्रतिपादकत्वम् ? न चैवं सति वाक्यद्वयमेतदनर्थकम्, ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यधिकारवाक्यापेक्षितसमुदायद्वयकरणेन अर्थवत्त्वात् । उच्यते । वर्तमानापदेशरूपत्वेऽपि प्रयोगवचनोपसंहारेण पञ्चमलकारनिर्णयादेव अस्य विधित्वम् । तथाहि, प्रयोगवचनप्रतिनिधिभावापन्नेन तदेकवाक्यतापन्नमिदं वाक्यद्वयम् । तदेकवाक्यत्वं च तदपेक्षितार्थप्रतिपादने भवति । तत्रास्य मन्त्रार्थवादरूपत्वाभावात् कर्मविधित्वेनैव निर्णीयते । न च कर्तृयोगिपञ्चत्वशब्दाभ्यां विधितिरस्कारः, क्रियाविशेषितकर्तृयोगी हि यच्छब्दो विशेषणीभूतक्रियाविधानपरिकल्पी भवति यथा ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । अत्र हि दीक्षारूपक्रियाविशेषितकर्तृयोगी यच्छब्दो दीक्षाविधानपरिकल्पी भवति,

भावात् । तदुक्तम्—‘प्रथमं काल एवाभ्यां शब्दाभ्यां प्रतिपाद्यते । पश्चात्तु कर्म तद्योगादतः कालोऽत्र गृह्यते ॥’ इति ( वा. पृ. ४७८ ) । नापि कालद्वारेण लक्षणया कर्मपरत्वम्, आग्नेयादियागैरेव पौर्णमास्यमावास्याकालयोगेन मन्त्रव्यवस्थापकतया मुख्यार्थोपपत्तौ अन्यथाऽपि लाक्षणिकत्वस्वीकारासम्भवात् । न चाग्नेयादेः पौर्णमास्यमावास्याकालस्य प्राप्तत्वात् न मन्त्रव्यवस्थापकत्वं वचनस्येति वाच्यम् । यतः सिद्धान्ते तावत् प्रयोगद्वयेन साङ्गस्यैव पौर्णमास्यमावास्याकाले लब्ध एव । तथा पूर्वपक्षेऽपि सर्वेषां समप्राधान्येन सहचरितानां मध्ये अष्टाना कालसंबन्धस्य श्रुतत्वात् इतरेषामपि कालसम्बन्धे कल्प्यमाने प्रयोगविधितः तत्कालस्यैव बुद्धौ विपरिवृत्तेः तत्कालसम्बन्धमेव कल्पयति । तत्र पौर्णमास्यमावास्याकाल्यो विनिगमनाप्रमाणाभावात् इच्छावशादनुष्ठाने सति भवति व्यवस्थाऽर्थं वचनम् । यदा पौर्णमास्याज्यभागौ तदा वार्त्रघ्नी अनूच्येते, यदा अमावास्याज्यभागौ तदा वृधन्वती अनूच्येते । अतो मान्त्रवर्णिकदेवताया अभावेन अरूपत्वान्न कर्मविधित्वम् । किञ्च नामावच्छिन्नं हि कर्मद्वयमेतत् विधातव्यम् । न च प्रवृत्तिनिमित्ताभावेन पौर्णमास्यमावास्यापदयोर्नामधेयत्वमस्ति । नापि कालविधिपरे वाक्ये विधास्यमानभाविकालसम्बन्धनिरीक्षणेन नामधेयमिति वाच्यम् । उत्पत्तौ हि नामप्रवृत्तिनिमित्तत्वं कालस्य । न च कालविधिपरे वाक्यद्वये भिन्नवाक्यद्वयोरयं धर्मः प्रतीयते । तेन यथाभूतस्य नामसम्बन्धो न तथाभूतस्य कालसम्बन्धः, यथाभूतस्य कालसम्बन्धो न तथाभूतस्य नामसम्बन्ध इति । अग्निहोत्रादौ तु यथाभूतस्य उत्पत्तिः तथाभूतस्यैव ‘यदग्नये च प्रजापतये च सायं जुहोति’ इत्युत्पत्तिवाक्यगतहोमस्वरूपानुगमात् वैषम्यादिति नानुपपन्नम् ।

नन्वेवं तर्हि आग्नेयादिवाक्यैरेव देवतामात्रविधानात् रूपवत्त्वं भवति । मैवम्, प्राप्ते कर्मणि द्रव्यदेवतारूपानेकगुणविधाने वाक्यभेदप्रसङ्गात् । न च संस्कारवाक्यपर्यालोचनेन द्रव्यप्राप्तौ देवतामात्रविधानान्न वाक्यभेद इति वाच्यम् । द्रव्यविधानमन्तरेण संस्कारवाक्यासम्भवात् । अन्यथा ‘द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः’ इति न्यायेन प्रधानकर्मत्वापत्तेः । किञ्च भवतु तावत् द्रव्यप्राप्तिः, तथापि आग्नेयपदोपात्ताग्निविधाने अष्टाकपालपदोपात्ताष्टत्वविधाने च वाक्यभेदः । तेन यदुक्तं तद्विधानैकपदोपात्तदेवताविशिष्टद्रव्यविधानान्न वाक्यभेद इति, तदपि निरस्तम् । अष्टाकपालपदोपात्ताष्टत्वसंख्याविधानस्य आवश्यकत्वेन वाक्यभेदस्य तदवस्थत्वात् । तथा च सूत्रम्—चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ इति ।

ननु सिद्धान्ते च एकेन वाक्येन द्रव्यदेवतासंबन्धवत्यागानां विधाने वाक्यभेदः समान एव । न सकलविशेषणविशिष्टैकभावनाविधाने भावार्थतः अभावात् । न चैवं सति विशेषणानामविधानम्, विशिष्टविध्यन्यथाऽनुपपत्तिकल्पितविधिभिरेव विशेषणविधानात् । तदुक्तम्—‘श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । पर्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥’ इति ( वा. पृ. ४८९ ) ।

ननु यथा विशिष्टविधिर्विशेषणविधिसापेक्षः तथा विशेषणविधिरपि विशेष्यलाभाय विशिष्टविधिसापेक्ष एव इत्यन्योन्याश्रयात् विशिष्टविधिरपि न सम्भवति । उच्यते । स्यादेव यदि विशिष्टविधिः विशेषणविध्यवगमापेक्षप्रवृत्तिर्भवेत् । किं तर्हि ? आकाङ्क्षितसंनिहितयोग्यविशेषणमात्रावगमापेक्षप्रवृत्तिः । तानि च विशेषणानि विशिष्टविधिवाक्ये एव पदप्रतिपादितानि, किन्तु विधिप्रतिपादिता विशिष्टविषयिणी कर्तव्यता न विशेषणानां कर्तव्यतामनासाद्य पर्यवस्यतीति विशेषणकर्तव्यतापेक्षाया पूर्वसिद्धा एव विशेषणविधयः श्रुतार्थापत्त्या कल्प्यन्ते । तेन विशिष्टविधौ विशेषणविधयः पूर्वसंबन्धमात्रेणैव उपयुज्यन्ते । यथा जीवतो गृहाभावे बहिर्भावः । यथा वा शब्दार्थव्युत्पत्तौ व्यक्तौ व्यवहारदर्शनात् प्रथमं व्यक्त्यर्थत्वमभ्युपगम्यते । तत्र आकृत्यर्थत्वं प्रागनवगतमपि सत्तामात्रोपयोगि पश्चात् तु आनन्त्यव्यभिचाराभ्यां व्यक्तेरवाच्यत्वात् आकृतेर्वाच्यत्वं निश्चीयते, न चेतरेतराश्रयत्वम्, तथेहापि । तदुक्तम्—‘विशेषण-

विचारोऽप पश्चादप्यपि गम्यते ( विशेषणविशेष्य- भावमिति मुद्रितपुस्तकपाठ )। तथापि त्वाकृतिन्यायात् तत प्रागेव जायते ॥' इति ( वा पृ ४८९ )। तत्र आग्नेयादियागैर्विशिष्टापूर्वसम्बन्धविधौ न वाक्य- भेद । तेन तद्वाक्यविहितसर्वसमुदायानुवादत्वमेव विद्वद्वाक्यस्य गम्यते इति। तदुक्तम् ' अपूर्वेणाप्रविधानस्य प्रकृते शास्त्रशक्तित ( मरूपतामिति मुद्रितपुस्तक पाठ )। तत्र रूपलाभाय समुदायानुवादता ॥' इति ( वा पृ. ४८९ )। इद तु इह वक्तव्यम्। किं पुन समुदायानुवादस्य प्रयोजनम् ? तदुच्यते। फलवाक्ये हि 'दर्शपूर्णमासाभ्याम्' इति वचनात् द्वयो फलसाधनत्व- मात्रम्। न च तत् कर्मस्वरूपापेक्षम्, तेषां तद्गुणत्। नापि यागद्वयस्य फलपक्षम्, तथा सति ' यजमानेन ' इति तत् एकवचनप्रसङ्गात्। न चोत्पत्तिवाक्यगतशब्दद्वयापेक्षम्, तथापि अन्तरङ्गवचनेन एकवचनप्रसङ्गादेव। ननु 'सुवा सुवो भवति ' इति बहुवचनस्थाने एकवचनमेकस्मिन् वाक्ये द्विवचनमिति युक्तम्, अन्यथा हि अर्थसाधुत्वासम्भवात् प्रयोगसाधुत्वमात्रार्थं तथा अभिधानम्। इह तु विद्वद्वाक्य- द्विवचनादिनिमित्तसमुदायविधानेनैव अर्थसाधुत्वसम्भवे सति न प्रयोगसाधुत्वमात्रार्थत्वम्। तथाहि, प्रथमप्रयोगे पौर्णमासी- पौर्णमासीशब्दाभ्यां द्वयोर्मासयोरिन्द्रश्चात्, तथा प्रयागामपि एवं दधि एवं पय इत्येवमेकमासस्था फलान्तरसात्, प्रथमयागानामेवैक्यसम्भवात्। विद्व- द्वाक्यगतेन फलवाक्यस्थैकत्वादि अविदुषर्थं समुदायानु वाद प्रयोजनमिति। तदुक्तम्— ' यथेनोत्पत्ति- वाक्यानां प्रयोगवचनाङ्गता। तथैव तदुपादानात् द्वित्वसिद्धयाऽनयोरपि ॥' इति (वा पृ ४८९)। ननु पौर्णमास्यमावास्याशब्दाभ्यामेव कथ दर्शपूर्णमासशब्दाभ्यामनुवादनम्? अत्र पूर्णमासशब्देन तद्विकार पौर्णमासीशब्दो लक्ष्यते, एव तर्हि दर्शशब्देन विरुद्धलक्षणैव भक्त्यात् चन्द्रमस अमावास्या प्रति- पाद्यते इत्युच्यते। तत्र किमत्रकं 'सुवा सुवो भवति' इत्यनुवादवाक्येन एकवचनस्थाने द्विवचन बहुवचनस्य चेति। मैवम्। अनुवादानुवादकवाक्यस्य भावप्रयोजन साम्येन विधिना फलवाक्यादिद्विवचनान्तर्यानुवादक प्रवृत्तिसिद्धयर्थमेव अध्यापितत्वात् द्वैतेनापि तदुपादान न दोषाय। पूर्वपक्षे तु नैवंविध किञ्चिदस्ति निमित्तमिति वैषम्यम्। एव च षण्णामेव फलसम्बन्धेन विहितत्वात् इतरेषामाघारादीनां फलसम्बन्धविधिन्यायेन तदङ्गत्वमेव भवतीति सिद्धान्तस्य प्रयोजनम्।

सूत्र तु—प्रक्रियते इति प्रकरणम्, तेन आग्नेयादि- कर्म अभिधीयते। पौर्णमास्यामित्यनेन पौर्णमासीपदयुक्त- विद्वद्वाक्यमुपलक्षयति। तेनायमर्थ — अस्मिन् वाक्यद्वये प्रकरणमेव कर्म प्रतिपाद्यम्, न तत्पृथक्कर्मा- न्तरम्। रूपावचनात् द्रव्यदेवतात्मकरूपप्रतिपादकत्वा- भावादित्यर्थ । सौत्रा

इं प्रकरण तु पौर्णमास्यां रूपावचनात्। २।२।३।३ ॥

'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' 'तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ' ' उपांशुयाजमन्तरा यजति '' ताभ्या मेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत् '' एन्द्र दध्यमावास्यायाम्' 'एन्द्र पयोऽमावास्यायाम्' इति षाट् समुत्थानि वाक्यानि श्रूयन्ते। तथा ' आघारमाघारयति ' ' आज्यभागौ यजति ' ' स्विष्टकृत यजति ' ' पत्नीसं- याजान् यजति ' ' अग्निहोत्रं जुहोति ' इति आघारादियुक्तानि वाक्यानि। तन्मध्ये च ' य एव विद्वान् पौर्णमासीं यजते ' ' य एव विद्वानमावास्यां यजते ' इति श्रूयते। किं सर्वा- ण्येतानि समप्रधानानि, उत आग्नेयादीनि षडेव तानि प्रधानानि, आघारादीनि फलविधुरत्वात् आराद्उप- कारकाणि अङ्गानि इति विचार। तथा 'य एव विद्वान्' इति विद्वद्वाक्यद्वय प्रकृतानां कर्मणामनुवादकम्, उत अपूर्वयो कर्मणोर्विधायकम्, इतरे च गुणविधय इति विचार। तत्र सिद्धान्तमाह। 'पौर्णमास्याम्' इति अमा- वास्यायां अपि तदुपलक्षणम्। पौर्णमासीशब्दघटितो अमा- वास्याशब्दघटितो च विद्वद्वाक्ये प्रकरणप्रकरणस्थमेव आग्ने- यादिकर्मजात अनूद्यते, न तु अपूर्वं कर्मान्तर विधीयते। रूपावचनात् रूपस्य द्रव्यदेवतात्मकस्य इष्यदेवतास्य अवचनात् अनभिधानात् अकीर्तनात्। अनुवादपक्षे तु भवितव्य आख्यातो यत्र पौर्णमास्यमावास्याशब्दयुक्त इति

गम्यते रूपम् । तस्मात् समुदायशब्दतया आग्नेयादियाग समुदायौ पौर्णमास्यमावास्याशब्दौ बोधयतः । एतावेव समुदायौ दर्शपूर्णमासशब्दाभ्यां अभिधीयेते, फलसंबन्धश्च बोध्यते स्वर्गकामपदेन । ततश्च फलवत्सन्निधौ अफलानि आघारादीनि भारादुपकारकाण्यङ्गानि इति सिद्धान्तः ।

विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् । ४ ॥

आग्नेयादीनां आघारादीनां च समप्राधान्याभावे सिद्धान्ते साधकान्तरमाह । चशब्दः साधकसमुच्चायकः । हि यस्मात् आग्नेयादीनां प्रयाजादीनां च प्रधानतया समेषु सत्सु पूर्वेषां प्रकृतानां प्रयाजादीनां सौर्यादिविकृतौ अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् प्रधानत्वात् । तथापि विकृतौ ' प्रयाजेप्रयाजे कृष्णलं जुहोति ' इति कृष्णलहोमादौ विशेषस्य दर्शनात् । तस्मात् न सर्वेषां समप्राधान्यम् ।

गुणस्तु श्रुतिसंयोगात् । ५ ॥

' य एवं विद्वान् पौर्णमासीम् ' ' य एवं विद्वान् अमावास्याम् ' इति विद्वद्वाक्यद्वयं पूर्वोक्ताग्नेयादीनां मनुवादकं इति सिद्धान्ते पूर्वपक्षी शङ्कते । तुशब्दः मन्यनस्थाने । आग्नेयादिवाक्ये विद्वद्वाक्यविहितकर्मानुवादेन अन्यादिदेवतारूप पुरोडाशादिद्रव्यरूपश्च गुणः विशिष्टविधिना विधीयते । श्रुतिसंयोगात् विद्वद्वाक्यविहितकर्मानुवादक्षमस्य पौर्णमास्यादिरूपस्य शब्दस्य संयोगात् विद्यमानत्वात् । ततश्च विद्वद्वाक्यं विधायकमेव नानुवादकम् ।

चोदना वा, गुणानां युगपच्छासनाच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत । ६ ॥

'यदाग्नेयोऽष्टाकपाल ' इत्यादिवाक्ये द्रव्यदेवतारूपगुणविधिः विद्वद्वाक्यविहितकर्मानुवादेन इति यदुक्तं पूर्वपक्षिणा तन्निरस्यति वाशब्दः । चोदना कर्मचोदना आग्नेयादयः स्युः न गुणचोदना । कुतः ? गुणानां युगपत् शासनात् प्राप्ते पौर्णमास्यादिकर्मणि एकेनैव वाक्येन अत्र अनेको गुणो विधातुमिष्यते भवता । न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसंबन्धे असति शक्यते विधातुम् । हि यस्मात् चोदिते प्राप्ते कर्मणि तदर्थत्वात् गुणार्थत्वात् तस्यतस्य गुणस्य विधेये पुनःपुनः उपदिश्येत उच्चार्येत प्रत्ययः । तच्चानिष्टम् । तस्मात् आग्नेयादिवाक्ये न गुणविधिः । किन्तु कर्मचोदना एव इत्याह सिद्धान्ती ।

व्यपदेशश्च तद्वत् । ७ ॥

' त्रयाणि ह वा एतानि हवींषि अमावास्यायां मभिग्रियन्ते आग्नेयं प्रथमम्, ऐन्द्रे ( दधिपयसी ) उत्तरे ' इति त्रयाणां उभयत्रापरपर्यायप्राधान्यव्यपदेशोऽपि तद्वत् गुणविधिपक्षे वाक्यभेदवत् न युज्येत आग्नेयवाक्ये भवत्पक्षे गुणविधित्वेन आग्नेयस्य प्राधान्याभावात् । तस्मात् विद्वद्वाक्यं आग्नेयादीनामनुवादकमेव ।

लिङ्गदर्शनाच्च । ८ ॥

' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम् ' इति आहवनीयगततत्प्रकाराहुतिपरिगणनरूपलिङ्गस्य दर्शनादपि आग्नेयादिवाक्यानि कर्मविधायकानि, विद्वद्वाक्यं तु तेषां समुदायत्वेनानुवादः । विद्वद्वाक्ये कर्मान्तरत्वपक्षे अभ्यधिकत्वात् आग्नेयादिवाक्ये गुणविधिपक्षे न्यूनत्वात् त्रयोदशचतुर्दशत्वानुवादविरोधः । सिद्धान्ते तु पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः पौर्णमास्यां प्रधानाहुतित्रयम्, अमावास्यायां सान्नाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयम् । इति चतुर्दशत्वत्रयोदशत्वानुवाद उपपन्नः । तस्मात् विद्वद्वाक्यमनुवादकमिति सिद्धम् । फे

* प्रकरणं द्विविधं महाप्रकरणं अवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् । तच्च प्रकृतावेव । तत्र च उभयाकाङ्क्षारूपं प्रकरणं संभवति, आकाङ्क्षाऽनुपरमात् । विकृतौ तु न प्रकरणं संभवति । तत्र तु अन्यतराकाङ्क्षारूपस्थानादेव अपूर्वाङ्गग्रहणम् । यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते, यथा ' औदुम्बरो यूपो भवति ' इति यूपानुवादेन औदुम्बरत्वम्, तत् प्रकरणात् गृह्यते । यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तराले अपूर्वमङ्गं केवलं पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमनहोमाः । ते हि प्राकृताङ्गानुवादेन विधीयमानयोरन्तराले विधीयन्ते । अवान्तरप्रकरणं तु फलभावनायाः

विकृतिसंनिधिपठितोपहोमानां तु स्वसंनिधिपठितत्वविशिष्टनिरूपितभावनाकथंभावाकाङ्क्षारूपप्रकरणसत्त्वेऽपि न तत्र अङ्गत्वम्, उपहोमेभ्यः कल्पोपकारकत्वेन पूर्वान्विते प्राकृताङ्गे कथंभावाकाङ्क्षायाः शान्तत्वेन उपहोमविनियोगबोधकसहितपूर्वे निवृत्तप्रकरणाभावात्। अपितु संनिधिरूपस्थानरूपात् विकृत्याकाङ्क्षामुत्थाप्य तत्र एवाङ्गत्वम्। न च एतमुत्थाप्याकाङ्क्षाया प्रकरणत्वमेवास्ति, तस्या अपि स्थानरूपप्रकरणत्वेन व्यवहारात्। उपहोमेषु प्राकरणिकाङ्गत्वव्यवहारापत्तिस्तु लिङ्गविनियोगमन्त्रेषु श्रौताङ्गत्वापत्तिवत् कल्पनिवृत्तकथंभावाकाङ्क्षाया एव तद्व्यवहारनियामकत्वेन निराकार्या इति बोध्यम्।

नन्वास्तु अनवगतप्रयोजनकर्मणि हितवाक्यमिव पदार्थवृत्ति यत् पूर्वप्रमाणानवगताङ्गताविषये इतिकर्तव्यताप्रकारकापेक्षणम्, तत् प्रकरणम्। अस्ति च दर्शपूर्णमासयोः प्रयाजादिविषये तत्। समिदादीनां प्रकरणात् तनूनपादाद्यङ्गत्ववारणाय अवगतफलस्यैवेति पदार्थविशेषणम्। प्रयाजादीनां प्रकरणाद् संनिहितयोस्तयोर्मायाङ्गत्ववारणाय संनिहितवाक्यमितीति तद्विशेषणम्। अङ्गस्य पूर्वप्रमाणानवगताङ्गताविशेषणाच्च न प्रोक्षणादीनां श्रुतिलिङ्गवाक्यैः अवगताङ्गभावानां प्रकरणात् दर्शाङ्गत्वापत्तिः। 'समिधो यजति' इत्यादौ प्रमाणान्तरेण अनवगताङ्गतानामभिधाने अनवगतफलस्य स्तोमस्य स्वसाधनीभूतकरणस्याभिव्यक्त्यर्थं अपेक्षा शब्दात् प्रकरणेन अङ्गत्वप्रसक्तौ तद्वारणाय इतिकर्तव्यत्वेन इति विशेषणम्। अस्य कथंभावाभिव्यक्त्यर्थं शब्दापेक्षायामपि सिद्धाभावापेक्षाया इतिकर्तव्यताभावप्रकरणाभावात् इत्याहुः। अत्र समिदादौ तनूनपादाङ्गत्वस्य, प्रोक्षणादीनां प्रकरणात् दर्शपूर्णमासाङ्गत्वस्य च उपपत्त्या वारणीयत्वसंभवात् अवगतफलस्यैवेति, पूर्वप्रमाणानवगताङ्गस्येति च विशेषणं प्रकरणसंयुक्तप्रयोजनाभावात् विनियोजकप्रकरणशरीरे प्रकरणविनियोगोत्तरकालिकविशेषणत्वेनैव। अस्तु वा तनूनपादादौ समिदाद्यङ्गत्वव्यवहाराभावात् व्यवहारप्रयोजकप्रकरणशरीरे अवगतफलस्यैवेति विशेषणम्। दर्शपूर्णमासयोरेव प्रोक्षणादिप्रकरणित्वव्यवहारस्य सर्वानुभवसिद्धत्वात् तद्वारकविशेषणोपादानं तु अनुचितमेव। अस्तु वा गोदोहनादौ प्रयाजादिप्रकरणित्वव्यवहाराभावात् पूर्वप्रमाणानवगताङ्गतायेति स्वपूर्वप्रवृत्तप्रमाणानवगताङ्गतारेत्यर्थकम्, न तु प्रकरणपूर्वोद्दिष्टश्रुतिलिङ्गवाक्यानवगताङ्गतारेत्यर्थकम्, दर्शपूर्णमासादौ प्रोक्षणादिप्रकरणित्वव्यवहारानापत्तेः। गोदोहनभावनाकथंभावाकाङ्क्षात पूर्वप्रवृत्तदर्शपूर्णमासभावनाकथंभावाकाङ्क्षारूपप्रकरणेन प्रयाजादीनां अङ्गताऽवगमात्तु न गोदोहनादिषु तत्प्रकरणित्वव्यवहारः। अत इदं व्यवहारप्रयोजकप्रकरणलक्षणम्। विनियोजकप्रकरणलक्षणं तु असदुक्तमेव। तनूनपादादिषु समिदादिविनियोजकप्रकरणसत्त्वेऽपि समिदादीनामुपकारीत्या तदङ्गत्वस्य वारयितुं शक्यत्वात् इति तत्त्वम्।

केचित्तु "उभयाकाङ्क्षा प्रकरणम्"। (मीन्या. पृ १६९) सा च फलाकाङ्क्षाविशिष्टकथंभावाकाङ्क्षा। वैशिष्ट्यं च स्वाश्रयभावनासंनिहितभावनाश्रितत्वसंबन्धेन, न तु एकपुरुषगतत्वादिना। तेन न विश्वजिदादेः प्रकरणेन दर्शाङ्गत्वम्। उक्तसंबन्धेन (प्रकरणोक्तसंबन्धेन) यदीयफलाकाङ्क्षाविशिष्टा निर्णीत- (अनिर्णीत-) तदनुगतकरणता (त्वगता) या कथंभावाकाङ्क्षा, सा तद्विनियोजक- (क) प्रकरणम् इति (तु) निष्कर्षः। उक्तं हि 'असंयुक्तं प्रकरणादितिकर्तव्यार्थित्वात्' इति। अत्र पञ्चम्या (पञ्चम्यन्तयोः) सामानाधिकरण्यात् कथंभावाकाङ्क्षैव प्रकरणम् इत्यवसीयते। असंयुक्तपदं च फलाकाङ्क्षोपस्थापकम्, न तु संनिधानविनिवारणम् (न तु संनिधानविनिवारणार्थम्)" इत्याहुः [भाट्टालङ्कार]। तदतीव मन्दम्। तथाहि, विनियोगफलोपधायकप्रकरणस्य वा इदं लक्षणं तत्स्वरूपयोग्यस्य वा। नाद्यः, स्वाश्रयभावनासंनिहितभावनाऽभिन्नत्वसंबन्धेन प्रयाजादिभावनीयकथंभावाकाङ्क्षाविशिष्टायां श्रुतभाव्यत्वेन निर्णीतप्रयाजाद्यङ्गकप्रोक्षणादिभावनागतकथंभावाकाङ्क्षायां प्रयाजविनियोगरूपफलानुत्पादकतया अतिव्याप्तेः, प्रधानकथंभावाकाङ्क्षारूपप्रकरणेन फलत्वे आगते तनूनपादादीयकथंभावाकाङ्क्षोदयात् निर्णीतानङ्गत्वकतनूनपादादीयगतायां तस्यां उक्तलक्षणस्य

सन्निपातीयफलाकाङ्क्षाविशिष्टत्वेन अतिव्याप्तेश्च । न च प्रधानकथम्भावेन तन्त्रपात्रीयफलस्यानुगमसम्भवेन सन्निपातस्यापि फलस्यानुगमेन फलाकाङ्क्षोपरमात् तद्‌-त्तरकालीनतन्त्रपात्रीयकथम्भावाकाङ्क्षाया न तद्वैशिष्ट्य इति वाच्यम् । आलोकपरामर्शजन्यानुमितौ सामानाधिकरण्यसम्बन्धेन अतीतधूमपरामर्शवैशिष्ट्यस्येव उक्तसम्बन्धेन अतीतसन्निपातीयफलाकाङ्क्षावैशिष्ट्यस्य तन्त्रपात्रीयकथम्भावाकाङ्क्षाया सत्त्वे बाधकाभावात् । यदि तु धूमपरामर्शजन्यताऽवच्छेदककोटौ उक्तदोषवारणाय स्वाव्यवहितोत्तरत्वसम्बन्धस्यापि निवेशवत् अत्र समानकालीनत्वसम्बन्धस्यापि निवेशः क्रियते तत्र निर्णीततत्त्वत्वेति व्यर्थम् , अङ्गकथम्भावाकाङ्क्षाया उक्तसम्बन्धेन अतीतप्रधानफलाकाङ्क्षावैशिष्ट्यविरहेण अतिव्याप्त्यभावात् , तस्य तद्वारकत्वेन स्वदभिप्रेतत्वात् । न द्वितीयः अङ्गकथम्भावाकाङ्क्षायाः प्रधानविनियोगानुकूलयोग्यप्रकरणत्वेऽपि प्रधानफलाकाङ्क्षारूपसहकारिविरहात् तन्त्रपात्राणकथम्भावाकाङ्क्षायाः सन्निपातविनियोजकप्रकरणत्वेऽपि सन्निपातफलाकाङ्क्षारूपसहकारिविरहादेव अङ्गत्वप्रसङ्गवारणोपपत्तौ फलाकाङ्क्षावैशिष्ट्यनिवेशस्य, निर्णीतत्वान्तरनिवेशस्य च व्यर्थत्वात् । तदुभयनिवेशोऽपि प्रयाजादीनां प्रेक्षणाद्यङ्गत्ववारणाय फलाकाङ्क्षायाः सहकारित्वकल्पनायाः आवश्यकत्वात् इति दिक् ।

एतस्य च प्रकरणस्य आकाङ्क्षारूपत्वेन स्वतः अप्रमाणत्वात् वाक्यकल्पनाद्वारैव प्रामाण्यम् । तथाहि, प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतया प्रयाजवाक्यस्य, प्रधानवाक्यस्य च स्वस्वार्थान्तरवाक्यार्थसमन्वयस्यापि महावाक्यैकदेशत्वरूपपदत्वाङ्गत्वस्य सन्निधिरूपं वाक्यं कल्प्यते । उक्तपारिभाषिकपदानामपि स्वार्थोपस्थितिद्वारा तच्छिष्टश्रुतपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गानुमानद्वारा इतिकर्तव्यतात्ववाचीयमित्यादिगौणश्रुतिकल्पकत्वं इति परम्परया प्रकरणस्य अङ्गत्वे प्रामाण्यम् । वाक्यैकवाक्यतापन्नप्रकारश्च ' समिधो यजति, इत्थं दर्शपूर्णमासाभ्यां यजेत ' इति । अत एव दर्शपूर्णमासप्रकरणाम्नातेन ' सन्नाय्य पौर्णमासी वैमृधमनुनिर्वपेत् ' इत्यनेन विहितवैमृधस्य प्रकरणात् दर्शपूर्णमासोभयाङ्गत्वप्रसक्तौ वाक्यात् पौर्णमास्यङ्गत्वं इत्युक्तं वचनात्यधिकरणे । इति प्रकरणनिरूपणम् । मुरारि. पृ. ११८१–११८५.

* प्रकरणं प्रक्रमः । अस्य लोकवेदयोः अर्थज्ञानोपायत्वं प्रसिद्धम् । मु. पृ. १११. * प्रकरण प्रमाणान्तरम् । वा. ३।३।७।१४ पृ. ८५२. * प्रकरण बाधित्वा वाक्येन ( आग्न्याधेयप्रकरणे समाम्नातानि पवमानहवींषि ) अग्नेः ( गुणभूतानि ) भवन्ति । भा. ३।१।१२।२२. * प्रकरणं बाधित्वा वाक्येन द्वादशोपसत्ता अहीनस्यैव, न ज्योतिष्टोमस्य । ३।३।८। १५–१६. * प्रकरणम् । महाप्रकरण प्रधानस्य असंदशोद्भूतिक प्रकृतेः, विकृतेस्तु सदशोद्भूतिकम् । बाल पृ ११. * प्रकरण मुख्यत्वेन नाङ्गानाम् । वि. ३।७।२. * प्रकरण यत्र प्राकृतानुवादेन विधिः सदंशो वा तत्रैव विकृतौ विनियोजकम्, अन्यत्र तु सांनिधिरेव । बाल. पृ. ११. * प्रकरण युगपत् सर्वाङ्गग्राहि । भाट्ट. १०।७।९ पृ. ८१. * प्रकरण वाक्येन अविरुद्ध अर्थवद् भवति । भा. ३।४।१।९, * प्रकरण वाक्येन बाध्यते । पशुरग्नीषोमीयो वाक्येन, शक्टलोहिते पशोः प्रकरणेन भवेताम् । भा।१।१२।२७. * प्रकरणं वाक्यलिङ्गश्रुतीः कल्पयित्वा विनियोजकम् । वाक्य तु लिङ्गश्रुती द्वे एव कल्पयित्वा विनियोजकं इति शीघ्रोपस्थापकत्वात् वाक्यं प्रकरणाद् बलीयः । वि ३।३।९. * प्रकरण विनियोजकम् । प्रकरणाधिकरणम् । ३।३।४. * प्रकरणं श्रुतस्य द्रव्यस्य बाधने नहि समर्थम् । भा. ३।४।१०।१८ पृ. ३८७ । यदा द्रव्यस्य अन्यादिसम्बन्धो विधीयते, न तदा प्रकरणापेक्षेत्यर्थः । वा. * प्रकरणं सन्निहितस्य पठनतः अनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेन अपेक्षणम् । ( एतद्‌द्वयं तु प्रकरणाधिकरणचन्द्रो भाट्टे एव द्रष्टव्यम् ) । भाट्ट. ३।३।४. * प्रकरणं समाख्यानात् बलवत् । पौरोडाशिकसमाख्यातब्राह्मणगतानां प्रयाजादीनां समाख्याप्राप्तमपि केवलोपयागाङ्गत्वं दूरीकृत्य प्रकरणेन सान्नाय्योपांशुयाजार्थत्वमपि सिध्यति । मीन्या * प्रकरण साकाङ्क्षवचनसंनिधिः । मु. पृ. १४७७. * प्रकरणं सामान्यम्, निमित्तसंयोगो

व्यनक्ति । तद्विशेषिताश्च यवागूहोमादयोऽपि नार्थान्तरे वर्तन्ते । नार्थान्तरेण विना किञ्चिदनर्थकं भवति । न च प्रतिनिधानं तेषु न सम्भवति । यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः । यो वै तेषां काम्यप्रयोगः, तस्य अनन्यगतकालविशेषत्वात् मासपरिमाणविधानमित्यदोषः । प्रकरणस्य च साम्यं बाधकमिष्टमेव । अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपर्यन्तमिमः प्रतिप्रसवः । स तु प्रयोगमध्ये एव क्रियते । अथवा तान्येवाग्निहोत्रादीनि अत्र पर्युदस्याप्य सोमयागसहितानि सन्प्रयोगवचनेन फले विधीयन्ते । नहि केवलभोजी देवदत्तः अन्यैः सह पङ्क्त्या भुञ्जानः अन्यत्र प्रतिपद्यते । न च फलान्तरसम्बन्धः कर्मान्तरत्वेन विना न घटते इत्युक्तं अवेष्ट्यधिकरणे ( २।३।१ )। न चावश्यमत्रैव फलान्तरं गन्तव्यम् । प्रधानमपि हि अपरिपूर्णे करणांशे स्वशब्देन विधीयमानं न विरुध्यते । तस्मादेवमपि तान्येवाग्निहोत्रादीनि । इति प्राप्ते, उच्यते । 'उपसद्रूपः परं होतरग्निहोत्रं विधीयते । न च नैयमिकस्यैताः सन्तीत्येतेन भिन्नता ॥' यदि हि मास. शुद्धो विधीयेत, ततः पूर्वकर्मानुवादे बुद्धिमवेदपि, न त्वेतदस्ति । उपसदुत्तरकालत्वेन श्रवणात् विज्ञायमानाभिरुपसद्भिः शक्यः कालो लक्षयितुम् । न च नैत्यिके ताः स्वार्थाः परार्था वा विद्यन्ते । यदि तु ताः तदुत्तरकालत्व मासश्च विधीयेरन्, एवं सति अनेकार्थविधानात् वाक्यभेदः स्यात् । एतस्मादेव हेतोः दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा अनेकदेशत्वेन वा अयं विधिः प्रत्युक्तः । तत्रापि हि उपसदुत्तरकालत्व मासश्च इत्यनेकार्थत्वमेव । कर्मान्तरविधाने तु अनेकार्थत्वमदोषः । तस्मात् कर्मान्तरमिति भाष्यकार. ।

इदं त्विह वक्तव्यम् । यदि वाक्यभेदप्रसङ्गात् कर्मान्तरत्वम्, एवं तर्हि स एव भेदहेतुः प्राप्नोति, न प्रकरणान्तरम् । अथवा गुणादेव अनेकात्मकत्वेन पूर्वासम्भवात् भेद इति प्रकरणान्तरानवकाशः । तथाहि, 'यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् । तथाऽप्यसंभवात्तस्मिन् ब्रूयात् कर्मान्तरं गुण. ॥' त्रिश्च 'अग्निहोत्रस्य चैतेन भेदः क्लेशेन संभवेत् । उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥' 'मासं दर्शपूर्णमासाभ्यां यजते' इत्यादिषु हि केवलमाससम्बन्धविधानाच्च वाक्यभेदः प्राप्नोतीति अकर्मान्तरत्वप्रसङ्ग. । तनैतत् स्यात् । इहापि 'उपसद्भिश्चरित्वा' इत्यनुपङ्गादग्निहोत्रानुत्कर्षमिति । तदयुक्तम् । कुतः ? 'विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका । तत्रैव ह्युक्तवाक्यानामनुषङ्गो न चेह सः ॥' तत्रानुषङ्गो युक्तः, यत्र तेन विना न किञ्चिदुक्तं भवति । यथा अत्रैव 'मासं वैश्वदेवेन' इत्यादिषु यावत् 'यजते' इति नानुषज्यते, तावत् न किञ्चिदुक्तं इत्यवश्यमनुषक्तव्यम् । इह पुनः दर्शपूर्णमासादिवाक्यानि तावत् स्वपदैरेव निराकाङ्क्षीभूतानि । 'उपसद्भिश्चरित्वा' इत्ययमपि पूर्वेणैव चरितार्थत्वान्न किञ्चिदपेक्षते । तत्र न कश्चिदपि हेतुरस्ति, येनानुषज्येत । यस्तु वाक्यभेदप्रसक्त्यर्थमेव अनुषङ्गमिच्छेत्, कुर्यादपि स. ( अनुषङ्गम् ) । तत्र तु पुनः पुनः चरित्वा इत्यस्य विधानात् यावदनुषङ्गं उपसत्समनुष्ठानं प्राप्नोति । अनिष्टं चैतत्, वेदाभ्यनुज्ञानाभावात् । अथ अग्निहोत्रस्यैव पुरस्तात् कृताभिः सर्वानुषङ्गार्थसंपादनं इष्येत, तथा सति शब्दोच्चारणमपि एवमेव अवस्थितं अग्निहोत्रादीनां पाठक्रमानुरोधेन अपनीयेत इति नार्थः अनुषङ्गेण । तस्मात् नैतत् व्याख्यानमुपपद्यते । इति एवं वर्णनीयम् 'उपादेयो गुणो यत्र भवेत् प्रकरणान्तरे । तत्रकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता ॥' इह तावत् नेव प्रकरणान्तरसद्भावात् भेदः अवगम्यते । किं तर्हि ? पूर्वप्रकरणविच्छेदात् । अपरिवर्तमाने हि पूर्वकर्मणि केनापि प्रकारेण उत्तरस्य भेदः प्रतीयते । न तु प्रकरणान्तरं सदपि किञ्चिदुपकरोति । तथा च 'फलं चात्कर्मसंनिधौ' इत्यत्र वक्ष्यामः । अत्र च विच्छिन्नप्रकरणस्य कर्मणः सन्निधिश्रवणात् श्रूयते उपादेयमनुपादेयं च । तत्र यदुपादेयं यथा आहवनीयप्रतिपदादि, तत् प्रदेशान्तरस्थोद्देशेनापि शक्यं विधातुम् । यत्तु अनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकम्, तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति विध्यन्तरेण वचनयत्क्षिमंगति 'तेनैव कर्म कुर्वन्'

इति । परोद्देशेन च कर्म विधीयमानं यदि अन्येन तद्रूपमेव वाक्येनोपस्थाप्यते, ततः तदेव इति अकर्मान्तरबुद्धिर्भवति । अथ तु ईषदपि तिरोधानात् नोप तिष्ठेत, ततः पर विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्या अपनेतुमिति कर्मान्तरत्वं भवति । एवं हि स विधायकः समोपदिशति 'अविभेयं पदार्थं प्रति मया एतत् कर्म विधीयते, तच्च स्वरूपेण अनुत्पन्नं न शक्यं तत्र विधातुं इति यत्नदुरुपाख्ये । तत् यदि कश्चित् एवंविध शक्नोति उत्पादयितुम्, तत् उत्पादयतु, यावदहमपि अत्र विधिं करोमि, अथ नोत्पादयति, ततो मयैव उत्पादिते मा कश्चित् पश्चादागत्य ममापराधं मस्त' इति । तेन एव आच्छोपिते [ आरोपिते इत्यर्थः । अपगेय या पाठ. स्यात् ] यदि कश्चित् तथाविधमुपनयति, ततः असावपि तदेव देशादौ विधत्ते । अथ नोपनयति, ततः स एवोत्पादयत्यपि इति निरूप्यते । तदिह मासत्वानत् कूरबहोमानुवादेन न शक्यते विधातुम् । नहि कश्चित् होमाद्यनुरोधेन अत्रैव मासं संपादयितुं समर्थः । तेन अत्यन्तं स्वतन्त्रमनुपादेय मासमेव प्रति होमादिषु विधीयमानेषु दूरस्थैः उत्पत्तिविधिभिः उत्पादनकाले मनुष्यमानाया इदानीमेव उत्पत्तिः क्रियते । न चोत्पन्नस्य पुनरुत्पत्तिः सम्भवति, इति अपूर्वविधानं विज्ञायते ।

' ननु च अग्निहोत्रादिपदेन उत्पत्तिसहचारिण्य तत्कर्मोत्पत्तौ अपनीयमानायां मासत्वन्धमानस्यापूर्वोऽयं विधिः उत्पादकत्वात् भिद्यतेत । ' संनिधानोपनीतं चेत् कर्म नोत्पद्यते पुनः । नामधेयोपनीतं तत् तत्र नोत्पद्यतेतराम् ॥ ' वाक्यान्तरगतमपि संनिधानमात्रादेव प्रत्यभिज्ञायमानं न भिद्यते, तत्र स्ववाक्यगतेन नाम्ना उपनीयमानं न प्रत्यभिज्ञास्यते, इति कुत एतत् ? उच्यते । ' यथाऽभिलपितं यत्र दुर्बलेनापि हेतुना । कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते ॥ ' संनिधानेन हि यादृशेव देशादिवाक्येषु कर्म अवगम्यते, तादृगेव उत्पत्तिवाक्ये इति न भिद्यते । नामधेयं पुनः आदितस्तावत् आख्यातपरतन्त्रत्वात् नैव भेदाभेदयोः व्याप्रियते (नाम्नः पूर्वकर्मोपस्थापकत्वस्य पूर्वकर्मवाचित्वनिमित्तकत्वात् आख्यातस्य च पूर्वकर्मविषयत्वं विना तत्परतन्त्रस्य नाम्नः पूर्वकर्मवाचित्वानवधारणात् पूर्वकर्मोपस्थापकत्वानुपपत्तेः नोत्पत्तिवाक्यभिन्नत्वमित्याशयः ) । तस्मिंश्च आख्यातप्रवृत्तिप्रतीक्षिणि अवस्थिते ' मासं जुहोति ' ' माषं यजते ' इति जुहोतिप्रकृतिपदमात्रसाम्यात् आलोच्यमानायां अन्यस्य जुहोत्यादेः स्ववाक्यस्वप्रकरणेषु अविपरिवर्तमानत्वात् अप्रत्यभिज्ञानम् ।

किञ्च ' नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः । भावना त्वनुपस्थानाद् भिद्यमानाऽवधार्यते ॥ ' सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेन अवस्थितानि, न भावनायाः । तेन भावनाऽन्यत्वानन्यत्वपरीक्षायां सत्यपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेण अनुपनीयमाना न कथञ्चित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्वम् । अथवा ' धात्वर्थोऽपि यथाऽऽख्यातेऽसत्त्वभूतः प्रतीयते ( गुणुपात्तलिङ्गसंख्याऽन्वयायोग्यः ) । सत्त्वाभिधायिना नाम्ना तादृङ् नैवोपनीयते ॥ ' असत्त्वभूतो हि धात्वर्थोऽत्र जुहोतिना विधेयतयोच्यते । न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्याद्यन्वययोग्यार्थाभिधायिभिः अग्निहोत्रादिपदैः अभिधीयमानत्वं इति अप्रत्यभिज्ञानात् सोऽपि भिद्यते । यत्र तु प्रकरणान्तरेऽपि तथाभूतः ( असत्त्वभूतः ) नोपादीयते, भावना वा तावदनुरक्तात्मना ( असत्त्वभूतधात्वर्थानुरक्तात्मना ) न विनश्यते, तत्र तदेव कर्म एकेन वचनेन पर्युपस्थाप्य अपरेण फले विधीयते इत्यवगमात् काममकर्मान्तरं भवतु । तद्यथा ' अतिरात्रअनुत्विधः प्रायणीयमहः ' ' चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः ' इत्यादिषु, यथा च चयनप्रश्नेषु ' अश्वमेधं यन्ति ' इति । यदा तु प्रकरणान्तरगतफलादिसबद्धं विधित्वं उत्पत्तिमपि संस्पृशद् यावत् भवीयस्या उत्पत्तिविधिचिपरिक्लृप्त्या विप्रकर्षात् अनिवार्यमाणं भिनत्ति इति निश्चीयते, तदा एवमादिष्वपि भेद एवेत्यवगम्यते । परमार्थेन तु ' भिद्यते भावनामात्रं धात्वर्थो नामजिश्रुतेः । नाम्ना हि तदुपादानमाशनोपाधिचोदिते ॥ ' नामनिक्षिप्तधात्वर्थस्मरणे हि तदर्थभेदो भवति ।

उपकारशक्तिजनकत्वेन भावनायामन्वयः । तस्मात् सिद्धं प्रकरणं नाम चतुर्थं प्रमाणम् ।

यत्तु अत्र पार्थसारथिना अननुगृहीतस्यापि कर्मादेः प्रयोगविधावारम्भकत्वदर्शनात् नेदं प्रकरणम्, अपि तु व्यापारसामान्यस्य आख्यातार्थत्वमङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यतापेक्षा, तयैव च प्रयाजादीनां वचनेनान्वयः इति, तदेव च प्रकरणमित्युक्तम् । तन्न । तन्मते निरुक्तप्रकरणस्य तद्घटिताङ्गत्वबोधकत्वानुपपत्तेः, प्रयाजादेर्भावनात्वे तस्यैव परम्परान्वयापत्तेश्च । मन्मते तु धात्वर्थस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वात् तदानीमितरेति वैषम्यम् । किञ्च एवं प्रधानस्य स्वतो निराकाङ्क्षस्य अन्यतराकाङ्क्षयैव प्रकृतौ प्रयाजान्वयस्य प्रसिद्धिः, विकृतौ च भावनाया विशेषापेक्षायामव्यवधानोपकारेऽपि संनिहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनाऽऽपत्तिः इत्यादि कौस्तुभे विस्तरः ।

मण्डन— ' प्रमा प्रकरणं भवेत् । ' ( प्रमा प्रमाणम् । )

शंकर— ' प्रक्रिया विनियोक्त्र्यपि । ' ( प्रक्रिया प्रकरणमपि विनियोक्त्री इत्यन्वयः । ) ।

* व्यापारनाविष्टस्य द्रव्यस्य तद्विशेषत्वायोगात् न तद्वेत्र प्रकरणमिति विशेषोऽपि प्रकरणाधिकरणे निरूप्यते । प्र० ३।१।२।५ पृ ४३-४४. * मुख्यादिधर्मानामपि प्रकरणविनियोज्यत्वं प्रकरणाधिकरणे एवं कृतं तत्र प्रयाजगन्तव्यम् । सोम. ३।१।१.

* भावनायाः स्वप्रकरणेन फले अन्यमाने अनुग्राहकापेक्षाया प्रकरणाधिकरणन्यायेन प्रयाजादि इतिकर्तव्यतात्वेन अन्वीयते । कौ. ३।१।२।५ पृ. ४३.

* प्रकरणाधीतेन अनारभ्याधीतं बाध्यते, अप्रासयापः । वा. ३।६।७।१४ पृ ८६०.

* प्रकरणाधीतसामिधेनीपाञ्चदश्य- अनारभ्याधीतसाप्तदश्यबाधन्यायः । वा. ३।६।२।९.

* गोदोहनेन पशुकामस्य इति पदी प्रकरणान्तरपाठिनी, दीक्षादिन्यायेन संनिकृष्टवाक्यगतपशुप्रयोजकत्वनिरपेक्ष्य प्रकरणानुरोधेन गोदोहनं विधीयते । इति प्राप्ते, दुर्बलप्रकरणानुरोधेन परम्परामन्वयाङ्गीकारे प्रमाणाभावात् दर्शादेरुद्देश्यत्वं पशूनाम् । भाट्ट. ४।१।२ वर्णक ३.

* प्रकरणान्तरं अनुपादेयसंनिधिसचिवः असंनिधिः इति केचित् । तत्र ' वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति ' इत्यत्र अव्याप्तेः । किन्तु ' विधेः उपपदार्थसङ्कमासंभवेन सहकृतः असंनिधिः ' इति । नाप्यसंनिधिरिव स्वरूपतः अनुपादेयसंनिधिः प्रभेदः किन्तु तत्कार्यं विधेः उपपदार्थसङ्कमासंभवः । न च यथा अनुपादेयसंनिधिना भवति, एवं उपादेयद्रव्यसंनिधिनापि भवति । बाल. पृ. ८८, * प्रकरणान्तर कर्मभेदकं वैदिकापरेयरूपं शब्दप्रमाणम् । पृ. ८. * प्रकरणान्तर धर्मभेदे प्रमाणम् । मणि पृ. १३. * प्रकरणान्तरं नित्याग्निहोत्रात् मासाग्निहोत्रस्य भेदे हेतुः । नि. ३।३। ११. * प्रकरणान्तरस्य भेदकत्वे फलादि अनुपादेयमपि सहकारि, न तद्विरहेण प्रकरणान्तर भेदकम् । सु. पृ. १५६. * प्रकरणान्तरे प्रयोजनान्यत्व इत्यधिकरणे कर्मभेदप्रतिपादनम् । आभरणं. ३।३।१४।२५ भ. सू.

प्रकरणान्तरे प्रयोजनान्यत्वम् । २।३।११। २४ ॥

कुण्डपायिनामयने ' मासमग्निहोत्रं जुहोति ' इति श्रूयते । अत्र नित्येऽग्निहोत्रे मासरूपः कालो विधीयते इति पूर्वपक्षे सिद्धान्तमाह । नित्याग्निहोत्रप्रकरणात् अन्यत् कुण्डपायिनामयनस्य प्रकरणं प्रकरणान्तरम् । तत्र प्रकरणान्तरे पठ्यमाने मासाग्निहोत्रवाक्ये प्रयोजनान्यत्वम् । प्रयुज्यते अनुष्ठीयते इति प्रयोजनं कर्म । प्रयोजनस्य अन्यत्वं प्रयोजनान्यत्वम् । कर्मभेदाभिधानात् मासाग्निहोत्रस्य नित्याग्निहोत्रात् कर्मान्तरत्वमिति सिद्धान्तः । मासाग्निहोत्रवाक्ये मासविशिष्टं अग्निहोत्रशब्दं कर्मान्तरमेव विधीयते । अथवा पूर्वकर्मासंनिधानापरपर्याये प्रकरणान्तरे सति मासाग्निहोत्रादिविधेः अप्रवृत्तविषयतया प्रयोजनान्यत्वं कर्मभेदः सिध्यति इत्यर्थः । के.

प्रकरणान्तरे प्रयोजनान्यत्वम् । २।३।११। २४ ॥

कौण्डपायिनामयने श्रूयते ' मासमग्निहोत्रं जुहोति ।

मासं दर्शपूर्णमासाभ्यां यजेत' इत्येवमादि। तत्र संदिह्यते अग्निहोत्रे नित्ययोश्च दर्शपूर्णमासयोः मासो विधीयते उत, अथ नियतात् अग्निहोत्रात् नियताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरम् इति। षट्सु भेदप्रमाणेषु पर्यवसितेषु इदानीमवसरप्राप्तं प्रकरणान्तरनिबन्धनं कर्मभेदं प्रतिपादयते। अत्रायमभिप्रायः पूर्वपक्षिणः — अग्निहोत्रदर्शपूर्णमासनाम्नोः प्रसिद्धत्वात् समभिव्याहृतस्य जुहोतेर्यजतेश्च तदर्थत्वे सेचनवत् प्रकरणान्तरे श्रुतत्वेन अर्थान्तरपरिकल्पनम्। लोकप्रसिद्धार्थानां अप्रसिद्धान्यार्थानामपि वेदे अर्थान्तरत्वप्रसङ्गात्। तेन यत्र लोकप्रसिद्धार्थस्य प्रत्यभिज्ञायमानस्य वेदे नार्थान्तरत्वम्, तत्र वेदे एव प्रकरणान्तरमात्रेण अर्थान्तरमिति। पुन एतत्? उक्तम् 'अग्निहोत्रादिशब्देन पूर्वं कर्मावबोधितम्। न विप्रकर्षमात्रेण भेदरूपं प्रपद्यते ॥' इति (पा पृ ६११)। अत पूर्वस्मिन्नेव कर्मणि जुहोति यजतिभ्यामनूदिते वाक्येन प्रकरणं बाधित्वा मासाख्यो गुणो विधीयते। न च यावज्जीवश्रुतिविरोधात् मासस्य काले विधातुं न शक्यते इति वाच्यम्। कालस्य प्रयोगविशेषणत्वेन अविरोधात्। अथवा यावज्जीवाधिकारेऽपि समर्थासमर्थविषयत्वेनाऽपि व्यवस्थितविकल्पेनैव उपपद्यते।

अत्रैके सिद्धान्तमेवमुपवर्णयन्ति 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इति वाक्यमिदम्। अत्र उपसदः कुण्डपायिनामयने नामधेयेऽनेके गुणा श्रूयन्ते। न चैते गुणा नैत्यिकाग्निहोत्रे सन्ति। न च प्राप्ते कर्मणि अनेकगुणविधानं संभवतीति अनेकगुणविशिष्टकर्मान्तरविधानमेवैतत्। न चैवं सति गुणादेव भेदः, न प्रकरणान्तरादिति वाच्यम्। यतः प्रमाणान्तरं हि प्रकरणान्तरम्। प्रमाणान्तरं च बुद्धिविच्छेदकारणम्। यस्य नाम्नो बुद्धिविच्छेदकारणम्, तत् प्रतिपन्नभूतानेकगुणेनिरम्यम्। विच्छेदे च तस्मिन् प्रतिपन्नभूतं प्रकरणान्तरमेव भेदकमिति। न च 'मासं दर्शपूर्णमासाभ्याम्' इत्यत्र अनेकगुणाभावात् तत्र सिद्धान्तासम्भव इति वाच्यम्। यतो नात्र पूर्वपक्षसिद्धान्तयोर्भक्ताभ्यन्तरो दोषस्य दर्शपूर्णमासयोः। पूर्वेण एकस्य वाक्यस्य पदान्तरम् उपसत् पौर्णमास्यमावास्याकालावरुद्धत्वाच्च कालान्तरापेक्षाभावात्। किं तर्हि? उपसदन्वयः। तेन 'मासं दर्शपूर्णमासाभ्याम्' इत्यत्रापि अनुषङ्गेण उपसद्भिश्चरित्वेत्येवमन्वयः मासमुपसद्भिश्चरित्वाऽग्निहोत्रं जुहोति, मासमुपसद्भिश्चरित्वा दर्शपूर्णमासाभ्यां यजेत इति। तेनोदाहरणद्वयेऽपि प्रकरणान्तरमेव भेदकमिति। न च वाच्यं एवं सति गुणादपि भेदसिद्धेः किं प्रकरणान्तरेणेति। यतो नानधिगतगन्तृ प्रमाणम्, किन्तु अनपेक्षम्। अस्ति चानेकगुणश्रवणाभावेऽपि 'एक चाक्संगनिधौ' इत्यत्र प्रकरणान्तरमात्रेण कर्मभेददर्शनम्। अतः प्रमाणान्तरं सिद्धमिति।

तदेतदसमञ्जसम्, एवं सति गुणस्यैव भेदकत्वापत्तेः। तथाहि 'आग्नेयोऽष्टाकपालो भवति' इत्यादिषु प्राप्ते कर्मणि अनेकगुणविधानस्यैव कर्मभेदकत्वं दृष्टम्, न तु बुद्धिविच्छेदकत्वम्। तदत्र प्रतीयमानादृष्टसामर्थ्यपरित्यागेन दृष्टसामर्थ्यकल्पनया बुद्धिविच्छेदमात्रोपक्षीणमनेकगुणविधानं व्यवस्थाप्यमानं अनाश्वस्ततामेव मनसि परं शोभते। किञ्च यत्र प्रकरणसंनिहितेऽपि कर्मणि अनेकगुणविधानस्य भेदकत्वम्, तत्र जघन्यनामधेयमात्रोपनीते कर्मणि गुणस्य बुद्धिविच्छेदमात्रहेतुत्वं न कर्मभेदकत्वमिति हास्यास्पदमेव। किञ्च कथं 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र अनुषङ्गेणोपसत्संबन्धः, आकाङ्क्षाया अभावात्। न चोत्पत्तिशिष्टपौर्णमास्यमावास्याकालनिराकाङ्क्षे कर्मणि मासाख्यकालसंबन्धात् मासपदाकाङ्क्षया संबन्धः, यतस्तिङन्तस्य नियमेन तिङन्ताकाङ्क्षानिवर्तकत्वं भवति। ननु मासादिवद्विजातीयकालाकाङ्क्षानिवर्तकत्वेऽपि 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्रोपपत्तेः अनुषङ्गाभावेन अनेकगुणविधानाभावात् नोदाहरणत्वं दर्शपूर्णमासप्रकरणस्येति। न च प्रत्येकमसंभवेऽपि, क्रियाद्वययोगात्, कालाभ्यां उपसद्विनियोगात्, जुहोतिना च मासविधानादिति। किञ्च भाष्यकारेणुक्तमपि एतद्गुणस्य मनादृत्य 'मासमग्निहोत्रं जुहोति' इत्येतावन्मात्रमुदाहरणात्, तर्हि नानर्थक्यं निराकृतेति परिहर्तव्येन इति वक्तव्यमेव सिद्धान्तेऽभिधीयते।

सर्वत्र द्विविध एव कर्मणः संबन्धो गुणेन यदि उत्पत्तिवाक्ये ठादेशेऽनुदेयम्। [redacted] टादेयस्य पूर्वोत्तरापत्ता

शब्दः, समानरूपस्यैवान्यशब्दार्थप्रतियोगित्वात् । न हि अन्यो ब्राह्मण इत्युक्ते प्रतियोगी शूद्रः प्रकाशते । किं तर्हि ? ब्राह्मण एव । तद्वदत्रापि अन्या इष्टयः अन्ये यज्ञक्रतव इति पूर्वोक्तग्रहणोपादानात्, पूर्वोक्तप्रतियोगि निरूपणीय एवायमन्यपदार्थः । तेन अन्यशब्दबलेनैव दर्शपूर्णमासज्योतिष्टोमयोस्तत्रोपस्थितत्वात् 'सर्वेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यो ज्योतिष्टोमः' इत्येतयोः वचनयोस्तु फलविनियोगपरत्वेऽपि उत्पत्त्यन्तरक्षेपकत्वाभावात् न कर्मान्तरत्वमिति । 'स इष्ट्या पशुना सोमेनाग्रयणेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा' इत्यत्रापि यच्छब्दोपबन्धवर्जितैव पूर्वोक्तानुपरस्थापनादेव अकर्मान्तरत्वम् । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र तु स्वयमेव पार्थिकपाठाद्यैः ज्योतिष्टोमप्रकरणे श्रूयते इत्यभिधानात् प्रकरणान्तरेण भेदो नाशङ्कनीय. (?) । एवञ्च नाम्नाप्यनतिक्रमणीयकर्मान्तरगतिः कृताऽपि नामधेयं बाधितुमुत्सहते । तस्मादनुपादेयं प्रति उपादानबुद्धि विच्छेदाभ्यां विशिष्टकर्मोत्पत्तिर्भेदसिद्धिः । अग्निहोत्रादिनामधेयं तु नाम्ना तद्धर्मातिदेशार्थं भाक्तिगुणयोग निराकरणेन यौगिकत्वाध्ययनविधिना स्वीकृतमिति न किञ्चिदनुपपन्नमिति ।

**प्रयोजनम्**— पूर्वपक्षे प्रकृतिभूतस्यैव अग्निहोत्रस्य प्रकृतयोश्च दर्शपूर्णमासयो. मासमनुष्ठानम् । सिद्धान्ते तु शब्दप्रयोगे मासविशिष्टाग्निहोत्रादिकर्मान्तरानुष्ठानमिति । सूत्रं तु– प्रकरणान्तरे प्रकरणान्तरनिमित्तकं प्रयोजनान्यत्व कर्मान्यत्वमित्यर्थः । तौता.

• ननु अग्निपरिवर्तमानत्वलक्षणोद्देशेन न कालो विधातु शक्यते 'प्रकरणान्तरे प्रयोजनान्यत्वम्' इति न्यायात् सत्यम्, इह तु 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति यज्ञशब्देन विपरिवर्तमाना यज्ञाः अग्निष्टोमोत्तरकाले विधीयन्ते इत्यदोषः । रत्न. ५।३।१४। ३९–४२. • यदि यज्ञशेषीये दार्शपौर्णमासिको विध्यन्तो न स्यात् तथा सति 'प्रकरणान्तरे॰' इत्यनेन न्यायेन कर्मान्तरं स्यात् । टुप्. १०।अ९।२७.

• प्रकरणान्तरे श्रूयमाण वाक्य यस्य प्रकरणे, तस्य बाधकं भवितुमर्हति । भा. २।३।११।२४ पृ. ६१४.

• प्रकरणान्तराधिकरणम् । २।३।११।२४. 'प्रकरणान्तरन्याय.' इत्यत्र द्रष्टव्यम् । • प्रकरणान्तराधिकरणे 'भावना ह्यनुपस्थानाद् भिद्यमाना न वार्यते ।' ('भिद्यमानाऽवधार्यते' इति मूले पाठः । २।३।११।२४, पृ. ६१६ ) इति वार्तिकोक्तरीत्या भावनाभेदव्युत्पादनमिति पक्षः । सोम. ७।३।१. • प्रकरणान्तराधिकरणे वाक्यभेददोषादेव अग्निहोत्रपदस्य गौणत्ववर्णनम् । वाक्यार्थ. पृ २०. • यजेत इति प्रत्ययाभिहितसर्वभावनोद्देशेन विधिविधानावगमात् बाधन्यायेनविशिष्टकालविधे. प्रकरणान्तराधिकरणे व्युत्पादितत्वेन ( 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायाम्' ) इति इष्ट्यादिपदानामनुवादमात्रता । कौ. १।१।१।२ पृ. ११५–२१६. • वरुणप्रघासेषु अवभृथः सौमिकादवभृथात् कर्मान्तरम्, तुषादो अर्थकर्म, निष्कासो च प्रतिपत्तिः, इत्युक्तं कौस्तुभे प्रकरणान्तराधिकरणे । भाट्ट. ११।२।१४.

• अष्टयने प्रथमाहे विश्वजिति प्रकरणान्तराधिकरणोक्तन्यायेन कर्मान्तरे नामातिदेशेन एकाहकाण्डपठितविश्वजितो धर्माः सर्वस्व दक्षिणा । भाट्ट. ६।७।८.

• प्रकरणान्तराधिकरणपर्यालोचनया ( २।३।११।२४ ) अनुपादेयानि पञ्चैव इति प्रतिभाति । यजमानस्य आत्मीयमेकत्वं ब्राह्मण्यादिजातिरपि च अनुपादेयमेव । बाल. पृ. ९७.

• प्रकरणान्तरनिष्कर्षनिरूपणम् । प्रकरणान्तराधिकरणे ( २।३।११।२४ ) पञ्चविधं अनुपादेयमुक्तं देश॰, काल, फलम्, निमित्तम्, संस्कार्यं चेति । 'अनुपादेयसन्निधिसन्निधिश्च असन्निधि. प्रकरणान्तरम्' इति प्रकरणान्तरलक्षणमुक्तं सर्वग्रन्थेषु । तच्च 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्र यातम् । तत्र हि प्रकरणान्तरेणैव भेद उक्तो वार्तिके प्रकरणान्तराधिकरणे एव । शास्त्रदीपिकायामपि सप्तमे 'तथाऽवभृथः सोमात्' इत्यधिकरणे ( ७।३।८।१३–१६ ) उक्त 'यन्ति' इत्यनेन प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते इति । अत्र भट्टसोमेश्वरः समादधे– 'अन्येनोक्तन्यायेन तत्र वारुणीनिष्कासस्य तुषाणां च भूतोपयोगित्वेन

संस्कार्यतया अनुपादेयत्वात्' इति। तदुक्तं तेन 'तृतीयया तुषनिष्कासस्य (तुषशब्दो नास्ति मु.) साधनत्वोक्तावपि निष्कासस्य वारुण्यामिक्षादोषत्वात् (वारुण्यामिक्षायागोपयुक्तद्रव्यशेषत्वात् इति मु.) तुषाणां च आग्नेयादियागशेषत्वात् (आग्नेययागाद्द्रव्यशेषत्वात् इति मु.) 'यत् किञ्चित् सोमलिप्तं स्यात् (स्याच्छब्दो नास्ति मु.) तेनावभृथं यन्ति' इतिवत् 'प्रयाजशेषेण हवींष्यभिघारयति' इतिवच्च 'प्रतिपत्त्युपलक्षणसंस्कार्यत्वाविरोधः' इति (मु. पृ. ९९४)। तन्मन्दम्। अधिकरणविरोधात्। एकादशे हि (११।२।१५।६३-६५) अस्मिन्नेव वाक्ये दाशीयवत् प्रचारविप्रकर्षं पूर्वपक्षं विधान्तरेण निरस्य, प्रतिपत्तिः इति पूर्वपक्षान्तरं तुषनिष्कासमात्रस्य उपादेयद्रव्यशेषत्वात् वाक्यभेदापत्तेर्निरस्य अर्थकर्मत्वमेवोक्तम्। अत एव प्रकरणान्तरलक्षणं वाच्यम्। नात्र अर्थनिधिरिव स्वरूपतः अनुपादेयसंनिधिः प्रवेश्य, किन्तु तत्कार्यविधेः उपपदार्थप्रक्रमासमन्वयः। स च यथा अनुपादेयसंनिधिना भवति, एवं उपादेयद्वयसंनिधिनाऽपि भवति। तस्मात् 'विधेः उपपदार्थसक्रमासमन्वयेन सहकृतः अर्थनिधिः प्रकरणान्तरम्' इति प्रकरणान्तरलक्षणमभिप्रेतम्। अत एव 'विश्वजिता यजेत' इत्यादौ यत्र उपपदार्थों निवेशो नाम्नैव नामधेयमात्रश्रवणात्, तथापि उपपदार्थसक्रमासमन्वयसहकृतात् अर्थनिधेरेव भेदः इत्यवधेयम्। अत एव उद्भिदादौ, नाम्नैव चैत्रमादीनां भेदः, इति सनिधानेन नाम्ना भेद उक्तः। एवम् 'अथैष ज्योतिः' इत्यादावपि। अष्टमतृतीये च (अधि. २) अतएव प्रकरणान्तरप्रकरणाश्रुते "मासानि शिल्पानि अहानि अग्निष्टोमसुत्यानि" इति वाक्ये सत्सु संख्या-शिल्प-स्थाने त्रोपादेयगुणश्रवणे तुषनिष्कासवाक्यवत् प्रकरणान्तरन्यायेनैव भेदोऽभ्युपगतः। अत एव च प्रकरणान्तराधिकरणे 'मासमग्निहोत्रं जुहोति' इत्यादौ 'अनुपादेयगुणे वा' इति वाक्ये 'उपसद्भिश्चरित्वा' इति गुणान्तरोपादानात् स्वरूपतः सत्यपि वाक्यभेदे सिद्धान्तसिद्धत्वानुपयोगित्वात् उपादेयगुणद्वययुक्तवाक्याभिप्रायेण एव सिद्धान्तहेतुतया उक्तो भाष्ये। आचार्यैश्च (पार्थसारथिमि.) मासादिवाक्येष्वेव तस्य सिद्धान्तासिद्ध्यनुपयोगो दूषितः, न सर्वात्मना इति ध्येयम्। बाल. पृ. ८८-८९.

३ प्रकरणान्तरन्यायः। कुण्डपायिनामयने मासाग्निहोत्रादीनां कर्मान्तरत्वम्॥

**प्रकरणान्तरे प्रयोजनान्यत्वम्॥२।३।११।२४॥**

भाष्यम्—कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुहोति' 'मासं दर्शपूर्णमासाभ्यां यजते' इत्येवमादि। तत्र सन्देहः किं नित्येऽग्निहोत्रे नित्ययोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः, अथ किं नित्याग्निहोत्रात् नित्याभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति। किं तावत् प्राप्तम्? नित्येषु कालविधिरिति। कुतः? कालविधिपरत्व एव शब्दो मासमिति। कथं कालविधिपरत्वम्? यत् अग्निहोत्रं जुहोतीति विदितम्, मासमिति त्वविदितम्। एवं चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च नार्थान्तरवृत्ती भविष्यतः। तस्मात् कालविधिः। ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यताम्। वाक्यं हि बलवत्तरम्। एवं प्राप्ते, ब्रूमः। प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः? नेत्युच्यते। कथम्? उपसद्भिश्चरित्वा इति हि वचनात् इदमभिधीयते। न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मादत्र(?)वाक्यस्य न मासविधिः। अथोच्येत उपसदोऽपि विधीयन्ते इति। तथा गुणविधानार्थे अस्मिन् वाक्ये अनेकगुणविधानात् वाक्यं भिद्येत। अस्मिन् पक्षे पुनः अनन्यमग्निहोत्रशब्दः, [illegible] कर्म विधास्यति। तेन वाक्यभेदो न भविष्यति। तस्मात् कर्मान्तरमिति सिद्धम्।

वा—गतं गुणलक्षणभेदासङ्कानुप्रसक्तं कीदृशो गुणः पूर्वत्रासमन्वितः, किमपि कीदृशो वा तत्रैव समन्वयीति। इदानीं पर्यवसितेषु पक्षसु भेदकारणेषु प्रकरणान्तरलक्षणो भेदः प्रस्तूयते। तत्र तावत् 'अग्निहोत्रादिशब्देन पूर्वं कर्माववोधितम्। न विप्रकर्षमात्रेण भेदरूपं प्रपद्यते॥' यथैव मथुरायां पाटलिपुत्रे वा अग्निहोत्रादिशब्द उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरेऽपि। न हि प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभि-

व्यनक्ति । तद्विशेषिताश्च यवतिजुहोत्यादयोऽपि नार्थान्तरे वर्तन्ते । नार्थान्तरेण विना किञ्चिदनर्थकं भवति । न च प्राप्तविधानं तेषु न सम्भवति । यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः । यो वै तेषां काम्यप्रयोगः, तस्य अनपगतकालविशेषत्वात् मासपरिमाणविधानमित्यदोषः । प्रकरणस्य च बाध्यं बाधकमिष्टमेव । अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरिमितः प्रतिप्रसवः । स तु प्रयोगमध्ये एव क्रियते । अथवा तान्येवाग्निहोत्रादीनि अत्र पर्युपस्थाप्य सोमयागसहितानि तत्प्रयोगवचनेन फले विधीयन्ते । नहि येनान्यभोजी देवदत्तः अन्यैः सह पङ्क्त्या भुञ्जानः अन्यत्र प्रतिपद्यते । न च फलान्तरसम्बन्धः कर्मान्तरत्वेन विना न घटते इत्युक्तं अवेष्ट्यधिकरणे ( २।३।१ ) । न चावश्यमौत्पत्तिकेन फलान्तरं गन्तव्यम् । प्रधानमपि हि अपरिपूर्णं करणांशे स्वशब्देन विधीयमानं न विरुध्यते । तस्मादेवमपि तान्येवाग्निहोत्रादीनि । इति प्राप्ते, उच्यते । ‘उपसद्भ्यः परं होतव्यमग्निहोत्रं विधीयते । न च नैयमिकस्यैताः सन्तीत्येतेन भिन्नता ॥’ यदि हि मासः शुद्धो विधीयेत, ततः पूर्वकर्मानुवादे बुद्धिर्भवेदपि, न त्वेतदस्ति । उपसदुत्तरकालत्वेन श्रवणात् विद्यमानाभिरुपसद्भिः शक्यः कालो लक्षयितुम् । न च नैयमिके ताः स्वार्थाः परार्था वा विद्यन्ते । यदि तु ताः तदुत्तरकालस्य मासश्च विधीयेरन्, एवं सति अनेकार्थविधानात् वाक्यभेदः स्यात् । एतस्मादेव हेतोः दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा सनैकदेशत्वेन वा अयं विधिः प्रयुक्तः । तत्रापि हि उपसदुत्तरकालस्य मासश्च इत्यनेकार्थत्वमेव । कर्मान्तरविधाने तु अनेकार्थत्वमदोषः । तस्मात् कर्मान्तरमिति भाष्यकारः ।

इदं त्विह वक्तव्यम् । यदि वाक्यभेदप्रसङ्गात् कर्मान्तरत्वम्, एवं तर्हि स एव भेदहेतुः प्राप्नोति, न प्रकरणान्तरम् । अथवा गुणादेव अनेकात्मकत्वेन पूर्वासम्भवात् भेद इति प्रकरणान्तरानवकाशः । तथाहि, ‘ यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् । तथाऽप्यसंभवात्तस्मिन् ब्रूयात् कर्मान्तरे गुणः ॥ ’ किञ्च ‘ अग्निहोत्रस्य चैतेन भेदः केनैव सम्भवेत् । उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥ ’ ‘ मासं दर्शपूर्णमासाभ्यां यजते ’ इत्यादिषु हि केवलमाससम्बन्धविधानाच्च वाक्यभेदः प्राप्नोतीति अकर्मान्तरत्वप्रसङ्गः । तन्नैतत् स्यात् । इहापि ‘ उपसद्भिश्चरित्वा ’ इत्यनुषङ्गादग्निहोत्रतुल्यत्वमिति । तदयुक्तम् । कुतः ? ‘ विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका । तत्रैव स्यात्तदर्थानामनुषङ्गो न चेह सः ॥ ’ तत्रानुषङ्गो युक्तः, यत्र तेन विना न किञ्चिदुक्तं भवति । यथा अत्रैव ‘ मासं वैश्वदेवेन ’ इत्यादिषु यावत् ‘ यजते ’ इति नानुषज्यते, तावत् न किञ्चिदुक्तं इत्यवश्यमनुषक्तव्यम् । इह पुनः दर्शपूर्णमासादिवाक्यानि तावत् स्वपदैरेव निराकाङ्क्षीभूतानि । ‘ उपसद्भिश्चरित्वा ’ इत्ययमपि पूर्वेणैव चरितार्थत्वान्न किञ्चिदपेक्षते । तत्र न कश्चिदपि हेतुरस्ति, येनानुषज्येत । यस्तु वाक्यभेदप्रसक्त्यर्थमेव अनुषङ्गमिच्छेत्, कुर्यादपि सः ( अनुषङ्गम् ) । तत्र तु पुनः पुनः चरित्वा इत्यस्य विधानात् यावदनुषङ्गं उपसदामनुष्ठानं प्राप्नोति । अनिष्टं चैतत्, वेदाभ्यनुज्ञानाभावात् । अथ अग्निहोत्रस्यैव पुरस्तात् कृताभिः सर्वानुषङ्गार्थसम्पादनं इत्युच्येत, तथा सति शब्दोच्चारणमपि एवमेव भवत्विति अग्निहोत्रादीनां पाठक्रमानुरोधेन उपकरिष्यति इति नार्थः अनुषङ्गेण । तस्मात् नैतत् व्याख्यानमुपपद्यते । इति एवं वर्णनीयम् ‘ उपादेयो गुणो यत्र भवेत् प्रकरणान्तरे । तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता ॥ ’ इह तावत् नैव प्रकरणान्तरसद्भावात् भेदः आरभ्यते । किं तर्हि ? पूर्वप्रकरणविच्छेदात् । अपरिवर्तमाने हि पूर्वकर्मणि केनापि प्रकारेण उत्तरस्य भेदः प्रतीयते । न हि प्रकरणान्तरं सदपि किञ्चिदुपकरोति । तथा च ‘ फलं चाकर्मसंनिधौ ’ इत्यत्र वक्ष्याम । सर्वत्र च विच्छिन्नप्रकरणस्य कर्मणः उत्तरत्र द्विप्रकारं श्रूयते उपादेयमनुपादेयं च । तत्र यदुपादेयं यथा आहवनीयप्रतिषिद्धादि, तत् प्रदेशान्तरस्थोद्देशेनापि शक्यं विधातुम् । यत्तु अनुपादेयं देशकालनिमित्तफलसम्बन्धात्मकम्, तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति विधानाभिप्रायेण वचनव्यक्तिर्भवति ‘ तत्रैव कर्म कर्तव्यम् ’

इति । परोद्देशेन च धर्मं विधीयमानं यदि अन्येन तद्रूपमेव वाक्येनोपस्थाप्यते, ततः तदेव इति अकर्मान्तरबुद्धिर्भवति । अथ तु ईषदपि विशेषानभ्रत् नोपतिष्ठेत, ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिरता न शक्या अपनेतुमिति कर्मान्तरत्वं भवति । एवं हि स विधायकः सन्नोपदिशति 'अविधेयं पदार्थं प्रति मया एतद् धर्मं विधीयते, तच्च स्वरूपेण अनुत्पन्नं न शक्यं तत्र निधातुं इति बलादुत्पाद्यते । तद् यदि कश्चित् एवंविधं शक्नोति उत्पादयितुम्, तद् उत्पादयतु, यावदहमपि अत्र निधिं करोमि, अथ नोत्पादयति, ततो मयैव उत्पादिते मा कश्चित् पश्चादागत्य ममापराधं मस्त' इति । तेन एव आक्षेपिते [आयोपिते इत्यर्थः । आयोपेव वा पाठः स्यात्] यदि कश्चित् तथाविधमुपनयति, ततः अन्यत्रापि तदेव देशादौ विधत्ते । अथ नोपनयति, ततः स एवोत्पादयत्यपि इति निरूप्यते । तदिह मासज्ञानात् दूरस्थहोमानुवादेन न शक्यते विधातुम् । नहि कश्चित् होमान्तरोद्देशेन अचोदय मासं उपपादयितुं समर्थः । तेन अत्यन्तं स्वतन्त्रमनुपादेयं मासमेव प्रति होमादिषु विधीयमानेषु दूरस्थे उत्पत्तिविधिभिः उत्पादनशक्तौ अलुप्यमानायां इदानीमेव उत्पत्तिः क्रियते । न चोत्पन्नस्य पुनरुत्पत्तिः सम्भवति, इति अपूर्वविधानं निश्चीयते ।

ननु च अग्निहोत्रादिपदेन उत्पत्तिसहचारिणा तत्कर्मोत्पत्तौ उपनीयमानायां मासकर्मप्रत्यभिज्ञानतोऽयं विधिः उत्पादकत्वात् भिद्यते । 'संनिधानेनोपनीतं येन धर्मं नोत्पद्यते पुनः । नामधेयोपनीतं तत् तत्र नोत्पद्यतेऽपरम् ॥' यत्र वाक्यान्तरगतमपि संनिधानमात्रेण प्रत्यभिज्ञायमानं न भिद्यते, तत्र स्ववाक्यगतेन नाम्ना उपनीयमानं न प्रत्यभिज्ञायते, इति कुत एतत् । उच्यते । 'यथाऽभिहितं यत्र दुर्बलेनापि हेतुना । कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते ॥' संनिधानेन हि यादृगेव देशादियोगेषु धर्मं अवगम्यते, तादृगेव उपतिष्ठते इति न भिद्यते । नामधेयं पुनः आदितस्तावत् आख्यातपरतन्त्रत्वात् नैव भेदाभेदयोः व्याप्रियते (नाम्नः पूर्वकर्मोपस्थापकत्वस्य पूर्वकर्मवाचित्वनिमित्तकत्वात् आख्यातस्य च पूर्वकर्मविषयत्वं विना तत्परतन्त्रस्य नाम्नः पूर्वकर्मवाचित्वानवधारणात् पूर्वकर्मोपस्थापकत्वानुपपत्तेः नोत्पत्तिप्रतिबन्धकत्वमित्याशयः) । तस्मिंश्च आख्यातप्रवृत्तिप्रतीक्षिणि अवस्थिते 'मासं जुहोति' 'मासं यजते' इति जुहोतियजतिपदमात्रगतो आलोच्यमानायां अन्यस्य जुहोत्यादेः स्ववाक्यस्थप्रकरणेषु अविपरिवर्तमानत्वात् अप्रत्यभिज्ञानम् ।

किञ्च 'नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः । भावना त्वनुपस्थानाद् भिद्यमानाऽवधार्यते ॥' सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थेन नामधेयत्वेन अवस्थितानि, न भावनायाः । तेन भावनाऽन्यत्वानन्यत्वपरीक्षायां सत्यपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेण अनुपनीयमाना न कथञ्चित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्वम् । अथवा 'धात्वर्थोऽपि यथाऽऽख्यातेऽसत्त्वभूतः प्रतीयते (द्रव्यगुणलिङ्गसंख्याऽन्वयायोग्यः) । सत्त्वाभिधायिना नाम्ना तादृङ् नैवोपनीयते ॥' असत्त्वभूतो हि धात्वर्थोऽत्र जुहोतिना विधेयत्वमीक्षते । न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिः अग्निहोत्रादिपदैः अभिधीयमानत्वं इति अप्रत्यभिज्ञानात् सोऽपि भिद्यते । यत्र तु प्रकरणान्तरेऽपि तथाभूतः (असत्त्वभूतः) नोपादीयते, भावना वा तावत्स्वरूपात्मना (असत्त्वभूतधात्वर्थानुरक्तात्मना) न विरुध्यते, तत्र तदेव कर्म एकेन वचनेन पर्युपस्थाप्य अपरेण फले विधीयते, एतदवगमात् कामं कर्मान्तरं भवतु । तद्यथा 'अतिरात्रमनुविनः आग्रयणीसहः' 'चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः' इत्यादिषु, यथा च वत्सप्रयायेषु 'अथ सूर्यं यन्ति' इति । यदा तु प्रकरणान्तरगतपरगादिसंबद्धं विधित्व उत्पत्तिमपि संस्पृश्य यावत् बलीयस्या उत्पत्तिविधिविपरिवृत्त्या विपर्ययात् अनिवार्यमाणं भिनत्ति इति निश्चीयते, तदा एवमादिष्वपि भेद एवेत्यवगम्यते । पदार्थेन तु 'भिद्यते भावनामात्रं धात्वर्थो नायतिष्ठते । नाम्ना हि तदुपादानमात्रेणोपायिचोदिते ॥' नामनिष्पन्नधातुश्रवणे हि तदर्थभेदो भवति ।

सूत्रे तु यज्यश्रवणात्नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात् तद्भावनामात्रभेद । तस्मात् साधूक्तम् 'प्रकरणान्तरे प्रयोजनान्यत्वम्' इति (सूत्रकारेण)। भाष्यकार 'उपसद्भिश्चरित्वा' इति तद्रक्षितकाल्मेव अनुपादेयरूप भेद हेतुत्वेन दर्शयति इति द्रष्टव्यम्। 'अथोच्येत उपसदोऽपि विधीयन्ते' इत्यादि (भाष्य) च अभ्यासाधिकरणवत् ('न च यत् समित्सन्न्येन क्रियते' इति अभ्यासाधिकरणभाष्यम् (पृ ४७२) समिदादिपदस्य देवताऽनभिधायित्वात् गुणहेतुकभेदाभावेऽपि अभ्युपेत्यवादत्वेन यथा समर्थित तद्वत् इत्यर्थ) अभ्युपेत्यवादेन समर्थयितव्यम्।

शा— गुणभेदप्रसङ्गे समाप्ते प्रकरणान्तरेण भेदोऽभिधीयते। कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्र जुह्वति, मास दर्शपूर्णमासाभ्या यजन्ते (मासं वैश्वदेवेन, मासं वरुणप्रघासै, मास शुनासीरीयेण, मास मिश्रुवा, मास पशुदर्शेन) इत्यादि श्रुतम्। तत्र सदेह किं नैयमिकाग्निहोत्रादौ मासो विधीयते, किंवा कर्मान्तरमिति। सदेह किं अनुपादेयगुणसबन्धानुगृहीत असंनिधि भेदकारण भवति, उत नेति। 'तत्राग्निहोत्रशब्देन सत् कर्मोपस्थित यत । तस्मात् तत्रैव मासोऽयमप्राप्तत्वाद्विधीयते ॥' उच्यते 'कर्मासंनिहित नैव बुद्धौ विपरिवर्तते । शब्दात्तु तदुपस्थानमुपादेये गुणे भवेत् ॥ यत्र वाक्येऽनुपादेयो देशकालादिको गुण । श्रुतो न तत्र दूरस्थकर्मोपस्थानसभव ॥' तेन शब्दस्वरसत प्राप्तोपस्थानानवगमात् संनिधानाभावाच्च क्रियैव विधात्येनि कर्मभेद । एव 'सरस्वत्या दक्षिणेन तीरेण आग्नेयोऽष्टाकपाल' 'सत्रायावगूर्य विश्वजिता यजेत' इति देशनिमित्तयोरपि द्रष्टव्यम्।

कौ— अत्र च मासादेरनुपादेयस्य गुणस्य पूर्वपक्षे, सिद्धान्ते विधेयत्वे निश्चितेऽपि कृतिसाध्यत्वरूपोपादेयत्वेन अनिश्चयात् तादृग्गुणप्रयोज्यभेदनिरूपणेन पादव्याप्यसगति । दूरस्थस्यापि चयनस्य अग्निष्टोमपदप्रत्यभिज्ञातिष्टोमाङ्गत्वे अभिहिते सुतरा अग्निहोत्रपदवाच्यपूर्वकर्माङ्गत्व मासादेर्गुणस्य संभवति इति पूर्वपक्षोत्थानात् अनन्तर।

सोम—प्रयोजन– पूर्वपक्षे प्रसिद्धाग्निहोत्रे यावज्जीवादिकाले मासस्य विकल्प, कुण्डपायिनामयने अग्निहोत्राननुष्ठानं च। सिद्धान्ते तु तदुभयाभाव इत्यादि। सूत्रे प्रयोजनशब्द धात्वर्थपर।

वि— 'मासं जुहोत्यग्निहोत्र गुणोऽयत् कर्म वा गुण ।, अनूद्य प्राप्तकर्मात्र मासोऽप्राप्तो विधीयते ॥, उपसद्भिश्चरित्वेति नित्ये तत्साप्रसंभवात् । अनेकस्याविधेश्चान्यत् कर्म प्रकरणान्तरात् ॥' तस्मात् प्रकरणान्तरमेवात्र भेदहेतु।

भाट्ट— कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्र जुह्वति, मास दर्शपूर्णमासाभ्याम्' इत्यादि श्रुतम्। तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात् तदनुवादेन 'यदाहवनीये जुहोति' इतिवत् मासादिरूपगुणविधि, उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात्। कर्तृबहुत्वकालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेद। अतो न कर्मान्तरविधि। इति प्राप्ते, सर्वत्र प्रवर्तकस्य विधे कृतिविषयत्वापरपर्यायमुपादेयत्वम्, प्रमाणत्वाच्च अज्ञातज्ञापकत्वात्स्य विधेयत्व च प्रमेयम्। तदुभयमप्येकवृत्ति समानाभिधानश्रुत्यादिना च धात्वर्थभावनावृत्ती सुगमे। योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्मात्रवृत्ति। यथा 'यदाहवनीये जुहोति' इत्यत्र आहवनीयस्य उपादेयत्वविधेयत्वोभयाश्रयत्वात् योग्यत्वम्। अत एव तत्र धात्वर्थानुवादापेक्षया दूरस्थानामपि सर्वहोमानां कथञ्चिदनुवाद। प्रकृते तु मासस्यानुपादेयत्वादुपादेयस्य धात्वर्थे एव वाच्यम्। अन्यत्र सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विहितस्य विधानायोगाद्भेद। एव सत्यपि यदि 'यत् साय जुहोति' इत्यादिवत् प्रत्यभिज्ञापक संनिध्यादि प्रमाण भवेत्, तत अगत्या कालादौ विधेयत्वम्, कर्मणि च प्राप्तेऽपि उपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत, न त्वेतदस्ति। न च संनिध्यभावेऽपि नाम्न एव पूर्वकर्मोपस्थापकता। 'अग्निहोत्र जुहोति' इत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्वप्रकारिका होमोपस्थिति, तादृश्येव संनिधिनोपनीता युक्तम् 'यत् साय जुहोति'

इत्येतद्वाक्यस्यजुहोतेरपि स्वविषयविषयत्वं आपादयन्ती भवति तद्गतविधेयार्थद्रव्यप्रतिनन्धिरा। अग्निहोत्रादिनाम तु अग्निदेवताकहोमत्वप्रकारकहोमविशेष्यकबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम्। नह्यग्निदेवताकं पूर्वं कर्मेत्यत्र प्रमाणमस्ति। विजातीयहोमत्वस्य नाम्ना अनुपस्थितेः, अन्यथा पर्यायत्वेन सहप्रयोगानापत्तेः, अतिप्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैव उद्भिदधिकरणे स्थापितत्वेन योगाल्पनद्वीकारम्। अन्यथा मत्वर्थलक्षणादिभिया अतिप्रसङ्गमङ्गार्थमपि स्वयङ्गीकारे सोमादावपि सदापत्तेः। अतो न नाम्ना तदुपस्थितिः। अत एव यत्र नामैव अनुपादेयगुणयोगेन श्रुतम्, न तु धातुः यथा 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ, तत्र नामार्थस्यैव उपादेयत्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रतिनन्धात् कर्मान्तरम्। अस्तु वा तद्वाक्यस्य प्राकरणिकत्वादकर्मान्तरत्वम्। अतो नाम्ना प्रकृते जुहोतेर्विधेयार्थत्वप्रतिनन्धायोगात् अनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् सिद्धं कर्मान्तरत्वम्।

अथ चानुपादेयगुणवाक्यस्य स्वाङ्गसुपादेयत्वापनयद्वारा फालिनोऽयाद् सम्यर्थङ्गमुपादेयत्वापादन व्यापारः। अनुपस्थितेः उपादेयत्वसामानाधिकरण्येन विधेयत्वप्रतिबन्धः सः। अत एव न प्राचीनरीत्या अनुपादेयगुणयोग एव प्रयोजकः, अपि तु उपादेयगुणसामान्याभाव एव इति ध्येयम्। अतः सिद्धं कालविशिष्टकर्मान्तरविधानमेवेदम्।

एवम् 'सरस्वत्या दक्षिणेन वीरेण आग्नेयोऽष्टाकपालः' इति, देवतारूपानुपादेयस्य आग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्थापकत्वाभावात्। निमित्तस्य तु 'सत्रायणपूर्वे विश्वजिता यजेत' इति आमूलं संकल्पः, तदुत्तर सत्रमध्येऽयं 'विश्वजिता यजेत' इत्यस्मात् कर्मान्तरम्। न चानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्ति, विनियोगादिसामानाधिकरण्येन अवगताया उत्पत्तेः संनिधि विना बाधे प्रमाणाभावात्।

मण्डन—'धर्मेऽग्निहोत्रमन्यत् स्यात्।'

शंकर—'प्रक्रियान्तरतो भेदः।'

● ननु अनुपादेयान्वयेऽपि विष्ण्वादिवाक्यविहितयागविनिर्देशोः प्रकरणान्तरन्यायो नास्ति इत्याशङ्क्य। सु. पृ. ७५३, ● ननु शाखाद्वयाध्यायिनः प्रतियोगिकर्मग्रहणसंभवात् शाखाऽन्तरे प्रकरणान्तरन्यायो भविष्यति इत्याशङ्का। पृ. ९८५, ● पञ्चविंशादिषु च एकशाखा गतेषु ब्राह्मणान्तरेषु एकशाखाध्यायिनोऽपि प्रकरणान्तरन्यायो भविष्यति इति आशङ्का। पृ. ९८५. ● 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्रापि प्रकरणान्तरात् भेदोक्तिः सन्निधिविरहमात्रेणैव न तु वस्तुतः प्रकरणान्तरन्यायोऽस्ति (अत्र) उपादेयगुणाभावाभावात् अवभृथपदेन आम्नातसमानाधिकरणेन सौमिकावभृथस्यैवोपस्थितत्वाच्च। भेदस्तु गुणादेव। कौ १।३।११।२४ पृ. ८४. ● प्रकरणान्तरन्यायेन 'अक्षीनि यानयेयुः' इत्यत्र कर्मान्तरं निश्चितम्। सोम, १०।२।२०. ● प्रकरणान्तरन्यायेन दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य फल्गुरसोमयागोद्देशेन विधेयपूर्वकालविशेषणतया विधानम्। पूर्वपक्षे। भाट्ट. ४।३।१३, ● प्रकरणान्तरन्यायेन प्रसिद्धसौत्रामणिबृहस्पतिसवापेक्षया कर्मान्तरमेव तत्तद्धर्मकं अग्नि-वाजपेयपूर्वकालकत्वविशिष्टं विधीयते 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। ४।३।१०, ● प्रकरणान्तरन्यायेन 'मास दर्शपूर्णमासाभ्याम्' इत्यत्र कर्मान्तरम्। (नित्याभ्यां दर्शपूर्णमासाभ्यां कुण्डपायिनामयनगतौ दर्शपूर्णमासौ कर्मान्तरम्) कौ. २।३।११।२४ पृ. ८८, ● 'अथैष ज्योतिः' इत्यादौ अथशब्दस्य प्रयोगविच्छेदप्रत्यभिज्ञोच्छेदकत्वेऽपि धर्मप्रत्यभिज्ञोच्छेदकत्वाभावात् न प्रकरणान्तरन्यायेन कर्मान्तरत्वम्। (पूर्वपक्षे स्थित्वा इदम्)। २।२।८।२१ (२२ पे.) पृ. २४९, ● 'अथैष ज्योतिः' इत्यादौ परिशेषात् अथ शब्दानुशासनं इतिवत् अधिकारार्थत्वावगमात् युक्तमेव प्रकरणान्तरन्यायेन कर्मान्तरत्वं इत्याशङ्का। २।२।८।२१ पृ २४८. ● 'एतया पुनराधेयसंमितया इष्ट्वा इष्ट्वा अग्निहोत्रं जुहोति' इति विधौ प्रकरणान्तरन्यायेन कर्मान्तरतापत्त्या कालविशिष्टकर्मान्तरविधाने गौरवापत्ते. होमपरिसंख्यापत्तिः न इष्टापत्तिः। भाट्ट. १०।८।७. ● कथमिति पृष्टे 'जामि वा एतद् यज्ञस्य क्रियते' इत्यादिना 'अनूयते' इत्यन्तेन विष्ण्वादिवाक्यानां

विधायकत्वायोगात् न कथासोपासुल्यानुवाद. समवति इत्युक्ते अनुपादेयान्तरालकालान्वयात् प्रकरणान्तरन्यायेनापि कर्मविधित्वाभिधानम्। सु. पृ ७५३. * केचित्तु प्रकरणान्तरन्यायेन ( आग्नेयद्वयस्य ) भेद समर्थयन्ते । तथाहि यदि अनिविशमानत्वेन अनुपादेयत्वेऽपि गुणस्यैव भेदकता, तत. 'मासमग्निहोत्र' इत्यत्रापि तस्यैव भेदकत्वोपपत्ते. कृत प्रकरणान्तरेण। अत अनुपादेयत्वावच्छिन्न प्रति तावत् प्रकरणान्तरस्यैव भेदकता इति स्वीकर्तव्यम्। न च एवमपि असन्निधेरभावात् कथं तस्य भेदकता। भेदबोधकतादृशाया सत्प्रतियोगिककर्मोपस्थित्यभावरूपस्य असन्निधे: मासाग्निहोत्रवत् इहापि तुल्यत्वात् इत्याहु: । तत्र । कौ. २।२।३।१ पृ १६६, * गवामयनप्रकरणे ' प्रायणीयमहर्भवति ' इत्यत्र विनिगमनाविरहादेव कर्मान्तरत्वम् । भाष्यकारीयप्रकरणान्तरन्यायेन भेदोक्तिस्तु अप्राप्तोपादेयगुणाभावविशिष्टासन्निधिमात्रेण व्याख्येया । २।३।११।२४ पृ ८३, * दोहाधिकारे ' वत्समालभेत ' अत्र सिद्धान्ते दार्शपौर्णमासिकेनालम्भात् अवमालम्भ. तत्कार्यत्वानुपादेयगुणयोगात् प्रकरणान्तरन्यायेन कर्मान्तरमिति सिध्यति । २।३।६।१७. * न च प्रकरणान्तरन्यायेन कर्मान्तरत्वशङ्का ( ' य एतेनानिष्ट्वाऽथान्येन यजते ' इत्यत्र ) । ' एष वाव ' इत्यनेनार्थवादेन उद्भिदादीना यज्ञान्तराणा संनिहितत्वात् । भाट्ट ५।३।१४. * न च सिद्धान्तेऽपि प्रकरणान्तरन्यायेन प्रसिद्धपञ्चहापेक्षया कर्मान्तरत्वात् न पञ्चहावृत्ति, किन्तु कर्मान्तरेष्विव तेषु पञ्चहविष्यन्वमानस्यैवावृत्ति इति वाच्यम् । एवजातीयकेषु कर्मभेदाभावात् । सोम. ८।३।३. * ' नन्तु अथैष ज्योति. ' इत्यादौ अथशब्दानुरोधेन वक्ष्यमाणपरामर्शित्वस्यापि उपपत्ते: अर्थभिन्नत्वेन तत्सहकृतफलरूपानुपादेयगुणस्य प्रकरणान्तरन्यायेन भेदकत्वोपपत्ति. । कौ. २।२।८।२१ पृ. २४८, * प्रकृते ( दाक्षायणयज्ञाख्ये ) पूर्वबुद्धिविच्छेदकाभावात् प्रकरणस्य चोपस्थापकस्य सत्त्वात् न प्रकरणान्तरन्यायेन भेद: । २।३।४।८ पृ १३. * फलस्य अनुपादेयत्वेन कर्म उद्दिश्य उपादातुमशक्यत्वात् फलांशस्य विधायकस्य फलोद्देशेन कर्मोपादायकत्वात् प्रकरणान्तरन्यायेन कर्मस्वरूपविषयत्वात् । सु पृ. ८२०. * यत्र वेदान्तरे एव विनियोग वेदान्तरे च आख्यातसामानाधिकरण्यं विना वसन्ते ज्योतिष्टोम· इत्येवरूपेण कालदेशाद्यन्वय, तत्रापि प्रयोगविधित्वात् तत्रित्यत्र एव स्वर इति बोध्यम् । आख्यातसामानाधिकरण्ये सति प्रकरणान्तरन्यायेन कर्मान्तरत्वापत्ते । कौ. ३।३।३।१० पृ. ३२६. * 'यन्ति' इत्यनेन तु ( वरुणप्रघासेषु ' वारुण्या निष्कासेन तुषैश्चावभृथ यन्ति ' ) प्रकरणान्तरन्यायेन कर्मान्तर विधीयते । शा. ७।३।४. * सवनीयस्य सन्निधौ ' आश्विन ग्रह गृहीत्वा उपनिष्क्रम्य यूप परिव्ययति ' इति श्रुतेन वचनेन पशुत्रयसाधारणयूपपरिव्याणापेक्षया यूपपरिव्याणान्तर सवनीयाङ्गतया प्रकरणान्तरन्यायेन अभ्यासाद्वा यूपवाद्यर्गप्रयोजक विधीयते । भाट्ट. ४।४।९. * सूर्यप्रजापत्यो उत्पत्तिशिष्टत्वाभावेन बलीयस्त्वानुपपत्ते, सायं च प्रातश्च जुहोति इत्यस्य अनुपादेयकालसम्बन्धात् प्रकरणान्तरन्यायेन पूर्वपक्षे कर्मविधित्वावगमः । सु पृ. ४३१. * सोमे दीक्षाया रात्रौ जागरणम् । दार्शिकजागरणस्य दृष्टार्थत्वेन प्रसङ्गानुपपत्ते. तस्याप्यदृष्टार्थत्वेऽपि प्रकरणान्तरन्यायेन विजातीययो. जागरणयोः एकापूर्वजनकत्वे प्रमाणाभाव. । भाट्ट. १२।१।८. * 'हृदयस्याग्रेऽवद्यति' इत्यादौ प्रकरणान्तरन्यायेन स्वतन्त्रमेवावदान हृदयानुद्देशेन विधीयते ( इव पूर्वपक्षे )। कौ. २।२।६।१७ पृ. १०८. * ' एतया ( उदयनीयया ) पुनराधेयसंमितया इष्ट्वा इष्ट्वा अग्निहोत्र जुहोति ' इति वचन तु प्रकरणान्तरन्यायात् सोमाङ्गतया उदयनीयेष्टयङ्गत्वेन वा कर्मान्तरविधायकमिति । इदं पूर्वपक्षे । भाट्ट ६।५।१३. * न च प्रकरणान्तरन्यायात् यज्ञान्तराणामिह कालविधिर्न सम्भवतीति शङ्क्यम् । ( ' एष वाव प्रथमो यज्ञो यज्ञानाम् ' इत्यत्र ) ' यज्ञानाम् ' इति शब्देन यज्ञान्तराणामपि विपरिवर्तमानत्वेन अविपरिवर्तमानत्वरूपप्रकरणान्तरस्याभावादिति । सोम. ५।३।१४, * ' पृष्ठैरुपतिष्ठते ' । ननु प्रसिद्धपृष्ठशब्दाभिधेयस्तुतिविधानमेवास्तु, किमिति लक्षणया अदृष्टकर्मविधि. इत्याशङ्क्य प्रकरणान्तरन्यायात्

कर्मान्तरविधिरेव इत्याह ...। ( इदं पूर्वपक्षे ) । ७।३।१४. ● बृहस्पतिसवः वाजपेयप्रकरणे श्रुतस्तत्र प्रकरणान्तरन्यायात् कर्मान्तरमेव विधीयते । कल्पतरुः. १।१।१ अप्. पृ. ६८. ● प्रकरणान्तरन्यायस्य स्वरूपम् । सत्यपि उपादेयसांकर्ये ( अभ्यासाधिकरण-न्यायसाम्यात् प्रकरणान्तराधिकरण- ) न्यायस्वरूपस्य असांकर्यम् । अभ्यासे हि उपादेयतामन्तर्नीकृत्य पारिशेष्येण धात्वर्थे विधेयत्वापादनमेव व्यापारः । प्रकरणान्तरस्थले तु न पारिशेष्येण विधेयत्वापादनं व्यापारः, विशिष्टविधिनियमात् कालादेरपि विधेयत्वाङ्गीकारेण तदसमनात् । अपितु अत्यापि विधेयान्तरे स्वापादितोपादेयतासामानाधिकरण्यगमार्थं धात्वर्थेऽपि विधेयताऽऽपादनम् । कौ. २।२।१।२४ पृ. ७९.

● ज्योतिष्टोमे उदयनीयः न कर्मान्तरम्, संनिधिपाठेन प्रकरणान्तरन्यायाभावात् । इदं पूर्वपक्षे । भाट्ट. ११।२।१५. ● प्रकरणान्तरन्यायाभावेऽपि अनुपादेयान्वयस्य अकर्मविधित्वापादकत्वं दर्शयितुमाह ...। सु. पृ. ७१४.

● पात्नीवतशब्दस्य निमित्तपरत्वात् अवच्छेदकत्वेनानुपादेयगुणत्वोपपत्तेः अनुपादेयगुणान्वयस्य भेदकत्वाभेदकत्वस्य विचारात् कर्मविपरिवृत्तेः प्रकरणान्तरन्यायायोगेऽपि अनुपादेयान्वयनिमित्तभेदचिन्ताऽनन्तरं बुद्धिस्थत्वोपपत्तेः प्रकरणान्तरचिन्ताऽपि घटते। संभवति । सु. पृ. ९६५.

● गेतां विना प्रकृतबुद्धिविच्छेदाभावे प्रकरणान्तरन्यायाविषयत्वात् भेदकत्वं न संभवति । सु. पृ. ८२०.

● पर्युदसनीयत्वेन उपस्थितत्वात् अग्निहोत्रस्य प्रकरणान्तरन्यायासंभवेन कर्मान्तरत्वानुपपत्तेः तस्यैव अवभृथोत्तरं करणमात्रौ अवाप्यन्तरमात्रविधाने लाघवम् । भाट्ट. १०।८।३.

● अनुपादेयान्वयस्य विधेयस्यैव प्रकरणान्तरन्यायोपयोगित्वेन, प्रकृते ( वासन्तं धेनुम्, ईशानमालभेत इत्यादौ ) तदभावेनाभेदकत्वम् । ( इदं पूर्वपक्षे ) । कौ. २।३।५।२९ पृ. ४५.

॥ प्रकरणान्तरप्रत्युदाहरणन्यायः । अनुपादेयानां देवादीनां कर्मसंनिधौ विद्यमानानां कर्मभेदकत्वं नास्ति । अवेष्टेरन्नाद्यफलकत्वम् ॥

संनिधौ त्वविभागात् फलार्थेन पुनःश्रुतिः । २।३।१३।२६ ॥

भाष्यम्— अस्ति अवेष्टिः ' आग्नेयोऽष्टाकपालः पुरोडाशो भवति ' इत्येवमादिः । तां प्रकृत्य उच्यते ' एतयाऽन्नाद्यकामं याजयेत् ' इति । तत्र संदेहः, किं कर्मान्तरमवेष्टेः, उत अवेष्टिरेवेति । किं प्राप्तम् ? कर्मान्तरमिति उक्तेन न्यायेन । एवं प्राप्ते, ब्रूमः । संनिधौ फलार्थेन पुनःश्रुतिः अवेष्टेरेव, न कर्मान्तरमिति । कुतः ? अविभागात् । एतया इत्येष शब्दो न शक्नोति अवेष्ट्या विभक्तं यागमन्यं वक्तुम् । संनिहितस्य प्रतिनिर्देशक एष शब्दः । तस्मात् अवेष्टिरेव अन्नाद्यकामस्य विधीयते इति । किं प्रयोजनम् ? यदि अवेष्टिः आग्नेयादीनि हवींषि, अथ कर्मान्तरं अन्यहविष्को याग इति ।

वा— सर्वेणापि अप्रनिर्ण्यप्रत्युदाहरणार्थमिदमारभ्यते । फलश्रवणं प्रदर्शनमात्रम् । सर्वाणि तु देवादीन्यपि उदाहर्तव्यानि । ' उभे दर्शपूर्णमासाभ्यां यजेत ' ' पौर्णमास्यां पौर्णमास्या यजेत ' ' वार्त्रघ्नं दर्शपूर्णमासाभ्यां यजेत ' ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' ' देवात् स्विष्टकृतं यजति ' इति । सर्वत्र पूर्वाधिकरणेन देवादीनि प्रति विधीयमानत्वात् कर्मान्तरत्वं प्राप्तम् । आह च, ' विहितस्य विधिर्नान्यैरनुषङ्गः प्रसज्यते । अनूद्यमानमुद्देश्यं न चान्योद्देशसंभवः ॥ ' अनूद्यमानानि तु एकान्तेन उद्देश्यानि कर्माणि । न च उद्देश्यानां उद्देश्यैः संबन्धः अवकल्पते । देवाद्युद्देशेन तु विधीयमानानां कर्मणां स्वरूपानुवादकत्वं युगपद्विध्यनुवाददोषात् अयुक्तम् । तस्मात् कर्मान्तराणि । इति प्राप्ते, अभिधीयते । 'भिन्ने हि विधिसामर्थ्ये उत्पत्तिविनियोगयोः । तत्र सत्यां गतावेकमसत्यां तद् द्वयं भवेत् ॥ ' अन्यत्र हि तेनैवोत्पत्तिः तेनैव च विनियोगः क्रियते । इह तु यतो विनियोजकस्य उत्पत्तिविध्यर्थापत्त्यनुसारात् अन्येनैव उत्पादितानां च विपरिवर्तमानानां विनियोग-

सामर्थ्यमात्रमेव ज्ञायते । 'न चाप्युद्दिश्यमानत्वमनुवादत्वकारणम् । नोपादानं विधेयत्वे प्राप्त्यप्राप्तिवशे हि ते ॥' यद्यपि देशादीनि अनुपादेय स्वभावत्वात् उद्दिश्यन्ते, तथापि अप्राप्तत्वात् तेषामेव ज्ञायते विधेयत्वम् । उपादीयमानस्य च कर्मणः शब्दस्यैव अन्येन पर्युपस्थापनात् अनुवादत्वम् । असंनिधाने तु अपर्युपस्थापनात् विधि नोपादानमात्रात् इत्यविरोधः । तस्मादभेदः । विधिरुक्तिरेव चेह अविभागशब्देनोक्ता । विशेषेण तु अचेष्टौ एतच्छब्दप्रत्ययात् इति ।

प्रयोजने तु चोदयन्ति । कर्मान्तरेऽपि किल एतच्छब्दश्रुतात् सादृश्यप्रत्ययात् आग्नेयादीन्येव हवींषि इति कथं अन्यहविष्को याग इति । तत्तु अचोद्यम् । ज्योतिरादिवत् एतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ अन्या सादृश्यलक्षणाऽनुपपत्ते' । तस्मात् सुष्ठूक्तं कर्मान्तरे अन्यहविष्को याग इति ( भाष्ये )।

एवमुक्तानि शास्त्रवाद्यानि षट् भेदकारणानि । इत्यन्तरे तु चत्वार्येव भेदकारणानि शब्दान्तर-संज्ञा-गुण-फलानि उदाहृतानि । पुन.श्रुतिसंख्ययो. शब्दान्तरे एव अन्तर्भावात्, प्रकरणान्तरस्य च फलान्तरानुग्रहमात्रार्थत्वात् । तत्त अयुक्तमिव दृश्यते । न हि पञ्चकृत्वोऽभ्यस्तो यजति' शब्दान्तरत्वं प्रतिपद्यते । नापि एकशेषेण तन्त्रोच्चारिताः सततश्च भिन्नार्थशब्दाः सम्भवन्ति, शब्दैकत्वमभ्यभिधानात् । तथा चोक्तम् 'आदित्यन्नोगपद्यम्' इति 'संख्याऽभावात्' इति च । वक्ष्यति च एतवान्नीयकानामेकत्वम् ' अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाद्' इति । तस्मात् ऐकशब्द्ये सत्येव कारणान्तरात् भेदमभ्युपगम्य शब्दान्तरत्वेन तन्मन्ततो भाष्यान्तरकृतः । प्रकरणान्तरस्य विना फलादीना भेदत्वं तत्त्वमपि न दृष्ट 'संनिधौ त्वविभागात्' 'तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः' इत्यादौ । तेन प्रत्यभिज्ञाननिमित्तत्वात् फलानुग्रहीन प्रकरणान्तरमेव भेदकारणं भवदपि उपेक्षितम् । फलं च प्रकरणान्तरान्तर्भूतत्वेन न निरीक्षितम् । यदपि 'एकं वा संयोगरूपचोदनाख्याऽविशेषात्' इति एकत्वहेतुविपर्ययचतुष्टय ( एकत्वहेतु च तत् विपरीतचतुष्टय च इति विग्रह. )

अस्य ज्ञापक इत्युक्तम्, तदपि प्रस्तुतेऽधिकरणे अन्येषामप्रसरात् इति नालोचितम् ।

तस्मात् यथोक्ता. षडेव भेदहेतवः । तत्रापि तु *सिद्धान्ते संज्ञा-शब्दान्तरयोः गुणसंख्ययोश्च भेदो वक्तव्यः* सन् नोक्तः इत्यभिधीयते । 'स्वरूपानभिधानत्वात् संज्ञा शब्दान्तरात् पृथक् । व्यासज्यसमवायाच्च संख्या भिन्ना गुणान्तरात् ॥' संज्ञा हि द्रव्यरूपापन्नामपि क्रियामभिदधाना निच्छेदमानात् भिनत्ति । संख्याऽपि युगपत् अनेकोत्पद्यमानसमवेता पूर्वासम्भवद्गुणान्तरात् भिद्यते इति ।

शा— 'अत्रापि नाप्रदेशादेरुद्देशात् कर्म तत् प्रति । उपादेयं, तथा च स्याद् विधेयं, तेन भिद्यते ॥' अत्र भूमः 'संनिधावविभक्तत्वं कर्मणः प्रत्यभिज्ञया । गम्यते तेन तस्यैव फलाद्यर्थो पुनः श्रुतिः ॥ सत्यं कर्म विधातव्यं तथापि तु न भिद्यते । उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र नः ॥'

देशकालनिमित्तान्यसंस्कार्याणां संनिधौ पूर्वाधिकरणप्रत्युदाहरणार्थं इदमधिकरणं इति प्रत्युदाहरणत्वमवान्तरसंगतिः ।

सोम— प्रयोजनम्–पौर्णमास्यादिवाक्येषु कर्मान्तर विधौ कर्माधिक्य पूर्वपक्षे, सिद्धान्ते तु तदभावः । एतया इति वाक्यस्य कर्मान्तरविधायकत्वे तस्मिन् कर्मणि 'अयवागु तु सोमस्य' इति सौमिकधर्मप्राप्तौ. अन्यथा कामेन सोमहविष्को याग. कर्तव्य पूर्वपक्षे, सिद्धान्ते आग्नेयादिहविष्का अचेष्टिरेव इति वार्तिके व्यक्तम् । सूत्रे विभागात् निष्क्रियते. इत्यर्थः ।

वि— 'यजेत् समे पौर्णमास्या यावज्जीव तथैतया । अन्नाद्यकाम इत्यादौ कर्मभेदोऽथवा गुण. ॥, विष्णुपादानयोरैक्याद् देशादेरनुपत्तित । आवश्यके कर्मविधौ तद्भेद पुनरुक्तित ॥, देशादियोगस्याप्राप्तेर्विधिर्न ह्येकता तयो. । पुनःशब्दयोर्याकृतित्वात् पुनरुक्त्या रसनूयते ॥'

भाट्ट— पञ्चानामपि अनुपादेयानां संनिधौ प्रत्युदाहरणानि । दर्शपूर्णमासप्रकरणे 'पौर्णमास्या पौर्णमास्यां यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं

दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चतुर्णाम्। स्विष्टकृतं प्रकृत्य 'शेषात् स्विष्टकृतं यजति' इति शेषरूपस्योत्कर्षस्य। अत्र सर्वत्र संनिधानात् स्वविषयवृत्तिविधेयत्वप्रतिबन्धात् प्रामस्यैव कर्मणः कालदेशनिशिष्टप्रयोगमात्रं विधिलाघवाय अनुमन्यते, न तु कर्मोत्पत्तिमपि विधत्ते। यत्र तु प्रयोगोऽपि प्राप्तः 'य इष्ट्या' इत्यादौ, तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः सम्भवति। देशकालयोः उपादेयत्वासंभवेऽपि यागाङ्गत्वेन विनियोगविधिः। निमित्तस्थले तु दृष्टयो निमित्तनैमित्तिकयोः अङ्गाङ्गित्वासंभवात् प्राप्तस्यापि कर्मणः निमित्तसम्बन्धानुमितपापक्षयार्थत्वेन विनियोगविधिः इति वक्ष्यते। फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्तकर्मविनियोगविधिः स्पष्ट एव। अतो न संनिधित्वेऽपि अनुपादेयगुणयोगेऽपि कर्मान्तरम्।

मण्डन— 'देवाग्नकामन्याथेष्टिः।'

शंकर— 'संनिधौ कर्मभेदो न।'

● प्रकरणान्तरलक्षणं अनुपादेय-संनिधिसचिवः असंनिधिः इति केचित्। तत्र 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यत्र अव्याप्तेः। किन्तु विधेः तत्पदार्थसंकल्पासम्भवेन स्वकृतः असंनिधिः इति। नात्र असंनिधिरिव स्वरूपतः अनुपादेयसंनिधिः प्रवेश्यः, किन्तु तत्कार्ये विधेः तत्पदार्थसंकल्पासंभव। स च यथा अनुपादेयसंनिधिना भवति, एवमुपादेयद्रव्यसंनिधिनाऽपि भवति। वाक्य. पृ. ८८.

● प्रकरणाप्रकरणाम्नानविवेकः वेदेनैव कृतः। भा. ३।४।८।२०.

❡ प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम्। ३।४।३।५॥

राजसूये उपसदः प्रकृत्य 'पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद् वैष्णवेन' इति पठ्यते। तत्र 'पुरस्तादुपसदां सौम्य चरु निर्वपति, अन्तरा त्वाष्ट्रम्, उपरिष्टाद् वैष्णवम्' इति सत्याषाढसूत्रात् प्रयोऽप्येते चरवः इति स्पष्टम् (१३।७।७)। प्रयोगचन्द्रिकायां तु 'पुरस्तादुपसदां सौम्यं चरुं निर्वपति, अन्तरा त्वाष्ट्रमष्टाकपालम्, उपरिष्टाद् वैष्णवं त्रिकपालम्' इति आपस्तम्बश्रौतसुदाहृतम् (१८।२०।१९)। बौधायनश्रौते तु (१२।१७) 'मध्यमे (उपसदहनि) उपसदामन्तरेण त्वाष्ट्रमष्टाकपालम्' इति विशेषः। अथ तानीमानि हवींषि किं उपसदामङ्गत्वेन विधीयन्ते, कालमात्रं वा विधीयते इति विचारे पूर्वपक्षमाह। एवंविकरणे प्रकरणविभागेन सिद्धान्त उक्तः। तद्देवाप्यर्थःअस्त्र। प्रकरणस्य उपसदां सौम्यचर्वादीनां च प्रकरणस्य न विभागः। प्रकरणस्य अविभागे सति सौम्यादयः उपसदङ्गं स्यात् उपसत्संयोगस्य श्रुतत्वात्। हि यस्मात् उभयं उपसदङ्गत्वं कालविधिश्चेत्युभयं विप्रतिषिद्धं विरुद्धमेव। तस्मादुपसदङ्गत्वम्।

अपि वा कालमात्रं स्याददर्शनाद् विशेषस्य। ६॥

अपि वा इति शब्देन पूर्वपक्षनिरासं द्योतयित्वा सिद्धान्तमाह। न इमानि हवींषि उपसदङ्गत्वेन विहितानि, किन्तु तदनुष्ठानस्य उपसदां पुरस्तात् अन्तरा उपरिष्टादिति कालमात्रमुक्तं स्यात्। इमानि सौम्यादीनि हवींषु अष्टमादिदशमान्तानि त्रीणि हवींषि उपसत्सु तदानीं कर्तव्यानि इति वचनोच्यते। इतरस्मात् कालाभिधानात् एषां हविषां विशेषस्य भेदकस्य धर्मस्य अवर्णनात् दर्शनस्य अभावात्। इतरत् कालाभिधानं तु 'आग्निमारुतादूर्ध्वं अनुयाजैश्चरन्ति' इत्यादि। तस्मात् कर्मान्तरे कालयोग उक्तः इति सिद्धान्तः। के.

● प्रकरणाम्नानस्य एतदेव प्रयोजनं कथं नाम तदङ्गत्वं विज्ञायेत इति। यदि अप्रकरणाधीतस्यापि कर्माङ्गत्वं स्यात्, ततः प्रकरणाम्नानमनर्थकं भवेत्। भा. ३।४।८।२०.

● प्रकरणक्रमाधिकरणम्। प्रकरणक्रमयोर्विरोधे प्रकरणं बलवत्। ३।३।७।१४. 'बलाबलाधिकरणम्' इति विन्दौ द्रष्टव्यम्।

● प्रकरणगम्यां पवमानहविषां आधानार्थतां बाधित्वा 'यदाहवनीये जुह्वति' इति वाक्येन अन्यार्थता विज्ञायते। भा. ३।१।१२।२२ पृ. ७३७.

● प्रकरणपूरितानामपि क्रमेण पुनस्तद्धर्मप्राप्तिर्भवति। भा. ३।३।७।१४ पृ. ८३३.

* प्रकरणबाधः । यत्र स्ववाक्ये एव विधीयमानस्यैव किमंशपूरणं पदान्तरेणोपनीयते, यथा 'शुनं हि स्वः स्वपंती' इति प्रतिपद् विधीयमानेव वाक्येन द्वियजमानेन क्रतुना संबध्यते, तत्र प्रकरणबाधो युक्तः । यथा च द्वादशोपसत्त्वस्य विधीयमानस्यैव किमंशपूरणं अहीनशब्दः करोति । शा. १०।२।१।३७.

* प्रकरणलभ्येऽर्थे शब्दव्यापाराभावः । सोम. ६।४।६ पृ. ४८४.

* प्रकरणवशेन तदुपकारिमात्रे धर्मा विधीयन्ते न साक्षादङ्गेष्वेव वेयव्येषु इति 'आरादपीति चेत्, तद्वाक्यं हि तदर्थत्वात्' इत्यत्र वक्ष्यति । वा. ३।१।१०।१८ पृ.७२९.

* प्रकरणविनियोगाधिकरणम् । ३।३।७।११, मीको. पृ. २६६४ 'प्रकरणाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* 'प्रकरणविशेषादसंयुक्तं प्रधानस्य' (३।७।१।१-५) इत्यधिकरणे प्रकरणवशेन बर्हिर्धर्माणां अङ्गप्रधानार्थत्वं व्यवस्थापयिष्यते । क्रु. ३।२।१०।२०.

॥ प्रकरणविशेषादसंयुक्तं प्रधानस्य । ३।७।१।१ ॥

दर्शपूर्णमासयोः बर्हिः छेदनसंभरणाद्यो बर्हिर्धर्माश्च, वेदिः हविरासादनादयो वेदिधर्माश्च आम्नाताः । ते सर्वे प्रधानस्यैव नाङ्गानां प्रयाजादीनाम् । यदि धर्मजातं अङ्गार्थत्वेन प्रधानार्थत्वेन वा विशिष्य असंयुक्तं न संयुक्तम् । प्रकरणविशेषात् प्रधानानामेव हि प्रकरणम्, नाङ्गानामिति । इति पूर्वः पक्षः ।

सर्वेषां वा, शेषत्वस्यातत्प्रयुक्तत्वात् । २ ॥

पूर्वपक्षस्य निरासार्थो वाशब्दः । न प्रधानमात्रस्य ते धर्माः, किन्तु सर्वेषां अङ्गानां प्रधानानां च स्युः । बर्हिरादीनां यत् शेषत्वम्, तस्य अतत्प्रयुक्तत्वात् । तच्छब्देन पूर्वसूत्रोक्तप्रकरणविशेषस्य परामर्शः । शेषत्वस्य प्रकरणविशेषप्रयुक्तत्वाभावात् । 'वेद्यां हवींष्यासादयति' इत्यादिवाक्यप्रयुक्तं हि शेषत्वम् । तस्मात् अङ्गेषु प्रधानेषु च ते धर्माः कर्तव्याः इति सिद्धान्तः ।

आरादपीति चेत् । ३ ॥

पिण्डपितृयज्ञीयं बर्हिरपि आरात् आराच्छिष्टधर्मवत् स्यात् दर्शपूर्णमासगतबर्हिर्धर्मयुक्तं स्यात् इति । इति चेत् पूर्वपक्षी ब्रूयात् ।

न, तद्वाक्यं हि, तदर्थत्वात् । ४ ॥

न पिण्डपितृयज्ञस्य बर्हिः दर्शपूर्णमासबर्हिर्धर्मैः धर्मकम् । हि यस्मात्, धर्मजातस्य यद् वाक्यम्, तत् प्रधानवाक्यैकवाक्यभूतं वाक्यम् । तथा च प्रकरणसहकृतं धर्मवाक्यं विधायकम् । पिण्डपितृयज्ञश्च न दर्शप्रकरणगतः । तस्मात् पिण्डपितृयज्ञे न दर्शधर्मप्राप्तिः । तदर्थत्वात् इति ल्यब्लोपे पञ्चमी । तदर्थत्वं प्रधानार्थत्वमालोच्य धर्मजातस्य शेषत्वात् । बर्हिर्वेदितद्धर्माणां तु यत् वाक्यम्, तत् दर्शपूर्णमासाभ्यां सह एकम् । तेन वाक्येन सह एकवाक्यता गतमित्यर्थः । तेन यत् तदेकवाक्यान्तर्गतं बर्हिः, तस्यैव दर्शबर्हिषः तद्धर्मप्राप्तिः, न तु भिन्नवाक्यगतस्य पिण्डपितृयज्ञगतस्य बर्हिषः ।

लिङ्गदर्शनाच्च । ५ ॥

'स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवति' इति अभिघारणस्य आज्यभागार्थत्वं दर्शयति । तदेतत् लिङ्गदर्शनं धर्माणां अङ्गप्रधानार्थतां बोधयति । चकारः 'सर्वेषां शेषः' इति सिद्धान्तप्रतिज्ञानुकर्षणार्थः । तस्मात् अङ्गप्रधानोभयार्थाः धर्माः । के.

॥ प्रकरणविशेषादसंयुक्तं प्रधानस्य । ३।७।१।१ ॥

स्तो दर्शपूर्णमासौ । तत्र सन्ति बर्हिर्धर्मा वेदिधर्माश्च । तत्र संदेहः किं बर्हिरादयो बर्हिर्धर्माश्च प्रधानस्य उताङ्गप्रधानानामिति । वाक्यप्रकरणविशेषाविशेषद्वारेण समानासमानविधानत्वमेव धर्माणां निरूप्यते । न तु वाक्येन प्रकरणविशेषाविशेषत्वेन, तयोः पूर्वमेव निरूपितत्वात् । अत्रायं पूर्वपक्षिणोऽभिसंधिः । यद्यपि 'बर्हिषि हवींष्यासादयति, बर्हिर्लुनाति, वेदिं करोति' इति वाक्ये विशेषेण च बर्हिषो हविरासादनसंबन्धः तद्धर्माणां च वेदिबर्हिःसंबन्धः प्रतीयते, तथापि हविरासादनमात्रकथनेन बर्हिर्लवनविधेरानर्थक्यात् लौकिक-

बर्हिषश्च प्रकरणात् अवश्यं अपूर्वसाधनतावधारितः संबन्धो वक्तव्यः । न चापूर्वसाधनता प्रकरणमन्तरेण लभ्यते । प्रकरणं च नाङ्गानाम्, किन्तु प्रधानस्यैवेति प्रधानमात्रसंबन्ध एव बर्हिषस्तद्धर्माणाम् । तेन यद्यपि प्रकरणं न विशेषकं कर्तुग्राहकमेव, तथाप्यधिकारविध्याकाङ्क्षा खलु प्रकरणम् । ग्राहकत्वं च तस्यैतदेव यदाकाङ्क्षावतोऽधिकारविधेरेव ग्राहकत्वम् । स च प्रधानोपकारार्थमेव संनिधिश्रुतान् धर्माननुगृह्णातीति मंवत्यर्थाद्विशेषणफलमिति । अतो भवति ग्राहकत्वलक्षणवशादेव वाक्यस्य प्रधानगोचरमेव विनियोजकत्वमिति । तदुक्तम् ‘ प्रकरणविशेषात् ’ इति । न च वेद्यादीनां देवतारूपत्वात्, देवतस्य च प्रयोगाङ्गत्वेनाङ्गप्रधानार्थत्वात्, वेद्यादीनामङ्गप्रधानार्थत्वमेवेति वक्तव्यम् । यतः ‘ दर्शपूर्णमासाभ्यां यजेत ’ ‘ प्राचीनप्रवणे वैश्वदेवेन यजेत ’ इति यागप्रधाने ( ? ) वैश्वदेवस्यैव करणत्वेन देशसंबन्धविधानात् तद्विशेष एव न्याय्यः । वेद्यादीनां तु प्रकरणनियतेन वाक्येन प्रधानमात्रार्थत्वावगमात् प्रधानार्थत्वमेवेति नानुपपन्नम् । नापि द्वादशोपसत्त्ववदविरोधिसंयोगोऽस्ति सर्वेषामेवेति वेद्यादीनां प्रकरणे समावेशात् । तेनोपसद्द्वादशत्ववद्वाक्येन विरोध्यसंयुक्तं बर्हिरादि प्रकरणेन प्रधानमात्रस्यैवेति । एवं प्राप्ते, अभिधीयते ।

सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् । २ ॥

अयमभिप्रायः, भवेदेवं यद्यत्र प्रकरणं विनियोजकं भवेत् । किं तर्हि ? वाक्यमेव । असंयुक्तं हि प्रकरणेन विनियुज्यतेत्युक्तम् । [illegible] चाङ्गप्रधानसाधारणहविरासादनसंयोगेनैव वेदिबर्हिषी श्रूयेते । तद्धर्माश्च वेदिबर्हिर्मात्रसंबन्धेन । अतः कथं प्रकरणवशेन प्रधानमात्रशेषत्वं वेदिबर्हिषोस्तद्धर्माणां च । ननु एवं सति प्रकरणस्य वाक्यार्थावगमसापेक्षत्वे वाक्यमन्यत्रापि प्रसज्येत । तत्रानर्थक्यभिया मा नाम लौकिकं विदधातु, पिण्डपितृयज्ञीये तु दृष्टस्ये हविरासादने वेदिबर्हिर्विधित्वम् । नैतदेवम् । स्यादेवं यदि स्वतन्त्रमत्र वाक्यं विनियोजकं भवेत् । किन्तु दर्शपूर्णमासाधिकारविधिसंनिधिसमाम्नानवशेन तदेकवाक्यतापन्नम् । तेन दर्शपूर्णमासान्तर्गतस्यैव वेदिबर्हिर्विधेः साङ्गसंबन्धः । उच्यते । स्यादेतदेवं यदि वेदिबर्हिषोस्तद्धर्माणां न साक्षात्तद्गतवेदिबर्हिषोः स्वतन्त्रं स्तरणादिधर्मविधिः । न च पिण्डपितृयज्ञहविर्दर्शपूर्णमासवाक्यान्तर्गतम्, येन तत्रापि धर्मविधिर्भवेत् । तथा च सूत्रम् ‘ न तद्वाक्यं हि तदर्थत्वात् ’ ( ३।७।३।४ ) इति । दर्शपूर्णमासप्रकरणगृहीतत्वेन तदेकवाक्यत्वं वक्तव्यम् । प्रकरणं च प्रधानस्यैवेति प्रधानसंबन्धः प्राप्नोति, कथमङ्गसंबन्धः ? उच्यते । स्यादेवं यदि बर्हिषस्तद्धर्माणां च साक्षात्प्रधानसंबन्धो भवेत् । किन्तु प्रधानीयहविरासादनद्वारेण वेदिबर्हिषोस्तद्धर्माणां च प्रधानीयवेदिबर्हिर्द्वारेण प्रधानसंबन्धो वक्तव्यः । प्रधानीयत्वं च द्वेधा भवति, प्रधानार्थत्वेन प्रधानोपकारकत्वेन वा । तत्र यदि प्रधानार्थहविरासादनादिसंबन्धः पुरस्क्रियते, तदा वाक्यस्यातिसंकोचो भवेत् । प्रधानोपकारकत्वमात्राभ्युपगमे तु न वाक्यविरोधो नापि प्रकरणविरोधः । संबन्धत्वं च उपकारकत्वमेव धर्मसंबन्धे प्रयोजकम्, न तु तादर्थ्यम् । तदुक्तम् ‘ अनुपकारिणि हि स्थितं नोपकरोति, न च तदर्थम् ’ (‘ नातदर्थे ’ इति वार्तिकपाठः ) ( वा. पृ. १०७६ ) इति । तेनायं वाक्यार्थः, यद्दर्शपूर्णमासोपकारकं हविः तद्वेद्यां बर्हिषि समासादयति, या दर्शपूर्णमासोपकारिका वेदिस्तां खनति, यद्दर्शपूर्णमासोपकारकं बर्हिस्तल्लुनातीति । दर्शपूर्णमासोपकारकत्वं च यथा प्रधानहविषामेवमङ्गहविषामप्यविशिष्टम् । प्रधानापूर्वगृहीतानामपि धर्माणामङ्गप्रधानार्थत्वं युक्तमेवेति सिद्धम् ।

प्रयोजनम्— पक्षोक्तम् । सूत्रे [illegible] सर्वेषामेवाङ्गप्रधानहविरासादनादीनां वेदिबर्हिरादीनां ( च ) शेषभूताः, शेषत्वस्य प्रकरणाप्रयुक्तत्वादिति । तौता.

* यत्र पुनः संकीर्तनं नास्ति, तत्र सर्वं प्रधानार्थमेव अध्यवसातव्यम् । तत्र तु किं केवलस्य अथ साङ्गस्य इत्यत्र विवेकं ‘ प्रकरणविशेषाद्० ’ इत्यारभ्य वक्ष्यति । वा. ३।१।१४।२४ पृ. ७४२.

[illegible] प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् । ३।६।२।१॥

अनारभ्य किञ्चित् सामिधेनीनां परिमाणमाम्नातम् ‘ सप्तदश सामिधेनीरनुब्रूयात् ’ इति । तत्र संदेहः किमे-

दश् प्रकृतौ निविशते उत विकृताविति। इदानीमनारभ्य श्रुताना प्रकृतिगामित्वमुच्यते। अत्रायं पूर्वपक्षः। यद्यपि पाञ्चदश्यं प्रकरणे श्रुतं तथाप्यनारभ्य श्रुतस्यापि साप्तदश्यस्य पूर्वाधिकरणोक्तन्यायेन प्रकृत्यर्थत्वात् सामिधेन्यनुवचनादेककार्यत्वेन साप्तदश्यपाञ्चदश्ययोर्विकल्प एवेति। ननु अनारभ्यवादेन साप्तदश्यस्य सामिधेन्यनुवचनद्वारेण क्रतुसंबन्धित्वमार्थसंबन्धोऽवगम्यते। प्रकरणेन च क्रतुविशेषसंबन्धः। तेन विशेषेण सामान्यस्य बाधात् कुतो विकल्पः? स्यादेवं यदि वाक्यमेव क्रतुविशेषसंबन्धं प्रतिपादयेत्। न त्वेतदस्ति, द्वयोरेव वाक्ययोस्तुल्यरूपत्वात्। किन्तु प्रकरणेन विशेषसंबन्धो वक्तव्यः। तच्च [illegible]वाद्दुर्बलम्। तेन यावत्प्रकरणेन विशेषसंबन्धः क्रियते, तावद्वाक्यद्वयेन तुल्यबलेन साप्तदश्यपाञ्चदश्ययोः प्रकृतौ विकल्पः प्रवर्तत इति। तदुक्तम् 'तत्र नाम विशेषेण सामान्यस्य निराक्रिया। प्रत्यक्षो यत्र संबन्धो विशेषेण प्रतीयते॥' इति (वा. पृ. १०१०)। तस्मात् साप्तदश्यमपि प्रकृत्यर्थमेवेति। एवं प्राप्ते, अभिधीयते। भवेदेवं यद्यारभ्यश्रुतानारभ्यश्रुतवाक्ययोः तुल्यरूपत्वं भवेत्। तथाहि, पाञ्चदश्यं प्रकरणेन लब्धापूर्वसंबन्धं वाक्येन विधीयमानमपूर्वीयसामिधेनीसंबन्धार्थमात्रम् अपूर्वसामान्यलक्षणया अपूर्वीयसामिधेनीसंबन्धेनैव विधीयते। साप्तदश्यं त्वनारभ्यश्रुतं प्रथममलब्धापूर्वसंबन्धेनैव वाक्येन विधीयते। अतश्च पारिशेष्यादानर्थक्यपरिहाराय सामिधेन्यभिधायित्वेनापूर्वेण संबध्यते। न सामिधेनीस्वरूपसंबन्धविशेषेऽपि प्रकरणश्रुतं वाक्यम्। तत्तु अपूर्वीयसामिधेनीसंबन्धेनैव पाञ्चदश्यं विदधाति। अनारभ्य श्रुतं तु सामिधेनीस्वरूपसंबन्धेनैव साप्तदश्यं विदधाति। पश्चात्तु तदनुसारेण अपूर्वसंबन्ध इति। अतः प्रथमं पाञ्चदश्यावरुद्धे क्रतौ साप्तदश्यस्यानवकाशात् कुतो विकल्पः? तदुक्तम् 'तुल्यो यद्यपि संबन्धः सामिधेनीः प्रतीयते। तथापि क्रतुसंबन्धवैषम्यान्न विकल्प्यते॥' ('विकल्पते' इति वार्तिकपाठः) इति (वा. पृ. १०१०)। ननु प्रकृतावनवकाशस्य साप्तदश्यस्य का तर्हि गतिः? विकृताविति चेत्, न, तत्रापि प्रकृतिवदतिदेशप्राप्तस्य सामिधेन्यनुवचनस्य पाञ्चदश्यावरुद्धत्वेन साप्तदश्यनिवेशासंभवात्। तेन 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन प्रकृतावेव विकल्पेनास्य निवेशोऽभ्युपेतव्य इति। उच्यते। स्यादेवं यदि मित्रविन्दाप्रभृतिष्वपि विकृतिषु साप्तदश्यस्यावकाशो न भवेत्। तासु खलु प्रकरणश्रुतमेव सामिधेनीसाप्तदश्यमस्ति। अतः तेनातिदिष्टस्य पाञ्चदश्यस्य बाधितत्वात् भवति साप्तदश्यस्यावकाश इति। न च प्रकरणश्रुतेनैव साप्तदश्यविधानादस्य वैफल्यमिति वाच्यम्। उत्पत्तिविनियोगाभ्यां भेदेनार्थवत्वात्। अनारभ्य श्रुतेन हि वाक्येन साप्तदश्यं सामिधेनीसंबन्धेनोत्पादितम्। प्रकरणश्रुतवाक्येन च क्रतुविशेषसंबन्धेन विनियुज्यत इति किमनुपपन्नम्?।

प्रयोजनम्— यथोक्तम्। सूत्रं तु प्रकरणविशेषात्पाञ्चदश्यस्य क्रतुविशेषसंबन्धाविशेषात् तद्विरोधिसाप्तदश्य विकृतौ मित्रविन्दाप्रभृतिषु भवेदिति। चौता.

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात्।
३।६।२।९॥

सिद्धान्तसूत्रम्। 'सप्तदश सामिधेनीरनुब्रूयात्' इति अनारभ्य आम्नातम्। तत् किं प्रकृतौ, उत विकृतौ इति संदेहे पूर्वेण पर्णमयीन्यायेन प्रकृतौ साप्तदश्यस्य निवेशः, परन्तु प्रकृतौ पठितेन पाञ्चदश्येन विकल्पः इति प्राप्ते पूर्वपक्षे सिद्धान्तः। प्रकरणे दर्शपूर्णमासप्रकरणे यो विशेषः 'पञ्चदश सामिधेनीरन्वाह' इति तस्मात् साप्तदश्यस्य प्रकृतौ निवेशासंभवात् पाञ्चदश्येन विरोधि यत् साप्तदश्यम्, तत् विकृतौ स्यात्। कुमारिला पूर्वपक्षसूत्रकः। 'विकृतौ एवंजातीयको विधिः स्यात्' इति भाष्यात्तु 'विकृतौ विधिः स्यात्' इति सूत्रे पाठः निष्पद्यते। तत्र चेत्यमर्थः, प्रकरणविशेषात् कारणात् साप्तदश्यस्य प्रकृतौ निवेशासंभवेन साप्तदश्यस्य अनारभ्यविधिः विकृतौ एव स्यात् इति। ननु तर्हि 'विकृतौ विधिः स्यात्' इति निश्चितः पाठः कुतो न स्वीक्रियते? उच्यते। भाष्येऽपि 'एवंजातीयकं विरोधि स्यात्' इत्यपि पाठः टिप्पण्यां प्रदर्शितः, स च ग्रन्थान्तरसंमतः। अतो न निश्चयः। के.

* 'प्रकरणविशेषात्तु' इति न्यायस्य स्वरूपम् 'सामिधेनीमानसयोगेन श्रुतस्य साप्तदश्यस्य अक्रतुसंयोगत्वात् पाञ्चदश्येन प्रकरणस्थक्रतुसंयोगेन बाधो युक्तः' इति । सु. पृ. ४१४, * अनाम्नातत्वात् चित्रत्वस्त्रीत्वयोरेव 'प्रकरणविशेषात्तु०' इति वार्तिककृन्यायेन . बाधः स्यात् इत्याशङ्का । पृ. ४१४. * क्रीतराजकभोज्यान्नत्ववचन यद्यपि अथर्ववेदेऽस्ति ( तस्माद्दीक्षितस्य विक्रीतस्य क्रीतराजकस्य भोज्य भवति-सु पृ. १४८ ) तथापि तस्य आहवनीयस्थशब्दयज्ञकर्मोपगतत्वभानात् तदधिकृतत्रयीप्रतिपादिताग्नीषोमीयसंस्थावधिभोजनप्रतिषेधविरोधात् 'प्रकरणविशेषात्तु०' इत्यनेन न्यायेन अधिकृतानधिकृतत्वकालविशेषाभिप्रायेण स्मृतिपक्षनिक्षेपात् भाष्यकारेण उदाह्रियते । वा. १।३।२।१ पृ. १८१. * प्रकरणविशेषात् यूपमच्छेष्यतः ( यूप अच्छ एष्यन. यूप आप्तु गमिष्यतः ) स्रौवाहुतिर्विधीयते इति गम्यते । भा. १०।१।६।११. * 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ।' ( ३।४।५।१५ ) इति अभ्याधेयस्य द्रव्यपरिसंस्कारत्वात् श्रुतिवाक्याभ्यां अभिप्रवृद्धेः द्रव्यधर्मान्यर्थत्वमवधार्यते । ( इदं पूर्वपक्षे ) । वा. ३।६।४।११, * 'प्रकरण० द्रव्यवत्' इति हि ज्योतिष्टोमप्रकरणगतब्राह्मणगाथ्वलक्षित तदपूर्वसाधन यजमानसंस्कारत्वात् मधुमापणनियमापूर्वस्य फलप्रतिग्रहणयोग्यत्वाभावार्थे तद्विशेषेण निरूप्यते । १।२।८।२७ पृ. १८४, * यदि तावत् ( शरीरबीजाप्रयत्नः ) पुरुषार्थो अपि इत्यभिप्राय, स यजमानदशो प्रकरणाम्नानेन क्रत्वर्थत्वादयुक्त. । उक्तं हि 'प्रकरण० द्रव्यवत्' इत्यादिषु । ३।७।१९।२९ पृ. ११०२. * वत्से विधीयमानं क्षौमं प्रकरणात् आधानसंबन्धिनः पुरुषस्य वस्त्रं भविष्यति । यथा अङ्गम्यमानसन्नरचनं 'प्रकरण० द्रव्यवत्' इति न्यायेन प्रकरणे एव व्यवतिष्ठते । रत्न. ६।२।५।२२ वर्णक २. * सिद्धान्तवादी नैव मया ( अनृतवदननिषेधस्य ) केवलपुरुषार्थत्वमङ्गीकृतम्, किं तर्हि ? 'प्रकरण० द्रव्यवत्' इत्यनेन क्रतुयुक्तपुरुषधर्म. अभिक्रमणवत् विज्ञायते, न सार्वत्रिकः ( इति ) । वा. ३।४।४।११ पृ. १०९.

* प्रकरणविहितं सामिधेनीसाप्तदश्यं पशुमित्रविन्दाऽध्वरकल्पाऽऽदौ एव अतिदेशप्राप्तपाञ्चदश्यबाधेन निविशते । वा. ३।६।२।९ पृ. १०३१.

■ प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् । ४।४।१।१ ॥

अनुमत्यादय इष्टयः, महद्व्रादयः पशवः, पवित्रादयः सोमाः, वल्मीकवपाया होमः इत्यादयो दर्विहोमाः इति यागरूपा धर्माः पठिताः । 'पष्ठौही दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयति, अभिषिच्यते' इति अयागरूपाश्च धर्माः पठिताः । तेषां सर्वेषां संनिधौ 'राजसूयेन स्वाराज्यकामो यजेत' इति श्रूयते । स एव राजसूयः यागरूपाणामयागरूपाणां च धर्माणां समुदायरूपः इति ज्ञायते । अत्र राजसूयशब्दः यागायागसमुदायस्य सर्वस्य वाचकः, उत केषांचिदेव वाचकः केषांचिन्नेति विचारे पूर्वपक्षयति । प्रकरणे राजसूयप्रकरणे शब्दानां यागबोधकानां अयागबोधकानां च सामान्यात् समानत्वात् चोदनानां चोद्यन्ते इति चोदनाः, तासां सर्वासां चोदनानां चोदितानां यागायागरूपधर्माणां अत्र द्रव्य न अङ्गत्वम्, किन्तु प्रधानत्वमेव । तस्मात् राजसूये इष्ट्यादीनां देवनादीनां च सर्वेषां प्रधानत्वमिति ।

· अपि वाऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् । २ ॥

राजसूये अनिज्याः इज्याभिन्नाः यागभिन्नाः निदेवनादयः क्रियाः, राजसूयस्य अङ्ग स्युः, न प्रधानम् । यागा एव तु सर्वे प्रधानभूताः । विदेवनादीनां ततः यागात् विशिष्टत्वात् भिन्नत्वात् अयागरूपत्वात् । इति सिद्धान्तसूत्रमिदम् । के.

* 'प्रकरणशब्द०' ४।४।१।१ । तथा 'राजसूयेन' इत्यत्र नाम यागायागविषयत्वेन उपन्यस्यमान प्रकृतयागप्रसिद्धेन यज्ञिना स्वविषय नीयते । वा. २।२।३।३ पृ. ४७६ । यज्ञिना नामार्थविशेषणे 'प्रकरणशब्द०' इति न्यायमुदाहरति— तथेति । 'राजसूयेन स्वाराज्यकामो यजेत' इति फलविधिपरे वाक्ये यजेः प्रकृतेष्टिपशुसोमयागमात्रानुवादित्वावधारणात् प्रसिद्धार्थेन यज्ञिना नाम नियोज्यते इत्यर्थः । सु. पृ. ७२५.

* प्रकरणसंबन्धकल्पना फलकल्पनायाः ज्यायसी। था. ३।३।१।१८.

* प्रकरणसमाख्ययोर्विरोधे पौरोडाशिकसमाख्यातत्वाज्ञाताम्नातानां मन्त्राणां प्रकरणात् सानाय्योपांशुयाजार्थत्वं इत्युदाहरणम्। (बा. पृ. ८३७)। शेष्यनेकत्वे इदम्। शेषानेकत्वे तु 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इत्येतदेव ज्योतिष्टोमं प्रति उदाहरणम्। तत्र हि समाख्यया होतृकर्तृकं प्रैषानुवचनं प्राप्नोति, प्रकरणात्तु मैत्रावरुणकर्तृकं निर्णीयते। प्रैषानुवचनस्वरूपमेव तु पूर्वेणोदाहरणमिति भेदः। (बा. पृ. ८४१)। शा. ३।३।७।१४.

* प्रकरणसामान्यं प्रकरणविशेषेण बाध्यते। भा. १०।१।६।११.

* प्रकरणस्थानयोर्विरोधे उदाहरणम्। ३।३।७।१४. 'सन्दंशाधिकरणम्' इति विन्दौ द्रष्टव्यम्।

※ प्रकल्प्यापवादमुत्सर्गोऽभिनिविशते इति न्यायः। संग्रहः. * 'प्रकल्प्य चापवादविधिमुत्सर्गोऽभिनिविशते' इति न्यायेन सामान्यशास्त्रस्य विशेषशास्त्रविषयातिरिक्तविषयत्वम्। सना. घ. प्र. प्र. प्र पृ. २९७.

* प्रकारो नाम सामान्यस्य भेदको विशेषः। मीन्या.

* प्रकारविशेष्ययोरेव शाब्दबोधसंसर्गस्य उभयसमभिव्याहारगम्यत्वात् संसर्गः संसर्गमर्यादया लभ्यः। इति नैयायिकाः। मणि. पृ. १७२.

* यदि परमार्थत एव भेदः कश्चिदात्मा प्रकाशाश्रयन्यायेन (प्रकाशः तदाश्रयश्च सविता अभिन्नो एव, तथापि अंशांशिभावेन भिन्नावपि भवतः। तद्वत्।) परस्य आत्मनः एकदेशभूतः अभ्युपगम्येत ततः पारमार्थिकस्य बन्धस्य निरसनं प्रशक्यत्वं स्यात्। शां. भा. ३।२।६।२९ भाष्.

* प्रकाशितस्य प्रकाशान्तरेण न प्रयोजनमस्ति। टुप्. ९।४।१।१ पृ. १७६६.

* 'प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु। धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः॥' भा. ७।१।१।१२.

* प्रकृतगामित्वं शब्दस्य न्याय्यम्। भा. १२।१।१।४.

* प्रकृतप्रत्ययः कल्प्यात् बलवान्। टुप्. ६।५।१।२.

* प्रकृतिः अग्नीषोमदेवताकस्य कर्मणः अग्नीषोमीयः पुरोडाशः। भा. ५।४।८।२५.

[ इत आरभ्य 'प्रकृत्या' इति पददर्शनात् प्राक् 'प्रकृतिः' इति पदं प्रतिलघुसिद्धान्तं अधिकृतं वेदितव्यम्। ] * अग्नीषोमीयस्य पशोः दर्शपूर्णमासौ। भा. ८।१।५।१२। तथापि सानाय्यम्। ८।२।२।१०–१४। तथापि पय एव, न दधि। ८।२।३।१५–१८, * अध्वरकल्पासस्य आमावैष्णवादेः अग्नीषोमीयः पुरोडाशः। ८।३।१।१–२, * अध्वरकल्पासस्य बार्हस्पत्यचरोः आग्नेयः पुरोडाशः। ५।१।१०।१७–१८, * अध्वरकल्पासस्य सारस्वताज्यस्य उपांशुयाजः। ५।१।१०।१७–१८, * अभिजिदादिसोमानां ज्योतिष्टोमः (अग्निष्टोमः सोमः)। ८।१।५।१६, * अहर्गणानां द्विरात्रादीनां द्वादशाहः। ८।१।१०।१७, * अहीनानां अहीनात्मको द्वादशाहः। ८।२।५।२५–२९, * आमेयस्य पयस. सानाय्यगतं पयः। ८।१।१७।३२–३४, * आमिक्षाया. पय एव, न दधि नोभयम्। ८।२।४।११–२४, * आमिक्षाणां वैश्वदेव्यामिक्षा। ७।३।१०।२६–२७, * इषोः श्येनः। ७।१।२।१३–१६, * इष्टीनां दर्शपूर्णमासौ। ८।१।४।११, * उत्तरसाहस्राणां प्रथमः साहस्र., उत्तरसाधस्काणां च प्रथमः साद्यस्क.। ८।१।१२।१९, * उद्भिदादीनां अग्निष्टोमः। ८।१।५।१६, * एकदेवताकस्य औषधद्रव्यकयागस्य आग्नेयः पुरोडाशः। ८।१।१६।२७–३१, * ऐकादशिनानां पशूनां सवनीय. पशु.। ८।१।७।१४, * ऐन्द्रस्य एकादशकपालस्य आग्नेयः पुरोडाश. न तु सानाय्यम्, इति सामान्यस्य देवतासामान्यात् अन्तरङ्गत्वात्। ८।१।१७।३२–३४, * ऐन्द्राग्नादीष्टीनां दर्शपूर्णमासौ। ८।१।४।११, * कुण्डपायिनामयनस्य सत्रात्मको द्वादशाहः। ८।२।६।३०–३२, * कृष्णलचरोः आग्नेयः पुरोडाशः। ८।१।१८।३५–३६, * गवामयनस्य सत्रा-

समको द्वादशाहः । ८।२।५।२४–२८, * गवामयनगतज्योतिरादेः पञ्चाहनाम्कपठितो ज्योतिरादिः । ७।४।३। १३–२०, * गवामयनगतपृष्ठ्यषडहस्य द्वादशाहगतः पृष्ठ्यः षडहः । १०।६।३।४–५, * चित्रायागीयमधूदकयोः श्रपणाभावः । ८।१।१९।४०–४३, * जनकसप्तरात्रस्य द्वादशाहिकः षडहः । ८।३।२। १–५, * न उपशयस्य यूपः । ७।२।११।३२–३४, * न गवामयनगतप्रायणीयस्य द्वादशाहगतः प्रायणीयः । ७।३।२।५, * न चयनेष्टकासाध्यस्य निर्मन्थ्यस्य अग्नीषोमीयपशुगतनिर्मन्थ्यः । ७।३।७।१८, * न यज्ञसूक्तपूर्वनिर्दिष्टगततैष्ठ्यनस्य आतिथ्यागततैष्ठ्यनः । ७।३।६।१७, * पञ्चदशरात्रस्य सप्तात्मको द्वादशाहः । ८।२।६।३०–३२, * पशूनां अग्नीषोमीयः । ८।१। ९।११, * प्राजापत्यपशूनां ऐकादशिनाः पशवः । ८।१।८।१५, * मासाग्निहोत्रस्य नित्याग्निहोत्रम् । ७।३।१।१–४. * मूलभूता अग्निहोत्रहोमः, दर्शपूर्णमासौ, अग्निष्टोमः सोमश्च । वि. ८।१।२ वर्णके २. * यत्र समग्राङ्गोपदेशः, यथा दर्शपूर्णमासादिः । विकृतिः यतः अङ्गानि गृह्णाति सा । मीन्या. * धवलप्रवासगतस्य अवभृथस्य सौमिकोऽवभृथः । भा. ७।३।४।१२–१५, * वरुणप्रघासगतानां पञ्चसंचराणां वैश्वदेवपर्वगतपञ्चसंचराणि । ७।१।३। ७–२१, * वाजिनस्य सान्नाय्यम्, न तु सोमः । ८।२। १।१–९, * विश्वजित्सर्वपृष्ठाना षडहगतपृष्ठानि । ७।३।३। ७–१२, * वैश्वदेव्यामिक्षायाः सान्नाय्यगतं पयः । ८।२। ४।११–१४, * शतोक्थ्यादिसंस्थागणानां द्वादशाहः । ८।३।४।८–९, * संवत्सरसत्राणां गवामयनम् । ८।१। ११।१८, * सवनीयस्य पशोः अग्नीषोमीयः पशुः । ८।१। ६।१३, * साकमेधगतस्य एककपालस्य वरुणप्रघासगत एककपालः । ७।१।५।२३, * साकमेधगतयोः ऐन्द्राग्नैककपालयोः वरुणप्रघासगतौ ऐन्द्राग्नैककपालौ । ७।३।४।२२, * सुराग्रहाणां दार्शपौर्णमासिकः पुरोडाशः । ८।२। १।१–९, * सौर्यचरौ आग्नेयः पुरोडाशः । ८।१।१६। २७–३१ । आग्नेयस्य विकल्पेन । ८।१।१५।२६, * प्रकृतिः स्वस्थानेऽपरूपाभिधाना कर्मान्तराणां गवामयनगतस्वरसाम्नैककपाल्यामिक्षाः । ७।३।१०।२७. * प्रकृत्या विकृतेः प्रधानप्रसङ्गो यथा दर्शश्राद्धेन नित्यश्राद्धस्य । बाल. पृ. १४९. * प्रकृत्या हि विकृतिस्तुल्यशब्दा भवति (यजेत जुहुयात् आसीरन् उपेयुः इति) । भा. ८।२।५।२५. * प्रकृतेः अवान्तरप्रकरणं नास्त्येव, प्रकृत्यङ्गस्य तु भवति यथा प्रयाजानां अभिक्रमणे । बाल. पृ. ११. * प्रकृतेः दर्शश्च पूर्णमासश्च कालः । भा. १२।२।६।२०. * प्रकृतेर्धर्माणां सादृश्यविशेषेण विकृतौ अतिदेशः । ८।१।१।२.

ॐ प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यात् नह्यचोदितस्य शेषाम्नानम् । ५।२।९।१७ ॥

नक्षत्रेष्टिषु 'योऽत्र जुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्येवमादयः उपहोमाः समाम्नाताः । प्रकृतितश्च नारिष्ठहोमाः 'दश ते तनुवो यज्ञ यज्ञियाः' इत्यादयः प्राप्ताः । तत्र किं नारिष्ठहोमाः पूर्वम्, उत उपहोमाः पूर्वे कर्तव्या इति विचारे प्रथमतः सिद्धान्तमाह । विकृतौ चोदकेन प्रकृतेः सकाशात् नारिष्ठहोमानां पूर्वोक्तत्वात् उपहोमेभ्यः पूर्वं प्राप्तत्वात् अपूर्वं विकृतौ विशेषविहितं उपहोमाख्यं कर्म अन्ते नारिष्ठहोमानामन्ते स्यात् । प्रकृतेरुत्पत्तिवाक्ये अचोदितस्य अविहितस्य अनुत्पन्नस्य कर्मणः शेषाम्नानं धर्मत्वेन आम्नानं न सम्भवति । अतः उत्पत्त्यनन्तरं उपहोमस्य कर्मणः संनिधिपाठत्वात् अङ्गत्वेन ग्रहणं स्यात् । तस्मात् तत् प्राकृतेभ्यो नारिष्ठहोमेभ्यः पश्चात् स्यात् । ततश्च पूर्वं नारिष्ठहोमाः पश्चात् उपहोमाः स्युः इति सिद्धान्तः ।

मुख्यानन्तर्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वात् प्राकृतानां व्यवायः स्यात् । १८ ॥

पूर्वपक्षमाह । मुख्यानन्तर्यं वैकृतप्रधानस्य उपहोमानां च आनन्तर्यं आत्रेय आचार्यो मन्यते । तेन वैकृतप्रधानेन उपहोमानां तुल्यश्रुतित्वात् । प्रधानानन्तरमेव हि उपहोमानां पाठः प्रत्यक्षः । प्राकृतानां नारिष्ठहोमानां अशब्दत्वात् विकृतौ साक्षात् शब्देन अविहितत्वात् तेषां प्रागनुप्रवेशे वैकृतप्रधानस्य वैकृतोपहोमानां च व्यवायः व्यवधानं स्यात् । तदयुक्तम् । तस्मात्

उपहोमाः पूर्वं पश्चात् नारिष्ठहोमाः इति युक्त इति पूर्वपक्षः । याज्ञिकाश्च प्रथमेन पक्षं स्वीकुर्वन्ति ।

अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् । १९ ॥

बादरायणस्तु आचार्यः अन्ते नारिष्ठहोमान्ते उपहोमान् आह । तेषां नारिष्ठहोमानां प्रधानशब्दत्वात् प्रधानविषयकशब्दविषयत्वात् । तथा च प्रधानोत्तरं नारिष्ठहोमाः तत उपहोमाः इति सिद्धान्तः ।

तथा चान्यार्थदर्शनम् । २० ॥

नक्षत्रेष्टिषु प्रकृतिप्राप्ता नारिष्ठहोमाः पूर्वं कर्तव्याः ततः तत्तन्नक्षत्रेष्टिपठिता उपहोमाः इति सिद्धान्तं अन्यार्थः वाक्यशेषोऽपि दर्शयति ' अध्वरस्य पूर्वमथाग्नेः उपाधि होतव्यं कर्म यदाग्निकम् ' इति । अग्निचयने यद् दीक्षाऽऽहुतयः अध्वरस्य सोमस्य कर्मभूताः पूर्वं कर्तव्याः, अथ अग्नेः सम्बन्धिन्यः ' आकूतिमग्निं प्रयुज स्वाहा ' इत्यादयः कर्तव्याः । यत् आग्निकं अग्निसम्बन्धि कर्म तत् उपाधि औपाधिकं अग्निचयने निमित्ते सति क्रियते इति वाक्यशेषार्थः । अत्र पूर्वं समाम्नातस्य पूर्वमनुष्ठानमित्युक्तम् । तथा च नक्षत्रेष्टिषु चोदकप्राप्तत्वात् पूर्वपठितमिव नारिष्ठहोमात्मकं कर्म पूर्वं कर्तव्यमिति भाव्यते । के.

● प्रकृतेः प्रधानस्य महाप्रकरणम्, असंदंशोद्भूतिकम् ( यथा दर्शपूर्णमासादेः ), विकृतेस्तु संदंशोद्भूतिकम् । बाल. पृ. ११. ● प्रकृतेः प्रसङ्गसिद्धिर्वैकृताङ्गेन प्रकृतिविकृत्योः समानतन्त्रत्वे । कुतूहलवृत्ति । १२।२।११।३१. ● प्रकृतेः फलस्य स्वर्गादेः नियमस्य यावज्जीविकत्वादेः, कर्तुः स्वर्गकामादेः, समुदायस्य आग्नेयादिषट्कस्य विकृतौ नातिदेशः । ८।१।१३।२०–२२ ● न केवलायाः ( सुप्तिङादिप्रत्ययरहितायाः ) प्रकृतेः प्रयोगः, अपभ्रंशत्वप्रसङ्गात् । बा. २१।११२ पृ. २७९. ● प्रकृतौ ( निर्वापे ) अग्निहोत्रहवणी वचनाद्भवति । टुप्. १०।२।२७।६३. ● प्रकृतौ अङ्गानि संक्षेपेण विस्तरेण चोच्यन्ते । 'पञ्च प्रयाजान् यजति' इति संक्षेपेण । 'समिधो यजति' इत्येवमादिना विस्तरेण । तथापि ' यस्य खादिरः स्रुवो भवति' इत्येवमादि विस्तरः, ' यस्यैवंरूपाः स्रुचः ' इति संक्षेपः । भा. ३।६।१।६, ● प्रकृतौ अनारभ्याधीतानि पात्राणि निविशेरन् । ३।६।१।२. ● प्रकृतौ अनारभ्याधीतस्यापि सामिधेनीसप्तदशत्वस्य न निवेशः । ३।६।२।९. ● प्रकृतौ अनुयाजोत्तरकाले ( पिष्टलेपफलीकरणहोमौ ) दाक्षिणाग्निके दृष्टौ, तथापि अनुयाजोत्कर्षे नोत्कृष्येते । टुप्. ५।१।१५।२८. ● प्रकृतौ अभिमर्शनद्वयं ' चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्याम् ' इति । भा. ८।१।१२।२६. ● प्रकृतौ अविद्यमानमङ्गं विकृतौ नातिदेशमर्हति । वि. १०।१।४. ● प्रकृतौ उपदिष्टपदार्थविषयो भावाभावविकल्पो यथा अग्निहोत्रे दध्यधिश्रयणतदभावयोः विकल्पः ' न दधि अधिश्रयेत्, अधिश्रयेत् इत्येके ' इति बह्वृच( कौषीतकि )ब्राह्मणात् । बाल पृ. १६२, ● प्रकृतौ उपदिष्टपदार्थविषये भावविकल्पो यथा मासाग्निहोत्रप्रकृतौ नित्याग्निहोत्रे पयआदिदशद्रव्याणां विकल्पः । पृ. १६२, ● प्रकृतौ उपदिष्टपदार्थविषयः समुच्चयः ( सोम- )क्रये गवारुण्यार्दीनाम्, क्रयाणां च ज्योतिष्टोमे । दर्शपूर्णमासयोः अदोषनिर्घातार्थप्रायश्चित्तानाम् । पाण्मासु-यावनयोः च । पृ १७६. ● प्रकृतौ ऊहाभावः । वा. ३।२।११।२८. ● प्रकृतावेव बहुवचनान्तपाठमन्त्रस्य निवेशः । पात्राधिकरणम् । ९।३।५।१५–२०. ● 'प्रकृतावेव विकल्पः' इति न्यायानुगृहीतश्रुत्या भूतेषु विकल्पानिन्द्याः । न्यायनि. ४।२।७ अमू. ● प्रकृतौ औपदेशिकेन भावेन औपदेशिकस्य भावस्य बाधः यथा व्रीहियवयोः । बाल पृ. १३३, ● प्रकृतौ औपदेशिकयोः भावाभावयोः बाध्यबाधकत्वं यथा अग्निहोत्रे ' न दधि अधिश्रयेत्, अधिश्रयेदित्येके ' इति । पृ. १३१. ● प्रकृतौ औषधधर्माणां प्रथममनुष्ठेयत्वात् अध्वरकल्पायां बार्हस्पत्यचरुधर्मा एव प्रथममनुष्ठेयाः । किञ्च आग्नेयस्य प्रथमभाविनो विकृतिः बार्हस्पत्यचरुः, उपांशुयाजस्य पश्चाद्भाविनो विकृतिः सारस्वताज्यम् । अतः अन्तरङ्गत्वात् चरुधर्मा एव पूर्वभाविनः । वि. ५।१।१०. ● प्रकृतौ चेदस्ति, चोदकेनैव विकृतिं प्राप्नोति । भा. ३।६।१।२.

सू प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत । ५।१।८।१५ ॥

दर्शपूर्णमासयोः औपधधर्माः निर्वापावघातादयः पूर्वमाम्नाताः, तत आज्यस्य उत्पवनादयः । यागक्रमे पूर्वं आज्यस्य यागः, ततोऽग्नीषोमीयस्य । एवं सति किं पूर्वं आज्यस्य धर्माः कर्तव्याः, उत यथापाठं इति विचारे मुख्यक्रमानुसारेण उपांशुयाजाज्यस्य धर्माः पूर्वं कर्तव्या इति प्राप्त पूर्वपक्षं तुशब्देन निराकृत्य सिद्धान्तमाह । प्रकृतौ पूर्णमासयागे अङ्गानामनुष्ठानं यथाक्रमम्, यथा पाठक्रमः तथा प्रतीयेत, तथा अनुष्ठातव्यः, पूर्वमग्नीषोमीयपुरोडाशस्य पश्चात् उपांशुयाजाज्यस्येति । स्वशब्दत्वात् स्वः स्वीयः आङ्क्रमविषयकः शब्दः यस्य तादृशत्वात् । अङ्क्रमपाठस्य प्रत्यक्षसिद्धत्वात् इत्यर्थः । तथा च पाठक्रमेण प्रबलेन मुख्यक्रमस्य बाधः इति भावः । के.

● प्रकृतौ धर्मा यद्द्वारा कृताः, तद्द्वारैव विकृतौ नान्यद्वारा । भा. ३।८।१६।११. ● प्रकृतौ निराकाङ्क्षीभूता धर्माः विकृतीर्गमिष्यन्ति । वा. ३।२।७।१४ पृ. ८३१. ● प्रकृतौ पदार्थस्य स्मरणे सर्वत्र उपायचतुष्टयं प्रसक्तम् — ब्राह्मण-पद-मन्त्र-सूत्रोपदेशरः । टुप्. १०।१।२।१५. ● प्रकृतौ प्रत्यक्षो विध्यन्तः विकृतौ तु आनुमानिकः । नामधेय पुनर्विकृतावपि प्रत्यक्षम् । प्रत्यक्ष चानुमानाद् बलीय. । भा. ७।४।३।१५. ● प्रकृतौ यत्र पाठादिप्रमाणकः क्रमः तत्र तत्सार्गानन्तर तत्पदार्थः कार्य इति विधिभिरेव वाक्यकल्पनम्, मुख्यक्रमे तु त्वयमत् धर्मिप्राहकप्रमाणबलाद आद्यप्रधानधर्मानन्तर उत्तरप्रधानधर्मा अनुष्ठेयाः इत्येव कल्पनम्, न तु विधिभ्य न वा आमेरत्वाविषयेयाः । अतः आतिदेशिकपाठविरोधे एव मुख्यक्रमादेर्दौर्बल्यम् । भाट्ट. ५।१।१०. ● ' प्रकृतौ यथोत्पत्तिवचनमर्थाना तथोत्तरस्या ततौ तत्प्रकृतित्वादर्थे चाचार्यत्वात् ' ( ९।३।१।१ ) इत्याधिकरणे ' अग्नये जुष्ट निर्वपामि ' ' व्रीहीणा मेध सुमनस्यमानः ' इति व्रीह्यग्निशब्दौ द्रव्यदेवताऽन्तरयुक्तायां विकृतौ ऊह्यौ अनूह्यौ वा इति निर्णयार्थं ( संदिह्य पूर्वपक्षयित्वा इत्युत्तरणान्वयः । ) किं वार्थप्रकाशनवत् शब्दस्वरूपस्यापि विवक्षित न वा इति संदिह्य शब्दस्वरूपानादरे समाम्नानानर्थक्यापत्तौ औत्पत्तिकसमाम्नायावगतशब्दस्वरूपमनतिक्रम्य अर्थाना वचनं अभिधानं प्रकृतान्वयि इतिकृत्वा उत्तरस्यामपि ततौ विकृतिविस्तारे तथाभूतं अविकृतमेव शब्दस्वरूपं प्रयोक्तव्यम्, प्रकृतिदृष्टस्यैव शब्दस्वरूपस्य प्रकृतिवच्छब्देन विनियुक्तत्वात् इति ' प्रकृतौ यथोत्पत्तिवचनमर्थाना तथोत्तरस्या ततौ तत्प्रकृतित्वात् ' इति सूत्रावयवेन पूर्वपक्षयित्वा कर्मसमवेतार्थप्रकाशनोद्देशेन विहिताना मन्त्राणा प्रधानवशवर्तित्वेन प्रकृतौ इतिकृत्वा च अर्थप्रकाशननिरपेक्षस्वरूपादृष्टायोगात्, वैकृते च सूर्यनीवाराद्यर्थे अग्निव्रीह्यादिशब्दाना प्रकाशनाख्यकार्याभावात् तत्समर्थशब्दोपादानेन विकृतौ मन्त्रोच्चारणं युक्त इति 'अर्थे च अचार्यत्वात् ' इत्युत्तरावयवेन सिद्धान्तयिष्यते । सु. पृ. २८०.

सू प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् । ९।३।१।१॥

' ऐन्द्राग्नमेकादशकपाल निर्वपेत् प्रजाकाम. ' इत्याम्नातम्, प्रकृतौ च ' अग्नये जुष्टं निर्वपामि ' इति निर्वापमन्त्रः । स ऐन्द्राग्ने चोदकेन प्राप्तः । स किं ऐन्द्राग्ने अविकारेण प्रयोक्तव्यः, उत ' इन्द्राग्निभ्या जुष्ट निर्वपामि ' इत्यूहेन प्रयोक्तव्य इति विचारः । तथा ' इन्द्राय मरुत्वते नैवारमेकादशकपाल निर्वपेत् ' इत्याम्नातम् । प्रकृतौ च ' स्योन ते... व्रीहीणा मेध सुमनस्यमानः ' इति मन्त्रः पठ्यते । स किं मरुत्वतीये अविकारेण प्रयोक्तव्यः, उत ' नीवाराणा मेध सुमनस्यमानः ' इति ऊहेन प्रयोक्तव्यः इति विचारः । तत्र ' तत्प्रकृतित्वात् ' इत्यन्तेन सूत्रांशेन पूर्वपक्षमाह । यथा प्रकृतौ अर्थाना अग्निव्रीह्यादीनां उत्पत्तिवचन उत्पत्तौ वचन शब्दपाठः तथा उत्तरस्या ततौ विस्तारे विकृतौ स्यात् । यथा प्रकृतौ पठित तथैव विकृतावपि पठनीय विकारमकृत्वा । तत्प्रकृतित्वात् तत्प्रकृतिकत्वात् दर्शपूर्णमासप्रकृतिकत्वात् ऐन्द्राग्नादीनाम् । प्रकृतिवत् विकृतौ कर्तव्यम् । तस्मादूहः इति पूर्वः पक्ष. । अथ तुशब्दस्थानीयेन चशब्देन पूर्वपक्षं व्यावर्तयति । अर्थे ऐन्द्राग्नादिरूपे अभिधातव्ये इतरस्य

निर्वापमन्त्रस्य अकार्यत्वात् अविद्यमानं कार्यं यस्य सः अकार्यः। तस्य भावः अकार्यत्वम्। अग्निपदस्य ऐन्द्राग्ने फलं नास्ति। अदृष्टकल्पना प्रसज्येत। एवं व्रीहिपदेऽपि द्रष्टव्यम्। तस्मात् अग्निपदे व्रीहिपदे चोहः कर्तव्यः इति सिद्धान्तः।

**लिङ्गदर्शनाच्च ॥ २ ॥**

सिद्धान्ते हेत्वन्तरमाह। अस्मिन्नर्थे लिङ्गस्य दर्शनं भवति। 'न माता वर्धते न पिता, न भ्राता, न सन्धा' इति अध्रिगुप्रैषविषय निषेधवचनं पशुगणविषयकम्। मत्स्यं च मातरं पितरं भ्रातरं वा वर्धमानं पश्यामः। तस्मात् नार्थवृद्धिप्रतिषेधोऽयम्। किन्तु शब्दवृद्धिप्रतिषेधोऽयम्। मातरौ मातरः पितरौ पितरः भ्रातरौ भ्रातरः इति शब्दवृद्धिं प्रतिषेधति। तथा च ऊहनिषेधोऽत्र कृतः। अतोऽवगम्यते अन्ये शब्दा ऊह्यन्ते इति। तस्मात् निर्वापमन्त्रे, 'व्रीहीणां मेध' इत्यादौ च ऊहो भवतीति सिद्धान्तः। किंच 'शिक्षेया देवाना वक्षाणा वपाना मेदसोऽनुब्रूहि' इति ऊहितानां पदानामनुच्चारणं ऊहे लिङ्गम्।

[ इत उत्तरं तृतीयं सूत्रं अन्तरगर्भिणीत्वात् अन्यत्र पठितम्, नात्र। ]

**अविकारमेकेऽनार्षत्वात् ॥ ४ ॥**

पूर्वपक्षमाह। एके आचार्याः अविकारं विकारस्य ऊहस्य अभावं मन्यन्ते। अनार्षत्वात् ऊहितस्य पदस्य आर्षत्वाभावात् वैदिकत्वाभावात्।

**लिङ्गदर्शनाच्च ॥ ५ ॥**

प्राकृतमन्त्रे ऊहो न कर्तव्यो विकृतौ इत्यत्र लिङ्गं दृश्यते। आग्नेये वैकृते पशौ 'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति पठ्यते। ऊहपक्षे नैतत् विधातव्यं भवति। विधानं ■ विद्यते, तेन अनूहः सिद्धो भवति। किंच, अग्नीषोमीये पशौ श्रूयते 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहून् एते ते वायव इति'। यदि ऊहो भवेत् एतदपि न विधातव्यम्, प्राप्तत्वात्। विधानं ■ विद्यते, तस्मात् नोहः इति पूर्वपक्षः।

**विकारो वा तदुक्तो हेतुः ॥ ६ ॥**

विकृतौ ऊहो न कर्तव्यः इति पूर्वपक्षं वाशब्दो व्यावर्तयति। विकार. ऊह. स्यादेव। तत् तत्र अस्मिन् अर्थे ऊहः कर्तव्य इत्यत्र हेतुः उक्तः 'अर्थे चाकार्यत्वात्' (९।३।१।२) इति। चोदकेन मन्त्रार्थमनुरुध्यते न मन्त्राक्षराणि। अर्थपराणि हि तानि, न स्वरूपप्रधानानि। तस्मात् ऊहः कर्तव्यः इति सिद्धान्तः।

**लिङ्गं मन्त्रचिकीर्षायाम् ॥ ७ ॥**

ऊहो नास्तीत्यत्र पूर्वपक्षिणा यत् लिङ्गमुक्तम् 'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति विधानमिति, तत् मन्त्रचिकीर्षाऽयं तस्य पदसमुदायस्य मन्त्रत्वचिकीर्षया। अन्यथा ऊहितस्य मन्त्रत्वं न स्यात्। ततश्च न तेन अनूहसिद्धिः।

**नियमो वोभयभागित्वात् ॥ ८ ॥**

ऊहाभावे पूर्वपक्षिणा यदपरं लिङ्गमुक्तम् 'एष ते वायो एतौ ते वायू एते ते वायवः' इति, स नियमः क्रियते। अन्यथा यूपस्पर्शस्य उभयभागित्वं स्यात् अनियमेन सर्वैर्मन्त्रैः सम्बन्धः स्यात्। तस्मात् 'यदि एक यूपम्, यदि द्वौ, यदि बहून्' इति तत्तत् मन्त्रविशेषस्य नियमः क्रियते। ततश्च तदपि ऊहाभावे न लिङ्गम्। तस्मात् निर्वापमन्त्रादौ विकृतौ ऊहः कर्तव्य इति सिद्धान्तः। के.

* 'प्रकृतौ वा द्विरुक्तत्वात्' ('अद्विरुक्तत्वात्' इत्यपि पाठः ३।६।१।२) इत्यधिकरणे द्विरुक्तत्वदोषापत्तिः काल्वैषम्यं चेति सिद्धान्तहेतुद्वयमुक्तम्। तत् अन्योन्यव्यभिचारात् 'सप्तदशो वै प्रजापतिर्योगशेऽन्वायत्तः' इति तदधिकरणान्ते एव वार्तिककृदुक्ते प्रत्युदाहरणे प्राकृतद्वारप्रतीक्षणानपेक्षत्वात् प्राप्तिकालवैषम्याभावेऽप्युपदेशातिदेशाभ्यां प्राप्तौ द्विरुक्तत्वाप्रसङ्गः अस्त्येव। तथा ज्योतिष्टोमे सोमसामानविध्ये उत्पन्नाने विकृतित्वस्य उभयवाद्यसिद्धत्वेन द्विरुक्तत्वोद्भावनायोगात्, नित्यविधेः प्रथमं प्रवृत्तेः, नैमित्तिकविधेस्तु पश्चात् प्रवृत्तेः प्राप्तिकालवैषम्यमस्त्येव। तेन 'नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्' इति सोमधर्मसामानविध्याधिकरणे (३।६।१३।२६) 'यदि च नैमित्तिक;

फलचमसः न सोमधर्मान् प्रतीप्स्यति तत्र धर्माः साधारणाः मन्त्रो द्विरुक्ता इत्युच्येरन्' इति ग्रन्थेन सामान्यविध्ये द्विरुक्तत्वप्रसङ्गाभिधानं भाष्यकारीयं उपेक्ष्यमेवेति।

ननु 'सप्तदशो वै प्रजापतिः' इत्यत्र द्विरुक्तत्वप्रसक्तौ सति सामान्यविध्यप्रयोगात् कथं प्रत्युदाहरणत्वं वार्तिककृता उक्तम्। उच्यते। तदर्थवादादाविव अनानर्थक्यपरिहारः 'प्रकृतौ वा द्विरुक्तत्वात्' इत्यधिकरणपूर्वपक्षप्रयोजनेन सार्थः। पर्णतादावपि एवमेव तदुदाहरणत्वम्। अतश्च प्रातिशाख्यैकवाक्यत्वमेव अत्र मुख्यो हेतुः सिद्धान्तसिद्धेः। द्विरुक्ततोपन्यासस्तु अभ्युच्चयहेतुरेव। अन्यथा हि संशय एव स्यात्। किमतिदेशाभ्युपगमेन द्विरुक्ततालक्षणमानर्थक्यं परिहर्तव्यम्, किंवा अतिदेशेन प्राप्स्यमानस्यापि पर्णताऽऽदेः पूर्वपक्षप्रयोजनरूपप्रायश्चित्तविशेषप्राप्त्यर्थमभ्युपगमेन आनर्थक्यं इति संदेह एव दुष्परिहरः स्यात्। अभ्युपगमो हि तत्र शास्त्रः अतिदेशादिरूपप्रमाणान्तरप्राप्स्यमानस्यापि अर्थस्य पुनर्विधिः प्रयोजनविशेषेण अवेक्ष्यमाणो 'तमुपस्येन' इत्यादिना। गवामयने च आम्नायोक्तो. ऐन्द्रवायवाग्रता-विधिना मासधर्मत्वात् प्राप्स्यमानायाः ऐन्द्रवायवाग्रतायाः। तथा तदर्थशाखान्तरेऽपि विद्वान् प्राप्स्यमानस्य मन्त्रस्य। तथा ज्योतिष्टोमादौ सार्वकाम्यप्राप्तस्य स्वर्गार्थत्वस्य। एवं आम्नानेनार्थवादेन विधिना आक्षेप्स्यमानस्यापि प्राशस्त्यस्य। एवमन्यापि। तस्मात् प्रातिशाख्यैकवाक्यत्वमेव संशयापनयाय उपास्यम् 'प्रकृतौ वा द्विरुक्तत्वात्' इत्यत्र इति निष्कर्षः।

अथ एतदधिकरणप्रयोजनं न सुबोधं इत्यतोऽभिधीयते। यद्यपि 'कोऽर्थः सामान्यविध्ये चेद् गुणकामप्रवर्तनम्' इति अन्यत्रोक्तम्, तथापि तत् यजनादिक्रियायामेव युज्यते तदाश्रितगुणकामसंभवात्। पर्णताऽऽदिजातेस्तु अक्रियात्वेन तदाश्रितगुणकामो न संभवति। अतः प्रयोजनान्तरं वाच्यम्। तत्र 'पूर्वपक्षे पर्णत्वादीनामुपदिष्टत्वाविशेषेण तल्लोपे प्रकृतौ विकृतौ च प्रायश्चित्तसाम्यम्, सिद्धान्ते तु उपदिष्टातिदिष्टयोर्लोपे प्रायश्चित्तविशेषः' इति सम्पदेवः। तत्र। नहि उपदिष्टातिदिष्टयोर्भ्रेषे प्रायश्चित्तविशेषः क्वापि आम्नातो दृश्यते। अतः प्रयोजनं वाच्यम्। तदुच्यते। वाक्यपादान्ते (३।३।१) 'उच्चैर्ऋचा क्रियते' इत्यादिस्वरस्य 'यदि ऋक्तो यज्ञ आर्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात्' इत्यादिनैमित्तिकप्रायश्चित्तस्य च वेदधर्मत्वमुक्तम्। ततो द्वितीयाधिकरणे उत्पत्तिवेदनिबन्धनमिदमुभयं इति पूर्वपक्षिते सिद्धान्तितं विनियोगविधिनिबन्धनमुभयं ऋग्वेदादिना यत् क्रियते तत्रैवेत्यादि, तथैव चार्तौ प्रायश्चित्तमिति। ततश्च याजुर्वैदिकात् ज्योतिष्टोमात् तद्विकृतौ, सामवैदिके श्येने वा दीक्षणीयादीष्टयः स्वाङ्गविशिष्टा अतिदिष्टाः, तास्वपि वा जुहूः, तत्रापि पर्णता अनन्यपूर्वपक्षे याजुर्वैदिकविधिविनियुक्ता, इति तद्भ्रेषे याजुर्वैदिकाङ्गभ्रेषप्रायश्चित्त कार्यम्, सिद्धान्ते तु तस्याः प्रकृतौ याजुर्वैदिकविधिविनियुक्तेऽपि श्येने सामवैदिकातिदेशविनियुक्तत्वात्सामवैदिकाङ्गभ्रेषप्रायश्चित्तम्। न च ऊहादीनां अनाम्नानादमन्त्रत्वमिव (२।१।९।३४) अतिदेशप्राप्तत्वम्। ऊहप्रवरनाम्नां अमन्त्रत्वं इत्यनेन हीदमुक्तम्। अवदानादिविधौ द्रव्यादिपदवत्, विश्वजिदादौ फलभाववत्, सौर्यादौ अतिदेशवत्, ऊहादेरपि श्रुतार्थापत्तिकल्प्यत्व 'अर्थाद्वा कल्पनैकदेशत्वात्' (१।४।१४।२५) इति वेदैकदेशत्वोक्तेः वेदत्वाभ्युपगमेऽपि मन्त्रो ब्राह्मणं इत्युक्त द्वैराश्य प्रत्यक्षवेदस्यैव, न कल्प्यस्य इति प्रकाशात् तच्च एतदधिकरणम् (२।१।९।३४) इति। बाल पृ. १०४–१०६, * 'प्रकृतौ वा०' तत्र त्रिपक्षत्वात्, अद्विपक्षत्वाद्वा मम इति न्यूनम्। वा. ३।९।१।२, * किमाहवनीयादयः प्रकृत्यर्थाः, आहोस्वित् सर्वार्थाः इति संशये 'तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः' 'प्रकृतौ वा०' इति पूर्वपक्षे। ३।७।९।२९ पृ. ११०४, * 'ततश्चाहवनीयेन सहैवास्यातिदेशतः। प्रकृतौ वा द्विरुक्तत्वादित्यत्र निश्चयो भवेत्॥' ३।७।१३।२९, * प्रतिषेधः प्राप्तिमात्रापेक्षित्वात् उपदेशमतिदेशं वा अनादृत्य उभयत्रापि (प्रकृतौ विकृतौ च) प्रवर्तते। वाक्यं तु इह वक्तुम् 'प्रकृतौ वा०' इति। ३।३।१३।३३ पृ. ८७८–८७९, * च (प्रवर्ग्यः) 'प्रकृतौ वा०' इत्येवं ज्योतिष्टोमं गच्छति। ३।३।१२।३२.

¶ प्रकृतौ वा द्विरुक्तत्वात् इति न्यायः अनारभ्याधीतानाम्। साहस्री. ८६४.

● 'प्रकृतौ वा०' इति न्यायेन सर्वप्राणिद्रव्यकयायप्रकृतिभूताग्नीषोमीयस्य विनाप्यदम्। पूर्वपक्षः। कौ. १।४।३।३ पृ. १७८. ● अनारभ्याधीतत्वेऽपि अव्यभिचरितक्रत्वन्वयाभिः उपसद्भिः वाक्यकृतेनान्वयेन क्रत्वन्वयं प्राप्तस्य 'प्रकृतौ वा०' इति न्यायेन ज्योतिष्टोमे गमनम्। सु. पृ १२१०. ● 'पुरस्तादुपसदां प्रवर्ग्येण प्रचरन्ति' इति वाक्यादेव 'प्रकृतौ वा०' इति न्यायेन प्रवर्ग्यस्य प्रकृतिगामित्वसिद्धिः। सोम. ३।३।१२. ● प्रवर्ग्यस्य निवेशस्थलेऽपि 'प्रकृतौ वा०' इत्यनेन न्यायेन विकृतिनिवेशसंभवायोगात् प्रकृतिमात्रविषयत्वावगतिः (इति आक्षेपकल्पः)। सु पृ. १३१७. ● प्रतिपत्तिमाकाङ्क्षन्ती विनास्कृतीरैव 'प्रकृतौ वा०' इत्यनेन न्यायेन सर्वप्राणियागपशुप्रकृतिमग्नीषोमीयं गच्छतः। पूर्वपक्षे। भा. ३।४।२।२ पृ. ३२८. ● 'विश्वजिति सर्वपृष्ठे अहीतव्याः (अतिग्राह्याः) अप्यग्निष्टोमे' इत्यत्र वर्तमानोऽग्निष्टोमशब्दः 'प्रकृतौ वा०' इति न्यायेन प्रकृत्यग्निष्टोमपरः। संकर्ष. ३।३।२. ● वैदिकस्य गुणविधेर्निरपेक्षया वैदिकत्वसामान्येन बुद्धिस्थत्वात् वैदिकयोरेव आलम्भनिर्वापयोर्विषयत्वावगतेः 'प्रकृतौ वा०' इत्यनेन न्यायेन प्राकृतालम्भनिर्वापविषयत्वेन अवधार्यते। सु. पृ. ९२५. ● अग्निष्टोमशब्दस्य 'प्रकृतौ वा०' इति न्यायात् ज्योतिष्टोमे एव प्रभुप्रयोगाद्वा तद्गुणसामकरोत्यपि। कौ २।३।१०।२२ पृ. ६८. ● अनारभ्याधीतत्वात् प्रवर्ग्यस्य प्रकृतौ निविष्टस्य सत. अतिदेशेन विकृतावपि उपसदां प्राप्तिसिद्धेः अद्विरुक्तत्वलाभाय 'प्रकृतौ वा०' इति न्यायात् ज्योतिष्टोमे एवोपसदां सह विधानं युक्तम्। कल्पतरु. ३।३।१४।२५ अम. पृ. ७८७. ● यस्य सामान्यतः क्रतुशेषत्वमवगतम्, तस्य कि क्रतुशेषत्वं इत्यपेक्षायाम् 'प्रकृतौ वा०' इति न्यायात् प्रकृत्यर्थत्वं स्यात्, आधानस्य तु अग्निमात्रशेषतया क्रतुशेषत्वमेव नास्ति इति नास्य प्रकृतिगामित्वम्। सोम. ३।६।१५. ● अथवा सर्वयागानुवादेन गुणविधानात् नान ('चित्रया यजेत पशुकामः' इत्यादौ) 'प्रकृतौ वा०' इति न्यायप्राप्तिः। अतिदेशात् पूर्वमुपदेशप्रकृतौ अतिदेशस्यैव अकल्पनेन द्विरुक्तत्वाभावात्। कौ. १।४।३।३ पृ. १७९. ● प्रकृतौ विकृतौ उभयभिन्ने च कर्मणि समानविधानो निषेधो यथा 'शूद्रानीतैः क्षत्रनीतैः कर्म कुर्वन् पतत्यधः।' इति कुशनिषेधः। बाल. पृ. ३५, ● प्रकृतौ वैकल्पिकयोः बृहद्रथन्तरयोः अदृष्टार्थयोः अन्यतरस्य क्वचित् विकृतौ नियमः, अयं नियमविधिः अदृष्टार्थः। पृ २४, ● प्रकृतौ वैरूप्यलक्षणवाक्यभेदः वाजपेयगुणविधिस्थले यज्ञे कर्मकरत्वरूपम्, उद्देश्योपादेयत्वरूपम्, गुणप्रधानत्वरूपम्, विधेयत्वानुवाद्यत्वरूपं चेति। पृ. १८१. ● प्रकृतौ (दर्शपूर्णमासयोः) स्वाहाकारस्य अर्थवत्त्व नारिष्ठहोमेषु पार्वणहोमयोश्च 'पूर्णमासाय सुराधसे स्वाहा' इति। भा ८।४।५।१५. ● प्रकृत्योः प्रधानप्रसङ्गो यथा– काम्येनाग्निहोत्रेण नित्याग्निहोत्रस्य प्रसङ्गः। बाल. पृ. १४१.

● प्रकृत्यर्थं नैमित्तिकं सामिधेनीशतदद्यादि। १।६।३।१०. ● प्रकृत्यर्थः अनारभ्यविधिः। ३।६।१।१–८. ● प्रकृत्यर्थस्य प्रत्ययार्थे अन्वयः व्युत्पत्तिसिद्धः। रहस्य. पृ. ६०–६१.

¶ प्रकृत्यर्थत्वात् पौर्णमास्यां म्रियेरन्। ११। ३।१४।४५ ॥

यज्ञपात्राणि यावज्जीवं धारयितव्यानीत्युक्तम्। तानि किं पौर्णमास्या आरभ्य धारयितव्यानि, उत अन्वाधेयमारभ्य इति विचारे पूर्वपक्षमाह। पौर्णमास्याः आरभ्य यज्ञपात्राणि म्रियेरन् धार्याणि। प्रकृत्यर्थत्वात् अनारभ्योक्तत्वेन दर्शपूर्णमासार्थानि एतानि। पौर्णमास्यामेवोत्पत्तिः। तस्मात् पौर्णमासीमारभ्य धारयितव्यानि।

अन्वाधेयाद्वाऽविप्रतिषेधात् तानि धार्येरन्मरणस्यानिमित्तत्वात्। ४६ ॥

न पौर्णमासीमारभ्य धारणं किन्तु अन्वाधेयादारभ्य तानि धारयेत्। एवं सति मरणस्य अनिमित्तत्वात् अनियतत्वात् प्राक् पौर्णमास्याः मरणेऽपि अविप्रतिषेधात् सर्वाण्यस्य प्रयोगाभावेन विप्रतिषेधाभावात्। यद्यपि पात्राणि पौर्णमास्यामुत्पद्यन्ते तथापि चोदकेन

अन्याधेये पवमानेष्टिषु प्रसक्तानि भवन्ति । तस्मात् अन्याधेयमारभ्यैव यज्ञपात्रधारणं इति सिद्धान्तः । के.

* प्रकृतिगत: आरादुपकारकक्रियानिषेधो यथा 'न प्रथमयज्ञे प्रवृञ्ज्यात्' । बाल. पृ. २५. * प्रकृतिगतानां कार्यकृद्धर्माणामेव विकृतौ अतिदेशः । वि. ३।८।१७. * प्रकृतिगतानां गुणकामानां विकृतौ नातिदेशः । ८।१।१४।२३–२५.

* प्रकृतिगतप्रतिपत्तिनिषेधो यथा 'अग्निहोत्रहवण्याश्च लेहः' इति कस्यै निषेधः । बाल. पृ. २६.

* प्रकृतिगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिक्रियानिषेधो यथा अग्निहोत्रहोमे हुते 'अग्निमुपतिष्ठते' इति विधाय 'तस्मान्नोपतिष्ठेत' इति वाक्यपक्षे दृष्टार्थाग्निसंस्कारकत्वनियमानुपस्थाननिषेधः । बाल. पृ. २६.

* प्रकृतिगतसंनिपत्योपकारकादृष्टार्थ–क्रियानिषेधो यथा 'मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च । नोच्छिष्टो भवति द्विजः' इति । अत्र आचमननिषेधः । बाल. पृ. २६.

* प्रकृतिगतसामिधेन्यादिसमुदायस्य एकदेशो एव विकृतौ विहिते अभ्यासेन लोपः कर्तव्यः । स च अन्त्यानामेवाधिकानाम्, न प्रथमादीनाम् । अयमेव न्यायोऽपायः, अन्त्यलोपाधिकरणं च । १०।५।१।१–६.

* प्रकृतिगतहविर्बीजः सौर्यचरौ चरुशब्दयाञ्चोदनेन । १०।१।१०।३६–४६.

* प्रकृतितोऽपि मनूयामोत्तरत्वस्य अप्राप्तेः पुरोडाशाद्देशाभक्षणोत्तरमेव पिष्टलेपफलीकरणहोमौ । भाट्ट. ५।१।१५.

* प्रकृतिदृष्टपौर्वापर्यस्यैव नियामकान्तराभावे नियामकत्वाङ्गीकारात् शुनःशेपे सवनीयस्य प्रागुपाकरणम्, तदुत्तरं दैक्षस्य, तदुत्तरमनूबन्ध्यस्य । भाट्ट. ५।१।१६.

* 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत.' इत्यनुशासनं संबन्धसामान्याभिप्रायकम् । कौ. ३।४।६।६ पृ. २१९, * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इत्यनुशासनेन प्रत्ययानां नियमेन प्रकृत्यर्थान्वितस्वार्थबोधकत्वावगतेः ('सोमेन यजेत' इत्यादौ) शुद्धभावनाविधानानुपपत्तिः । वस्तुतो धात्वर्थावच्छिन्नभावनाभिधानेऽपि धात्वर्थावच्छेदस्य प्रमाणान्तरप्राप्तत्वात् विशेष्यमात्रांशे विधिफलोपपत्तेः । (इदं पूर्वपक्षे) । २।२।१।१ पृ. १३८. * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इत्याचार्योपदेशात् कर्ता शब्दार्थः कर्म चेत्यवगम्यते । कर्तरि शप्, कर्मणि यक् इति प्रत्ययार्थं कर्तारं कर्म च समामनन्त्याचार्याः । तस्माच्छब्दार्थः कर्ता कर्म चेति । उच्यते । नाचार्यवचनात् सूत्रकारवचनात् वा शब्दार्थो भवति । प्रत्ययादसौ गम्यते । अनुष्ठेया च क्रिया प्रतीता सती कारकाणि प्रत्याययति इत्यवगतमेतत् । भा. ३।४।४।१३ पृ. ९२२–९२३ । यद्यपि कर्ता शब्दार्थः इत्येवमाचार्या वदेयुः, तथापि प्रतिपत्त्यदन्यत्र वदन्तो नादर्तव्या भवेयुः । ते तु नैव तथा वदन्ति (अन्यस्तदभिप्रायो वर्णनीयः इत्यर्थ.) । वा. पृ. ९२२. * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति स्मृत्यनुसारात् धातोरपि भावार्थोपपत्तिः । सु. पृ. ५८४. * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' । प्रकृतिः स्वार्थं प्रत्ययार्थविशेषणत्वेनोपनयति इति प्रत्ययेन सह तदर्थमाहेत्यर्थः । स चोक्तसिद्ध्यर्थं विशिष्टे पदार्थे प्रत्ययो यत् प्रयुज्यते, तत् पूर्वतरविहितप्रकृत्यर्थविशेषणात् । वाक्यार्थ. पृ. १२. * 'दध्ना जुहोति' । दधिहोमसंसर्गस्य अत्र 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति विशेषानुशासनबलेन पदार्थविषया भानेऽपि संसर्गमर्यादया तस्य तत्रात्परत्वाभावात् न वर्णनपरत्वम् । कौ. ३।४।१९।२९ पृ. २९५. * नहि अत्र ('सोमेन यजेत' इत्यादौ) संसर्गः अन्यसंसर्गवत् संसर्गविषया भासते 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत.' इति साहित्यरूपसंसर्गांशे अनुशासनवैयर्थ्यापत्तेः । अपि पदार्थविषयैव शक्त्या निरूढलक्षणया वा । (इदं पूर्वपक्षे) । २।१।२।१ पृ. ६. * यत्तु 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति, तत् कर्मनिमित्तेषु नामपदेषु पाचको लावक इत्येवमादिषु । आख्याते तु न कर्ता, न क्रिया प्रधानतः, किं तर्हि ? भावप्रधानमाख्यातम् । भा. ११।१।४।२४. * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इति शाब्दिकाः । वि.

३।४।८. * 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोः प्रत्ययस्तु प्राधान्येन ' इति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थप्राधान्यस्य सुबर्थसाधारण्येन सिद्धिः । रहस्य पृ ३८.
* ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत तयोस्तु प्रत्ययः प्राधान्येन ' इति स्मृत्या प्रत्ययार्थस्य प्राधान्यावगतेः ( विशेष्यत्वाव० इति पाठः ) कथं प्रकृत्यर्थस्य व्यापारस्य विशेष्यता इति न च वाच्यम् । ' भावप्रधानमाख्यातम् ' इति निरुक्तस्मृत्या भावशब्दवाच्यव्यापारस्य प्राधान्यावगतेः, तस्य च ' धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ' इति वैयाकरणस्मृत्या धातुवाच्यत्वावगतेः । विशेषस्मृत्यनुरोधेन सामान्यरूपायाः प्रत्ययार्थप्राधान्यस्मृतेः सुबादिविषयत्वेन व्याख्यानात् । वस्तुतस्तु नेयं प्रत्ययार्थप्राधान्यस्मृतिः प्रत्ययार्थतावच्छेदेन प्राधान्यनियामिका, लिङ्गसंख्यादेः प्रत्ययार्थत्वेऽपि प्राधान्यानङ्गीकारात् । नापि प्रधानस्य सतः प्रत्ययार्थत्वनियमपरा, 'सत्त्वप्रधानानि नामानि' इति स्मृत्या लिङ्गसंख्यादीन् प्रति प्रधानस्यापि प्रातिपदिकार्थस्य प्रत्ययार्थत्वाभावात् । किन्तु यत्रैव प्रमाणान्तरेण सुबर्थस्य करणत्वादेः प्रातिपदिकार्थं प्रति प्राधान्यं प्रसिद्धम्, तदनुवादमात्रमियं स्मृतिः इति नानया व्यापारस्य धात्वर्थत्वेऽपि विशेष्यताप्रतिबन्धः । कौ. २।१।२।५ पृ. १५, * प्रातिपदिकार्थः प्रधानभूते कारकत्वे प्रत्ययार्थे अन्वेति, ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन ' इति स्मृत्या प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यावगमात् । सामान्यस्मृतिरपीयं प्रमाणान्तरानुसारात् कारकादिविषयैव न [illegible] संख्यादिविषयाऽपि, अन्यथा प्रातिपदिकार्थस्य सत्त्वप्राधान्याऽनुपपत्तेः । २।१।२।५ पृ. ३०.

* ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ' इति आचार्याणां प्रत्ययार्थप्राधान्योपदेशः । सु पृ. १४१७, * ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ' इति प्रत्ययार्थप्राधान्यस्मृतिः । पृ. १०१४, * ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोः प्रत्ययार्थः प्राधान्येन ' इति प्रत्ययार्थप्राधान्यस्मृतेश्च कर्तृसंख्यादेः प्रत्ययार्थस्य प्राधान्याभावात् प्रत्ययार्थः प्रधानमेव इति नियमायोगेऽपि प्रत्ययार्थ एव प्रधान इति नियमोपपत्तिः । पृ. ५६६, * ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ' इति सामान्यस्मृतेः ' भावप्रधानमाख्यातम् ' इति विशेषस्मृत्या बाधात् भावनायाः एव प्राधान्यात् प्रत्ययार्थता युक्ता । ( इति चेत् उच्यते ) धात्वर्थातिरिक्तायाः भावनायाः स्वरूपेणैव सिद्धायाः प्राधान्यप्रत्ययार्थत्वयोः दूरोत्सारितत्वात् ' धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ' इति भावशब्दस्य स्वतन्त्रधात्वर्थवाचित्वस्मृतेः विशेषस्मृतिबलेन प्रकृतिप्रत्ययार्थप्राधान्यविपर्ययमभ्युपगम्य कर्तृविशिष्टयागाद्यभिधानं युक्तम्, न तु भावप्राधान्यपरेयं स्मृतिः इति । पृ ५४७, * ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ' इति स्मरणं आख्यातेऽपि अपवादाभावोक्त्यर्थम् । पृ. ११७१.

* आख्यातवाच्यैव भावना, न धातुवाच्या, प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थस्य प्राधान्यम् ' इति न्यायविरुद्धत्वात् । इति मीमांसकाः । भूषणसार. धात्वर्थनिर्णये अष्टमकारिकावतरणम् ।

* ' प्रकृतिप्रत्ययौ ब्रूतः प्राधान्येन सहेति यत् । भेदेनैवाभिधाने हि प्राधान्यं तत् तयोच्यते ॥ स्याद्येन उभयोर्वाच्यः प्रत्ययार्थः कथं भवेत् । व्यपदिश्येत नैकेन यत्रार्थं उभयोरसौ ॥ सर्वदा वृत्त्यते यस्मात् प्रकृत्यर्थोपसर्जनः । तेनासावुभयोरर्थः प्रत्ययत्वेन चोदितः ॥ याऽन्याऽन्वयव्यतिरेकाभ्यां शक्तिः क्वा चित् पदाश्रया । विद्यते यत्र एकस्मादिति शिष्टगतिर्भवेत् ॥ ' इति । शब्दे प्रकृतिप्रत्ययोरपि अन्विताभिधानस्य निरस्तत्वात् कृतानुबन्धमेव स्वार्थं प्रत्ययो वदति इत्याशङ्का । सु. पृ. ७०७-७०८.

' * प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययः प्राधान्येन ' इत्युक्तत्वेन प्रधानार्थवाचकप्रत्ययस्यैव प्राधान्यम् । अद्वैव. २।२९ ( ३० ) । ४१-४२.

* ' प्रकृतिप्रत्ययौ सहार्थं ब्रूत. तयोः प्रत्ययार्थस्य प्राधान्यम् ' इति प्रत्ययार्थप्राधान्यबोधकस्मृतेः ' भाव प्रधानमाख्यातं ' इति विशेषस्मृत्या बाधः । किंच तस्याः प्रमाणान्तरसिद्धप्राधान्यानुवादकत्वं इति वैयाकरणाः । मणि पृ. १०५.

● 'प्रकृतिप्रत्ययौ सह ब्रूतः' इत्यनुशासनमपि व्याकरणस्यान्वयस्य पदार्थविषया मानानियमपरम्, न तु सम्बन्धसामान्यस्य । चौ. १।४।६।८ पृ. २२३. ● प्रकृतिप्रत्ययोः अन्वयव्यतिरेकाभ्यां प्रत्येकं अर्थं प्रत्यायनशक्त्यवगमः । सु. पृ. ६८४. ● प्रकृतिप्रत्ययोः केवलयोः प्रयोगासंभवः । शा. १।२।१।१ पृ. ४६३. ● प्रकृतिप्रत्ययोः पौर्वापर्यनियमात् गुणप्रत्ययार्थानुपरक्तैः धात्वर्थस्य अनुरक्तता सर्वत्राविशिष्टा । सु. पृ. ७६९. ● प्रकृतिप्रत्ययोः प्रत्ययार्थोपेयरत्वम् । शा. २।२।१।१ पृ. ४६१. ● प्रकृतिप्रत्यययोः शक्तिभेदात् पूर्वाभिहितेऽपि (विशेषणे) प्रत्ययेन विशेष्याभिधानं अविरुद्धम् । १।१।८।२१ पृ. ७७७. ● प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचार्य नित्यविप्रक्षितकमत्वेन पूर्वमयुक्तप्रत्ययार्थप्यासेषु प्रत्ययानु प्रत्ययश्चायः सन्निपतन् कृतानुबन्धमेव स्वार्थं वदति, तस्मात्र मदाचित् प्रत्ययार्थः गुहो लभ्यते । २।२।१।१ पृ. ४६५. ● प्रकृतिप्रत्यययोः स्वार्थद्वयोरेव नैरन्तर्यात् अन्तराले संज्ञयोऽप्यमानो भवति । २।२।१।२१ पृ. ५१४. ● प्रकृतिप्रत्यययोः स्वस्वार्थाभिधानं अभिधानी श्रुतिः । ३।१।७।११ पृ ७००. ● प्रकृतिप्रत्ययोर्हि प्रत्ययार्थस्य प्राधान्यं इत्युत्सर्गः । बृहती. पृ. ११.

● प्रकृतिप्रत्ययान्याख्यानसूत्रेः 'पदायवक्षोपायान् पद्दनिच्छन्ति सूरयः । कमन्यूनातिरिक्तत्स्वरवाक्यश्रुतिस्मृतीः ॥' इति पदमेवावधारणोपायत्वेन स्वरात् । सु पृ. ८११.

ॐ प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायः ॥ यथा औपगवो भावक इत्यादौ हि प्रत्ययार्थस्य अपत्यकर्त्रादिरूपस्य प्राधान्यं यातीत्यादिक्रियान्वयात्, एवमन्यत्रापि बोध्यम् । साहस्री. ६०.

● प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यात् प्रतिपदिकं गौणमित्यवगते । शा. ३।७।४।१०. ● प्रकृतिप्रत्ययार्थयोर्भिन्नार्थयोरपि त्वो पूर्वं प्रत्ययोच्चारणं (प्रत्ययोच्चारणात् प्राक्) प्रकृतेः स्यात् न किञ्चित् प्रत्यायितं भवेत् । किन्तिप्रत्ययौ तु तौ प्रत्यायकतः । टुप्. १०।३।११।४२.

● प्रकृतिप्रत्ययादयः । 'शब्दाः सर्वभावानां नानुयोज्याः स्वभावतः । तेन नाम्ना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥' वा. २।१।१।१ पृ. ३७८.

● प्रकृतिप्रत्ययोभयावृत्तिलक्षणः वाक्यभेदः । वाल. पृ. १८१.

● प्रकृतिप्रधानेन अङ्गस्य प्रसङ्गो यथा काम्येन अमावास्याश्राद्धेन मासावङ्गभूतश्राद्धस्य । वाल. पृ. १५०. ● प्रकृतिप्रधानस्य साङ्गविकृत्या सह प्रधानाङ्गत्वं यथा 'यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' अत्र सान्नाय्ययागाङ्गभूतया आग्नेययागविकृतिभूतया इष्ट्या सह सान्नाय्ययागस्य तन्त्रम् । पृ. १४८.

● प्रकृतिप्राप्तस्यादिरत्वादेर्वैकृतौदुम्बरत्वेन बाधः । १०।७।१८।६१–६३.

● प्रकृतिप्राप्तद्रव्यदेवतादीनां विकृतावुपदिष्टद्रव्यदेवतादिभिर्बाधः । १०।७।१७।५८–६०.

● प्रकृतिप्राप्तयवादीनां सोमारौद्रादौ विहितैः शुक्लादिभीहिभिः बाधः । १०।७।१३।६४–७१.

● प्रकृतिमात्रोहः यथा 'सूर्याय जुष्टम्' इति । नात्र लिङ्गं वचनं चोह्यते । वाल. पृ. १२६.

● प्रकृतिरूपं वैदिकं कर्म अग्निहोत्रदर्शपूर्णमासादि । वाल. पृ. ८५.

● प्रकृतिलिङ्गेन च विप्रत्वविशेष उक्तः 'यस्य लिङ्गमर्थसंयोगात्' (८।१।२) इति । कौ. ● प्रकृतिलिङ्गयोरेव ऊहो यथा 'अग्नये जुष्टम्' इति प्रकृतौ । 'अदित्यै जुष्टम्' इति विकृतौ । वाल. पृ. १२७.

● 'प्रकृतिलिङ्गासंयोगात्' (१०।४।१।१–२) इत्यधिकरणे नक्षत्रेष्टौ उपदिष्टानामुपहोमाना अतिदिष्टानां नारिष्ठहोमाना च समुच्चयः उक्तः । वाल. पृ १७७.

ॐ प्रकृतिलिङ्गासंयोगात् कर्म संस्कारं विकृतावधिकं स्यात् । १०।४।१।१॥

नक्षत्रेष्टिषु 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्यादय उपहोमा विहिताः । नारिष्ठहोमाश्च प्रकृतेश्चोदकप्राप्ताः । तत्र विकृतौ कृत्तिकादीष्टौ संस्कारं मन्त्रियते अदृष्टविशेषविशिष्टं क्रियते अनेन तत् नारिष्ठहोमात्मकं कर्म अधिकं स्यात् । उपहोमाः नारिष्ठहोमैः समुच्चीयन्ते

इत्यर्थः । कुतः ? प्रकृतिलिङ्गासंयोगात् प्रकृतेः लिङ्गेन अर्थेन संयोगाभावात् । तथा च प्राकृतकार्योपस्थापकलिङ्गसंयोगाभावाद्दुग्धहोमादिलक्षणं कर्म संस्कार अदृष्टार्थं प्राकृतादधिकं स्यात्, न तु बाध. इति सिद्धान्तः ।

अथ द्वितीये वर्णके इदं सूत्रं पूर्वपक्षसूत्रत्वेन व्याख्येयम् । सूत्राक्षरार्थस्तु स एव, केवल उदाहरणानुसारेण शब्दा भिन्नाः । तथा, भाष्यम्— इदमाम्नायते 'सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणां अभिचरन्' इति । तत्रेदं श्रूयते 'शरमयं बर्हिर्भवति' इति । तत्र संशयः किं कुशमयं निवर्तते नेति । किं प्राप्तम् ? उभयस्य प्रमाणवत्त्वात् चोदकेन कुशानाम् 'शरमयं बर्हिः' इति विशेषवाक्येन च शराणां समुच्चयः । इति पूर्वः पक्षः ।

अथ तृतीयं वर्णकम् । वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति श्रुतम् । प्रकृतौ तु 'उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति' इति श्रुतम् । अत्र उभयमुभयस्य निवर्तकं घोषो मन्त्रस्य निवर्तकः रथो दर्भयोः इति पूर्वः पक्षः । सूत्राक्षरार्थः स एव ।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसंनिधानात् । २ ॥**

ननु सौमारौद्रचरौ 'शरमयं बर्हिर्भवति' इति शराः कुशान् निवर्तयन्त्येव नक्षत्रेष्टिषु उपहोमाः नारिष्टहोमान् निवर्तयिष्यन्ति, इति चेत्, तत्र दृष्टान्तवैषम्यमाह । शरेषु चोदनालिङ्गसंयोगे चोदनायां प्राकृतविधौ अव्यभिचरितवत् लिङ्गं वेदिस्तरणादिरूपं यद्बर्हिःशब्दः तत्संयोगे 'शरमयं बर्हिः' इत्यत्र सति प्रकृतिसंनिधानात्प्रकृतिविधिघटकशब्दसंनिधानात् तद्विकारः प्राकृतकुशविकारः शराः प्रतीयेत । उपहोमेषु तु नास्ति चोदनालिङ्गं इति न उपहोमैः प्राकृतनारिष्टहोमबाधः । इति सिद्धान्तः ।

अथ द्वितीयं वर्णकम् । इदं सिद्धान्तसूत्रम् । अक्षरार्थः प्रथमवर्णकवदेव । विशेषस्तु अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः । तस्मात् प्राकृतस्य कुशमयस्य निवृत्तिरिति ।

अथ तृतीयं वर्णकम् । वाजपेये 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति श्रुतम् । प्रकृतौ च 'उपावर्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति' इति श्रुतम् । तत्र उभयं उभयस्य न निवर्तकं किन्तु रथसंबन्धी घोषः मन्त्रस्य दर्भयोश्च निवर्तकः । न घोषशून्यो रथो वा रथभिन्नस्य घोषो वा । इति सिद्धान्तः । एवं द्वितीये तृतीये च वर्णके इदं सूत्रं सिद्धान्तसूत्रमेव, न प्रथमवर्णक इव शङ्कानिरासद्वारा सिद्धान्तोपोद्बलकम् । के.

● प्रकृतिलिङ्गवचनानां ऊहः यथा 'आपो देवीः शुद्धाः स्थ' इति प्रोक्षणीषु प्रकृतौ, घृते प्रोक्षणे तु 'घृत देव शुद्धमसि' इति । बाल. पृ १२७.

● प्रकृतिलिङ्गसंयोगः प्रत्यक्षदर्शनेन भवति । यथा 'नैवारश्चरुः' इति । अभावे विधानेन वा भवति । यथा 'यदि सृड्यः पवहः संतिष्ठते, मधु आशयेत् घृतं वा' इति । विकारेण वा यथा 'नैर्ऋतः चरुः नखावपूतानाम्' इति । स्वशब्देन वा भवति, यथा 'परिधौ पशुं नियुञ्जीत' इति । प्रतिषेधेन वा भवति, यथा 'न गिरागिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम्' इति । अन्येन वा येन अवगम्यते प्राकृतं कार्यं अभिनिर्वर्तयन्तीति । भा. १०।४।१।१ पृ. १९०७.

● प्रकृतिवचनयोरेव ऊहो यथा 'अग्नये जुष्टम्' इति प्रकृतौ 'विश्वेभ्यो देवेभ्यो जुष्टम्' इति वैश्वदेवे चरौ । बाल. पृ. १२७.

प्रकृतिवदनुकरणं भवति इति न्यायः । प्रकृतिरत्र परमात्मेति गम्यते । अनुकरणं च सदृशीकरणम् । यथा परमात्मसदृशा एव तदवतारा इति बोध्यमित्यन्यत्र विस्तरः । साहस्री. ९११.

प्रकृतिवत् कर्तव्यमिति न्यायः । 'यथान्यायम्' इति सूत्रपदम् । अत्र सुबोधिनी— 'यथान्यायं प्रकृतिवत् कर्तव्य इति न्यायसिद्धम्' इति । पू. ५।४।७।२१.

● प्रकृतिवत् । अतिदेशस्थाने तु गौरवं परिहरद्भिः ग्रन्थकारैः सर्वसामान्य. शब्दः परिगृहीतः 'प्रकृतिवत्' इति । भा. ८।१।१।२ पृ. १५८५.

प्रकृतिवद्विकृतिः कर्तव्या इति न्यायः । अयं महाभाष्यव्याख्यायां कैयटेनोक्तः । तथाहि 'ऊहः खल्वपि' इति भाष्यप्रतीकमादाय 'इह' [illegible]

इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते ■ प्रकृतिः, येनोपजीव्यते सा विकृतिः । ' प्रकृतिवद्विकृतिः कर्तव्या ' इति मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । साहस्री. ५९४.

● उक्थ्यादयः अग्निष्टोमस्य विकृतयः, विशेषस्यैव तत्र प्रत्यक्षोपदेशेन सम्पादितत्वात् । अवशिष्टं तु सर्वमनुष्ठेयं ' प्रकृतिवत् विकृतिः कर्तव्या ' इति न्यायेनैव सम्पाद्यते । ऐब्रासा. १।१ पृ. ५.

● प्रकृतिविकारयोः सादृश्यदर्शनम् । सु. पृ. ५७.

● जगतः ब्रह्मोपादानत्वमेव न कुलधर्मतयोक्तम्, किन्तु प्रकृतिविकाराभेदन्यायेन अद्वैतसिद्धये । कल्पतरुः. पृ. ८७.

● प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते । तथाहि ' येनाश्रुतं श्रुतं भवति ' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । मृदादेः प्रकृतेः सकाशात् घटादेः विकारस्य व्यतिरेकः तात्त्विको भेदः न भवति इति सोऽयं न्यायः रीतिः अन्यत्रापि । शांभा. २।३।६ भष्.

☙ प्रकृतिविकारन्यायः । प्रकृतेः मृदादेः सकाशात् घटादिविकारः यथा तत्त्वतो भिन्नो न भवति एवमन्यत्रापि । प्रकृतिविकाराव्यतिरेकन्यायेन समानार्थकः अयं न्यायो द्रष्टव्यः । के

● प्रकृतिविकारभावो भेदं विना न युज्यते । सु. पृ. ४०९. ● नहि ' दध्यत्र ' इत्यत्र प्रकृतिविकारभावः । शब्दान्तरभिन्नत्वात् यकारः । न च सादृश्यमात्रं दृष्ट्वा प्रकृतिविकृतिर्वोच्यते, नहि दधिपिटकं दृष्ट्वा कुन्दपिटकं च प्रकृतिविकारभावोऽवगम्यते । भा. १।१।६।१६.

● प्रकृतिविकारमात्राभावेन ( पुरोडाशकपालेन इति शब्दे ) तदर्थ्यसमासायोगः । ( पूर्वपक्षे ) । भाट्ट. ४।१।११.

● प्रकृतिविकृत्योः प्रधानतन्त्रं श्रौते मुख्यम् । स्मार्ते तु अमावास्याप्रतीपानश्राद्धादीनां एकदिनकर्तव्यतापत्तौ इति हेमाद्रिणा उक्तम् । याळ. पृ. १४८.

☙ प्रकृतिविकृत्योः समानतन्त्रत्वे विकृतितन्त्रेण प्रकृतेः प्रसङ्गसिद्धिः । ( कृत्वाचिन्ता ) ॥

अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् । १२।२।१३।३३ ॥

भाष्यम्— यदा प्रकृतिर्विकृत्या समानतन्त्रा, तदा किं प्राकृतं तत्र कर्तव्यम्, उत वैकृतम् ? ननु नैव प्रकृतिर्विकृत्या समानतन्त्राऽस्ति । समानतन्त्रा चेदित्येवं कृत्वाचिन्तेयम् । किं प्राप्तम् ? यदि पूर्वं प्रकृतिः प्रयुज्यते तत् प्राकृतम्, अथ विकृतिस्ततो वैकृतम् । किं पुनरत्र युक्तम् ? प्रकृतिरिति । नित्या प्रकृतिः, आगन्तुर्विकृतिरिति । कामे वा निमित्ते वोत्पन्ने आगच्छति । पूर्वापरयोश्च पूर्वदौर्बल्यं प्रकृतिवत् . . . । तस्मात्प्रकृतिः पूर्वं प्रयुज्यते । तस्य तन्त्रं कर्तव्यम्, प्राप्तकालत्वात् । तस्मात् प्राकृतं तत्र कर्तव्यमित्येवं प्राप्तम् । एवं प्राप्ते, ब्रूमः । अपूर्वं च वैकृतं तन्त्रं प्रकृतौ प्रसज्यते, समानतन्त्रा चेत्, अनित्यत्वाद्विकृतेः । अनित्या विकृतिः कामे वोत्पन्ने निमित्ते वा आगच्छति । नैमित्तिकी चिकीर्षा नित्या चिकीर्षा बाधते । तस्या हि निरवकाशा सा भवति । अतस्त्वागच्छन्ती नैवोत्पद्यते । यदि न बाध्येत, अनर्थकं स्याद्वैकृतं विधानम् । यस्य चिकीर्षा प्रत्युपस्थिता तस्य पूर्वं प्रयोगः । तस्माद्विकृतेः पूर्वं क्रिया । यस्य च पूर्वं क्रिया, तत्तन्त्रं पूर्वं यथा कर्तव्यम्, तत्पूर्वपक्षे उक्तम् । तस्माद्वैकृतं तन्त्रं प्रकृतौ प्रसज्यते इति ।

शा— प्रकृतिः यावज्जीवं पर्वणि पर्वणि प्रयुज्यते, विकृतयोऽपि कामेन निमित्तेन वा पर्वण्येवापतन्ति । तत्र प्रकृतिविकृत्योः तन्त्रेण प्रयोगं कृत्वा चिन्त्यते । कामेन निमित्तेन वा यमन्वी विकृतिरेव औत्सर्गिकीं नित्यचिकीर्षां बाधित्वा निविशते इति वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यते इति ( सिद्धान्तः ) ।

मोम— यासां विकृतीनां पर्वकालत्वं ता अत्र विषयः । यथा पशोः प्रकृतत्वात् तन्त्रित्वं पूर्वमिहापि इत्युपस्थिते. संगतिः । सूत्रार्थस्तु— विकृतिः प्रकृत्या समानतन्त्रा चेत् अपूर्वं वैकृतं प्रसज्येत, विकृतेः तद्बाध विना निवेशासंभवात्, अन्यथा वैकृतविशेषाम्नानमनर्थकं स्यात् इति ।

नि— 'प्रकृतिर्विकृतिश्च स्यात् दर्विणी, प्रकृति र्यत । नियाऽशानुपदिष्टाङ्गा, सैव कामवलित ॥'

भाट्ट— यत्तावत् काम्या नित्या वा विकृतयस्ताश्च 'य इष्ट्या' इत्यनेन पर्वकालविधानात् पर्वणि सद्य स्थालस्था कृत्वा प्रकृतेरन्वाधानमिति नैव तत्र तत्र प्रसङ्गविचार. । यद्यपि पवित्राशादिनिमित्तकेष्ट्यादौ नियमेनैव प्रकृतिप्रयोगमध्ये निमित्तपात तत्र तस्य एव प्रसङ्गिन्वनिरपेक्षाविवादम् । तत्र प्रायशो नैव सातदस्यादि, यद्यपि वा भवेत्तथापि तस्य निरवकाशत्वात् तदङ्गे प्रकृते रेव प्रसङ्गित्व प्रकृतायतो तु विकृतेरिति ध्येयम् । यत्र तु प्रयोगमध्ये गृहदाहेष्ट्यादि, तत्र प्रकृतेरेव तन्त्रित्वम्, सातदस्यादे प्रयोगबहिर्भावनिमित्तपाठस्थले सावकाश त्वात् । यत्र तु प्रकृत्युपक्रमवेलायामेव यस्या कर्मनियतो निमित्तपात , तदापि यस्तुनो विकृति तत्काल कृत्वैर प्रकृत्यारम्भ इति न कश्चित् प्रसङ्गबाधावकाश । प्रकृतिविकृत्यो सादृश्यस्थले कृताचितया तु प्रयोगैक्य निवार्यते, विरुद्धपदार्थादौ कस्य तन्त्रित्व कस्य प्रसङ्गि त्वमिति । तत्र विकृते प्रकृत्युपनीयकत्वात्तस्या एव प्रसङ्गित्वम्, प्रकृतेस्तु तन्त्रित्वम्, तस्याङ्गग्राहकत्वाभावे अतिदेशान्वेषणापत्ते । इति प्राप्ते, तस्या पाशद्वयग्राहकत्वेऽपि इतराङ्गग्राहकत्वे बाधकाभावात् विकृत्यङ्गभूतस्य च सामदस्यस्य च निरवकाशत्वात्तस्या एव तद्विषये तन्त्रित्व प्रकृतेश्च प्रसङ्गित्वम् । प्रयाजादिविषये तु तस्या एव तन्त्रित्व विकृतेश्च प्रसङ्गित्वमङ्गग्राहकत्वानुरोधादिति ध्येयम् ।

मण्डन— 'प्राप्ये तत्र तु वैकृतम् ।'

शङ्कर— 'विकृते प्रकृति प्रति ।' तन्त्रित्वम् ।

• प्रकृतिविकृतिषु परस्य धर्मा परस्य न भवन्ति । भा ६।३।१।५

• प्रकृतिविकृत्यना मध्यकर्मोदश्चिदायेन्द्रियस्य सद्यस्य आपने पयमानग्निनात् । भाट्ट. पृ. १००

• प्रकृतिविकृत्युभयात्मक वैदिक कर्म यथा दर्शहोमा नारिष्ठस्य गृह्मेधीयादि च । भाट्ट पृ ८५

• प्रकृतिविकृत्युभयात्मक वैदिक कर्म यथा अग्नीषोमीयपशुर्नैऋत्यपशुरादि । भाट्ट पृ ८५.

• प्रकृतिविकृतिलक्षणकर्मणां मध्य । आग्नेयं च आधान इति सर्वार्थमाधानम् । ३।६।१।१४-१५

• प्रक्रम रीति, व्याख्यानप्रकार इति यावत् । सु पृ ६०

ॐ प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् । ६।२।३।१४ ॥

'कारीर्या वृष्टिकामो यजेत' 'प्रजाकामो यजेत' इत्यादि काम्य कर्म श्रुतम् । तत्र कारीर्यां आरब्धायां यदि वृष्टिर्लब्धा तदा किं आरब्ध कर्म तत्रैव त्यक्तव्यम्, नियोगत परिसमापनीय वा इति विचार । तत्र आरब्ध कर्म नियोगत परिसमापनीय इति सिद्धान्त । तदाह प्रक्रमात् आरम्भात् अनन्तर समापन नियम्येत । आरम्भोत्तर नियमत समाप्ति कर्तव्या । क्रियाया समापनक्रियाया निमित्त आरम्भस्य । समाप्तिनिमित्त मारम्भ । तस्मात् समाप्ते प्राक् लब्धेऽपि फले निवृत्तेऽपि वा कामे प्रारब्ध कर्म समापनीयमेवेति सिद्धान्त ।

फलार्थित्वाद्वाऽनियमो यथाऽनुपरान्ते । १५॥

अथ पूर्वपक्षमाह । वाशब्द सिद्धान्तपक्ष व्यावर्तयति । अनियम स्यात् फललाभादावपि कश्चित् आरब्ध समाप्नुयात् कश्चित् अर्धत एव त्यजेत्, न समाप्नुयात् । न नियमस्तत्र । कुत । फलार्थित्वात् । फलार्थी कर्म आरभते । लब्धे तु फले क्रियाफलप्रदेन कर्मणा । तस्मात्र समाप्तिनियम । यथा अनुपराान्ते । येन अद्यापि कर्म नैव उपक्रान्तम्, न तस्य समाप्तिनियम अनुपक्रान्त त्वादेव । तथा उपक्रान्तेऽपि कर्मण फलार्थत्वात् फलस्य लब्धत्वात् न समाप्तिनियम स्यात् । तस्मात् समाप्ति अनियम इति पूर्व पक्ष ।

नियमो वा तन्निमित्तत्वात् कर्तुस्तत् कारण स्यात् । १६ ॥

सिद्धान्ती आह । वाशब्द अनियमनिरासार्थ । न समाप्तेरनियम । किन्तु आरब्ध समापनीयमेवेति नियम स्यात्, तन्निमित्तत्वात् । आरम्भस्येति पूर्वतनेनान्वर्तते । आरम्भस्य तन्निमित्तत्वात् समाप्ति निमित्तत्वात् । समाप्त्यर्थमेवारम्भ, न मध्ये त्यागाय । तत् आरम्भ अवसानकर्तुं कारण विधिनिर्देशकरण

स्यात् । अथवा कर्तुः आरभ्य समापने तत् कारणं मन्यर्थकत्वता कारणं स्यात् । यो हि आरभ्य न समापयति तं शिष्टा विगर्हन्ते 'अक्रमिकोऽयं अस्थ व्यवहार.' इति । तत् शिष्टाः पुन. किमर्थं विगर्हन्ते । तथाह भाष्यकारः– 'उच्यते, विगर्हन्ते तावत्, किं नो विदितेन कारणेनेति' इति । तस्मात् आरभ्य समापनीयमेव इति सिद्धान्तः ।

तत् कारणं स्यात् आरभ्य असमापनं प्रत्यवायस्य कारणं स्यात् इति सुबोधिनी ।

शिष्टविगर्हणं कारणं स्यात् निन्दाबोधकस्मृत्युपलब्धो मूलं स्यात् इति कुतूहलम् । के.

● 'प्रक्रमात्तु नियम्येत०' इत्यत्र प्रक्रान्तं कर्म अवश्यं समापनीयं इत्येतदुपपादनार्थं भाष्यकृता उपक्रमादारभ्य समाप्तिपर्यन्तस्य व्यापारसमूहस्य आख्यातेन विधित्सित-त्वात् ......यागादि समापयेत् इति शास्त्रार्थः इत्यादि सूचितम् । सु पृ. ७४१. ● द्वादशवार्षिकसत्रवाक्यानां अयनादिषु तत्तत्फलेच्छया प्रवृत्तस्य मध्ये वीतफलेच्छस्य फलप्रवृत्तिफलेच्छया प्रक्रोपासनाया प्रवृत्तस्य तन्मध्ये एव फलोपाख्यसाक्षात्कारस्य 'प्रक्रमात्तु नियम्येत०' इति न्यायेन (६।२।३।१३) अवश्यसमापनीयत्वेन प्रमाणानि द्वादशवार्षिकसत्रादीनि । परिमलः. ४।१।१२।१६ ब्रसू. ● शिष्टविगर्हणान्यायानुसारया प्रयोगसमाप्तिं प्रति कामना-दिमत् प्रयोगप्रक्रमस्यापि अनुग्राहकत्वं षष्ठे 'प्रक्रमात्तु०' इति सूत्रे वक्ष्यते । मी. २।१।२।५ पृ. ११.

● प्रक्रान्तमवश्यं समापनीयम् । पा. ६।२।४।१६ पृ. १४१६.

● प्रक्रान्तासमाप्तिदोषपरिहारार्थं (अवश्यमेव) प्रायश्चित्तं होमः कर्तव्यः, सायंहोमे कृते यदा नाम यजमानस्य कदाचित् आरत् (मरणम्) भवति तदा । (इदं सायमातरग्न्योऽप्येनैव एव प्रयोगः इति पक्षे) । शा. २।१।५।१६ पृ. ५०८.

● प्रक्रान्तनियमत्यागे शिष्टाचारविरोधः । शा. ११।१।६.

● प्रक्षाल्नादि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायः । (पङ्कप्रक्षालनात्पादोऽपि मलिनैव) । पङ्कलेपने प्रक्षालनेन पङ्कस्पर्शनमेव न कर्तव्यमिति लोकप्रसिद्ध-तदन्यत्राप्यनिष्टसाधनस्य कारणान्तरेण निवारणमपेक्ष्य अनिष्टसाधनमेव न कर्तव्यमिति यत्र विवक्षा, तत्रास्य प्रवृत्तिरिति । साहस्री. ३४२.

● कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति 'प्रक्षालना० वरम्' इति (शङ्का) । शां. भा. ३।२।६।२२ ब्रसू. ● तादृशाभावे अशक्तिमित्यत्वे निश्चित्य निषेध्य तत्सार्थक्यस्य 'प्रक्षा-लनादि०' इति न्यायेन अयुक्तत्वात् । विवृ. पृ ८७, ● न च 'प्रक्षाल्नादि० वरम्' इति न्यायेन पूर्वं तदुपगम एव वृथा इति वाच्यम्, तस्य शिष्यबुद्धिवैशद्यार्थ-त्वात् । पृ. ८७. ● यदि पुण्यस्यापि अश्लेषविनाशौ, हन्त नित्यमपि अग्निहोत्रादि न कर्तव्यं मोक्षमाणमुमुक्षुणा, तस्यापि इतरपुण्यवत् क्रियया विनाशात् 'प्रक्षाल्नादि० वरम्' इति न्यायात् । भामती. ४।१।१३।१६ ब्रसू.

● प्रक्षेपः अङ्गम्, यागः प्रधानम् । 'यस्तत्र यागः, तस्य प्राधान्यम् । यस्तु प्रक्षेपः, स अङ्गमेव' । शा. ३।४।१४।४१ पृ. ९८२. ● प्रक्षेप. यागस्तत्रैव त्यागाङ्गद्रव्यसम्बन्धकः । भाट्ट. ४।१।७, ● प्रक्षेपस्य (आत्मप्रक्षेपस्य) स्विष्टकृद्यागः प्रयोजको मन्त्रेव । ४।१।११.

● प्रक्षेपांशस्यापि प्राधान्यकोटौ निवेश इत्येतत्तु न मृष्यामहे, प्रक्षेपस्यापि प्राधान्ये सति तस्य विकृतिष्वति-देशानापत्तेः 'कर्मणस्तत्प्रवृत्तित्वात्' इत्यादिमिताधि-करणे वक्ष्यमाणत्वात् । कु. ३।८।१८।४७ पृ. ३८७.

● विरोध्यन्तरा प्रतीतस्य त्यागांशस्य प्रक्षेपाङ्गत्वे प्रमाणाभावः । भाट्ट. ८।१।७.

● प्रक्षेपमात्रस्य विधिः चतुरवत्तसंस्कारार्थम् 'चतु-रवत्तं जुहोति' इति । के.

● प्रगाथः । प्रकर्षे हि प्रशब्दो द्योतयति । प्रकर्षेण गान यत्र स प्रगाथः । कथं प्रकर्षः ? यत् किंचित् पुनर्गायति । भा. ९।२।५।१७ वर्णक १, न हि (प्रगाथ-शब्दः) प्रकर्षे गानस्य भवति । प्रकर्षश्चेद् पुनः पादे उपादीयमाने भवति । वर्णक २. ● प्रगाथः, प्रकर्षेण गान यत्र । प्रकर्षश्च आम्नातात् ऋक्पाठात् आधिक्यम्, तच्च पादाभ्यासपुरःसर ऋगन्तरसंघटनेन भवति । ऋचोः

विशृणा या ऋचा प्रग्रथनात् प्रगाथः । वि. ९।२।६ वर्णकं १. (प्रगाथभेदस्तु ऋग्वेदीयसर्वानुक्रमण्यामुक्तः खण्डः ११ । 'बृहती– सतोबृहत्यौ बार्हतः । ककुप् चेत् पूर्वा, काकुभः । महाबृहती– महासतोबृहत्यौ महाबार्हतः । बृहतीविपरीते विपरीतोत्तरः । अनुष्टुप्, गायत्र्यौ चानुष्टुभः ।' इति पञ्च प्रगाथजातयः । के. ) ● प्रगाथेन । स्वयोन्युत्तरयोर्बृहतीपङ्क्त्योरेव प्रग्रथनेन संपादितककुभोरेव बृहद्रथंतरयोर्गानं ज्योतिष्टोमे । ९।२। ६।२५–२८ वर्णकं १. ● प्रगाथस्य ऐन्द्रस्य प्रकरणात् ज्योतिष्टोमाङ्गत्वे अवगतेऽपि द्वारविशेषापेक्षायां पृष्ठाख्य-स्तोत्रद्वारत्व क्रमादवगम्यते । सु. पृ. ६४२.

● प्रगाथप्रग्रथनपद्धतिः । 'रथंतरं पृष्ठं भवति' इति चोदनया रथंतरयोनित्वेन 'अभि त्वा शूर' इति ऋचः उपस्थितिः । 'एक साम तृचे क्रियते स्तोत्रीयम्' इति च स्तोत्रसाधनभूतस्य साम्नः तृचाधारत्वश्रुतेः ऋगन्तरापेक्षायाम् 'यद्योन्यां गायति तदुत्तरयोर्गायति' इति योन्युत्तरऋगपेक्षया त्रित्वपूरणविधानात् उत्तराग्न्ये च तदुत्तरत्वेन 'न त्वावान्' इति ऋचः पाठानुप-स्थितिः (एवं सति ऋग्द्वय संपन्नम्,) त्रित्वपूरणं तु तयोः 'पूर्वा बृहती, ककुभावुत्तरे' इति वचनात् (प्रथमऋचः पादत्रयेण एका बृहतीं कृत्वा) प्रथमाया-श्चतुर्थपादेन द्वितीयायाश्च अर्धर्चेन एकां ककुभं कृत्वा, द्वितीयाया द्वितीयादिपादत्रयेण अपरां ककुभं कृत्वा भविष्यति । 'अभि त्वा०, न त्वावान्०' इति ऋग्द्वयं प्रगाथो नाम उक्तरीत्या प्रग्रथनात् । सु. पृ. ६४१–६४२.

● प्रगीतं मन्त्रवाक्यं साम इति तत्रभवन्तश्छन्दसाः स्मरन्ति । गीतयः एव सामानि इति मीमांसासिद्धान्तः । भा. ९।२।१।१–२. ● प्रगीतया 'अयं सहस्रमानवः' इति ऋचा द्वादशाहगते दशमेऽहनि पत्नीसंयाजोत्तर मानसस्तोत्रात् प्राक् आहवनीयोपस्थानम्, न अप्रगीतया । ९।२।८।२९–३० वर्णकं २. ● प्रगीताया एव ऋचः वैकृतापूर्वस्तोत्रसाधनत्वम् । ९।२।८।२९–३० वर्णकं १. 'साम्नैव स्तोतव्यम्' इति विन्दौ अधिकरण द्रष्टव्यम् ।

● प्रग्रथनेन अनुष्टुभो गायत्रीद्वयस्य च संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानम् । ९।२।६। २५–२८ वर्णकं ३, ● प्रग्रथनेन द्वयोर्द्वयोर्ऋचोः गवा-मयने ब्रह्मसामगानं कार्यम् । ९।२।६।२५–२८ वर्णकं ४, ● प्रग्रथनेन बृहतीविष्टारपङ्क्त्योः (बृहती=सतोबृहत्यो.) संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानं ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २.

● प्रचयः एकश्रुतिः तानः इति पर्यायाः । उदात्त–अनुदात्त–स्वरितेभ्यो भिन्नः चतुर्थोऽयं स्वरः । एकः स्वरोऽयम् । वि. ९।२।८ वर्णकं ३, ● प्रचये सति दार्ढ्यं आहार्यंधिया भवति, तदर्थं क्षाय प्रयासो न कृतवियाम् । (प्रचयो बाहुल्यम् । ऋ्जु. ) । बृहती. पृ. २४१.

● 'प्रचरण्या वैसर्जनानि जुहोति' ज्योतिष्टोमे अग्नीषोमीयपश्वालम्भे प्रक्रान्ते सति । नि. ११३।३. (सत्याषाढः– प्रचरण्या चतुर्गृहीतं गृहीत्वा...शाला-मुखीये वैसर्जनी जुहोति स्व सोम तनूकृद्भ्यः इति पूर्वा-माहुतिं जुहोति, जुषाणो अप्तुराज्यस्य वेतु स्वाहेति द्वितीयाम् । ७।८।१७. शेषमाज्यस्य करोति । १८.) ।

● प्रचरणीहोमः । जुहूसदृशपात्रविशेषः प्रचरणी, तत्साधनकः 'जुष्टोऽत्रि० सवितुः हवम्' इत्यादिमन्त्र-करणको होमः । सोम. ५।१।११. ● प्रचरणीहोमः प्रातरनुवाकसमापकऋक्पाठकाले । के. (भा. ५।१।१३। १५ ).

● प्रचरणीहोमादयः अग्नीत्प्रैषात्माकृतनाः पदार्थाः सौमिकाः पश्चात् कर्तव्याः, ततः पूर्वमेव तु सवनीय-निर्वापोत्तर प्रोक्षणादयः अलङ्करणात् पूर्वभाविनः पौरो-डाशिकाः । ज्योतिष्टोमे सुत्यायाम् । सोम. ५।१।१३.

● प्रचरणीहोमादिकं सौमिकं सवनीयपुरोडाशा-लङ्करणोत्तर कर्तव्यम् । वि. ५।१।१२.

● प्रजा विद्या सोमश्च त्रैवर्णिकानां नित्याः, न ब्राह्मणस्यैव । भा. ६।२।११।३१.

● प्रजोत्पादनं लोकसिद्ध्यर्थमपि नित्यम्, 'अनुत्पाद्य सुतान् न लोकं गच्छति' इति स्मृतेः । वि. ६।२।११.

● 'ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकामः'। भा. १०।७।१७।५८, ● 'दाक्षायणयज्ञेन यजेत प्रजाकामः'। २।३।४।५, ● 'यः प्रजाकामः पशुकामो वा स्यात् स एतं प्राजापत्यं तूपरमालभेत'। ( तूपरः शृङ्गरहितः छागः ) । १।२।१।१० पृ. १२४, ● प्रजाकामाः गवामयनमुपेयुः । ७।४।३।१३, ● 'अग्निष्टोमेन प्रजाकामं याजयेत्'। ३।६।१६।८१, ● 'एकत्रिंशेनातिरात्रेण प्रजाकामं याजयेत्'। १०।४।१०।२०, ● 'द्वादशाहेन प्रजाकामं याजयेत्'। १०।५।१।१. ● प्रजाकामस्य नवरात्रादयस्त्रिरात्राः कातीये । याज्ञ. पृ ३४.

● 'प्रजापतिरात्मनो वपामुदक्खिदत्' इत्यस्यार्थोऽयम्— नित्यः पक्षिरूपैः स्यात् प्रजापतिर्वायुरूपश्च आदित्यो वा । स आत्मनो वपामुदक्खिदत् इति वृष्टिं वायुं रश्मिं वा । आत्मनो मनसः वेद्युते आग्निं लौकिके वा । ततः अज इति अपं वीजं बीजद् वा ( आर्गसि शरीरान्तर्वर्तिनि । भा., ऋत्वीकशब्दस्य शरीराचितात् तदन्तर्वर्ती भक्तिः आर्गीसः अभिधीयते । सु. पृ. ५९ ) । भा. १।२।१।१०, ● प्रजापतिः । उत्तानुधर्मागी हि निष्फुतयापत्री । १।२।४।१० पृ. ४९५. ● प्रजापतिरेष योगी सहस्राक्षो पुण्यकर्मकृत्याम्युपगमेन, पशूनाममयात् स्वमाहात्म्येन आत्मन एव पशुरूपमभिनिर्माय वपोत्खननादि कृतवान् । वा. १।२।१।१० पृ. १२६. ● प्रजापतिः विष्णुः अग्नीषोमौ वा उपांशुयाजे देवता । 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु०, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । भा. १०।८।१७।६१–६३.

※ प्रजापतिः सप्तदशो दृष्टार्थ एव ॥

'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इति श्रुतः 'आश्रावय' इत्यादिशब्दा अदृष्टार्था एव पूर्वपूर्वमपेक्ष्योत्तरस्मारणेन दृष्टप्रयोजनान्तराभावात् । कदिरित्यं यस्य दृष्टार्थेन पराङ्मुखतयोत्तरप्रसिद्धमारि सम्भवतोऽपि स्तुतिर्भवात् । 'आश्रावय इति चतुरक्षरम्' इत्यादिश्रुतौ 'चतुर्मिश्र पञ्चमिश्र' इत्यादिश्रुतौ च मन्त्रसीयान्तस्य 'आमार ई निश्चति क्षेमयन्तः' 'कामो योनिः कमला धनपाणिः' इत्यादिश्रुतिषु मन्त्रोद्धारस्यैव उद्धियमाणानामदृष्टार्थत्वे एव सामञ्जस्यञ्च । इति प्राप्ते, प्रकृतिप्रत्ययार्थविभागेन 'पृच, पश्यामि' इत्यादाविव प्रैषप्रतिवचनार्थत्वावगतेः अनुभूयमानाया परित्यागायोगात् मन्त्रोद्धारस्य नियमादृष्टार्थतया स्तुत्यर्थतया चाविरोधात् दृष्टार्थ एव सप्तदशः । सूत्रभाष्ययोः 'यज, येयजामहे' इत्यनयोरेवोदाहरणं, तु लिङ्गदर्शनानुगुण्याय प्रैषप्रतिवचनार्थप्रतिपत्त्यन्वेन तत्र अध्वर्युहोत्रोरेव कीर्तनात् । संकर्ष. १।३।१.

● प्रजापतेरुपाकृतं धर्मः । 'तस्मात् यत् किञ्चित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते' इति । भा. १०।८।१७।५१. ● प्रजापतेरकार्यम् 'प्रजापतिरुषसमभ्यैत् स्वां दुहितरम्' इत्यगम्यागमनरूपात् अधर्माचरणात् धर्मव्यतिक्रमः । वा. १।३।१।७ पृ. २०३ । ( नैवं ) प्रजापतिस्तावत् प्रजापालनाधिकारात् आदित्य एवोच्यते । स च अरुणोदयवेलायां उषसं उद्यन् अभ्यैत्, सा तदागमनादेव उपजायते इति तद्दुहितृत्वेन व्यपदिश्यते, तस्यां च अरुणकिरणाख्यबीजनिक्षेपात् स्त्रीपुरुषयोगवदुपचारः । पृ. १०८. ● प्रजापतेः तूष्णीम्भावधर्मस्वविधानम् 'प्रजापतिं मनसा यजेत' इति । सु. पृ. ७५५, ● प्रजापतेः प्राधान्यप्रसिद्धिः 'एत इति वै प्रजापतिर्देवानसृजत' इति श्रुतेः । पृ. ७५५. ● प्रजापतेर्मुखात् अग्निश्च ब्राह्मणश्च इत्युभौ उत्पन्नौ, ततो ब्राह्मणस्य अग्निरेक एव देवता इति आग्नेयः एव ब्राह्मणः । यदा तु स सोमेन यजते तदा स ब्राह्मणः अग्नीषोमीयः स्यात् । अतः सोमानुष्ठानोत्तर अग्नीषोमीयः पुरोडाशः कर्तव्यः । वि. ६।६।१४.

● प्रजापतेर्हृदयं नाम साम । तद् अरुचि उत्पत्तम् । 'प्रजापतेर्हृदयमनुच गायति' । भा. ७।२।११४.

● प्रजापतिव्रतम् । 'नेक्षेतोद्यन्तमादित्यम्' अत्र नञ्-ईक्षतिभ्यां दिवसादर्शनरूपभिषेध स्वाङ्गना निषिध्यते । उदयादित्येक्षणाभावसङ्कल्परूपा एव उदये निषिध्ये विधीयते । भाट्. ४।१।१३, ● प्रजापतिव्रतम् ।

'नेक्षेतोद्यन्तमादित्यम्' इत्यादि पर्युदास आर्थवादिकफलप्रयुक्त । ४।१।२ ● प्रजापतिव्रतानि उद्यदादित्यानीक्षणसंकल्पादीनि पुरुषार्थानि । ४।१।३ 'प्रजापतिव्रताधिकरणम्' इति गिन्दौ द्रष्टव्यम् । ● प्रजापतिव्रतानां फलेन सम्बन्ध 'एतावता हैनसा वियुक्तो भवति' इति । शा ३।४।८।२४

■ प्रजापतिव्रताधिकरणम् । प्रजापतिव्रतानि उद्यदादित्यानीक्षणसंकल्पादीनि पुरुषार्थानि ॥

तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्य चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुति । ४।१।३।३ ॥

भाष्यम्— इह प्रजापतिव्रतान्युदाहरणम् । 'नोद्यन्तमादित्यमीक्षेत, नास्तं यन्तम्' इत्यादीनि । तत्र सदेह किं क्रत्वर्थानि प्रजापतिव्रतानि, उत पुरुषार्थानीति । किं प्राप्तम् ? क्रत्वर्थानीति । कुत ? एवं हि फलं न कल्पयितव्यं भविष्यतीति । ननु श्रूयते एतेषां फलम् 'एतावता हैनसाऽयुक्तो भवति' इति । उच्यते । नैतत् फलवचनम्, वर्तमानापदेश एवैष शब्द इति । तेन यत्र आदित्य ईक्षितव्य प्राप्त तत्राय प्रतिषेध । उत्तरत्र अस्तं यतश्च नियमो वा स्यात् कस्मिन् कर्माङ्गभूत । एवं प्राप्ते, ब्रूम । तदुत्सर्गे प्रीत्युत्सर्गेऽपि कर्माणि पुरुषार्थाय भवेयुरेवञ्जातीयकानि । कर्तुरेतानि उपदिश्यन्ते न कर्मण । अर्थप्राप्तेन कर्त्रा सम्बन्धो य स विविदित । न कर्मसम्बन्ध अविद्यमान एव । शास्त्रं च अनतिशङ्क्यं पितृमातृवचनादपि प्रमाणतरम् । स्वयं हि तेन प्रत्येति । इन्द्रियस्थानीयं हि तत् । न च एवमादिभिर्द्रव्यं कश्चिद् दृष्ट उपकार साध्यते । तस्मात् तेन पुरुषार्थेन अभिसंयोगात् क्रियायामेवञ्जातीयकायां पुरुष श्रूयते । अपि च पुरुषफल पदार्थविधिमात्र लक्षयितुमुच्चार्येत । स्वधर्मविवक्षित स्यात् । अथ यदुक्तम्, यत्र आदित्यस्येक्षणं प्राप्तम्, तत्र उद्यतोऽस्तं यतश्च प्रतिषेध इति । तत्र प्रतिषेधो न्याय्य । तथा श्रुतिरनुगृहीता, इतरथा नियमो लक्ष्येतेति । किन्तु इह नियम शब्देन श्रूयते, तस्य व्रतमिति तेन नियम एव 'नोद्यन्तादित्य ईक्षितव्य' इति । अपि च, 'एतावता हैनसाऽयुक्तो भवति' इति पुरुषसंबद्धो दोष कीर्त्यते, न कर्मसंबद्ध । तस्मात् पुरुषार्थानि प्रजापतिव्रतानीति । योऽन्यथानामपि एवमेव कर्तृनिकर्षे कर्तव्या इत्येवमादीनि ।

टुप्—तदुत्सर्गे पुरुषश्रुति ॥ (यदि प्रीत्यभिमतत्वात् द्रव्यार्जनस्य पुरुषार्थत्वेऽपि फलकल्पनाऽभावात् पुरुषायत्तता प्रीत्युत्सर्गे, तर्हि प्रजापतिव्रतानां अप्रकरणस्थानामपि फलकल्पनाभयात् क्रत्वर्थत्वमस्तु इत्येव प्रस्तूयते । तत्र प्रतिषेधत्वादेव तावत् क्रत्वर्थत्वं युक्त इत्येतत् प्रतिपादयन् प्रतिषेधत्वं समर्थयते–) 'नोद्यन्तमादित्यमीक्षेत' इति । ननु–उद्यदादित्य ईक्षितव्य. कर्तव्यतावचनं (प्रत्ययेन इत्यर्थं) सम्बध्यन्ते । (यथा उद्यत आदित्यस्य प्राप्यकर्मतया सम्बन्ध, यथा च ईक्षणिवाचो करणतया सम्बन्ध ईक्षणेन आदित्यं प्राप्नुयात् इति, एवं नञोऽपि तेनैव सम्बन्ध 'न प्राप्नुयात् उद्यन्तमादित्यं ईक्षणेन' इति) एवम् (प्रत्ययसम्बन्धे सति) श्रुतिवृत्तानि पदानि भवन्ति, न लक्षणावृत्तानि । यदा तु नञ् धात्वर्थे (नञुपपदयो इति वा पाठ) सम्बन्ध, तदा स्वार्थं हित्वा वस्त्वन्तरं लक्षयन्ति । (अपदानिवमाभिप्रायेण बहुवचनम् । उदाहरणबहुत्वापेक्षं वा बहुवचनम्) । तस्मात् (लक्षणादोषात्) प्रतिषेध । स च प्राप्तिपूर्वक । प्राप्तिश्च दर्शपूर्णमासादिषु विद्यते । सा प्रतिषिध्यते । एवं च फलं न कल्पयितव्यम् । यद्यपि नैष प्रतिषेध (किन्तु अनीक्षणं नाम अन्तःकरणसंकल्पकप नियम्यते) तथापि फलकल्पनाभयात् क्रत्वर्थं (एवायम्) नियम । (ननु) 'एतावता हैनसा अयुक्तो (युक्तो इति क्वचित् पाठ) भवति' इति (अनेन एनोनिर्हरणस्य फलस्य श्रवणात् न फलं कल्पनीयम्, अत आह–) फलश्रवणेऽपि (न फलविधि) । एवं प्राप्ते, ब्रूम । नायं प्रतिषेध । 'तस्य व्रतम्' इति हि प्रकृत्य 'नोद्यन्तमादित्यमीक्षेत' इति (वचनम्) । 'व्रतम्' इति च सामान्येन कर्म उच्यते । तत् विशेषमाकाङ्क्षमाणं अनेन विशेष्यते 'तत् इदं कर्म' ('नोद्यन्तमादित्यमीक्षेत' इत्यादि) इति । प्रतिषेधे हि पूर्व (सामान्यवचन)

साकाङ्क्षमेवावतिष्ठेत। तेन च अश्रुतः कर्मविशेषो गृह्येत। एवं च वाक्यभेदात् द्विः अदृष्टं कल्प्येत (पूर्वं कल्पयित्वा पुनरत्र कल्प्येत)। एवं प्रतिषेधे बहु असमञ्जसम्। अतः (अस्मात्) विरोधात् न (नञ्) कर्तव्यतावचनेन संबध्यते। तस्मात् अच्युतः अनन्तरेण ईक्षतिना संबध्यते। अतः (अनीक्षणरूपः) नियमोऽयम् (कर्तृधर्मश्चोद्यते)। अर्थक्रमेण विपरिवर्तमानेन अस्ति कर्त्रा संबन्धः। श्रुत्याद्यभावात् नास्ति क्रतुना (संबन्धः)। (सूत्रे-) 'शास्त्रस्य अनभिसङ्ख्यत्वात्' इति क्रत्वर्थेऽपि तुल्यत्वात् (नायं हेतुः पुरुषार्थैकान्तिकः इति-) कस्य चित् आशङ्का स्यात् इति तन्निवृत्त्यर्थम् (सूत्रे उक्तम्) 'न च द्रव्यं चिकीर्ष्यते' इति। (तत् व्याचष्टे -) न च क्रत्वर्थं द्रव्यं संस्क्रियते विक्रियते वा (प्रदर्शनमेतत् प्राप्तिनिवृत्त्योरपि), येन सामर्थ्यात् तत्संबन्धेन प्रणाड्या क्रत्वर्थता स्यात्। अतः पुरुषार्थान्येतानि।

(किं पुनरेतानि काम्यानि, अथ नित्यानि इति विचार्यते। तत्र कश्चित् तावदाह-) फलार्थिना कार्याणि इत्येवमर्थं उपदेश एषाम् (विधानिषेधादिषम्। तन्निराकरोति-) न (न फलार्थिना कार्याणि इत्येवमर्थं उपदेशः। किं तर्हि इत्याह-) नित्यत्वेन संध्योपासनादिवदिति। ननु ईक्षणाभावः अनीक्षणम् (तस्य) अभावत्वात् कर्तव्यता न घटते। सत्यम् (नाभावस्य विधिः। भाव एव तु अत्र लक्षणया विधीयते संकल्परूपः इति प्रतिपादयन् लक्षणनिमित्तं संबन्धं दर्शयति-सर्वेम-) प्रवृत्तौ वा निवृत्तौ वा (कर्तव्यायाम्) मानसं व्यापारमङ्गीकृत्य प्रवर्तते निवर्तते वा। (अत्रापि अनीक्षणं कुर्वाणः) आदित्यस्य अनीक्षणं कर्तव्यमिति मनसा सङ्कल्पयति। अतः अनीक्षणस्य (ईक्षणाभावस्य) मानसो व्यापारः (सङ्कल्पाख्यः) अविनाभूतः। तस्य अविनाभावात् (ईक्षणाभावः शब्दाभिहितः) शक्नोति (तम्) लक्षयितुम्। यथा आकृतिर्व्यक्तिम्। स्वर्गादीनामभावशब्दानामपि तदभावाविनाभावाभावात् न तेषां कर्तव्यता (लक्षणार्हा)।

('अपि च पुरुषप्रयत्नः कृतिः' इत्यादिभाष्यं व्याचष्टे-) क्रत्वर्थत्वे (सति) विधायकः कर्मोत्पत्तिमात्रनिष्ठ एव भवेत् (उत्पत्तिग्रहणं विनियोगस्याप्युपलक्षणम्)। एवं च (सति) यदेवास्य तादर्थ्यप्रतिपादकत्वम् (प्रयोगप्रतिपादकत्वमित्यर्थः) तदेव हीयेत, प्रयोगवचनेन कृतत्वात्। तस्मात् स पक्षो ग्रहीतव्यः, यत्र विधायकः अर्थवान्।

अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥४॥

भाष्यम्-- उच्यते। यद्येवम्, इमान्यपि पुरुषार्थानि स्युः, 'समिधो यजति, तनूनपातं यजति' 'नानृतं वदेत्' इत्येवमादीनि। अत्रापि पुरुषप्रयत्नसंकीर्तनम्, अत्रापि न द्रव्यं चिकीर्ष्यते इति।

अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसंबन्धात् ॥५॥

भाष्यम्-- अपि वेति पक्षव्यावृत्तिः। नैतदस्ति, समिदादीन्यपि पुरुषार्थानि प्राप्नुवन्तीति। कारणाग्रहणे पुरुषार्थानि प्रजापतिव्रतानि भवेयुः। न तत्र श्रुत्यादिकं किञ्चित् कारणं गृह्यते, येन कर्मणामङ्गभूतानीति गम्यते। तस्मात्तानि पुरुषार्थानि। अर्थेन कर्मणो नाभिसंबन्धः प्रजापतिव्रतैः। इह तु समिदादीनां प्रकरणं नाम कारणं गृह्यते। येन कर्मार्थानीति विज्ञायते। तस्माद्विषम उपन्यासः। पुरुषप्रयत्नश्रेरे इति अनुवादः।

तथा च लोकभूतेषु ॥६॥

भाष्यम्-- लोकेऽपि विष्णुकार्यादिषु प्रयोजनपरस्तु यदसंयुक्तं फलेन श्रूयते, तत् तदङ्गं विज्ञायते इति मन्यमाना उपवास वर्तोः दोषदिदर्शैव कृतिनो मन्यन्ते, न क्रत्वे, इदमस्य प्रयोजनतोऽङ्गमिति। तथा च अपरेऽपि मन्यमाना न दुरुक्तं मन्यन्ते। तस्मात् समिदादीनि कर्माङ्गाणि, न प्रजापतिव्रतानीति सिद्धम्।

शा-- 'प्रतिषेधे श्रुतिः शब्दः, पर्युदासे तु लक्षणा। प्रतिषेधश्च सन् प्राप्तिं मार्गमाणः क्रतुं व्रजेत् ॥' इति प्राप्ते, ब्रूमः। 'उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः। तदन्वयवशात् कर्मविशेषोऽतोऽत्र चोद्यते ॥ तत्र लक्षणयाऽप्यत्र पर्युदासः, स च क्रतोः। यदि: श्रुतः फलाकाङ्क्षी पुरुषार्थत्वम-

च्छति ॥ श्रुत्यादि क्रतुसम्बन्धे प्रमाणं नात्र विद्यते । पुरुषापेक्षितार्थत्वं विधिना चावबोधितम् ॥ साक्षादपेक्षितं तस्य फलमेव न तु क्रतु । अतः फलार्थता, तच्च वाक्यशेषादघक्षय. ॥ '

सोम— द्रव्यार्जनवत् प्रत्यक्षेण प्रीत्यनवगमात् क्रत्वर्थत्वमेन इति प्रत्ययस्थानात् सगतिः । फलकल्पना भयात् क्रत्वर्थत्वस्य विश्वजित्– रात्रिसत्र– हिरण्यधारणा द्रारापि वक्तु शक्यत्वात् तेषामपि एतदधिकरणविषयत्व मित्याहु । सूत्रार्थस्तु– तस्या प्रीतेरलम्भेऽपि द्रव्यार्जनादिवत् प्रीत्यनुपलम्भेऽपि प्रजापतिव्रतादीनि पुरुषार्थानि शास्त्रस्य अनतिशङ्क्यत्वात् शास्त्रेण पुरुषार्थत्वे चोद्यमाने प्रीत्यभावप्रयुक्ताशङ्काया. अनवकाशात् इति यावत् । शास्त्रस्य क्रत्वर्थत्वेऽपि उपपत्तिमाशङ्क्य आह– न चेति । न च एभि. कर्मभि क्रतूनन्धि द्रव्य चिकीर्ष्यते क्रत्वर्थद्रव्यसम्बन्धो नैषामिति यावत्, येन तद्द्वारा क्रत्वर्थता स्यात् । अत. तेनार्थेन पुरुषार्थेन सम्बन्धात् ईक्षणादिक्रियाया पुरुषस्य कर्तृत्वेन शेषित्वेन वा श्रुतिरिति ।

वि— ' नेक्षेतोद्यन्तमादित्य क्रत्वर्थं [illegible] वा, ऽपि न. । फलस्याकल्पनीयत्वात् क्रतौ प्राप्त निषिध्यते ॥, प्रतोक्त्या पर्युदासत्वे संकल्पोऽनीक्षणेऽत्र स. । न क्रत्वङ्गममानत्वात् पुमर्थं पापहानये ॥ '

भाट्ट— ' तस्य व्रतम् ' इत्युपक्रम्य स्नातकपुरस्कारेण 'नेक्षेतोद्यन्तमादित्य नास्त यन्त कदाचन । नोपसृष्ट न वारिस्थ न मध्य नभसो गतम् ॥ ' इत्यादि प्रजापतिव्रत श्रुतम् । तत्रापि भाष्यकारादिभि. प्रतिषेधत्वे पर्युदासत्वे च उभयथाऽपि फलकल्पनाभिया क्रत्वर्थत्वमाशङ्क्य अनारभ्याधीतत्वात् श्रुत्याद्यभावेन क्रत्वर्थत्वानुपपत्ते: पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्व सिद्धान्तितम् । तदपि कलञ्जभक्षणप्रतिषेधहिरण्यधारणन्यायेन क्रत्वर्थत्वशङ्काऽनुपपत्तेरुपेक्षितम् ।

विचारस्तु एवमेवात्र कर्तव्य. किमयं प्रतिषेध पर्युदासो वेति । सिद्धान्ते अर्थवादिकफलप्रयुक्तत्वात् प्रतिषेधपक्षे च तदभावादध्यायसंगतिः । तत्र नञः प्रधानान्वयस्य अभ्यर्हितत्वात् भावनाऽन्वयव्युत्पत्तेर्धात्वर्थान्वयस्य लक्षणादिभिया अनुपपत्तेः पर्युदासत्वायोगात् रागप्राप्तोद्यदादित्येक्षणभावनायाः प्रतिषेध एवायं पुरुषार्थ कलञ्जभक्षणादिप्रतिषेधवत् । अतश्च निषेधेन ईक्षणस्य अनिष्टसाधनत्वाक्षेपेऽपि फलान्तराकाङ्क्षाऽभावात् 'नैनावता एनसा युक्तो भवति' इत्यार्थवादिकपापक्षयफलकल्पनाऽनुपपत्ते नार्थवादिकफलप्रयुक्तत्वम् । अर्थवादस्तु ईक्षणजन्यप्रत्यवायाभावबोधनद्वारा ईक्षणनिन्दा । इति प्राप्ते, ' तस्य व्रतम् ' इति व्रतशब्देन उपक्रमरूपेन अनुष्ठेयक्रियाप्रतिपादनात् तदनुरोधेन उपसंहारस्थो निषेधोऽपि अनुष्ठेयामेव क्रिया विधत्ते । अत एव नञीक्षतिभ्याम् ईक्षणाभावसंकल्परूपक्रियैव लक्षणया विधीयते । मानससंकल्पस्य प्रवृत्तिनिवृत्त्यविनाभूतत्वात् ईक्षतिरेव वा लक्षक:, नञ्पद तात्पर्यग्राहकम् । न चैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयापत्तिः, कारकाणा प्रथमतो भावनाऽन्वयस्यैव स्वीकारेण एकदेशान्वयाप्रसक्ते । लभते हि सोमादीना प्रथमत एव धात्वर्थे अन्वय, इमते एवेद दूषणम्, न त्वस्मन्मते । अत्र अभीप्सितकर्मत्वेन सक्तुवत् लक्षितकरणत्वेनैव वा भावनाऽन्वय । पार्ष्ठिकान्वये तु समस्तपदघटितवाक्यस्यैव कल्पनात् न कोऽपि दोष । अतश्च उद्यदादित्येक्षणाभावसंकल्पभावनैव उदये निमित्ते 'विधीयते । णमुलादिवत् शतृप्रत्ययेन निमित्तत्वाभिधानात् । तत्फल च आर्थवादिकमघक्षय. । अत: सिद्ध भावनाऽतिरिक्ते नञः सम्बन्धात् पर्युदास स च फलप्रयुक्त इति । ननु एवमपि नञ. भेदसदृशादिवाचित्वस्य ' तदन्यतद्विरुद्धतदभावेषु नञ् ' इति प्रसिद्धे. उद्यत्पदेनैव सम्बन्धाङ्गीकारात् उद्यद्भिन्नादित्येक्षणस्यैव अघक्षयफलकत्वेन विधानोपपत्तेर्न संकल्पलक्षणा । न च सुबन्तसंबन्धे नञ्समासापत्ति, नानुयाजेष्वितिवदुपपत्ते । न च नञः आदित्यपदेन वा सम्बन्ध उद्यत्पदेन वेत्यत्र विनिगमकाभाव., विशेषणाकाङ्क्षत्वस्यैव विनिगमकस्य सत्त्वादिति चेत्, तथात्वेऽपि उद्यन्तमिति सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावेन उद्यद्भिन्नेऽपि पदद्वयलक्षणाया आवश्यकत्वात्, तथात्वे स्वभावेनैव तादृशादित्येक्षणस्य सर्वदा जायमानत्वेन अघक्षयोपपत्तेर्विधिवैफल्याच्च, स्वरसत. प्रतीयमान-

निषेधस्य सङ्कल्पलक्षणयाऽपि अपरित्यागेन भवदुक्तपर्युदासानुपपत्तेश्च । अस्मिन् उदाहरणे सत्याऽङ्गीकारेऽपि 'न वारिस्यम्' इत्यत्र 'एकादश्यां न भुञ्जीत' इत्यादौ च सङ्कल्पलक्षणाया आवश्यकत्वाच्च ।

प्रयोजनम्— स्पष्टमेव । सूत्राण्यपि अस्मिन्नेव विचारे सुधीभिर्योज्यानि ।

मण्डन— 'अनीक्षणन्त पुंसः ।' ५.

शंकर— 'पर्युदासोऽनीक्षणादौ ।' ६.

* "एतावता हेनसा अयुक्तो भवति' इति पुरुष संबद्धो दोष कीर्त्यते" इति प्रजापतिव्रताधिकरणभाष्ये (४।१।३) दोषोक्त्या प्रजापतिव्रतानां अकरणनिमित्तदोषपरिहारार्थत्व एतावता कर्मणा कृतेन सता पापेन अयुक्तो भवति इति वाक्यशेषार्थाभ्युपगमनेन वक्ष्यते । सु पृ. १४८९.

* इति तु निषेधे तत्परिपालनाय प्रवृत्तस्य निवृत्तेरपि सङ्कल्पाविनाभावस्य प्रजापतिव्रतनये उक्तत्वात् विशेषनिमनरहितन्नो भवद्भवकल्पश्च स्वरूपनिन्मव एकादश्याम् । (प्रजापतिव्रताधिकरणम्) । पुरुषार्थचिन्तामणि. .

* प्रजापतिशब्द देवताविशेषे रूढ । सु पृ ७८५.

* प्रजापतिसम्प्रदानत्वस्य अग्न्यादिदेवतायोगेऽपि न भङ्ग । सकर्ष २।३।२ मीको पृ २१४२ 'देवता पदयोगेऽपि०' इत्यत्र द्रष्टव्यम् ।

* प्रज्ञा । 'विपश्चिता हि जिज्ञासो प्रज्ञा यिकसनक्षमा ।' या. १।३।५।३० पृ २९४.

☒ 'प्रणमन्त्यनपायमुत्थित प्रतिपच्चन्द्रमिव प्रजा नृपम्' इति न्याय. (मारवि २।११)। साहस्री ९६५.

* प्रणयनं अग्ने चातुर्मास्यगत दार्शपौर्णमासगतप्रणयनवत् न सौमिकप्रणयनवत् इति भाष्यमतम् । न दार्शिक न सौमिकम्, किन्तु अपूर्वमेवेद इति वार्तिकमतम् । के ७।३।८।१९–२७. * प्रणयन (अपां) क्रत्वर्थं आत्मनिर्वर्तक साधन अपेक्षमाण गोदोहन पुरुषार्थं गृह्णाति । गोदोहनमपि पुरुषार्थं सत् आश्रयमपेक्षमाण प्रणयन प्रसक्त गह्णाति । वा. ८।१।३५.

* प्रणयनस्य (अपाम्) अनारभ्यप्रकरणात् गोदोह नाश्रयत्वम् । सु पृ. ८५५. * प्रणयनस्य (अपाम्) पात्रम् 'गोदोहनेन पशुकामस्य प्रणयेत्, कांस्येन ब्रह्मवर्चसकामस्य, मार्तिकेन प्रतिष्ठाकामस्य' इति नैमित्तिकम् । वारण तु नित्यम् । (गोदोहन यस्मिन् पात्रे अग्निहोत्री गोर्दुग्धे, तत् पात्रम् । वारण वरणावृक्षजन्य पात्रम् ।) भा. ४।१।२।४.

☒ प्रणयनाधिकरणम् । चातुर्मास्येषु अग्निप्रणयने सौमिकाग्निप्रणयनधर्मातिदेशो नास्ति ॥

**सौमिक तु प्रणयनमवाच्य हीतरत् । ७।३।८। २० ॥**

भाष्यम्— चातुर्मास्येषु श्रूयते 'द्वयो प्रणयन्ति, तस्मात् द्वाभ्यामेति' इति । अस्ति तु सोमे प्रणयन धर्मवत् । तथा दर्शपूर्णमासयो अधर्मकम् । तत्र संदेह. किं सौमिकमेतत् प्रणयनम्, उत दार्शपौर्णमासिकमिति । तत्र सूत्रेणैवोपक्रम । सौमिक तु प्रणयनमवाच्य हीतरत् । सौमिकमेतत् प्रणयनम् । किं कारणम् ? अवाच्य हि इतरत् दार्शपौर्णमासिकम्, चोदकेन प्राप्तत्वात् । कथ पुनरय प्रणयतिशब्द प्रणयनसामान्यवचन सन् सौमिके प्रणयनविशेष शक्नोति वक्तुम् ? लक्षणयेति ब्रूम । तीर्थशब्दवत् । यथा तीर्थशब्द तीर्थसामान्यवचन सन् तीर्थविशेष धर्मसाधन कदाचित् ब्रूते 'तीर्थयात्रा गतः' इति ।

**उत्तरवेदिप्रतिषेधश्च तद्वत् । २१ ॥**

भाष्यम्— 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति न शुनासीरीये' इति । प्राप्तिपूर्वो हि प्रतिषेधो भवति । सौमिके च प्रणयने उत्तरवेदि, न दार्शपौर्णमासिके ।

**प्राकृत वाऽनामत्वात् । २१ ॥**

भाष्यम्— प्राकृत वा एतत् प्रणयन दार्शपौर्णमासिकम् । कुत ? अनामत्वात् । प्रणयनशब्द सौमिकस्य प्रणयनस्य न नामधेयम् । नैतत् तस्य वाचकमित्यर्थ । यदि अय तस्य वाचक स्यात्, ततस्तदिह ब्रूयात् । [illegible] तु पदार्थनामधेयम्, पदार्थस्य प्राङ्नयनस्य वाचकम् । यस्य वाचकम्, तदिह शक्नोति अग्ने प्राचीन नयन वक्तुम् । तथेहास्त्येव । तस्मात् तस्य वाचक । एव

संनिहितप्रत्ययो न बाधितो भवति । अथ यदुक्तम्, तीर्थशब्दवत् भविष्यतीति । अत्र ब्रूमः । तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते । 'तीर्थेनान्तो गतः' इति तु उपरता ध्यानिचित् तीर्थानि अनुक्रान्तानि । ततोऽसौ तद्विशिष्टार्थो विज्ञायते । यत्र तु येऽन्यः प्रयुज्यते तत्र तीर्थमात्रमेव ब्रूते, यथा 'तीर्थे स्नाति, तीर्थमेव हि समानानां भवति' इति । अपि च संभवति श्रुत्यर्थे लक्षणाऽर्थः अन्याय्यः । संभवति चात्र श्रुत्यर्थः । तस्मात् न लक्षणाऽर्थो भाव्य इति ।

परिसंख्याऽर्थं श्रवणं गुणार्थमर्थवादो वा ।२३॥

भाष्यम्—तथाह, यदुक्तम् 'अवाप्यं हीतरत्' इति, तस्य कः परिहारः । उच्यते । परिसंख्याऽर्थं वा स्यात् 'द्वयोः प्रणयन्ति, न चतुर्षु' इति । गुणार्थम्, अर्थवादार्थं वा 'तस्मात् द्वाभ्यामेति' इति । तत्र परिसंख्यायां तावत् त्रयो दोषाः । गुणोऽपि न कश्चित् विधीयते । परिशेषात् अर्थवादार्थम् । ननु अर्थवादोऽपि निष्प्रयोजनः प्रणयनस्य प्राप्तत्वात् । अर्थवादस्य प्रयोजनमुत्तरस्मिन्नधिकरणे वक्ष्यामः 'मध्यमयोर्वा गत्यर्थवादात्' (२५) इति । ( अस्या उदीच्य मीको. पृ. १६८८ 'चातुर्मास्येषु अग्निप्रणयनम्' इति विन्दो संगृहीता उभयाधिकरणव्याख्यात्, इति तत्रैव द्रष्टव्या । )

सोम— निर्मन्थ्यादीनामनतिदेशकत्वेऽपि प्रणयतिशब्दस्य अतिदेशकत्वं भविष्यति इत्युत्थानात् संगतिः । सूत्रार्थस्तु— सौमिकं सौमिकस्येव प्रणयनम्, इतरत् प्राकृतं चोदकप्राप्तं तु अनर्थकमिति ।

वि— 'सौमिकं प्राकृतं वा स्यात् द्वयोः प्रणयनं श्रुतम् । आद्योऽप्राप्तितो, नैवमनाप्तत्वेन वादगीः ॥' वादगीः अर्थवादार्थं वाक्यम् ।

भाट्ट— चातुर्मास्येषु वैश्वदेव- वरुणप्रघास- साकमेध- शुनासीरीयाख्यानि चत्वारि पर्वाणि । तत्र 'द्वयोः प्रणयन्ति, द्वाभ्यामेति' इति श्रुतम् । तत्र भाष्यकारः सप्तभिः सूत्रैः अधिकरणद्वयं एवं व्याचख्यौ ( तत्र चतुर्भिः सूत्रैः आद्यमधिकरणं त्रिभिस्तु द्वितीयम् ) । तत्र आद्ये तावत् सौमिकं अपूर्वकं प्रणयनमिदम्, उत प्राकृतं अपूर्वकं गार्हपत्यादाहवनीयं प्रति । इति चिन्तायाम्, प्राकृतस्य चोदकेनैव प्राप्तत्वेन विधिवैयर्थ्यापत्तेः वचनार्थवत्त्वाय प्रणयतिरयं सौमिकप्रणयनपरः तद्विधानार्थः । अत एव तत्र उत्तरवेदेः सत्त्वेन तत्प्राप्तौ 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासोऽपि संगच्छते । तेन तयोरुत्तरवेदिव्यतिरिक्ताः सौमिकप्रणयनधर्माः कार्याः । यत्तु 'उपात्र वपन्ति' इति उत्तरवेदेः उत्पत्तिवाक्यम्, यच्च 'उत्तरवेद्यामग्निं निदधाति' इति तस्याः विनियोगवाक्यम्, तत् मध्यमयोः पर्वणोः प्राकृतप्रणयनपक्षे एव उत्तरवेदिमात्रविधायकम् । इति प्राप्ते, न प्रणयतिः सौमिकप्रणयनस्यैव विशिष्य उपस्थापकः । संनिहितत्वात्तु प्राकृतमेवोपस्थापयति । अतः तस्यैवातिदेशप्राप्तेः पूर्वप्रवृत्त्या विधिः अनुवाद एव वा । तत्प्रयोजनं च यद्यपि नेतरयोः परिसंख्या दोषत्रयापत्तेः, प्रणयनाभावे इतरपर्वणोः अग्न्यभावेन यागानुपपत्तेश्च । नापि अर्थवादोत्पत्तिः निष्फले अर्थवादस्यैवानुपपत्तेः । तथापि उत्तरवेदिरूपगुणार्थं पुनःश्रुतिः । एतदभावे हि चतुर्ष्वपि प्राकृतप्रणयनप्राप्तौ देशापेक्षया उत्तरवेदिविधानं चतुर्षु अपि प्राप्नुयात् । एतच्छ्रुतौ तु पर्वद्वयवृत्तिप्रणयनस्यैव विधिस्पर्शोपदेशेन उपस्थितत्वात् तत्रैव उत्तरवेदिः तदीयाग्निनिधानमेव च द्वारं इति सिध्यति । अतः इतरपर्वणोः उत्तरवेदिपरिसंख्यैव अनुवादप्रयोजनमिति ।

मण्डन— 'द्वयोः प्रणीतिर्नहि सौमिकी स्यात् ।'

शंकर— 'द्वयोः प्रणयनान्तरम् ।' ( अपूर्वमित्यर्थः वार्तिककारस्येदम् ) ।

* प्रणयनाधिकरणे 'उपात्र वपन्ति' इति वरुणप्रघासान्तःप्रकरणपठितमपि 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति पर्युदासैकवाक्यतावलादेव अवान्तरप्रकरणं बाधित्वा चातुर्मास्यानामेव 'अत्र' इति वादः इत्युक्तम् । बाल. पृ १२, * विकृतेस्तु अवान्तरप्रकरणं संदंशोद्भूतिक सप्तमे प्रणयनाधिकरणे वरुणप्रघासान्तमुक्तम् । पृ. ११.

● प्रणयनलोपेनापि ( अग्नेः ) सायमग्निहोत्रस्य कालानुग्रह एव न्याय्यः सादपनीयोत्कर्षे सायमग्निहोत्र-होमोत्कर्षेनर्ह्रे । भाट्ट. ५।१।१७.

● प्रणवविधानं सामिधेनीषु अन्त्ये अक्षरे एव टेः स्थाने । संकर्ष. ४।१।१२. ' सामिधेनीषु प्रणवविधानं अन्त्ये ' इत्यत्र द्रष्टव्यम् । ● प्रणवविधानं सामिधेनीषु ऋगक्षरस्थाने एव । संकर्ष. ४।१।११. ' सामिधेनीषु प्रणवविधान ऋगक्षरस्थाने एव ' इत्यत्र द्रष्टव्यम् ।

● प्रणवशब्दवाच्यस्य ओङ्कारस्यैव सामिधेनीषु विधानम्, न तु ' प्रणव ' इति शब्दस्य । संकर्ष. ४।१।१३. ' सामिधेनीषु प्रणवशब्दार्थस्य ' इत्यत्र द्रष्टव्यम् ।

● प्रणाड्याऽपि च येन क्रियते, तत् कारणं भवति यथा ' गोमयैः पचति, शुष्कका भवन्ति ' इति । भा. ७।१।१।७.

● प्रणीताः नाम हविःश्रपणार्थमुत्पवाः उत्पवनादि-धर्मसंस्कृता आपः । वि. ९।२।१४. ● ' प्रणीताः प्रणेष्यन् वाच यच्छति ता सहविष्कृता विसृजति ' इति अस्मिन् देशे ये पदार्थास्तेषां धर्मो वाग्यमः, न प्रधानापूर्वस्य । ९।१।७।२३-२४. ● प्रणीताः सपयनप्रयुक्ताः दर्शपूर्ण-मासयोः । ४।२।५।१४-१९. ● ' अन्तर्वेदि प्रणीता निनयति ' । भा. ४।२।५।१४, ● ' प्रणीताभिर्हवींषि संयौति ' ( मिश्रयति ) । ४।२।५।१४. ● प्रणीतानां अपां अन्तर्वेदि निनयनं प्रतिपत्तिः । निनयनं प्रणीताना न प्रयोजकम् । इति उत्पवनोत्तर अवशिष्टानामपां नाशे निनयनं लुप्येत, न तदर्थं पुनरपां प्रणयनं कर्तव्यम् । के. ( वि. ४।२।५ ). ● प्रणीतानां अपां वाक्येन पिष्ट-संयवनसाधनत्वावगमेऽपि आनुषङ्गिकपाकसाधनत्वस्यापि सत्वात् सौर्यादिचरौ अभ्युदितेष्टौ च प्रणीताधर्मोपपत्तिः । भाट्ट. ९।२।१३. ● प्रणीतानामपां संयवनं प्रयोजकम् । निनयनं तु प्रतिपत्तिः । दर्शपूर्णमासयोः । ४।२।५। १४-१५. ● प्रणीतानामभावः पुरोडाशाभावे यथा पयस्यायाम् । भा. ४।२।५।१५.



卐 प्रणीतादि तथेति चेत् । ९।१।७।२३ ॥

दर्शपूर्णमासयोः ' प्रणीताः प्रणेष्यन् वाच यच्छति, ता सहविष्कृता विसृजति ' इति श्रुतम् । प्रणीता-प्रणयनात् प्राक् वाक् यन्तव्या ' हविष्कृदेहि ' इति प्रैषोच्चारपर्यन्तमिति तदर्थः । अयं वाग्यमः तावद्देश-धर्मः स्यात् । तदेतदाह प्रणीतादि प्रणीता आरभ्य हविष्कृत्पर्यन्तं यत् वाग्यमनमुक्तम्, तत् तथा उपांशुत्व-वत् देशसम्बद्धं स्यात् इति पूर्वः पक्षः । इति चेत् ।

अन्तरागमिण्यधिकरणस्य पूर्वपक्षसूत्रमिदम् ।

न, यज्ञस्याश्रुतित्वात् । २४ ॥

' प्रणीताः प्रणेष्यन् वाचं यच्छति ता सहविष्कृता विसृजते ' इत्युक्त वाग्यमन न देशप्रयुक्तं यज्ञप्रयुक्तम्, परमापूर्वप्रयुक्तमित्यर्थः । यज्ञस्य अश्रुतित्वात् नात्र सम्बन्धी यज्ञशब्दः श्रूयते । किन्तु तद्देशगतपदार्थप्रयुक्त मेव वाग्यमनमिति सिद्धान्तः । के.

● प्रणीताकार्यं श्रपणापूर्वम् । सु. पृ ८५१.

● प्रणीताधर्माः इत्यार्थे दधनि पयसि च पाके उपकुर्वन्ति । भा. ३।१।७।१४ पृ. ७१६. ● प्रणीता-धर्माः उत्पवनादयः, सानाय्यार्थमुत्पन्नयोः दधिपयसोः अभ्युदयेष्टयां चन्द्रोदयं निमित्तीकृत्य श्रपणहेतुत्वात् कर्तव्याः । के. ( ९।२।१४।४३-४४ ). ● प्रणीता-धर्माणामनुष्ठानं अभ्युदितेष्टौ दधिपयसोः । ९।२।१४। ४३-४४. मीको. पृ. ५७९ 'अभ्युदितेष्टौ दधिपयसो.' इत्यत्र द्रष्टव्यम् ।

卐 प्रणीताधर्मन्यायः ( प्रणीतावाङ्नियमन्यायः ) । दर्शपूर्णमासयो. प्रणीतावाग्यमः तद्देशपदार्थानान्तरपूर्व-प्रयुक्तः ॥

प्रणीतादि तथेति चेत् । ९।१।७।२३ ॥

भाष्यम्— ननु इदानीमेवोक्तम् ' पत्नीं संनह्य पत्नी अध्वर्युयजमानौ वाच यच्छत.' इति । ( यथा ' प्रणीताः प्रणेष्यन् वाचं यच्छति ता सहविष्कृता विसृजति ' इति । अस्मिन् देशे ये पदार्थाः तेषां धर्मो वाग्यम', न प्रधानापूर्वस्य—इति २४ सूत्रे भाष्यम् ) ।

टुप्— अथवा नाविद्धो दृष्टान्तो भवति इति दृष्टान्तसिद्धये अधिकरण क्रियते । ' प्रणीतादि तथेति

चेत्' इति। यथा 'मन्त्रेण संयोगात्' इति आप्नुवत् परमापूर्वप्रयुक्त एवमिहापि न पदार्थप्रयुक्तो वाङ्नियम इति। 'ननु इदानीमेवोक्तम्' 'स्थितादुत्तरम्' इति चैतस्मात् ग्रन्थात् अनुमीयते अधिकरणान्तरम्।

न यज्ञस्याश्रुतित्वात्। २४ ॥

भाष्यम्— उच्यते। तदेतदप्रयुक्ततायामपि एतदवकल्पते। कथम्? यज्ञं विस्तारयितुं वाचं यच्छतः। तौ वाचंयमौ सन्तौ अविक्षिप्यमाणचेतस्कौ पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्येते, यथा न कश्चित् पदार्थः पदार्थावयवो वा हीयते। अध्वर्युः वाग्यमेन अनन्यचेतस्को न पदार्थान् प्रमादयिष्यति। यजमानश्च एवं वाग्यमेन अनन्यचेतस्कः प्रमादयिष्यन्तं तं बोधयिष्यति। अद्भिरपि अनन्तरीयमाणे यज्ञो विस्तार्यते, न केवलं स्वैराचरणैः अद्भिश्च विस्तारयितुं वाग्यम शक्नोति। अस्मिन् काले क्रियमाणो न स्वेनात्मना। यज्ञसंयोगश्चात्र विस्तारसंबद्धः। तस्मात् अप्रयुक्ततायामपि उपपद्यते 'यदध्वर्युयजमानौ वाचं यच्छतः तत् प्रजापतिभूयगतौ यज्ञं तन्वाते' इति दृष्टेन कारणेन, नादृष्टेन इति वर्तमानकालापदेशादवगम्यते, यथा वयं वाग्यमेन तावन्मात्र यज्ञं विद्म, तथेति।

टुप्— 'न यज्ञस्य' इति उत्तरपक्षे सूत्रं वर्णनीयम्।

शा— वाग्यमनं तु यज्ञसंयोगाभावात् अव्यान्तरापूर्वप्रयुक्तम्। तदिदमुक्तं 'प्रणीतादि तथेति चेत्।' 'न यज्ञस्याश्रुतित्वात्।' इति। अथवा अनेन सूत्रद्वयेन अधिकरणान्तरं प्रस्तुताधिकरणसिद्धान्तस्य दृष्टान्तसिद्धयर्थम्। तदीयपूर्वपक्षन्यायेन च पूर्वपक्षं यत्र अन्तरागर्भिणीन्यायेन विचार्यते।

वि— 'प्रणीताग्राग्यमे यज्ञौ योजनीयौ पुरेव तौ। पुरा हविष्कृदाह्वानाद् ये तत्पूर्वकारिता ॥'

भाट्ट— इदमधिकरणं सूत्रकारेण पूर्वाधिकरणे अन्तरागर्भिणीत्वेन युक्तमपि व्याख्यातृभिर्यथार्थं पृथगभिधीयते। दर्शपूर्णमासयोः 'यत्र तन्निष्यन्तौ अध्वर्युयजमानौ वाचं यच्छतः। यदध्वर्युयजमानौ वाचं यच्छतः, तत् प्रजापतिभूयगतौ यज्ञं तन्वाते। तस्मात् प्रणीता. प्रणेष्यन् वाचं यच्छति, तां सह हविष्कृता विसृजति' इति श्रुतम्। तत्राय वाग्यमः प्रणीताप्रणयनाङ्गमेव, विधिवाक्यस्थलृट्प्रत्ययेन तन्मात्रार्थत्वावगमात्। अतो हविष्कृदाह्वानकालावधिकवाग्यमस्य तन्मात्रार्थत्वावगमात् न भागधर्मत्वम्, न वा तावत्पदार्थधर्मत्वम्। यदि तु 'प्रणीताः प्रणेष्यन्' इति वाक्यस्य वाग्यमोत्पत्तिपरत्वे उत्पत्तिशिष्टकर्मकत्वानुरोधेन तत्र यजमानप्राप्त्यभावात् पूर्ववाक्यस्य अर्थवादत्वानुपपत्तेः यजमानमात्रविधानस्य वा सुतरामनुपपत्तेः अवश्यम् 'यत्र तन्निष्यन्तौ' इति वाक्यस्यैव वाग्यमविधायकत्वमुच्येत, ततः अस्तु तत्रत्यलृट्श्रुत्या यज्ञविस्तारार्थत्वमेव। तदा हि उत्तरवाक्यगत्या वाग्यमानुवादेन प्रणीताप्रणयनहविष्कृदाह्वानयोः पूर्वोत्तरावधित्वेन विधी। अत एव तत्रत्यमेकवचनमपि अनुवाद्यगतत्वात् 'ग्रहं संमार्ष्टि' इतिवदविवक्षितम्। अतश्च विधेयसामर्थ्यानुसारात् उद्देश्यभूतो यज्ञविस्तारापरनामधेयो यज्ञभागोऽपि तदवधिक एव।

यत्तु मूले पूर्वपक्षे यज्ञशब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य भागधर्मत्वमुक्तम्, तत् यज्ञशब्दस्य विस्तारं विना अन्यनान्वयस्य दुरुपपादत्वात् भागवाचकत्वाश्रवणाच्चोपेक्षितम्। अतः अध्वर्युयजमानकर्तृकवाग्यम एव यज्ञविस्तारपदवाच्यभागधर्मत्वेन विधीयते, न तु पदार्थधर्मत्वेन तद्वाचकपदाभावात्। अतश्च पूर्वाधिकरणपूर्वपक्षवदेव यज्ञापूर्वप्रयुक्तो भागधर्मश्च वाग्यमः। इति प्राप्ते,

यजमानाध्वर्युकर्तृविशिष्टवाग्यमस्य यज्ञभागार्थत्वे यज्ञविधिप्रसक्तेः (धात्वर्थोद्देशेन विशिष्टान्यविधिः) सन्निपत्योपकारकत्वलाभाय द्वितीयविधिप्रकारलिप्सया (अन्योद्देशेन धात्वर्थविधि) च अध्वर्युयजमानसंस्कारकत्वेनैव वाग्यमविधिः। यथा च नैव सति उद्देश्यानेकत्वा, तथोक्तं ग्रहैकत्वाधिकरणे कौस्तुभे। तस्य च दृष्टार्थत्वात् मनःप्रणिधानमेव संस्कारः। संस्कृतयोश्च तयोः उपयोगापेक्षायां तत्प्रणयनहविष्कृदाह्वानकर्मार्थत्वमेव न्याय्यम्, न तु भागार्थत्वम्। न च तयोर्भागोपयोगित्वमपि तद्द्वारा कथञ्चित् सम्भवात् 'यत्र तन्निष्यन्तौ' इति विशेषणसामर्थ्यात् यज्ञविस्तारोपयोग्यध्वर्युयजमानसंस्कार-

त्वमेव वाग्यमस्य कल्प्यता इति वाच्यम् । 'यत्र तन्निष्यन्तौ' इत्यस्य उद्देश्यविशेषणत्वेन अविवक्षितत्वात् । अतश्च हविरुभयकालवत् 'यत्र तन्निष्यन्तौ' इत्यनुवादो वाग्यमस्तुत्यर्थः । अतो दृष्टार्थत्वाभाव पूर्वोत्तरावधिक्तात्वस्यदार्थधर्मत्वमेव । न च लुङ्श्रुत्या प्रणीताप्रणयनमात्रार्थत्वमेव कल्प्यता इति वाच्यम् । हविष्कृदाह्वानावधेः अदृष्टार्थत्वाऽऽपत्तिभयेन तस्यापि कालोपलक्षणत्वात् । अतः सिद्धं वाग्यमस्यापि तावत्पदार्थधर्मत्वम् ।

शंकर-- 'वाग्यमो दर्शनवत् ।' ११. तद्वत् पदार्थगः ।

* वार्यन्तीये निरस्तमपि प्रणीताधर्मन्यायं ( ९।१।७।२३-२४ ) इत्येतमस्यैवोपान्तरामिधित्सया पुनरुपन्यासपूर्वं निरस्यति— प्रासङ्गिकेति ( वा. २।२। १३।२९ पृ. ५६९ ) । सु. पृ. ८८१.

* प्रणीतानिनयनं प्रतिपत्तिकर्म दर्शपूर्णमासयोः । ४।२।५।१४-१५. मीको. पृ. २१४६ 'निनयनन्यायः' इत्यत्र द्रष्टव्यम् ।

* प्रणीतानिनयनाधिकरणम् । निनयनन्यायः । ४।२।५।१४-१५.

* प्रणीताप्रणयनकाले पौर्णमास्या अननरणम् । अमावास्याया पूर्वेद्युः । भा. १२।१।१८।३९. * प्रणीताप्रणयनकाले विहितस्य वाङ्नियमस्य हविष्कृदाह्वाने त्यागः । वाङ्नियमे च प्रणीतोत्तरेण आह्वानात् प्राचीनानां अङ्गानां अपूर्वं प्रयोजकम् । के. ९।१।७। २३-२४.

* प्रणीतायाङ्नियमास्य प्रयोजकं हविष्कृदाह्वानात् प्राचीनाशन्तरापूर्वं दर्शपूर्णमासयोः । के. ९।१।७। २३-२४.

* प्रणीतावाङ्नियमन्यायः । प्रणीताधर्मन्यायः । ९।१।७।२३-२४.

* प्रणीतावाग्यमस्य हविष्कृदाह्वानात् प्राचीनपदार्थप्रयुक्तत्वम् । प्रणीताधर्मन्याय. । ९।१।७।२३-२४.

* प्रतारकाः अन्यथा जानन्तोऽपि अन्यथा वाक्यानि प्रयुञ्जते । तथा प्रमादिनो दुष्टवाग्मीकाश्च अन्ययाक्यविवक्षया अन्यदेव वाक्यमुच्चारयन्ति । तेषां वाक्यात् वक्तृबुद्धिरपि निश्चेतुं न शक्यते, दूरेणार्थः । ऋजु. पृ. २५.

* प्रतिकर्षः अग्नीषोमीययूपमात्रस्य दीक्षासु, न तु ततोऽर्वाचीनानामपि अग्नीषोमप्रणयनादीनाम् । ५।१। १४।१७. * प्रतिकर्षः 'आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य' इति श्रुताना आश्विनशुक्रमन्थिना ग्रहाणां सर्वादितः कर्तव्यः । १०।५।११।६७-६९, सर्वादितः नाम अन्तर्यामादूर्ध्वं ऐन्द्रवायवात् प्राक् । २०।७०-७१, ग्रहणवत् सादनस्यापि प्रतिकर्षः । २१। ७३-७४, प्रदानस्य तु न प्रतिकर्षः । २२।७५-७६. * प्रतिकर्षः ऐन्द्रवायवग्रहस्य धाराग्रहाणामादित एव, न तु उपांश्वादेरपि प्राक् । ऐन्द्रवायवः धाराग्रहाणां प्रथमः कार्यः इति । १०।५।१७।६२-६४ । 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति कामसंयोगेऽपि धाराग्रहाणामादितः एव ऐन्द्रवायवस्य प्रतिकर्षः पूर्ववत् । १०।५।१८।६५-६६. * प्रतिकर्षः शुक्रादिग्रहस्य ऐन्द्रवायवादिग्रहापेक्षया पूर्वं काम्यग्रहविधौ । १०।५।२०।७०-७१.

* प्रतिकारकं क्रियाभेदः । भा. ६।१।४।१७.

* 'प्रतिगरोऽध्वर्यूणाम्' इति लिङ्गात् प्रतिगरकर्म अध्वर्योः इति ज्ञायते । भा. ३।७।१०।४२, (प्रतिगरो नाम अध्वर्युणा 'ओथामो दैव' इति पठ्यमानो मन्त्रः । तत्र होतुः शस्त्रपठनस्य काले होत्रा उच्चारितप्लुतोच्चारणकाले ओंकारं प्लुतं पठित्वा अर्धर्चान्तविरामकाले प्रावनं क्रियेन 'ओथामो दैव' इत्यादिः पठ्यमानो मन्त्रः । प्रतिगराश्च शाखाभेदेन क्रतुभेदेन वा नानाविधा भवन्ति । के. — होता यथा शंसिष्यन् भवति तथा प्रत्याह । अध्वर्युः पात्रं नीचैरादाय उच्यमानस्य प्राङ्मुखः उपविश्य इडाजपं कृत्वा अपसव्यमावृत्य होतुरभिमुखः प्रह्वः तिष्ठन् प्रतिगृणाति । आह्वानेशोंसावो दैव । तूष्णीं शंसे प्रणवान्ते उपांशु ओथामो दैवो ३ । प्रणवे ओ ३ थामो दैव । अवसाने ओथामो दैव । शस्त्रमध्याह्वाने ओ ३ थो ३ थामो दैव । शस्त्रान्ते

ओ ३ । इति प्रतिगीर्य । अयं प्रतिगर इत्युच्यते- इति श्रौतपदार्थनिर्वचनम् ।

● 'प्रतिगृह्णीयात्' इति विधायकपदमपि असंजातविरोध्युपक्रमानुसारेण 'प्रतिग्राहयेत्' इत्येवं अन्तर्भावितणिजर्थपरतया व्याख्येयम् । तथा च अश्वदातुर्यागेष्टिः, न प्रतिग्रहीतुः । वि. ३।४।१५.

● प्रतिग्रहः । दानप्रतिग्रहविषयको विचारः 'अनारभ्य श्रूयते अश्वप्रतिग्रहेष्टिः' इत्यत्र वार्तिकग्रन्थे द्रष्टव्यः । के. (३।४।१०।२८-२९). ● प्रतिग्रहः याजनमध्यापनं च ब्राह्मणस्यैव वृत्तयस्ताः स्मृत्युक्ताः । भा. १२।४।१५।४१. ● प्रतिग्रहस्य स्वत्वजनकत्वेऽपि कृपणकारित्वात् प्रतिग्रहेतिकर्तव्यताकाः मन्त्रास्तत्रोपपत्तिः । सु. पृ. १४१०. ● प्रतिग्रहस्य 'प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वारयेत्' इति वारकवचनश्रुतिः । भाट्ट. ४।१।२ पृ. ८५. ● दानविधानेनैव प्राक् परस्वत्वापादनात् अवर्जनीयतया प्रतिग्रहस्य आक्षिप्तत्वात् दानमात्रं यत्र विहितं न प्रतिग्रहः इति अयुक्तम् । वा. ३।४।१०।२८ पृ. ९५९. ● सर्वेषामन्यप्रतिग्रहाणां दातृदोषेण दुष्टत्वम् । वा. ३।४।१०।२८ पृ. ९५९. ● प्रतिग्रहे वैदिकेऽपि अप्रतिग्राह्यान् प्रतिगृह्णतः पापमस्ति । वा. ३।४।१०।२८ पृ. ९५९.

● प्रतिग्रहेष्टयां (अश्वस्य) प्रतिपुरोडाशं कपालचतुष्कभेदः । ११।४।११।४२-४४.

● प्रतिग्रहप्रतिषेधः अश्वानाम् । 'नोभयतोदतः प्रतिगृह्णाति' इति श्रुतिः । भा. १०।३।२१।४७.

● प्रतिग्रहीतुः स्वीकरणमेको व्यापारः, अपरो दातुः स्वत्वसमर्पणरूप इति दाने द्वौ व्यापारौ । वा. ३।४।१०।२८ पृ. ९६०.

● प्रतिज्ञा कत्वर्थपुरुषार्थविज्ञासायाः । ४।१।१।१. ● प्रतिज्ञा धर्मजिज्ञासायाः । १।१।१।१. ● प्रतिज्ञा धर्मविशिष्टधर्मिनिर्देशः । रत्नाकर पृ. ३६१. ● 'प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य बाधकैः । तत्परा जयतः कार्यो निर्णयो बाधवर्जनात् ॥' इत्युक्तः विरुद्धाद् व्यभि- (विरुद्धाव्यभि-)चारिणः निर्णये अन्यत्र, परिच्छेदः । मु. पृ. १५१ । (वार्तिके 'परस्परविरुद्धे हि विरुद्धाव्यभिचारिवत् । प्रमाणे यत्र दृश्येते तत्रान्येनैव निर्णयः ॥' (१।३।२।३ पृ. १८३) इत्युक्ते इयं सुधा— के. ). ● प्रतिज्ञा साध्यविशिष्टपक्षप्रतिपादकवाक्यं यथा 'पर्वतो वह्निमान्' इति । मणि. पृ. ३९.

● प्रतिज्ञाऽधिकरणम् । द्रव्यकर्मणा साम्यवैषम्यप्रतिज्ञा । प्रयुक्तिविचारप्रतिज्ञाऽधिकरणम् । ४।१।८।२९. ● प्रतिज्ञाऽधिकरणम् । विशेषातिदेशप्रतिज्ञाऽधिकरणम् । ८।१।१।१. ● प्रतिज्ञाऽधिकरणम् । नोपत्वविवेचनप्रतिज्ञाऽधिकरणम् । ३।१।१।१.

● प्रतिज्ञापूर्वकत्वं सर्वविचाराणाम् । बृहती. पृ. २५.

● प्रतिज्ञाविरोधः । 'विस्पष्टभाषणादौ विरोधो हेतुसाध्ययोः' । ('प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः' इत्यक्षपादेनोक्तम् । ५।२।४) । श्लोवा. निरालम्बने १५४.

● 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' अत्र 'प्रतितिष्ठन्ति रात्रीरुपेयुः' इति अन्वयात्वे कल्पिते ये इत्यस्य रात्रिसमभिव्याहृतस्य 'ये प्रतितिष्ठन्ति' इति व्यवहितकल्पना । बाल. पृ. ४. ● 'प्रतितिष्ठन्ति० उपयन्ति' अयं फलविधिः, नार्थवादः । भा. ४।३।८।१७-१९. ● 'प्रतितिष्ठन्ति० उपयन्ति' अयं व्यवहितकल्पनया विधिः । बाल. पृ. २६.

● 'प्रतिदक्षिणं वा कर्तृसंयोगात्' (११।४।२।२) इत्यनेन न्यायेन (अवेष्टेः) तन्त्रभेदः प्राप्नोति । टुप्. ११।४।३।९. अत्र भाष्य तु— न वा तन्त्रभावः । कुतः । उक्तो न्यायः 'प्रतिदक्षिणं वा कर्तृसंयोगात् स्यात्' इति— इति । सूत्रे पाठभेदोऽत्र । परन्तु ११।४।२।९ सूत्रभाष्ये 'कर्तृसंयोगात् स्यात्' इति पाठः । के.

● प्रतिदानं दत्तस्य प्रतिनिर्यातनं दानजन्योपकारप्रत्युपकार इति यावत् । 'त्रिलेभ्यः प्रतिपच्छति मागात्' । रहस्य. पृ. १२४.

● प्रतिनिधिः अदृष्टार्थस्य नास्ति । मीन्या. ● प्रतिनिधिः अधिकगुणवान् लभ्यते मुख्यस्तु विगुणो लभ्यते, तदा निर्गुणोऽपि मुख्य एवोपादेयः, मुख्य-

सिद्धये गुणलोपस्य सोढुं शक्यत्वात् । स्थूलदर्भि कदरात् कृशोऽपि खदिरः, खलदपि कदरात् वक्रोऽपि खदिरः ग्राह्यः । के. ( ६।३।११. ) ● प्रतिनिधिः अपेक्षाऽऽश्रित. । या. ६।३।४।१६. ● प्रतिनिधि. श्रुत्विक्ष्वस्ति । वि. ६।३।८.

● 'प्रतिनिधिश्च तद्धर्मा स्यात्' इति न्यायेन (एतादृशः सूत्रपाठो नैवास्ति, 'प्रतिनिधिश्च तद्वत्' ३।६।१४।३७ इति सूत्रगततद्वत् इति शब्दस्य स्थाने 'तद्धर्मा स्यात्' इति अर्थतः पाठं कल्पयित्वा नन्द पण्डितेन ईदृशो निर्देशः कृतः स्यात् । तेन तथैव वा सूत्रमुपलब्धं स्यात् ।) क्षेत्रजादीनां सकलौरसधर्मप्राप्तावपि सापिण्ड्यस्य नातिदेशः 'सगोत्रेषु कृता ये स्युर्दत्तकीता-दयः सुताः । पितृणा गोत्रता यान्ति न सापिण्ड्यं विधीयते ॥' इति तस्य निषेधात् । दत्तकमीमांसा पृ. १४.

**सूत्र** प्रतिनिधिश्च तद्वत् । ३।६।१४।३७॥

अस्ति प्रतिनिधिः श्रुते द्रव्येऽपचरिते यथा व्रीह्यप-चारे नीवाराः । तत्र सन्देहः किं नीवारा. समानविधानाः उत नेति । पूर्वपक्षदेनेदमारभ्यते ।

अत्रायं पूर्वपक्षः । नित्यश्रुता अवघातादयो नित्यश्रुतै-र्व्रीहिभिरेव सम्बन्धमर्हन्ति न नीवारैः, तेषामश्रुतत्वात् । किन्तु व्रीह्यपचारेऽवश्य कर्तव्य नित्यम्, काम्य च प्रारब्धमवश्य समापनीयम् । तत्र द्रव्यापेक्षाया अपचरित द्रव्यसदृशा नीवारा एवोपादीयन्ते । तेनासमानविधाना-नेव व्रीहिकार्यापन्ना पञ्चमसवदतिदेशादेव धर्मसम्बन्धो भवतीति । एवं प्राप्ते, अभिधीयते ।

न तद्वत् प्रयोजनैकत्वात् । ३८ ॥

अयमभिप्रायः । भवेदेवं यदि फलचमसवत् स्वेनैव महिम्ना नीवाराः कर्मसाधन भवेयुः । किन्तु व्रीहि-शास्त्रस्यावयवपर्यन्तत्वात्, व्रीह्यवयवाना च कतिपयाना नीवारेषु विद्यमानत्वात् तदुपादित्सया पुरुष प्रवर्तमानो नान्तरीयकतया नीवारानुपादत्ते । तदतिरेकेण व्रीह्य-वयवोपादानासम्भवात् । ते च व्रीह्यवयवा. 'व्रीहिभि र्यजेत' इति प्रत्यक्षशास्त्रचोदिता एवेति शुक्लमवघातादे-र्धर्माणा नीवारेष्वपि समानविधानत्वमिति ।

प्रयोजनम्— पूर्वपक्षे व्रीहीणामपचारे व्रीहिस्थाने नीवारपदोहः कर्तव्य. । सिद्धान्ते तु व्रीहिपदस्यैव प्रयो-गात् न तदूहः । ननु 'व्रीहिभिर्यजेत' इति शास्त्रेण व्रीहित्वजातिः साधनत्वेन प्रतिपादिता, व्रीह्यवयवाश्च । व्रीहित्वमन्त्रश्च लिङ्गात् व्रीहित्वजातिप्रकाशने एव विनि-युक्त. । तेन यथा यवेषु लिङ्गाभावादप्रयोगः, तथा नीवा-रेष्वपीति कथं सिद्धान्ते व्रीहिपदप्रयोगादनूहः प्रयोजन मिति । उच्यते । स्यादेवं यदि स्वरूपेणामूर्ता जातिर्याग साधन भवेत् । किं तर्हि । आश्रयव्यक्तयवयवोपलक्षण-त्वेन । तेषामेव पुरोडाशप्रकृतित्वेनापेक्षितविधानात् । तेन यथा 'व्रीहिभिर्यजेत' इति विधौ साधनपदार्थ व्रीहि-बुद्धिर्व्रीहित्वोपलक्षितान् पुरोडाशप्रकृतिभूतान् अवयवा-नेव विषयीकरोति, एवमत्र योऽयं व्रीहिशब्दो निर्व्यु-देशानुरोधी प्रवर्तमानः तथाभूतानेव अवयवान् विषयी-करोति । ते च नीवारेष्वप्यविशिष्टा एव । तेन यद्यपि नीवारेषु व्रीहित्वासमवायः, तथापि व्रीहित्वोपलक्षिताना-मेव अवयवाना नीवारेष्वपि प्रत्यभिज्ञानादितरेषा प्रति-निध्यसम्भवात् अस्त्येव व्रीहित्वोपलक्षितत्वमपि इति युक्त सिद्धान्तेऽनूह प्रयोजनमिति ।

सूत्रं तु यद्वदुपदेशेन व्रीहयो धर्मवन्तः, तद्वन्नीवारा अपि । व्रीहिशास्त्रेणैव यागसिद्धिप्रयोजनत्वावगमादिति । कौता.

**सूत्र** प्रतिनिधिश्च तद्वत् । ३।६।१४।३७॥

दर्शपूर्णमासादौ श्रुतस्य व्रीह्यादिद्रव्यस्य कथञ्चिन्नाशे तत्प्रतिनिधित्वेन नीवारा गृह्यन्ते । ते नीवारा अपि किं व्रीहिभिः समानविधाना न वेति संशये पूर्वपक्षमति-दिशति । असमानविधानं इति अश्रुतत्वात् इति च पद-द्वयमनुवर्तते । तत्र असमानविधानपदं पुंलिङ्गत्वेन विपरि-णम्यते । तद्वत् नैमित्तिकफलचमसवत् नीवारस्य प्रति निधिरपि व्रीहिभि समानविधानो न स्यात्, अश्रुत-त्वात् । का अश्रुतता ? व्रीहीणा निर्वापादयो धर्मा विहिताः, नीवाराणा तु न विहिता इति । अर्थापत्त्या तु नीवाराणा स्युः ।

न तद्वत् प्रयोजनैकत्वात् । ३८ ॥

पूर्वपक्षं निषिध्य सिद्धान्तयति । न असमानविधानः प्रतिनिधिः, किन्तु तद्वत् श्रुतद्रव्यवत् प्रतिनिधिरपि समानविधानः स्यात् । अथवा पूर्वपक्षिणा यदुक्तं तद्वत् इति तदेव निषिध्यते ' न तद्वत् ' इति । प्रतिनिधिः तद्वत् फलचमसवत् असमानविधानो न भवति । किन्तु समानविधान एवेति तु आर्थिकम् । कुतः समानविधानत्वम् ? प्रयोजनैकत्वात् । ' पुरोडाशनिष्पत्तिरूपस्य प्रयोजनस्य व्रीहीणां नीवाराणां च एकत्वेन ' इति सुबोधिन्यां व्याख्यातम् । प्रयुज्यते विधीयते अनेनेति प्रयोजनं करणे ल्युट् । निर्वापावघातादयो धर्माः व्रीहिशब्देन द्रव्यमनूद्य विहिताः इति प्रयोजनशब्देन व्रीहिशब्दो बोध्यते । तस्य नीवारेष्वपि एकत्वात् समानत्वात् इत्यर्थः । नीवारेष्वपि हि व्रीहिपदवाच्यस्य व्रीहित्वस्य आश्रयभूताः केचिदवयवाः नीवारेष्वपि वर्तन्ते एव । इति नीवारोऽपि व्रीहिपदबोध्य एवेति उभयोः समानविधानत्वम् । व्रीहिषु यदा निर्वापादयो विधीयन्ते, तदा नीवारेष्वपि ते अर्थात् विधीयन्ते एवेत्यर्थः ।

अशास्त्रलक्षणत्वाच्च । ३९ ॥

सिद्धान्ते हेत्वन्तरमाह । श्रुतैः व्रीहिभिः प्रतिनिधिभूतानां नीवाराणां प्रकृतिविकारभावो नास्ति अशास्त्रलक्षणत्वात् शास्त्रलक्षितत्वाभावात् शास्त्रबोधितत्वाभावात् । अथवा नीवारत्वस्य अशास्त्रलक्षणत्वात् इति । तस्मात् मुख्यप्रतिनिध्योः समानविधित्वम् । चकारो हेतुसमुच्चयार्थे । के.

* प्रतिनिधिर्न भवति देवतायाः अग्नेः शब्दस्य ( मन्त्रस्य ) क्रियायाः ( प्रयाजादेः ) चापचारे । ६।३।५।१८-१९. * प्रतिनिधिर्न भवति माषादि. प्रतिषिद्धपदार्थः । ६।३।६।२०.

सू प्रतिनिधिर्न भवति स्वामिनः ॥

तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् । ६।३।७।२१॥

भाष्यम्— अग्निहोत्रादीनि कर्माण्युदाहरणम् । तेषु स्वामिन्यपचरति संदेहः किमन्यः प्रतिनिधातव्यो नेति । किं प्राप्तम् ? प्रतिनिधातव्य इति । कुतः ? आगमो वा चोदनार्थाविशेषादिति । एवं प्राप्ते, ब्रूमः । तथा स्वामिनः स्यात् । कोऽर्थः ? न प्रतिनिधिः । कुतः ? फलसमवायात् । योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते, यश्च स्वं प्रदेयं त्यजति स स्वामी । यदि स प्रतिनिधीयते, स्वामिना यत् कर्तव्यं तत् सर्वं कुर्यात् । तत् सर्वं कुर्वन् स्वाम्येव स्यान्न प्रतिनिधिः । स एव हि फलेन संबध्यते । य उत्सर्गं करोति, स फलवान् भवति । वक्तुर्न्ह शास्त्रफलं प्रयोक्तरीति । तस्मान्न स्वामिनः प्रतिनिधिरिति ।

टुप्— तथा स्वामिनः० योगित्वात् ॥ यदा प्रतिनिधीयमानः ( प्रतिनिधिरुपादीयमानः इति तन्त्ररत्ने पाठः ) दक्षिणादानं हविष्प्रदानं च करोति, तदा स एव फलसंबन्धात् स्वामी स्यात् । यदा द्रव्यपरित्यागं कृत्वा अन्यत्र ( लौकिके कार्ये ) व्यापृतो भवति, तत्र यानि फलवर्णानि ( आज्यावेक्षणादीनि ) तेषु अध्वर्युरेव प्रतिनिधित्वेन करोति ( इति नान्यः प्रतिनिधातव्य )। पुरुषसंस्काराणां च ( ऋत्विग्वरणादीनां ) कृतार्थत्वात् ( विनाऽपि यजमानेन ) न वैगुण्यम् ( अध्वर्युणा तदनुष्ठानसंभवात् ) । यानि च ब्रह्मचर्यादीनि फलप्रतिग्रहणयोग्यतायाः कारणानि, तानि बहिरवस्थितेन ( यजमानेन ) क्रियमाणानि भवोपकारकाण्येव । तस्मादेकत्र ( आज्यावेक्षणादौ अध्वर्य्वादेः ) विद्यमानत्वात्, इतरत्र ( ब्रह्मचर्यादौ ) असंभवात् अनुपपन्न ( यजमानस्य ) प्रतिनिधिः । मृते तु ( यजमाने ) नैव प्रतिनिध्याशङ्काऽस्ति ( प्रतिनिधातुरसंभवात् ) । पत्नीति चेन्न, तस्याः पतिहीनायाः अन्यभावेन अधिकाराभावात् ।

( पत्न्यां मृतायां किमस्ति प्रतिनिधिः, उत नेति ? नायमस्याधिकरणस्य विषयः । तत्रापि हि यदा तावत् ' भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ' इत्ययं पक्षः समाश्रीयते, तदा अन्यभावादेव अनधिकारः सिद्धः । यदा तु नाग्नय पत्न्यै दत्ताः, तदाऽपि आचारप्रामाण्यात् नापत्नीकस्य दर्शपूर्णमासाद्यनुष्ठानम् । अग्निहोत्रमात्रं तु वचनादनुष्ठीयते । ' तदाहुः अपत्नीकोऽपि अग्निहोत्रमाहरेत् ' इति वचनात् । तस्मात् नास्ति पत्न्याः प्रतिनिधिरिति । तन्त्ररत्नम् ) ।

सोम— आतिदेशिकी संगतिः । सूत्रार्थस्तु— फलस्य कर्मयोगित्वात् कर्मप्रयोगानुगामित्वात् प्रतिनिहितस्यैव फलसमवायापत्तेः । स्वामिनः तथा न प्रतिनिधिः इति ।

वि— 'स्वामिनोऽस्ति प्रतिनिधिर्न वा, द्रव्यवदस्ति सः । , न मृते पैरकामावाजीवनेऽप्यफलित्वतः ॥ '

भाट्ट— मृते तावत्प्रमाणे पत्न्या वा नान्यतरेणान्यतरस्य प्रतिनिधिः । यजमाने मृते पत्न्या अन्यभावादेवानधिकारात् पत्न्यां मृतायां यजमानस्यापि । 'भार्यायै पूर्वमारिण्यै दत्वाऽग्नीनन्त्यकर्मणि ' इति पक्षे तावद्भ्यभावादेव, विवाहात् पूर्वमनधिकारात् । तथापि विधुराधानपक्षे अनौतस्वैदिककर्मणा पत्नीव्यतिरेकेणैव वाचनिकत्वेन पत्नीप्रतिनिध्यप्रसक्तेः । यदा तु नाग्नीनां पत्न्यै दानम्, तदाऽपि 'तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरेत् ' इति वचनात् पत्नीव्यतिरेकेणैव अग्निहोत्रमात्रानुष्ठानमिति न प्रतिनिधिप्रसक्तिः । यदा तु कस्य चित् कर्मणो मध्येऽन्यतरस्य मृतिः, तदा दाहात् पूर्वमेव तत्समापने वक्ष्यमाणरीत्या प्रोषितादिवदेवानुष्ठानमिति न प्रतिनिधिप्रसक्तिः । रोगादिना अशक्तौ कार्यान्तरव्यापृते वा अन्यतराधिकारिकर्मसु यद्यपि स्वामिनः कालादिवत् प्रयोगविध्यविषयत्वात् तत्प्रदेकत्वादिवदेव न प्रतिनिधिप्रसक्तिः, तथापि 'सभ्यामिष्टिं चरं होममन्वयेनेन कारयेत् । ' इत्यादिवचनबलात् शिष्यादेश्च अनुमतिद्वारा कर्मन्तरेणाप्यनुष्ठानम्, स्वप्रत्यायमानं तु सति सम्भवे स्वय कार्यम् । नो चेत्तदपि तेनैव 'अग्नये इदं न मदीययजमानस्य ' इत्येव कार्यम् । उभयाधिकारिकेषु दर्शादिषु त्यागघटितं कर्म अन्यतरेणैव कार्यम्, द्वयोरपि संसृष्टस्वत्ववत्त्वात् । अत एव त्यागोऽपि तादृशस्थले 'मम यजमानस्य च न ' इत्यादिरूपः । उभयोरशक्तौ अध्वर्युणैव, असति बाधे सामान्यसमाख्यया तत्प्राप्तेः । एव यजमानप्रवासेऽपि । पत्न्यास्तु प्रवासेऽग्निविच्छेद एव । एवमाज्यावेक्षणादियजमानपदार्थानामध्वर्युणैव करणम् । पत्नीपदार्थानां च सामान्यसमाख्याऽनुरोधेन यजमानस्याप्राप्तेः । एव फलिसंस्कारेष्वपि आर्त्विज्यमाने फलाभावात् न प्रतिनिध्याशङ्का । अनन्तेशामसाकल्ये लोप एव । न तु दम्पतिभ्यां परस्परमपि करणम्, तत्तद्दास्ये यजमानत्वादेरुद्देश्यताऽवच्छेदकत्वेऽधिविशिष्टत्वात् । अध्वर्यादीनामशक्त्यादौ तु अध्वर्य्वान्तरमेवोपादेयमिति न तत्र प्रतिनिधिः ।

मण्डन— 'न स्वामिनः प्रतिनिधिः । '

शंकर— 'स्वामिनो न प्रतिनिधिः । '

* प्रतिनिधिः प्रधानपर्याप्तमुख्यलाभे सति न ग्राह्यः । शेषकार्यलोपस्तु तत्र सोढव्यः । अल्पव्रीहिलाभे इडाऽऽदिलोपः कार्यः, परन्तु प्रधानयागपर्याप्ता व्रीहय आवश्यका एव । के. ( ६।३।२० ). * प्रतिनिधिर्भवति सने मृतस्य कस्य चित् स्वामिनः । ६।३।८।२२, परन्तु तस्य कर्मकरत्वमेव, न फलस्वामित्वम् । ९।२३–२५, तथापि तस्य अनुष्ठाने स्वामिधर्मत्व भवत्येव । १०।२६. * प्रतिनिधिर्मुख्येन समानविधानः । न तु तयोः प्रकृतिविकारभावः । भा. ३।६।१४।३७–३९. * प्रतिनिधिर्मुख्याभावे यः तत्सदृश उपादीयते सः । रहस्य. पृ. १२४. * प्रतिनिधिर्मुख्यकार्यसमर्थो लभ्यते, श्रुत द्रव्यं च न मुख्यकार्यसमर्थम्, तदा प्रतिनिधिरेव ग्राह्यो न मुख्यम् । ६।३।१९।३९. * प्रतिनिधिर्मुख्यकार्यसमर्थः संस्कारसमर्थश्च लभ्यते, श्रुतद्रव्य च न संस्कारसमर्थं परन्तु मुख्यकार्यसमर्थं लभ्यते, तदा मुख्यमेव ग्राह्यम्, न प्रतिनिधिः । भा. ६।३।१८।२८. * प्रतिनिधिः संस्कृतोऽपि । प्रधानसम्बन्धात् प्राक् मुख्यलाभे, मुख्यं संस्कृत्य ग्राह्यम्, संस्कृतोऽपि प्रतिनिधिस्त्याज्यः । कदम्बूपसंस्कारोत्तर पशुनियोजनात् प्राक् खादिरलाभे गम्भिरः संस्कृत्य ग्राह्यः । के. ( वि. ६।३।१७. ) * प्रतिनिधिः साक्षात् श्रुतोऽपि मुख्येन समानविधानः यथा पूतीकाः सोमेन । श्रवणं तु नियमार्थम् । ३।६।१५।४०. * प्रतिनिधिः सोमस्य पूतीकाः श्रौतः । ६।३।१३।३१. * प्रतिनिधिः सोमालाभे आदाराः फाल्गुनानि च । 'यस्य क्रीतमपहरेयुः आदारांश्च फाल्गुनानि चाभिषुणुयात् ' ( 'आदाराः क्षीरयुक्तवल्लीविशेषाः । फाल्गुनानि लोकव्यवहारे फल्गु स्वल्पमेव प्रयोजनं येषां आर्द्रदूर्वाङ्कुरादीनां तृणानां तानि फाल्गुनानि ' इति सायणभाष्यम् । ) फल्गुनीनक्षत्रयुक्तपूर्णिमामासे येषां पर्णादिभिर्वृद्धिः तादृशा वल्लीविशेषाः

फाल्गुनानि, फाल्गुनशब्दस्य क्लिष्टार्थकरणस्यायुक्तत्वात्। आदाराःस्तु पूतीका एव स्युः अवान्तरो वा भेदः स्यात्तयोः। के. * अभावे हि श्रुतस्यानुकल्पः प्रतिनिधिः। भा. ६।३।१६।३५, * मुख्य द्रव्यं संस्कारसमर्थमपि प्रधानकार्यसमर्थं लब्धं चेत् सर्वसमर्थोऽपि प्रतिनिधिर्न ग्राह्यः, किन्तु मुख्यमेव ग्राह्यम्। ६।३।२०।४०-४१. * श्रुतद्रव्यापचारे तत्सदृश एव प्रतिनिधिः। (व्रीहीणामपचारे नीवाराः प्रतिनिधेयाः)। ६।३।११।२७. * मुख्यापचारे प्रतिनिधौ गृहीते पुनर्मुख्यलाभे प्रतिनिधिं त्यक्त्वा मुख्यमेव ग्राह्यम्। ६।३।१६।१५.

**¶ प्रतिनिधिना प्रधानकार्ये निष्पादिते सतो मुख्यद्रव्यलाभेऽपि प्रतिनिधिनैव समापनम् ॥**

**प्रवृत्तेऽपीति चेत्। ६।३।१७।३६ ॥**

**भाष्यम्**— अथ अग्निहोत्रादिषु कर्मसु श्रुतद्रव्यापचारे प्रतिनिधौ उपात्ते कृतेषु केषुचित् संस्कारेषु यदि तदेव श्रुतमुपलभ्येत, किं श्रुतमुपादीयेत, उत तेनैव प्रतिनिहितेन समापयितव्यमिति। किं प्राप्तम्? श्रुतमुपादीयेत प्रवृत्तेऽपि। तदुक्तम् 'आगमो हि तदभावात्' (६।३।१६।३५) इति। तस्मात्र प्रतिनिधातव्यमिति।

**टुप्**— प्रवृत्तेऽपीति चेत् ॥ (रत्न—यदा पुनः प्रतिनिधिमुपादाय केचन संस्काराः कृताः, तदा यद्यपि मुख्यं लब्धम्, तथापि शास्त्रीयस्योपादानस्य कृतत्वात् निवृत्तव्यापारं शास्त्रं न मुख्योपादानं प्रयुङ्क्ते, इति केवलेनापि प्रतिनिधिनैव निर्वर्तयितव्यम्, न पुनर्मुख्यमुपादातव्यम्। इति पूर्वपक्षः। सिद्धान्तमाह—) केषुचित् संस्कारेषु कृतेषु अनभिनिर्वृत्ते प्रयोजने (सति) श्रुतमेव (मुख्यम्) उपादातव्यम्। (ननु एवं संस्काराणां कृतानामानर्थक्यं स्यात्, अत आह) न संस्काराणामनुरोधः (कर्तव्यः), द्रव्यगुणत्वात् (द्रव्यस्य मुख्यत्वात्, गुणत्वात् च संस्काराणामित्यर्थः) तस्मात् (द्रव्यगुणत्वात्) ये अभिनिर्वृत्ताः संस्काराः तेषामावृत्तिः स्यात् (प्रधानवशेन गुणानुवर्त्यस्यत्वात्। 'प्रवृत्तेऽपीति चेत्' इति सूत्रम् 'नानर्थक्यात्' इत्युत्तरसूत्रेण एकवाक्यतया पूर्वपक्षसूत्रवत् आभाति, न तु तथा मन्तव्यमित्याह—) एवम् (उक्तेन न्यायेन मुख्योपादानस्य न्याय्यत्वात्) इदम् (सूत्रम्) सिद्धान्तसूत्रं भवति (वाक्यभेदेन व्याख्यातमिति वेदितव्यम्। अत्र च सूत्रार्थः— पूर्वसूत्रे 'मुख्याधिगमे मुख्यम्' इत्युक्तं तदपेक्ष्याह— इति चेत् न्याय., तत. प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादातव्यमिति। पूर्वपक्षस्तु उत्सूत्रितः स्यादित्याह—) पूर्वपक्षसूत्रमेष्यः।

**नानर्थक्यात्। ३७ ॥**

**भाष्यम्**— नैतदेवम्। येन हि खदिराभावे कदरे पशुर्नियुक्तो भवति, अथ खदिरमुपलभते। प्रवृत्तेऽर्थे किं खदिरेण कुर्यात्? अर्थार्थं हि खदिरोपादानम्, न खदिरोपादानार्थमेव। तस्मान्न श्रुतमुपादीयेत।

**टुप्**— नानर्थक्यात् ॥ (रत्न—कृतेऽपि तर्हि कदरे नियोजनादौ प्रधाने खदिरे पुनर्लब्धे सादुगुण्याय नियोजनमावर्तयितव्यं इति शङ्कमानस्योत्तरं नानर्थक्यादिति। तस्यार्थमाह—) इदमपि सिद्धान्तसूत्रमुत्प्रेक्ष्यपूर्वपक्षकम् (न पूर्वसूत्रस्योत्तरम्। अधिकरणान्तरसिद्धान्तसूत्रमिदमित्यर्थः। एवं यथाभाष्यं सूत्रं व्याख्याय सूत्रानुगुण्यात् ऐकाधिकरण्यमेव समर्थयते—) अथवा 'प्रवृत्तेऽपीति चेत्।' कृते (अपि) प्रयोजने श्रुतम् (एव) आदातव्यमिति (पूर्वपक्षसूत्रमिदम्)। एतस्योत्तरम् 'नानर्थक्यात्' इति।

**सोम**— इह ■ न मुख्यं स्यात् इति प्रत्यवस्थानात् संगतिः। सूत्रार्थस्तु— चेत् इति पूर्वसिद्धान्तपरामर्शः। मुख्याधिगमे मुख्यं इति चेत् न्याय., तत. प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादेयम्। इति चेत् इति असंदिग्धं सदिग्धवचनम्।

**वि**— 'अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः। अमुख्यस्तत्क्षणात्यूपः खादिरस्तत्क्षणात् पुनः ॥'

[ 'नानर्थक्यात्' इति सूत्रस्याधिकरणान्तरत्वमालम्ब्य शास्त्रदीपिकादिषु उच्यते— ]

**शा**—कृते प्रतिनिधिना नियोजने यदा मुख्यमेव लब्धं तदा कृतमपि नियोजनं सादुगुण्याय पुनः खदिरे कर्तव्य इति मन्यमानस्योत्तरम्। कृते नियोजने लब्धोऽपि खदिरः अनर्थक एव। नियोजनार्थं हि तदुपा-

वा— यदि अशास्त्रलक्षणत्वान्नीवाराणां कार्यप्रवृत्तिर्नास्ति, पूतीकानां तर्हि शास्त्रलक्षणत्वादनित्यत्वाच्च फलचमसवत्कार्यापत्तिप्रसङ्गः । इति प्राप्ते, अभिधीयते ।
' यागसाधनतां कुर्यात्पूतीकानां यदि श्रुतिः । ततः स्यात् कार्यवर्तित्वं न त्वेवं सा प्रवर्तते ॥ ' सोमनाशे हि प्रतिनिध्यपेक्षायां सत्यां पूतीका विधीयन्ते न यागसाधनापेक्षायाम् । अतोऽयं प्रतिनिधिनियम एव भवति, यत् सकलसोमधर्मासम्भवे विकलान् सोमधर्माननुगादयेत् तत् पूतीकगतानिति । वक्ष्यति हि ' नियमार्थः क्वचिद्विधिः ' ' तथेयं तद्विकीर्णो हि ' इति च । अतश्च नैतान पूतीकत्वं कर्माङ्गम् । किं तर्हि ? सोमधर्मोपलम्भार्थम् । तेन श्रुतिलक्षणस्यापि पूर्वेणाविशिष्टत्वमिति । तेनेहापि तदेव चिन्तायाः प्रयोजनम् । अतश्च तदाश्रयस्य तद्बुद्ध्यनपायात् गुणकामैः प्रवर्तितव्यम् । अन्ये त्वाहुः । सकलन्यस्याश्रयिणो हि गुणकामा वैकल्यादिह न प्रवर्तन्ते । नित्यस्य हि कर्मणोऽवश्यं प्रक्रमात् प्रक्रान्तस्य च सर्वस्यावश्यसमापनीयत्वात् किञ्चित् धर्मवैकल्येऽपि अवैगुण्याभ्यनुज्ञा युज्यते । यथा तु काम्यानां प्रतिनिधिभिः प्रक्रमो नास्ति, तथा गुणकामैर्न प्रवर्तितव्यम् । यदि तु प्रक्रान्ते कस्मिंश्चिद्गुणकामकल्पे द्रव्यनाशे सति प्रतिनिधीयते तत्तस्यावश्यसमापनीयत्वात् विकारेण प्रतिनिधिना वा तुल्य समापनमित्यूहानूहावेव प्रयोजनम् ।

सोम— प्रयोजनम्— ' सोम ते नीणामि ' इत्यादेः पूर्ववत् ऊहानूहौ ।

वि— ' पूतीकाभिषवोऽतुल्यस्तुल्यो वा, सोमतुल्यता । नास्ति नैमित्तिकत्वेन, तुल्यः प्रतिनिधित्वतः ॥ ' अभिषवकण्डनादिभिः सोमपूतीकयोस्तुल्यता ।

भाट्ट— यत्र तु पूतीकादौ तत्त्वेन अभावे विधिः, सकलाङ्गयुक्तसोमजन्ययागप्रयोगासम्भवे पश्चादेव तत्प्रवृत्तेः न समानविधानत्वम् । नह्यत्र पूतीकगतावयवानां प्रतिनिधिनियमः । तेषां मन्दसदृशत्वेन पक्षेऽपि अप्राप्तेः, पूतीकादेः अवयवत्वस्याप्यसम्भवाच्च । न च नियमविधित्वपरानुरोधेन तदङ्गीकारः, तस्य पश्वङ्गत्वेन निषादस्थपत्यधिकरणन्यायेन अकिञ्चित्करत्वात् । इति प्राप्ते, पूतीकपदार्थस्य हि पूतीकत्वस्य नात्र करणत्वं श्रुतम्, द्वितीयान्तत्वात् । अतश्च नियमविधित्वपरानुरोधेन तथा न पूतीकत्वस्य साक्षाद्यागसाधनत्वं लक्ष्यते, अपि तु अवयवनिष्ठसाधनत्वानान्तरीयकप्रयोजकत्वमेव इति न पूतीकपदे अवयवलक्षणा, सदृशनियामकन्यायप्रवृत्तेः पूर्वमेव च अस्य विधेः प्रवृत्तेः नियमविधित्वोपपत्तिः । अतश्चात्रापि कतिपयावयवसाधनत्वस्य सोमशास्त्रादेव सिद्धेः समानविधानत्वम् ।

मण्डन— ' पूतीकखण्डोऽप्युपदिष्टधर्मा । '

शंकर— ' पूतीकेष्वप्येवमेव । ' १६. समानविधित्वम् ।

प्रतिनिधावपि मुख्यधर्माणामनुष्ठानम् । मुख्यप्रतिनिध्योः समानविधित्वम् ॥

प्रतिनिधिश्च तद्वत् । ३।६।१४।३७॥

भाष्यम्— अस्ति प्रतिनिधिः श्रुते द्रव्येऽपचरति । यथा व्रीहिष्वपचरत्सु नीवाराः । तत्र संदेहः किं नीवाराः समानविधानाः, उत नेति । प्राप्तम् । प्रतिनिधिश्च तद्वत् । यथा नैमित्तिकं नित्येनासमानविधानमेवं प्रतिनिधिः । अतुल्यत्वात् । का अतुल्यता ? व्रीहीणां विहिता, न नीवाराणाम्, इयमतुल्यता । व्रीहीणां विहिता नीवारसामर्थ्यात्प्राप्ता भवन्ति ।

वा— प्रतिनिधावपि अयमेव न्यायः प्राप्नोति ।

न तद्वत् प्रयोजनैकत्वात् । ३८ ॥

भाष्यम्— नैतदस्ति, असमानविधानः प्रतिनिधिरिति । तद्वत् स्यात्, यद्वत् श्रुतः । न प्रकृतिविकारभावः । कुतः ? व्रीहित्वं हि व्रीहिधर्माणां व्रीहिव्यक्तौ निमित्तम् । न च व्रीहित्वस्य स्थाने नीवारत्वं भवतीति श्रूयते । तस्मान्न प्रकृतिविकारभावः । कथं तर्हि नीवारेषु धर्मा भवन्तीति ? उच्यते । या व्रीहित्वेन परिच्छिन्ना व्रीहिव्यक्तयः, नीवारेषु ताः सन्ति । तासामर्थेन ते धर्माः क्रियन्ते । तासां न व्यक्तीनामन्यासां च व्रीहिगतानां तुल्य एव विधिः । कथं तुल्यता ? उभयेऽपि व्रीहित्वलक्षिता इति । तस्मात् समानविधाना इति ।

वा— यदि नीवाराः स्वेनैव महिम्ना कर्मसाधनं भवेयुः, ततः कार्यापत्त्या धर्मैः संबध्येरन् । न तु तेषां साधनत्वे किञ्चित् प्रमाणमस्ति । ये हि तावद् व्रीहिधर्माः

कतिपया दृश्यन्ते तदुपादित्सया पुरुषः प्रवर्तमानो नान्तरीयकत्वात् नीवारत्वमुपादत्ते, न कर्माङ्गतया । व्रीहिधर्माः पुनर्व्रीहिशब्देन प्रत्यक्षेणैव चोदिता इति समानविधानाः । नहि नीवारेभ्यो व्रीहिबुद्धिः व्यावर्तते इति वक्ष्यति 'सामान्यं तच्चिकीर्षा हि' इति । तेनाऽऽह तद्देशत्वात्प्रवर्तते इति ।

अशास्त्रलक्षणत्वाच्च । ३९ ॥

भाष्यम्— इतश्च न प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभावः । कुतः ? अर्थलक्षणत्वात् । अर्थाद्धि प्रतिनिधिः क्रियते । न चार्थेनैतदवगन्तुं शक्यते व्रीहिरस्य स्थाने नीवारत्वं भवतीति । तस्माच्च प्रतिनिधेः श्रुतेन सह प्रकृतिविकारभावो भवतीति ।

वा— अशास्त्रचोदितश्च प्रतिनिधिरर्थात् क्रियते । तस्मादपि निष्प्रमाणकमस्य धर्मापन्नत्वमिति केचित् । न तु प्रतिनिधिरशास्त्रलक्षणः, प्रधानसमाप्तिचोदितत्वात् । यदि वा अशास्त्रलक्षणः स्यादेव क्रियेत । न च तदकरणात् कश्चिद्दोषः स्यात् । अत एवं वर्णयितव्यं सूत्रम् । अशास्त्रलक्षणत्वान्नीवारत्वस्य धर्मापत्तिर्नास्ति । ये तु व्रीहिधर्माः प्रधानचोदनया सकलधर्मसंबन्धाच्च व्रीहिचोदनया विकल्पा आश्रिताः, ते अर्थान्तरत्वाभावान्न धर्मापन्नाः ।

सोम— प्रयोजनम्— नात्र गुणकामप्रयुक्तप्रवृत्तिरूपं संभवति, यथा काम्यस्य कर्मणः प्रतिनिधिनोपक्रमो नास्ति, तथा गुणकामानामपि प्रतिनिधिना उपक्रमासंभवात् । तस्मात् मुख्याश्रयेण प्रवर्तमानानां गुणकामानां प्रतिनिधौ प्रसङ्गसंभवात् 'व्रीहीणां मेध' इत्यादेः ऊहानूहावेव प्रयोजनमिति वार्तिके व्यक्तम् ( उत्तराधिकरणवार्तिके व्यक्तम्, न तु अत्राधिकरणे )।

वि— 'नीवारादिप्रतिनिधेस्तुल्यो वा विधिः समः ।, पुरेवानुल्यता, सम्यमाक्रमयद् व्रीहिता यतः ॥'

भाट्ट— व्रीह्याद्यभावे नीवारादिद्रव्यप्रतिनिधेः अपि संस्कारविधितः पूर्वं साधनत्वानवगमात् असमानविधानत्वम्, सकलाङ्गयुक्तव्रीहिजन्यप्रयोगासंभवे कर्मशास्त्रेण तदाक्षेपात् । इति प्राप्ते, कथं उत्तरकालं तदाक्षेपः, तथापि व्रीहिशास्त्रार्थालोचनवेलायामेव व्रीहित्वजातेर्याग-साधनत्वे अवगते तदन्यथाऽनुपपत्त्या तदवच्छिन्नव्यक्तेः तदारम्भकीभूतावयवानां च साधनत्वमाक्षिप्यते । अतश्च जातिव्यक्त्यवयवसाधनतानां पूर्वमेवावगतानां सर्वासामसंभवे कतिपयग्रहणस्य उत्तरकालप्रतीतिकत्वेऽपि स्वरूपेण पूर्वावगतेः समानविधानत्वोपपत्तिः । नहि नीवारत्वेन रूपेण तेषामुपादानम्, येन तद्रूपेण साधनत्वबोधस्य औत्तरकालिकत्वात् असमानविधानत्वापत्तिः, अपितु व्रीह्यारम्भकावयवसमानजातीय—कतिपयावयवारब्धत्वेन । अतश्च तेषां व्रीह्यवयवनिष्ठसाधनतासम्पत्त्यर्थं भवर्जनीयतया उपादानेऽपि अवयवसाधनतायाः संस्कारविधिभ्यः पूर्वमेव प्रमितत्वात् समानविधानत्वोपपत्तिः । संस्कारविधिषु हि प्रकृतापूर्वसाधनीभूतप्रदेयप्रकृतित्वरूपावच्छिन्नप्रकृतित्वस्यैव उद्देश्यताऽवच्छेदकत्वात् अवयवनिष्ठसाधनताया अवयविनिष्ठसाधनताभेदेऽपि न विरोधः । एवं च यत्र न अवयवघटितसादृश्येन 'प्रतिनिधिः', तत्र न समानविधानत्वम्, न वा धर्मापत्त्याऽपि धर्मप्राप्तिः । यथा अवघातप्रतिनिधितया नखनिर्लुञ्चनादेः करणे नखेषु प्रोक्षणादेः, यूपकटास्तरणबर्हिर्वत् लौकिकेतिकर्तव्यतोपादानेन अपि चरितार्थत्वात् । फलचमसे तु 'तमस्मै भक्ष प्रयच्छेत्' इत्यादिशास्त्राल्लिङ्गाद्वेव अतिदेशकल्पनमिति विशेषः ।

प्रयोजनम्— 'व्रीहीणा मेध' इति मन्त्रस्य पूर्वपक्षे लोपः । सिद्धान्ते अनूहः । मन्त्रान्तर्गतव्रीह्यादिपदानां व्रीहित्वसाधनताऽऽक्षिप्तसाधनताकावयवलक्षणयैनावयवेष्वपि प्रयोगोपपत्तेः ।

मण्डन— 'धर्मोपदेशः प्रतिनिध्युपात्ते ।'

शंकर— 'साम्यं प्रतिनिधौ विधेः ।' १५.

* प्रतिनिधौ कदरे संस्कृते पशुनियोजने छूते सत्यः खदिरलाभेऽपि पुनः खदिरे नियोजनं न कार्यम् । वि. १६।३।१८.

§ प्रतिनिधौ चाविकारात् । ९।३।९।२४॥

व्रीहीणामपचारे नीवारेषु प्रतिनिधित्वेन उपादीयमानेषु 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रः ऊहेन प्रवर्तते अनूहेन वेति विचारे सिद्धान्तमाह । प्रतिनिधौ नीवारादिरूपे प्रयुक्ते सति ऊहो न इत्यनुवर्तते । प्रतिनिधौ ऊहो न कर्तव्यः । अविकारात् अविकारेणैव

मन्त्रः प्रवर्त्यताम् । चशब्दः दृष्टान्तार्थः पत्नीवत् अग्निर्गो इव इति ।

**अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २५ ॥**

सिद्धान्तं व्यावर्तयति पूर्वपक्षी । अशब्दत्वं ऊहितशब्दशून्यत्वं अनाम्नानात् वा स्यात् इतरस्य अभावाद्वा स्यात् । यदि मन्त्रे व्रीहिशब्दस्य आम्नानं न स्यात्, यदि वा इतरस्य प्रतिनिधिभूतस्य नीवारद्रव्यस्य अभावः स्यात् तदा अशब्दत्वं स्यात् । अत्र तु व्रीहिशब्दः आम्नातः । प्रयोगे च व्रीहयो न सन्ति, नीवाराश्च गृहीताः । तस्मात् नीवाराणां अभिधानसिद्धये व्रीहिशब्दस्थाने नीवारशब्द. ऊहितव्यो भवति 'नीवाराणां मेध सुमनस्यमानः' इति । तस्मात् ऊहः कर्तव्य. । इति पूर्व' पक्ष. ।

**तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात् । २६ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । व्रीहिस्थाने प्रतिनिधित्वेन नीवारद्रव्ये गृहीते 'व्रीहीणां मेध' इत्यत्र 'नीवाराणां मेध' इति ऊहो नैव कर्तव्य. । कथम् ? नीवाराणां तादर्थ्यात् व्रीह्यर्थत्वात् नीवारद्रव्य तदाख्यं व्रीह्याख्यमेव स्यात् । संस्कारैरविशिष्टत्वाच्च । व्रीहीणां विशेषेषु संस्कारा क्रियन्ते । ते च व्रीहिविशेषा· संस्कार्याः नीवारेष्वपि सन्ति । एवं च नीवारा. संस्कारैः अविशिष्टा. अभिन्ना । अतोऽपि नीवारद्रव्य तदाख्यम् । तस्मात् प्रतिनिधिभूता नीवाराः व्रीहिशब्देनैव वक्तव्या भवन्ति । तस्मान्नोह. कर्तव्य· इति सिद्धान्त. ।

**उक्तं च तत्त्वमस्य । २७ ॥**

व्रीहिगतो विशेषः नीवारेष्वस्ति इत्यस्य तत्त्वम् 'सामान्यं तच्चिकीर्षा हि' इत्यत्र ( ६।३।११।२७ ) उक्तम् । व्रीहिभि. नीवारा. अत्यन्त सदृशाः । सादृश्येन चानुमीयन्ते व्रीहिविशेषा नीवारेषु सन्तीति । तस्मात् नीवारेषु प्रतिनिधित्वेन गृहीतेषु 'नीवाराणां मेध' इति नोह. । इति सिद्धान्त । के

* प्रतिनिधौ श्रुतेऽपि पूतीकादौ ऋयाभिषवादयो मुख्यधर्माः कर्तव्या. । ३।६।१५. * प्रतिनिधौ संस्कारयोग्ये लब्धेऽपि संस्कारयोग्यस्य मुख्यस्यापि लाभे मुख्यस्यैव उपादानम् । ६।३।१८।३८. मीको. पृ. २१८९ 'द्रव्यसंस्कारविरोधाधिकरणम्' इत्यत्र द्रष्टव्यम् । * प्रतिनिधौ संस्कारसमर्थे लब्धुं शक्येऽपि संस्कारासमर्थोऽपि प्रधानसमर्थश्चेत् मुख्य एवोपादेयः । ६।३।१९. * प्रतिनिधौ स्थानिधर्माणामूहः । ९।२।१२।३९. 'स्थानिधर्माणामूह प्रतिनिधौ' इत्यत्र द्रष्टव्यम् । * मुख्यद्रव्यापचारे प्रतिनिधौ गृहीते द्रव्यभेदो भवति तथापि न यागभेद । ६।३।३।११–१२.

* प्रतिनिध्यधिकरणम् । प्रतिनिधावपि मुख्यधर्माणामनुष्ठानम् । ३।६।१४।३७–३९

* प्रतिनिध्यधिकरणसिद्धान्तहेतुपरशब्देन 'प्रयोजनैकत्वात्' इत्यनेन द्विरुक्तिशङ्कापलापक विधानैक्यमेव विवक्षितम् । रत्नमालम् , पृ. १५६.

**§ प्रतिनिध्यपचारे मुख्यसदृशस्यैव प्रतिनिधित्वम् ॥**

**न प्रतिनिधौ समत्वात् । ६।३।१४।३२ ॥**

भाष्यम्-- इद विचार्यते । श्रुते द्रव्ये उपात्ते अपचरिते प्रतिनिधिमुपादाय प्रयोग. प्राप्त: । यदा सोऽपि विनष्टः प्रतिनिहित , तदा किं प्रतिनिधिसदृशमुपादेयमुतोपात्तस्य विनष्टस्येति । किं प्राप्तम् ? प्रतिनिहिते विनष्टे तत्सदृशमुपादेयं पूर्वेण न्यायेन इति । एवं प्राप्ते, ब्रूमः । प्रतिनिधौ न स्यात् प्रतिनिधिरिति । कुतः ? समत्वात् । यथैवासौ पूर्व. प्रतिनिहित श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । एवमयमपि श्रुतचिकीर्षया, न प्रतिनिधिचिकीर्षया । तस्मान्न प्रतिनिधिसदृशमुपादेयम् । उपात्तनष्टस्यैव सदृशोऽन्वेषितव्य इति ।

सोम-- पूतीकाना प्रतिनिधित्वेऽपि तदपचारे पूतीकसदृशोपादानमेव न तु सोमसदृशोपादानमिति पूर्वाधिकरणप्रयोजनाक्षेपात् संगति. । सूत्रार्थस्तु-- प्रतिनिधौ अपचरिते न तत्सदृशः प्रतिनिधि., प्रतिनिध्यपचारेऽपि श्रुतावयवलिप्सया द्रव्यान्तरोपादानस्य तुल्यत्वादिति ।

वि-- 'प्रतिनिध्यपचारे तु तेन मुख्येन वा समम् ।, प्रक्रान्तत्वादिमो, ऽन्त्य श्रुतावयवलाभत ॥'

[ भाट्टे तु ३१–३४ सूत्रैरेकमधिकरणं कृतम् । इति नेदं पृथक् । ]

मण्डन— 'मुख्यदृक् सदृशग्रहः ।' यः सदृशस्य ग्रहः, स मुख्येन दृक् सदृक् सदृशः, न तु प्रतिनिधिना सदृशः ।

शंकर— 'नासौ प्रतिनिधेर्मतः ।' प्रतिनिधेः प्रतिनिधिः प्रतिनिधिना सदृशः न मतः ।

* प्रतिनिधिकाण्डन्यायः । ६।३।४।१३. 'प्रतिनिधिन्यायः' इत्यत्र द्रष्टव्यम् । * प्रतिनिधिकाण्डन्याये स्थिते समुच्चयस्यैव ( चरुमाहवनीययोः ) मुख्यत्वात् कथमिदमधिकरणमारभ्यते ? उच्यते । टुप्. १०।८।८।१६ पृ. २०६९.

* प्रतिनिधित्वं न भवति वैकल्पिकस्य द्रव्यस्य । ( यथा खादिरापचारे पालाशादिर्न प्रतिनिधिः व्रीह्यपचारे वा यवा न प्रतिनिधिः ) । ६।३।१२।२८–३०. * प्रतिनिधित्वं भूतद्रव्यापचारे तत्सदृशस्यैव । ६।३।११।२७. * हविषः कृत्स्नना‍शे दोषे वा आज्यस्य प्रतिनिधित्वम् । टुप्. ६।४।१।१.

* प्रतिनिधित्वं प्रतिषिद्धस्य माषादेर्द्रव्यस्य नास्ति ॥

प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः । ६।३।६।२० ॥

भाष्यम्— अथ यत् प्रतिषिद्धम्, 'अयज्ञिया वै वरकाः कोद्रवाः, अयज्ञिया वै माषाः' इति । किं तत् भूतद्रव्यापचारे प्रतिनिधातव्यमुत नेति । किं प्राप्तम् । प्रतिनिधेयमिति । आगमो वा चोदनार्थाविशेषादिति । एवं प्राप्ते, ब्रूमः । प्रतिषिद्धं न च प्रतिनिधातव्यमिति । अविशेषेण ह्येतदुच्यते, न यज्ञार्हा माषा वरका कोद्रवाश्चेति । यज्ञसंबन्ध एषां प्रतिषिध्यते । नैते यज्ञाङ्गभावं नेतव्या इति । प्रतिनिधीयमानाश्च अङ्गभावं नीताः स्युः । तस्मान्न एते प्रतिनिधातव्या इति ।

टुप्— प्रतिषिद्ध० ॥ वरकादेः शुनः पशोरिव उपादानम्, न तेषामङ्गत्वेन विधानम् । अङ्गत्वं च प्रतिषिध्यते । तस्मात् वरकादि वर्जनीयम् । एवं प्राप्ते, ब्रूमः । अर्थात् यत्र यज्ञसाधन ( त्वम् ) प्राप्तम्, तत् तत्र प्रतिषिध्यते ( अस्मल्लिखिते तु 'अर्थात् ये यत्र यज्ञसाधनं प्राप्ताः, ते तत्र प्रतिषिध्यन्ते' इति बहुवचनान्तः पाठः ) ।

सोम— इह तत्कार्यकरत्वस्य प्रत्यक्षत्वात् अस्तु प्रतिनिधानमिति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— प्रतिषिद्धं माषादिकमपि न प्रतिनिधेयम्, यस्मादविशेषेण यज्ञसम्बन्धमात्रे निषेधश्रुतिः इति ।

वि— 'माषाद्याः प्रतिनिध्यर्हा न वा, ऽऽगत्वाद्वारणात् ।, नार्हा अयज्ञियत्वोक्तेरर्थात् तद्विनिवारणात् ॥'

भाट्ट— अनारभ्यश्रुतेन 'अयज्ञिया वै माषा वरकाः कोद्रवाः' इत्यनेन माषादीनां यज्ञाङ्गत्वप्रतिषेधात् यत्र साक्षात् तेषां विधानम्, तत्रैव विकल्पार्थः प्रतिषेधः । अथवा यत्र धान्यत्वादिना सामान्यधर्मेण विधानम्, तत्र स्वेच्छाप्राप्तमाषाद्यङ्गप्रतिषेधो 'बर्हिषि रजतं न देयम्' इतिवत् । अतश्च कर्मशास्त्रानुरोधेन माषादीनां प्रतिनिधित्वस्थले साधकत्वेऽपि अङ्गत्वाभावात् तत्र न प्रतिषेधः । वक्ष्यमाणयुक्त्या द्रव्यशास्त्रानुरोधेन माषादिरूपसदृशप्रतिनिधिस्थले श्रीहियवत्वादिनैव तेषां ग्रहणात् अवर्जनीयतया माषानुपादानादङ्गत्वाभावेन न प्रतिषेधः । अतस्तेऽपि प्रतिनिधेयाः । इति प्राप्ते, 'अयज्ञियाः' इत्यनार्हस्थिसमन्वयेन साधनत्वमात्रनिषेधात् विशेषविहितातिरिक्तस्थले सर्वत्रैव माषादिप्रतिषेधप्रवृत्तेः न प्रतिनिधेयाः । द्रव्यसामान्याभावे तु प्राप्ता एवेति ध्येयम् । अत्र च लक्षणया यज्ञोद्देशेन माषनिषेधविधानाद् नैकप्रसक्तोभङ्गः ।

मण्डन— 'प्रतिषिद्धं न गृह्यते ।'

शंकर— 'प्रतिषिद्धस्य नापि सः ।' प्रतिषिद्धस्यापि सः प्रतिनिधिभावः न ।

● प्रतिनिधिनिष्पादितेऽपि कर्मणि दर्शपूर्णमासादिनामधेयं याज्ञिके प्रयुक्तमभेदापादकम् । मु पृ. १४४.

● प्रतिनिधिनिष्पादितकर्मविषयस्यापि 'अपिवाऽव्यतिरेकात्०' ( ६।१।३।१२ ) इति न्यायस्य नित्यन्यायविहितेष्वपि तुल्यत्वं वै चिन्त्यन्ते । मु. पृ. १४४.

■ प्रतिनिधिन्यायः । अग्निहोत्रादिनित्यकर्माणि श्रुतद्रव्यापचारे प्रतिनिधिना समापनीयानि ॥

**श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् । ६।३।४।१३ ॥**

**भाष्यम्**— अग्निहोत्रादीनि नित्यानि कर्माण्युदाहरणम् । तेषु श्रुतद्रव्यापचारे भवति संदेहः किं प्रतिनिधिमुपादाय प्रयोगः कर्तव्य, उत तदन्तं कर्म उत्स्रष्टव्यमिति । किं प्राप्तम् ? शिष्टस्य अभावे अनागमः अन्यस्य । तदन्तमेवोत्स्रष्टव्यम् । कुतः ? अशिष्टत्वात् । यद् व्रीहियवगुणकं श्रुतं फलवत् तन्नीवारगुणकं क्रियमाणमफलकं भवति । तस्मात् तदन्तमेवोत्स्रष्टव्यमिति ।

**टुप्**— व्रीह्यभावे तदन्तमेवोत्स्रष्टव्यम् । नियमफलसंपत्ती हि यथाश्रुतात्क्रतोः । तस्मात् ( फलाभावात् ) श्रुताभावे ( श्रुतद्रव्याभावे ) तदन्तोत्सर्गः ।

**क्वचिद्विधानाच्च । १४ ॥**

**भाष्यम्**— क्वचिद्विधीयते । यथा ' यदि सोमं न विन्देत् पूतीकानभिषुणुयात् ' इति । यदि च प्रतिनिधिमुपादाय प्रयोगः कर्तव्यः स्यात्, न विधीयेत । विधीयते तु । तस्मात् यत्र ( यत्र ) न विधीयते, न तत्र प्रतिनिधिरिति ।

**आगमो वा चोदनार्थाविशेषात् । १५ ॥**

**भाष्यम्**— आगमो वा प्रतिनिधेयस्य द्रव्यस्य । कुतः ? चोदनार्थाविशेषात् । यजतिचोदनाचोदितो ह्यर्थो न विशिष्यते व्रीहिभिर्नीवारैर्वा क्रियमाणः । यागश्च अवश्यकर्तव्यो नित्येषु अनित्येषु च प्रारब्धेषु ।

**टुप्**— ' आगमो वा० ' ॥ ' आग्नेयोऽष्टाकपाल ' इतीय चोदना नीवारैरपि संपादयितुं शक्यते (द्रव्यान्तरेऽपि कर्मभेदस्य स्थितत्वात् ) प्रारब्धमस्य समापनीयमिति नियमः ( अवश्यम्भावः ) अस्यामेव ( शिष्टविगर्हणाकल्पितया श्रुत्या ) चोद्यते । ( एतदुपलक्षणम् । नैमित्तिकं कर्म अनारब्धमपि मुख्यद्रव्याभावे निश्चितेऽपि प्रतिनिधिमेव अङ्गीकृत्य प्रारब्धव्यमेव इति ) । या च ( प्रधानचोदना ) नियमेन अर्थात् द्रव्यमात्राद् भवति, सा श्रुतैरेकवाक्यता प्रतिपद्यमाना ( द्रव्यान्तराणाम् ) अर्थप्राप्तिं बाधते । श्रुताभावे ( तु ) या अर्थप्राप्तिः, सा केन निवार्यते ? तस्मात् ( द्रव्यान्तराणाम् ) आगमः कर्तव्यः ।

**नियमार्थः क्वचिद् विधिः । १६ ॥**

**भाष्यम्**— अथ यदुक्तं क्वचिद् विधानादिति । उच्यते । नियमार्थः क्वचिद् विधिः । सोमाभावे बहुषु सदृशेषु प्राप्तेषु नियमः क्रियते ' पूतीका एवाभिषोतव्याः ' इति । तस्मात् प्रतिनिधिमुपादाय प्रयोगः कर्तव्य इति ।

**टुप्**— एतदयुक्तम् । उत्पत्तिवाक्यशिष्टत्वात् सोमस्य नास्ति प्रतिनिधिः । कथम् ( उत्पत्तिवाक्यशिष्टस्य न प्रतिनिधिर्भवति । उत्तरम्– ) उत्पत्तिवाक्ये यद् रूपमवगतम्, तद् रूपमेव ( ' ज्योतिष्टोमेन स्वर्गकामः ' इत्यादिना कर्म ) प्रयोगवाक्येन ( स्वरूप– ) अरूपेण फले विधीयते । ( दर्शपूर्णमासयोस्तर्हि कथं प्रतिनिधिः ? अत आह– ) नीवारैः क्रियमाणे, उत्पत्तिवाक्ये यद् रूपम्, तन्न भिद्यते । इह तु सोमेन विना भिद्यते । तस्मात् तद्रूपभेदः ( करणस्वरूपस्य भेदः ) । रूपभेदाच्च शब्दान्तरम् ( मुख्यम् । इतश्च न प्रतिनिधिरित्याह– ) यत्र हि अगुणा ( उत्पत्ति- ) चोदना भवति ( अग्निहोत्रादिषु ), वाक्यान्तरेण वा ( यत्र ) गुण ( विहितः यथा दर्शपूर्णमासयोः ), तत्र तदभावे ( तत्रादिष्टस्य वाक्यान्तरशिष्टस्य वा गुणस्याभावे अपि ) उत्पत्तिचोदनासमर्थं द्रव्यम् ( द्रव्यान्तरम् ) उपादीयते । यथा उत्पत्तेः ( उत्पत्तिवाक्यानवगतरूपपरित्यागेन ) स्थितस्य तस्य यागस्य अपेक्षामयनः प्रतिनिधिः । सोमे तु यस्मिन्नेव क्षणे ( विधि– ) प्रत्ययेन परामर्शो यागस्य, द्रव्यस्यापि तस्मिन्नेव अतः ( द्रव्यात्– ) पूर्वमनुपपन्नत्वात् अपेक्षा नास्ति ( यागस्य द्रव्यापेक्षा नास्ति ) । अपेक्षाऽऽक्षिप्तश्च प्रतिनिधिः । ' नियमार्थो विधिः ' इत्येतदपि अयुक्तम् । ( इत्येतत् अस्मादपि कारणात् अयुक्तमिति रत्न. ) नहि ( सोमस्य ) मुख्यसदृशे ( द्रव्यान्तरे ) सति ईषत्सदृशः ( पूतीकः ) पक्षेऽपि प्राप्तः । तस्मात् अत्यन्ताप्राप्तो विधीयमानः ( पूतीकः ) न *नियमार्थो भवतीति* । ( समाधत्ते– ) अत्रोच्यते । प्रक्रान्तं ( कर्म ) अवश्यं समापनीयम् ।

तस्मात् सोमाभावे द्रव्यान्तरमुपादेयम् । ( यत्तु अपेक्षाऽभावादित्युक्तं तत्राह– ) 'यजेत' इत्येतत् ( पदम् ) यत्किञ्चिद् द्रव्यमपेक्षमाणं 'सोमेन' इति पदान्तरेण निराकाङ्क्षीक्रियते । यथा ( आग्नेयोऽष्टाकपालः इति– ) वाक्यं वाक्यान्तरेण व्रीहिभिः ( –यजेत ) इति ( अनेनैकवाक्येन ) । एवं चेत् पदान्तरवाक्यान्तरयोस्तयोः ( द्वयोः ) न ( कश्चित् ) विशेषोऽस्ति, अपेक्षायास्तुल्यत्वात् ।

[ हस्त. पद्य पुस्तके एतदधिकरणीया लिपिर्वे नास्ति । आनन्दाश्रमीये तन्त्रवले चास्त्येव इति सा संगच्छते । ] अथ यदुक्तम् ( अपेक्षानिराकरणार्थम्, ) सोमवल्लुपितस्य ( एव ) स्वरूपत्वात् शुद्धस्य ( यागस्य ) प्रयत्नापार एव ( विध्यात्मकः ) नास्ति, तत्र कुतः पदान्तरापेक्षा ( इति । तत्र– ) उच्यते । पदार्थपूर्वकत्वात् वाक्यार्थस्य अपेक्षया विना संबन्ध एव नास्ति । अन्यदिदानीमेतत् एकस्य पूर्वकालः परामर्शः, एकस्य ( अपरस्येत्यर्थः ) समकाल इति । ( तथा ) एकस्य पूर्वकालेन संबन्धः, एकस्य ( तु ) समकालेनेति न ( तेन ) कश्चिद्विशेषः । ( उभयत्र ) अपेक्षा तावदस्ति । अपेक्षाऽऽश्रितश्च प्रतिनिधिः । ( तत्रैव युक्त्यन्तरमाह– ) अपि च सोमो नैव ( साक्षात् ) यागसाधनम्, किन्तु तदुपलक्षितो रसः । स चाविशिष्टः पूतीकेष्वपि । तस्मान्नास्ति रूपभेदः । एवं च शब्दभेदः ( अपि ) नास्ति ( इति न नामान्तरं मृग्यम् ) । अतः ( ज्योतिष्टोम– ) नामधेयमविरुद्धम् । ( कथं पुनः रसस्य साधनत्वमत आह– ) एवं च दशमे वक्ष्यति ( १०।७।१।२ ) 'पश्वङ्गत्वुपलक्षित हृदयादि हविः' इति ( पश्वङ्गलिङ्गस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि इति तु भाष्याक्षराणि पृ. २०२२ । अनुवादस्तु अर्थत ) । इहापि स तुल्य. ( एव न्यायः अभिषवादिविधानात् ) । अथोच्येत सोमाकृत्युपलक्षितो यो रस॰, स यागसाधनम्, न पूतीकाकृतिको रस. ( इति । परिहरति– ) दर्शपूर्णमासयोरपि शक्यं वदितुम् 'व्रीह्याकृत्या उपलक्षितमवदानं यागसाधनम्, न तु नीवाराकृत्या' इति नास्ति वैषम्यम् । अथ यदुक्तम् ( सत्यपि प्रतिनिधौ पूतीकनामधेयस्य श्रवणात् प्राप्तिर्नास्ति इति– ) अभावे विधिः ( एवायम् ) इति । तत्रोच्यते । यत्र कदाचिदपि प्राप्नोति स विधिः ( कर्मणि– 'उपघ्नो घोः किः' ) यथा 'अग्निहोत्रं जुहुयात्' ( जुहोति पाठान्तरम् ) इति ( होमः विधेयो भवति ) । पूतीकाः ( तु ) कदाचित् प्राप्नुवन्ति । तस्माद् युक्तमुक्तम् 'नियमार्थः क्वचिद् विधिः' इति । यदि ( असमभावे ) विधिः स्यात्, ( ततः ) इन्द्रवाय्वादिभिः ( देवताभिः ) न ( यागस्य ) संबन्धः स्यात् । कथम् ? ( इति आनन्दाश्रमीये ) सोमरसग्रहणे ( हि ) ताः ( श्रुताः, तद्द्वारेण तत्साधनक– ) यागसंबन्धिन्यः ( भवन्ति ) न ( तु ) साक्षात् ( यागे श्रुताः ) सोमद्रव्याश्रितः ( ग्रहणाख्यः ) संस्कारः, स तद्द्रव्याभावे ( आश्रयभूतस्य द्रव्यस्याभावे ) न भवति । न च पूतीकाः ( भवन्मते ) सोमः इत्यनेनांशेन गृह्यन्ते, यथा व्रीहयो नीवारांशेन । न च विकल्पेनोपदिश्यन्ते व्रीहियववत्, अभावविध्यभ्युपगमात् । न च कार्यापत्तिः ( स्थानापत्तिरूपः अविशेषः अपि तद्धर्मप्रापिका भवितुमर्हति ) प्रत्यक्षविधानात् । तस्मान्नास्ति देवतासंबन्धः । तथापि अपूर्वप्रयुक्तत्वे द्वारमात्रात्र धर्मसंबन्धः । उत्पत्तिवाक्यशिष्टेन ( शिष्टत्वेनेत्यर्थः ) प्रतिनिधिमनिच्छतः अभावे विधान प्रतिनिधिनियमश्च न स्यात् । कर्मान्तरं तथा सति प्रसज्येत ( कर्मान्तरे च सति ) प्रकान्तं ( कर्म ) न समाप्येतेति ( तथायुक्तम् । इति समाप्तौ ) ।

तन्नित्यं तच्चिकीर्षा हि । १७ ॥

भाष्यम्— कथं पुनरिदमवगम्यते नियमार्थमेव तद्वचनमिति ? उच्यते । यत. प्राप्ताः पूतीकाः । कथं च ते प्राप्ताः ? तच्चिकीर्षा हि । तत्र सादृश्य चिकीर्षा इत्येतद्वक्ष्यामः ( ६।३।११।२७ ) । तच्चिकीर्षया च प्राप्ताः पूतीकाः । तस्मात् तन्नित्यम् । वचनमेतत् नियमाय नित्यमिति गम्यते ।

सोम— सूत्रार्थस्तु— श्रुतिप्रमाणकत्वात् व्रीह्यादिद्रव्यकर्मणः श्रुतिप्रमाणावगतत्वात् शिष्टस्य व्रीह्यादेरभावे अन्यस्य अनाम्नातस्य अशिष्टत्वात् इति ।

वि— 'द्रव्ये प्रतिनिधिर्नास्ति विद्यते वा, न विद्यते । मानाभावा, दत्ति कर्मचोदनाऽऽक्षेपिणी यतः ॥'

भाट्ट— काम्ये आरम्भोत्तरम्, नित्ये ततः पूर्वमपि, श्रुतद्रव्यालाभे द्रव्यान्तरं प्रतिनिधेयं न वा इति चिन्तायाम्, अशक्तौ अङ्गहानेन प्रयोगेऽपि अनङ्गग्रहणे प्रमाणाभावः । तथाहि, न तावत् द्रव्यादिशास्त्रम्, तस्य व्रीहित्वाद्यवच्छिन्नविधायकत्वेन नीवाराद्यविधायकत्वात् । नहि तेषु व्रीहित्वमस्ति । नापि कर्मशास्त्रं तदाक्षेपकम्, द्रव्यशास्त्रेण द्रव्यान्तरसाधारणाक्षेपप्रतिबन्धेन व्रीह्यादिविधानात् द्रव्यान्तराक्षेपानुपपत्तेः । नहि व्रीहिशास्त्रं शब्दतो नियमविधिः, अपि तु आक्षेपप्रतिबन्धद्वारा फलतः । अतश्च यथैव अग्नि-विद्ययोः स्वविधिप्रयुक्तयोरेव लाभात् आक्षेपप्रतिबन्धेन अशक्तस्य शूद्रादेर्वा न तदाक्षेपः, अपि तु अग्नि-विद्ययोः अधिकारिविशेषणत्वमङ्गीकृत्य तद्वत एवाधिकारः, एवं द्रव्यांशेऽपि प्रधानविधिना अनाक्षेपात् व्रीह्यादिमुख्यद्रव्यवतः एव अधिकारित्वकल्पनेन न द्रव्यान्तरोपादानमिति प्रयोगोत्सर्ग एव युक्तः । इति प्राप्ते, द्रव्यशास्त्रेण द्रव्यान्तरसाधारण्येन आक्षेपप्रतिबन्धेऽपि व्रीह्यादीनां अग्नि-विद्ययोरिव स्वतन्त्रप्रयोगविधिविधेयत्वाभावात् प्रयाजादिवत् प्रधानविधेरेव व्रीह्यादिप्रयोगविधायकत्वात्, प्रयोगविधिविषयीभूतानां तेषामधिकारिविशेषणत्वानुपपत्तौ निमित्तवत्त्वात् अशक्तौ त्यागेनापि प्रधानकर्तव्यताऽवगतेः, तस्य च द्रव्यान्तरमन्तरेण अयोगात् युक्तं तदाक्षेपकत्वम् । अग्नि-विद्ययोस्तु स्वतन्त्रप्रयोगविधिसिद्धयोः एतत्प्रयोगविधिविषयत्वाभावेन यथाशक्त्युपक्रमविषयत्वाभावात् युक्तं अधिकारिविशेषणत्वमिति वैषम्यम् । न च एवमपि द्रव्यस्योत्पत्तिवाक्ये श्रुतस्य निमित्तान्वयात् पूर्वमेव यागान्वयात् पश्चादवगम्यमाननिमित्ते एव द्रव्यावच्छेदकल्पनात् द्रव्यावच्छिन्नजीवनादेरेव निमित्तत्वावगतेः कथं द्रव्यान्तरेण याग इति वाच्यम् । विशिष्टविधौ निमित्तान्वयात् पूर्वं भावनायामन्वितस्यापि द्रव्यस्य विशेषणविधौ यागाङ्गत्वबोधद्वारा यागगतफलत्वलक्षणार्थं काम-यावज्जीववाक्याभ्यां पश्चादागतत्वाङ्गीकारेण निमित्तपापस्यान्वयोत्तरमेव द्रव्यस्य यागाङ्गत्वबोधेन प्रयाजादिवत् तथापि यथाशक्त्युपक्रमोपपत्तेः । अतस्तदा कर्मशास्त्रेण तत्साधारण्येन द्रव्यान्तराक्षेपात् युक्तः प्रतिनिधिः । तस्य च अङ्गत्वाभावेऽपि उपकारकत्वमात्रेण ग्रहणं बोध्यम् । एवं च कर्मचोदनया यत्किंचिद्द्रव्यप्राप्तौ मुख्यान्तरेण तद्वाधस्य, वचनेन च पूतीकाना नियमः इति वक्ष्यते ।

मण्डन— 'मुख्याभावे समानयेत् ।' प्रतिनिधिम् ।

शंकर— 'द्रव्यादेः प्रतिनिध्ययः ।' प्रतिनिधेः अयः आयः आगमः, ग्रहणमित्यर्थः ।

● तत्कार्यापन्ने (जनपदपुरपरिपालनकण्टकोद्धरणरूपराजकार्यापन्ने) प्रतिनिधिन्यायेन ब्राह्मणादौ राज शब्द इति द्रष्टव्यम् । वा. २।३।२।१ पृ. ५८९.

● प्रतिनिधिपेटिका । भा. ६।३।४–२० इति सप्तदशाधिकरणानि । एषु हि प्रतिनिधिविषयको विचारः कृतः । के.

● 'प्रतिनिधिप्रतिदाने च यस्मात्' (पा० २।३।११) अत्र कर्मप्रवचनीययोगे पञ्चमी । प्रद्युम्नः कृष्णात् प्रति, तिलेभ्यः प्रतियच्छति माषान् । मणि. पृ. १३२.

● प्रतिनिधिप्रयोगेऽपि व्रीह्यादिमन्त्रस्य न विकारः । ९।३।९।२४–२७.

● प्रतिनिमित्तं नैमित्तिकानुष्ठानं षष्ठे वक्ष्यते । तु. पृ. ७८६.

● प्रतिनिमित्तं नैमित्तिकावृत्तिः इति न्यायः । जीवननिमित्तकाग्निहोत्रादौ निमित्तस्य प्रतिक्षणं भेदात् प्रतिनिमित्तं नैमित्तिकावृत्त्या सततानुष्ठानप्रतीतेः तद्नुरोधेन अशक्याङ्गत्यागः वक्ष्यते । भाट्ट. ६।२।७.

● 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान्' इत्यत्र न च यावत्तावच्छब्दाभ्यां क्रियाद्वयस्य सम्बन्धमात्रावगतौ शेषित्वपक्षे आरादुपकारकत्वेन तन्त्रत्वापत्तेः तावच्छब्दार्थप्राप्त्यभावेन विधेयत्वप्रसङ्गात्, निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेन तावच्छब्दार्थस्य प्राप्तत्वेन अविधेयत्वात् विधिलाघवात् शेषेण निमित्तत्वावगतिः सिद्धान्तेऽपि सुलभा इति वाच्यम् । पक्षद्वयेऽपि निमित्तानुरोधेन प्रधानानुरोधेन

वा आवृत्तिप्रसक्तौ कालैक्येन तन्त्रत्वप्रासेः तावच्छब्दस्य प्रतिप्रसवविधित्वावश्यम्भावात् । भाट्ट. ३।४।१४, * 'वसन्तेवसन्ते ज्योतिषा यजेत' इत्यत्र गुणभूतकालानुरोधेन प्रधानावृत्तेः अप्राप्तत्वया वीप्साऽर्थस्यापि विधेयत्वे वाक्यभेदापत्तौ 'प्रतिनिमित्तं०' इति न्यायप्राप्तवीप्साऽर्थानुवादकत्वात् तद्वाक्यस्थाया एव सप्तम्याः निमित्तपरत्वावसायः । ६।२।११.

* प्रतिनिर्यातनं प्रतिदानम् । तिलेभ्यः प्रतियच्छति माषान् । के.

* प्रतिनिर्वापाद्विगन्त्यावृत्तिः । ११।४।१४.

* प्रतिनिहितस्य अस्वामित्वम् (सूत्रे) । ६।३।९.

* प्रतिपत् (दृ) 'उपास्म' इत्यादि विकृतौ न प्रवर्तते । अतिदेशो न विकृतौ प्राकृतकाम्यगुणानाम् । भा ८।१।१४।२३–२५. * प्रतिपत् शस्त्रादौ प्रथमा ऋक् । के. * प्रतिपत् (वहिष्पवमानगता) सत्य—गौरव—भपचित्वादौ उभयत्रापि न उपयती, न आग्रियमाणी, किन्तु अन्यैव । भा १०।५।१६।५९–६१. * प्रतिपदोः ('सुत हि स्थ., घृते असृग्रम्' इत्येतयोः ज्योतिष्टोमात्) कुलायादौ उत्कर्षः, न तु ज्योतिष्टोमे एव निवेशः । ३।३।९।१७–१९. मीको. पृ. २२११ 'द्वित्वबहुत्वाधिकरणम्' इत्यत्र द्रष्टव्यम् । * प्रतिपदोः पृष्ठगतयोः उपवत्प्रपस्योः नैमित्तिकयोः प्राकृतयोः सत्रादिविकृतौ नानुष्ठानम् । १०।५।२६।५९–६१. मीको. पृ. ११६४ 'उपयत्प्रयत्योः नैमित्तिकयोः०' इत्यत्र द्रष्टव्यम् । * प्रतिपदि (विधौ) अहनि अग्न्याग्म्यात्वम् । भा. १२।२।५।१५.

* प्रतिपदधिकरणम् । प्रतिपदोः कुलायादौ उत्कर्षः । द्वित्वबहुत्वाधिकरणम् । ३।३।९।१७–१९.

* प्रतिपद्द्वियानस्य द्वित्वबहुत्वयुक्तस्य श्रुत्या द्विबहुयजमानकक्रत्वन्तरसंयुक्तस्य ज्योतिष्टोमप्रकरणे विनियोगनिवृत्तिः । सु. पृ. ११९५–९६.

* प्रतिपत्तिः । (क्रमं बाधिला आपि प्रथम लक्षणानि संगृह्यन्ते, अनन्तरं उदाहरणादीनि ।) अनर्थिकस्य यः कोऽप्युपयोगः । वि. ३।४।२१, * प्रतिपत्तिः इष्ट-(यज्) शिष्टस्य संस्कारः । ३।८।१९.

* प्रतिपत्तिः कृतप्रयोजनकस्य द्रव्यस्य रिक्तीकरणादृष्टफलः संस्कारः अन्यत्रापनयात्मकः । कु. ३।२।५।१३ पृ. २८७. * प्रतिपत्तिः नाम कर्म भुक्तोपभोगद्रव्यसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । सा च प्रतिपत्ति त्रिविधा- प्रधानोत्तरकाला, प्रधानपूर्वकाला, प्रधानमध्यकाला चेति । बाल. पृ. ८२. * प्रतिपत्तिः नाम संस्काररूपो दृष्टोऽर्थः । वि. ४।२।४. * प्रतिपत्तिर्नाम सत्कारः । उतश्च राजनिर्मोकस्य ग्रावीना परेण शिरसा धारणरूपसत्कारे कृते राज्ञः स्वात्मनि अतिशयबुद्धेः मानसप्रत्यक्षसिद्धत्वात् इहापि (विषाणामासनेऽपि) निष्फलस्यापि कार्यस्य (कण्डूयनस्य) तदीयद्रव्यप्रतिपत्त्या समयत्वातिशयः । इदञ्च वाजपेयापूर्वस्य बृहस्पतिसवेन अतिशयः । सोम. ४।२।७. * प्रतिपत्तिः यागोपयुक्तद्रव्यसंस्कारः । वि. १०।२।९. * प्रतिपत्तेर्लक्षणसूत्रम् 'उत्पत्तौ येन संयुक्तं तदर्थं तत् श्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् ।' (४।२।१९) इति सूत्रेण । सूत्रार्थस्तु मीको. ११०४ पृष्ठे द्रष्टव्यः । के. * प्रतिपत्तिः अग्नीषोमीये पशौ ऐकादशिनादिषु च गुदैकपयजनम् । भा १२।४।४।८. * प्रतिपत्तिः अतिरिक्तस्य, न तु अतिरेचयितव्यं इति शास्त्रमस्ति । अतिरेकश्चावश्यम्भावी । टुप्. ४।२।५।१९. * प्रतिपत्ति. अवभृथे ऋजीषादिनयनम् । ४।२।८।२०–२२. मीको. पृ. ६१९ 'अवभृथे ऋजीषादिनयनम्०' इत्यत्र द्रष्टव्यम् । * 'प्रतिपत्तिरिति चेन्न कर्मसंयोगात्' (११।२।१९।६५–६६) । न चैवं निष्कासस्य कर्मार्थत्वपक्षे (अर्थकर्मत्वपक्षोऽन्यः) 'प्रतिपत्ति०' इत्येकादशाधिकरणसूत्रविरोधः, तस्य तुषादौ प्रतिपत्तिनिराकरणार्थत्वेनापि उपपत्तेः । (वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति–इत्यत्र) । कौ. २।१।११।२४ पृ. ८५. * प्रतिपत्तिः इष्टैकदेशस्य, एकदेशस्य च होमः । ज्योतिष्टोमे 'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे' इति । ३।८।१८।३३. * प्रतिपत्तिः उपयननं नार्थकर्म उपयुक्तशेषत्वात् । के. (भा. १२।४।४।८). * प्रतिपत्तिः चात्वाले कृष्णविषाणायाः प्रासनम् । ४।२।७।११.

मीको. पृ. १४८३ 'कृष्णविषाणाप्रासनाधिकरणम्' इत्यत्र द्रष्टव्यम्। ● प्रतिपत्तिः द्रव्यं न प्रयोजयति। भा. ११।४।९।२८. ● प्रतिपत्तिः। न चान्यत्रानुपयुक्तस्य प्रतिपत्तिर्युक्ता। वा. २।३।७।१८ पृ. ६०४. ● प्रतिपत्तिः न जाघनी पत्नीसंयाजेषु दर्शपूर्णमासयोर्वा, अग्नीषोमीये पशौ वा, पशुगणेषु वा, किन्तु अर्थकर्म। के. १२।४।३।१०-१६. ● प्रतिपत्तिर्न ज्योतिष्टोमे मैत्रावरुणस्याराय दण्डदान किन्तु अर्थकर्म। ४।२।६. ● प्रतिपत्तिः। न प्रकृते प्रयोजने कश्चित् प्रतिपादनमर्हति। भा. ३।५।११।२२. ● प्रतिपत्तिः प्रणीतानिनयन दर्शपूर्णमासयो.। ४।२।५।१४-१५. मीको. पृ. २३४६ 'निनयनन्याय.' इत्यत्र द्रष्टव्यम्। ● प्रतिपत्तिः प्रयाजशेषेण हविरभिघारणमिति उपयुक्तसम्कारोऽभिघारणम्। ४।१।१४।२३-२६. ● प्रतिपत्तिः प्रस्तरस्य शाखायाश्च प्रहरणम्। भा. ६।४।१३।८४, ● प्रतिपत्तिः प्रस्तरप्रहरणम्। ३।२।५।१५, ● प्रतिपत्तिः यजमानशरीरे निक्षेपण यज्ञपात्राणामग्नीना च परिधानीये कर्मणि विधीयते 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति। ११।३।१३।३४, ● प्रतिपत्तिः। यद्धि कृतप्रयोजनमाकीर्णकरमवतिष्ठते, तत् प्रतिपादयितव्यम्। ३।५। ११ ● प्रतिपत्तिर्लोहित कृमिरसन च अग्नीषोमीये पशौ। के. (भा. ४।१।१२।२७). ● प्रतिपत्तिः याजिनस्यानुनिष्पन्नस्य चातुर्मास्यवैश्वदेवपर्वणि। भाट्ट. ४।१।९. ● प्रतिपत्तिः। वेदविहितप्रतिपत्त्यभावे लौकिकप्रतिपत्तिसिद्धिः। वा. ३।५।१०।३१ पृ. १००६. ● प्रतिपत्तिः पशुलोहितनिरसन स्विष्टकृद्याग. चात्वालप्रासन च प्रतिशाखस्य पशुलोहितस्य शेषस्य कृष्णविषाणा देश्च अप्रयोजका। बाल पृ. १०८. ● प्रतिपत्तिः शाखाप्रहरणम्, न तु अर्थकर्म। दर्शपूर्णमासयो। 'सह शाखया प्रस्तर प्रहरति' इति। ४।२।३।१०-१३. 'शाखाप्रहरणाधिकरणम्' इत्यत्र द्रष्टव्यम्। ● प्रतिपत्तिः शेषस्य इडाऽऽदिशेषभक्षा.। १०।२।९।३०-३४. ● प्रतिपत्तिः. समिष्टयजु। यस्य तु ('उपस्तृणन् अभिघारयन् आज्यस्य यजन्' इति) तैत्तिरीयशाखा चेदया उत्पत्तौ अन्यसंयोगात्, समिष्टयजुश्च जुहोति चोदितत्वेनायज्ञत्वात्, प्रतिपत्तित्वमवधारयितुम्। वा. ३।५।१।६. ● प्रतिपत्तिः सोमलिप्तद्रव्याणामवभृथगमनम्। ४।२।८।२०-२२. ● प्रतिपत्ति. हानोपादानादिकार्यानुगम्या। बृहती. पृ. २५९. ● वचनान्तरेण शेषभावे अवगते अन्यत्र संयोगे भवति प्रतिपत्तिः, यथा स्विष्टकृत्। टुप्. ४।२।५।१४. ● कृतार्थप्रतिपत्तय. शेषकार्याणि स्वयमेव न अकृतप्रयोजनमपि द्रव्यं प्रयुञ्जते। वा. ३।५।१।६. ● प्रतिपत्तेः प्रथमकृतसामवायिकाङ्गमात्रानुगृहीतप्रधानानन्तर उत्पन्ने प्रधानोत्पत्त्यपूर्वे क्रियमाणाया. मात्यादिमत्प्रधानोत्पत्त्यपूर्वसहकारित्वावगमः। सु पृ. १५१२. ● प्रतिपत्ते. प्रयोगमध्ये विधानाभावेन समयान्तरे प्रतिपत्तिविधानादेव कल्प्यते 'विनाऽपि प्रतिपत्तिं कर्म स्वफल साधयति, परन्तु अन्यथाप्रतिपत्तौ दुष्यति' इति। तनश्च कर्मण. स्वकार्यजनने प्रतिपत्त्यनपेक्षणात् न फलजनकत्वविरोध.। सोम. ११।३।१३. ● न च प्रतिपत्तेर्मन्त्रोऽङ्ग न भवति। निष्प्रयोजनस्य तु अङ्गं नेष्यते। प्रतिपत्तिस्तु दृष्टार्थत्वेन सुतरां प्रयोजनवती नियमादृष्टसिद्ध्यर्थं च अपेक्षते वैदिकानि साधनानि। या. ३।२।५।१५. ● प्रतिपत्तीनां प्रतिपाद्यप्रयोजकत्वायोगरूपन्यायेन यथा प्रतिपाद्योत्पत्तिप्रयोजकत्वाभाव. सिध्यति, एव प्रतिपाद्यस्य शास्त्रतः कृत्स्नहोमे प्राप्ते तद्धारणप्रयोजकत्वमपि सिध्यत्येव। तदुक्तम् 'सोमेऽवचनात्' इत्यधिकरणे (३।५।६) शास्त्रदीपिकायाम्। बाल. पृ. १०९. ● प्रतिपत्तौ नियमापूर्वं फलमस्त्येव। 'इत्थमेव प्रतिपत्ति. नान्यथा' इति नियम.। वि. ४।२।७.

● प्रतिपत्तिकर्मणी पिष्टलेपफलीकरणहोमौ। भा. ८।४।५।२७.

● प्रतिपत्तिनियमः शृदस्य दृष्टार्थ अग्नीषोमीये पशौ। भा. १२।४।८।८.

● प्रतिपत्तिविधिः नियमविधि द्रव्योद्देशक एव। बाल पृ. २३.

● प्रतिपत्तु. संवेदनम्। यत्र स्वरूप परिच्छिद्यते तत् संवेद्यमित्युच्यते, तत्र. स्वरूपपरिच्छेदः संवेदनमुच्यते। अत. स्वस्य प्रतिपत्तुः संवेदनं प्रत्यक्षमित्यु-

ध्यते । स्वरूपग्रहणं हि, प्रत्यक्षं विहाय अन्यदतो नास्ति इति स्वरूपग्रहणं प्रत्यक्षम् । स्वरूपग्रहणं च संवेदनम् । अत. मिदं संवेदनं प्रत्यक्षमिति । ऋजु. पृ. ६५.

## प्रतिपदाधिकरणम् ॥ ( २।१।१।१ ) ।

भाष्यम्— ( सम्बन्धग्रन्थः ) प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम् । तत्र विध्यर्थवादमन्त्रस्मृतयः तावतो निर्णीताः । गुणविधिर्नामधेयं परीक्षितम् । संदिग्धानामर्थानां वाक्यशेषादर्थाध्यवसानमुक्तम् । तत्र प्रस्तर्तव्यम् । अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि चेति । एष प्रत्यर्थो वर्णनीयो नान्यः । एष एव शास्त्रार्थसम्बन्धः ।

वा— सम्बन्धं तावत् लक्षणद्वयस्य करोति । तत्र 'प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्' इत्युक्तम् ( भाष्ये ) । तत् कुतः ? नैव हि प्रथमेऽध्याये सूत्रकारेण किञ्चन लक्षणेन प्रमाणादेः स्वरूपमुपवर्णितम् । लक्षणं नाम लक्षणमुच्यते, येन तद्व्यतिरिक्तेभ्यः तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते । न चेह प्रमाणादीनां लक्षणमुक्तम् । अनुमानादीनि तावत् नैव सूचितानि । प्रत्यक्षमपि धर्मं प्रति अनिमित्तत्वेन उपन्यस्तम्, न लक्षणत्वेन इति व्याख्यातम् । न च शब्दोऽपि कश्चित् धर्मप्रमाणभूतो लक्षितः, अस्मिन्नेवाधिकरणे तस्य लक्ष्यमाणत्वात् । यदपि च वृत्तिकारेण तेषां लक्षणं प्रदर्शितम्, न तत् अध्यायार्थत्वेन उपसंहर्तुं युक्तम्, सूत्राध्यायार्थानुपसंहारात् ( सूत्रारूढः अध्यायार्थः इति शाकपार्थिवादित्वात् मध्यमपदलोपेन समासः । सुधा. ) । कथं च समस्तलक्षणार्थव्यतिरिक्ते एवार्थे सूत्राणि क्षीयेरन् । अपि च वृत्तिकारेण योऽपि तावत् (प्रमाण)लक्षणः प्रत्यक्षपूर्वकः अशरीश्वरतया, सोऽपि नैव लक्षणत्वेनात्र । लोकप्रसिद्धार्थानि हि तानि अपरीक्ष्यत्वेनोक्तानि, न प्रथमाध्यायविषयत्वेन उपसंहारमर्हन्ति । तस्मात् यत् प्रथमाध्याये वृत्तम्, तदशेषेण्य एतद्वाच्यं नैवम् । तत्र प्रमाणलक्षणं तावत् चोदनालक्षणप्रमाणस्य ( अवगमः इति युक्तम् ) । विध्यादिवाक्यनिर्णीतिः प्रमाणेनैव निरूपिता । प्रथमो हि प्रथमः पादः चोदनाप्रमाणीकरः । न धर्मस्य चोदनालक्षणत्वानुक्तम् । अतः अवधारितार्थप्रमाणात्मप्रमाणत्वात्

प्रमाणशब्दः 'प्रतिपाद्यते' इत्येवं व्युत्पाद्य धर्मविषयः एव व्याख्येयः । सत्यपि प्रमेयमात्रवाचित्वे अस्मिन् शास्त्रे जिज्ञास्यत्वेन धर्मः प्रमेयः प्रक्रान्तः, इति एष गम्यते । ( पूर्वं प्रमाणशब्दस्य कर्मव्युत्पत्तिरुक्ता— ) अथवा करणमेव प्रमाणम्, तस्यैव लक्षणमुक्तम् । यद्यपि च सर्वप्रमाणानां यथोक्तम्, तथापि धर्मप्रमाणस्य चोदनात्वं लक्षणं इत्येतावतैव उक्तं मन्यते । न चावश्यं सर्वात्मनैव लक्षिते लक्षणत्वम्, विशेषरूपाणामानन्त्येन सर्वलक्षणाभावप्रसङ्गात् । अपि च औत्पत्तिकसूत्रेण विशेषोऽप्युक्त एव येन आगमविशेषो गम्यते । अथवा उपन्यस्तस्य चोदनात्मकस्य प्रमाणस्य लक्षणं प्रामाण्यकरणमित्युपसंहारः । तथा यद्यपि 'विधेरिदं रूपम्, इदमर्थवादस्य, इदं मन्त्रस्य' इत्येवं नोक्तम्, तथापि धर्मं प्रति उपयोगाभिधानात् तत्त्वं निर्णीतम् । अवसराभावात्तु तत्स्वरूपं न निर्दिष्टम् । श्रुतिमूलत्वं विज्ञानस्य स्मृतिप्रामाण्ये उक्तम्, नामधेयस्य चोदनान्तर्गतत्वात् प्रमाणत्वम्, संदिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्यं इत्येवं समस्तमध्यायं प्रमाणलक्षणमाचक्षते । 'तत्र प्रस्तर्तव्यम्' इति ( भाष्यम् ) अविस्मृतप्रामाण्यो हि वेदादिप्रतिपादनम् 'अविशेषादनर्थकं हि स्यात्' ( २।१।२ ) इति क्रियमाणं सहते । अन्यथा हि 'अनर्थकं नाम' इत्येव प्रत्यवतिष्ठेत । ननु प्रधानाप्रधानचिन्ता तृतीयचतुर्थयोर्विषयः कथमत्रोपन्यस्यते ? ( अत्र ) केचिदाहुः— 'इह द्रव्यकर्मणोः, उत्तरत्र तु कर्मणामेव गुणप्रधानत्वविचारात् अपौनरुक्त्यम्' इति । तदयुक्तम् । 'द्रव्यगुणसंस्कारेषु' इत्यत्र सर्वाभिधानात् । तेन एवं वाच्यम्— 'लक्षणार्थोऽत्र सत्त्वेन भेदः शब्देत्यादिभिः । तदन्यपूर्वभेदोऽपि प्राधान्यं तत्प्रसिद्धये ॥' ( अतः प्राधान्यं विचार्यमाणं नापगतमिति भावः ) । कर्मभेदश्रवणात् औत्पत्तिको लक्षणार्थः, तत्परत्वेन अभेदः, तदनुनिष्पादिनौ अपूर्वभेदाभेदौ । तत्र प्रतिकर्मभेदं अपूर्वभेदप्रसक्तौ तृतीयनिष्ठः प्रधानाप्रधानविचारः पुनरपवादत्वेन आरभ्यते । यद्यपि अवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्मणाद्युत्पत्तिप्रयोजनापेक्षणात् न क्रियान्तरापूर्वान्तरापेक्षितिः । यत्तु

नियमापूर्वम्, तत् क्रियाकृतं न भवति इति न तथा व्यपदिश्यते। तेन यथैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वम्, तथैव तद्भेदनिमित्तापूर्वभेदसिद्धिः। अस्य च विवेकार्थं यत् गुणप्रधानलक्षणं वक्ष्यते, तदपवादार्थम् ‘धर्ममात्रे तु’ ‘स्तुतशस्त्रयोः’ इति चाधिकरणद्वयं प्रक्षोत्स्यते। ततश्च आरुणतादैविध्ये विचारिते प्रसङ्गात् तृतीय प्रकारे अभिधायकत्वं प्रतिपादयितुं मत्वर्थप्रस्तावः। लक्षणानीनि तु प्रसक्तानुप्रसक्तेन यावत्पादसमाप्ति। तत. शब्दान्तराभ्यासाभ्यां भेदमुक्त्वा पौर्णमास्यधिकरणेन अभ्यासापवादः करिष्यते, समुदायानुवादत्वात्। ततः तदपवादार्थं उपांशुयाजाघाराग्निहोत्रसोमाधिकरणानि। तत्र मासाग्निहोत्रगुणैर्भेदः। तावच्च गुणगतो विचारो यावत्प्रकरणान्तराधिकरणम्। ततः तन्न्यायानुवृत्तिः आग्नेयास्त्वाधिकरणात्। तत्र च षडङ्गातिरिक्तभेदकारणव्युदासः, संज्ञाऽभ्यासगुणक्रियाणां च आकाङ्क्षानिवृत्तिः इत्येतावान् भेदलक्षणार्थः। एष एव चार्थः अनन्तरं वक्तव्य आहा-ङ्गिरात्मधारणार्थम्। न च अन्यस्य इदानीमवसरोऽस्ति इत्ययमेवाध्यायसम्बन्धः। कुतः? ‘शेषशेष्यादयः सर्वे कर्मभेदनिबन्धनाः। कार्ये ज्ञातेऽधिकारः स्यादुपदेशोऽतिदेशधीः॥’ प्राक् तावत् प्रमाणलक्षणात् वेदार्थविचारात्मकत्वात् कस्य चिद्भेदलक्षणादेः प्रस्तावः, इत्युत्तरकालमारम्भः। तथापि शेषशेषित्व प्रयोजकप्रयोक्तृत्वं क्रमश्च भिन्नानां भवतीति न भेदलक्षणात् प्रागारभ्यते। तथा अधिकारः कर्मस्वरूपेऽवधारिते तद्योग्यतया शक्यो निरूपयितुमिति पञ्चापि लक्षणानि प्रतीक्षते। तथोत्तर. षट्कोऽतिदेशविषयत्वादुपदेशलक्षणाधीनसिद्धिः समस्त. समस्तं पूर्वषट्कमपेक्षते। ततश्च परिशेषसिद्धोऽयं भेदलक्षणस्य सम्बन्ध इत्यत आऽऽरभ्यते।

(द्वितीयाध्यायतात्पर्यम्–)

भाष्यम्— तदिह षड्विध. कर्मभेदो वक्ष्यते, शब्दान्तरम्, अभ्यासः, संख्या, गुणः, प्रक्रिया, नामधेयमिति। वक्ष्यमाणमनुक्रमिष्यते, प्रदर्शितमुच्यमानं सुखं ग्रहीष्यते इति, श्रोतुश्च बुद्धिः समाधीयते। तदेतन्मानान्तरसंज्ञमभिप्रायावमावस्ये, एतत् तात्पर्येण अन्योऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं चेति।

वा— ‘षड्विधः कर्मभेदः’ इति साधनभेदोपचारात्। वक्ष्यमाणसूत्रक्रमानुरोधान्नामधेयं संख्यानन्तरं पठितव्यं सत् अनादरादन्ते पठितम्। इतिकरणो हेत्वर्थे। षड्विधः कर्मभेदः एतैः कारणैरिति यावत्। अथवा करणे भेदशब्दं व्युत्पाद्य सामानाधिकरण्येनैव शब्दान्तरादीनि व्याख्येयानि। संज्ञाशब्दान्तरयोः संख्यागुणयोश्च अपौनरुक्त्यं स्वस्थाने वक्ष्यामः। सर्वदा चैषां भिन्नविषयत्वाच्च श्रुत्यादिवद् बलाबलचिन्ता भविष्यतीति तद्भेदप्रतिपादनमात्र तात्पर्येण। अन्यदुपोद्घातप्रसक्तानुप्रसक्तादिना। तत्र ‘चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते। प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते॥’ यथा इदमेवाधिकरणं प्रकृतानुनिष्पाद्यपूर्वभेदानुसारसिद्ध्यर्थं उपोद्घातत्वेन भविष्यति। (अनुसरति इति कर्तरि घञं व्युत्पाद्य प्रकृतो य. अनुनिष्पाद्यपूर्वकः भेदानुसारी कर्मभेदः, तत्सिद्ध्यर्थमिति योज्यम्)। कतरस्मात् पदात् फलेन संबध्यमानात् अपूर्वभेदाभेदौ अनुगन्तव्यौ इति। (अनेन च ‘नामार्थस्य फलभावनाकरणत्वं धात्वर्थस्य वा’ इत्यधिकरणार्थः सूचितः)।

भाष्यम्— (प्रतिपदाधिकरणम्) तत्र प्रथमं तावदिदं चिन्त्यते। प्रथमेऽध्याये इदमुक्तम् ‘चोदनालक्षणोऽर्थो धर्मः’ इति। चोदना च क्रियाया अभिधायकं वाक्यम्। वाक्ये च पदानामर्थः। तत्र किं पदेनपदेन धर्मः, उत सर्वैरेक एवेति। किं तावत् प्राप्तम्? प्रतिपदं धर्म इति। एवं प्राप्ते, उच्यते। यदा एकस्मादपूर्वम्, तदा अन्यत् तदर्थं भविष्यति, एवम् लघीयसी अदृष्टानुमानप्रसङ्गकल्पना भविष्यति। तस्मादेकमपूर्वम्।

वा— यदा निरवयवौ वाक्यवाक्यार्थौ स्याताम्, ‘ततः किं प्रतिपदं धर्मः’ इत्यादि. असम्बद्ध एव विचारः स्यात्। अत आह– (भाष्यं) ‘वाक्ये च पदानामर्थाः’ इति। अत्रापि चोद्यते। ‘चोदनालक्षणत्वेन वाक्यार्थोऽवधारितो यदा। धर्मः प्रतिपदं वाच्यः कथमाशङ्क्यते तदा॥’ यदि हि धर्मस्वरूपमभिधीयेत, ततः ‘किं पदेनपदेन’ उच्यते इति विचारो युज्यते, लाक्षणिके त्वयुक्त.। यदुच्यते

'धर्मत्वं फलसंबन्धात् पदार्थस्यैव युज्यते । सकिमेकस्य सर्वेषामिति युक्ता विचारणा ॥' न चात्र यो धर्मः स किं पदेनपदेनोच्यते इत्येवं विचार्यते । किं तर्हि ? यः पदेनपदेनोच्यते, स किं फलसंबन्धोत्तरकालं वाक्यार्थात्मना गम्यमानो धर्मो भवति, अथैकपदार्थानुगृहीतः एकः पदार्थ इति । तथा च सर्वैरेकस्य धर्मत्वं प्रतिपादितं भवति । साक्षात् फलसाधनमात्रस्य धर्मत्वाभ्युपगमात् । न तु सर्वेषामेकः कश्चिदर्थोऽस्ति, यः सर्वैरेक इत्येवमाधीयेत । यच्च फलपदेन सह संबध्यते तस्यार्थं धर्ममपूर्वसाधनं च मन्यन्ते । तेन किं सर्वाणि पदानि फलेन संबध्यन्ते किंवा एकमिति विचारः । किं प्राप्तम् ? प्रतिपदमिति । कुतः ? 'ऐकरूप्येण संबन्धः प्रधानेन च सिध्यति । तस्मात् फलपदेनैव सर्वं संबध्यते पदम् ॥' यदि हि विशेषो गम्येत 'इदं फलसंबन्धयोग्यं इदं न' इति, ततः किञ्चिदेव संबध्येत । अनवगम्यमाने तु सर्वाणि पदानि फलेनैव संबध्यन्ते । यदि च एकं फलसंबन्धि इतराणि च तत्सबन्धीनि इति कल्प्यते ततो वाजपेयाधिकरणन्यायेन एकस्य फलं प्रति उपादानविधानगुणभावात् इतरेषु प्रमुदेशानुवादप्राधान्यात् वैरूप्यनिमित्तवाक्यभेदप्रसङ्गः । सर्वेषां तु फलं प्रति उपादीयमानानां ऐकरूप्यात् तत्संबन्धोपपत्तिः । सर्वथा सति संभवे गुणसंनिकर्षात् प्रधानेनैव नित्यं संबध्यते । तस्मात् सर्वेषां फलसंबन्धात् धर्मत्वम् । तत्र तु किं सर्वेऽपि प्रत्येकं कृत्स्नं फलं साधयन्ति, अथ दर्शपूर्णमासवत्संहत्य । तथा किं विकल्पेन समुच्चयेन वा इत्यादि यथेष्टं कल्पनीयम् । तत्र फलभूयस्त्वाभावात् एकशब्दोपादानाभावात् प्रत्येकं साधनशक्त्यवगमात् सौम्य. पृथक् फलमिति पक्षः । अथवा अक्षाऽऽदित्यायेन एकवाक्योपादानात् संहतानां फलम् । अथवा एकनियोगाङ्गत्वात् [illegible] तदानीमेव इतरसंबन्धोपपत्तिः, तस्मात् विकल्प इति । अत्राभिधीयते 'फलेन यस्य संबन्धस्ततोऽपूर्वं प्रकल्प्यते । तदल्पत्वोपपत्तौ च न युक्ता बहुकल्पना ॥' यदि हि फलसंबन्धप्रामाण्यस्यापि एव कार्यं भवेत्, ततः कदाचिदपि सर्वाणि फलेन संबध्येरन् । इह तु कल्पनायाम् अविदितः अपूर्वमन्यत् कल्पयितव्यम् । तत्र अनुपपत्तिप्रमाणकम् । तत्र एकापूर्वकल्पनया उपपत्तेः नाऽदृष्टान्तरकल्पनाप्रमाणमस्ति । यो हि अनेकानि अपूर्वाणि कल्पयति, कल्पयत्यसौ एकम् । तच्चेत् कल्पितम्, अर्थवत्त्वाद् वाक्यस्य क्षीणा अन्यथाऽनुपपत्तिः नापूर्वान्तरस्य प्रमाणं भवति । तस्मादेकमेव फलसंबन्धि, तदाश्च अपूर्वं इतरत् फलवदुपकारि इत्यवसीयते । न चात्र विरोधो भविष्यति, नामधेयत्वेन परिहारात्, अगत्या वा 'दशापवित्रेण ग्रहं संमार्ष्टि' इतिवत् मत्वर्थलक्षणाऽऽश्रयणात् अर्थाक्षिप्तसाध्यांशद्वारेण वा धात्वर्थैः आत्मीयकरणग्रहणसिद्धेः ।

एवं स्थिते कतमदेकं संबध्यतामिति सर्वथा अनेकादृष्टकल्पनापरिहारात् अनियमप्राप्तौ उच्यते 'प्रधानं फलसंबन्धि तत्संबन्ध्यङ्गमिष्यते । प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥' नहि एकस्मिन् वाक्ये तदेव कदाचित् फलसंबन्धात् प्रधानम्, कदाचित् फलवदुपकारात् अङ्गं युज्यते, नियतत्वलोकव्याप्तिमायस्य । तस्मात् नियोगेनैव आख्यातपदात् नामपदाद्वा अपूर्वप्रतीतिः ।

यत्र— यत्किञ्चित् अदृष्टार्थं विधानं क्रत्वर्थं पुरुषार्थं काम्यं नैमित्तिकं वा द्रव्योपपदं वा नामोपपदं वा गुणोपपदं वा, तत् सर्वमुदाहरणम् । ( ग्रामाकरमत्युपन्यस्य निरस्यति— ) के चित्तु अधिकारचोदना प्रत्योदाहरन्ति । तासु च सर्वासु विरुद्धनिकृष्टपापतया नामधेयोपपदम् । अतो नामोपपदान्येवोदाहरणं इत्याहुः । तदयुक्तम् । तथाहि, यद्यपि तावदधिकारचोदना एवोदाहरणम्, तथापि तासु सर्वासु न नामधेयोपपदम् । यदेव हि यौगिक—वाक्यभेद—तत्प्रख्य—तद्व्यपदेशयुक्तम्, तदेव नामधेयम्, इतरत्तु अधिकारगतमपि गुणार्थमेव । यथा 'य· कामयेत वीरो [illegible] आजायेतेति स चतुर्होतारं जुहुयात्' इति चतुर्होतृशब्दो मन्त्रवचनः, न नामधेयम् । तथा 'यत्रैनमार्त्विज्यात् पूर्वं सन्तं निर्हरेत् आग्नीध्रे जुहुयात् दशहोतारं चतुर्गृहीतेनाज्येन' इति नैमित्तिकप्रविधानेन आज्यमपि न नामधेयम् । [illegible] न विरुद्धविधानार्थः, मन्त्रवर्णलक्षणया विशिष्टविधिप्रसरात् । परं च मन्त्रवर्णस्य अप्रसिद्धार्थकल्पनातः, इतरथा हि 'सोमेन

यजेत' इत्यपि होमपदं नामधेयं स्यात्। उत्पत्तिवाक्येऽपि गुणपक्षे लक्षणा अस्ति इति अभ्यासाधिकरणे (२।२।२) स्वयमेव निबन्धनकारेण उक्तम् 'यागविधानेन' इत्यादिना। युक्तं चैतत्। यद्यपि प्रथमं अपूर्वान्तरं अप्रतिपन्नं तथापि प्रत्ययेन तावत् तदेवाभिधीयते। तत्करणं च यागः इति दोषसाम्यात् नामत्वं स्यात्, न चैव युक्तम्। किंच 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' 'वायव्यं श्वेतमालभेत' इत्यधिकारचोदनेयम्। अत्र 'चरुं, श्वेतं' इति द्रव्यगुणशब्दौ, सौर्यादिपदं भावार्थं नियोगविषयः इति निबन्धनकारः शब्दानुबन्धवादी मन्यते। तेन तदपि अत्रोदाहरणम्, भावार्थयुक्ताधिकारचोदनात्वाच्च। तथा 'हिरण्यं भार्यं' इति अकर्तव्यत्वात्। विश्वजिदादिवत् अत्रोदाहरणम्। चरु–श्वेत–हिरण्य–सौर्यशब्दाः द्रव्यगुणदेवतावचनाः न नामधेयम्। अतो नामोपपदान्येव उदाहरणमित्ययुक्तमेतत्, भाष्यविरुद्धं च। भाष्यकारो हि भावार्थाधिकरणस्य प्रयोजनमभिदधानः सिद्धान्ते श्रुतद्रव्यापचारे प्रतिनिध्युपादानं प्रयोजनमाह। नामधेयत्वे हि वस्य प्रतिनिधिः स्यात्। न चावश्यं अधिकारचोदना एवोदाहरणम्, 'होमेन यजेत' 'हिरण्यं ददाति' इत्यादिष्वपि कुतोऽपूर्वमिति विचारसंभवात्। यद्यपि तेषु प्रधानापूर्वानुवादकतया प्रथमं अपूर्वान्तरं प्रतीयते, तथापि पश्चादपि तावत् प्रतीयमानं किंविषयं भवेत् न्याय्यं इति सम्भवति चिन्ता। ननु तत् पश्चात् कारकविशिष्टस्य कर्मणो ग्राहकपदीयस्य अनन्तरन्यायारत्वेन कल्प्यमानं भावार्थविषयत्वेनैव निर्णीतमिति न विचारावसरः। स्यादेवम्, यदि कर्मैव ग्राहकेण गृह्यते इति प्राक्तनात् अधिकरणात् सिद्धं स्यात्, न तु तत् सिद्धम्।

अत्रैव हि एतद्विचार्यते किं सर्वाणि पदानि क्रियाकारकसंबन्धानादरेण अपूर्वस्य विशेषमर्पयन्ति, उत क्रियाकारकसंबन्धापरित्यागेन तत्पदार्थोपहितमेकमेव पदम्। यद्यप्येकं तदाऽसौ इत्यादिपदं भावार्थविशेषितम्, निर्गतं वेति। तत्र क्रियाकारकसंबन्धानादरपक्षे प्राप्तापि, तदापि द्रव्यगुणयोः भावार्थकारकत्वेन अन्योत्पादकत्वाभावात् भावार्थादेवापूर्वमिति। सिद्धे चास्मिन् क्रियाकारकसम्बन्धापरित्यागन्याये ग्राहकग्रहणमपि भावार्थस्यैव भवति, तस्य अन्योत्पादकस्वभावत्वात् कारकत्वाच्च द्रव्यगुणयोः। अतश्चापूर्वमपि तत एव स्यात्। असति तु अस्मिन् न्याये हिरण्य ददातिश्च मिथः सम्बन्धानादरेण ग्राहकेण गृह्येयाताम्, दानोपसर्जनं वा हिरण्यम्। ततश्च अपूर्वमपि पश्चात् कल्प्यमानं उभयविषयं हिरण्यविषयं वा स्यात्। तस्मात् तत्रापि भावार्थविषयत्वमपूर्वस्य एतदधिकरणाधीनम्, इति युक्तमुदाहरणत्वम्। तस्मात् अदुष्टायं सर्वमत्रोदाहरणम्।

वि— 'विधिवाक्ये पदैः सर्वैरपूर्वं प्रतिपाद्यते। प्रत्येकमथवैकेन, सर्वैस्तत्प्रतिपादनम्॥, फलान्वयित्वात् सर्वेषां प्रधानान्वयलाभतः। लाघवादेकतोऽप्यत्वं तच्छेषत्वपदान्तरम्॥' तस्मादेकमेव पदमपूर्वप्रतिपादकम्।

भाट्ट— एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते। यद्यपि च तदपि प्रवाचप्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव तथापि एकत्वानेकत्वादिरूपेण अबुद्धत्वात् इह तेन रूपेण निरूप्यते। अत्र च शब्दान्तरादिषट्प्रमाणकप्रमाणभेद एवाध्यायार्थः। धात्वर्थभेदस्तु तत्सिद्ध्यर्थः क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलेन इति न तौ अध्यायार्थौ।

फलीभूतापूर्वभेदोऽपि अपूर्वसाधनभेदाधीनः इति तत्साधनविशेषाया स्वर्गादिसाधनस्यैवापान्तरव्यापाररूपापूर्वं प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वम्, उत उपपदार्थस्य सोमादेरपीति चिन्तायाम्, प्राथमिकभावनान्वयस्य सप्त सिद्धान्तिनोऽपि समत्वात्, औत्तरकालिक फलान्वयोऽपि सर्वेषामेव। इति प्राप्ते, सर्वेषां करणत्वे अनेकादृष्टकल्पनाप्रसङ्गात् एकस्यैव फलनिरूपिता करणता, अन्येषां तु दृष्टविधयैव करणार्थत्वम्। तदत्र धात्वर्थस्यैव फलकरणत्वे सोमादीनां तत्करत्वेनैव दृष्टार्थता। सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना।

मण्डन— 'एकः पदार्थो जनयत्यपूर्वम्।'

शंकर— 'धर्मः प्रतिपदं न तु।'

■ प्रतिपदाधिकरणम्। (२।१।१)। प्रथमेऽध्याये प्रमाणलक्षणमुक्तम्। विध्यर्थवादमन्त्रस्मृत-

स्वरूपतो निर्णीतः । गुणविधिर्नामधेयं च परीक्षितम् । तत्र सन्दिग्धानामर्थानां वाक्यशेषादर्थाध्यवसानमुक्तम् । तत्र प्रसक्तं तत्त्वम् । अनन्तरं च प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नान्यभिन्नानि वेति । एष एवार्थो वर्णनीयो नान्यः । एष एवाध्यायसम्बन्धः । यदिह षड्विधः कर्मभेदो वक्ष्यते शब्दान्तरम्, अभ्यासः, सङ्ख्या, गुणः, प्रक्रिया, नामधेयमिति वक्ष्यमाणमनुकीर्त्यते, प्रदर्शितमुच्यमानं पुनः ग्राहयिष्यते, श्रोतुश्च बुद्धिः समाधीयते । तदेतन्नानाकर्मलक्षणमित्यध्यायमाचक्षते । अतोऽन्यदुपोद्घातप्रसक्तानुप्रसक्तं च ।

प्रथमं तावदिदं चिन्त्यते, प्रथमेऽध्याये इदमुक्तम् 'चोदनालक्षणोऽर्थो धर्मः' इति । चोदना च क्रियाया अभिधायकं वाक्यम् । वाक्ये च पदानामर्थः । तत्र किं पदेनपदेन धर्म उच्यते ? उत सर्वैरेकः इति । अत्र भाष्यकारेण 'प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्' इति सम्यग्वृत्तमभिधाय 'अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते, भिन्नान्यभिन्नानि वा' इत्यनेन प्रथमद्वितीययोरध्याययोर्हेतुहेतुमद्भावरूपः संबन्धो दर्शितः । तत्र यद्यपि कृत्स्नवेदार्थविचारस्यैव प्रमाणलक्षणाधीनत्वम्, तथापि कर्मभेदलक्षणापेक्षत्वादन्येषां कर्मभेदलक्षणस्य प्रमाणलक्षणमात्रापेक्षत्वाद्द्वितीयस्यैवानन्तरमारब्धव्यत्वम् । तथा च भाष्यम् 'एष एवार्थो वर्णनीयो नान्य.' इति । तदुक्तम् 'शेषशेष्यादयः सर्वे कर्मभेदनिबन्धनाः । कार्ये ज्ञातेऽधिकारः स्यादुपदेशोऽतिदेशयोः ॥' (वा पृ. ४७१) इति । अत्र चापूर्वभेदानुबन्धी कर्मभेदोऽध्यायार्थः । धात्वर्थावच्छिन्ना च भावना कर्मेति लोकप्रसिद्धम् । तत्र यदि धात्वर्थात् फलम्, तदा तदवच्छिन्नाया एव भावनाया अपूर्वानुबन्धात्तस्यैव प्रतिपादनमुचितम् । अथ नामार्थात्, तदा धात्वर्थस्यापूर्वानुबन्धाभावात् किं कर्मभेदप्रतिपादनेनेति । तदत्र नामार्थस्य फलसाधनत्वनिराकरणेन धात्वर्थस्यैव फलसाधनत्वं प्रतिपादयितुं उपोद्घातभूतं भावार्थाधिकरणमारब्धव्यम्, यत्तूभयसाधनत्वनिरासेन एकस्यैव फलसाधनत्वम् । द्वयोः फलसाधनत्वे कस्मादेकस्मादिति सन्देहाभावात् । तदर्थमुपोद्घातभूतं प्रतिपदाधिकरणमेव प्रथममारभ्यते । तत्र 'श्येनेनाभिचरन् यजेत' 'चित्रया यजेत पशुकामः' इति श्रुतौ सन्देहः किं पदेनपदेन धर्म उच्यते, उत सर्वैरेकः इति । अयमर्थः, किं पदेनपदेनाभिहितस्यार्थस्य फलसम्बन्धाविशेषेण धर्मत्वम् ? अथेतरानुगृहीतस्यैकस्यैवेति । तत्राय पूर्वपक्षिणोऽभिसन्धिः 'श्येनेनाभिचरन् यजेत' इत्यत्र विध्यवरुद्धा भावना अभिचाररूपफलसाधनमपेक्षमाणा वाक्योपात्तं नामार्थं धात्वर्थं चाविशेषादुभयमेव साधनमनुमन्यते । ननु पदश्रुत्या सन्निकृष्टस्य धात्वर्थस्यैव फलभावनायाः करणत्वेन प्रथममन्वयावगतेः तदवरुद्धाया च तस्या विप्रकृष्टस्य नामार्थस्यान्वयासम्भवात् कथमविशेषेणोभयोः समन्वय इति । नैवम्, स्यादेवं यदि धात्वर्थस्य करणत्वं श्रुतं भवेत्, किन्तु फलभावनाकाङ्क्षया कल्पनीयं तत् । तेन यद्यपि स्वरूपतः सन्निकृष्टो धात्वर्थः, तथापि कल्पनीयकरणभावेन विप्रकृष्टोऽसौ । नामार्थो यद्यपि स्वरूपतो विप्रकृष्टः, तथापि तस्य करणत्वेन श्रुतत्वात् तेन रूपेण तस्य सन्निकृष्टत्वमेव । तेन सन्निकर्षविप्रकर्षाविशेषात् द्वयोरेव सापेक्षत्वात्फलसाधनत्वम् । न चैवं सति परस्परनिरपेक्षोभयसाधनत्वावगतेर्विभागलक्षणो वाक्यभेद इति वक्तव्यम् । अरुणैकहायनीनिशिष्टक्रयभावनाविधानवत् नामार्थधात्वर्थविशिष्टैकफलभावनाविधानेन समुदाये वाक्यपरिसमाप्तेः वाक्यभेदाभावात् । यथा तत्र परस्परापेक्षायत्तात् द्रव्यस्य गुणाश्रयत्वेन, गुणस्य च द्रव्यावच्छेदकत्वेनान्वय, तथेहापि नामार्थस्य धात्वर्थाश्रितत्व, धात्वर्थस्य च नामार्थसहितस्य साधनत्वात् परस्परापेक्षायामन्योन्यान्वय इति । न चैवं सत्यनेकादृष्टकल्पनादोषोऽपि, नामार्थधात्वर्थयोर्युगपदेकापूर्वसाधनत्वेन नानेकादृष्टकल्पनाप्रमाणाभावात् । भवतु वानेकादृष्टकल्पना, तथापि 'प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि' इति न्यायादनेकादृष्टकल्पनाऽपि न दोषायेति । अतः अविशेषात् द्वयोरेव नामार्थधात्वर्थयोः फलान्वय इति । तदुक्तम् 'ऐकरूप्येण सम्बन्धः प्रधानेन च सिध्यति । तस्मात् फलपदेनैव सर्वं संबध्यते पदम् ॥' (वा. पृ ३०२) इति । एवं प्राप्तेऽभिधीयते । भवेदेवं यदत्र करणयोः समुच्चयः सम्भवेत् । प्रमाणशब्दभाजिनोर्हि

समुच्चयो भवति । न चात्र करणीभावात्तयोर्नामार्थधात्वर्थयोः सहभावः समस्ति । निष्पन्नस्य हि धात्वर्थस्य करणत्वं वक्तव्यम् । नामार्थस्य करणत्वं धात्वर्थनिष्पादकत्वेनैव । तच्च धात्वर्थात् प्रागेव । नहि निष्पन्ने धात्वर्थे धात्वर्थनिष्पादकमस्ति । अथोच्यते । माऽस्तु भवतु नामार्थस्य स्वरूपतः साहित्यम्, कार्यतस्तु भविष्यति । तथाहि, यस्मिन्नेव काले नामार्थेन धात्वर्थो जन्यते, तदैव तत्साहित्यमपूर्वान्तरं जनितम्, अतस्तद्द्वारेण साहित्यसद्भावात् युक्तः समुच्चयः । एतच्च शब्दावगतकरणत्वान्यथाऽनुपपत्त्या कल्प्यमानं न दोषमावहतीति । तदयुक्तम् । स्यादेव यदि द्वयोरेव फलभावनाकरणत्वं श्रौतं भवेत्, किन्तु भावनाकाङ्क्षया तत् कल्पनीयम् । तत्र धात्वर्थस्य सन्निकृष्टस्य करणस्य फलभावनासंबन्धात् कल्पनीयम् । नामार्थस्य च कल्पकरणमात्रस्य विप्रकृष्टस्य फलभावनासंबन्धः कल्पनीयः । कल्प्यमानं तदेव कथंचिदुचितम्, यत्र नानेकादृष्टकल्पना भवति । उभयकरणत्वेन समुच्चयसिद्ध्यर्थमवश्यमेवापूर्वान्तरं कल्पनीयमित्ययुक्तमेव । न चैकस्य करणत्वेऽन्यतरस्य वाक्यान्वयो न संभवति, इतरानुग्राहकत्वेनैवैतदन्वयोपपत्तेः । तेन यदि सन्निकर्षलोभेन धात्वर्थः करणम्, तदा नामार्थस्य करणत्वं धात्वर्थगतत्वेनैव । अथ श्रौतकरणत्वलोभेन विप्रकृष्टस्यापि नामार्थस्य करणत्वम्, तदा धात्वर्थस्य तद्व्यापारत्वेनैव समन्वयात् करणत्वमपि कल्पनीयम् । तदुक्तं भाष्ये 'यदैकस्मादपूर्वं तदेतरदर्थम्' इति । न चैवं धात्वर्थस्य फलभावनायाम्, नामार्थस्य च धात्वर्थे विधानाद्वाक्यभेदवैरूप्यप्रसङ्गः । अथ तत्परिहारार्थं मत्वर्थलक्षणा आश्रीयते, तदा लक्षणैव दोष इति परमपूर्वद्वयकल्पनैवेति । उच्यते । स्यादेवमपूर्वसंबन्धानुरोधेनैव भवन्ती मत्वर्थलक्षणा अपूर्वकल्पनातो ज्यायसी न भवेत् । यद्यपि, उत्पत्तिपूर्वकः खलु विनियोगः । उत्पत्तिश्च न धात्वर्थस्वरूपज्ञानमात्रम्, विनियोगावस्थायामपि धात्वर्थस्वरूपज्ञानाविशेषात्, किन्तु भावनाभाव्यतया धात्वर्थस्वरूपज्ञानम् । तत्र यद्यपि उत्पत्तिविधिरेकपदार्थभूतत्वात् धात्वर्थस्य न स्वारूढा भावना करणत्वेन पर्यवस्यति, तथापि अवगम्यमानस्य सम्बन्धसंभवात् भाविनि विनियोगविधिसाध्य-फलभावनाकरणत्वाद्यानुगुण्यतया भावनाभाव्यधात्वर्थस्वरूपप्रतिपत्तिपर एव भवति । तथाभूतेनैव धात्वर्थेन श्येनादिर्नामार्थो विनैव मत्वर्थलक्षणया करणत्वेन सम्बध्यते । तेनायमर्थो भवति 'श्येनेन यागं कुर्यादित्येवम्' इति । एवं सति विनियोगदशायां गृहीतश्येनादिकारकस्यैव यागादेः धात्वर्थस्य करणतायाम् करणस्य करणान्तरान्वयासंभवात् पूर्वप्रतीतसंबन्धानुरोधेन मत्वर्थलक्षणा न दोषमावहति । तस्मादपूर्वकल्पनाल्पत्वेन एकस्मादेव श्येनवतो यागात् यागवतो वा श्येनादपूर्वमिति सिद्धम् । तदुक्तम् 'फलेन यस्य संबन्धः ततोऽपूर्वं प्रकल्प्यते । तद्रूपत्वोपपत्तौ तु न युक्ता बहुकल्पना ॥' (वा. पृ ३७३) इति । वैद्य.

● भागार्थाधिकरणप्रवृत्तेः एकस्मादपूर्वं इति निर्णयाधीनत्वात् तदुपोद्घातत्वेन प्रतिपदाधिकरणमारभ्यते । कु. २।१।१।१ पृ. १२१. ● प्रतिपदाधिकरणस्य 'तानि द्वैधम्' २।१।३।६ अपवादः । कौ. २।१।१।१ पृ. २. ● प्रतिपदाधिकरणस्य सिद्धान्तः ( न्यायस्वरूपमेव इदम् ) 'क्रियाकारकसंबन्धावगमानुसारेण एकस्मादेव अपूर्वम्, न तु सर्वेभ्यः' इति । सोम २।१।२ पृ. १७. ● प्रतिपदाधिकरणे 'एकस्मादपूर्वम्' इति सिद्धम् । कु. २।१।२।१.

● प्रतिपदाधिकरणोक्तस्य अनेकादृष्टकल्पनाप्रसङ्गस्यानिवारणात् न भेदादेः फलसंबन्धः ( 'सोमेन यजेत' इत्यादौ ) । कौ. २।१।२ पृ. ८.

● अन्यान्विते वार्त्तिः इत्यत्र प्रतिपदाधिकरणगतं भाष्यं प्रमाणयति .. । शास्त्रप्रकाशिका ( बृहदारण्यकभाष्यवार्तिकटीका ) सम्ब. ६११.

● प्रतिपदाधिकरणन्यायस्य स्वरूपम् 'अपूर्वस्यादृष्टत्वात् एककल्पनयैव उपपन्ने सत्ये नानेककल्पनं उपपन्नम्' इति । शा. २।१।१ पृ. ९८.

● यत्र हि तत् नियामकम्, यत्र तदर्थे पूर्वं विकल्पेन अनेकेषु प्राप्तिः, यथा प्रतिपदाधिकरणसिद्धान्तीया यागयोगयोः । कौ. २।१।१७।४९ वर्णक १ पृ. ११४.

* प्रतिपशुयूपदर्शनात् लिङ्गात् पशुगणेषु ऐकादशिनविध्यन्त. । ८।१।८।१५.

卐 प्रतिपाद्यप्रयोजकत्वायोगरूपन्यायेन प्रतिपत्तीनां प्रतिपाद्योत्पत्तिप्रयोजकत्वाभावः सिध्यति । बाल. पृ. २०१.

■ प्रतिपूरणं श्रुवायाः । न ह्येतत् प्रतिपूरणं पूर्वस्यावदानस्य संस्कारकम्, अदृष्टार्थत्वप्रसङ्गात् । अपरेकस्तु उत्तरकार्यार्थः प्रसङ्गः । वा. ३।५।१।१२.

* प्रतिप्रधानमङ्गावृत्तिः इति लोकसिद्धो न्यायः 'प्रतिप्रधानभावः' ११।१।१।४ इति पदेन दर्शितः । पृ. ११।१।१।४. * प्रतिप्रधानमङ्गावृत्तिर्न्याय्या । सु. पृ. ११९८. * 'यशम्य सातिरसि... त्वा यशम्य' इति गार्हपत्यात् संततामुल्पकार्यो स्तृणाति त्वा आहवनीयात्, तूष्णीं दक्षिणा तूष्णीमुत्तराम् । सत्याषाढश्रौ ३।४।२२ । त्रीण्येतानि प्रधानकर्माण्येव । ततस्तु 'प्रतिप्रधानमङ्गावृत्तिः' इति मन्त्रावृत्तौ प्राप्तायाम् 'तूष्णीम्' इति पाठप्रदर्शनं आवृत्तिनिवारणार्थम् । वैजयन्ती. * शेषात् स्विष्टकृतेऽवद्यति । यदि शेषकार्याणां हविः प्रधानं स्यात्, तदा प्रतिप्रधानं इति न्यायप्राप्तिः, तदेव न शेषकार्यं प्रति अङ्गत्वात् हविषः इति चेन्न, हविष. प्रधानत्वेन संस्काररूपकारणस्य अविशेषात् सर्वेभ्यः अवदानं प्रतिप्रधानमङ्गावृत्तिः इति न्यायात् । धरतूरि. ३।४।११।४८–५१. * न च प्रश्नन विरोध, यत् इन्द्रमुपतिष्ठेत अनेन मन्त्रेण ('कदा चन स्तरीरसि') गार्हपत्यमपि । ननु अयमेव निरोधः यदुपस्थान चोदितम्, अथ इन्द्रमिनिर्नयेति इति । उपस्थेयभेदात् प्रतिप्रधानमावर्तन्ते गुणाः इति न्याय एवैष., न विरोध. । (पूर्वपक्षे) । भा. ३।३।७।१४ पृ ८४४. * इन्द्रगार्हपत्ययोः प्रधानत्वाविशेषात् उपस्थानस्य च गुणत्वात् 'प्रतिप्रधानं गुणः' इति न्यायेन उपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चय. इति द्वितीयः पूर्वपक्षः । वि. ३।३।७.

卐 प्रतिप्रधानं गुण आवर्तनीय इति न्यायः । साहस्री. ८६८.

* ग्रहमिति द्वितीयया ग्रहस्योद्देश्यतया प्रयोजनवत्त्वेन प्राधान्यं गम्यते । ग्रहं प्रति गुणः सम्मार्गः । 'प्रतिप्रधानं गुण आवर्तनीयः' इति न्यायेन यावन्तो ग्रहाः सन्ति ते सम्मार्जनीयाः । वि. ३।१।७. * प्रतिप्रधानं गुणो भिद्यते, न च प्रधानं प्रतिगुणं भिद्यते । भा. ३।१।६।१२ पृ. ६९७. * चोदकप्राप्तेषु पञ्चसु प्रयाजेषु एकैकस्य एकादशत्वसंख्या युक्ता, प्रयाजानुद्दिश्य संख्यागुणे विहिते सति 'प्रतिप्रधानं गुणस्याभ्युपेयत्वात्' । इति प्राप्ते । वि. ५।३।१. * प्रतिप्रधानं गुणावृत्तिः । 'प्रधानसन्निधौ च गुणः शिष्यमाणः प्रतिप्रधानं भिद्येत' । भा. १०।३।११।३९. * न च (वैश्वदेवस्य अन्नसंस्कारकत्वे) 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायात् प्रतिपाकं तदावृत्तिः स्यात् इति वाच्यम् । आचारमयूख. पृ. ५१. * संस्कार्यत्वात् ऋत्विजां प्राधान्ये सति प्रतिप्रधानं गुणावृत्त्या सर्वेषामपि ऋत्विजां हिरण्यमालित्वादिसंस्कारः अभ्युपेतव्यः । वाजपेये । वि. ३।८।५. * इन्द्रस्य, चयने तदङ्गभूतेऽग्निदेवत्ये अविहितमन्त्रके होमे च इति समुच्चयेनैव उभयाङ्गत्वम्, प्रतिप्रधानं गुणावृत्तेर्युक्तत्वेन विकल्पस्याभ्युपगमात् । पूर्वपक्षे । श्री ३।३।७।१४ पृ. ९५०. * ऋचा प्रधानत्वात् प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् साम प्रत्यृचं परिसमापनीयं इति सिद्धम् । भाट्ट. ९।२।३. * 'युवा सुवासाः' इति होत्रो मन्त्रः ऐकादशिन्या एकादशयूपप्रयोक्तव्यः 'प्रतिप्रधानं गुणावृत्ते.' इति प्राप्ते, क्रियमाणानुवादिमन्त्रस्य अदृष्टार्थत्वेन तन्त्रतैव । न्यायस्तु 'परिवीरसि' इति आवर्तनमन्त्रपरः तस्य करणत्वात् । श्रौतकर्म. ३।४।१५. * प्रतिप्रधानं गुणावृत्तिन्यायः । 'शेषस्य हि परार्थत्वात् विधानात् प्रतिप्रधानभावः स्यात्' । ११।१।१।४ सूत्रम् . * एकादशत्वादिसंख्या प्रतिप्रधानं गुणावृत्तिन्यायेन सुपदाम्नादिवत् एकैकस्मिन् प्रयाजादौ प्रत्येकमभिसंबध्येत इति एकैकः एकादशवारमावर्तनीयः । इति प्राप्ते । भाट्ट. ५।३।१, * दर्शपूर्णमासयोः अवघातमन्त्र. प्रतिप्रहारं आवर्तते नवेति

चिन्तायां सोमादिवत् प्रथमतो मानवाऽन्वितस्यापि मन्त्रस्य अनपायतारित्यानयास्यत् प्रतिप्रधान गुणावृत्तिन्यायेन तदावृत्तौ आवृत्तिः, इति पूर्वपक्षः। ११।४।१२. * न चैवमपि द्वितीयया मुष्टीना प्राधान्यात् प्रतिप्रधान गुणावृत्तिन्यायेन चतुर्षु मुष्टिषु चत्वारो निर्वापा विहिताः सुपदा इति मुष्ट्यनुसमय एवेति वाच्यम्। सोम. ५।२।१२. * 'ममाग्ने वर्च इति पूर्वमग्निं परिगृह्णाति'। न च पूर्वपदस्य अग्निपदसामानाधिकरण्येनाहवनीयपरत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन प्रतिधारण मन्त्रावृत्तिः, बोधायनेन अस्य गार्हपत्यान्वाधाने विनियुक्ततया पूर्वपदस्य क्रियाविशेषणत्वमङ्गीकृत्य प्रथमान्वाधानविधिपरत्वात्। भाट्ट. १२।१।१०, * 'मैत्रावरुणः प्रेष्यति चान्वाह च' अत्र मैत्रावरुणः प्रैषानुवचनोद्देशेन विधीयमानः सर्वत्र (केवलप्रैषेषु केवलानुवचनेषु प्रैषसहितानुवचनेषु च) स्यात् न तु प्रैषानुवचनेष्वेव उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात्। चशब्दस्यापि प्रैषानुवचनरूपधर्मयोः ऐकाधिकरण्यरूपधर्मिसाहित्यपरत्वेन प्रैषत्वानुवचनत्वरूपधर्मयोः ऐकाधिकरण्यरूपसाहित्यबोधकत्वाभावात्, तस्य च प्रतिप्रधानं गुणावृत्तिन्यायेनैव अस्मन्मतेऽपि सिद्धेरनुवादकत्वाच्च। अतश्च सर्वत्रैव समाख्याप्राप्तकर्त्रन्तरबाधेन वाक्यात् मैत्रावरुणनिवेशः। इति पूर्वपक्षः। ३।७।२२, * विशेषेण सामान्यबाधे अवगते प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रावृत्तिन्यीकारेऽपि न कश्चिद्दोषः। इति प्राप्ते। १०।२।४, * साम्नः ऋगक्षराभिव्यक्त्यर्थत्वेनैव प्राप्तत्वात् ऋचां प्राधान्यावगतेः प्रतिप्रधान गुणावृत्तिन्यायेन प्रत्येकमेव गेयं साम। ९।२।३. * प्रतिप्रधानं गुणावृत्तिन्यायात् प्रतीष्टकमुपधानावृत्तिसिद्धिः। कौ ३।४।१७। २७ पृ. २८८. * हिरण्यशकलैः प्रोक्षणं प्रतीष्टकं कर्तव्यम्, प्रतिप्रधान गुणावृत्तिन्यायात्। इति प्राप्ते। सोम. ९।१।७.

* प्रधानभूतानामपि ऋचां आर्थिकं सामसाधनत्वं अस्त्येवेति तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वम्। वचनबलाच्च प्रतिप्रधानावृत्ति (प्रतिप्रधान गुणावृत्तिमित्यर्थः। सोम.) बाधित्वा समस्य गेयम्। इति प्राप्ते। सु. ९।२।३.

* एकस्मिन्नेव प्रयोगे (सत्रेषु) प्रतिप्रधानावृत्तिन्यायेन प्रत्येकं फलावश्यम्भावः। सोम. ६।२।१. * (सत्रे) ब्रह्मादीनां यजमानत्वेनैव प्रतिप्रधानावृत्तिन्यायेन दीक्षायां, तत्तत्संस्कारकत्वप्राप्तिः। भाट्ट. ५।१।१, * 'य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति' इत्यत्र वाक्यलोपस्य क्रतुविशेषोपस्थापकत्वेऽपि विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वविषयत्वप्रतीतेः सन्देहाभावः। ५।३।१५. * सोमस्य तत्तद्द्रव्याङ्गत्वे प्रतिप्रधानावृत्तिन्यायेन तत्तद्द्रव्यापूर्वसाधनीभूतसमष्टित्वेन विहितस्य दशमुष्टिपरिमितस्य सोमस्य चतुर्मुष्टिपरिमितव्रीहिभेदवत् भेदः प्राप्नुयात्। कौ. २।२।६।१८ पृ. २११. * प्रतिप्रधानावृत्तिन्यायात् काम्यस्य यावदिच्छया आवृत्तौ कात्स्न्यापि अङ्गत्वेन हेतुना वीप्सां विनाऽपि आवर्तमानतया स्थितत्वात् वीप्साऽऽनर्थक्यापत्तेः ...। मु. पृ. ९७९, * अग्निचयने पञ्चैकादशिनीविधानादेव अविहिताऽपि यूपैकादशिनी प्रतिप्रधानावृत्तिन्यायात् भविष्यति इत्याशङ्का। पृ. ९९८. * क्रतूद्देशेन हि एते गुणाः लोहितोष्णीषत्वादयः विधीयमानाः, प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम्। वा. ३।८।२।१९. * मुख-नाभि-गुल्फप्रदेशपावनार्थेषु 'चित्पतिस्त्वा पुनातु' इत्यादिमन्त्रेषु 'अच्छिद्रेण पवित्रेण' इत्यादिशेषोऽपि अनुषज्यते प्रतिप्रधानावृत्तिन्यायात्। भाट्ट. २।१।१०.

* 'अपि वा कर्मपृथक्त्वात् तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात्' (११।२।३।१६) इति एकादशवक्ष्यमाणप्रतिप्रधानावृत्तिन्यायाभावेऽपि ...। सु. पृ. ७३४.

* 'अहं संमार्ष्टि'। प्रतिप्रधानगुणावृत्तिन्यायेन प्रत्येकमुद्देश्येषु अर्थसिद्धस्य एकत्वस्य अनुवादकमेकवचनम्। कस्तूरि. ३।१।७।१४.

* प्रतिप्रसवः अकर्तव्यत्वेनोक्तस्य कर्तव्यत्वेनोक्तिः। धाल पृ. ९९. * प्रतिप्रसवः प्रसक्तप्रतिषेधस्य कारणा-

न्तरेण निवृत्तिप्रसक्तो विधि. । भाट्ट. ३।३।१४. ❀ प्रतिप्रसव प्राथमिकप्राप्त्यनुसारी । सोम. ३।५।१७.

❀ प्रतिप्रसवविधिना अपूर्वविधिः बाध्यते, यथा ' पूषा प्रपिष्टभागः ' इति पैष्णस्य चरौ प्रतिप्रसवेन पशौ पुरोडाशे च अपूर्वविधिः । बाल. पृ. १४४, ❀ प्रतिप्रसवविधिना नियमविधिर्बाध्यते यथा ' घृते श्रपयति ' इति श्रपणप्रतिप्रसवस्य घृतनियमस्य चैवत्र वाक्ये कर्मप्रशक्यत्वात् पूर्वोत्तराधे उत्पत्तिवाक्यगत श्रुतानुसार श्रुतम् । १०।२।१ इत्यत्र । पृ. १४४.

! 𑀢 प्रतिप्रसवविधिविषयन्यायः । विकृतावपि चोदकात् नादिशादेरेव प्राप्त्या प्रतिप्रसवन्यायेन सौम्य-पौष्णयो अग्नौ न उदुम्बरज्योतिः । रसायनम्. पृ २११.

• ❀ प्रतिप्रस्थाता अग्नीषोमीये ( पशौ ) अध्वर्यु विकारः । स हि अवदान करोति, ' दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति ' इति ( चेत् उच्यते ) यथा शान्ययमेतनास्ति तनैव ( प्रतिप्रस्थातु. भक्षः अस्ति वा न वा इति ) विचारणा । भा १०।७।८।२२. ❀ प्रतिप्रस्थाता अध्वर्योः पुरुषः । द्वितीयवर्गोऽयम् । अर्धी चाय मुख्यदक्षिणाया अर्धं षट् गाः लभते । ' प्रतिप्रस्थाता अध्वर्यु दीक्षयित्वा अश्विनो दीक्षयति, ब्राह्मणाच्छंसिन ब्रह्माण, प्रस्तोतारमुद्गातुः, मैत्रावरुण होतुः ' । ' प्रतिप्रस्थाताः नेष्टा दीक्षयति ' । वि. ३।७। १७. ❀ प्रतिप्रस्थाता अनवयपि नाध्वर्युकर्मणि वर्तते इति ( पशौ ) नास्य अग्नेषु भक्षः स्यात् । भा. १०।७। ८।२३, ❀ प्रतिप्रस्थाता ऐन्द्र ग्रह आदत्ते सौम्यमग्नाम् । ' उत्तरेऽग्नौ पयोग्रहान् जुहुति, दक्षिणेऽग्नौ सुराग्रहान् । ' ३।५।३।१४. ❀ ' प्रतिप्रस्थाता मन्थिन जुहोति ' । (मन्थी ग्रहविशेषो ज्योतिष्टोमे)। वि. ३।७।९. ❀ प्रति-प्रस्थाता वपाश्रपणं करोति । सा च वपा सर्वैव हुता इति शेषाभावात् प्रतिप्रस्थातुः इडाभक्षो नास्ति । के. ( १०। ७।८ ). ❀ प्रतिप्रस्थातार अध्वर्यो. पृथक् चातुर्मास्यगत-वरुणप्रघासेषु दक्षिणविहारे मन्त्रोच्चारण कार्यम् । १२।१। ९।१८. ❀ प्रतिप्रस्थातृ मन्त्राः अध्वर्योः पृथगुच्चरणीयाः वरुणप्रघासेषु दक्षिणविहारे । १२।१।९. ' वरुणप्रघासेषु दक्षिणविहारे० ' इत्यत्र द्रष्टव्यम् । ❀ प्रतिप्रस्थातुः अग्नीषोमीये पशौ इडाभक्षो नास्ति । हृदयाद्यवदान-कर्तृत्व प्रतिप्रस्थातु॰ इति पक्षे प्रतिप्रस्थातुः अस्ति भक्षः इति शास्त्रदीपिका । तत्पक्षेऽपि नास्ति इति भाट्ट-दीपिका । के. १०।७।८.

𑀢 प्रतिप्रस्थातुश्च वपाश्रपणात् । १०।७।८।२२॥

वपाया. श्रपणमध्वर्यो.. कर्म प्रतिप्रस्थाता करोति । तस्मात् अग्नीषोमीये पशौ प्रतिप्रस्थातु. शेषभक्षः स्यात् । इति पूर्व. पक्षः । चशब्दः अपूर्वाधिकरणमुक्तमैत्रा-वरुणदृष्टान्तार्थ. ।

अभक्षो वा कर्मभेदात् तस्याः सर्वप्रदानत्वात् । २३॥

वाशब्द पूर्वपक्षव्यावर्तकः । प्रतिप्रस्थाता अभक्षः स्यात् । अविद्यमानो भक्षो यस्य सः अभक्षः । कर्मभेदात् । प्रतिप्रस्थाता वपा श्रपयति, वपाश्रपण च नाध्वर्युकर्म । प्रतिप्रस्थातुरेव हि तत् कर्म विहितम् । तस्माद्भक्षाभावः । ननु वपाशेषमेव प्रतिप्रस्थाता भक्षयतु । नेत्याह । तस्याः वपायाः सर्वप्रदानत्वात् सर्वैव वपा अग्नौ प्रदीयते, नास्ति तस्याः शेष. । सर्वस्याः प्रदान सर्वप्रदानम् । कर्मण्युत्पन्न प्रदानशब्द गृहीत्वा तेन सर्वशब्दस्य समानाधिकरण-बहुव्रीहिस्तु नैव सम्भवति । तस्मात् हृदयो वा पुनरडायो वा शेषोऽत्र स्वीकार्यः । तस्मात् प्रतिप्रस्थाता अभक्षः इति सिद्धान्त. । के.

❀ प्रतिप्रस्थातु पशौ भक्षो नास्ति । १०।७।८। २२–२३ . मीको. पृ १११ ' अग्नीषोमीये पशौ प्रतिप्रस्थातुः० ' इत्यत्र द्रष्टव्यम् ।

❀ प्रतिप्रस्थात्रादयः अध्वर्युभिन्ना अध्वर्युपुरुषाः शमितारः , न पृथक् कश्चित् । ३।७।११.

❀ प्रतिप्रस्थातृमैत्रावरुणादयो होत्रकाः । ( प्रति प्रस्थाता मैत्रावरुण. ब्राह्मणाच्छंसी पोता नेष्टा अच्छा-वाक. आग्नीध्र. इति ) । वि. ३।७।१०.

❀ प्रतिमा न प्रमाणम् । ' श्वो मे भ्राता आगन्ता ' इति प्रतिभाऽऽख्यं अनिश्चायकत्वाच्च मानम् । तेन कार्यार्था प्रतिभया धर्माधर्मप्रमा इति पराकृतम् । मणि. पृ. ६२. ❀ प्रतिभा नाम नियतसाधनावच्छिन्नक्रिया-

प्रतिपत्त्यनुकूला प्रज्ञा । ( एकदेशिमतमिदमिति कणिका )। शिवि. पृ. २४६ . ( व्यभिचारात् अर्थानिश्चयात्मकं अनैकान्तिकलिङ्गप्रभूतं संवेदनं प्रतिभा इति केचित् । अपरे ( एकदेशिनः ) तु साध्यसाधनेतिकर्तव्यतावच्छिन्नायाः क्रियायाः प्रतिपत्तौ अनुकूला तत्प्रतिपत्त्या कार्ये अनुष्ठानलक्षणे फलं चे सहकारिणी कर्तव्यमिति प्रज्ञा प्रतिभामप्यगीष्महि । कणिका. पृ. २४६–२४७ )।

■ 'प्रतिभातश्च ( पञ्चम्यास्तसिल् ) पश्यन्ति सर्वे प्रज्ञावतां धियः' इति न्यायः । 'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता' । सर्वतोमुखी बुद्धिः इति यावत् इति । स्पष्टार्थोऽयम् । साहस्री. ९४५.

● 'प्रतिमन्वन्तरं चैव स्मृतिरन्या विधीयते ।' वा. १।३।१।७ पृ. २०२.

● प्रतियच्छति । त्रिभ्यः प्रतियच्छति माषान् । प्रतिदान विनिमयः, प्रतिनिर्यातनम् । मणि पृ. ११२.

● प्रतियत्न. सतो गुणान्तराधानम् । कर्पूरेण उदकस्य उपस्कुरुते । मणि. पृ. १२६.

● प्रतियोगिनि श्रुते अश्रुतप्रतियोगिकल्पनाऽनुपपत्तिः । सु. पृ. ११९१.

● प्रतिवचनकार्ये 'उपहूतः' इति मन्त्रः, 'उपह्वयस्व' इति प्रश्नकार्ये सोमभक्षे, ज्योतिष्टोमे । के. ( भा. ३।५।१६।४२ ).

■ प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः । ६। ३।६।२० ॥

वरकाः कोद्रवा माषाः इति प्रतिषिद्ध द्रव्यं न प्रतिनिधित्वेन ग्राह्यम् । हि यस्मात् अविशेषेण माषत्वादिना सामान्येनैव तच्छ्रुतिः निषेधश्रुतिः 'अयज्ञिया वै वरका कोद्रवाः' 'अयज्ञिया वै माषाः' इति । तस्मात् माषादि द्रव्य न प्रतिनिधातव्यम् । चकारः देवताऽऽदिदृष्टान्तार्थः । यथा देवताऽऽदीनां न कश्चित् प्रतिनिधि तथा माषादिकं न कस्यापि प्रतिनिधिरिति सिद्धान्त । के.

● प्रतिषिद्धानुष्ठाने अनिष्टापत्तः । के. ( भाट्ट. ६।३।९ ).

● प्रतिषिद्धद्रव्यस्य माषादेः प्रतिनिधित्वाभावः । ६।३।६,

● प्रतिषेध. । उपादानगतो हि प्रतिषेध. क्रत्वर्थः, नाधिकारगतः । ऋजु. पृ. ३१.

● प्रतिषेधो द्विविध. प्रत्यक्ष. कल्प्यश्च । प्रत्यक्षोऽपि अनेकधा वक्ष्यते । कल्प्योऽपि सप्तधा स्मृतिकल्प्यः, आचारकल्प्य, निषेधकल्प्यः, अर्थवादकल्प्यः, मन्त्रकल्प्यः, प्रायश्चित्तकल्प्यः, दण्डकल्प्यश्चेति । तत्र स्मृतिकल्प्यो यथा 'सगोत्रा न परिणेया' इत्यादिः । आचारकल्प्यो यथा हरिवासरपरिभाषिते काले पारणानिषेधः । निषेधकल्प्यो यथा विशिष्टनिषेधात् विशेषणनिषेध । अर्थवादकल्प्यो द्विविधः स्वतन्त्रार्थवादकल्प्य , विध्यन्तरशेषार्थवादकल्प्यश्च । आद्योऽपि द्विविध. दोषार्थवादकल्प्य , सिद्धवत्कीर्तनार्थवादकल्प्यश्च । आद्यो यथा स्मार्तः 'मिथ्याऽभिशंसने दोषो द्वि समो भूतवादिनः । मिथ्याऽभिशस्तदोष च समादत्ते मृषा वदन् ॥' इति । द्वितीयो यथा अग्निहोत्रप्रकरणे 'तस्माद्वत्स जात दध्यपनीनं दुहन्ति' इति । जात वत्स अनुलक्ष्यीकृत्य तदनन्तर दध्यन्न गौर्न दोह्या इति सिद्धवत्कीर्तनमन्यथाऽनुपपत्त्या निषेध कल्प्यते, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधिवत् इति । विध्यन्तरशेषार्थवाद कल्प्यो यथा 'तस्मादारण्यमेवाश्नीयात्' इति विधिशेषेण 'न वा एते माषान् हविर्गृह्णन्ति' इत्यनेन माषनिषेधः कल्प्यते, 'उपरि हि देवेभ्यो धारयति' इति विधिवत् । मन्त्रकल्प्योऽपि निषेधो विधिवत् द्विधा, मन्त्रगतस्यैव ननुवर्तमानापदेशस्य निषेधत्वकल्पनात् , निषेधयुक्तवाक्यान्तरकल्पनाच्च । आद्योदाहरणं मृग्यम् । द्वितीयो यथा 'मोघमन्न विन्दते अप्रचेताः' इति । प्रायश्चित्तकल्प्यो यथा 'तदाहुर्य आहिताग्निर्यदि सूतकान्न प्राश्नीयात् , का तत्र प्रायश्चित्तिरिति, सोऽग्नये तन्तुमतेऽष्टाकपालं पुरोडाशं निर्वपेत्' इति । दण्डकल्प्यो यथा कर्मप्रदीपे 'यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते । तत्र व्याहृतिभिर्हुत्वा दण्ड दद्याद् द्विजातये ॥' इति । नेय दक्षिणा, ऋत्विगभावात् । अत्र च पूर्वदिने अन्वाधाने दण्डविधिरेव कल्प्य , तेन न निषेधः कल्प्यते इति ।

निषेधः स्मार्तादिरूपोऽपि यथाक्रमं जातिव्यक्तिगुणक्रियाविषयत्वेन चतुर्विधः । तत्राद्यो यथा श्राद्धे चणकादिनिषेधः । मरीचिः 'कुल्माषाश्चणकाः श्राद्धे न देयाश्चैव कोद्रवाः ।' इति । व्यक्तिनिषेधो यथा श्राद्ध एव रोग्यादिनिषेधः । याज्ञवल्क्यः 'रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।' इति । रोग्यादिशब्दस्य यौगिकत्वात् ( व्यक्तिवाचकत्वम् ) । गुणनिषेधो यथा मरीचिः 'कटुकानि च सर्वाणि विरसानि तथैव च ।' इति । क्रियानिषेधो यथा वृद्धमनुः 'ऋतुकाले नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित् ।' इति ।

*निषेधः स्मार्तादिः पुनर्द्विविधः क्रत्वर्थः पुरुषार्थश्च ।* तत्राद्यो यथा उक्त एव चतुर्विधः । पुरुषार्थोऽपि जातिद्रव्यगुणक्रियानिषेधभेदेन चतुर्विधः । तत्र पुरुषार्थो जातिनिषेधो यथा मसूरादिनिषेधः । यथा हि भोजनाश्रित प्राङ्मुखत्वं विधीयते न भोजनम्, एवमत्रापि भक्षणाश्रित मसूरादेर्न निषिध्यते न भक्षणम् । पुरुषार्थो द्रव्यनिषेधो यथा 'उच्छिष्टं न भक्षयेत्' इति । उच्छिष्टशब्दस्य यौगिकत्वेन द्रव्यवाचित्वात् । पुरुषार्थो गुणनिषेधो यथा 'शुक्तं न भक्षयेत्' इति । कालपरिपाकवशाम्लरसस्य गुणशब्दार्थत्वात् । पुरुषार्थः क्रियानिषेधो यथा स्मार्तः, मनुः 'सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥' इति ।

निषेधः स्मार्तादिः पुनर्द्विविधः । अदृष्टार्थो दृष्टार्थश्च । पूर्वोदाहृतः सर्वोऽपि अदृष्टार्थ एव । दृष्टार्थो यथा विवाहे 'अरोगिणीं' इत्यादिः । तदुक्तं विज्ञानेश्वरेण 'रोगिण्यादिषु तु दृष्टविरोध एव' इति ।

निषेधः स्मार्तादिः क्रत्वर्थोऽपि द्विविधः । पुरुषार्थमात्रविषयकः क्रत्वर्थमात्रविषयकश्च । आद्यो यथा श्राद्धव्रतादौ मैथुनादिनिषेधः । द्वितीयो यथा श्राद्धे विहितस्यापि मांसस्य निषेधः । 'अष्टका (कन्या) गोपशुश्चैव श्राद्धे मांसं तथा मधु । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥' इति निगमः । तथा 'शामित्रं चैव विप्राणां' इति । पुरुषार्थस्तु स्मार्तादिनिषेधः एकविध एव पुरुषार्थमात्रविषयक इति ।

पुरुषार्थमात्रविषयकः पुरुषार्थनिषेधो द्विविधः रागप्राप्तविषयकः विधिप्राप्तविषयकश्च । आद्यो यथा उदाहृतो मानवः सुरानिषेधः । द्वितीयो यथा षष्ठे 'तस्या यावदुक्तम्॰' इत्यधिकरणे (६।१।६।२४) स्त्रिया अध्ययननिषेधः इति ।

प्रत्यक्षो निषेधः श्रौतः, सोऽपि चतुर्विधः जातिनिषेधः, व्यक्तिनिषेधः, गुणनिषेधः, क्रियानिषेधश्चेति । तत्र जातिनिषेधो यथा 'तस्माद् बर्हिषि रजतं न देयम्' इति । व्यक्तिनिषेधः श्रौतो यथा 'नासोमयाजी सन्नयेत्' इति । असोमयाजिपदस्य यौगिकत्वात् । कर्तृनिषेध एव चायम्, न क्रियानिषेधः, तथात्वे विहितक्रियानिषेधात् तेनैव विकल्पसिद्धौ द्वयमे 'तद् सर्वेऽसन्नयेत्' इति प्रतिप्रसववलेन विकल्पोक्तिरयुक्ता स्यात् । गुणनिषेधः श्रौतो यथा षष्ठे सप्तमपादे (अधि॰ १०) आम्नाने 'एका देया ......द्वादश देयाः' इत्यादि विधाय 'अपरिमितं देयम्' इति । तत्र पूर्वपक्षित अयं पूर्वोक्तसर्वसंख्याप्रतिषेध इति । स्पष्टोदाहरणं तु मृग्यम् । क्रियानिषेधः श्रौतो यथा 'नातिरात्रे षोडशिनं गृह्णाति' इति ।

श्रौतो निषेधः पुनर्द्विविधः क्रत्वर्थः पुरुषार्थश्च । तत्र पूर्वोदाहृतश्चतुर्विधोऽपि क्रत्वर्थः । पुरुषार्थोऽपि जातिद्रव्यगुणक्रियानिषेधभेदेन चतुर्विधः । तत्र पुरुषार्थो जातिनिषेधो यथा अनारभ्याम्नातः 'न कलञ्जं भक्षयेन्न लशुनं न गृञ्जनम्' इति । अत्रापि जातिमात्रनिषेधो मसूरनिषेधोक्तयुक्त्या । द्रव्यनिषेधः श्रौतो यथा 'न मलवद्वाससा सह संवदेत्' इति, मलवद्वासःशब्दस्य यौगिकत्वात् । गुणनिषेधः पुरुषार्थः प्रत्यक्षो यथा 'स्त्रस्त्यग्न्येषु न एवैव पात्रेण पिबेत्' इति परिमाणनिषेधः । पुरुषार्थः श्रौतः क्रियानिषेधो यथा 'न हिंस्यात् सर्वा भूतानि' इति नमूयिकाया वार्तिककृतोक्तः । प्रत्यक्षश्च निषेधः सर्वोऽपि अदृष्टार्थ एव, दृष्टार्थस्तु नास्त्येव ।

श्रौतो निषेधः क्रत्वर्थः त्रिविधः पुरुषार्थमात्रविषयकः क्रत्वर्थमात्रविषयकः उभयविषयकश्च । आद्योऽपि द्विविधः रागप्राप्तविषयो विधिप्राप्तविषयश्च । तत्राद्यो यथा 'स्युपास्यमानमशादिपुरुषार्थपरि भितः । प्रति-

षेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥ ' इति व्याकरणाधिकरणे उक्तः ( वार्तिक पृ. २८४ ) । निषिद्धस्त पुरुषार्थमात्रविषयः क्रत्वर्थो निषेधो यथा ' दीक्षितो [redacted] ददाति न जुहोति ' इति । नरत्वर्थमात्रविषयकः यथोदाहृत एव ' नातिरात्रे षोडशिनं गृह्णाति ' इति । क्रत्वर्थपुरुषार्थोभयविषयः क्रत्वर्थः श्रौतो निषेधो यथा दर्शपूर्णमासाङ्ग ' नानृतं वदेत् ' इति । प्रतिषेधोऽपि 'व्रीहिभिर्यजेत' इति सकल्प्य यवैरेवानस्य यजन् व्रीहिस्वरूपमनृतं क्रत्वर्थं प्रवत्येव तद्विषयोऽपि भवति, भवति च पुरुषार्थगमप्रासानुसधदनविषयेऽपि इत्युक्त तृतीये 'अकर्म क्रतुसयुक्त सयोगान्नित्यानुवादः स्यात् । ' ( ३।८।४।१२ ) इत्यत्र । पुरुषार्थस्तु श्रौतनिषेध एकविध एव पुरुषार्थमात्रविषय इति । क्रत्वर्थमात्रनियमस्तु पुरुषार्थो निषेधो नास्त्येव, उदाहरणाभावात् । स हि अनारभ्याधीतोऽपि न पुरुषार्थः फलश्रवणाभावात् । नत्वर्थस्तु युक्तः नत्वयमिचारिक्रत्वर्थनिषेध्यद्वारा क्रतोरुपस्थितेः ।

पुरुषार्थमात्रविषयकः पुरुषार्थः श्रौतनिषेधोऽपि द्विविध. रागप्राप्तविषयो विधिप्राप्तविषयश्च । आद्यो यथा ' न हिंस्यात् सर्वा भूतानि ' इति । तथा ' न कलञ्ज भक्षयेत् ' ' तस्माद्यूपो नोपस्पृश्य ' इत्येते रागप्राप्तकलञ्जभक्षणयूपोपस्पर्शननिषेधौ पुरुषार्थी । द्वितीयो यथा असोमयाजिनः सन्नाय्यनिषेध । सोऽपि कर्तृनिषेधेन फलित. ।

प्रतिषेधः पुनरपि पोढा सामान्यप्रतिषेधः, विशेषप्रतिषेधः, प्रतिप्रसवरूपः प्रतिषेधः, अभ्यनुज्ञारूपः प्रतिषेध , उपसहाररूप. प्रतिषेध. , व्यवस्थारूपः प्रतिषेधश्चेति । तत्राद्यो यथा ' न हिंस्यात् सर्वा भूतानि ' इति । द्वितीयो यथा ' ब्राह्मणं न हन्यात् ' इति । तृतीयो यथा ' न हिंस्यात् ' इत्यस्य ' गा न हन्यात् ' इत्यस्य [redacted] ' गौरनुबन्ध्यः ' इति बाधे प्रसक्ते पुनः कल्पे प्रतिप्रसवः ' अक्षता गोपशुश्च ' इति । अभ्यनुज्ञारूपः प्रतिषेधो यथा ' एष पन्था एतत्कर्म ' इति ऐतरेये द्वितीयारण्यके ' तस्मात् काल एव दद्यात् काले न दद्यात् ' इति । अत्र काले दारिद्र्यावस्थारूपे न दद्यात् इति न दाने दोष. प्रतिपाद्यते, नहि भोजनमात्रपर्याप्तवतोऽपि अतिथ्यागमने तस्मै तद्दत्वा स्वयमनशनं कुर्वतोऽपि दोषो युज्यते, तथात्वे ' सकुप्रस्थस्य वो विप्र न यज्ञः सदृशो मतः । ' इत्याद्युपाख्यानविरोधात् । तस्मात् ' काले न दद्यात् ' इति अभ्यनुज्ञैव इति तनाददत ईषद्दोष इति । उपसहाररूपः प्रतिषेधो यथा ' मृतःनुगमन नास्ति ब्राह्मण्या ब्रह्मशासनात् । ' इति सामान्यनिषेध. , ' पृथक् चितिं समारुह्य न विप्रा गन्तुमर्हति । ' इत्यनेन विरोधे उपसह्रियते । क्रत्वर्थो दाहरण तु हेमाद्रौ पैठीनसिः ' कुन्ताकनालिकापोतीकुसुम्भाश्मन्तकाश्चेति दाक्षान्यमसथा. ' इति । तदिदं कुन्ताकसामान्यनिषेधकम् । ' कण्डूर श्वेतवृन्ताक कूष्माण्ड च विवर्जयेत् ' इति देवलवचनेन विशेषे उपसह्रियते ।

व्यवस्थित. प्रतिषेधोऽपि सप्तधा, देशतः, कालतः, कर्तृतः, कर्मतः, निमित्ततः, सस्कार्यतः, फलतश्चेति । तत्र देशतो व्यवस्थितो निषेधो यथा ' कृष्णपक्षादिक मास नाडीं कुर्वन्ति केचन । केऽपीच्छन्ति न तेषामपीदो विन्ध्यस्य दक्षिणे ॥ ' इति त्रिकाण्डमण्डने । कालतो व्यवस्थितो निषेधो यथा ' सायंप्रातर्द्विजातीनामशन श्रुतिचोदितम् । नान्तरा भोजनं कुर्यात् ' इति । कर्तृतो व्यवस्थितो निषेधो यथा ' नासोमयाजी सनयेत् ' इति । कर्मतो व्यवस्थितो निषेधो यथा कात्यीयसूत्रे ' प्रजाकामस्य नवसप्तदशस्तोऽतिरात्रो नाम प्रथम , ज्येष्ठस्य श्रैष्ठिनेयस्य विषुवाख्याम द्वितीय । भ्रातृव्यवतो गौर्नाम तृतीयः, स्वर्गकामस्य आमशाविनो वा आयुर्नाम चतुर्थः, ऋद्धिकामस्य ज्योतिष्टोमातिरात्रो नाम पञ्चम , पशुकामस्य त्रिधविदतिरात्रो नाम षष्ठ., ब्रह्मवर्चसकामस्य त्रिवृदतिरात्रो नाम सप्तम , वीर्यकामस्य पञ्चदशातिरात्रो नाम अष्टम., अन्नाद्यकामस्य सप्तदशातिरात्रो नाम नवम., प्रतिष्ठाकामस्य एकविंशातिरात्रो नाम दशम , अन्तोर्यामातिरात्रो नाम एकादशः, ...अभिजिदतिरात्रो नाम भ्रातृव्यवतो द्वादश., सर्वस्तोमातिरात्रो नाम बुभूषत. त्रयोदशः, इति त्रयोदशातिरात्रान् वक्ष्यमाणान् ' त्रयोदशातिरात्राः ' इत्युपक्रम्य 'तेषां चतुरात्रेऽषोडशिकः प्रथमः.' इति सूत्रेण चतुर्थेव व्यवस्थित. षोडशिनिषेधः कृत इति । निमित्ततो

व्यवस्थितो निषेधो यथा ‘स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके।’ इति, राहोः सूतकादन्यत्र अन्यसूतके स्मार्तधर्मपरित्यागः इत्यपि अर्थाश्रयणात्। ननु अस्यार्थान्तरं पूर्वमुक्तं (भाग. पृ. १६ पं. ३–४), सत्यम्, तथापि अर्थद्वयबोधकस्मृत्यन्तरगतवाक्यद्वयबलेन तात्पर्यग्रहात् अन्योन्यार्थस्याविरोधात् हेमाद्रिणा तथा व्याख्यातम्। संस्कार्यतो व्यवस्थितो निषेधो यथा आश्वलायनसूत्रे होम्यकर्मसु ‘परिस्तीर्य’ इति सर्वत्र परिस्तरणं विधाय ‘कृताकृतमाज्यहोमेषु परिस्तरणम्’ इति अकृतशब्देन निषेधः अन्यत्र व्यवस्था उक्तः। फलतो व्यवस्थितो निषेधो यथा ‘नो ब्राह्मणायावगुरेत् तं शतेन यातयात्, यो निहनत् सहस्रेण, यो लोहितं कुर्यात् यावत प्रस्कन्द्य पांसून् संगृह्णीयात् तावतः संवत्सरान् सुवर्गं लोकं न प्रजानीयात् तस्मात् ब्राह्मणायावगुरेत्, न हन्यात्, न लोहितं कुर्यात्’ इति। निषेध्यफलान्येव हि निषेधफलानि, तेषु चात्र निषेधा व्यवस्थिताः।

सामान्यनिषेधः षड्विधोऽपि चायं श्रौतस्मार्तादिभेदेन प्रत्यक्षकल्प्यभेदभिन्नः। तत्तन्नामभिः यथासंभव श्रौतस्मार्तोदाहरणानि उक्तानि। तथा क्रत्वर्थपुरुषार्थभेदयोरपि सामान्यादिषड्विधनिषेधेषु संभवात् यथासंभवं क्रत्वर्थपुरुषार्थोदाहरणान्यपि क्वचित् कानि चिदुक्तानि। इतराणि अपि मृग्याणि।

क्रत्वर्थक्रियायाः प्रतिषेधः इति प्रतिषेधभेदः श्रौतः स्मार्तो वा यः पूर्वमुक्तः सोऽपि क्रत्वर्थक्रियायां षोडशविधत्वात् षोडशविधः। तथाहि प्रकृतौ विकृतौ अप्रकृतिविकृत्यात्मके च कर्मणि समानविधानो निषेधो यथा ‘शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः।’ इति सर्वत्र उपदिष्टक्रतुषु निषेधः। तथा आरादुपकारकक्रियानिषेधः संनिपत्योपकारकक्रियानिषेधश्च। तत्राद्योऽपि त्रिविधः प्रकृतिगतः, विकृतिगतः, अपूर्वकर्मगतश्च। तत्राद्यो यथा ‘न प्रथमयज्ञे प्रवृञ्ज्यात्’ इति। विकृतिगतोऽपि द्विविधः अतिदिष्टविषयः उपदिष्टविषयश्च। आद्यो यथा ‘न तौ पशौ करोति’ इति आज्यभागनिषेधः। वैकृतोपदिष्टारादुपकारकविषयो निषेधो यथा कात्यायनसूत्रे अग्नीषोमीये पशौ ‘स्वाहा देवेभ्यः’ ‘देवेभ्यः स्वाहा’, इतिमन्त्राभ्यां परिपशव्ये आहुती आरादुपकारिके सवनपूर्वापरकालयोर्विधाय ‘न चैते जुहोति’ इति निषिद्धे। अपूर्वकर्मणि उपदिष्टारादुपकारकक्रियानिषेधो यथा अग्न्याधेये वारवन्तीयादिसामगानं निषिध्यते ‘न ब्रह्मा सामानि गायति’ इति। अत्र ब्रह्मणः सामगानस्याप्राप्तेः अनुवादमात्रत्वात् सामगाननिषेधात् नित्यं सामगानं इत्याशङ्क्य अनुवादमात्रस्य आनर्थक्यात् सामगाननिषेध एवायम्, ब्रह्मशब्दस्तु ब्राह्मणपरोऽनुवादः इत्युक्तं दशमे (१०।८।६।९–११)।

संनिपत्योपकारकक्रियानिषेधोऽपि त्रिविधः। प्रकृतिगतः, विकृतिगतः, अप्रकृतिविकृत्यात्मककर्मगतश्च।

प्रकृतिगतसंनिपातिक्रियानिषेधोऽपि द्विविधः अदृष्टार्थविषयः, दृष्टार्थविषयश्च।

दृष्टार्थविषयोऽपि द्विविधः प्रतिपत्तिभिन्नद्रव्यसंस्कारविषयः, प्रतिपत्तिविषयश्च।

अपूर्वकर्मगतोऽपि एवमेव त्रिविधः, विकृतिगतोऽपि एवमेव त्रिविधः। स तु त्रिविधोऽपि विकृतिगतो निषेधः पुनर्द्विविधः उपदिष्टविषयः अतिदिष्टविषयश्च।

तदेवं द्वादश निषेधभेदाः सिद्धाः। तेषां तु द्वादशानां उदाहरणानि द्वादश उच्यन्ते। तत्र (१) प्रकृतिगतसंनिपात्यदृष्टार्थक्रियानिषेधो यथा ‘मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च। नोच्छिष्टो भवति द्विजः’ इति सोमे पुनराचमनाभावबोधनेन अदृष्टार्थस्य संनिपातिन आचमनस्य निषेधः। (२) प्रकृतिगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिक्रियानिषेधो यथा अग्निहोत्रहोमे ‘हुत्वा अग्निमुपतिष्ठते’ इति विधाय ‘तस्मान्नोपतिष्ठेत’ इति शतपथे दृष्टार्थाग्निसंस्कारकसंनिपात्युपस्थाननिषेधः। (३) प्रकृतिगतप्रतिपत्तिनिषेधो यथा ‘अग्निहोत्रहवण्याश्च लेहः’ इति वचने निषेधः। (४) अप्रकृतिविकृत्यात्मककर्मगतसंनिपात्यदृष्टार्थक्रियानिषेधो यथा कात्यीये ‘श्रुतनक्षत्रारम्भस्नपनवानुष्ठारयजागरणे अपूर्वार्धान्यारम्भयज्ञापरतश्चीनं च कुर्यात्’, इति वपननिषेध आधाने। (५) अप्रकृतिविकृत्यात्मककर्मगतप्रतिपत्तिव्यतिरिक्तदृष्टार्थसंनिपातिक्रियानिषेधो यथा अन-

नतरोक्तकातीयसूत्रगत एव तमौ पदार्थरक्षणार्थत्वेन दृष्टार्थस्य सन्निपातिनो जागरणस्य निषेधः । ( ६ ) अप्रकृतिविकृत्यात्मककर्मगतप्रतिपत्तिनिषेधो यथा 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इत्याधानकर्तृसंस्कारः तच्छरीरप्रतिपत्तिरूपो विहितः, तस्य आत्महनने निषेधो भविष्योत्तरे ' स्वेच्छया मरणं विप्रात् ' इत्यादिना आत्मघात्यादीनुक्त्वा ' न तेषां स्नानसंस्कारौ ' इति संस्कारशब्देन दाहो निषिद्धः । ( ७ ) विकृतिगतोपदिष्टादृष्टार्थसन्निपातिक्रियानिषेधो यथा अतिरात्रे षोडशिग्रहनिषेधः । ( ८ ) विकृतिगतदृष्टार्थप्रतिपत्तिव्यतिरिक्तसन्निपातिक्रियानिषेधो यथा शतपथीयः पूर्वोक्तः अग्नीषोमीयपशौ विहितस्याग्निमन्थनस्य निषेधः ' नाग्निं मन्थेत् ' इति । ( ९ ) विकृतिगतोपदिष्टप्रतिपत्तिनिषेधो यथा भागावदानानि ' क्लोम क्षणे, प्लीहं वक्ष मानाय, पुरीततमन्ध्ययवे ' इत्यादीनि, ' तानि अनारभ्यविहितानि अग्नीषोमीयपशावपि ' इति पर्योक्ते., पुनरनेनोक्तम् ' शाखान्तरे अग्नीषोमीयप्रतिषेधात् विकारपशूनुपगच्छन्ति ' इति, तेन निरूढे उपदेशादेव प्राप्तानि, तेषां निरूढे एव निषेधः, शतपथे 'क्लोमप्लीहाध्यूध्नीपुरीततं चेच्छन्' इति अत एव तत्र विकल्पः इति । ( १० ) विकृतिगतातिदिष्टादृष्टार्थसन्निपातिक्रियानिषेधो यथा वाजसनेयिमते पूर्णमासविकृतित्वेन उभतेषु दर्विहोमरूपेष्वपि वैश्वदेवहोमेषु शतपथे श्रूयते ' ते वा अक्ताः स्युः ' ' तस्मादनक्ता एव स्युः ' इति च, सोऽयं प्राकृतस्याञ्जनस्य निषेधः । अत एव तन्मूलकं कात्यायनसूत्रं ' अक्तान् वा ' इति । ( ११ ) अतिदिष्टदृष्टार्थसन्निपातिनिषेधो यथा 'धूपति वा एतदश्वोऽक्षरं यदेनदूहति, तस्मादश्वं नोहेत् ' इत्यूहनिषेधात् प्राकृतस्यानुवाक्याग्रहनिषेधः । ( १२ ) विकृतिगतातिदिष्टप्रतिपत्तिनिषेधो यथा शतपथे विश्वायाम् ' तानुपहूयैवावजिघ्रन्ति, न प्राश्नन्ति ' इति कृत्स्नस्य इडोपाह्वानानन्तरं अवघ्राणं विधाय प्राशनं निषिद्धम् ।

प्रतिषेधः पुनः प्रत्येकं षड्विधः लिङ्लोट्कृत्यकृत्यार्थपञ्चमलकारभेदात् । प्रतिषेधः पुनर्द्विविधः श्रौतः स्मार्तश्च । श्रौतः प्रतिषेधे लिङ् यथा ' न चतुर्थिकयादिति ब्रूयात् ' इति । श्रौतः प्रतिषेधे लोट् मृग्यः । श्रौतः प्रतिषेधे कृत्यो यथा ' तस्माद् बर्हिषि रजतं न देयम् ' इति । श्रौतः प्रतिषेधे पञ्चमलकारो यथा ' न सतृणचि ' ' दीक्षितो न जुहोति ' इत्यादि । श्रौतः प्रतिषेधे तत्प्रत्ययो यथा ' तस्माद् ब्राह्मणेन न म्लेच्छितवै ' इति । केन् ' नावगाहे ' नावगाहितव्यं इति काशिकायाम् । एव केन्यत्वनौ मृग्यौ । बाल. पृ. २९–४०.

● प्रतिषेधः ' न ब्राह्मणायावगुरेत् ' इत्यादिः नरकपरिहारार्थः । वा. ३।४।६।१७, ● प्रतिषेधः । नहि यदर्थे कर्मणि यो नियमप्रतिषेधौ तत्रैव केवलौ तदर्थौ भवतः । तथाहि, ' स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः । प्रतिषेधः क्रत्वोरङ्गमिष्टः प्रकरणाश्रयात् ॥ क्रत्वर्थाम् रसादिराचेष्टा वीर्यसिद्धिर्विधानतः । भोजनात् चाप्यतिथ्यर्थादपूर्वं दातृसंश्रितम् ॥ ' अतश्च परार्थोपकारणाश्रितानपि नियमप्रतिषेधौ स्वप्रयोजनाकाङ्क्षावेलायां सन्निहितपुरुषप्रधानौ विज्ञायेते । १।१।८। २७ पृ. १८४. ● प्रतिषेधो नित्यानुवादः अप्राप्ति प्रदर्शे ' नान्तरिक्षे न दिवि ' इत्यादिः । भा. १।२।१।१८, ● प्रतिषेधः पापाभिरक्षयति । ' नानृतं वदेत् ' इत्यादिः । वा. ३।४।४।१३ पृ. ९११. ● ' प्रतिषेधः प्रदेशोऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वात् विकल्पः स्यात् ' ( १०।८।१।१ ) इति सूत्रेण पूर्वपक्षयित्वा ' अर्थप्राप्तवदिति चेत् ' ( २ ) इत्यनेन अर्थप्राप्तनुपायनादिनिषेधे विकल्पानापत्तिवच्छास्त्रप्राप्तनिषेधेऽपि अनापत्तिमाशङ्क्य ' न तुल्यहेतुत्वात् ' ( ३ ) इत्यनेन वैधर्म्यं वक्ष्यति । सु. पृ. १३९१.

🝖 प्रतिषेधः प्रदेशोऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात् । १०।८।१।१॥

प्रदेशः उपदेशः । चोदकेन उपदिष्टे वरणे, ' न होतारं वृणीते नार्षेयम् ' इति महापितृयज्ञे प्रतिषेधः श्रूयते । तथा अनारभ्यविधानेन प्राप्ते येयजामहमन्त्रे ' नानुयाजेषु येयजामहं करोति ' इति प्रतिषेधः श्रूयते । सोऽयं प्रदेशे चोदकेनोपदेशे अनारभ्यविधाने च श्रूयमाणः प्रतिषेधः विकल्पः स्यात् विकल्पितः स्यात् प्राप्तप्रतिषिद्धत्वात् । प्रमाणेन प्रापणात् प्रमाणेनैव ■ प्रति-

पिद्धत्वात्। तस्मात् साकमेधेषु महापितृयज्ञे होत्रार्षेयवरणस्य अनुयाजेषु येयजामहस्य च विकल्पः स्यात् इति पूर्वः पक्षः।

अर्थप्राप्तवदिति चेत्। २॥

सिद्धान्ती शङ्कते। अर्थप्राप्तवत् स्यात्। यथा लोके अर्थप्राप्ते यत्र प्रतिषेधो भवति, 'न विषं भक्षयितव्यम्' इत्यादौ तत्प्रयोगस्य अक्रियैव भवति, न विकल्पः। तेन मन्यामहे विधिप्रतिषेधयोः प्रतिषेधो बलीयान् इति। तस्मादक्रियैव अनुयाजेषु येयजामहस्य महापितृयज्ञे च होत्रार्षेयवरणस्य। इति चेत् सिद्धान्ती ब्रूयात्।

न तुल्यहेतुत्वादुभयं शब्दलक्षणम्। ३॥

पूर्वपक्षी उत्तरयति। सिद्धान्तिना यदुक्तम्, तन्न। प्राप्तिप्रतिषेधयोस्तुल्यहेतुत्वात् तुल्यप्रमाणकत्वात्। तुल्यहेतुत्वमेव विवृणोति, उभयं प्राप्तिश्च प्रतिषेधश्च शब्दलक्षणम्। 'येयजामहं करोति' 'नानुयाजेषु' इति शब्द एव उभयोरेव प्रमाणम्। तस्मात् महापितृयज्ञे होत्रार्षेयवरणस्य अनुयाजेषु च येयजामहस्य विकल्प एवेति।

अपितु वाक्यशेषः स्यादन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात्। ४॥

सिद्धान्तयति। अपितु इति पक्षव्यावृत्तिः। न विकल्पः। नानुयाजेषु इति न-शब्दः वाक्यशेषः वाक्यस्य वाक्यैकदेशस्य अनुयाजशब्दस्य शेषः स्यात्, न तु करोतिशब्दस्य शेषः। नानुयाजेषु अनुयाजभिन्नेषु इत्यर्थः। तथा च अत्रत्यो नञ् न प्रतिषेधार्थकः किन्तु पर्युदासार्थकः अन्योन्याभावबोधकः। विकल्पस्य अन्याय्यत्वात्। ननः करोतिना अन्वये स्वीकृते विधिनिषेधाभ्यां विकल्पः स्वीकार्यः स्यात्। स चाष्टदोषदुष्टत्वात् अन्याय्यः। एवम् 'न होतारं वृणीते' इत्यत्रापि होतृभिन्नं ऋत्विजं वृणीते इत्यर्थः। तस्मात् विकल्पप्रसङ्गो मा भूत् इति तत्रत्यनञ्सहितमनुयाजादिपदं विधीनां करोति, वृणीते इत्यादीनां एकदेशः स्यात्। एवं च अत्रत्यो नञ् न निषेधार्थकः किन्तु पर्युदासार्थकः इति प्रतिषेधाभावात् न विकल्पप्रसङ्गः। इति पर्युदासाधिकरणसिद्धान्तः। के.

* 'प्रतिषेधः प्रदेशे अनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात्'। यस्य शास्त्रादृते प्राप्तिर्नास्ति, तस्य प्राप्तिमनभ्यनुज्ञाय प्रतिषेधासम्भवात् अवश्यं प्रतिषेधेनैव तद्विषयोऽपि विधिरङ्गीकर्तव्यः। स चेदङ्गीकृतः शास्त्रत्वाविशेषात् तुल्यबलत्वम्। अतः सर्वथा अतिरात्रे विकल्पेन भवितव्यम्। तस्मात् द्विरवरत्वात् उपदेशातिदेशयोश्च प्राप्तिसाकल्येऽप्यत्र प्रकृत्यर्थतैव वरमिति (इति सूत्रार्थः)। शा. ३।३।१।१३ पृ. ८७९, * ननु अत्यन्तदुर्लभेऽपि विधिः तदधीनात्मलाभेन प्रतिषेधेन तुल्यबलो भवति इति 'प्रतिषेधः प्रदेशेऽनारभ्यविधाने च' इत्यत्र वक्ष्यते। सत्यम्, यस्य शास्त्रमन्तरेण अप्राप्तिरस्ति, तत्रैतदेवम्। यत् पुनः अर्थप्राप्तं निषिध्यते, तत्र विध्यनभ्यनुज्ञयैव लब्धात्मानः प्रतिषेधा बलीयांसो भवन्ति इति तत्रैव वक्ष्यते 'अर्थप्राप्तवदिति चेत्' इति। १।२।१।२ पृ. १०७, * प्रतिषेधः प्राप्तिपूर्वकः। ४।१।२।३ पृ. ११९८. * प्रतिषेधः बाधे प्रमाणम्। मणि. पृ. १३. * प्रतिषेधः षोडशिग्रहणस्यातिरात्रे। १०।८।३।६. * प्रसक्तस्य प्रतिषेधो न्याय्यः (न अप्रसक्तस्य)। भा. ६।७।१३।२७. * यत्र च प्रतिषेधः तत्र निमित्ते प्रायश्चित्तं ब्रह्महत्य इव (यत्र पुरुषस्य प्रतिषेधोऽङ्ग तस्य प्रतिषेधातिक्रमरूपे निमित्ते सति प्रतीकारापेक्षया प्रायश्चित्तविधानं ब्रह्महन्तुरिव युज्यते)। टुप्. ९।३।४।९ पृ. १७४८. * विधिप्रतिषेधयोः प्रतिषेधो बलीयान्। प्राप्ते हि विधौ प्रतिषेधो भवति। येन च नाप्राप्ते यो आरभ्यते, तत्तस्य बाधको भवति। भा. १०।८।१।२. * विधिप्रतिषेधौ कार्यभावनामेव साक्षात् विषयीकुरुतः, तद्द्वारा तु तद्विशेषणानि कारकाणि। बाल. पृ. ७४. * प्रतिषेधेन प्रकृतिलिङ्गयोगो यथा 'न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम्' इति। भा. १०।४।१।१ पृ. १९०८। गिरापदस्य प्रतिषिध्यमानस्य यत् कार्यं लक्ष्यते, तत्र इरापदं विधीयते। टुप्.

※ प्रतिषेधाच्चोर्ध्वमवभृथादिष्टेः। ६।५।१२।४२॥

ज्योतिष्टोमे अवभृथात् ऊर्ध्वं आ उदवसानीयायाः इष्टेः अविधानामपि अग्निहोत्रहोमानां प्रतिहोमो न

यत् कर्तव्यम्, तस्य प्रतिषेधः स्यात्। तस्मात् उत्तराभ्यां शंय्विडाभ्यां शंय्विडान्तत्वमिति पूर्वः पक्षः। चकारः पूर्वाधिकरणपूर्वपक्षहेतुः दृष्टान्तितः पत्न्यनुयाजप्रतिषेधानर्थक्यवत् प्रतिषेधार्थवत्त्वात् इति।

**प्राग्वा पूर्वस्य वचनादतिक्रमः स्यात्। ४१॥**

वाशब्दः पूर्वपक्षव्यावृत्तिमाह। पूर्वस्य शंय्विडस्य ग्रहणं नोत्तरस्य शंय्वन्ता इडान्ता इति वचनात् प्राप्तेः प्रथमोपस्थितत्वात्, प्रथमत्यागे कारणाभावात्। पत्नीसंयाजानुयाजप्रतिषेधस्तु नित्यानुवाद इत्युक्तम्। पूर्वस्य शंय्विडस्य अग्रहणे तु अतिक्रमः स्यात् प्राप्तस्य समाम्नायक्रमस्य अतिक्रमः कृतः स्यात्। तथा चोक्तम्। तस्मात् पूर्वाभ्यां शंय्विडाभ्यां शंय्विडान्तत्वमिति सिद्धान्तः।

**प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम्। ४२॥**

इतश्च पूर्वशंय्विडान्तत्वं स्यात्। प्रतिषेधस्य त्वरायुक्तत्वात्। त्वरायुक्तोऽयं प्रतिषेध उक्तः। 'ते प्रायणीयं निरवपन्। तच्छंय्वन्तमासीत्। अथासुरा यज्ञमायन्, ततो यज्ञस्तावरे तमेव कृत्वा त्वरितमाक्रियन्ते' इति, 'आतिथ्यं निरवपन्, तदिडान्तमासीत्, अथासुरा यज्ञमायन्, ततो यज्ञस्तावरे इति, तदिडान्तमेव कृत्वा त्वरितमाक्रियन्ते' इति। त्वरायुक्तत्वं च पूर्वशंय्विडान्तत्वे एव संगच्छते। तस्मात् तस्य पत्नीसंयाजादिप्रतिषेधस्य नान्यदेशत्वं नोत्तरदेशत्वम्, किंतु प्राग्देशत्वमेव। ततश्च पूर्वशंय्विडान्तत्वमेवेति सिद्धान्तः। के.

*** प्रतिषेधाख्यशब्दभावनानिरूपणम्।** निवारणाख्याऽपि शब्दभावना निवर्तनारूपसामान्यतः निवारणारूपविशेषतश्च विधिवदेव ज्ञातव्या। साऽपि च निवृत्तिहेतुः निवर्तयितुर्धर्मरूपा 'अहमेनं निवर्तयामि' इति, निवर्तयितुः मानसव्यापारचेष्टा प्रवर्तनावत्। साऽपि च न्यूनोत्तमसमविषयत्वेन त्रेधा लोकेषु धर्मः, वेदे न पुरुषाभावात् तदीयत्वव्यपदेशरूपत्वसंभवात् लिङादेरेव निवर्तकत्वात् तद्धर्मभूता चतुर्थी अपि विधा अङ्गीकार्या। सैव च प्रतिषेधः निषेधः इति च गीयते। लोके तु तद्रूपव्यवहारो विधिव्यवहारवत् भाक्त एव। ननु तु एतावान् विशेषः, न निवर्तनाया विधिनिमन्त्रणेतिवत् प्रवर्तनाया शक्तिग्राहकमनुशासनमस्ति। तथापि अनादौ संसारे नञुपहितलिङादिश्रवणानुविधायिनीं प्रयोज्यवृद्धनिवृत्तिं दृष्ट्वा आवापोद्वापाभ्यां नञुपहितलिङादेः निवृत्तावेव शक्तिग्रहे प्रसक्ते 'गुरुणा निवर्तकेन निवर्तितोऽहं निवर्ते' इत्यादि गुरौ निवर्तकत्वव्यवहारान्यथाऽनुपपत्त्या प्रवर्तनायामिव प्रवर्तकत्वान्यथाऽनुपपत्त्या तद्व्यापारभूतायां निवर्तनायां शक्तिग्रहो भवति व्युत्पत्तेः। यदुक्तं तद्भूताधिकरणवार्तिके 'विधायकैरसंयुक्तो नहि नञ् प्रतिषेधकः।' (२०८)। विधिना युज्यते यत्र न हन्यान्न पिबेदिति।' (२१४) 'नञ्राभावार्थता नैव स्वयं पुंसो रुणद्धि हि।' (२१५) इति। अत नञो निवर्तनायां शक्तिरुक्ता। नञ्टीकायां (शा. १।३।३।७ पृ. २११ पं. ८–१०) तु 'प्रतिषेधविधिपरो हि विधायकः' इत्यादौ 'प्रत्ययावृत्तिलक्षणो वाक्यभेदप्रसङ्गः' इत्यन्ते ग्रन्थे विधायकपदेन लिङ एव प्रतिषेधार्थता इत्यपि पक्ष उक्तः। तत्र च निषेध्यलिङ्विवक्षाया तस्यैवावृत्तिरुक्ता न नञः। 'येषां तु' इति ग्रन्थे तु पूर्वमतमपि उक्तम्। तत्र नञादेरभावविषयायाः लिङादेश्च प्रवर्तनाविषयायाः शक्तेः त्यागस्याविशेषेऽपि तथा नञादेः निवर्तनावाचित्वपक्षे तात्पर्यनिर्वाहकलिङादेः प्रवर्तनानुवादकत्वस्य लिङादेश्च निवर्तनावाचित्वपक्षे नञादेः तत्फलीभूताभावस्य भावानुवादकत्वस्याविशेषेऽपि 'अभावोऽनाः प्रतिषेधे' इत्यव्ययचतुष्टये शक्तिचतुष्टयं कल्प्यं इत्याद्यपक्षे लाघवम्। लिङ्लोट्प्रभृत्याख्याताना तव्यादीनां च अनेकेषां कृत्यानां चतुष्टयाधिकशक्तिकल्पनापत्त्या गौरवात् न प्रत्ययशक्तिकल्पनापक्षो युक्त इति नन्विति शङ्कः वार्तिककृता द्विरभिधानेन तत्रादरं सूचयता ध्वनितमिति। भाट्ट. पृ. ७८–७९.

*** प्रतिषेधविधिः** नञर्थपर्यवसायी। बृहती. पृ. २८.

*** प्रतिष्ठा** गायत्री। पादेषु अक्षराणि ८।७।६। उदा० 'आपः पृणीत भेषजम्' (ऋसं. १०।९।७)। के.

*** प्रतिष्ठाकामं** त्रयस्त्रिंशेनाग्निरात्रेण याजयेत्। आ. १०।४।१०।२०, *** प्रतिष्ठाकामस्य** एकविंशतिमनुब्रूयात् सामिधेनीः दर्शपूर्णमासयोः। द्वाविंशति

वा अनुब्रूयात् । १०।५।८।२०. ● प्रतिष्ठाकामस्य एकविंशतिपनः कार्तीये उक्तः । वाल. पृ. ३४. ● प्रतिष्ठाकामस्य मार्त्तिकेन प्रणयेत् । भा. ४।३।२।८.

● प्रतिसमाधेयाङ्गवैकल्यस्याधिकारः अग्निहोत्रादिषु कर्मसु । ६।२।९।४१. मीको. पृ. २८२ ' अधिकारः अग्निहोत्रादौ० ' इत्यत्र द्रष्टव्यम् ।

● प्रतिहर्ता उद्गातुः पुरुषः । तृतीयवर्गस्थोऽयम् । अयं तृतीयी– तृतीयांशभाक् । चतस्रो गा लभते । के. ३।७।१७. ● प्रतिहर्ता गाता, न उद्गाता । ' गातारौ हि प्रस्तोतृप्रतिहर्तारौ, नोद्गातारौ ' । वा. ३।८।८।२६ पृ. १००२. ● ' प्रतिहर्ता प्रतिहरति ' प्रतिहारं नाम सामावयवं पठति । वि. ३।७।९, ● यदि प्रतिहर्त्रा अपच्छेदेन, सर्वस्वं दद्यात् । ६।५।१७, ● ' प्रतिहर्तारं नेष्टा दीक्षयति ' । ३।७।१७. ● प्रतिहर्तुः अपच्छेदस्य फलत्वे पूर्वप्रयोगे सर्वस्वं दत्त्वा पुनःप्रयोगेऽपि तदेयम् । भाट्ट. ६।५।१० पृ. ३०६.

● प्रतिहर्तृजयन्यत्वे पुनःप्रयोगबाध. अपच्छेदे । वाल. पृ. ११५–११६.

● प्रतिहारः नाम पाञ्चभक्तिकस्य साम्नश्चतुर्थोऽवयवः साप्तभक्तिकस्य साम्नस्तु पञ्चमोऽवयवः । के. ( ३।५।८ ).

प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् । ६।५।१३।४३ ॥

यत्र अननुष्ठितानामग्निहोत्रहोमानां परिगणनपूर्वकं प्रतिहोमा अनुष्ठीयन्ते, तत्र कः क्रमः इति विचारे आह, प्रतिहोमः चेत् क्रियेत, तदा अग्निहोत्रे सायमग्निहोत्रप्रभृतीनि हूयेरन् सायंकालीनहोममारभ्य परिगणनं कृत्वा प्रतिहोमः कर्तव्यः, न तु प्रातर्होममारभ्य इति सिद्धान्तः । सायंकालो हि प्रायः आरम्भो भवति । तेन प्रातर्होमानधिकार एव । सायंहोमाधिकारस्तु प्राप्नोति । अतः सायंहोममारभ्य एवानुष्ठानम् । कृत्वाचिन्तेयम्, अग्निहोत्रादन्यत्र उपयुक्ता भविष्यतीति । के.

● प्रतिहोमाः अतिक्रान्तहोमाः । प्रवासादिना नित्याग्निहोत्रहोमाभावे सति प्रतिप्रवासागमनोत्तरं यावन्तो होमाः अतिक्रान्ताः ते सर्वे युगपत् क्रियन्ते । के. ( ६।५।१२ ). ● प्रतिहोमा नानुष्ठेयाः अवभृथोत्कर्षेऽपि दीक्षाया अनुवृत्तत्वात् होमादिनिषेधानुवर्तनात् । वि. ६।५।१२. ● प्रतिहोमा नानुष्ठेयाः उदवसानीयोत्कर्षेऽपि । ६।५।१२।८२. मीको. पृ. ११९६ ' उदवसानीयोत्कर्षेऽपि प्रतिहोमाना ' इत्यत्र द्रष्टव्यम् । ● प्रतिहोमा नानुष्ठेया ज्योतिष्टोमोत्कर्षे । ६।५।११।४०–४१. मीको. पृ. १८४४ ' ज्योतिष्टोमोत्कर्षे प्रतिहोमाः० ' इत्यत्र द्रष्टव्यम् । ● प्रतिहोमाः षोडशिसंस्थाया प्रातरग्निहोत्रमारभ्य कर्तव्याः । ६।५।१४. ' षोडशिसंस्थायां प्रातरग्निहोत्रमारभ्य० ' इत्यत्र द्रष्टव्यम् । ● प्रतिहोमानां क्रमः होमक्रमेणैव । वि. ६।५।१४.

● प्रतिहोमानुष्ठानं प्रातरग्निहोत्रमारभ्य षोडशिसंस्थे प्रातरग्निहोत्रप्रभृतीनि अतिपन्नानि इति प्रातरग्निहोत्रादेव समारभ्याणि । भा. ६।५।१४।४४.

प्रतिहोमपक्षे सायमग्निहोत्रमारभ्यानुष्ठानम् ॥

प्रतिहोमश्चेत् सायमग्निहोत्रप्रभृतीनि हूयेरन् । ६।५।१३।४३ ॥

भाष्यम्— एतेष्वेवोदाहरणेषु भवति संशयः किं प्रतिहोमे सायमग्निहोत्रप्रभृतीनि आरभ्येरन्, उत प्रातरग्निहोत्रप्रभृतीनीति । ननु नास्त्येव प्रतिहोम इति स्थितम् । उच्यते । अस्तीति कृत्वा चिन्तयामः । कृत्वाचिन्तेयम् । अन्येषु सहजन्यायेषूदाहरणेषु अस्याः प्रयोजनमस्तीति चिन्त्यते । किं प्राप्तम् ? अनियमः । अर्थकृतत्वात् । एवं प्राप्ते, ब्रूमः । यदि प्रतिहोमः क्रियते, सायमग्निहोत्रादारभ्यातिपन्नानि, तेनैवानुपूर्व्येण प्रतिहोतव्यानीति ।

सोम— प्रासङ्गिकी संगतिः । यद्यपि ' प्रातस्तु षोडशिनि ' इति सूत्रान्तरकरणात् भाष्ये पृथगेव षोडशिविचारः कृतः, तथापि न्यायस्यैकत्वात् उदाहरणभेदात् पृथक्करणमिति सूत्रभाष्ययोस्तात्पर्यम् ।

वि— ' कृत्वाचिन्ता क्रमो नो चेत् प्रतिहोमेऽतिपन्निनः । क्रमोऽस्त्वग्निहोत्रवत्सायं षोडशिनीतरः ॥ ' षोडशिनि इतरः क्रमः प्रातरारभ्य ।

भाट्ट— यदा अवभृथोत्कर्षे प्रतिहोमः, तदा कृत्वाचिन्तया विचार्यते । अग्निष्टोमसंस्थाकर्मोत्कर्षे होमे अवभृथस्य सायंकालात् पूर्वमेव कर्तव्यत्वेन बहुधा तौ

करणे एकस्यैव सायंहोमस्य दीक्षाविमोकोत्तर गौणकाले करणं आप्रातरहुतेः सायंहोमस्य गौण. कालः वाचनिकः, प्रातर्होमस्य सायंकालावधिकत्वात् । गौणकालस्याप्यतिक्रमे स्वकालक्रियमाणप्रातर्होमेन सह समस्यहोमविधया तन्त्रेण करणम् । अवभृथोत्कर्षेण अनेकहोमकालातिपत्तौ च सर्वान् सायंहोमान् प्रातर्होमांश्च पशुहोमविधिना समस्यहोमविधिना च स्वकालक्रियमाणहोमेन सह तन्त्रेण कुर्यात् । न च अतिपत्तिक्रमेण होमानां क्रमेणैव करण शङ्क्यम्, एकदेशकालकर्तृत्वेन समस्यहोमपशुहोमविधिवैयर्थ्यप्रसङ्गेन चानेकदर्शपूर्णमासातिपत्तिनिमित्तकप्रायश्चित्तवदेव पृथक्करणानुपपत्तेः । अत एव सर्वान् सायंहोमान् सायंकाले प्रातर्होमांश्च प्रातःकाले कुर्यादित्यपास्तम् । स्वकालक्रियमाणहोमात् पूर्वमेव अतिपन्नहोमानां कर्तव्यत्वात् । एवं च षोडशिहोमवति क्रतौ तस्य समयाध्युषितकालीनत्वेन अवभृथस्य रात्रावेव क्रियमाणत्वात् तस्य द्वितीयदिने उत्कर्षे प्रातर्होमस्यैव पूर्वोक्तविधया अनुष्ठानम्, अनेकहोमकालातिपत्तावपि तथैव । न च दर्शपूर्णमासयोः पौर्णमासोपक्रमयोरेव निष्ठितयोः फलसाधनत्ववत् सायमुपक्रमयोरेव सायप्रातर्होमाभ्यासयोः एकफलसाधनत्वस्य कल्पसूत्रेष्वभिधानात् षोडशिना सायंहोमे अनधिकारे कथं प्रातर्होमेऽप्यधिकार इति वाच्यम् । 'प्रातस्तु षोडशिनि' इति जैमिनिसूत्रकृद्वचनादेव सायमुपक्रमफलस्य नैयत्याभावप्रतीतेः । अत एव कृष्णाग्निन्याधानेऽपि यदि उदगयनीयायाः रात्रौ करणम्, तदा प्रातर्होमानुष्ठानं जैमिनिमते नानुपपन्नम् ।

मण्डन— 'होमाश्चेत् सायमादितः ।' १४.

शंकर— 'प्रकृतौ सायमादितः ।' १५.

● प्रतीची दिक् सायंकालीनाघ्र्यादौ ग्राह्या । वि. ३।४।६.

● प्रत्यक्षं अनुमानात् कल्पव्रतेत् । भा. ३।५। ८।२३. ● प्रत्यक्षमेव हि प्रत्यभिज्ञायते नान्यत् । ऋजु. पृ. २४७. ● प्रत्यक्षं च अनुमानात् बलीयः । भा. ३।८। १०।२१, ● प्रत्यक्षं चानुमानाद् बलीयः । आनुमानिकोऽस्य (रागस्य) सर्गानुमेन एकवाक्यभावः प्रत्यक्षस्तु चामनवचनेन । ४।३।९।२२, ● प्रत्यक्षं न व्यपदेश्यम् । १।१।५।५ पृ. ३४, ● प्रत्यक्षं परोक्षाद् बलीयः । ३। ६।३।१०. ● प्रत्यक्षं प्रमाणं लौकिकमेव । बाल. पृ. ८. ● प्रत्यक्षं वर्तमानकालाऽऽकलितसन्निहितदेशावस्थितार्थमानविषयम् । ऋजु पृ. ७३. ● प्रत्यक्षं वर्तमानमानविषयत्वात् धर्मस्य चातथात्वात् न धर्मे प्रमाणम् । नाप्यनुमानम् । वि. १।१।४. ● प्रत्यक्षं विद्यमानविषयम् । ऋजु. पृ. ६५. ● प्रत्यक्षं व्यभिचरति, शुक्तिका हि रजतवत् प्रकाशते यतः । तन्मूलत्वाच्चानुमानादीन्यपि । भा. १।१।५।५ पृ. २९. ● प्रत्यक्षं षड्विध चाक्षुष–श्रौत–त्वाच– घ्राणज– रासन– मानसभेदात् । बाल. पृ. ८. ● प्रत्यक्षं समाश्रितप्रामाण्यमिति प्रत्यक्षमेव दुर्बलं (अनुमानात्) मन्यामहे । बृहती पृ. २०४. ● प्रत्यक्षम् । 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्' सूत्रार्थः १।१।४।४। सतीन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धिर्जायते, तत् प्रत्यक्षम् । भा., तत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षम् । यद्विषयं ज्ञानम्, तेनैव सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत् प्रत्यक्षम् । इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः । प्रयत्नेनान्विच्छन्तो न चेद्दोषमवगच्छेमहि प्रमाणाभावात्, अदुष्टमिति मन्येमहि । इति वृत्तिकारमतम् । १।१।५।५ पृ. २६–२८, ● नहि प्रत्यक्षमनुपपन्नं नामास्ति । १।३।२।३ पृ. १८५, ● प्रत्यक्षोऽपि ('वायव्यं श्वेतमालभेत' इति) श्वेतशब्दः छागमेव परिच्छिन्द्यात्, नान्य पशुमिति । १०।२।३०।६९. ● प्रत्यक्षेण अनुमानं बाध्यते (अश्वत्थाद.) मृगतृष्णादिप्रत्ययाश्च । भा. ३।३।७।१४ पृ. ८५९. ● प्रत्यक्षेण अनुमानस्य उत्पत्तिप्रतिबन्धलक्षणो बाधो भवति । सु. पृ. १२७. ● प्रत्यक्षेण कार्यापत्तिः यथा 'नैवारश्चरुः' । अत्र विकारवद्भिनेन नीवाराणां चरुप्रकृतित्वोक्तेः प्रत्यक्षवद्धक्षविधिना प्रदेयप्रकृतित्वलक्षणव्रीहिकार्यापत्तिः । बाल. पृ. १३०. ● प्रत्यक्षेण कार्यापत्तिर्यथा 'नैवारश्चरुर्भवति' इति । व्रीहीणां कार्ये नीवारा वर्तन्ते । व्रीहयः पुरोडाशं निर्वर्तयन्ति, पुरोडाशो यागम् । एवं नीवाराश्चरुम्, चरुर्यागं इत्युभयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम् । टुप्. १०।४। १।१ पृ. १३०८. ● प्रत्यक्षेण प्रत्यक्षाभासो बाध्यते ।

अयं नियः प्रतवाधः । बाल. पृ. १३१. * प्रत्यक्षैः श्रुत्यादिभिः अविदेशप्राप्ताः श्रुत्यादयः बाध्यन्ते । वा. ३।३।७।१४ पृ. ८४१. * प्रत्यक्षस्य धर्मप्रमापकत्वाभावः । १।१।४. * प्रत्यक्षे इन्द्रियस्य करणत्वं तत्सम्बन्धस्य च व्यापारत्वम् । मणि. पृ. १९.

¶ प्रत्यक्षे किमनुमानमिति न्यायः । प्रत्यक्षानुमानयोश्चाविरोधेऽस्मिन्प्रवृत्तिरूपत्वात् प्रत्यक्षं बलीय इति । साहस्री. १६२.

* प्रत्यक्षे लभ्यमाने न युक्तमानुमानिककल्पनम् । भा २।१।३।६ पृ. ४८८ * प्रत्यक्षया विरुद्धया स्मृत्या अनुमिता श्रुतिर्बाध्यते । अत एवाह ' आचारात्तु स्मृतिं ज्ञात्वा स्मृतेश्च श्रुतिकल्पनम् । तेन द्व्यन्तरितं तेषां प्रामाण्यं विप्रकृष्यते ॥ ' वि. वार्तिकमतेन १।३।६ वर्णकं २.

* प्रत्यक्षानुमानाभ्यां यत् कर्तव्यं निर्णीयते, तत् आरब्धं तत् समापनीयमेवेति न नियमः । असमाप्ते ह्यनिष्टप्रसङ्गे तु तत् समापनीयमेव इति तु प्रत्यक्षानुमानाभ्यामेव सिध्यति । के. (६।२।८). * प्रत्यक्षानुमानयोरविषयो धर्मः । वि. १।१।२. * प्रत्यक्षानुमानयोश्च प्रत्यक्षं बलीयः । बृहती. पृ. २१२. * प्रत्यक्षानुमानयोश्च शीघ्रप्रवृत्तत्वात् प्रत्यक्षं बलीय इति सकलवादिनो विदन् । अनुमाने तु व्याप्तिग्रहणस्मरणपक्षधर्मताऽध्यवसानलक्षणा सामग्री बहुतरविलम्बसम्पादनीया । प्रत्यक्षे तु नार्थान्तरपरिग्रहस्यापेक्षा वा विद्यते । ऋजु. पृ. २१२. * प्रत्यक्षानुमानयोः शीघ्रमन्थरगामित्वकृतो बाध्यबाधकभावः । सोम. ७।८।२.

* प्रत्यक्षानुमानातिरिक्तं प्रमाणं शब्दाख्यं नेष्टम् । रत्नाकरः, अनुमानं श्लो. १५५.

* प्रत्यक्षावगतिर्नास्ति अदृष्टो हेतुः । बृहती. पृ. १३०.

* प्रत्यक्षादि धर्मे न प्रमाणम् । भा. १।१।४।८. * प्रत्यक्षादीनि पञ्चलक्षणोक्तानि पञ्च प्रमाणानि । वा. २।१।२।५ पृ. ३९०. * प्रत्यक्षादीनामन्यतमं यत्र भस्यापूर्वस्य नेयः अनन्यत्वेनैव न प्रमाणम्, किन्तु भ्रान्तिरेव प्रमाणम् । भा. ७।१।१।१ पृ. १५२४.

* प्रत्यक्षादावपि द्वयी एव गतिः प्रमाणस्वरूप प्रमाणाभासं च । न तत्र यत् प्रमाणं तत्कदाचिदपि प्रमाणाभासो भवति । योऽपि तदाभासः सोऽपि नैव प्रमाणं भवति । नित्यं च प्रमाणाभासबाधः, न प्रमाणस्य । वा. ३।३।७।१४ पृ. ८२९.

* प्रत्यक्षाद्यविषये शब्द एव प्रमाणम् । ' न च अतिक्रान्तप्रत्यक्षविषये अर्थे शब्दमन्तरेण परिच्छेदोऽवकल्पते ' । भा. ३।३।७।१४ पृ. ८४४-४५.

* प्रत्यक्षादिषट्केन (प्रत्यक्षानुमानोपमानशब्दार्थापत्तिरूपेण) प्रत्यक्षादिषट्कावगतेन वा शब्देन दर्शपूर्णमासयोः सिद्धमुपकारं स्वपदस्ववाक्यस्वप्रकरणप्रकरणान्तरेषु नोपलभामहे । वा. ३।३।४।११ पृ. ८३८.

* प्रकरणादङ्गत्वं स्यात् वाक्यसंयोगाद्वा प्रत्यक्षोपकारदर्शनाद्वा । भा. १०।६।१०।३०.

¶ प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे । ३।५।११।३३ ॥

ज्योतिष्टोमे श्रूयते ' प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणाम् ' इति । तत्रैष संशयः किं चमसेषु होमाभिषवकर्तारो वषट्कर्तारश्च भक्षयेयुः उत न इति । एवं प्रमादाद्यादिरूपेषु निमित्तेषु सत्सु नैमित्तिको भक्षो भवतीति निरूप्य इदानीमेतेषां निमित्तानां यत्र समवायो भवति, तत्र नैमित्तिको भक्षः किं विकल्पेन स्यात् अथवा समुच्चयेन इति प्रसङ्गान्निरूप्यते । अत्राय पूर्वपक्षिणोऽभिसंधिः, नैमित्तिके भक्षणे विकल्प इति । कुतः ? एकार्थत्वाद्भक्षणानाम् । अवशिष्टस्य द्रव्यस्य प्रतिपत्तिकरः संस्कारः । स च सर्वेषामविशिष्ट इत्यतो विकल्पेन भक्षः स्यादिति । एवं प्राप्ते, उच्यते । न तावद्विकल्पः संभवति, तस्याष्टदोषदुष्टत्वेनान्याय्यत्वात् । समुच्चयस्तर्हि भक्षणस्य भविष्यतीति चेत्, सोऽपि न संभवति, एकार्थत्वात् । एकेन निमित्तेन भक्षणरूपे कृते सति इतरस्य निराकाङ्क्षत्वात् । अतः पारिशेष्याद्बाधोऽभ्युपेतव्यः ।

तत्र किं समाख्यानिमित्तो भक्षः इतरयोः वषट्कारहोमाभिषवनिमित्तयोः भक्षयोः बाधकः स्यात् इतरौ वा बाधकौ इति संशये, समाख्यानिमित्त इतरयोर्बाधकः स्यात् । कुतः ? ' प्रैतु होतुश्चमसः ' इति विशेषनिर-

त्वात्, इतरयोश्च सामान्यविषयत्वात्। सामान्याच्च विशेषो बलवानिति स एव तयोर्बाधक इति। ननु इतरयोः प्रत्यक्षोपदिष्टत्वेन बलीयस्त्वात् अस्य च समाख्यया कल्प्यमानत्वेन दौर्बल्यात्ताविव बाधकौ स्यातामिति। उच्यते। प्रत्यक्षोपदिष्टत्वेन बलीयस्त्वेऽप्यनयोः, तथापि 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन समाख्यानिमित्तस्यैव भक्षणस्य बलीयस्त्वात् स एवैतयोर्बाधकः स्यात्। किञ्च व्यवस्थ चमसान् विहायान्यत्र निरवकाशत्वादितरयोश्च ग्रहेषु सावकाशत्वात् स एव बलीयानिति। तस्मात् समस्तेषु चमसिनो भक्षयेयुरिति। एवं प्राप्ते, अभिधीयते।

स्याद्वा कारणभावादनिर्देशश्चमसिनां कर्तुस्तद्वचनत्वात्। ३४॥

चमसेषु वषट्कर्तारो होमाभिषवकर्तारश्च भक्षयेयुः, भक्षणनिमित्तसद्भावात्। तथाहि 'वषट्काराच्च भक्षयेत्।' ३।५।१०।३१ इत्यत्र वषट्कारस्य, 'होमाभिषवाभ्यां च।' ३।५।११।३२ इत्यत्र होमाभिषवयोश्च धनुदितयोर्भक्षणनिमित्तत्वमुक्तम्। तच्च निमित्तद्वयं चमसेष्वपि अस्ति। अतो निमित्तसद्भावात् चमसेष्वपि वषट्कर्तृणां च नैमित्तिको भक्षः स्यादिति। किञ्च निवर्तकशास्त्रादर्शनात् तस्य निवृत्तिर्भवति। न हि किञ्चित् चमसेषु वषट्काराद्धोमाभिषवनिमित्तस्य भक्षस्य निवर्तकशास्त्रमस्ति। 'प्रैतु होतुश्चमसः' इत्येतदेव निवर्तकं भविष्यतीति चेत्, न, समाख्यानिमित्तभक्षणमात्रस्य एतस्य व्यापारो नान्यनिवृत्तौ तात्पर्यमस्ति, त्रिदोषदुष्टपरिसङ्ख्याप्रसङ्गात्। ननु 'प्रैतु होतुश्चमसः' इति विशेषविषयत्वेन अङ्गत्वादितरयोश्च सामान्यविषयत्वात् समाख्यानिमित्तको भक्षो बलवानित्युक्तम्। नैवम्, 'वषट्कर्तुः प्रथमभक्षः' इत्यस्यापि विशेषविषयकत्वात्। तथाहि, न तावद्वषट्कर्तृसामान्यं किञ्चिदस्ति, वषट्कर्तृशब्दस्य कृदन्तत्वेन यौगिकत्वात् यौगिकानां च सन्निहितविशेषवाचित्वात्।, अतो वषट्कर्तृविशेषनिमित्तत्वेन प्राथम्यविशिष्टं नैमित्तिकं भक्षणं विधीयते। तदपि विशेषवचनमेवेति समाख्यानिमित्तो भक्षो विशेषविहितत्वात् इतरयोर्बाधक इत्यस्ति। किञ्च असति संभवे सर्वेन बाधोऽङ्गीक्रियते। तेन चात्रास्मिन् नैमित्तिके भक्षे कृते इतरयोरसंभवोऽस्ति। सोमस्य बाहुल्यत्वेन शेषसद्भावात्। विशेषतश्चित्वदर्शनात् 'अल्पं भक्षयेत्' इति वचनाच्च। अतः प्रतिपत्त्यपेक्षाया सत्या यावन्तो नैमित्तिका भक्षास्तेषां प्रतिपत्तिः कर्तव्येति। तस्मात्त्रयाणां इति सिद्धम्।

प्रयोजनम्—पूर्वपक्षे चमसेषु चमसिभिरेव भक्षितव्यम्। सिद्धान्ते तु वषट्काराद्धोमाभिषवकर्तृभिरपीति। सूत्रं तु स्याद्वा चमसेष्वपि होमाभिषवादिनिमित्तोऽपि भक्षः कारणस्य वचनस्य भावात्। अनिर्देशात्, न हि चमसिनामेव चमसेषु निर्देशः अन्येषां निषेध, चमसिभक्षणकर्तव्यतामात्रविधायकत्वात्, समाख्यावचनिकस्येति। सोता.

प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषे। ३।५।१२।३३॥

सोमचमसभक्षे समाख्या वषट्कारः होमाभिषवश्चाहारश्चेति निमित्तानि। तत्र निमित्तसन्निपाते विकल्पो वा कस्य विघातो वा समुच्चयो वा इति सन्देहे न समुच्चयः इति पूर्वपक्षप्रतिपादकमिदं सूत्रम्। चमसानां चमसिनः प्रति 'प्रैतु होतुश्चमसः' इत्येवमादिभिः विशेषवचनैः प्रत्यक्षतः विशेषतः अदेशात् चमसिनामेव विशेषविहित एव भक्षः स्यात्, न चमसिनां सामान्येनोपदिष्टो भक्षः स्यात्। अव्यक्तः सामान्येनोपदिष्टस्तु भक्षः शेषे चमसिव्यतिरिक्ते एव स्यात्। तथा च न निमित्तसमुच्चयः। एवं च ग्रहेषु वषट्कारेण होमाभिषवाभ्यां च प्राप्तयोर्भक्षयोः तुल्यत्वात् विकल्पः स्यात्। समाख्यायास्तु ग्रहे निरवकाशत्वेन मन्दत्वात् तया इतरनिमित्तबाधः इति पूर्वः पक्षः।

स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात्। ३४॥

पूर्वपक्षस्य निषेधार्थः सूत्रे वाशब्दः। न विकल्पो न वा बाध, किन्तु समुच्चय एव। वषट्कर्तुः होमाभिषवकर्तुश्च स्यादेव चमसेषु भक्षः। कारणभावात्, वषट्कारादेः कारणस्य भक्षनिमित्तस्य भावात् नियमात्वात्। वषट्कारादेरपि प्रत्यक्षोपदेशेनैव प्राप्तिः।

समाख्यायाऽपि निरवकाशत्वात् प्रबलेन तस्मात् समुच्चयः । 'प्रेद्धातृणा' इत्यादेस्तु तद्वचनत्वात् उद्गात्रादेः भक्षयाचकत्वात् तेन वचनेन चमसिनां कर्तुं, होतृध्वर्य्वादेः अनिर्देशः न निर्देशः, न निष्कर्षः, न बाधः, एकस्य वाक्यस्य विधिनिषेधोभयपरत्वाभावात् ।

चमसे चान्यदर्शनात् । ३५ ॥

सिद्धान्ते हेत्वन्तरोपन्यासार्थं सूत्रमिदम् । 'चमसाश्चमसाध्वर्यवे प्रयच्छति, तान् स वषट्कर्त्रे हरति' इति वचने, चमसे अन्येषां चमसिनां दर्शनात् । एकस्य हि वषट्कर्तुः एक एव चमस उपहर्तव्यः । अत्र अनेके चमसा उपहर्तव्या उक्ताः । तस्मात् चमसेषु अनेके भक्षयितार इति गम्यते । तेन भक्षनिमित्तानां समुच्चय एव । अन्यदर्शनात् इत्यत्र अन्येषां दर्शनात् इति समासः । चकारो हेत्वन्तरार्थः । के.

* प्रत्यक्षोपदेशस्य श्रीमदुद्गिजनकवता कल्प्यातिदेशात् प्रबलत्वम् । वि. २।३।८.

* प्रत्यक्षज्ञानपरिच्छेदः । न तावत् 'इन्द्रियजन्यं ज्ञानं प्रत्यक्षम्' इति लक्षणम् । ज्ञानमात्रस्य मनोजन्यत्वात् । अतः 'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्' इति सूत्रकार. । न चेश्वरप्रत्यक्षे अव्याप्तिः ईश्वरज्ञानस्य अनुमितिविलक्षणत्ववत् प्रत्यक्षविलक्षणत्वात् इति जीर्णाः ।

यद्वा ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् । अनुमित्युपमितिशाब्दबोधार्थापत्तिस्मृतीनां ज्ञानकरणकत्वात् । न च सविकल्पकप्रत्यक्षे विशिष्टवैशिष्ट्यप्रत्यक्षे चाव्याप्तिः, तयोर्निर्विकल्पादिज्ञानकरणकत्वात् इति वाच्यम् । व्यापारवदसाधारणकारणस्य करणतया तज्जन्यत्वे सति तज्जन्यजनकस्य व्यापारतया च निर्विकल्पकादेः कारणत्वेऽपि अकरणत्वात् ।

जन्यज्ञानजन्यमात्रवृत्तिजातिशून्यज्ञानत्वं वा । सर्वत्र प्रत्यक्षे इन्द्रियस्य करणत्वात् तत्सम्बन्धस्य व्यापारत्वाच्च तादृशानामनुमितित्वादीनां प्रत्यक्षे अभावात् लक्षणसंगतिः । सविकल्पकत्वादिकं तु न जातिः । तच्च प्रत्यक्षं निर्विकल्पकं सविकल्पकं चेति द्वेधा । तत्र प्रत्यक्षमात्रे महत्त्वं हेतुः । तच्च द्रव्यप्रत्यक्षे समवायेन, गुणक्रियाजातिप्रत्यक्षे समवायघटितसामानाधिकरण्येन, गुणक्रियागतजातिप्रत्यक्षे तु एकार्थसमवेतसमवायेन । चाक्षुषे च उद्भूतरूपम्, उद्भूतानभिभूतरूपालोकसंयोगश्च हेतुः । 'कालादिचाक्षुषे महत्त्वोद्भूतरूपादीनां न हेतुता' इति केचित् । स्पार्शने च उद्भूतस्पर्शः, न तु रूपमपि । तेन वायुरपि त्वाचप्रत्यक्ष । एवं च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वं न उद्भूतस्पर्शवत्ताऽवच्छेदकम्, किन्तु चाक्षुषत्वादिजातिरेव इति लाघवम् । 'मानसेऽपि महत्त्वं हेतुः' इति केचित् । नेत्यन्ये । केचित्तु क्रिया न प्रत्यक्षा, किन्तु विभागोत्तरसंयोगाभ्यामनुमेया । अतस्तत्प्रत्यक्षे महत्त्वस्य न हेतुता इत्याहुः । मणि. पृ. १९-२१.

* प्रत्यक्षतो दृष्टसम्बन्धमनुमानं यथा- धूमाकृतिदर्शनात् अग्न्याकृतिविज्ञानं इति । भा. १।१।५।२ पृ. ३६ । यत्र विशेषयोरेव प्रत्यक्षेण सम्बन्धो गृह्यते, तत् विशेषविषयं प्रत्यक्षतो दृष्टसम्बन्धं इत्युच्यते । वैद्यनाथी.

* प्रत्यक्षपूर्वकत्वाच्च अनुमानोपमानार्थापत्तीनां अकारणत्वम् ( धर्मे ) । भा. १।१।४।४.

* प्रत्यक्षब्राह्मणस्त्वविष्टकानां इष्टकावाचिश्रुतशब्दविनियुक्तमन्त्रोपधेयत्वं इत्युक्तमेव भूमाधिकरणे ( १।४।१७ ) । भाट्ट. ५।३।७.

* प्रत्यक्षलक्षणम् । साक्षात् प्रतीतिः प्रत्यक्षम् । साक्षात्प्रतीतिः स्वरूपप्रतीतिः । स्वस्यैव रूपं स्वरूपं असाधारणरूपमित्यर्थः । यस्य वस्तुनो यदसाधारणं स्वरूपम्, तेनैव रूपेण या व्यवहारयति, सा साक्षात्प्रतीतिः । जात्यादिविशिष्टस्य सविकल्पकज्ञानस्य साधारणाकारविषयत्वात् प्रत्यक्षत्वं न स्यादिति चेत् न, असाधारणाकारेणापि विषयीकरणात् । असाधारणाकारस्यान्यदोऽत्र लक्षणम्, न साधारणाकारव्यावृत्तिरपि । अनुमाने तु साधारणभूतव्यापकाकारेणैव सम्बन्धप्रतीतेर्न साक्षात्त्वम् । यद्वा अव्यवहितप्रतीतिः साक्षात्प्रतीतिः । विशिष्टज्ञानस्य विशेषणज्ञानव्यवहितत्वात् प्रत्यभिज्ञानस्य पूर्वज्ञानव्यवहितत्वात् तयोः प्रत्यक्षत्वं न स्यादिति चेन्न, अव्यवहितत्वं नाम स्वविषयानन्तर्गतज्ञानान्तराव्यवहितत्वं अभिप्रेतम्, तेन समञ्जसं लक्षणम् । एवं वा—साक्षात्त्वं स्वकालकलितवस्तुसत्तावबोधकत्वम्, यत्सत्तैव ज्ञानं तत्कालसंबन्धिवस्तु-

विषयमित्यर्थः। प्रत्यभिज्ञाया तु स्वकालसम्बन्धिवस्तुविषय-त्वमप्यस्तीति न दोषः। वर्तमानानामप्यनुमानस्य प्रत्यक्षत्वं स्यादिति चेत्, न तस्यापि स्वकालकलितत्वम्, किन्तु व्याप्तिकालकलितत्वमेव। अनुमानस्य तु व्याप्तिकाल-कल्पिते शक्तिः कृता, इतरथा भूतानुमाने भविष्यदनुमाने वा शक्त्यन्तरकल्पना स्यादिति न दोषः। अतः सिद्धं साक्षात्प्रतीतिः प्रत्यक्षमिति। प्रवि. पृ. २६.

* प्रत्यक्षवचनेन एकस्मिन् काले साङ्गाना सर्वेषा प्रयोगविधिना प्रधानसाहित्यवत् अङ्गेष्वपि साहित्याव-गमात् एकैकाङ्गेन सर्वप्रधानाना युगपदुपकर्तव्यमित्यर्था-वगम, इति पदार्थानुसमयन्यायः। उदाहरणं प्राजापत्य पशूनामेकमुपाकरणाख्यमङ्गं सर्वपशूना कृत्वा नियोजन कार्यं इति पदार्थानुसमयः। भाट्ट. ५।२।१. * प्रत्यक्ष-वचनात् चोदको दुर्बलः। के. * प्रत्यक्षवचने सति अन्यथाऽनुपपत्तिपक्षे सति अर्थापत्तिलभ्यश्रुत्य परिग्रहः। वा २।१।२।४ पृ. ५८९.

* प्रत्यक्षविधिः ( पुनः ) अष्टविधः। १ धात्वर्थ-मात्रविधि , २ सगुणधात्वर्थविधिः , ३ किञ्चिदुद्देश्यक-धात्वर्थविधि. , ४ किञ्चिदुद्देश्यकविशिष्टधात्वर्थविधिः , ५. धात्वर्थोद्देश्यक अन्यविधि , ६ धात्वर्थे अन्ययोः सम्बन्धविधि. , ७ धात्वर्थानुरञ्जनप्रत्ययेन अन्ययोः सम्बन्ध-विधि , ८ धात्वर्थं मुक्त्वा अन्ययोरेव सम्बन्धविधिश्चेति। बाल पृ. २२ * प्रत्यक्षविधि भूयस्त्वात् बलवान्। प्रत्यक्षेण पुरोडाशतन्त्रमध्ये विधानेन बहून्यपि देवसुवां हवींषि पुरोडाशधर्म. प्रसङ्गसिद्धानि। वि. १२।३।२.

* 'प्रत्यक्षविधिसद्भावात् लभ्यते नानुमानिकम्' ( 'कः' इति आनन्दाश्रमीये पाठ.। वा २।३।१।४ पृ ५८९ ) इति न्यायविरोधात् 'सोमेन यजेत' इति प्रत्यक्षयागविधौ सति ऐन्द्रवायवादिवाक्येषु द्रव्य-देवतासम्बन्धानुमितस्य यागस्य विधान न सम्भवति। तौवा. २।२।६।१७ पृ. २६८.

* प्रत्यक्षविरुद्धं अनुमान नोदेति स्वकार्यं वा (न) साधयति। भा. १।१।६।२०, * प्रत्यक्षविरुद्धम-प्रमाणम्। १।२।१।२ पृ. १०९.



* प्रत्यक्षश्रवणं विशेषवचनेन परित्यक्तुं न शक्यम्। भा. १०।५।१३।५४ वर्णक २.

* प्रत्यक्षश्रुतं ज्योतिष्टोमे कर्तुरेकत्वं न सामर्थ्येन बाध्येत। भा. ३।३।९।१९, * प्रत्यक्षश्रुताः (धर्माः) न शक्या बाधितुम्। ३।३।९।१९, * प्रत्यक्षश्रुतेन तुल्यकारणेन आनुमानिक बाध्यते। १०।७।११।३७, * प्रत्यक्षश्रुतेन यस्य हि चोदकप्राप्तस्य कार्यमभिनिर्वर्त्यते तत् तेन निवर्त्यताम्। १०।२।२८।६७ ( ६८ ), * प्रत्यक्षश्रुतात् आनुमानिक दुर्बलम्। ६।१।७।३७.

* प्रत्यक्षसंयोगः ( वाक्यबोधितः ) प्रकरणात् बल-वान्। भा. ४।३।१३।३५.

## प्रत्यक्षसूत्रम् ॥

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्। १।१।४।४ ॥

भाष्यम्— इदं परीक्ष्यते। प्रत्यक्षं तावत् ( धर्मे ) अनिमित्तम्। किं कारणम्? एवं लक्षणकं हि तत् 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म, तत् प्रत्यक्षम्' ( इति )। सति इन्द्रियार्थसम्बन्धे या पुरुषस्य बुद्धि-र्जायते, तत् प्रत्यक्षम्। भविष्यश्च एषोऽर्थो न ज्ञानकाले-ऽस्तीति। सतश्च एतदुपलम्भनम्, नासतः। अतः प्रत्यक्षमनिमित्तम्। बुद्धिर्वा जन्म वा सन्निकर्षो वेति नैषा कस्यचिदवधारणार्थमेतत् सूत्रम्। सति इन्द्रियार्थ-सम्प्रयोगे नासति, इत्येतावत् अवधार्यते। अनेकस्मिन् अव-धार्यमाणे भिद्येत वाक्यम्। प्रत्यक्षपूर्वकत्वाच्च अनु-मानोपमानार्थापत्तीनामपि अकारणत्वमिति। ( अस्य सूत्रस्य वृत्तिकारमतेनार्थस्तु वृत्तिग्रन्थे भविष्यति )।

श्लोकवार्तिकम्—(भवदासेन एतत् सूत्र द्विधा कृत्वा 'सत्सम्प्रयोगे' इत्येवमादि 'तत्प्रत्यक्षं' इत्येवमन्तं प्रत्यक्ष-लक्षणपरम्। 'अनिमित्तम्' इत्यादि च तस्य धर्मं प्रति अनिमित्तत्वपरं व्याख्यातम्। तदुपन्यस्य दूषयति— ) 'वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम्। तेन सूत्रस्य संबन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥ लक्षणस्याभिधानं तु केनांशेनोपयुज्यते। किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥ न

स्यादप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु । शक्यते ऽन्तर्गतिर्वक्तुं न च लक्षणतुल्यता ॥ ३ ॥ न चापि सिद्धिरेषा स्यादर्थात् प्रत्यक्षलक्षणात् । न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥ प्रत्यक्षलक्षणोक्तिश्च नानुमानादिलक्षणात् । विना न सिध्यतीत्येवमर्थाक्षेपो न युज्यते ॥ ५ ॥ तदेव त्वपूर्वकत्वे धीर्न च तल्लक्षणाद् भवेत् । स्तुत्येवं वाऽनुमानादि किं न स्यात् तदपूर्वकम् ॥ ६ ॥ न च लक्षणभेदस्य स्वरूपे यत्तयोरपि । प्रत्यक्षलक्षणादेषा कथञ्चिदवधारणा ॥ ७ ॥ प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते । तेनान्यपरिसंख्यार्थं सूत्रमूढेन चोच्यते ॥ ८ ॥ न ह्येकलक्षणेऽन्येषु बुद्धिपूर्वं कथञ्चन । सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥ न चाप्येतेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् । तदाभासेऽपि तुल्यत्वात् स्वप्नज्ञानैकवर्जनात् ॥ १० ॥ तद्धीन्द्रियार्थसम्बन्धव्यापारेण विना भवेत् । केनचित् सम्प्रयोगे तु भ्रान्त्यादि स्यान्नियोगतः ॥ ११ ॥ प्रायेणान्येन वेत्येतत् कृतं नैव विशेषणम् । सम्प्रयोगस्य येन स्याद् विशेषो वक्ष्यमाणवत् ( वृत्तिकारमते ) ॥ १२ ॥ असामर्थ्यं च मत्वाऽस्य वृत्तिकारेण लक्षणे । 'सत्सम्प्रयोग' इत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥ तेनान्येनापि सम्प्रयोगे चक्षुरादेर्यदुत्थितम् । विषयान्तरविज्ञानं तत् प्रत्यक्षं प्रसज्यते ॥ १४ ॥ सत्सम्प्रयोगनिर्देशो व्यर्थ एवैतदेव हि । प्रतिपाद्यं परस्यापि लक्षणासिद्धिरेव च ॥ १५ ॥ स्वप्नादीनां निवृत्तिर्वा फलं तस्य भविष्यति । तस्माद् विध्यनुवादित्वं नानुक्ते लक्षणे भवेत् ॥ १६ ॥ तेन नैषा वचोव्यक्तिर्यत् सतीन्द्रियसङ्गमे । विज्ञानं ज्ञायते ( जायते ) तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥ प्रत्यक्षं यज्जने सिद्धम्, तस्यैव धर्मकत्वं च । विद्यमानोपलम्भत्वम्, तेन धर्मेऽनिमित्तता ॥ १८ ॥

( ग्रन्थस्य वार्तिकस्य विस्तृतत्वात् एतावतैव विरम्यते )।

बृहती— अथ कस्मादनुमानादेरनिमित्तत्वम् । अनुमानादीनां हि निमित्तग्रहणपूर्वकं स्वार्थे प्रामाण्यम् । निमित्तं चात्र प्रत्यक्षग्राह्यमेव वर्णादि । तस्मात्तदपि अप्रमाणम् ।

शा— प्रत्यक्षं तावत् इन्द्रियार्थसम्प्रयोगजत्वेन विद्यमानोपलम्भकत्वाद् भविष्यति धर्मे न निमित्तम् ।

वि— 'प्रत्यक्षादिभिरन्यैर्न गम्यते विधिनैव वा ।, अक्षादीनां प्रमाणत्वान्मेयधर्मावभासिता ॥ , वर्तमानैकविषयमक्षं धर्मस्तु भाव्यतः । अक्षमूलोऽनुमानादिस्तेन विषयैकमेयता ॥ ' तस्माद् विधिनैव धर्मो गम्यते ।

भाट्ट— ( तृतीयचतुर्थसूत्राभ्यामेकमेवाधिकरणम् ) सांख्यमते बुद्धिविशेषरूपौ धर्माधर्मौ । तार्किकमते तु अदृष्टरूपौ । अत तयोश्चाक्षुषत्वविषयत्वेऽपि अस्मन्मते दध्यादिद्रव्यगुणक्रियारूपत्वेन अलौकिकत्वाभावेन सम्भवति प्रत्यक्षादिप्रमाणविषयत्वम् । इति प्राप्ते न तावत् दध्यादीनां स्वरूपेण धर्मत्वम् । अपितु फलसाधनत्वाऽऽख्येनैवेदकशक्तिमत्त्वेन । तादृशं न [illegible] प्रत्यक्षयोग्यमेव, प्रत्यक्षस्य इन्द्रियसन्निकृष्टवर्तमानार्थविषयकत्वनियमात् । अत एव नानुमानादीनामपि तत्र प्रवृत्तिः, तेषां प्रत्यक्षपूर्वकत्वात् । नापि योगिनां प्रत्यक्षे तौ विषयौ, तेषां मनसीकारात् । एतेन ईश्वरप्रत्यक्षमपि व्याख्यातम् । इन्द्रियार्थसन्निकर्षाजन्यत्वेन भगवत्प्रमितेरलौकिकत्वाद्य । तस्मात् चोदनैव धर्माधर्मयोः प्रमाणं नान्यत् ।

मण्डन— ' अथाप्रामाण्यसिद्धौ हि चोदनैवेति सिध्यति । तेन प्रत्यक्षसूत्रे हि धर्मेऽन्यत् प्रतिषिध्यते ॥'

शङ्कर— ' प्रत्यक्षलक्षणोक्तेश्च ।'

● प्रत्यक्षसूत्रे ' सत्सम्प्रयोगे० ' इति ' यो धर्मस्तत्र चोदनैव प्रमाणम् ' इति नियमफलमुपपादयितुम् । तत्र श्रुत्या प्रत्यक्षमात्रस्य अप्रामाण्यमुक्तम्, अर्थादितरेषाम् । तदुक्तं भाष्ये ' प्रत्यक्षपूर्वकत्वाच्चानुमानोपमानार्थापत्तीनामपि अकारणत्वम् ' इति । अत एव च बुद्धादिपुरुषवचननिरासनियाऽपि सिद्धा इति च । अत्र सर्वज्ञनिरासः प्रत्यक्षनिरासायैवेति । बाल पृ ५ ● नहि गाक्यादि प्रत्यानां वेदमूलत्वं क्वचिन्निराकृतम्, प्रत्यक्षसूत्रे प्रत्यक्षमूलत्वाङ्गीकारेण धर्मे प्रामाण्यस्य निराकरणात् । पूर्वपक्ष । कौ १।३।२।४ पृ २७ ■ यदि अत्र विशेषा गोत्वादयः अर्थे न विद्यन्ते, तर्हि गवादिशब्द

स्यैव स्वानुकूलबुद्धिजनकत्वेन अर्थे अध्यासः स्यात्, तेषां तु विद्यमानानामेव गवादिशब्दैः निष्कर्षमात्रं क्रियते इति अनन्तधर्मके धर्मिणि एकधर्मावधारणे शब्दः अभ्युपायमात्रं स्वाकाराध्यारोपकारणं इति प्रत्यक्षसूत्रे अभिहितम् । सु. पृ. ४०९.

● प्रत्यगाशीर्मन्त्रेषु क्रियमाणानुवादिषु 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादिषु श्रुतं फलं यजमानम् । वि. ३।८।१४.

● प्रत्यधिष्ठानं नानैवेन्द्रियम् । भाट्ट. ९।३।११.

● प्रत्यभिघारणं अवदानधर्मः । पुरोडाशादौ यतः अवत्तं तत्राज्यप्रक्षेपः प्रत्यभिघारणं नाम । के. ● प्रत्यभिघारणं पात्रेषु सर्वेषु अङ्गेषु । संकर्ष. २।२।१७. मीको. पृ. १५९ 'अङ्गेषु पात्रेषु ०' इत्यत्र द्रष्टव्यम् ।

● प्रत्यभिज्ञा । अन्यत्वावगमपूर्वकं हि यत्र अभेदज्ञानं तत्र प्रत्यभिज्ञा भवति । अन्यत्वानवगमे तु भेदाग्रहणनिबन्धन एव एकाध्यवसायभ्रमः । ऋजु. पृ. १९१. ● प्रत्यभिज्ञैव हि अभिप्रायदर्शनं इत्युच्यते, न पुनरन्यत् । बृहती. पृ. २३९. ● प्रत्यभिज्ञा । गृहीते हि वस्तुनि संस्कारोद्बोधे सति प्रत्यभिज्ञा । ऋजु. पृ. २१८. ● प्रत्यभिज्ञा तु 'तदेवेदम्' इति प्रसिद्धा लोके । बृहती. पृ. २४७, ● प्रत्यभिज्ञा नाप्यन्यत्रेऽर्थे प्राप्नोति । पृ. २४७. ● प्रत्यभिज्ञा । न चानुमेयेऽर्थे प्रत्यभिज्ञाऽस्ति, स्वरूपाग्रहणात् । यस्य हि स्वरूपं स्वरूपेण गृह्यते तत्र भवति प्रत्यभिज्ञा । न च नित्यानुमेयानां स्वरूपग्रहणमस्ति । ऋजु. पृ. २४६, ● प्रत्यभिज्ञया च विना कालान्तरावस्थितिनिश्चयः । पृ. २४१.

● प्रत्यभिज्ञाबलेन अनित्यत्वकवैधर्म्यानुमानं बाध्यते । ऋजु. पृ. २०८.

● प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति । बृहती. पृ. २२९.

● प्रत्ययः । अनुष्ठानभेदे यागपदस्य एव प्रत्ययः 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेन भावनायाऽन्वितार्थे तत्संबद्धानि कारकाणि उपसर्पन्ति । तत्र यानि एकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्यादीनि, तानि विशिष्टभावनाविधिन्यायेनैव तत्परत्वेन सर्वाणि विधीयन्ते इति प्राप्तायामपि भावनायां अनेकार्थविध्यनुपपत्तिः । यदा तु अनेकपदोपात्तानेककारकोपनिपातो भवति, तदा कारकाणां परस्परसंबन्धाभावात् तत्तत्पदेष्वपि अर्थसंबध्यमानेषु यदि एकत्र विधिर्गच्छति, तदा नेतरत्र गतो भवति । एवमितरत्रगमनेऽपि अन्यागमनानुपपत्तिरसंबन्धात् । एवं च न भावनावत् एकेन विहितेन इतरदर्थादाक्षेप्तुं शक्यते । ■ अर्थैकत्वविध्यन्तरप्रसक्तौ असत्यां एकात्मकः श्रौतो विधिः एकशेषस्वीयमाणो यत्रापि अन्यत्राप्यस्तीति कल्प्यते, तत् नावृत्त्युच्चारणादृते सिध्यति, इति पौरुषेयः अनेकोच्चारणप्रसङ्गः । वा. २।२।३।६ पृ. ४८६. ● प्रत्ययः अर्थालम्बनः । न (बौद्धवत्) निरालम्बनः प्रत्ययः । भा. ३।१।५।५ पृ. ३५. ● प्रत्यय एव (लिङ्) विध्यभिधानेरतात् विध्युद्देशः । वा. १।३।१।७ पृ. १२०. ● प्रत्ययः क्रियां विधत्ते । टुप्. १०।३।१७।६३ पृ. १८९८. ■ 'प्रत्ययश्च यथा भक्त्या विधत्ते धातुगोचरे । स्वपदार्थे श्रुते शीघ्रं, न नामार्थे तथा श्रुते ॥' वा. ३।१।४।१४ पृ. ७१०. ● प्रत्ययः । न च एकः प्रत्ययः सकृदुच्चरितः शक्नोति गुणत्वप्रधानत्वे युगपदभिधातुम् । ... सकृदुच्चरितस्यापि प्रत्ययस्य अनिरुद्धानेकभावनाकर्तृसंख्योपग्रहविशेषाद्यर्थवाचित्वाभ्युपगमेन, अनेकार्थोक्तत्वशक्तेः विरोधनिबन्धनत्वावसायात् कर्तुश्च गुणप्रधानत्वयोर्भिन्नविषयत्वेनाविरोधाच्च प्रत्ययस्योभयरूपोक्तशक्त्यात्मको विप्रतिषेधः । ह्रस्वत्वदीर्घत्ववत् गुणप्रधानत्वयोः आपेक्षिकत्वेन शुक्लत्वकृष्णत्ववत् स्वभावतो विरोधाभावात् आश्रयैक्यमात्रेण विरोधायोग. । सु. पृ. १३८३, ● प्रत्ययो निर्विषयो नास्ति । पृ. १०. ● प्रत्यय. पूर्वं विशेषणे व्याप्रियते अन्यथाऽनुपपत्त्या, न हि अगृहीतविशेषणा विशिष्टे बुद्धिः इति । टुप्. ४।१।५।१५, ● प्रत्ययः प्रातिपदिकार्थमनन्ययुच्चारणीयः । न केवलं प्रातिपदिकं स्वार्थे वर्तते । ६।४।६।२२. ● प्रत्ययो विधिरेव, धात्वर्थोऽनुवादः ('दध्ना जुहोति' इत्यादौ) । वा. २।२।८।१६ पृ. ५०५, ● प्रत्ययः 'तद्धितः सर्वमारानां नानुयोज्याः स्वभावतः । तेन नाना मत्स्यार्थान् प्रकृतिमयवादय ॥' २।१।१।१ पृ. २०८, ● 'प्रत्ययः संनिहितार्थविधि

तावत् करिष्यति । न चान्यपर उत्पत्तिम्' । यागं हि फले विदधत् प्रत्ययः न विप्रकृष्यते । न च अनुत्पत्तिपरः सन् उत्पत्तिमपि कल्पयिष्यति । २।२।१२।२७ पृ. ५६१. * प्रत्ययः ( ज्ञानं ) समीचीनः 'कः पुनरसौ ? नामजात्यादियोगेन उत्पद्यते यः' । बृहती. पृ. ३८ । नामयोगेन यथा 'देवदत्तः' इति । जातियोगेन यथा 'गौः अयम्' इति । गुणयोगेन यथा 'शुक्लोऽयम्' इति । क्रियायोगेन यथा 'पचति' इति । द्रव्ययोगेन यथा 'दण्डी' इति । ऋजु. * प्रत्ययः ( लिङादिः ) स्वार्थे भावनाया पुरुषं प्रवर्तयति । ... तस्मान्नैव कदाचित् यागे प्रत्यय उपनिपतति भावनान्तरे ( प्रत्ययार्थो भावना न यागं भावनया स्वीकरोति सत्यप्यानन्तर्ये इत्यर्थः ) । टुप्. ६।१।१।३ पृ. १३५२. * कारकं अभिदधत् प्रत्ययः शक्तिमात्ररूपेण अभिदध्यात्, न द्रव्यरूपेण, तस्याकारकत्वात् । शा. ३।४।४।११ पृ. ९३२. * प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः । कौ. १।४।५।६ पृ. २३९ ( इदं वाक्यं अनेकग्रन्थेषु बहुवारं समायाति, तच्च 'प्रकृतिप्रत्ययौ' इति प्रघट्टके द्रष्टव्यम् ) । * प्रत्ययेन कारकत्वमेकत्वं च इत्युभयं निर्दिष्टम् । तत्र एकत्वस्य आसन्नतरे कारके प्रथमं सम्बन्धो भवति । 'पशुमालभेत' इत्यत्र । वि. ४।१।५. * प्रत्ययेन विशेष्याभिधानं अविरुद्धम्, पूर्वाभिहितेऽपि विशेषणे, प्रकृतिप्रत्यययोः शक्तिभेदात् । शा. १।२।८।२१ पृ ७७७. * प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते । भा. १०।४।६।९. * प्रत्ययस्य अन्यन्तराधापेक्षया प्रातिपदिकस्य अजहत्स्वार्थलक्षणैव युक्ता, अजहत्स्वार्थलक्षणाया मुख्यार्थस्य परित्यागाभावेन काकेभ्योदधिन्यायेन तस्या एव न्याय्यत्वात् ( यथा 'श्रेद्वातृकम्' इत्यत्र ) । सोम. ३।५।७. * प्रत्ययस्य अन्विताभिधायित्व उक्तितरेषां स्वरूपमात्राभिधायित्वम् । वस्तुतस्तु अन्विताभिधानं क्वापि नास्ति । बाल. पृ. ४३. * प्रत्ययस्य प्रकृतेश्च कैवल्यो. प्रयोगासम्भवः । 'केवलप्रकृतिप्रत्ययप्रयोगासम्भवात् अवश्यं वाच्यत्वात् धातुसम्बन्धार्थं प्रत्ययः पुनरावर्तनीयः' । वा. २।२।१।१ पृ.४६३, * प्रकृतिप्रत्यययो स्वार्थवृत्त्योरेव नैरन्तर्यात् अन्वयत्वे संकोचोऽवगम्यमानो भवति । २।२।९।२३ पृ ५१४. * 'प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्' इति नियमः । मणि. पृ. १६२. * प्रत्यये वैरूप्यत्वयो वाक्यभेदः, 'ग्रहम्' इत्येकस्य संमार्गं ग्रहं वा प्रति गुणत्वे, द्वितीयाविभक्त्या ग्रहस्य ग्रहापेक्षया प्राधान्यं इति । बाल. पृ. १८३.

* प्रत्ययार्थः प्रधानं न प्रातिपदिकार्थः । 'सत्त्वप्रधानानि नामानि' इति यास्कस्मृतेः ( १।१ ) प्रातिपदिकार्थस्य प्राधान्यात् प्रधानान्वयस्य अभ्यर्हितत्वात् पदश्रुत्या ( पशुं ) पश्वन्वय एव संख्यायाः, न तु प्रत्ययश्रुत्या कारकान्वयः । न च प्रत्ययार्थप्राधान्यमपि शाब्दिकैः स्मर्यते इति वाच्यम् । तस्य आख्यातविषयत्वेनापि उपपत्तेः । सत्त्वादीनामपि प्राधान्यनाशाय तत्स्मृतेः सङ्कोचावश्यम्भावात् । एवं च संख्यायाः प्रत्ययश्रुतिगम्यकारकान्वयस्यापि परित्यज्यते सति वाक्यमादाय पश्वाङ्गत्र दूषणेनम् । न च एकत्वस्य पश्वन्वये पशोः कारकान्वयप्रसङ्गायामेकत्वविशिष्टस्यैव तस्यान्वयात् एकत्वस्यापि पश्वङ्गत्वं शङ्कनीयम् । विरम्य व्यापारयोगेन प्रत्ययेन प्रथममेकत्वस्य पशुसंबन्धं बोधयित्वा तदनन्तरमेकत्वविशिष्टस्य तस्य कारकान्वयबोधनायोगात् युगपदेव संख्याकारकाभ्यां पशोरन्वयेन संख्याविशिष्टत्वेन कारकान्वयाऽनुपपत्त्या केवलस्यैव पशोः कारकान्वयात् । अत्रोच्यते । यदि प्रातिपदिकार्थस्य प्राधान्यम्, तदा तस्य कारकेण वशीकरणाभावात् कारकस्य तद्गुणभावे सति कृदन्ताभिहितस्येव कारकस्य क्रियाऽन्वयो न भवेत् । अतो न प्रातिपदिकार्थः प्रधानम्, किन्तु प्रत्ययार्थ एव । तत्रापि वाक्यस्य क्रियाप्रधानत्वात् तदर्थत्वाच्च कारकस्य तस्यैव प्राधान्यम्, न संख्याऽऽदेः । यत्र तु 'गौः शुक्ल.' इत्यादौ न क्रियाऽन्वयः तदभिप्राय यास्कस्मरणम् । न चैवं प्रत्ययश्रुत्या संख्याऽन्वये कारके दुर्बलया पदश्रुत्या पशोरन्वयो न स्यादिति वाच्यम् । 'एकसंख्येन कारकेण यष्टव्यम्' इत्युक्ते 'किंजातीय तत्' इति विशेषापेक्षासत्त्वेन अनुगुणतया दुर्बलप्रमाणकस्यापि पशोः अन्वयाविरोधात् । प्रत्ययेन कारकसंख्ययोः पृथगभिधानमाश्रित्य एकपदोपात्तप्रातिपदिकार्थापेक्षया एकप्रत्ययोपात्तकारकस्य सन्निहिततरत्वात्

प्रधानत्वाच कारकेणैव सख्यासंबन्धो न प्रातिपदिकार्थेन। वस्तुतस्तु संख्याकारकयोः न पृथगभिधानम्, किन्तु सख्याऽन्वितमेव कारकमभिधीयते। तत्रश्च अभिधानदशायामेव कारकान्वितत्वात् सख्यायाः, न पश्चात् प्रातिपदिकान्वयशक्तिः इति ध्येयम्। सोम. ४।३।५ पृ. ३५३. * प्रत्ययार्थो भावना इति शास्त्रे व्यवहारः। वा. २।१।१।१ पृ. ३८०. * प्रत्ययार्थः व्यापाराश्रयः फलाश्रयश्च इति वैयाकरणाः। मणि. पृ. १०१, अनुकूलव्यापारः प्रत्ययार्थः इति मण्डनः। पृ १०३, आख्यातस्य यत्नो वाच्यः इति नैयायिकाः। १०६, उत्पादन आख्यातार्थः इति रत्नकोशकारः। १०७, आख्यातत्वेन यत्नत्वेन वा प्रत्ययवाच्यो यत्नो भावना इति सिद्धान्तः। पृ. ११०. * प्रत्ययार्थः शुद्धो न लभ्यते। प्रकृतिप्रत्ययोः स्वार्थाभिधाने स्मृतेराचाराच नित्यविवक्षितक्रमत्वेन पूर्वमयुक्तप्रकृत्यर्थंग्राहेषु प्रतिपत्तृषु प्रत्ययाद्यः सन्निपतन् कृत्यानुरूपमेव स्वार्थं यदाते। तस्मात् न कदाचित् प्रत्ययार्थः शुद्धो लभ्यते। वा. २।२।१।१ पृ. ४६६, * 'प्रत्ययार्थः समानोऽपि धातुभेदेन भिद्यते।' २।२।८।२ पृ. ४६८, * 'प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययौ सदा। प्राधान्याद् भावना तेन प्रत्ययार्थोऽवधार्यते ॥' २।१।१।१ पृ. ३८०. * प्रत्ययार्थेन हि इति कर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथमिति। भा. ९।१।१।१ पृ. १६३९. * 'प्रत्ययार्थेन हि इतिकर्तव्यता सम्बध्यते न धातुना। धातुस्तु पूर्वापरीभूतः इतिकर्तव्यता गृह्णाति, न निष्पन्नरूप.' इति न्यायरत्नाकरे वर्णित एव। ( 'प्रत्ययार्थेन हि इतिकर्तव्यता आकाङ्क्ष्यते कर्तव्यं कथमिति, न यजिः कीदृश इति' इति भाष्य ९।१।१ पृ. १६३९ इत्यत्र )। टुप्. १२।१।२।१०, * 'प्रत्ययार्थस्य भावस्य वान्यत्वा प्रतिपादिता।' वा. १।३।५।३३ पृ. ३०६. * प्रत्ययार्थस्य भावनायाः प्रकृत्यर्थं प्रति ( 'प्रकृतिप्रत्ययौ०' ) 'तयोस्तु प्रत्ययस्य प्राधान्येन' इति स्मृत्या प्राधान्यस्य अनुशासितत्वात् 'भ्रौणीनवदन्ति' इतिवत् प्राधान्ये अवगते यागस्य श्रुत्यैव तदङ्गत्वोपपत्तिः। कौ. २।१।२।५ पृ. १०.

* 'प्रत्ययार्थप्रधानत्वात् प्रतिधातु ( भावना ) न भिद्यते।' वा. २।२।१।१ पृ. ४६३.

* प्रत्ययार्थप्राधान्यनियमस्य भावप्रत्ययार्थातिरिक्तभावातिरिक्तमत्त्वम्। मणि. पृ. १६२.

* प्रत्ययार्थलक्षणं भावप्रत्ययार्थादिभिरेव प्रणीतं नेतेरि'। वा. ३।४।४।१२ पृ. ९०३.

* प्रत्ययार्थशेषत्वं प्रकृतिप्रत्ययोः। वा. २।२।१।१ पृ ४६३.

* प्रत्ययावृत्तिः। अनेककारकपदोपात्तयोः कारकविभक्तिश्रुत्या क्रियाऽन्वयावगतेः क्रियाऽन्वयात् प्राक् विशेषणविशेष्यत्वाप्रतीतेः प्रत्येकं विधिव्यापारात् विधायकप्रत्ययावृत्तिः स्यात्। सु. पृ. ७८३-७८४.

* प्रत्ययावृत्तिलक्षणः वाक्यभेदः चतुर्धा, सुप्-तिङ्-कृत्-तद्धितभेदात्। बाल. पृ. १८१.

* प्रत्ययोच्चारणानन्तरमेव किल आकाङ्क्षा उत्पद्यन्ते। टुप्. ९।१।१।२ पृ. १३५३.

* 'प्रत्ययलक्षणेन प्राप्नोति'। कुर्मः इत्यादौ उभूपयगुणउकारलोपयोः प्राप्तौ नित्यत्वादुकारलोपः। गुणस्तु लोपे कृते 'प्रत्यय० प्राप्नोति' इति न्यायेन अनित्यः। तत्त्वप्रकाशिका. पृ. १६४.

* 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति न्यायेन लुप्तेऽपि प्रत्यये यत्र कार्यं भवति, तत्र न सन्निपातलक्षणन्यायावतारः। अद्वैत. ५०८ निर्णय०

* प्रत्ययश्रुतिबलेन पदश्रुतिबाधः। सु. पृ. ९२.

* प्रत्ययितः। प्रत्ययो विश्वासः अस्य संजात इति 'तदस्य संजातं तारकादिभ्य इतच्' ( पा० ५।२।३६ ) इति संज्ञातार्थस्मृतेः इतच्प्रत्ययान्तेन प्रत्ययितशब्देन विश्वसनीयत्वमुक्तम्। सु. पृ. ९०१. * प्रत्ययितस्य ( पुरुषस्य ) हि वचनमव्यभिचारि प्रमाणान्तरपूर्वकमुपलब्धमानविषयम्। बृहती पृ. २२.

* 'प्रत्यर्थं चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धस्तस्मात् कर्मोपदेशः स्यात्।' ( ६।१।१।३ ) इत्यनेन अर्थ्यमानं स्वर्गादि प्रतीत्य लक्षणीकृत्य उद्दिश्य तदाभिमुख्येन तत्परतया कर्मणः समीहितस्वर्गाद्यन्वयावगतेः

इति वदता फलस्य उद्देश्यत्वादपि तादर्थ्येन कर्मविधिः इति वक्ष्यते । सु. पृ. ८.

⌛ प्रत्यवयवं वाक्यपरिसमाप्तिरिति न्यायः। तद्यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति, न चोच्यते प्रत्येकमिति, प्रत्येकं च भुक्तिः परिसमाप्यते। साहस्री. ५९६.

* प्रत्यवयवं वाक्यपरिसमाप्तिः इति न्यायेन 'सर्वाणि हवींषि' इति सर्वशब्दः प्रमाणानुवादः हविर्नाशमात्रस्य निमित्तत्वम् । ( वाक्यानां च समाप्तत्वात् ३।१।१४। २४ ) । सोम. ६।४।१.

* प्रत्यवरोहः अग्नेः अरण्योरेव आत्मसमारोपपक्षेऽपि । संकर्ष. ३।२।३६. मीको. पृ. ९०८ 'आत्मसमारोपणपक्षेऽपि०' इत्यत्र द्रष्टव्यम् । * प्रत्यवरोहः अन्त्यादारभ्यानुष्ठानम् । रत्न. १०।५।२५।८५.

* प्रत्यवायः 'अबाधिते तु विज्ञाने योऽन्यो न क्रियते तथा । विहिताकरणात्तत्र प्रत्यवायः प्रसज्यते ॥' वा. ३।१।७।१४ पृ. ७०६. * प्रत्यवायः पुरुषस्य निषेधातिक्रमे । ६।२।५।२०–२१. * विहिताकरणाद्धि प्रत्यवायः स्मर्यते । नाकरणमात्रात् प्रत्यवाय, किं तर्हि ? विहिताकरणात् । टुप्. ६।३।१।२ पृ. १४०९.

⌛ प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वशेषत्वात् । १०।६।१८।६९॥

एकादशरात्रे पौण्डरीके अहीने प्रत्यहं अहनिअहनि सर्वसंस्कारः सर्वासां दक्षिणानां संस्कारः स्यात् । प्रकृतिवत् प्रकृतौ द्वादशाहे यथा प्रत्यहं दक्षिणासंस्कारः क्रियते तद्वत् । सर्वासां दक्षिणानां सर्वशेषत्वात् सर्वेषामह्नां शेषभूतत्वात् । तस्मात् प्रत्यहं नयनादिसंस्कारः कर्तव्य इति पूर्वः पक्षः ।

एकार्थत्वान्नेति चेत् । ७० ॥

पौण्डरीके प्रत्यहं दक्षिणानां संस्कारो न कर्तव्यः, किन्तु सकृदेव स्यात् । एकार्थत्वात् । दक्षिणानामेकं कार्यं ऋत्विजामानमनम् । तत् सकृत्संस्कारेऽपि सिध्यति । तस्मात् न प्रत्यहम् । इति चेत् । इयं द्वितीयस्य पूर्वपक्षस्य शङ्का ।

स्यादुत्पत्तौ कालभेदात् । ७१ ॥

स्यात् प्रत्यहं दक्षिणासंस्कारः पौण्डरीके उत्पत्तौ दक्षिणासंस्कारोत्पत्तिविधौ कालभेदात् कालविशेषसंबन्धस्य श्रूयमाणत्वात् । 'तस्मात् त्रिष्टुभो लोके माध्यंदिने सवने दक्षिणा नीयन्ते' इति । सर्वा श्वेता दक्षिणाः सर्वेषामह्नां शेषभूताः, तेषां चाह्नां माध्यंदिनानि सवनानि भिन्नानि । तस्मात् प्रत्यहं संस्कारः । इति पुनः प्रथमः पूर्वपक्षः ।

विभज्य तु संस्कारो, वचनाद् द्वादशाहवत् । ७२ ॥

सिद्धान्तयति । पौण्डरीके प्रत्यहं दक्षिणा विभज्य विभक्तानां तद्दिने देयानां तद्दिने नयनादिः संस्कारः कर्तव्यः । वचनात् द्वादशाहवत्, यथा द्वादशाहे 'अन्वहं द्वादशशतं ददाति' इति वचनात् प्रत्यहं नयनादिः संस्कारः क्रियते । तद्वत् द्वादशाहविकारे पौण्डरीकेऽपि परिक्रयेकत्वेऽपि वचनात् विभज्य भेदेन प्रत्यहं दक्षिणासंस्कारः इति । के.

* प्रत्यादेशः नियाकृतिः, निराकरणम् । के.

* प्रत्याम्नानं बाधे प्रमाणम् । मणि. पृ. ११. * प्रत्याम्नानेन प्रकृतं बाध्यते आरभ्याधीतेन अनारभ्याधीतेन च । बाल पृ. १३१.

* प्रत्यायको वेदः । वि. १।१।७.

* प्रत्यायनार्थाः मन्त्राः ( अर्थप्रत्यायनार्थाः ) । सू. १।२।४।३१–५३.

⌛ प्रत्यासत्तिन्यायः । यत्र शीघ्रोपस्थितिर्निर्बाधा, तत्राऽस्यावतार इति । प्रत्यासत्तिः । सबन्धः सन्निकर्षः । तस्य न्याय. रीतिः । साहस्री. १९८.

* प्रत्युत्थेयः । वृद्धवशात् प्रत्युत्थेयः समानयितव्यश्च इत्यादेयवृत्तिर्निमित्ताश्रयी । भा. ६।२।१०।३०.

* प्रथनश्लक्ष्णीकरणयोः बाधः सौर्ये चरौ । १०। १।१७.

* प्रथमं अनुग्रहीतव्यं विरोधाभावात्, पश्चात्तनं तु विरोधात् लक्षणया कल्पनीयम् । भा. ३।४।११।११ पृ. ९६६.

* 'प्रथमं वा नियम्येत कारणादतिक्रमः स्यात्।' ११।१।८।४३ इत्यत्र मुख्यनियमहेतुः मुख्यातिक्रमकारणाभावो वक्ष्यते। सु. पृ. १५४१. * 'प्रथमं वा नियम्येत०' इत्यनेन न्यायेन अवाप्ते फले नोत्तरकर्मानुष्ठानप्रयोजनमस्ति। वा. १।२।१।४. * 'प्रथमं वा नियम्येत०' इत्येवं कर्तव्यप्रतिपादकमेकवचनम् 'अहं समर्हि' इत्यत्र। वा. ३।१।७।१४ पृ. ७२३. * 'प्रथमं वा नियम्येत०' इह एक एव फलो बहूनामारम्भः। स त्रिभिश्चतुरादिभिस्तुल्यः। अन्यत्र यो लघुफलस्य गुरुफलस्यमातिष्ठेत, तस्य फलभूयस्त्वं न भवितुमर्हति। ('कपिञ्जलानालभेत' इत्यत्र इदम्)। भा. ११।१।८।४३. * आपादद्वये तु (अधिके) प्रथमे प्रयाजाद्वे वरुणप्रघासाः, 'प्रथमं वा नियम्येत०' इति न्यायात्। न च पुनर्द्वितीये 'उपचारेऽविज्ञाते' इति श्रुतेः। शांश्रौ. भाष्यम् ३।१४।१९. * बहुत्वानियमे 'प्रथमं वा नियम्येत०' इति सिद्धे प्राप्ते दशपेये ज्योतिष्टोमविकारे दशत्वानुवादः। वा. ३।७।१२।२७. * समस्तो हि प्रथमः पादः चोदनालक्षणपरिकरः, तत्र च धर्मस्य चोदनालक्षणत्वमुक्तम्। २।१।१।१ पृ. ३७०.

* प्रथमातिक्रमे मानाभावात् प्रथमऽपिःशेषेणैव संस्कारसिद्धिः। ('शेषात् स्विष्टकृते समवद्यति' इत्यत्र)। वि. ३।४।२०.

* प्रथमाध्यायतृतीयपादे स्मृतिमूलविचारः प्रकरणार्थः। सु. पृ. ३७०.

* प्रथमाध्यायप्रतिपादितो हि प्रमाणविवेकविधि-अर्थवाद-मन्त्र-स्मृति-गुणविधि-नामधेय-वाक्यशेषार्थकृतसंदिग्धविधिनिर्णयप्रविभागः प्रत्येकं भेदादिलक्षणेषु भेदेनोपयोक्ष्यते। वा. ३।१।१।१ पृ. ६४५.

* प्रथमारम्भेण हि पदार्थः क्रियमाणः उत्तरं पदार्थमभिनिवर्तयति। भा. १०।५।२८.

☒ प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्। ७।३।९।२४ ॥

चातुर्मास्येषु 'द्वयोः प्रणयन्ति' इति श्रुतम्। तत्र कयोर्द्वयोः इति विचारे पूर्वपक्षमाह। इदं प्रणयनं प्रथमोत्तमयोः प्रथमचतुर्थयोः पर्वणोः स्यात्। कुतः। उत्तरवेदिप्रतिषेधात्। 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति उत्तरवेदेः प्रतिषेधः। अस्मिन् प्रणयने उत्तरवेद्यां अग्निनिधानं विहितम्। अतो यत्र प्रणयनम्, तत्र उत्तरवेदिप्राप्तिः। प्राप्तौ च सत्यां प्रतिषेधः। प्रथमचतुर्थपर्वणोश्चाप्तौ। तस्मात् उत्तरवेदिप्रतिषेधात् तयोः पर्वणोः प्रणयनम्। 'इदं नौमिकं प्रणयनं इतिपक्षे प्रयोजनसूत्रम्' इति वार्तिकम्।

मध्यमयोर्वा गत्यर्थवादात्। २५ ॥

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह। मध्यमयोः पर्वणोः 'वरुणप्रघाससाकमेधाख्ययोः अग्निप्रणयनं स्यात्। गत्यर्थवादात्। 'तस्मात् द्वाभ्यां यन्ति' 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासाश्च साकमेधाश्च' इति गतिप्रतिपादकेन अर्थवादेन मध्यमयोरेव प्रणयनस्य ज्ञापितत्वात्।

औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः। २६ ॥

पूर्वतरसूत्रे उत्तरवेदिप्रतिषेधात् इति योऽयं औत्तरवेदिकः प्रतिषेध उक्तः, सः 'उपाग्नि वपन्ति' इति अनारभ्यवादस्य अनारभ्यविधेः प्रतिषेधः स्यात्। अत्र चातुर्मास्येषु उपवपन्ति अग्नि इति अनारभ्यवाक्यस्यार्थः। अनेन चतुर्ष्वपि पर्वसु प्राप्तं मध्यमयोर्नियम्यते। तस्मात् मध्यमयोः पर्वणोः अग्निप्रणयनमिति सिद्धान्तः। अत्र शौनिकं प्रणयनमिदमिति वार्तिकानुसारि ,कुतूहलमतम्। के.

☒ प्रथमोपस्थितन्यायः। प्राथमिकत्वादिशेषादेव शेषकर्म ॥

एकस्माच्चेद्याथाकाम्यविशेषात्। ३।४।१६।४६ ॥

भाष्यम्— अथ कृत्वाचिन्ता। यद्येकस्मात् कर्तव्यानि भवेयुः, किं तदा यतः कुतश्चिदुत प्रथमादिति। किं प्राप्तम्? यतः कुतश्चिदिति। कुतः? न कश्चिद्विशेष आश्रीयते इति। तस्मादनियम इति।

वा— याथाकाम्यमित्यस्येव बुद्धिसामानाधिकरण्येन कौविदक्षायां 'षिद्गौरादिभ्यश्च' इति ङीषि कृते 'हलस्तद्धितस्य' इति यकारलोपे कृते याथाकामी भवति।

मुख्याद्वा पूर्वकालत्वात् । ४७ ॥

**भाष्यम्**— मुख्याद्वा कर्तव्यानि । कुतः ? पूर्वकालत्वात् । ततः कर्तव्येषु नास्ति निमित्तविघातः । अपति निमित्तविघाते नैमित्तिकं कर्तव्यमिति । ततः कृतेषु द्वितीयादीनां निमित्तविघात इत्यक्रिया । तस्मान्मुख्यादेव क्रियेरन्निति ।

**प्र**— शेषनिमित्तकं हि विहितावश्यकर्तव्यतानिमित्तं च शेषकार्यं प्रथमस्य तावत् पाठक्रमानुसारात् पूर्वमापतति । न च तदा कश्चिद्विरोध इति क्रियते । तस्मिंश्च कृते निवृत्तव्यापारा चोदना न निमित्तीभवतीति विरोधाद्करणम् ।

**सोम**— मुख्येन प्रधानानुष्ठानसमये एव शेषकार्यार्थं शेषः स्थाप्यः इति बुद्धेः शेषस्थापननिमित्तभूतायाः सत्त्वेन तस्या सत्या शेषस्थापनावश्यम्भावात् तत एवाऽऽकाङ्क्षाशान्तेर्नैतरेभ्यः स्थापनम् । भाष्यकारपक्षे तु यद्यपि शेषकार्यवशेन शेषस्थापनाभावेन शेषस्थापनस्य नैमित्तिकत्वाभावात् निमित्तविघातो नास्तीति शेषकार्यसमये सर्वेषां युगपदुपस्थितेः अविशेषस्तथाऽपि प्रधानहविःशेषाणामेव शेषकार्ये विनियोगात् प्रधानपौर्वापर्यस्य शेषकार्यानुष्ठानसमयेऽवश्यानुसरणीयत्वात् प्रधानक्रमानुसारेण मुख्यशेषाच्छेषकार्यस्य प्रथममनुष्ठेयत्वे सति तेनैव नैराकाङ्क्ष्यात् नेतरेभ्यः कार्याणीति बोध्यम् । ‘ पुरोडाशकपालेन तुषानुपवपति ’ इति तुषोपवापः पूर्वपक्षे येन केन चिदनुपालेन कर्तव्यः । सिद्धान्ते तु प्रथमोपस्थितेनेति कृत्वाचिन्ताप्रयोजनमाहुः ।

**वि**— ‘ यदैकस्मात्तदा मुख्यनिवृत्तिर्नेति विद्यते । नाश्रुतेरस्ति मुख्यातिक्रमणे हेतुसम्भवः ॥ ’

**भाट्ट**— परप्रयुक्तद्रव्योपजीविनोऽर्थकर्मणश्च तुषोपवापादेरर्थे अनेकपुरोडाशीयकपालानां मध्ये एकस्मिन् कपाले गृह्यमाणेऽनियमप्राप्तावप्यस्य मुख्यत्वेन प्रथमोपस्थितत्वात् तदतिक्रमकारणाभावेन तदीयकपालस्यैव ग्रहणम् । ग्राह्यतावच्छेदकं च प्रथमोपस्थितत्वं न त्वाग्नेयत्वम् । अतो निरूढवन्यविकारस्य सत्त्वेन तदीयमेव कपालं ग्राह्यम् । यत्तु मूले सगतिलोपेन कृत्वाचिन्तया यदा शेषकार्यानुरोधेन यस्य कस्यचित्स्थापनं तदा कस्येतरेषां मुख्यस्येति सिद्धान्तितम्, तदाभेयवेलाया शेषकार्याणामनुद्दिष्टत्वात् शेषस्थापनार्थत्वानुपपत्तेः शेषकार्यानुष्ठानवेलायां चान्त्यस्यैवोपस्थितत्वेन तस्यैव स्थापनापत्तेरुपेक्षितम् । तत्रत्यमुख्यपदं वा प्रथमोपस्थितपरम्, ततश्च यस्यैव यत्र प्रथमोपस्थितिरादस्यान्त्यस्य वा तस्यैव तत्र ग्रहणमिति न्यायसारार्थः ।

**मण्डन**— ‘ यद्येकतः स्यात् हविरस्तु मुख्यात् । ’ ( सा शेषक्रिया ) ।

**शंकर**— ‘ एकस्माच्चेत् तदाग्रतः । ’ ( तत् शेषकार्यम् ) ।

● दर्विहोमेषु ‘ चतुर्गृहीतं जुहोति ’ इत्यादिनियमानुपलम्भात् अनियतसंख्याकगृहीते प्राप्ते, प्रथमगृहीतेनापि होमसम्भवात् प्रथमोपस्थितन्यायेनैव संख्यानियम्येव । संकर्ष. २।४।६.

**● प्रथमग्रासे मक्षिकापात इति न्यायः** । अयं कर्मप्रारम्भे एव विघ्नसमवे अवतरतीति । साहली. ७५२.

● प्रथमद्वितीयादिशब्दाः क्रियया आवृत्तौ मुख्याः, तत्संसर्गात् वस्तुषूपचर्यन्ते । यथा प्रथमं काण्डम्, प्रथमः पुनः । एवं ‘ प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम ’ इत्यत्रापि प्रथमः ज्योतिष्टोमप्रयोग इत्यर्थः । वि. ३।१। १७.

● प्रथमप्रवृत्तिक्रमः उत्तरानुष्ठाने नियामकः । सू. ५।१।५।८.

● प्रथमभक्षः वषट्कर्तुः एकपात्रे । ३।५।११। ३६–३९. ● यावति विषये वषट्कारः तावत्येव प्रथमभक्षः । भा. ३।५।१०।३१ पृ. १००७.

● प्रथमयज्ञोऽपि अग्निचयनसम्भवः । सोम. १०। ३।५.

● पूर्वस्य द्वितीयादीनपेक्ष्य प्रथमशब्दो भवति । भा. ३।३।१२।३३.

● प्रथमश्रुतात् चरमश्रुतो दुर्बलः । ‘ चतुरो मुष्टीन् ’ ‘ सप्तदशशरावश्चरुः ’ अत्र संख्या प्रकृत, मुष्टेर्बाधः । वि. १०।२।२८.

● प्रथमश्रुतानुसारात् चरमश्रुतं नेयं इति न्यायोऽपि द्वितीयाश्रुत्या बाध्यो दुर्बलत्वात् । न्यायनि. ४।१।५।६ ग्रन्.

● प्रथमश्रुतत्वोपक्रमाभ्यां ज्योतिष्टोमे द्वादशशत-संख्या गोद्रव्यस्यैव, नान्यस्य पशोर्वा मापतिम्नदेर्वा भिन्नित्वना घा । के. ( १०।३।११ )

● प्रथमसाध्यक्रसाहस्रधर्माः द्वितीयादिसाध्यस्क-साहस्रेषु अतिदिश्यन्ते । (चरमाः साध्यस्त्रः साहस्राश्च) । जै. ८।१।१२.

● 'प्रथमहविःशेषादेव शेषकार्याणां प्रथम-मनुष्ठाने सति तेनैव नैराकाङ्क्ष्यात् नेतरेभ्यः शेषकार्याणि' अनेन न्यायेन ( ३।४।२०।५२-५३ ) पुरोडाशाभ्यानुमित्यादिकृत्योपनायः पूर्वपक्षे येन येन चित् कपालेन कार्यः, सिद्धान्ते तु प्रथमोपधेयकपालेन इति वर्णितं । कु ३।४।२०।५३.

● प्रथमा अभिहितकर्तृकर्मसंज्ञाविनी इति के चित् । प्रातिपदिकार्थे प्रथमा इत्यन्ये । मणि. पृ ११७. ● प्रथमा उत्तमा इति अनेकसंनिपाते भवति । भा. १२।३।१६।३८. ● प्रथमा । 'प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमा' (पा० २।३।४६ ) लिङ्गपरि-माणवचनानां लिङ्गवचपरिमाणवचनमात्रकथनकत्या लिङ्गादिषु प्रथमायाः शक्तिः । प्रातिपदिकार्थे इति क्वचित् प्रथमाया अर्थो नास्ति इति सूचनाय । पुमान् देवदत्तः, द्रोणो व्रीहिः, एको घटः इत्यादौ पुंस्त्व-द्रोणत्वैकत्वानां प्रातिपदिकार्थानां देवदत्तादौ न समवाय-संबन्धेन अन्वय संभवति, नामार्थयोः भेदान्वयस्य अव्युत्पत्तेः । अतो लिङ्गादिकं प्रथमार्थः । तत्र च प्रातिपदिकार्थानां पुंस्त्वादीनां अभेदेन अन्वयः । विभक्त्यर्थश्च देवदत्तादौ प्रकारतया अन्वेति । एवं च पुंस्त्वाभिन्नलिङ्गवान् देवदत्तः, द्रोणाभिन्नपरिमाणवान् व्रीहिः, एकत्वाभिन्नसंख्यावान् घटः इत्यादिबोधोपपत्ति इति वैयाकरणाः ।

भाट्टाः । नामार्थयो अभेदान्वयव्युत्पत्तिबलाय विभक्त्यर्थप्रातिपदिकार्थयोः अभेदान्वयव्युत्पत्तिकल्पनं न युक्तम् । किंच घटः इति नामार्थयोरभेदान्वयः क्वापि न स्यात्, प्रातिपदिकार्थत्वेन प्रातिपदिकार्थे प्रथमायाः शक्त्या 'नीलो घटः' इत्यादावपि नीलाभिन्नप्राति-पदिकार्थस्य समवायसंबन्धेन घटे अन्वयात् । न चेष्टा-पत्तिः, प्रातिपदिकार्थस्य शक्यताऽवच्छेदकत्वे गौरवात् । किंच 'तण्डुलः पचति' इत्यादावपि प्रातिपदिकार्थरूप-विभक्त्यर्थस्य कर्मत्वसंसर्गेण पाके अन्वयापत्त्या ततोऽपि बोधापत्तिः । नहि विभक्त्यर्थस्य अपि धात्वर्थान्वये निरूपितत्वादिवत् कर्मत्वस्य संसर्गतया भाने किञ्चिद्बाधक-मस्ति । अत प्रातिपदिकार्थेन विभक्त्यर्थस्य अभेदाति-रिक्तसंबन्धेन अन्वयबोधो नास्ति इति व्युत्पत्त्यन्तरकल्पने गौरवम् । अतो नेदं शक्तिग्राहकम्, किंतु प्रथमोच्चारणे अन्यार्थस्याभावात् नेयं कारकविभक्तिः इति सूत्राशयः । एवं च मात्रपदं सगच्छते । शक्तिग्राहकत्वे मात्रपद वैयर्थ्यप्रसङ्ग । एव 'संबोधने च' ( पा० २।३।४७ ) इत्यत्रापि संबोध्यत्वे प्रथमाया न शक्तिरुच्यते 'हे देव-दत्त पच' इत्यत्रापि संबोध्यस्य विभक्त्यर्थस्य धात्वर्थे कर्तृत्वेन अन्वयापत्तेः । तेन आमन्त्रितादिसंज्ञाऽन्तर-प्रयुक्तसंज्ञाप्रत्यर्थं 'संबोधने च' इति सूत्रम् । संबोधने या प्रथमा सा आमन्त्रितं इति सूत्रार्थः । अतो न प्रथमायाः किञ्चिद्वाच्यम्, किंतु आख्यातानुक्तार्थानुवादः इति दिक् । मणि. पृ १२४-१२५.

● नामनेकान्ते यत् प्रथमाऽन्तं गुणभूतम्, प्रधान मपि भवति क्रियाया यथा 'मलिनः स्नायात्' इति । शा ६।१।१।१ पृ. ११४६. ● स्वार्थे समानविभक्तीनि समर्पकाणि प्रथमान्तानि भवन्ति । भा. १०।३। ११।४२. ● प्रथमान्तस्य क्रियापदसाकाङ्क्षत्वे न प्रमाणाभाव. । 'चैत्रः' इत्येतावन्मात्रस्य शाब्दबोधाजन-कत्वेन तस्यापि साकाङ्क्षत्वात् । न च तथात्वेऽपि पण्डिता-दिपदसमभिव्याहारेणापि ( चैत्रः पण्डितः ) शाब्दबोध-जनकत्वात् क्रियापदसाकाङ्क्षत्वे प्रमाणाभाव. । 'अस्ति-र्भवन्तीपरः प्रथमपुरुषो अप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मरणेन तस्यापि क्रियापदसाकाङ्क्षत्वात् । भवन्तीपर. लडन्त इत्यर्थः । न चैवं तर्हि प्रथमपुरुष-भिन्ने 'अहं पण्डितः, त्वं पण्डितः' इत्यादौ तत्सा-काङ्क्षत्वे प्रमाणाभाव. । तथापि प्रातिपदिकार्थस्वारस्य-

शाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन सुबन्तोपस्थितिः कारणम्, लिङ्गसंख्यातिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति क्रियापदजन्योपस्थितिः कारणम्, इति कल्प्यकार्यकारणभावयोरेव प्रमाणत्वात् । अत एव प्रथमास्थलेऽपि न प्रातिपदिकोपस्थितस्यैव चैत्रस्य क्रियायामन्वयः, अपितु प्रथमोपस्थितस्यैव । 'प्रातिपदिकार्थमात्रे प्रथमा' इत्यनुशासनेन प्रातिपदिकार्थस्यैव प्रथमार्थत्वात् । प्रकृतिप्रत्ययार्थयोश्च अभेदसंसर्गेण अन्वयान्न कल्पनागौरवम् इति भावः । प्रातिपदिकं वा तात्पर्यग्राहकं इति वक्ष्यते । यदा अभिहितकारकवाचिनी प्रथमा इति मतं तत्र युक्तम् । रहस्य. पृ ४१-४२.

• प्रथमाऽर्थत्वात् लिङ्गसंख्याभिन्नः भावनायां प्रकारत्वेनान्वेति । न च तस्याः साधुत्वमात्रार्थमुच्चारणेन तदर्थे मानाभावः, सम्बोधने अभिमुखत्वस्यापि भासमानत्वेन तत्सिद्धेः । तच्च प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यक-वक्तिनच्छाविषयीभूतशाब्दज्ञानवत्त्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृभिन्ननिष्ठवक्तिनच्छाविषयतावत्त्वं वा । युष्मदस्मदर्थयनाऽवच्छेदकं न तदेव । अस्ति चेदम् 'देवदत्त गामानय' इत्यादौ, 'देवदत्त चैत्रो गामानयति' इत्यादौ च, तस्य उक्तविधज्ञानवत्त्वात् । न च यत्र स्नुषा बोधयितुं कन्यासंबोध्यवाक्यप्रयोगः (कन्या संबोध्या यस्मिन् वाक्ये) तत्र स्नुषायामतिव्याप्तिः, तत्र स्नुषायाः सम्बोध्यत्वेऽपि सम्बोधनस्य शब्दतात्पर्यविषयत्वाभावेन तस्याः संबोधनप्रथमाऽनापत्तेः । तात्पर्यविषयत्वत्वे च सत्येव सा । अत एव चेतने एव सम्बोधनं मुख्यम्, अचेतने तु चेतनत्वारोपेण गौणो व्यवहारः । अत एव आद्योदाहरणे (देवदत्त गामानय) अभिमुखत्वं कर्तृत्वं च उभयं प्रथमार्थः । तत्र आधेयत्व प्रातिपदिकार्थसंसर्गः । तयोश्च निरूपकत्वनिरूपकत्वाभ्यां भावनायामन्वयः । अन्त्ये च (देवदत्त चैत्रो गामानयति) अभिमुखत्वस्यैव निरूपकत्वसंसर्गेण ।

'चैत्र ! मैत्रः कीदृशः' इत्यादावपि 'अस्तिर्भवन्तीपरः' इत्यादिना क्रियापदाध्याहारस्य आवश्यकत्वात् शाब्दबोधाविरुद्धः । 'चैत्र ! मैत्रो ग्रामं गच्छतु' इत्यादौ तु प्रेरणप्रार्थनाविषयीभूतायां भावनायां निरूपकत्वेन सम्बोध्यत्वस्य स्वरूपसंबन्धेन स्वनिष्ठव्यापारप्रयोज्यत्वस्य अन्वयः । प्रतीत्यनुसारेण तत्तदर्थकलोडादेरेव तात्पर्यग्राहकत्वात् । अत्र च प्रथमाऽऽदेशविशेषाणामेव संबोधने शक्तिः पृथगनुशासनत्वात् । हेशब्दादिकं तु तात्पर्यग्राहकम् । व्यापारप्रयोज्यत्वादौ तु लक्षणैव । 'चैत्र मैत्रो ग्रामं गच्छति' इत्यादौ प्रथमान्ते च तार्किकमतेऽपि भावनाविशेष्यत्वं नास्ति प्रथमार्थरूपान्यविशेषणत्वात्, तत्र आख्यातोपात्तसंख्याऽन्वयप्रभावाच्च । अतः तैः सम्बुद्धिभिन्नप्रथमाऽन्तपदजन्योपस्थितिरेव भावनाऽन्वयप्रयोजिका इति वाच्यम् । न च तदपि वक्तुं शक्यम् । 'चैत्र गामानय' इत्यादौ तदनापत्तेः । न च तत्र त्वंपदाध्याहारः, तथात्वे 'भो ब्राह्मणाः त्वं पच' इति प्रयोगापत्तिः । न च युष्मदर्थकर्तृसम्बुद्ध्योः एकसंख्याकत्वम्, व्युत्पत्त्यन्तरकल्पनाऽऽपत्तेः ।

एतेन अभिमुखत्वादेः सर्वत्र प्रातिपदिकार्थे प्रकारत्वमित्यपि अपास्तम् । 'चैत्र ! मैत्रः पचति' इत्यादौ चैत्रे भावनाऽऽश्रयत्वापत्तेः । वस्तुतस्तु अस्मन्मतेऽपि 'चैत्र मैत्रः पचति' इत्यादौ चैत्रस्य कर्तृत्वेन भावनाऽन्वयस्य निवारयितुमशक्यत्वात् सर्वत्र सम्बोधनमेव सम्बुद्धिप्रथमाया अर्थः, न तु कर्तृत्वमपि । 'चैत्र पच' इत्यादौ मध्यमपुरुषस्थले आख्यातेन सम्बोध्यायाः तदन्यस्यैव कर्तृत्वेन लक्षणात् न संबोध्यातिरिक्तस्य कर्तृत्वप्रसङ्ग इति ध्येयम् । अतो द्वितीयादिसाधारण्येन प्रथमासुबर्थस्यापि प्रकारत्वमेव सर्वत्र युक्तम् ।

न च प्रथमायाः लिङ्गसंख्ययोरिव सम्बोधनस्यार्थत्वेऽपि तदतिरिक्तार्थाभावात् 'चैत्रः पचति' इत्यादौ प्रातिपदिकार्थातिरिक्तस्य विशेष्यभूतार्थस्य अभावेन कथं द्वितीयादिसाधारण्येन सर्वत्र प्रथमार्थस्य प्रकारत्वं इति वाच्यम् । असम्बुद्धिप्रथमाया अपि अनुशासनबलेन लिङ्गसंख्यातिरिक्तार्थवाचित्वावगतेः । तथाहि । पाणिनिमते तावत् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा० २।३।४६) इति सूत्रात् प्रातिपदिकार्थ एव । इह हि लिङ्गादौ शक्यत्वानुशासनवत् प्रातिपदिकार्थांशेऽपि शक्यत्वानुशासनमेव, न तु प्रातिपदिकार्थे

प्रातिपदिकेन विवक्षिते प्रथमायाः साधुत्वमित्येतत्परम्, वैयर्थ्यापत्तेः वैरूप्यापत्तेश्च । अतश्च प्रातिपदिकार्थश्चैत्रादिरेव प्रथमाऽर्थः ।

न च एवमपि तस्य प्रातिपदिकेनैव बोधसिद्धेः प्रथमायास्तदंशे साधुत्वार्थं अनुवादकतया न प्रथमाऽर्थस्य अन्यत्र प्रकारता इति वाच्यम् । प्रातिपदिकस्यैव प्रथमाऽर्थविशेषतात्पर्यग्राहकत्वाङ्गीकारेण प्रथमाऽर्थस्य अन्यत्र प्रकारत्वे बाधकाभावात् । इतरथा सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणं इत्येवंविधकार्यकारणभावे प्रथमाऽतिरिक्तत्वप्रवेशे गौरवात् । प्रकृत्यर्थस्य प्रत्ययार्थं प्रति प्रकारत्वे प्रथमान्तप्रातिपदिकातिरिक्तत्वप्रवेशे गौरवात् च । आख्यातार्थभावनाऽऽदेः प्रथमाऽन्तार्थं प्रति प्रकारत्वे व्युत्पत्त्यन्तरकल्पनाऽऽपत्तेश्च । अतो लाघवात् मुख्यत्वेन प्रथमार्थस्यापि चैत्रादेः आख्यातार्थभावनायामेव प्रकारता । अत एव एतादृशे विषये प्रकृत्यर्थस्य चैत्रादेर्न प्रथमाऽर्थैकत्वादौ अन्वयः । प्रकृतिप्रत्ययार्थयोः व्युत्पन्नस्य भेदान्वयस्य बाधात् अभेदान्वयस्य चाव्युत्पन्नत्वात् । अतः प्रातिपदिकं तत्र प्रथमाऽर्थविशेषतात्पर्यग्राहकमेव । प्रथमोपस्थापितस्तु स एव आख्यातार्थभावनाऽन्वयी ।

न चैवमाख्यातपदाभावे तस्य अनन्वयः, 'काष्ठे रोदनम्' इत्यादौ क्रियापदाध्याहारेणैव 'नीलो घटः' इत्यादावपि 'अस्ति' इत्यध्याहारानुशासनविहिततया सुतरामुपपत्तेः । नीलपदस्यापि यथाप्रमाणरीत्या नीलगुणे नीलत्वजातौ वा शक्तस्य लक्षणया लक्षितलक्षणया वा नीलत्वावच्छिन्नगुणविशिष्टद्रव्यपरस्य तात्पर्यग्राहकत्वात् तदुत्तरप्रत्ययोक्तस्य तद्रूपस्यापि न घटेन सह अभेदेन अन्वयः । अपि तु घटपदेन अस्तीत्याख्यातोपात्तभावनायामेव । एकरूपत्वेन शाब्दबोधोपपत्तेः । इतरथा विशेषणवाचकनामार्थस्य अभेदसम्बन्धेन नामार्थान्तरान्वयकल्पना, तदुत्तरद्वितीयाऽऽदिविभक्तेरपि साधुत्वार्थत्वकल्पना, प्रकृत्यर्थस्य प्रत्ययार्थे अन्वयव्युत्पत्तेश्च विशेषणवाचकप्रकृतिभिन्नविषयत्वकल्पना इत्येव गौरवापत्तेः ।

न च नीलघटयोः अभेदानुभवानुरोधेन गौरवाङ्गीकरणमपि न दोष इति वाच्यम् । प्रथमाद्वयार्थस्य नीलगुणविशिष्टस्य घटस्य च कर्तृतासंसर्गेण शाब्दबोधे भावनाविशेष्यके जाते पश्चात् घटस्य परिच्छेदकीभूतगुणापेक्षाया गुणविशिष्टस्य च जात्यपेक्षाया मानसः अभेदानुभवः इति पार्ष्ठिकबोधमादाय अनुभवोपपत्तेः ।

न च शब्दात् अभासमानस्य अभेदस्य वेदोत्थज्ञानविषयत्वाभावात् 'अरुणयैकहायन्या' इत्यत्र आरुण्यस्य एकहायन्या अन्वयाकरणेऽपि दोषाभावापत्तिः, वेदार्थैकविषयकस्य मानसस्यापि ज्ञानस्य वेदतात्पर्यविषयतया वेदार्थत्वात् । नहि वेदपदवृत्तिविषयत्वं वेदजन्यशाब्दबोधविषयत्वमेव वा वेदतात्पर्यविषयत्वप्रयोजकम् । तथात्वे 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र शाब्दबोधे मन्त्राश्वाभिधानीसम्बन्धमात्रस्यैव विषयीकरणात् । तस्य च लिङ्गकल्प्यश्रुत्यैव सिद्धौ एतद्वाक्यवैयर्थ्यापत्तेः । तत्परिहारार्थं अनुमीयमानस्य लैङ्गिकश्रुत्यर्थस्यापि वेदतात्पर्यविषयत्वानापत्तेः परिसङ्ख्याफलकत्वानापत्तिः । अतो वेदापेक्षाकाङ्क्षाज्ञानविषयत्वमेव वेदतात्पर्यविषयत्वप्रयोजकम् । तच्च गुणविशिष्टद्रव्यस्य एकहायन्यादेश्च अभेदेऽपि अक्षतमेव । आवश्यकं चैतत् परेषामपि इष्टसामान्यसाधनत्वस्यैव लिङर्थत्वात् स्वर्गादिपदार्थस्य च कामनाविशेषणत्वेन इष्टे अभेदान्वयानुपपत्तेः. इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकामः इति शाब्दबोधस्य आवश्यकत्वात् । तदुत्तरं इष्टे स्वर्गाभेदबोधो मानस एव शास्त्रतात्पर्यविषय इति । एतादृशतात्पर्यविषयीभूतः एव च इष्टे स्वर्गभेदनिश्चयप्रतिबन्धः, न तु शाब्दबोध इति त्वयाऽपि अङ्गीकार्यं इति न ममैव तद्दोषावकाशः ।

यदि तु त्वया एतादृशदोषपरिहाराय स्वर्गादिसाधनत्वमेव शक्त्या लक्षणया वा लिङर्थः, स्वर्गादिपदं च तात्पर्यग्राहकं इत्यभ्युपेयते, तदा मयाऽपि नीलपदोत्तरप्रथमार्थस्य गुणविशिष्टद्रव्यस्य स्वाभिन्नघटवृत्तिकर्तृत्वसंसर्गेण भावनाऽन्वयः घटपदं च संसर्गेऽपि तात्पर्यग्राहकं घटपदोत्तरप्रथमाऽर्थस्य स्वाश्रयकर्तृत्वेन इति शक्यं वक्तुम् । ततश्च अभेदस्यापि शाब्दत्वोपपत्तेः ॥ कश्चिद्दोषः । केचित्तु

कृता विवरणेन कृत्यभिधानात् प्रथमोपपत्तेः । अतः कर्तृत्वाद्यभिधानमेव प्रथमाप्रयोजकम् । तच्च शक्त्या लक्षणया वा इत्यन्यदेतत् । तस्मात् अभिहितकारकं प्रथमाऽर्थः । न च 'प्रासादे आस्ते' 'पक्व भुङ्क्ते' इत्यादौ कृत्प्रत्ययेन अधिकरणत्वकर्मत्वयोः उक्तत्वात् प्रथमाऽऽपत्तिः, तिङ्निपाताभिहितकर्तृत्वकर्मत्वयोरेव प्रथमाऽर्थत्वात्, प्रासादे शयन सदित्यादावुत्तरयना अधिकरणत्वाभिधानेऽपि सप्तम्यविरोधात् । पक्व इत्यत्र क्तप्रत्ययेन कर्मत्वाभिधानेऽपि द्वितीयाया अविरोधाच । तिङ्निपातोदाहरणानि तु पूर्वमेव प्रदर्शितानि ।

ननु एवं तिङ्निपाताभिहिते कारके प्रथमा, तदनभिहिते तु तृतीयादिः इत्यर्थापत्तेः तिङर्थान्वयिनि चैत्रादौ प्रथमोपपत्तावपि कर्त्रर्थककृदुपात्तभावनान्वये विवक्षिते तृतीयाऽऽपत्तेः 'चैत्रेण पाचको भुङ्क्ते' इति प्रयोगापत्तिः । नहि कृदुपात्तभावनायां कारकाणामनन्वयः 'काष्ठैः स्थाल्या ओदनस्य पाचकः अत्र भुङ्क्ते' इत्यादौ काष्ठादीनामन्वयदर्शनात् । अतश्च तद्वदेव कर्तृकारकस्यापि अन्वयोपपत्तेः । तत्र च तिङुपात्तक्रियान्वयविवक्षाऽभावेन प्रथमाऽनुपपत्तेः कृदुपात्तक्रियान्वयित्वेन विवक्षितस्य चैत्रस्य तिङाद्यनभिहितकर्तृत्वार्थिका तृतीया दुर्वारा । एवं 'ओदन पक्वो भुक्तं चैत्रेण' इत्यपि द्वितीयान्तप्रयोगापत्तिः, कर्मत्वस्य पाकनिरूपितस्य तिङा अनुक्तत्वात् । शाब्दबोधश्च चैत्रकर्तृकपाकानुकूलकृत्याश्रयो भुङ्क्ते इति । यादृशं कर्तृत्वबोधश्च 'पचत्यनात् पचः' इतिवदानुपपन्नः । एवं 'ओदन पक्वो भुज्यते' इत्यत्रापि शाब्दबोधो यादृश कर्मत्वबोधश्च अनुसन्धेयः । इति चेत् । अनभिहिते इत्यस्य स्वान्वयिभिः कृदादिभिः अनभिहिते इत्यर्थात् । अतश्च तत्र कृता कर्तृत्वकर्मत्वयोरुक्तत्वात् न तृतीयाद्यापत्तिः । प्रथमायास्तु तदन्वय– ( कृदर्थक्रियान्वय– ) विवक्षाया निमित्ताभाव एव ( तिङ्निपातोपात्तकर्तृत्वकर्मत्वयोः प्रथमाभिहितयोः कृदर्थक्रियाया संसर्गासंभवात् ) ।

न चैवमपि तदन्वय– ( कृदर्थक्रियान्वय– ) विवक्षाया षष्ठ्यापत्तिः । 'अनभिहिते' ( पा० २।३।१ ) इत्यधिकारस्य प्रथमाविधायकसूत्रेण ( पा० २।३।४६ ) विच्छेदात् 'कर्तृकर्मणोः कृति' ( पा० २।३।६५ ) इति कर्तृषष्ठीविधायकसूत्रे अनुवृत्त्यभावात् इति वाच्यम् । मण्डूकप्लुतिन्यायेन तत्रापि तदनुवृत्तेः सर्वसम्मतत्वात् । अन्यथा 'चैत्रः पक्त्वा भुङ्क्ते' इति वक्तव्ये 'चैत्रस्य पाचको भुङ्क्ते' इत्यपि प्रयोगापत्तेः । अतः 'चैत्रः पाचकः' इति प्रथमान्तयोरुभयोरपि भुङ्क्ते इति क्रियायामेवान्वयः । परस्परमभेदान्वयश्चोभयत्र पूर्ववत् । यत्रापि क्रियापदाश्रवणं तत्रापि 'अस्तिर्भवन्तीपरः' ( महाभाष्यं २।३।४६ ) इत्यनेन अध्याहर्तव्यम् ।

न चैवं प्रथमायाः तिङ्निपातान्यतरसामानाधिकरण्यनिमित्तत्वेन 'चैत्रः पच् लट्' इति स्थितिदशायां तिङः अभावात् प्रथमानिमित्ताभावेन अप्रथमासमानाधिकरणपदस्वरूपस्य शतृशानचोर्निमित्तस्य सत्त्वात् 'लटः शतृशानचावप्रथमासमानाधिकरणे' ( पा० ३।२।१२४ ) इत्यनेन विशेषविधिना शतृशानचोरेव लटि प्राप्त्यापत्तेः तिङादेः लिडादिमात्रविषयत्वेनापि सामान्यविधिवशादुपपत्तेः लटि तिङः अभावापत्तिः इति वाच्यम् । एतादृशार्थस्य लटि शतृशानज्विधानमात्रेणैव सिद्धेः अप्रथमासमानाधिकरणे इतिपदवैयर्थ्यापत्तेः । तत्परिहारार्थं प्रथमायाः लटि अपि ज्ञापकत्वेन सिद्धेः, तस्याश्च प्रयोजकीभूततिङादिसामानाधिकरण्यं विना अनुपपत्तेः लटि तिङ्सिद्ध्युपपत्तेः । अत एव ज्ञापकेन भाविलिङादिकं निमित्तीकृत्य सर्वा एव विभक्तयो लटि भवन्ति इति ज्ञाप्यते । तत्र च प्रथमाभिन्ननिमित्तसामानाधिकरण्ये शतृशानचोः विधानेऽपि न तयोः पूर्वप्रमिततिङादिबाधकत्वम् । एवं च 'अप्रथमासमानाधिकरणे' इत्यस्य पर्युदासत्वेऽपि लटि तिङाद्युपपत्तिः । प्रसज्यप्रतिषेधत्वपक्षे तु सुतराम् ।

महाभाष्यकारीयाः लटि तिङन्तानुपपत्तिपरिहारास्तु दुरुपपादत्वात् इह न लिखिताः ।

सर्वथा तिङ्निपातोभयाभिहितकर्तृत्वकर्मत्वयोः प्रथमा इत्याह । तयोश्च द्वितीयाद्यर्थवदेव आख्यातोपात्तभावनान्वयः इति सिद्धम् ।

न च एवमपि प्रथमार्थस्य आख्यातार्थादौ एव अन्वयः, द्वितीयाद्यर्थेषु कृदाद्यर्थेऽपि इति कथं कार्यकारणभावैक्यं इति वाच्यम् । मुनयंमकारकयान्दत्वाव-

च्छिन्न प्रति लिङ्गान्तरगिपदजन्योपस्थितेः भावनाविशेष्यतासम्बन्धेन कारणत्वेऽपि प्रमाणान्तरजन्याभिहितत्वाद्युपस्थितिनिरूपकारणान्तरवशेन विशेषलाभोपपत्तेः इति दिक् । रहस्य. पृ. ५७-६७.

* प्रथमाऽऽदीनां तिसृणामुपसदां सङ्ख्यानामुक्त्वा अग्निचयने गदुपसदः । ५।२।२

* प्रथमोन्नमे ऋचौ त्रिरभ्यस्यावशिष्टानामभ्यासेन संख्यापूरणं सामिधेनीविवृद्धौ । १०।५।८।२७-३३.

* प्रथमाप्रयोजकं तु सर्वत्र कर्तृत्वोक्तिरेव । सा च कर्तृत्वप्रकारिका कर्तृत्वविशेष्यिका वा इत्यन्यदेतत् । रहस्य. पृ. १८.

* प्रथमाप्रयोजकविचारः । किञ्च सत्यपि संख्याभावनोभयसाधारण्येन उक्तविधप्रथमाऽन्तपदजन्योपस्थितेः कारणत्वे भवन्मते प्रथमातृतीयादिप्रयोजकं किम् ? न तावत् कर्माद्यभिधाने तत्प्रयोजके, तस्य त्वया अनङ्गीकारात् । नापि सङ्ख्याऽभिधानानभिधाने, सङ्ख्यायाः सर्वत्र आख्याताभिधेयत्वेन सर्वत्र प्रथमाऽऽपत्तेः द्वितीयाऽऽदिविभक्त्यभावप्रसङ्गात् ।

अथ तिङुपात्तसङ्ख्याऽन्वयित्वमेव प्रथमाप्रयोजकम् । तदन्वयश्च यगादिसमभिव्याहारसत्त्वे कृतिविषयव्यापारफलाश्रये कर्मणि, शबादिसमभिव्याहारे कृत्याश्रयात्मके कर्तरि । यादृशसमभिव्याहारे आख्यातस्य कर्तृवाचित्वं वैयाकरणमते, मीमांसकमते वा कर्तृलक्षकत्वम्, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृत्याश्रयरूपकर्तृगामित्वम् । यादृशसमभिव्याहारे च तयोर्मते कर्मपरत्वं तादृशसमभिव्याहारे तिङुपात्तसङ्ख्यायाः कृतिविषयव्यापारकर्मगामित्वम् । अतः तादृशसङ्ख्याऽभिधानमेव सङ्ख्याविशेषवाचिनामपदोत्तरप्रथमाप्रयोजकम् । तादृशसङ्ख्यानभिधानं तद्विशेष्यवाचिनामपदोत्तरकर्तृकर्माद्यभिधायकतृतीयाद्वितीयाऽऽदिविभक्तिप्रयोजकम् । अत एव भावाख्यातस्थले कर्तृकर्मगतसङ्ख्याऽनभिधानात् 'चैत्रेण सुप्यते' इति तृतीया । 'चैत्रेण पच्यते ओदनः' इत्यत्र कर्माख्याते कर्मवाचिपदे एव प्रथमा । 'चैत्रः पचति' इत्यत्र कर्त्राख्याते कर्तृवाचिपदे एव इति व्यवस्थालाभः इति चेन्न । तथात्वे 'चैत्रेण पाचकस्य पुत्रः, ओदनः पक्वस्य विक्लित्तिः' इत्यादिप्रयोगापत्तेः । कृत्प्रत्ययेन कर्तृकर्मगतसङ्ख्यायाः अनुक्तत्वात् । 'चैत्रस्य पाचकस्य पुत्रः, ओदनस्य पक्वस्य विक्लित्तिः' इतिप्रयोगानापत्तेः । 'चैत्रः पाचकः, ओदनः पक्वः' इति प्रयोगानापत्तिरपि । 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इत्यादावपि प्रथमाऽनापत्तेश्च । न च तत्र कृत्प्रत्ययेन, साम्प्रतम् इति निपातेन च कर्माद्यभिधानादेव प्रथमासिद्धिः । सङ्ख्याकर्मान्यतरानभिधाने च तृतीयाऽऽदिः इति सूत्रार्थ इति वाच्यम् । तथात्वेऽपि 'चैत्र इव गच्छति मैत्रः' इत्यादौ चैत्रे प्रथमाऽनापत्तेः । गच्छतीति तिङा चैत्रगतसंख्यायाः चैत्रगतकर्तृत्वस्य च अनुक्तत्वात् । यत्तु 'कृत्यनभिधाने तृतीया, फलानभिधाने द्वितीया, अभिधाने तु सर्वत्र प्रथमा' इति मतम्, तदपि न । भावाख्याते भावनाऽभिधानेन प्रथमाऽऽपत्तेः । कर्माख्यातेऽपि 'क्रियते' इति विवरणानुरोधेन कृतिवाचित्वस्य आवश्यकत्वात् प्रथमाऽऽपत्तेश्च । अस्मन्मते तु सत्यपि तिङो भावनावाचित्वे वक्ष्यमाणरीत्या कर्मादेः अपि लक्षणया अभिधानात्कृत्प्रत्ययेन साम्प्रतमिति निपातेन च शक्त्यैव कर्माद्यभिधानात् सर्वत्र प्रथमोपपत्तिः । साम्प्रतम् इति निपातेन 'योग्यः' इत्यर्थकेन कर्माभिधानात् । चैत्र इव इत्यादावपि इवशब्देन गमनकर्तृत्वरूपसादृश्याभिधानात् कर्त्रभिधानम् । 'चन्द्र इव मुखम्' इत्यादावपि अस्ति इति क्रियापदाध्याहारस्य आवश्यकत्वात् आह्लादकत्वावच्छिन्नसत्ताऽऽश्रयत्वरूपकर्त्रभिधानम् । अत एव क्त्वाप्रत्ययेनापि समानकर्तृकत्वाभिधानात् 'चैत्र पक्त्वा भुङ्क्ते' इत्यादौ चैत्रपदेऽपि प्रथमोपपत्तिः । न चैवं 'चैत्रेण पक्त्वा भुज्यते' इत्यत्र चैत्रपदे तृतीयाऽनापत्तिः, क्त्वाप्रत्ययेन कर्तुरुपादानात्, इति वाच्यम् । तत्र 'आत्मानमात्मना वेत्ति' 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिवत् करणत्वस्य तृतीयाऽर्थत्वात् । अत एव यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्वं इत्युक्तं भाट्टदीपिकायाम् । अस्ति चेदं 'चैत्र पचति, ओदनः पच्यते' इत्यादौ, चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेः निरुक्तक्रियापदेन अभिधानात् ।

'पाचकेन गम्यते' इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रिययैव अन्वयः, न तु पाकक्रियया, प्रथमं तस्या एव तस्मिन्नन्वयात्। अन्वयश्चात्र प्राथमिकशाब्दबोधविषयीभूत एव विवक्षितः। तेन 'औदुम्बरो यूपो भवति, स्वर्गकामो यजेत' इत्यादौ यूपस्वर्गादीनां प्रथमया कर्मत्वादिलक्षणायामपि प्राथमिकयूपकर्तृकभवनाऽऽश्रयत्वादिशाब्दबोधे कर्तृत्वस्य उक्तत्वात् प्रथमोपपत्तिः। न च तत्र प्रमाणाभावः, तथात्वे धर्मिज्ञानाभावेन वैयर्थ्यप्रतिसन्धानाभावात् तात्पर्यज्ञानाभावेन लक्षणाऽनुपपत्तेः। अत एव यत्र अन्वयानुपपत्त्यैव लक्षणा, तत्र लक्षणाजन्यशाब्दबोधस्यैव प्राथमिकत्वात् तत्र च तत्कर्तृत्वानुक्तौ प्रथमान्तपदस्य अयोग्यत्वमेव। यथा 'अग्निना चैत्रः पाके यतते' इत्यर्थे 'अग्निश्चैत्र (संशोधनमिदम्) पाके यतते' इति। अत्र हि प्रथमायाः करणत्वलक्षणया शाब्दबोधः। अत्र हि अन्वयानुपपत्त्यैव करणत्वलक्षणा। अतः तत्र लक्षणातः पूर्वं शाब्दबोधाभावात् अयमेव बोधः प्राथमिको वाच्यः। न च तदानीं भासमानं करणत्वं स्वान्वयिक्रियाप्रतिपादकेन यतते इति पदेन उक्तम्। ननु यतते इत्यनेन उक्तं कर्तृत्वम्, न तदग्निवृत्ति, इति प्रथमाप्रयोजकरूपाभावात् तत् वाक्यं तस्मिन्नर्थे असाधु। उक्तविधं तद्वृत्ति कर्तृत्वं न कर्माख्यातेन अभिहितं इति पुनैत्य तत्र तृतीया।

एवं 'चैत्रेण भुक्त्वा गम्यते' इत्यत्र चैत्रस्य भुजिक्रियायां अनन्वयात् गमनक्रियायामन्वयाङ्गीकारेण तृतीयोपपत्तिः। एवं च 'पक्त्वा ओदनो भुज्यते' इत्यादौ पचिधातोः कर्माकाङ्क्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्। नहि 'प्रधानक्रियायां युक्तस्य कारकस्य गुणभूतक्रियायामपि उक्तिः' इति नियमे प्रमाणमस्ति, येन अध्याहारं विनाऽपि वाक्यं पूर्येत। तथात्वे 'ओदनं भुक्त्वा शास्त्रं पठ्यते' 'श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना' इत्यादौ द्वितीयाप्रयोगो नोपपद्येत। अतः सकर्मकधातूत्तरक्त्वाप्रत्ययस्थले द्वितीयाऽन्तौदनपदाध्याहारेऽपि कर्तृविशेषवाचिपदं विनाऽपि शाब्दबोधोपपत्तेः 'चैत्रेण भुक्त्वा गम्यते' इति प्रयोगापत्तिः इति विभाव्यते, तदा माऽस्तु क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वकालत्वयोः शक्तिः। किंतु भावकृत्त्वात् भाव एव। तस्यैव उत्तरक्रियायां समानकर्तृकत्वपूर्वकालत्वसम्बन्धेन अन्वय इति। एवं च 'मैत्रः पक्त्वा चैत्रो भुङ्क्ते' इति अपप्रयोग एव। 'प्रधानक्रियायां युक्तस्य कर्तृकारकस्यैव गुणभूतक्रियायामपि उक्तिः' इति नियमाङ्गीकारेण वा तस्य साधुत्वम्। प्रधानक्रियायां चैत्रः कर्तृत्वेनान्वये क्त्वाप्रत्ययस्यापि समानकर्तृकत्वादौ लक्षणा इति वा ध्येयम्। अत एव 'चैत्रेण पक्त्वा चैत्रो भुङ्क्ते' इत्यपि अपप्रयोगः। अत एव 'मयैव पक्त्वा मयैव भुज्यते' इत्यत्रापि कर्तर्येव तृतीया। 'पक्त्वौदनो भुज्यते' इत्यादौ कर्मकारकाध्याहार एव। 'ओदनं भुक्त्वा शास्त्रं पठ्यते' इत्यादयः प्रयोगाश्च सुगमोपपादाः। एवं 'पचनी स्थाली, दानीयो ब्राह्मणः, कुठारः करणम्' इत्यादौ अधिकरणत्वादेः कृदुक्तत्वात् प्रथमोपपत्तिः। न चैवमपि यत्र तिङन्तोपरि 'पचतितराम् पचतिकल्पं पचतःकल्पं पचन्तिकल्पम्' इत्यादौ अतिशयार्थकः ईषदसमाप्त्यर्थको वा प्रत्ययः कृतः, तस्य तद्धितत्वेन प्रातिपदिकसंज्ञया प्रातिपदिकार्थमात्रविवक्षायां प्रथमान्तत्वात् तत्र प्रथमाप्रयोजकरूपाभावः, तद्वृत्तिकर्तृत्वस्य तिङा अनुक्तत्वात्। ईषत्त्वाद्याश्रयस्य भेदसम्बन्धेन पाकभावनायामेव अन्वयात् इति वाच्यम्। तादृशस्थले धातोरेव ईषदसमाप्त्यादौ लक्षणाङ्गीकारात्। कल्पबादिप्रत्ययस्य लक्षणातात्पर्यग्राहकत्वमात्राङ्गीकारेण तदर्थान्वयस्यैव अनङ्गीकारे तत्रत्यप्रथमायाः साधुत्वमात्रार्थत्वात्। अत एव शाब्दबोधजनकप्रथमायाः एवेदं प्रयोजकम्, न तु साधुत्वार्थायाः। तस्यास्तु प्रथमाऽनिकृते कारणाभाव एव (प्रयोजक)। इदं च अबुद्धिविषये, सम्बोधनप्रथमायाः स्वतन्त्रविधेयत्वात्। अत एव तद्वृत्तिकर्तृत्वानभिधानेऽपि 'त्वं मैत्रः पचसि' इति प्रयोगः।

केचित्तु कृदादिभिः अनभिहितत्वमेव तृतीयाऽऽदिविभक्तिप्रयोजकम्। प्रथमायां तु कर्तृत्वाभिधानं कर्तृत्वाद्यविवक्षा च प्रयोजिका। अतश्च पचतिकल्पं इत्यादौ विभक्त्यर्थाविवक्षया प्रातिपदिकार्थमात्रविवक्षायां प्रथमोत्पत्तावपि बाधकाभावः। अत एव अविवक्षा-

विरहविशिष्टानभिधानं तृतीयाऽऽदिप्रयोजकम्, तदभावः प्रथमाप्रयोजकः इत्येवानुगमः ।

न चैवमपि प्रकारतया करणत्वाद्यविवक्षायां भवन्मते करणत्वादिसंसर्गेण काष्ठादीनां भावनाऽन्वयापत्तेः 'चैत्रः काष्ठानि स्थाली ओदनः पचति' इति प्रयोगाऽऽपत्ति । परमते तेषां धात्वर्थे अन्वयात्, तत्र च अभेदसंबन्धेनैव नामार्थान्वयात् न तथा प्रयोगापत्ति । तेषामपि 'दधि पश्यति' इत्यादिवत् काष्ठकरणकलक्षणया प्रयोगापत्तिरनिवार्यैव । भवन्मते तु सर्वस्य आख्यातार्थे एवान्वयात् तत्र च नामार्थस्यापि चैत्रादेः भेदसंसर्गेण अन्वयाङ्गीकारात् काष्ठादीनामपि अन्वयोपपत्ति इति वाच्यम् । एतादृशप्रयोगापत्तिभयादेव मयाऽपि स्वतोऽपकृदाद्यनभिहितकारकरूपार्थविनाभिन्ननामार्थस्य तद्गतलिङ्गसंख्यादेर्वा क्रियासम्बन्धे सुबुपात्तलिङ्गसंख्यान्यतिरिक्त द्वितीयादिविभक्त्युपस्थितार्थद्वारकत्वं तन्त्रम् इति नियमस्य कल्पनात् । स्वपदं स्वान्वयिक्रियापरम् । अत्र नामार्थस्यापि चैत्रादेः 'चैत्रः पचति' इत्यादौ साक्षादेव क्रियान्वयात् भिन्नेत्यन्तम् । 'पाचकमानय' इत्यादौ कृदाद्यभिहितकारकवाचिनोऽपि पाचकपदस्य आनयनानुकूलतो अन्वये द्वितीयोपस्थापितकर्मत्वद्वारकत्वस्य आवश्यकत्वात् स्वपदेत्युक्तम् । पाचक पक्व इत्यादावपि लक्षणया भावनाबोधस्य वक्ष्यमाणत्वात् तत्र काष्ठादीनामन्वये करणत्वादिबोधकतृतीयादि आवश्यकम् । अत एव एतन्नियमानुरोधेनैव कौस्तुभादौ प्रातिपदिकार्थस्य सुबुपात्तलिङ्गसंख्ययोश्च साक्षात् भावनान्वयः स्वीकृतः । अतः पचतिकल्प इत्यादौ प्रातिपदिकार्थमात्रविवक्षायां प्रथमा इत्याहुः ।

तन्न । एवमपि ईषदसमाप्तेः कल्पप्प्रत्ययवाच्यायाः भावनया सह भेदसंबन्धविवक्षया षष्ठ्यापत्तेर्दुर्वारत्वात् । ईषदसमाप्तेरपि तादृशनामार्थतया निरुक्तक्रियासंबन्धे द्वितीयादिविभक्त्यर्थद्वारकत्वाभावात् व्यभिचारापत्तेश्च । अत अन्यत्र व्याकरणस्य वृत्तिबोधकत्वेऽपि मन्त्रे तात्पर्यग्राहकतामात्रपरत्वं इति युक्तमुत्पश्याम ।

केचित्तु पचतिकल्प इत्यादौ तिष्ठति इत्यध्याहारात् 'पाकभावनानुकूलः ईषदसमाप्तिः तिष्ठति' इत्यर्थः । असिद्धं पक्षे पचति इति तिङर्थोऽपि कल्पप्प्रत्ययार्थेन भेदसंबन्धेन अन्वेति एकपदोपात्तत्वात् । अतश्च कल्पप्प्रत्ययस्य वाचकत्वेऽपि तस्य तिष्ठति इत्यत्रैवान्वयात् प्रथमोपपत्ति इत्याहुः । तन्न । बहुत्वविवक्षायां पचन्तिकल्पाः इत्यस्यापि आपत्तेः ।

एवं चास्मन्मते सर्वत्र प्रथमाप्रयोजकरूपलाभः सुगमः, न तु भवन्मते इति सिद्धम् । रहस्य. पृ. १०–१५

* प्रथा प्रथुता, कपालेष्वधस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रस्तारणम् । इदं यावत् कपालं पुरोडाशो तत् कर्तव्यम् । वि. १०।१।१७

* प्रदानं अनदनीयानां (अपि) कृष्णलानां क्रियते । भा १०।२।३।१६. * प्रदानमाहुत्या आग्नेयस्य पशुद्वयस्य । ११।१।११।६८–७१.

‡ प्रदानं चापि सादनवत् । १०।५।२२।७५ ॥

ज्योतिष्टोमे फलविशेषार्थं आश्विनग्रहस्य उत्कर्षः श्रुतः । तत्र आश्विनादीनां ग्रहाणां ग्रहणं सादनं च ऐन्द्रवायवात् प्राक् इत्युक्तम्, अथ सादनवत् प्रदानं चापि ऐन्द्रवायवात् प्राक् कर्तव्यम् । आश्विनं हुत्वा तत ऐन्द्रवायवो होतव्य इति पूर्वः पक्षः ।

न वा प्रधानत्वाच्छेषत्वात् सादनं तथा । ७६ ॥

पूर्वपक्षं वाशब्दो व्यावर्तयति । प्रदानं न प्रतिकर्षव्यम् । प्रदानस्य प्रधानत्वात् । नहि प्रदानं ग्रहणशेषः । सादनं तु ग्रहणशेषत्वात् तथा प्रतिकर्षार्हम् । तस्मात् प्रदानस्य न प्रतिकर्षः । इति सिद्धान्तः । के.

* प्रदानं पञ्चप्रकारस्य मुख्यम् । अवदानं तु तदङ्गम् । वि. ५।४।२, * प्रदानवचनात् कृष्णलानां अनदनीयानामपि क्रियते । १०।२।२ * 'प्रदानानि जपो होमो मार्गहोमादयस्तथा' धर्मा एव । वा. ३।१।२।७ पृ २०५, * प्रदानानि हि विवर्धन्ते (ज्योतिष्टोमात् उक्थ्यादिषु मखासु) । भा. ३।३।११।२९. * प्रदानस्य ग्रहणशेषः । ग्रहणस्य च सादनं शेषः । वि. १०।५।२२. * प्रदानस्य नापकर्षः ग्रहणप्रतिकर्षेऽपि । १०।५।२२। ७५–७६. * प्रदाने संशयितपदेवतात्वात् तन्त्रत्वमेव । भाट्ट. ५।२।२. * प्रदानेषु अविहितस्वाहाकारेषु स्वाहाकारविधानम् । वि. १०।८।१०.

* प्रदानान्तमवदानमेकः पदार्थः। 'चतुरवत्तं जुहोति' इति अवत्तहोमो विधीयते। न चाकृत्वावदानं अवत्तहोमसंभवः इति चावदानं न विधातव्यम्। 'द्विर्हविषोऽवद्यति' इत्यर्थप्राप्तस्यावदानस्य विशेषमात्रविधानम् 'हविषो द्विः' इति। शा. ५।२।४।६-९। चतुरवत्तवाक्ये 'यच्चतुरवत्तम्' इत्यनूद्य तत्संस्कारतया होमविधिः इति पक्षं अवत्तविशिष्टहोमविधिपक्षं च दशमे वक्ष्यति। तत्र प्रथमपक्षेण प्रदानान्तत्वं प्रस्तुताधिकरणप्रतिपाद्यम्। सोम. * प्रदानान्तमवदानं एकः पदार्थः। न तु उपस्तरणं अवदानं अभिघारणं होमः इति प्रत्येकं पृथक् पदार्थः। अयं प्रदानान्तानुसमयः अग्नेयाग्नीषोमीयपुरोडाशादौ। वि. ५।२।४. * प्रदानान्तेन अवदानादिना (होमान्तेन) अनुसमयः दर्शपूर्णमासयोः आग्नेयादौ। ५।२।४।६. * प्रदानान्तेन दैवतावदानादिना अनुसमयः भिन्नदैवत्ये पशुगणे। भाट्ट. ५।२।६.

* प्रदानार्थं ग्रहणम्। तादर्थ्येन ग्रहणं होमयोग्यं भवति। भा. १०।५।२१।७२. * प्रदानार्थो पनङ्कारः। के.

* प्रदानोपक्रमाः प्रदानार्थमेव क्रियन्ते अवदानाभिधारणादयः। भा. ५।४।२।२-४.

**सू. प्रदानदर्शनं श्रपणे तद्धर्म भोजनार्थत्वात् संसर्गाच्च मधूदकवत्। १।४।९।३२॥**

अग्निष्टोमे 'आदित्यः प्रायणीयः पयसि चरुः' इति आम्नायते। अदितिर्देवता अस्येति आदित्यः। तत्र पयसि प्रदानधर्माः पयोधर्माः कर्तव्या न वेति विचारे पूर्वपक्षमाह। श्रपणे, चरोः पयसा सह श्रपणे सति प्रदानस्य यागस्य दर्शनं चरोरिव पयसोऽप्यस्ति। चरुपयसोः भोजनार्थत्वात् यागार्थत्वात्, संसर्गाच्च उभयोः। पयः तद्धर्म प्रदानस्य धर्माः यस्मिन् तत् तद्धर्म प्रदानधर्मकं स्यात्। मधूदकवत् चित्रायागे दधिमधुपयसां यथा संसर्गस्तद्वत्। तस्मात् पयसि प्रदानधर्माः कर्तव्याः।

**संस्कारप्रतिषेधश्च तद्वत्। ३३॥**

पूर्वपक्षे युक्तिमाह। संस्काराणां केषाञ्चित् प्रतिषेधः इतरेषां प्राप्तेर्लिङ्गम्। प्राप्तिपूर्वकत्वात् निषेधस्य। 'अयज्ञुषा वत्सानपाकरोति, अपवित्रेण गा दोहयति' इति वत्सापाकरणे यजुर्मन्त्रस्य निषेधः दोहने च पवित्रस्य निषेधः वत्सापाकरणादीनां प्राप्तिमेव सूचयति। तस्मात् पयसि प्रदानधर्माः कर्तव्याः। तद्वत् भोजनार्थत्वसंसर्गौ पूर्वोक्तौ हेतू यथा प्रदेयधर्मसाधकौ तद्वत् प्रतिषेधोऽपि प्रदेयधर्मसाधकः इति।

**तत्प्रतिषेधे च तथाभूतस्य वर्जनात्। ३४॥**

पूर्वपक्षे युक्त्यन्तरमाह। तत्प्रतिषेधे पयसः प्रतिषेधे च तथाभूतस्य पयसा संसृष्टस्यापि वर्जनात्, यथा वा 'तैले पीतं पानीयं न पेयम्' इति प्रतिषेधे पानीयमिश्रितमपि न पीयते। तत्सामान्यदर्शनेन चरोः प्रदेयत्वे तत्संसृष्टस्य पयसोऽपि प्रदेयत्वं स्यात्। इति पयसि प्रदेयधर्मा वत्सापाकरणादयः कर्तव्याः। पयसः अप्रदेयत्वे वा चरोरपि अप्रदेयत्वं स्यात्।

**अधर्मं त्वप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः। ३५॥**

सिद्धान्तमाह। तुशब्दः पूर्वपक्षं व्यावर्तयति। अधर्मं तु अप्रदानात् इति पदच्छेदः। पयः अधर्मं अविद्यमानाः धर्मा अस्य इति अधर्मं। बहुव्रीहिः, अनिच् समासान्तः। प्रदानधर्मशून्यं स्यात् पयः। अप्रदानात् पयसः प्रायणीये स्वातन्त्र्येण प्रदानं नास्ति। प्रणीतार्थे विधानात्। अत्र पयः प्रणीतार्थे विहितम्। प्रणीतास्थाने पयः क्रियते अर्थात् चरुश्रपणार्थं पयः। आपः प्रणीता अपि पिष्टसंयवनार्था एव भवन्ति पौर्णमासादौ। यद्यपि प्रदेयेन चरुणा सह पयसः संसर्गोऽस्ति, तथापि चरुपयसोः अतुल्यत्वम्। प्रत्यक्षतः अधिकरणत्वेन पयः श्रूयते, प्रदेयत्वेन चरुः। तस्मान्नाय प्रदेयत्वेन संसर्गः। विद्यमानोऽपि संसर्गः प्रदेयत्वेन तुल्यत्वाभावात् असंसर्ग एव। तस्मात् पयसि प्रदेयधर्मा न कर्तव्याः।

**परो नित्यानुवादः स्यात्। ३६॥**

पूर्वपक्षे 'संस्कारप्रतिषेधश्च' इति सूत्रेण यत् लिङ्गमुक्तम्, तत्रोत्तरमाह सिद्धान्ती। 'अयजुषा वत्सानपाकरोति' 'अपवित्रेण गा दोहयति' इति परः परेण सूत्रेण उक्तः संस्कारप्रतिषेधः नित्यानुवादः स्यात्।

विहितप्रतिषेधो वा। ३७॥

तत्र अन्यदुत्तरमाह सिद्धान्ती। केषाञ्चित् 'अयुपा वत्सानपाकरोति', 'पवित्रवति गा दोग्धि' इति यत् विहितम्, तस्य प्रतिषेधोऽयं 'अयज्ञुपा वत्सानपाकरोति' 'अपवित्रवति गा दोग्धि' इति। अत्र प्रतिषेधः अर्थबलेन भवति।

पर्जन्ये गुणभावित्वात् तदुक्तप्रतिषेधात् स्यात् कारणात् केवलाशनम्। ३८॥

पूर्वपक्षे यत् सामान्यतोदृष्टमुक्तम् 'तत्प्रतिषेधे च तथाभूतस्य वर्जनात्' इति, तन्निरासार्थमाह सिद्धान्ती। लोके प्रायशः पयसो भोजनादौ गुणभावित्वात् गुणभूतत्वात् अप्रधानत्वात् 'पयो न सेवनीयम्' इति वर्जने निहिते उक्तप्रतिषेधात् पूर्वपक्षिणा उक्तस्य पयःसचिवस्य पयःसम्पृक्तस्यापि प्रतिषेधो भवति इति तत् पयः सर्वथा वर्ज्यते। ननु लोके केवलमपि पय उपभुज्यते। सत्यम्। कारणात् केवलाशनम्। व्रतं औषधं वा यस्य विहितं भवति, तस्य तस्मात् कारणात् केवलस्य पयस अशनं भवति। प्रायणीये तु अधिकरणत्वेन चरुश्रपणार्थमेव पयो विहितम्, इति चरोः प्रदेयत्वेऽपि पयसः तुल्यत्वाभावेन न प्रदेयत्वमिति।

व्रतधर्माच्च लेपवत्। ३९॥

पूर्वपक्षे 'तत्प्रतिषेधे च' (१।४।१।३४) इत्यादिना सूत्रेण यत् सामान्यतोदृष्टमुक्तं तत्परिहार प्राचीनमतेनाह। व्रतधर्मान् यथा लेपोऽपि वर्ज्यते। 'ब्रह्मचारिणा मांसं न भक्षयितव्यम्' इत्युक्ते दर्विगतमपि लेपं वर्जयन्ति। तद्वत् 'पयो न सेव्यम्' इत्युक्ते पयःसिक्तं पयसा संसृष्टमपि वर्जयन्ति इति। प्रायणीये तु पयसः अप्रदेयत्वे चरोरपि अप्रदेयत्वस्वीकारे चोदनापत्तिः एव स्यात्। तस्मात् चरोः प्रदेयत्वं स्वीकार्यमेव। पयसः अधिकरणत्वेन निर्देशात् न प्रदेयत्वम्।

रसप्रतिषेधो वा पुरुषधर्मत्वात्। ४०॥

पूर्वपक्षे 'तत्प्रतिषेधे च' इति सूत्रेण यत् सामान्यतोदृष्टमुक्तम्, तस्य परिहारः प्राचीनमतेन 'व्रतधर्माच्च लेपवत्' इति कृतः। तं दूषयति सिद्धान्ती। नैष परिहारः संभवति इति वाक्यार्थः। 'ब्रह्मचारी मांसं वर्जयेत्' इति मांसरसस्यापि प्रतिषेधः रसप्रतिषेधः। तावदपि मांसस्य न भक्षयितव्यं यावति मांसरसमात्रं निर्दिष्टं भवति। तत्र चादृष्टं फलम्। पयःप्रतिषेधे तु न किञ्चिददृष्टम्। तेन भोजनात्राय अल्पस्यापि वा पयोबिन्दोर्भक्षणे श्लेष्मरोगादि दृष्टमपि नास्ति। तेन विषमो दृष्टान्तो लेपवत् इति। सर्वथाऽपि तु पयसः अप्रदेयत्वेऽपि चरोरप्रदेयत्वप्रसङ्गो न सम्भवति, चरोः प्रदेयत्वे वा पयसः प्रदेयत्वं न संभवति इति प्रायणीये पयसि प्रदानधर्मा वत्सापाकरणादयो न कर्तव्याः इति सिद्धान्तः। के.

* प्रदानधर्माः ज्योतिष्टोमे प्रायणीयेष्टौ पयसि नानुष्ठेयाः। ९।४।१।३२–४०.

* प्रदानधर्मानुष्ठानं अभ्युदितेष्टौ दधिपयसोः। १।४।१०।४१–४२.

* प्रदानभेदः कृष्णग्रीवयोः व्यवहितयोः। ११।१। ११।६८–७१. * प्रदानभेदः भिन्नगुणकदेवताभेदे। संकर्ष. २।२।१९. मीको. पृ. २३१२ 'नानाप्रदानाभिकरणम्' इत्यत्र द्रष्टव्यम्।

* प्रदीपस्य वेदिकाऽर्थं निर्मितस्य अर्थसिद्ध मार्गदर्शकत्वमविवार्यम्। एतादृश. प्रसङ्गपदार्थः। वि. १२।२।१. * प्रदीपानां कार्तिकशुक्लप्रतिपदि दान सदाचारः। सु. पृ. १८७.

☒ प्रदीपे प्रदीपं प्रज्वाल्य तमोनाशाय यतमान इति न्यायः। प्रदीप प्रज्वाल्य प्रदीपे तमोनाशाय यतमानः इत्यर्थः। लघोरुपायात् साध्यसिद्धौ भवन्त्यां गुरौ उपाये प्रवर्तमानस्य इदं दोषोद्भावनम्– प्रदीपे प्रदीप प्रज्वाल्य तमोनाशाय यतमानस्येव एव इति। अयं काव्यदीपिकायाम्। साहस्री ६९१.

☒ प्रदीपन्यायः। अयं न्यायः यत्र अन्योन्यविरुद्धानामपि संभूयैककार्यकारित्वम्, तत्र सञ्चरति। यथा हि वर्तितैले अग्निविरोधिनी, वर्तितैलाग्नयः सर्वे परस्पर विरोधिनः संभूयैकं प्रकाशलक्षणं कार्यं कुर्वन्ति, तथा सत्त्वरजस्तमांसि परस्परं विरुद्धान्यपि संभूयैकं देहारिक प्रवृत्त्यादिकं च कार्यं जनयन्तीति। साहस्री. १०३.

● प्रदीपप्रभाप्रभृतीनां कथञ्चित् प्रत्यक्षत्वादुपपत्तेते ( सङ्कोचविकासौ ) । न च प्रदीपप्रभायाः सङ्कोचो भवति, शरावादिच्छादने शेषप्रभाविनाशात् । अनावृता हि ज्वाला आत्मसमीपे प्रभामण्डलमारब्धु समर्था, नाच्छादिता । एतेनैव च विकासोऽपि प्रत्युक्तः । अन्ये एव हि अवयवा तत्र प्रचीयमाना विस्तारं जनयन्ति न तावतामेव विकासः । स्पर्शवत्ता च परस्परदेशप्रति बन्धात् देशान्तरव्याप्त्या विकाशो घटते । वा. २।१।१।५ पृ ४७३.

● प्रदीपवत् । यथा प्रासादे कृतः प्रदीपः सन्निधानात् राजमार्गेऽप्युपकरोति, एव पश्चादपि क्रियमाणानि अङ्गानि संनिधानात् पुरोडाशस्य उपकुर्वन्ति । भा. १२।१।१।३, ● नियमाङ्गा प्रदीपवत् । तथा, प्रदीप एकस्मिन् प्रदेशे भुञ्जानाना ब्राह्मणानामेकस्य सन्निधौ प्रज्वलितः सर्वेषामुपकार करोति । १२।१।१०।६१.

● 'प्रदेशान्तरसिद्धेन लक्षणेनानुगम्यते । देशान्तरस्थित शब्दो लक्ष्यमूतोऽन्यशब्दवत् ॥' वा १।३।८।२४ पृ. १६०.

● 'प्रद्वेषाद् वेदपूर्वत्वमनिच्छन्तः कथञ्चन ।' ( शाक्यवैशेषिकादय. 'अस्माकमागम' नित्यः' इति आहुः ) । वा. १।३।६।१२ पृ. २२५.

● प्रधानं अन्यत्र, अङ्गमन्यत्र उत्पन्नम्, तत्र अङ्गस्य केन भेदेन व्यपदेशोऽस्तु इति चिन्ता । ततश्च प्रधानभेदेन व्यपदेशः इति निर्णय. । वा. ३।३।२।९ पृ. ८१४. ● प्रधानप्राधान गुण. सामगानम् । भा ३।३।२।९ पृ. ८१०, ● प्रधानमावर्तयितु गुणा न शक्नुवन्ति । ११४।१०।२६. ● प्रधान गुणव्यपेक्षमिति नियम । मणि. पृ ११४.

● 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति । ( अङ्गमाकृष्यमाण [illegible] नाङ्गान्तरमर्हति ॥' ) । वा २।२।३।६ पृ. ४८६ । अयमेव अङ्गाकर्षणन्याय. प्रधाननयनन्यायश्च । ) इति न्यायेन आवश्यकस्तोत्रत्वानुरोधेन च साङ्गस्यैव रथन्तरस्य रथन्तरपदेन लक्षणया विधानात् विश्वजिति पवमानापूर्वसाधनत्वोपपत्तिः । भाट्ट. १०।६।५. ● 'प्रधान नीयमानम्०' इति न्यायेन रथन्तरादिधर्माणा आवश्यकस्तोभादीना पवमानादिकार्यान्तरोपयोगिरथन्तरादिसाधनत्वेनापि प्राप्तिरविरुद्धा । भाट्ट. ७।३।३, ● अत्र ( कृष्णलचरौ ) मुख्यश्रपणाभावात् नान्ये ( श्रयणात् ) श्रपणधर्माः कार्या, अपि तु अग्निसंयोगाङ्गभूत एव, 'प्रधानं० कर्षति' इति न्यायेन । १०।२।१, ● पौष्ण पेषणं चरौ पुरोडाशे न स्यात् उत चरावेवेति चिन्तायां पेषणस्य कर्मान्तरत्वाभावेन धर्माणां 'प्रधान नीयमान०' इति न्यायेन प्राकृतपेषणाङ्गत्वा प्राप्ताना अत्रैव अदृष्टत्वकल्पनायोगात्प्रकृतावत्र कल्पन न दोषाय । ३।३।१४, ● यैर्विना रथन्तरमेव पठितु न शक्यं यथा स्तोभादिभि', तेनेतराक्षेपकत्वे प्रमाणाभावात्, यदा तदाश्रयभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन्, तदा तदङ्गभूतस्तोभादीना 'प्रधान० कर्षति' इति न्यायेन अनुष्ठाने न काचन क्षतिः । ९।२।१६. ● यत्र विकृतिविशेषे अपूर्वार्थं समिधाद्युना॰ अवश्यम्, तत्रापि तन्मूलपातादिसंस्कारकाया आवृत्ते' सन्निधानाङ्गत्वेन 'प्रधान नीयमान०' इति न्यायेन प्राप्तेः यवनन्योऽनुष्ठान अभ्यासापिकरणीयावृत्तिविधिपूर्वपक्षे प्रयोजनम् । कौ. २।२।२।२ पृ. १५२. ● प्रधान प्रति यत् फलवत् करोति, तदङ्ग नाम । भा. १२।१।५।१६, ● प्रधान प्रतिगुण न भिद्यते प्रतिप्रधान तु गुणो भिद्यते । ३।१।६।१२ पृ. ६९७, ● प्रधान फलवत् । ४।४।१२।२९ ● 'प्रधान फलसंबन्धि, तत्सम्बन्ध्यङ्गमिष्यते ।' ( तत्संबन्धि प्रधानसम्बन्धि ) । वा. २।१।१।१ पृ. ३७४. ● प्रधान सगुण स्यादिति अङ्ग गुणवत् क्रियते । तदेदङ्गे गुणवति क्रियमाणे प्रधान निर्गुणमापद्यते, कोऽर्थोऽङ्गेन गुणवता कृतेन ? । भा १२।२।९।२५, ● प्रधान हि फलाय वा क्रियते फल वदुपकाराय वा, नाङ्गाय । १२।३।४।१०, ● न सर्वं प्रधानम्, प्रधानार्थमपि किञ्चिदस्तीति । १०।३।१।१२, ● नहि प्रधान प्रधानेन अङ्गमङ्गेन सम्बन्ध याति । १०।८।१७।२९ . ● प्रतिप्रधान शाखाभेद. । वा. ३।१।७।१४ पृ ७८५, ● य फले चोद्यते स इतिकर्तव्यतया संबध्यमान इतिकर्तव्यतां प्रति प्रधानम् । ७।१।१।२ पृ. १५२६. ● यत फल तदेव प्रधानम् । भा ४।४।१२।

४०, * सगुण प्रधानं भवति । ६।४।६।२३ पृ. १४४२. * ' प्रधानान्यथ्यतोऽङ्गानामङ्गानि स्युरनुग्रहात् । स्यादन्योन्योपकाराच्च तेषामन्योन्यशेषता ॥ ' वा. ३।१।२।२ पृ. ६५६, * प्रधानानि हि फलं प्रति विधीयन्ते नेतिकर्तव्यतायाम्, अतस्तेषां फले विवक्षितं साहित्यं नेतिकर्तव्यतायाम् । इतिकर्तव्यतां प्रति तानि उद्दिश्यमानानि भवन्ति । ३।२।६।१९ पृ. ७६६, * प्रधानेन अङ्ग आप्यते । प्राप्तबाधोऽन्न । ३।३।७।१४ पृ. ८६०.

सू प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् । ४।३।१७।४१ ॥

' अग्निं चित्वा सौत्रामण्या यजेत ' ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इति श्रुतम् । अयं अङ्गप्रयोजनसम्बन्ध इति प्रागुक्तम् ( ४।३।१२।२९–३१ ) । तत्र सौत्रामणी चितमात्रे तन्मध्ये एव कर्तव्यः उत स्वकाले, एवं वाजपेयमध्ये एव बृहस्पतिसवः कर्तव्य उत स्वकाले वसन्तादौ इति विचारे पूर्वपक्षयति । अङ्गानां प्रधानेन सह अभिसंयोगात् अङ्गप्रधानयोर्नित्यसंबन्धात् अङ्गानां मुख्यकालत्वम् । मुख्यस्य काल एव कालो येषां तानि मुख्यकालानि अङ्गानि । मुख्यस्य यः कालः स एव अङ्गानां इति । तस्मात् अग्निचयनादौ असमाप्ते एव सौत्रामण्यादि कर्तव्यम् ।

अपवृत्ते तु चोदना तत्सामान्यात् स्वकाले स्यात् । ४२ ॥

तुशब्देन पूर्वपक्षं व्यावर्तयन् सिद्धान्तमाह । अपवृत्ते समाप्ते अग्निचित्ये क्रतौ वाजपेये वा चोदना । चित्वा इति चयनस्य पूर्वकालत्वबोधनेन चयनस्य साङ्गस्य समाप्त्युत्तरकालं सौत्रामण्याः, एवं इष्ट्वा इत्यनेनापि साङ्गवाजपेयसमाप्त्युत्तरकालमेव बृहस्पतिसवस्य चोदना विधिर्भवति । तस्मात् न चयनादिमध्ये सौत्रामण्यादेरनुष्ठानम् । किन्तु स्वकाले स्यात् अनुष्ठानम् । स्वकालश्च तत्सामान्यात् प्रकृतिसामान्यात् । सौत्रामण्याः इष्टिविकारत्वात् पर्वकालः स्वकालः । बृहस्पतिसवस्य च ज्योतिष्टोमविकारत्वात् वसन्तः स्वकालः । के.

* सर्वत्र सति संभवे गुणमतिलङ्घ्य प्रधानेनैव नित्यं संबन्धो । वा. २।१।१।१ पृ. ३७३. * ऐन्द्र्या गार्हपत्यम् ' इत्यत्र यथा न केवलया श्रुत्या विरोधः नैवं वाक्येनापि. तस्यापि गार्हपत्यसमीपे इत्येवमुपपत्तेः । अतश्चोभयविरोधसत्त्वेऽपि ' प्रधानेन व्यपदेशा भवन्ति ' इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् । भाट्ट. ३।३।७. * प्रधानैरपृथक् कालनामङ्गानां तन्त्रं न द्वादशाहे । भा ११।४।६ । २६–२९ मीको. पृ. २२०४ 'द्वादशाहे सुत्याकालीनानाम्०' इत्यत्र द्रष्टव्यम् । * 'प्रधानैरप्रयुक्तानि कुर्यान्नाङ्गानि कश्चन । ' वा. ३।१। २।२ पृ. ६५६. * प्रधानैः सह अङ्गानामेकदेशकालकर्तृकत्वम् । ११।२।२।३ , ८–१२,

सू प्रधानाग्न्यसंयुक्तात् सर्वारम्भाग्नियत्वानङ्गत्वात् । १०।१।३।५ ॥

राजसूये इष्टिपशुसोमदर्विहोमाः प्रधानभूताः । तत्र अनुमत्यादिषु इष्टिषु आरम्भणीया न कर्तव्या । अन्यसंयुक्तात् प्रधानात् सोमादियुक्तात् अनुमत्यादियागात् प्रधानभूतात् निवर्तेत आरम्भणीयेष्टिः । सर्वारम्भात् सर्वारम्भार्थेन ज्योतिष्टोमः समाम्नायते ' अग्निष्टोमं प्रथममाहरति ' इति । तेनैव अनुमत्यादीनां आरम्भार्थे सिद्धे न पुनः आरम्भणीया भवितुमर्हति । सर्वारम्भस्य अनुमत्याद्यनङ्गत्वात् । तस्मात् अनुमत्याद्यर्थं अन्वारम्भणीया न कर्तव्या इति सिद्धान्तः । के.

* प्रधानस्याङ्गस्य च धर्मविरोधे प्रधानधर्मस्यैवानुग्रहः । १२।२।९।२९. * प्रधानस्याङ्गस्य च वचनेन भिन्नदेशकालकर्तृकत्वमपि । ११।१।२।१. * प्रधानस्य अङ्गानुरोधेन संकोचो न युक्तः । ' इन्द्राय त्वा वसुमते गृह्णामि ' इत्यैन्द्रमन्त्रसाध्यस्यापि सोमग्रहणस्य मन्त्राभावे ध्यानादिनाऽपि स्मृतस्य अनुष्ठानोपपत्तेः न अङ्गभूतमन्त्रानुरोधेन प्रधानस्य सोमग्रहणस्य इन्द्रप्रदानमात्रसंकोचो युक्तः इति तृतीये ' लिङ्गविशेषनिर्देशात्० ' ( ३।२। ११।२८ ) इत्यत्र वक्ष्यते । सु पृ. ५२७–५२८, * प्रधानस्य अनुमन्त्रणानाकाङ्क्षत्वेऽपि अनुमन्त्रणाकाङ्क्षया आकाङ्क्षामुत्पाद्य विनियोगो भविष्यति । पृ. ११९८. * प्रधानस्योपकार ( याजमानाङ्गैः यपनादिभिः ) एव एव, यदस्य फलग्रहणाय योग्यः कर्ता क्रियते । वा. ३।७।२।६, * प्रधानस्य उपकारिणो ये धर्मास्ते अति-

दिश्यन्ते । प्रधानं हि चोदकोऽपेक्षते न धर्मान् । प्रधानस्य हि चोदकेन सम्बन्धो न धर्माणाम् । भा. ३।८।१६।३१. ● प्रधानस्य चोदिन्यमानस्य विशेषणम-विवक्षितम् । टुप्. ७।१।१।२ पृ. १५२६, ● प्रधानस्य पदान्तरमपेक्षमाणस्यापि भवति समासः । यथा राज-पुरुषो दर्शनीयः इति प्राधान्यात् पुरुषस्य दर्शनीयत्वम-पेक्षमाणस्य राज्ञा सह समासो भवति, एवं प्रयणौयोदय-नीययो. ऐकादशिनानपेक्षमाणयोरपि भवति समासः । १०।३।४।८. ● ' प्रधानस्य प्रयोक्तृत्वमप्रधानप्रयो-क्तृता । फलचिन्ता जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥ ' वि. प्रस्तावना १६. ● प्रधानस्य वेदान्तरीयस्य यत्र वेदा-न्तरीयमङ्गं भवति, तत्र प्रधानधर्मेणैव अङ्गं कर्तव्यम् ( इति तात्पर्यम् ) । वा. ३।३।२।९. ● प्रधानस्य साङ्गस्यानुष्ठानं ज्योतिष्टोमेऽवभृथे अप्सु । भा. ११।२।८।३०-३४, ● प्रधानस्य साङ्गस्य एकप्रयोगत्वम् । वा. ३।७।१।४, ● प्रधानस्य सिद्धस्य न गुणानु-रोधेन आवृत्तिः । ३।६।३।१० पृ. १०३६, ● भवति च प्रधानस्य सापेक्षस्यापि समासः ( महाभाष्य २।१।१ पृ.५ काशी ) । २।१।०।१७ पृ. ४२२, ● यदङ्गं प्रधानेन नियमेनापेक्षितं तादृशाङ्गत्वात् प्रधानस्य संकोचः । यत्तु अङ्गं प्रधानेन नियमेन अनपेक्षितं तादृशाङ्गत्वात् प्रधानस्य न संकोचः । अत एव ' इन्द्राय त्वा ' इत्यादि-मन्त्रसत्त्वात् ऐन्द्रप्रदानविषयतया होमस्य न संकोचः । किन्तु ऐन्द्रानैन्द्रसर्वप्रदानसाधारण्येन । अनैन्द्रप्रदानेषु मन्त्र विनाऽपि उपयुक्तरेण प्रकृतेरर्थोपस्थितिसंभवेन मन्त्रस्य ऐन्द्रप्रदानैर्नियमेनानपेक्षितत्वात् । अन्यथा तत्रापि ऐन्द्रप्रदानमात्रविषयतया संकोचः स्यात् इति बोध्यम् । सोम. १।४।१९. ● दोषकार्याणि यदि न शक्यानि, नाङ्गानुरोधेन प्रधानस्य गुणो बाधितव्यः । भा. ६।३।२०।४१, ● प्रधानानामङ्गानां चैकः काल इति कथ्यते ' अङ्गानि तु विधानत्वात्० ' इति । ४।३।१७।४०. ● प्रधानानामङ्गानां च समानकर्तृकत्वम् । वा. ३।८।७।१७. ● प्रधानानामङ्गानां वा अनेकेषां एकेन प्रयोग-विधिना उपसंहारात् अङ्गानां यत्र साहित्यावगम तत्र प्रदार्थानुसमयः कर्तव्य॰, न तु काण्डानुसमयः इति पदार्थानुसमयन्यायः । के. (५।२।१।१-३ ). ● प्रधाना-नामपूर्वाणां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः द्वितीये-ऽध्याये । के. ● प्रधानानामाग्नेयादीनामेकदेशकालकर्तृ-कत्वं दर्शपूर्णमासचातुर्मास्यादौ । ११।२।१।१-२,४-७. ● प्रधानानां गुणानुरोधेन आवृत्तिरयुक्ता । वा. २।२।२।१ पृ. ४६३. ● प्रधानानां तन्त्रेण स्वर्गः फलं दर्श-पूर्णमासादौ । ११।१।१।१-८. ● प्रधानानां धर्मान्वये साहित्याविवक्षा । सु. पृ. १०१६. ● ' प्रधानानां प्रधानैश्च विनाभावो न दृश्यते । तत्र स्यान्छेषशेषित्वं तेषामपि परस्परम् ॥ ' वा. ३।१।२।२ पृ. ६५४. ● प्रधानानां समवेतानामेकं फलम् । भा. ११।१।२।५. ● प्रधाने अनर्थकं सत् तदङ्गे अवतरति । ३।१।०. मीको. पृ. १२९ ' आनर्थक्यतदङ्गन्यायः ' इत्यत्र द्रष्टव्यम् । ● प्रधाने असम्भवन् पदार्थः तद्गुणे कल्प्यते, उदाहरणम् ( ३।१।६ ) । भा. ३।१।१२।२२ पृ ७३७, ● प्रधाने कार्यसम्प्रत्ययः । के. ● प्रधाने कृते शिष्टं सर्व-दीपनार्थसाधारणम् । भा. ६।४।२।२.

● प्रधाने गृहीते अप्रधानग्रहस्यान्याय्यत्वा-दिति न्यायः । यथा ' अयं समुद्रः ' इत्यत्र तरङ्गफेन-बुद्बुदादिप्रत्ययदर्शनमिति भावः । साहस्री ५३७.

● प्रधाने मुख्यशब्दः । भा. ७।१।१।१ पृ. १५२४, ● ' प्रधाने हि श्रुतं द्रव्यं नाङ्गद्रव्यस्य बाधकम् । प्रयाजे-ज्याज्यवत् । ' वा. २।१।३।८ पृ. ४०७. ● प्रधानेष्व-नेकेषु सन्निपातिना पदार्थानुसमयः । ५।१।१।१-९ मीको. पृ. २४३७ ' पदार्थानुसमयन्यायः ' इत्यत्र द्रष्टव्यम् । ● प्रधानेषु समसंख्येषु सहानुष्ठीयमानेषु धर्म-विरोधे प्रथमपठितस्यैव धर्मानुग्रहः । १२।२।८।२३-२४. मीको. पृ. ८२६ ' आग्नेयगुणन्यायः ' इत्यत्र द्रष्टव्यम् । ● प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयोऽनुरोधेन धर्माणामनुष्ठानम् । ' भूयोऽनुग्रहन्यायः ' इत्यत्र द्रष्टव्यम् । १२।२।७।२२.

● प्रधानाङ्गोभयार्थता अभिमर्शनस्य दर्शपूर्ण-मासयो. । ३।७।४।८.१०.

• प्रधानाङ्गवन्त्वं द्वेधा, प्रकृतिप्रधानस्य स्वाङ्गविकृत्या सह अन्य विकृतिप्रधानस्य स्वाङ्गविकृत्या सह इति। बाल. पृ १४८.

• 'प्रधानाद्गत्वमेकस्य न चैकान्तकल्प्यते।' नहि एकस्मिन् वाक्ये तदेव कदाचित् फलसम्बन्धात् प्रधानम्, कदाचित् फलवदुपकारात् अङ्ग युज्यते, नियतरूपत्वात् अङ्गाङ्गिभावस्य। वा २।१।१।१ पृ ३७४.

• प्रधानाङ्गसाधारण्यं बर्हिरादीनाम्। ३।७।१।१-५. • प्रधानाङ्गसाधारण्यं सौमिकवेद्यादीनाम्। ३।७।३।७,९.

• प्रधानानुरोधेन गुणावृत्तेः सर्वशेषत्वम्। वा. ३।१।७।१४ पृ. ८४३-८४४.

• प्रधानापूर्वं निगुणे अङ्गहविर्भिर्न निष्पद्यते। वा. ३।७।१।४, • प्रधानापूर्वाणां फले योगस्य प्रत्युक्तम्। (पूर्वपक्षे इदम्) । २।१।२।५ पृ. १९१.

• प्रधानापूर्वाश्रयत्वं यजमानस्य। वा. ३।८।२।७.

• प्रधानापूर्वप्रयुक्तानामेव अङ्गेष्वपि क्रिया युक्ता। वा ३।७।१।४.

☒ प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः इति न्यायः। यथा लोके बहुषु गच्छत्सु सैन्यादिषु 'कोऽयम्' इति प्रश्ने 'राजा' इत्युत्तरं दृश्यते। अयं न्यायः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा० १।२।६९) इति 'हेतुमति च' (पा० ३।१।२६) इति सूत्रयोः महाभाष्यकैयटयोः स्पष्टः। साहस्री. ६७.

• भानु इत्यादिषु प्रयोगेषु तत्प्रतिपादनायानुबन्धासञ्जने, तेषां पर्यायेषु भावार्थतया तेषामप्राधान्यं इत्येतत् तु पर्यायेषु दीयमानत्वात् प्राधान्यम्। तेन तेषामेव संज्ञा न तदनुबन्धानाम्। 'प्रधाना०' इति न्यायात्। शब्दकौस्तुभ. २ अन्ते.

• यत्र पुनः सविशेषेण नास्ति (प्रकृतो नास्ति) तत्र सर्वं प्रधानार्थमेवाभ्यस्तव्यम्। वा ३।१।१४।२४ पृ. ७१२. • प्रधानार्थी सोम. प्रधानार्थो विमोकः इति प्रधानार्थे विमोकः। (अङ्गप्रधानार्थे सोमविमोके इति वर्तन्ते विमोकः इति वार्तिककारमतम्)। भा. ११।३।९।१७-२०, • प्रधानार्थाः एव ज्योतिष्टोमे स्वामिसंस्काराः, न अङ्गप्रधानार्थाः। ३।७।२।९. • प्रधानार्था एव, नाङ्गप्रधानार्था. ज्योतिष्टोमे दीक्षा दक्षिणाश्च। ३।७।९।११-१२. • प्रधानार्थस्यैवार्थान्तरेणान्वय इति सामान्यन्यायः। आभरणम् ३।७।९।२५ अधि. • प्रधानार्थयोरुभयोः नान्योन्यापेक्षा। के.

• 'प्रधानादौ विधीयन्ते ये शाखाछेदनादयः। विष्वादिविहितत्वात् ते भाव्यपूर्वस्य शेषताम्॥' वा. २।१।२।२ पृ. ६५५.

• प्रधानारम्भेणैव अङ्गभूतस्य सिद्धिः। भा. १०।१।४।७.

• प्रधानावृत्तिर्गुणानुरोधेन न न्याय्या। भा १०।६।१९।७८.

• प्रधानाश्रयिणां गुणत्वम्। वा. ३।१।७।१४ पृ. ७१८.

• प्रधानाश्रितस्य अङ्गाश्रितेन बाधासम्भवः। भाट्ट ४।१।१७

• प्रधानोत्तरकाला प्रतिपत्तिः यथा 'चात्वाले कृष्णविषाणां प्रास्यति' इति। बाल पृ. ८२. प्रधानोत्तरकालभाव्ययामपूर्वसिद्धौ समकालस्यापि तत्कारत्व प्रधान सहायत्वोपपत्ति। सु पृ. १५२३.

• प्रधानोपकारकत्वं सर्वेषामङ्गानां समुचितानामेव काम्ये कर्मणि। ११।१।३।११-१९.

• 'प्रधानोपयिक द्रव्य संस्कारेऽपि युज्यते। तेन हस्त्यादिभि सर्वं संस्कर्तव्या प्रियङ्गवः॥' वा ३।१।३।८ पृ ४०७

• प्रधानमयमभावः अभितोऽन्यार्थमपानानुमन्तावदन्त गच्छति, इति व्याख्यात अनुयाजाधिकरणे। वा. ३।१।१४।२८ पृ ७४१.

• प्रधानकर्म वैदिकं अग्निहोत्रादि पौरुषान्तरप्राप्तिनिरपेक्षभावं वैदिकं कर्म। बाल पृ. ८१. • प्रधानकर्म आधारादर्शपौर्णमासकम्। कु. २।१।४।५

● प्रधानकर्म स्तोत्र शस्त्रं च । वि. २।१।५. ● प्रधानकर्माणि पुरुषार्थानि यजमानस्य भवन्ति । भा. ३।८।१।४.

■ **प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात् । ११।१।१०।२४ ॥**

अङ्गानां प्रधानकर्मार्थत्वात् प्रधानार्थत्वात्, तद्भेदात् दर्शपूर्णमासयोश्च तेषां प्रधानानां भेदात् अङ्गानां प्रयोगे अनुष्ठाने कर्मभेदः क्रियाभेदः स्यात् । प्रतिप्रधान भेदेन अङ्गानुष्ठानं कर्तव्यम् । प्रतिप्रधानमङ्गभेद इति पूर्वः पक्षः ।

**क्रमकोपश्च यौगपद्ये स्यात् । ५५ ॥**

अङ्गानां यौगपद्ये सर्वप्रधानार्थं तन्त्रे स्वीकृते प्रधानानां क्रमस्य कोपः विरोधः स्यात् । साङ्गमाग्नेयं अकृत्वा अग्नीषोमीयः प्रक्रान्तः स्यात् । साङ्गमाग्नेयं समाप्य ततः यदि अग्नीषोमीयः साङ्गः क्रियेत तदा क्रमकोपो न स्यात् । चकारात् अङ्गारापोहनादीनि सस्पर्शादीनि च प्रतिप्रधानं यथा भिद्यन्ते तथा आघारादीनामपि इति चोदितम् ।

**तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद् विशेषाग्रहणात् । ५६ ॥**

तुशब्दः पक्षान्तरमाह । न प्रतिप्रधानमङ्गभेदः । किन्तु कर्तृतः देशतः कालतश्च प्रधानैः तुल्यानां अङ्गानां यौगपद्यं सकृत्त्वं स्यात् । एकशब्दोपदेशात् 'दर्शपूर्णमासाभ्याम्' इति एकेन शब्देन प्रधानानामङ्गानां चोपदेशात् विशेषाग्रहणात् विशेषस्य अनुक्तत्वात् अश्रुतत्वात् । आग्नेयस्य वा एतान्यङ्गानि अग्नीषोमीयस्य वेति विशेषो न ज्ञायते । तस्मात् प्रतिप्रधानं नाङ्गभेदः । इति सिद्धान्तः ।

**ऐकार्थ्यादव्यवायः स्यात् । ५७ ॥**

यदुक्तम् 'क्रमकोपो यौगपद्ये' इति तत्राह । ऐकार्थ्यात् एकार्थकरत्वात् एकफलकत्वात् प्रधानानां सम्भूयकार्यकारित्वम् । अनुष्ठानार्थं तु अव्यवायः आनुपूर्व्यं स्यात् । तस्मात् तेषां प्रयोगे क्रमः । कुतः क्रमकोपः । अङ्गानामपि सम्भूयकार्यकारित्वात् उपकारेऽपि नास्ति क्रमकोपः ।

**तथा चान्यार्थदर्शनं कामुकायनः । ५८ ॥**

तथा च न प्रतिप्रधानमङ्गावृत्तिः इत्यत्र 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्' इति अन्यार्थदर्शनं भवति इति कामुकायन आचार्यो मन्यते स्म ।

**तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् । ५९ ॥**

यत्तु चकारार्थतया उक्तं संनिपातिनामिव आरादुपकारिणामपि आवृत्तिरस्तु इति । तत्राह । तन्न्यायत्वात् सम्भूयकारिणा सह क्रिया इति न्यायात् अङ्गानां प्रतिप्रधानं नावृत्तिः । स न्यायो येषां तानि तन्न्यायानि अङ्गानि तादृशत्वात् । अशक्तेः अशक्यत्वात्तु अङ्गारापोहनादीनामानुपूर्व्यं भेदेन करणं स्यात् । नहि एकस्य पुरोडाशस्य अङ्गारापोहेन अन्यस्यापि पाकः कर्तुं शक्यते । संस्कारस्य अङ्गारापोहनादेः तदर्थत्वात् पाकार्थत्वात् च प्रतिपुरोडाशं तत्क्रिया युक्ता । तस्मात् संनिपातिनामावृत्तावपि नारादुपकारिणामावृत्तिः ।

**असंसृष्टोऽपि तादर्थ्यात् । ६० ॥**

संसृष्टं संनिपत्योपकारि । असंसृष्टः आराडुपकारकः आघारादिः । असंसृष्टोऽपि आराडुपकारकोऽपि आघारादिः प्रतिप्रधानमावर्तनीयः । तादर्थ्यात् प्रधानार्थत्वादङ्गानाम् ।

**विभवाद् वा प्रदीपवत् । ६१ ॥**

अत्रोच्यते । एतानि अङ्गानि कस्य चित् संनिधौ क्रियमाणान्यपि सर्वेषां प्रधानानामुपकर्तुं विभवन्ति समर्थानि । प्रदीपवत्, यथा प्रदीपः एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानां एकस्य संनिधौ प्रज्वलितोऽपि सर्वेषामुपकरोति तद्वत् । एवमङ्गानां वैभवात् प्रतिप्रधानं नावृत्तिः । हेत्वन्तरार्थो वाशब्दः ।

**अर्थात्तु लोके, विधितः प्रतिप्रधानं स्यात् । ६२ ॥**

पूर्वपक्षी आह । लोके एकत्र कृतस्यापि प्रदीपस्य अनेकेषां प्रकाशनं दृष्टं प्रयोजनम् । तस्मात् अर्थात् प्रयोजनात् प्रदीपदृष्टान्तो युक्तः । प्रकृते तु विधितः

विधानादेव उपकारानुपकारौ शक्येते इति प्रतिप्रधानमाघारादीनां भेदः स्यात् ।

**सकृदिज्यां कामुकायनः परिमाणविरोधात् । ६३ ॥**

'चतुर्दश पौर्णमास्याम्' 'त्रयोदश अमावास्यायाम्' इत्युक्तेन आहुतीनां परिमाणेन विरोधात् आघारादीनामङ्गानां सकृत् इज्यां कामुकायन आचार्यो मेने इति । पूर्वोक्तस्य अनुवादः उत्तरार्थः ।

**विधेस्त्वितरार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमः स्यात् । ६४ ॥**

तत्राह पूर्वपक्षी । विधीयते इति अङ्गं विधिशब्देन उच्यते । विधेः अङ्गस्य इतरार्थत्वात् यस्य संनिधौ पठितम्, तत्प्रधानार्थत्वात् सकृदिज्या श्रुतिव्यतिक्रमः स्यात्, सकृदिज्या श्रुतिविरुद्धा । असकृदिज्या इति पाठे तु असकृत् इज्या स्यात् । अन्यथा सकृदिज्यायां तु श्रुतिव्यतिक्रमः स्यात् इति योजनीयम् । 'चतुर्दश पौर्णमास्याम्, त्रयोदश अमावास्यायाम्' इत्यत्र तु आहुतिनिधीनां संख्या उक्ता नाहुतीनाम् ।

**विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः । ६५ ॥**

सिद्धान्ती आह । प्रधानानां प्रकरणस्य अविभागे अभेदे सति अङ्गानां तन्त्रेण प्रयोगं बादरायण आचार्यो मन्यते स्म । विधिवत् यथा विधौ सति प्रकरणस्य तुल्यत्वात् सर्वार्थानि अङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । तस्मात् आघारादीनां तन्त्रेण प्रयोगः ।

**क्वचिद् विधानाच्चेति चेत् । ६६ ॥**

पूर्वपक्षी पुनराह । 'सहावघ्नन्ति' 'सह पिंषन्ति' इति क्वचित् सहत्वस्य विधानात् अन्यत्र असहत्वम् । परिसंख्यार्थं विधानं अत्रैव सहत्वं नान्यत्रेति । तस्मात् न सकृत् । इति चेत् ।

**न विधेश्चोदितत्वात् । ६७ ॥**

सिद्धान्ती आह । विधीयते इति विधिः निर्वापः । विधेः निर्वापस्य चोदितत्वात् नात्र परिसंख्या । आग्नेयाग्नीषोमीययोः भेदेन निर्वापः उक्तः । तद्भेदेन अवहननपेषणे प्राप्नुतः, तत्रापवादं सहत्व विधेयम् । तस्मात् आरादुपकारकाणां आघारादीनां न प्रतिप्रधानमावृत्तिः किन्तु सकृदनुष्ठानमिति सिद्धान्तः ।

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् । ६८ ॥**

येषां विशेषो न गृह्यते कश्चित् तेषां अगृह्यमाणविशेषाणां तुल्यानां यौगपद्यं सहानुष्ठानं व्याख्यातम् ( ११।१।१०।२६ ) । 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः' इत्यनयोः द्वयोः कृष्णग्रीवयोः तुल्यत्वात् एकफलत्वात् यौगपद्यं प्राप्तम्, तस्मात् सह प्रदानं स्यात् । इति पूर्वपक्षी ।

**भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद् विशिष्टानां विधिः प्रधानकालत्वात् । ६९ ॥**

सिद्धान्ती आह । द्वयोः कृष्णग्रीवयोः सौम्यस्य चोदनया व्यवायात् व्यवधानात् कालस्य भेदः स्वीकर्तव्यः । कालत्रयेण विशिष्टानां आग्नेयसौम्याग्नेयानां विधिरयम् । तस्मात् विशिष्टविधेः एकैकस्य क्रमिककालस्य प्रधानकालत्वात् अपि त्रयाणां पशूनां कालभेदः । कालभेदाच्च द्वयोराग्नेययोः प्रदानस्य भेदः स्यात् । तस्मात् भेदेन प्रदानमिति सिद्धान्तः ।

**तथा चान्यार्थदर्शनम् । ७० ॥**

तथा च कृष्णग्रीवयोः भेदेनानुष्ठाने 'अभितः सौम्यमाग्नेयौ भवतः' इति अन्यार्थदर्शनं भवति । तस्मात् प्रदानभेदः ।

**विधिरिति चेन्न वर्तमानापदेशात् । ७१ ॥**

'अभितः सौम्यं आग्नेयौ भवतः' इति विधिः स्यात् । विधिना च आग्नेययोः भेदः स्यात् । विध्यभावे तु सहत्वमेव भवितुमर्हति । इति चेन्नायं विधिः, 'भवतः' इति वर्तमानेन वर्तमानार्थेन एव अपदेशात् व्यपदेशात् । तस्मात् पूर्वोक्तहेतुभिः आग्नेययोः प्रदानस्य भेद एव स्यात् इति सिद्धान्तः । सर्वथाऽपि दर्शपूर्णमासयोः प्रतिप्रधानं नाङ्गभेदः । के.

● **प्रधानकर्मलक्षणम्** । 'यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि, द्रव्यस्य गुणभूतत्वात् ।' ( २।१।३।७ ) मानचन्द्राचार्यैः कर्मभिः न द्रव्यमुत्पाद्यते,

देषा कर्मणा प्रधानत्वात् तद्वाचीनि याचशब्दाख्यानि आख्यातानि प्रधानकर्मवाचीनि ( इति भाष्यकृता व्याख्यातम् ) । सु. पृ. ६२३.

* प्रधानकर्मविधाने सति अनेकार्थविधानं उप पद्यते । वा. १।४।२।२ पृ. ३२९.

* प्रधानकालात् सर्वे पदार्था न विप्रकृष्टव्या इति प्रयोगवचनेन प्रतिपादितम् । वा. १।३।३।६ पृ. १९७.

* प्रधानकाले एव अङ्गानामनुष्ठानम्, फलवाक्येन साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविधायिना अङ्ग-प्रधानयोर्युगपत् प्रयोगविधानात् यावता विलम्बेन विना अनुष्ठानाशक्तिः ततोऽधिकस्य विलम्बस्य निवारणात् । सु. पृ. ७३५.

* प्रधानकालत्वं अङ्गानामज्ञातकालानां वक्ष्यते (११।३।१।१ इत्यत्र) । वा. ३।६।७।२२ पृ. १०४७.

* प्रधानक्रमात् अङ्गक्रम. । भा. ५।१।७।१४.

* प्रधानक्रिया हि विशेषणानि पिण्डीकरोति । भा. १।४।२।१ पृ. ३३२.

* प्रधानगुणः अङ्गगुणेन न बाध्यते, ' अङ्गगुणेन प्रधानगुणबाधस्य अन्याय्यत्वात् ' । वा. ४।३।१३।४८ पृ. १२२४. * प्रधानगुण. अङ्गगुणात् बलीयान् । षोडशिग्रहस्य उदयनावभावरूपनमः प्रधानभूतग्रहगुणत्वात् अङ्गभूतस्तोत्रगुणभूतात् कालात् बलीयान् । अनस्तदनु-देशेन स्तोत्रकाल मापित्वा उपकृत्य: षोडशी । रत्न. ५।१।१८।३९.

* प्रधानता नास्ति समार्जनादीनाम् । २।१।४.

* प्रधानद्रव्यलोपे सति शेषकार्याणि क्रियन्ते । भा. ६।५।१।५.

* प्रधानद्वयक्रमात् तन्निर्वापक्रमः । निवायाते ' सारस्वतो भवत. सरस्वती च सरस्वाञ्च ' इति वाक्य-विहितप्रधानद्वयक्रमात् तन्निर्वापक्रमः । भाट्ट. ५।१।७.

* प्रधानधर्मेण अङ्गधर्मो बाध्यते । मासनाघोऽत्र । वा. ३।३।७।१४ पृ. ८६०.

* प्रधाननिर्वाहकत्वे अङ्गनिर्वाहपर्यासत्यापि मुख्यस्योपादानम् । ६।३।२०.



* प्रधानपीडायां काष्ठभोजिन्यायो नावतरति इति द्वादशे वक्ष्यते । कु. ६।३।१।८।३८.

* प्रधानपुरुषेश्वरपरमाणुकारणादिप्रक्रिया. सृष्टि प्रलयादिरूपेण प्रतीता., ता. सर्वाः मन्त्रार्थवादज्ञाना-देव दृश्यमानसूक्ष्मस्थूलद्रव्यप्रकृतिविकारभावदर्शनेन च द्रष्टव्याः । प्रयोजन च स्वर्गयागाद्युत्पादकविभाग-ज्ञानम् । स्वर्गाप्रलयोपवर्णनमपि देवपुरुषकाम्यभावप्र-दिपादर्शनार्थम् । सर्वेन हि मद्र्गेन प्रवर्तते, तदुपरमे च उपरमति इति विज्ञानगम्यलक्षणमङ्गनैरात्म्यादिवादानां अपि उपनिषदर्थवादप्रभवत्वं विषयेषु आत्यन्तिकं राग निवर्तयितुं इति उपपन्न सर्वेषा प्रामाण्यम् । वा. १।३। १।२ पृ. १६८.

* प्रधानपूर्वकाला प्रतिपत्तिः यथा 'शकृत् प्रविष्यति, लोहितं निरस्यति ' इति । (इद ४।१।१२।२७ इत्यत्र प्रतिपादितम् ) । बाल पृ. ८१.

* प्रधानप्रयोगवचनेनैव शब्देन अङ्गानामपि प्रयोगः चोद्यते । भा. ११।१।२।८.

* प्रधानप्रयोगवचनपरिगृहीतत्वात् अन्यत्रापि स्तत्प्रधानामङ्गाना यत्रैव प्रधान तत्रैव विधिः । वा. ३।३। २१६ पृ ८२०.

* प्रधानप्रसङ्गलक्षणः प्रसङ्गो यथा काम्यार्थेन अग्निहोत्रादिप्रयोगेण नित्याग्निहोत्रप्रयोगस्य प्रसङ्गसिद्धिः । बाल. पृ १३२.

* प्रधानभूतस्य च लिङ्गसख्यमविवक्षितम् । कृत्प्रत्यय. क्रिया विधत्ते । क्रिया विधीयमाना कारकैर्विना न भवति । कारकाणि च स्वविशेषणैर्विना न भवन्ति । तस्मात् क्रियाकारकाणि कारकविशेषणानि प्रत्ययेन परामृश्यन्ते । तत्र यः क्रिया प्रति उद्दिश्यते, स प्रधानभूतः क्रिया प्रति । न तु स क्रियाङ्गम्, क्रियैव तदर्था । तस्य प्रधानभूतस्य यत् लिङ्गसख्यम्, तदनङ्ग-त्वात् क्रियाया. प्रत्ययेन न परामृश्यते । टुप्. १०।३। १७।६३ पृ १८९८. * न्यायं चेदुच्यते, प्रधान-भूता ( आकृतिः ) । भा. १।३।९।३३ पृ २१७.

* प्रधानभूतदेवताविधिः मन्त्रः यथा ' स्वाहाग्निं स्वाहा सोमम् ' इत्युत्तमप्रयाजमन्त्र. । बाल. पृ. ६१.

• प्रधानभूतद्रव्यविधिः मन्त्रः 'सोमस्याग्ने वीहि' इति । बाल. पृ. ६४.

• 'प्रधानभूतविशेष्यत्वे संभवति प्रकारविशेष्यत्वस्य अन्याय्यत्वात्' इति न्यायेन विशेष्यत्वस्यनौचित्यम् । रहस्य. पृ. ४१.

• प्रधानभेदेऽपि एकस्मिन् कर्मणि अङ्गाना तन्त्रम् । ११।१।१०।५४-६७.

⧗ प्रधानमल्लनिबर्हणन्यायः । मल्ल बाहुयुद्धविशारदस्तेषु प्रधानस्य निबर्हणे मल्ले भूमौ प्रक्षिप्ते तदनुभागस्य तथा प्रयोजनमिति यावत् । यथा जयकामेन प्रधाने निबर्हिते तदपेक्षया दुर्बलानामन्येषां पराजयः सुकर इति न्यायार्थः । साहस्री २४४. • 'ईक्षतेर्नाशब्दम्' इत्यारभ्य प्रधानकारणवादः सूत्रैरेव पुनःपुनराशङ्क्य निराकृतः । अतः प्रधानमल्लनिबर्हणन्यायेन अतिदिशति 'एतेन सर्वे (अण्वादिकारणवादाः) व्याख्याताः' इति । शांभा. १।४।८।२८ प्रभृ.

• प्रधानमात्रार्थं उपाकृतं कार्येष्विषु । ३।८।१९।३५-३६. • प्रधानमात्रार्थाः वर्तमानत्वस्थाः । ३।७।२।६. • प्रधानमात्रार्थे दीक्षादक्षिणे ज्योतिष्टोमे । ३।७।८।११-१२.

• प्रधानमात्रसमर्थमुख्यद्रव्यत्रमेऽपि तस्यैवोपादानम् । ६।३।१०।४०-४२.

• प्रधानस्यैकत्वार्थार्थत्वमङ्गानाम् । भा ११।१।१।५-१०.

• प्रपञ्चस्य सत्यत्वमेव युक्तमिति मीमांसकाः । तदभिन्नत्वमर्थमिति वेदान्तिनः । मणि. पृ ४८-५१.

• 'प्रपा प्रवर्तयितव्या' इति स्मृतिः । भा १।३।२।१ पृ. १६०, • प्रपाः तडागानि च परोपकाराय, न धर्माय्येवारभ्यन्ते । तथा च दर्शनम् 'धन्वन्निव प्रपा असि' इति 'स्त्रोतोदकं परिपूतमिति' इति च । १।३।२।२ पृ १६१.

⧗ प्रपामेलन्यायः । यथा प्रपा पानीयदानाय तस्यां मार्गस्थनो बहवो जीवा मिलन्ति, द्वितीये क्षणे विभागाः प्रयान्ति, एवं संसारिणो जीवा मिलन्ति वियुज्यन्तीति । साहस्री. ८९८.

• प्रपाठकाध्ययनक्रमः समूहाश्रितः । यथा अध्येतारः प्रपाठकमात्रवर्तिसमूहाः एकैकभागं अध्यायं पठन्ति तद्वत् । वि. १०।१।२५.

• प्रपूर्वस्य वसेः प्रस्थानात् प्रस्थितस्य अन्यत्रत्वे प्रयोगः । सु. पृ. ७७२.

• 'प्रय' इत्यत्र 'प्रयी' पदमेव प्रयोक्तव्यम्, इत्यादन्यायात् । इदं पूर्वाधिकरणस्य प्रयोजनम्, (नतु अष्टादशाधिकरणस्य) । टुप्. ३।१।१८।५,८.

• न प्रबलं प्रवृत्तमित्येव दुर्बलोपस्थापित न गृह्णाति, किन्तु सति विरोधे । पराक्रमः पृ. २६. • प्रबला कामस्य निवृतिः तावित्वरी, कामस्य चौम्यवर्जकत्वात् । प्रकृतिस्तु प्रवर्तिनी (इन्द्रानिन्द्रा) । वि. १०।२।११.

• 'प्रब्रूयाद् ब्राह्मणस्तेषां नेतराविति निश्चयः' इति स्मृतेः प्रवचन ब्राह्मणस्यैव । सु. पृ. १९५.

• 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र प्रसिद्धपदसाहचर्यात् अज्ञातार्थस्य मधुकरशब्दस्य अर्थोऽपि ज्ञातुं शक्यते । वि. १।१।५.

• 'प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते । स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥' भा १।३।२।८ पृ. १९१.

⧗ प्रभूणां हि विभूत्यन्या घायत्वविषये मतिः इति न्यायः । अयमहल्येन्द्रसंवादे दृष्टान्तभूत इति । साहस्री. ७११.

⧗ प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् । १२।४।१५।४२ ॥

आर्त्विज्यं यो ऋत्विक्त्वं सर्ववर्णानां त्रैवर्णिकानां याजनेनैवशना स्यात् । प्रभुत्वात् कर्तुं समर्थत्वात् सर्वे अध्ययनवन्तो विद्वांसश्च । इति पूर्वः पक्षः ।

स्मृतेर्वा स्याद् ब्राह्मणानाम् । ४३ ॥

'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव नृपस्य' इति स्मृतेः समाम्नात् ब्राह्मणानामेव आर्त्विज्यं स्यात्, न राजन्यवैश्यानाम् । इति सिद्धान्तः ।

फलचमसविधानाच्चेतरेषाम् । ४४ ॥

'स यदि राजन्यं वा वैश्यं वा याजयेत्, स यदि सोमं विभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति वचनेन इतरेषां राजन्यवैश्यानां फलचमसस्य विधानात् सोमपानानधिकारो विज्ञायते । असोमपाभ्यां च आर्त्विज्यं न शक्यते कर्तुम् । तस्मात् राजन्यवैश्यानां नार्त्विज्याधिकारः ।

सांनाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् । ४५ ॥

राजन्यवैश्ययोः एव सोमवत् सानाय्येऽपि प्रतिषेध उक्तः । तत्र च असोमपीथहेतुत्वमुक्तम् । 'न राजन्यो न वैश्यो वा सानाय्यं पिबेत् असोमपीथो ह्येषः' इति । तेन राजन्यवैश्यानां सोमपानाभावेन आर्त्विज्यं नास्तीति निश्चीयते ।

चतुर्धाकरणे च निर्देशात् । ४६ ॥

दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणमन्त्रे 'ब्राह्मणानामिदं हविः सौम्यानां सोमपीथिनां नेहाब्राह्मणस्यास्ति' इत्यत्र ब्राह्मणानामेव शेषभक्षणे निर्देशात् अब्राह्मणस्य च निषेधात् आर्त्विज्यं ब्राह्मणानामेव ।

अन्वाहार्ये च दर्शनात् । ४७ ॥

दर्शपूर्णमासयोः अन्वाहार्ये अन्वाहार्यचरुरूपदक्षिणावाक्यशेषे 'स एते वै देवा अहुतादो यद् ब्राह्मणाः यदन्वाहार्यमाहरन्ति, तानेव तेन प्रीणाति' इति ब्राह्मणानामेव दर्शनात् तेषामेव आर्त्विज्याधिकारः न राजन्यवैश्ययोः इति सिद्धान्तः ।

द्वादशलक्षण्या अन्तिममिदं सूत्रम् । इतः परं संकर्षकाण्डं चतुरध्यायी । के.

* प्रमगन्दो नाम राजा । भा. १।२।४।३१–९ पृ. १४९,

※ प्रमदान्यायः । यथा एकस्यां प्रमदायां भर्तुः सुखं जायते, तामनिच्छतश्चैनस्य दुःखं जायते, तस्यामेव सपत्न्या द्वेष इति प्रमदयैकयैव सर्वे भावा भवन्तीति विषये अस्य प्रवृत्तिरिति । साहस्री. ५२८.

* प्रमा अज्ञातविषयकं बाधकज्ञानरहितं ज्ञानम् । न चैवं गृहीतविषयकधारावाहिकज्ञानस्य अप्रामाण्यप्रसङ्गः । कालस्य षडिन्द्रियवेद्यत्वेन पूर्वक्षणविशिष्टतया विषयीकरणेन तादृशस्य उत्तरज्ञानाविषयतया अनधिगतार्थविषयकत्वात् । मणि. पृ. १३, * प्रमा कारणदोषबाधकज्ञानरहितं अगृहीतग्राहि ज्ञानम् । पृ. १६५, * प्रमायां गुणः कारणं इति नैयायिकाः । पृ. १४.

* प्रमात्वं नानुमेयम्, तस्य स्वतो ग्राह्यत्वात्, ज्ञानानुमाने समानसंवित्संवेद्यत्वात्, ज्ञानत्ववत् । मणि. पृ. १६, * प्रमात्वं यथार्थानुभवत्वम् । याथार्थ्यं च तद्वद्विशेष्यकत्वे सति तत्प्रकारकज्ञानत्वम् । भ्रमवारणाय विशेष्यकान्तम् । रजतविशेष्यकद्रव्यत्वप्रकारकज्ञाने रजतत्वप्रमात्ववारणाय तत्प्रकारकेति । नच रङ्गरजतयोः रजतमिति प्रतीतेः प्रमात्वापत्तिः, ज्ञानैक्येन तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोः सत्त्वात् इति वाच्यम् । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वस्य विवक्षणात् । तथापि येन सम्बन्धेन तद्वत्त्वम्, तेन तत्प्रकारकत्वं बोध्यम्, अतो न 'समवायेन लोहितः स्फटिकः' इति ज्ञाने अतिप्रसङ्गः । न च एवं पाकानन्तरं इदानीं श्यामरूपवान् इति प्रतीतेः प्रमात्वप्रसङ्गः, यदवच्छेदेनास्य विवक्षितत्वात् । रूपप्रकारतायाः वर्तमानकालावच्छिन्नरूपवद्विशेष्यकत्वानवच्छेदकत्वात् । अन्ये तु 'अयं विनाशी' इत्यादौ मतुपो वर्तमानार्थत्वासम्भवेन सम्बन्धार्थकत्ववत् अत्रापि सम्बन्धार्थकत्वात् अव्याहतमेव प्रमात्वमित्याहुः । निर्विकल्पकस्य तु भ्रमप्रमोभयबहिर्भूतत्वमेव आकरे व्यक्तम् । अस्तु वा तस्यापि प्रमात्वम्, विशेष्यावृत्त्यप्रकारकत्वस्यैव प्रमात्वात् । अत्र ज्ञानत्वघटितमेव प्रमात्वं सुवचम्, तथापि तस्य स्मृतिसाधारण्येन तज्ज्ञानस्य प्रमाणान्तरताऽऽपत्त्या अनुभवत्वघटितमेव अनुमन्यन्ते सांप्रदायिकाः । अनुभवत्वस्य जातित्वेन ज्ञानत्वाघटितत्वात् न गौरवमिति अन्ये । वस्तुतस्तु ज्ञानत्वघटितमेव तत् लघुत्वात् । न च स्मृतिकारणस्य प्रमाणान्तरताऽऽपत्तिः, इष्टत्वात्, निर्युक्तिकत्वादस्य हेयत्वात् । अत एव मन्वादीनां स्मारकत्वेऽपि प्रामाण्यम् । पृ. ११–१२.

* प्रमाणम् । अनधिगतार्थगन्तृत्वमेव प्रमाणलक्षणमादर्तव्यम् । तार्किकास्तु प्रमाकरणं प्रमाणम् । प्रमात्वं च यथार्थानुभवत्वम् । याथार्थ्यं च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । अनुभवत्वं च जातिविशेषः इत्याहुः । कु. १।१।५५. * प्रमाणं अर्थः (प्रयोजनम्), क्रमे, व्युत्क्रमे तस्य अनुपपद्यमानत्वात् । भाट्ट. ५।१।२. * प्रमाणं अर्थसंस्पर्शि हीष्यते । तस्य बाधकज्ञानोत्पत्तौ सत्यां पुनः प्रतिपक्षविज्ञानं तन्निमित्तमेवोत्पद्यते । बृहती. पृ. १९. * प्रमाणं 'क्षुते आचामेत्' इत्यादिः स्मृतिः । वि. १।३।४. * प्रमाणं तावत् मीमांसकानां विभक्तविभागेनानेकविधम् । तथाहि, प्रत्यक्षं अनुमानं शब्दः उपमानं अर्थापत्तिः अभावः इति षट् । तत्र प्रत्यक्षं षड्विधं चाक्षुषादिभेदात् । अनुमानं द्विविधं सामान्यतोदृष्टं विशेषतोदृष्टं च । द्विविधमपि पुनर्द्विविधं स्वार्थं परार्थं च । केवलान्वयि-केवलव्यतिरेकिभेदौ तु नेष्टौ, 'लिङ्गिज्ञानं च तद्वत् स्यात् निरूपाधिकतो न तत्' । (श्लो. वा. अनुमान १६७) इत्यनुमाने त्रैरूप्यवर्जितस्य लिङ्गस्याभ्युपगमे । परार्थानुमानवाक्यस्य च तार्किकाणामिव न पञ्चावयवत्वं, किन्तु त्र्यवयवत्वमेव । तदुक्तं 'तत्र पञ्चतयं केचित् द्वयमन्ये वयं त्रयम् । उदाहरणपर्यन्तं यद्वोदाहरणादिकम् ॥' इति । प्रत्यक्षानुमानोपमानाभावाख्यानि चत्वारि लौकिकान्येव । अर्थापत्तिर्द्विधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्च । उत्तराऽपि द्विविधा लौकिकी वैदिकी च । शब्दोऽपि द्विविधो लौकिको वैदिकश्च । वैदिकोऽपि द्विविधः उपदेशातिदेशभेदात् । उपदेशोऽपि द्विविधः विधिर्निषेधश्च । पुनरुपदेशोऽनेकविधः । शब्दान्तरम्, अभ्यासः, संख्या, संज्ञा, गुणः, प्रकरणान्तरं चेति द्वैधीपकानि कर्मभेदकानि षट् । श्रुतिः, लिङ्गम्, वाक्यम्, प्रकरणम्, क्रमः, समाख्या चेति तार्तीयकानि विनियोजकानि षट् । श्रुतिः, अर्थः, पाठक्रमः, स्थानक्रमः, मुख्यक्रमः, प्रवृत्तिक्रमश्च इति पाञ्चमिकानि क्रमप्रमाणानि षट् । प्रत्यक्षविधिः, आम्नानविधिः, विकारः, सशब्दः, निषेधानुवादश्च इति नावमिकानि कार्यापत्तिप्रमाणानि पञ्च इति । अतिदेशस्तु सप्तविधो वक्ष्यते । बाल पृ. ८. * प्रमाणं धर्मे वेदः । भा. १।१।२।२. * प्रमाणं न प्रत्यक्षं धर्मे । १।१।४. * प्रमाणं प्रमाणान्तरं न अपेक्षते अर्थपरिच्छेदे । स्वरूपपरिच्छेदे तु प्रमाणमपि प्रमाणान्तरमपेक्षते एव । ऋजु पृ. ६६. * प्रमाणम् । यच्च स्वातन्त्र्येण विषयं नोपस्थापयति न तत् प्रमाणान्तरम् । पृ. १६०. * प्रमाणम् । येनयेन हि प्रतीयते तत्तत् प्रमाणम् । भा. १।१।२।५ पृ. ५९. * प्रमाणम् । लौकिकं च प्रमाणं परीक्षकैरपि अनुसरणीयम् । ऋजु. पृ. ७३. * प्रमाणं शिष्टाचारः । वि. १।३।४ वर्णक २. * प्रमाणम् । शीघ्रप्रवृत्ति प्रमाणं प्रतिष्ठितं तद्विलम्बितस्य बाधकं भवति । यत्र तु शीघ्रमपि प्रमाणं प्रत्यक्षादिकमुत्पन्नमपि दूरत्वादिदोषेण सांशयिकं स्वयमेव अप्रतिष्ठितं भवति, तत्र मन्थरेणापि निःसंशयेन निश्चितार्थपरिच्छित्तिर्भवत्येव । रत्नाकरः पृ. ३६४-३६५. * प्रमाणं सदाचारः । विन्दु. १।३।४. * प्रमाणं हि नाम करणकारकम् । ऋजु. पृ. ९४. * 'लौकिकं वैदिकं वाऽपि प्रमाणं दोषवर्जितम् । सर्वैमार्भीयते स्वार्थे न चास्मिन् दोषसंभवः ॥' वा. ३।२।९।२५ पृ. ७८४. * प्रमाणानि धर्माधर्मयोः अष्टौ विधि-अर्थवाद-मन्त्र-स्मृति-आचार-नामधेय-वाक्यशेष-सामर्थ्यरूपाणि । भाट्ट. १।४।२०. * प्रमाणानि । न हि प्रत्यक्षमेव एकं प्रमाणम्, तद्वदेव हि अनुमानादीन्यपि प्रमाणानि । सर्वप्रयत्नमये च पष्ठेन अभावः परिच्छिद्यते । वा. २।१।१६।४८ पृ. ४९८. * प्रमाणानि प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् लौकिकानि । धर्मप्रमाणानि विधि- अर्थवाद- मन्त्र- नामधेय- स्मृति- शिष्टाचाररूपाणि षट् । धर्मभेदकानि शब्दान्तर-अभ्यास-संख्या-संज्ञा-गुण-प्रकरणान्तराणि षट् । धर्माङ्गत्वबोधकानि श्रुति-लिङ्ग-वाक्य- प्रकरण- स्थान- समाख्यारूपाणि षट् । क्रमबोधकानि-श्रुति-अर्थ-पाठ- स्थान- मुख्य-प्रवृत्तिरूपाणि षट् । अतिदेशप्रमाणानि वचन-नाम-लिङ्गानि त्रीणि । ऊहप्रमाणं स्थानापत्तिः एकम् । बाधप्रमाणानि प्रत्याम्नान- प्रतिषेध- अर्थलोपरूपाणि त्रीणि । एवं एकत्रिंशत् अलौकिकानि प्रमाणानि ।

यथा आलोकसंयोगादिवत् सहकारित्वमात्रम्, विधि-रेवात्र मानमित्यपि केचित्। मणि. पृ. १३. * प्रमाणानि विनियोगविधेः सहकारीणि षट् श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि। मीन्या. * प्रमाणानि। वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि। वा. २।१।२।५ पृ. ३९०. * प्रमाणानि षडेव प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्याख्यानि, 'मान षड् युक्त्यो लोके यामि सर्वोऽनुहन्यते' इति समा-यणात्। मणि. पृ ६२ * प्रमाणानि सर्वाण्येव उपयुज्य-मानमनुपयुज्यमान वाऽर्थं आत्मगोचरतापन्नं गमयन्ति, तैनैव चैषां हानोपादानोपेक्षाबुद्धयः फलत्वेन वर्ण्यन्ते। था १।२।१।१ पृ. १०६, * प्रमाणेन बलीयसा निरा-काङ्क्षीकृते जघन्यप्रमाणस्य अनुत्थानम्। ३।८।७।१९, * प्रमाणै' यथास्व षड्भिरपि प्रमाणाभासा बाध्यन्ते. प्रासबाधोऽत्र। ३।३।७।१४ पृ ८६०. * प्रमाणस्य एव मुख्यस्य प्रमाणप्रमेयभावोपायो। अनुष्ठानोपायो तु भेदार्थप्रमाणयो प्रधानोपसर्जनभाव', प्रमाणमुपसर्जन न मुख्यम्। वि १।१।३. * प्रमाणस्य कार्यं अर्थनिश्चया-र्थलक्षणम्। ऋजु पृ. ९४. * प्रमाणस्य दुर्बलस्यापि यत्रात्यन्तमानर्थक्य विषयाभावात् तत्र प्रबलस्यापि सङ्कोच-रूप बाधमङ्गीकृत्य दुर्बलस्य प्राबल्यम्, यथा वषट्कार-निमित्तभेदादि. प्रबलेन श्रुत्याविना प्रतिपाद्यावच्छेदेन प्राप्तस्य यजमानचमस इति समाख्यया विषयान्तर प्रति पर्यवसानाया. यजमानकर्तृकभक्षान्तरस्य सोमसंस्कारार्थत्वेन विधानात् प्रतिपन्नसोमैकदेशसंस्कारकत्वम्। कौ. ३।३। ७।१४ पृ ३६७, * प्रमाणस्य दुर्बलस्यापि विशेषविष-यत्वे तेन प्रबलस्यापि सामान्यविषयस्य सङ्कोच इष्ट, 'यस्मिन् देशे मृग कृष्ण' इत्यादिस्मृत्या मनु-स्मृतिश्रुतिसङ्कोचस्य प्रमेयबलाबलन्यायेन साधितत्वात्। १।३।३।७. * प्रमाणस्य धर्मविषयकस्य परीक्षा। १।१।३. * प्रमाणस्य प्रमेयावगतिरेव कार्यम्, न तु प्रयोजनवदर्थावगति। अन्यथा उपेक्ष्यवस्तुनः अनव-गमप्रसङ्गात्। सोम १।२।१ पृ. ५. * प्रमाणस्य बाध नाप्रमात्वम् (अप्राप्तत्वमित्यर्थः)। वा. ३।३।७।१४ पृ. ८२९. * प्रमाणयो. उभयोरबाध्यत्वे सति कस्य चिदर्थस्यासिद्धे एकस्य बाधनम्। बृहती २०४. * प्रमाणयो. द्वयोस्तुल्यबलयोः विरोधे सति अन्यतरेण निर्णय. कर्तव्य.। वा. ३।६।२।९ पृ १०३०, * प्रमाणयो. सह प्रस्थितयोः येन विनियोगदेश चिरेण प्राप्तिर्भवति स विक्षेपो दौर्बल्यकरो भवति। अवधारिते तु विनियोगे यद्यपि पश्चात् अनुमानसहस्र भवति न तथापि कश्चिद् विप्रकर्ष। ३।३।७।१४ पृ ८११, * प्रमाणानां क्लृप्तमूलाना प्राप्तबाधो भवति, न कल्प्य-मूलाना श्रुतकम् (३।३।७)। ३।७।२३।५१.

* प्रमाणाधीना प्रमेयसिद्धिः। सु. पृ १७९.

* प्रमाणानुत्पत्तिलक्षणो बाध श्रुतिलिङ्गादि-विरोधे। बा ६।५।१९।५४.

* प्रमाणान्तरत्वं असाधारणकरणानुप्रवेशनिबन्ध-नम्। ऋजु पृ ७४

* प्रमाणाभास' यथास्व षड्भिरपि प्रमाणैः बाध्यते, प्राप्तबाधोऽत्र। वा. ३।३।७।१४ पृ ८९०.

* प्रमाणाभासबाधो नित्य न प्रमाणस्यैव। वा. ३।३।७।१४ पृ ८२९.

* प्रमाणगति' तादृशी आश्रयणीया द्वेधा सम्भवे, या प्रमाणान्तर न बाधेत। वा ३।४।१।८.

* प्रमाणचिन्तार्थं प्रथम लक्षणम्, उत्तरा एकादश-लक्षणी तु प्रमेयचिन्तार्था। सु पृ ५३३

* प्रमाणतन्त्रा प्रमेयव्यवस्थिति। कणिका. पृ ३०६.

* प्रमाणतर्कन्यायेन उभयोरप्यभेदेन परस्परा पेक्षायामपि न परस्पराश्रयदोष। (प्रमाण च तर्कश्च उभाभ्यामुभावपि इष्टौ भवत)। परिमल १।४।२। १–५ अधि.

* प्रमाणत्वं प्रमाकरणत्वम्। सु पृ. २.

* प्रमाणपञ्चकाङ्गीकार (अनुपलब्धिभिन्नानि पञ्च प्रमाणानि प्राभाकरमते)। ऋजु पृ. १६०.

* प्रमाणपरीक्ष्यत्वम्। न परीक्षितव्य निमित्त (धर्मे), प्रत्यक्षादीनि हि प्रसिद्धानि प्रमाणानि, तद-न्तर्गत च शास्त्रम्, अतस्तदपि न परीक्षितव्यम्, अत्रो-च्यते। व्यभिचारात् परीक्षितव्यम्। शुक्तिका हि रजतवत्

प्रकाशते यतः । नेन प्रत्यक्षं तावत् व्यभिचरति, तन्मूलत्वाच्च अनुमानादीन्यपि । तत्परीक्ष्य प्रवर्तमानोऽर्थात् विहन्येत अनर्थं चाप्नुयात् कदाचित् [ इदं 'तस्य निमित्तपरीष्टिः' ( १।१।३।३ ) इति सूत्राधिकरण वृत्तिकारमतेन ] । भा. १।१।५।५ पृ. २५-२६.

* प्रमाणप्रतिपादनं प्रथमाध्यायार्थः । वि पृ. ५ प्रस्तावना.

* प्रमाणप्रमेयबलाबलविचारः । यदि प्रमाणबलाबलं बलीयः ततो बलवच्छ्रुतिप्रमेयत्वात् दुर्बलत्वमापैरपि क्रमादिभिः आचमनादीनां बाधः । प्रमेयबलाबलं बलीयस्त्वे तु पदार्थधर्मेभ्यः क्रमादिभ्यः पदार्थत्वेन आचमनादयो बलीयांसः इति सत्यपि स्मृत्याख्यप्रमाणदुर्बलत्वे बलवदाश्रयानपि स्वरूपेण दुर्बलान् क्रमादीन् बाधिष्यन्ते । वा. १।३।३।५.

* प्रमाणप्रमेयबलाबलविसंवादे किं प्रमाणबलं ज्याय, उत प्रमेयबलं इति संशयः । 'शिष्टाकोपेऽविरुद्धमिति चेत्' ( १।३।३।५ ) 'न शास्त्रपरिमाणत्वात्' (१।३।३।६) शिष्टैः श्रुतिविहितैः क्रमादिभिः पदार्थगुणैः स्मार्ताचमनादिपदार्थस्य अकोपे अबाधे सति तत्स्मरण श्रुतिप्रमाणेन अविरुद्ध इति सिद्धान्ती मन्यते चेत् । तन्न । कुतः ? शास्त्रपरिमाणत्वात् क्रमादीनां श्रुतिसिद्धत्वात् । अतेश्च प्रबलप्रमाणस्थात् प्रमेयबलापेक्षया च प्रमाणबलस्य ज्यायस्त्वात् । तस्मात् आचमनादिस्मरणमप्रमाण इति पूर्वः पक्षः । सिद्धान्तयति— 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ।' ( १।३।३।७ ) अपिवा इति पूर्वपक्षव्यावृत्तौ । स्मार्तप्रमेयाचमनादिबाधे कारणस्य प्रमाणबलस्य स्मार्तप्रमेयाचमनाद्यवगमात् पूर्वं अग्रहणे अनवगमे इति तस्य ज्यायस्त्वाभावात् कर्ममध्ये स्मर्तृभिः प्रयुक्तानि आचमनादीनि आदरणीयतया प्रतीयेरन् । तस्मात् सत्यपि विरोधे बलवद्विरोधाभावात् युक्त आचमनादिस्मृतीनां प्रामाण्यम् । अथवा 'शिष्टाकोपे॰ परिमाणत्वात्' शाक्यादिग्रन्थेषु योंऽशः वेदवादैर्विरुध्यते तत्र अप्रामाण्यमस्तु । शिष्टाकोपे शिष्टं वेदोपदिष्टं न कोपयति न बाधते यः तस्मिन्नंशे तु अहिंसासत्यवचनदमदयावैराग्यध्यानाभ्यासादिधर्मबोधके प्रामाण्यमविरुद्धम् । इति चेन्, तन्न । कुतः ? शास्त्रपरिमाणत्वात् । परिमाणेति कर्मणि ल्युट् । धर्मप्रतिपादकशास्त्राणां परिमितत्वात् । याज्ञवल्क्यादिभिर्हि धर्मस्थानानि परिगणितानि । न च तदन्तर्गताः शाक्यादिग्रन्थाः इति सिद्धान्तः । अथवा वसन्तोत्सवादिसदाचारः अप्रमाणं इति चेत् आह सिद्धान्ती— 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' । अपिवेति पूर्वपक्षव्यावृत्तौ । आचारप्रामाण्यविरोधकारणस्य दोषस्य अग्रहणे । निमित्तसप्तम्येषा । अग्रहणात् हेतोः शिष्टैः प्रयुक्तानि वसन्तोत्सवाद्याचरणानि प्रमाणतया प्रतीयेरन् । अतः शिष्टाचारस्य प्रामाण्य इति सिद्धान्तः । कु. १।३।४।७ पृ. ५८-६१.

* प्रमाणबलस्य बलत्वात् प्रमेयबलाबलं बलीयः । सु. २।१।१३।४२ पृ. १८०. * प्रमाणबलाबलस्य पूर्वमुपस्थितत्वेऽपि प्रमेयविरोधसापेक्षत्वात् तदालोचनद्वारा प्रमेयबलाबलस्यैव पुरःस्फूर्तिकत्वेन निर्णायकत्वम् । अयं न्यायः उत्पत्तिविनियोगयोः परस्परविरोधे इष्यते । कौ. २।३।२।९ पृ. ३२०.

* प्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य ज्यायस्त्वन्यायेन ( १।३।३ ) ( शिष्टाकोपाधिकरणन्यायोऽयम् ) अहर्गणरूपे अहीने विश्वजिदभिजितामह्नां भूयस्त्वात् अहर्गणस्यैव प्राबल्यावगतेः तेनैव विश्वजिति एकस्मिन् प्रसङ्गसिद्धिः । इति प्राप्ते । भाट्ट. १२।१।१.

* प्रमाणभेदो हि विषयभेदात् न प्रमातृभेदात् । बृहती. पृ. १८५.

* प्रमाणलक्षणम् । अनुभूतिः प्रमाणम् । का चानुभूतिः ? स्वतन्त्रपरिच्छित्तिः । किमिदं स्वातन्त्र्यं नाम ? परिच्छेदे पूर्वबुद्ध्यनपेक्षत्वम्, स्मृतिस्तु परिच्छेदे पूर्वबुद्ध्यपेक्षैवेति न प्रमाणम् । अनुमानं तर्हि न प्रमाणम्, तस्य पूर्वबुद्ध्यपेक्षत्वात्, इति चेन्, तस्य न परिच्छेदे पूर्वबुद्ध्यपेक्षत्वम्, किन्तु उत्पत्तावेव । कथमिदमवगम्यते स्मृतेः परिच्छेदे पूर्वबुद्ध्यपेक्षत्वं अनुमानस्य तु उत्पत्तौ इति । ज्ञानस्वभावादेव सुखमवगन्तुं शक्यते । [ तदाह ] स्मृतिर्हि 'तत्' इत्युपजायमाना प्राचीं प्रतीतिमनुरुध्यमाना न स्वातन्त्र्येणार्थं परिच्छिनत्तीति न प्रमाणं स्मृतिरिति, अनुमाने तु 'तत्' इति वेदाभावा-

स्तुतयो पूर्वबुद्ध्यपेक्षेति निश्चीयते । स्मृतिप्रमोषस्तर्हि प्रमाणम्, ' तत् ' इति वेद्याभावात् । मैवम् । नावश्यं वेद्यत एव स्मृतित्वनिर्णयः अपितु कारणतोऽपि, स्मृतिप्रमोषेऽपि तु अग्रहणकारणसद्भावात् स्मृतित्वमित्यख्यातिसमर्थने व्यक्तमुक्तम् । स्मृतेः पूर्वबुद्ध्यपेक्षा नेत्थं पूर्वबुद्धिनिश्चितार्थपरिच्छेदाद्वा, पूर्वबुद्ध्युपलक्षितार्थपरिच्छेदाद्वा । ननु स्मृतेरपि स्वस्मिन् मातरि च प्रमाणत्वमिष्टम् । सत्यम्, स्मृतेः स्वापेक्षयाऽऽत्मापेक्षया च स्वातन्त्र्यमस्त्येव, अर्थापेक्षया न स्मृतित्वमस्वातन्त्र्यं च । अतो नातिव्याप्तमव्याप्तं वा लक्षणम् । अतः सिद्धं निरपेक्षत्वं प्रमाणस्य । प्रवि. पृ. २४–२५.

● ' प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि ' ( वा. पृ. ११९ ) इति न्यायात् अनेकादृष्टकल्पनाऽपि न दोषाय । तौता. २।१।१।१ पृ. २२२.

● प्रमाणविचारः । ' स्वरूपसङ्ख्यार्थफलेषु यद्विमिथैः विवादा बहुधा वितेनिरे । अतो वयं तत्प्रतिबोधसिद्धये प्रमाणपारायणमारभामहे ॥ १ ॥ अनुभूतिः प्रमाणं सा स्मृतेरन्या, स्मृतिः पुनः । पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥ २ ॥ न प्रमाणं स्मृतिः पूर्वप्रतिपत्तेरपेक्षणात् । अन्योन्यनिरपेक्षास्तु धारावाहिकबुद्धयः ॥ ३ ॥ तत्र पञ्चविधं मानं प्रत्यक्षमनुमा तथा । शास्त्रं तथोपमानार्थापत्ती इति गुरोर्मतम् ॥ ४ ॥ साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा । मेयेष्विन्द्रिययोग्येषु द्रव्यजातिगुणेषु सा ॥ ५ ॥ सविकल्पाऽविकल्पा च प्रत्यक्षा बुद्धिरिष्यते । आद्या विविक्तविषया स्वरूपविषयेतरा ॥ ६ ॥ सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा । साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन संमता ॥ ७ ॥ मानत्वं सविशे वाद्यं हानादानादिकं फलम् । ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥ ८ ॥ आपेक्षिकं च करणं मन इन्द्रियमेव वा । तदर्थसंनिकर्षो वा मनश्चेत् पूर्वकं फलम् ॥ ९ ॥ ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् । एकदेशान्तरे बुद्धिरनुमानमकथिते ॥ १० ॥ यः कश्चित् येन यस्येह संबन्धो नियमात्मकः । प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥ ११ ॥ प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम् । प्रत्यक्षाद्य कर्तव्या प्रमाणान्तरगोचरा ॥ १२ ॥ शास्त्रं शब्दविदा यदसंनिकृष्टार्थविज्ञानम् । सादृश्यदर्शनोत्थं ज्ञानं सादृश्यविषयमनुमानम् ॥ १३ ॥ सादृश्याद् दृश्यमानाद्यत् प्रतियोगिनि जायते । सादृश्यविषयं ज्ञानमुपमानं तदुच्यते ॥ १४ ॥ विना कल्पनयार्थेन दृष्टेनानुपपन्नताम् । नयता दृष्टमर्थं या साऽर्थापत्तिस्तु कल्पना ॥ १५ ॥ अभावेन गृहे भावो बहिष्कल्पनया विना । नरस्यानुपपन्नत्वं कल्प्यमाना बहिर्यथा ॥ १६ ॥ गम्यस्यानुपपन्नत्वमिह कल्पनया विना । मानान्तरविरोधेन संदेहापत्तिलक्षणम् ॥ १७ ॥ देशेन हि विनाभावो न कदाचन दृश्यते । विनाभावेन सिद्धोऽपि तेन संदेहमाप्नोति ॥ १८ ॥ तत्संदेहव्युदासाय कल्पना या प्रवर्तते । संदेहापादकार्थस्यार्थापत्तिरसौ स्मृता ॥ १९ ॥ गमकस्यानुमाने तु विपक्षाऽसत्त्वलक्षणम् । गम्यतेऽनुपपन्नत्वं विना गम्येन वस्तुना ॥ २० ॥ तत्सामग्रीविभेदेन भिन्ने एते परस्परम् । अर्थापत्त्यनुमानाख्ये प्रमाणे इति निश्चितम् ॥ २१ ॥ अभावाख्यं प्रमाणं ये षष्ठमाहुर्मनीषिणः । तेषां प्राभाकरैरेवं प्रत्यादेशोऽयमुच्यते ॥ २२ ॥ प्रमाणं खलु कस्यापि प्रमेयस्यावबोधकम् । तस्याभावस्य किं तावत् प्रमेयमिति चिन्त्यताम् ॥ २३ ॥ ननु नास्तीति बुद्धौ तु बोध्यं यदुपकल्पितम् । अभावस्य प्रमाणस्य तत्प्रमेयं भविष्यति ॥ २४ ॥ भूतलेऽत्र घटो नास्तीत्येषा या जायते मतिः । सा न भूतलमात्रे स्यात् प्रसक्तेर्घटवत्यपि ॥ २५ ॥ केवले भूतले चेत्स्यात्कैवल्यं तत्र कीदृशम् । स्वरूपमात्रं नो तावद्धर्मान्तरमथोच्यते ॥ २६ ॥ प्रमेयान्तरमेवात्र तावताऽऽहीकृतं भवेत् । तच्च नेन्द्रियविज्ञानं तद्व्यापारानपेक्षणात् ॥ २७ ॥ स्वरूपमात्रदृष्टे हि भावे दूरगतोऽपि सन् । कश्चिद्विज्ञातविशेषो नास्तित्वं प्रतिपद्यते ॥ २८ ॥ तेन यद्यपि नास्तित्वं बुध्यते व्यापृतेन्द्रियैः । भावांशमात्रे तथापि प्रत्यक्षस्य प्रमाणता ॥ २९ ॥ नास्तित्वं न प्रमाणानामनुत्पत्त्यैव गम्यते । नास्तित्वं प्रतिपत्तिर्हि तां विना नास्ति कुत्रचित् ॥ ३० ॥ योग्यप्रमाणानुत्पत्तेः कारणत्वपरिग्रहात् । अक्षिसंनिकर्षोऽपि भावाभावानुवर्तते ॥ ३१ ॥ अनुत्पत्तिश्च न ज्ञाता सती कारणमप्यलम् । तेन लिङ्गत्वग्रहोऽपि दूरादेव निराकृता ॥ ३२ ॥ अनुत्पत्तिश्च

विज्ञानहेतुश्चेल्लिङ्गवद्भवेत् । अनवस्था प्रसज्येत नास्तित्वं नापि सिध्यति ॥ ३३ ॥ किंच पादविहारादिव्यवहारश्च भूतले । न भूतलपरिच्छेदमात्रेणैव प्रवर्तते ॥ ३४ ॥ प्रसङ्गस्तत्र दुर्वारः कण्टकाद्यन्वितेऽपि हि । अथ केवल-भूभागपरिच्छेदात् प्रवर्तते ॥ ३५ ॥ विकल्प्य तत्र कैवल्यं ग्राह्यस्य ग्रहणस्य वा । ग्राह्यस्य चेत्पुरैवोक्तो दोषस्तर्हि प्रसज्यते ॥ ३६ ॥ ग्रहस्य चेत्तदा सूक्ष्म निशाया निष्फलः भवेत् । जाता हि केवलं दर्शितस्तत्र भूतलादिना ॥ ३७ ॥ एका संसृष्टविषया तन्मात्रविषया परा । तन्मात्रविषया या च द्विधा साऽपि प्रमन्यते ॥ ३८ ॥ प्रतियोगिन्यदृश्ये च दृश्ये च प्रतियोगिनि । तत्र तन्मात्रधीर्वेद्य दृश्ये च प्रतियोगिनि ॥ ३९ ॥ नास्तित्वं सैव भूभागे घटादिप्रतियोगिनः । ननु संसृष्टबुद्ध्या यः पुरस्तादवधारितः ॥ ४० ॥ कथं तन्मात्रधी-स्तस्य जाता भावेन तस्य चेत् । उच्यते तद्भावेऽपि वस्तु यो यत्र तन्मूत् ॥ ४१ ॥ तस्याभाव कथं तत्र भूयाच्चेत्तत्र कारणम् । तन्मात्रधिय एवास्तु घट तत्कारण तत ॥ ४२ ॥ तस्या संप्रतिपन्नस्य वादिनोरुभयोरपि । चक्षुर्यदपरामृष्ट न कारणमदर्शनम् ॥ ४३ ॥ स्वापावस्थागतस्यापि कारणत्वप्रसङ्गत । विशेषणादिका तस्य न निषेधस्य दृश्यता ॥ ४४ ॥ भावरूपविशेषो हि नाभावस्योपपद्यते । अदर्शने निवृत्तेऽपि पुनर्भावस्य कस्य चित् ॥ ४५ ॥ प्रागनास्तित्व ध्यायदिगन्तदृष्टस्य पुन क्वचित् । दृश्यस्यादर्शने तेन ज्ञान यदवबोधकम् ॥ ४६ ॥ दृश्यादर्शनतस्तस्य ज्ञान चेद्व्यवस्थितम् । यदि तन्मात्रवित्तिरूप तु स्याददर्शनम् ॥ ४७ ॥ तदा तस्या स्वसंवित्तेरनवस्था निवर्तते । तेनावश्याभ्युपेतव्यो विमर्शो दृश्यगोचर ॥ ४८ ॥ अदर्शनमभावो हि तन्मात्रानुभवात्मकम् । तन्मात्रानुभवश्चाप यददर्शनरूपत ॥ ४९ ॥ विमृश्यते भूतलादौ तदभाव प्रमाते । तन्मात्रानुभवश्चाय न मेय फलभावत ॥ ५० ॥ किंच स्वय प्रकाशोऽसाविति न्यायविदो विदु । नास्तीति शब्द स्तेन स्वसंवेद्ये प्रवर्तते ॥ ५१ ॥ तेन नास्तीति विज्ञान न्यायेन न समागतम् । मेयाभावे ततो मानमभावाख्य कथं भवत् ॥ ५२ ॥ घटसत्ता न लभ्या हि नास्ता-

नोदितक्रमात् । अभावव्यवहारोऽपि निःशङ्कगमनादिक ॥ ५३ ॥ तन्मात्रानुभवेनैव यथोक्तेन प्रवर्तते । यत्र यत्र च दृश्यत्वे सत्यप्यनुपलम्भनम् ॥ ५४ ॥ तदभावव्यवहृतिस्तदानीं सम्प्रवर्तते । सूक्ष्मसभाजिज्ञासाऽऽप्यत सार्थकता गता ॥ ५५ ॥ ता विना नहि दृश्यत्व सूक्ष्म सत्ताऽधिरोहति । व्यवहारप्रवृत्तिश्च दृश्या दृष्टिनिबन्धना ॥ ५६ ॥ तेन दृश्यत्वसिद्ध्यर्थ सार्थक सूक्ष्मवीक्षणम् । न चैव लक्षणम् यत्नार्यसार्थक्य कीदृश ॥ ५७ ॥ मीमांसार्णवसंभूत पीयता समयामृतम् । प्रत्यक्षाद्यपरिच्छेद्यम माभाख्य चतुर्विधा ॥ ५८ ॥ प्रमेय साधयन् मानम माचार्य वदन्ति ये । तन्निराकरणार्योऽय यत्नो भाष्य कृता कृत ॥ ५९ ॥ अभावोऽपनिहृतस्य नास्तीत्यस्या वबोधक । प्रमाणक्त भवतीति प्रमाणाभावतोच्यते ॥ ६० ॥ किं निराकरणस्येह फलमित्यत्र चे मतम् । उच्यते लक्षण प्रत्य प्रत्यक्षादे समर्प्यते ॥ ६१ ॥ प्रमाणं कार्यगम्य हि सर्वमति विनिश्चितम् । निश्चयश्च प्रमाणस्य कार्य मित्यपि समवम् ॥ ६२ ॥ निश्चयश्चेदमेवेति क्वचित्सर्ववस्तुषु । स च वस्त्वन्तराभावसंविरक्तानुगमे सति ॥ ६३ ॥ प्रमाणानुदयात्तत्र यत्नमानोऽवसीयते । तत्र तेन सहेव स्यात् प्रत्यक्षादे प्रमाणता ॥ ६४ ॥ लक्षण क्रियमाण हि तथाभूतस्य युज्यते । न कृत च तथा तेन न कृत साधु लक्षणम् ॥ ६५ ॥ इमा शङ्का निराकर्तुं निराकरणमुच्यते । कथ पुनरिय शङ्का भवत्यत्र निराकृता ॥ ६६ ॥ अभावाख्यो नाम योऽस्ति यदय प्रार्थ्यते पुन । प्रमाणानामनुत्पाद साधु तल्लक्षण कृतम् ॥ ६७ ॥ इति पूर्वप्रमाणाना लक्षणानि समादधत् । भाष्यकार इम ग्रन्थ चक्रे नाभावलक्षणम् ॥ ६८ ॥ नन्वेवमपि पञ्चाह शब्द हित्वा कथ पुन । भाष्यकार प्रमाणानि चिक्षेप न सदधत् ॥ ६९ ॥ उच्यते, व्यवहारस्य हेतुभूत प्रसिद्धये । एतमाहोमयस्मादपि व्यवहार प्रतिष्ठित ॥ ७० ॥ तत्र भावव्यवहृति पञ्चस्वेवोपलभ्यते । अभावव्यवहारस्तु दृश्यादृष्टिविमर्शत ॥ ७१ ॥ सा हि भूभागसद्भावमात्रावच्छेदवन्धना । यदा भावव्यवहृतिरिति प्रागेव दर्शितम् ॥ ७२ ॥ मीमांसाकल्पतरोरदोपनयरत्ननिकर निजधाम्न । इति शालिकनाथ प्रमाणामृतस्य कलामुदा

इन्द्रदीरः ॥ ७३ ॥ प्र. पञ्चिका. ( अमृतकला ) पृ. १२७–१३२.

● प्रमाणव्यवहारेषु सत्सु न प्रमाणमनुग्रहीतुं पुरुषाः प्रमेयेषु प्रार्थ्यन्ते । किं तर्हि ? आत्मानं अनुग्रहीतुम् । शा. ३।२।८।२१ पृ. ७७८.

● प्रमाणशब्दस्य ' वेदाः प्रमाणं ' इत्यादिप्रयोगेण लोके नियतलिङ्गत्वावधारणम् । सु. पृ. ९६३.

● प्रमाणसंख्या–स्वरूप–विषयादिषु वादिनां विवादः । के चिदेकम्, द्वे, त्रीणि, चत्वारि, पञ्च, षट् च इति संख्याविवादः । स्वरूपविवादस्तु ' कल्पनापोढमभ्रान्तं प्रत्यक्षम् ' इत्यादि । विषयविवादः सामान्यमेव अनुमानस्य विषयः इत्येवंविधः । एवं चोक्तं ' ननु व्यभिचरति प्रत्यक्षं ' इति । तेन प्रमाणान्यपि व्यभिचरन्ति इति विप्रतिपत्तिरस्ति । ऋजु. पृ. ३७.

● प्रमादः अनवधानम् । रहस्य. पृ. २१६.

● प्रमादः अन्यासक्तिः । सु. पृ. १३५.

● प्रमापकं न प्रत्यक्षं धर्मस्य । १।१।४।४.

● प्रमुष्टतत्ताकस्मरणं स्मयवानेषु अङ्गीक्रियते । मणि. पृ. २६.

● प्रमेयः धर्मः, असन्दिग्धाविपर्यस्तत्वे सति पुण्यभागत्वात् । चि. १।१।४.

● प्रमेयापहारलक्षणो बाधः एकः प्रागभावः । बाल. पृ. १११.

● प्रमेयचिन्तायां उक्ता ( २–१२ ) एकादशलक्षणी ( प्रथमाध्यायस्तु प्रमाणचिन्तार्थः ) । सु. पृ. ५३१.

● प्रमेयबलाबलं प्रमाणबलाबलात् बलीयः । सु. पृ. ६८०.

● प्रमेयबलाबलन्यायः । प्रमेयः पदार्थो बलवान्, गुणः अबलः । ३।३।१. ' लिङ्गाकोशाधिकरणम् ' इत्यत्र द्रष्टव्यम् । ● दुर्बलस्यापि प्रमाणस्य विशेषविषयत्वे तेन प्रबलस्यापि सामान्यविषयस्य संकोच इष्टः । ' यस्मिन् देशे मृगः कृष्णः ' इति स्मृत्या श्रुतिसंकोचस्य प्रमेयबलाबलन्यायेन साधितत्वात् । मी. २।२।३।१०. ● पदार्थाना प्रधानत्वात् अद्दृष्टदृष्टिधानुरोधेन बाधस्य प्रमेयबलाबलन्यायेन अनुपपत्तेर्वा किञ्चित् कृतवे शिष्ट्वा सर्वमन्यत् प्रदीयताम् । इति प्राप्ते । भाट्ट. ६।७।३.

● प्रमेयसिद्धिः प्रमाणाधीना । सु. पृ १७९.

● प्रयत्नः इच्छाकारणकः । सु. पृ. ३१. ● प्रयत्नश्च प्रत्ययवत् न विषयमन्तरेण शक्यो निरूपयितुम् । कणिका. पृ ३२५ . ● पुरुषप्रयत्नश्च विष्णुदेवता भावना उच्यते । शा. ३।३।११।२६ पृ. ५४७.

● प्रयाजः अन्यः दृष्टादृष्टार्थः । मन्त्रपाठेन देवतास्मरणं दृष्टम्, त्यागद्वारा कालान्तरापूर्वजनकत्वाच्च अपूर्वं अदृष्टम् । चि. ४।१।७ . ● प्रयाजः उत्तमः । अत्र ' स्वाहाग्निं स्वाहा सोमम् ' इत्यादिवाक्यगतमन्त्रलिङ्गवशेन प्रत्यभिज्ञायमाना आज्यभागादिषु यज्यमाना एव देवताः संस्कार्याः ( इद १०।१।७ इत्यत्र प्रतिपादितम् ) । इदं च कर्म दृष्टादृष्टार्थं द्रव्यसंस्कारकं सन्निपत्योपकारकं प्रत्ययम् । बाल. पृ. ८३. ● प्रयाजः उत्तमो दर्शपूर्णमासयोः । तेन देवतायामदृष्टं क्रियते । ४।१।७।१८–२०. ● प्रयाजः उत्तमः दर्शपूर्णमासयोः संस्कारकर्म, नारादुपकारकम् । आज्यभागादिषु या देवता यष्टव्याः सा एवात्र देवताः । १०।१।७।१४–१५. ● प्रयाज. द्वितीयो नाराशंसः यावत्पाता वसिष्ठ–अत्रि–वाध्र्यश्व–शुनक–कण्व–कश्यप–संकृतीनां च । इतरेषां तु तनूनपात् द्वितीयः प्रयाजः इति गोत्रभेदेन अनुष्ठानप्रकारो भिद्यते । चि. ६।६।१. ● प्रयाज. पञ्चमः आज्यभागदेवतासंस्कारकः । १०।२।७. मीको. पृ. २०५० ' दर्शपूर्णमासयोः प्रयाजाः ' इत्यत्र द्रष्टव्यम् । ● प्रयाजः पञ्चमप्रयाजादौ भावनिकप्रभावविनियोगत्वेऽपि यास्ति । भाट्ट. ४।१।७. ● प्रयाजाः अग्नीषोमीये पशौ एकादशैव, न तु प्रतिप्रयाजं एकादशत्वापत्त्या । ५।३।१।१–२. ● प्रयाजा. अहर्गणोपर्युत्पन्नो नोपहोमादिभिः सह विकल्प्यन्ते । न च आघ्नायकमात्र । टुप्. १०।८।८।१६ पृ. २०६९. ● प्रयाजा. अदृष्टार्थमेव आरादुपकारक क्रत्वर्थं प्रवृत्तिरूपं वैदिक कर्म । बाल. पृ. ८२. ● प्रयाजाः आज्येन, अनुयाजाश्च पृषदाज्येनाग्नीषोमीयपशौ । तथा च द्रव्यद्वयधारणार्थं पात्रद्वयं कर्तव्यम्, एकस्मिन् पात्रे द्रव्यद्वयस्य धारणासम्भवात् । के. (५।२।८).

* प्रयाजा आरादुपकारका दर्शपूर्णमासयोः । ९।२।२०. मीको पृ २०५२ 'दर्शपूर्णमासयोः प्रयाजा आरादुपकारका' इत्यत्र द्रष्टव्यम् । * प्रयाजा उपभृत्सु नैव सन्ति 'अप्रयाजास्ता अनूयाजाः' इति । वि १०।७।१४ * प्रयाजा औपभृतार्धमानयनस्य शालमुखीयनयनस्य च प्रयोजका उत अनूयाजा एव तयोः प्रयोजकाः, तदर्थं भेदमुभय न प्रयाजार्थं इति चिन्तायां प्रयाजद्वय समानयनस्य तन्त्रस्थताज्यस्य च प्रयोजक इति सिद्धान्तः । भाट्ट ४।१।१५ * प्रयाजा चातुर्मास्येषु नव अनूयाजाश्च । भा ५।३।१।१-२ * प्रयाजा दर्शादौ अग्नीषोमीयपशौ च आम्नायन्ते । के (वि ५।२।८) * प्रयाजा दर्शपूर्णमासप्रयोज्याः । यदुद्देशेनाद्महति प्राप्यस्य यस्य, तत् तत्प्रयोज्यम् । भाट्ट ४।१।१ * प्रयाजा न समिदादिदेवतासंस्कारविधिः, किन्तु यागा एवैते विधीयन्ते 'समिधो यजति' इत्यादिना । वि ९।२।२०, * प्रयाजा नाम यागाः 'समिधो यजति', 'तनूनपातं यजति', 'इडो यजति', 'बर्हिर्यजति', 'स्वाहाकारं यजति' इति दर्शादौ पञ्च आरादुपकारकाः । ९।२।२० * प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि । पशवर्थाः एव तु कृताः पशुपुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते । भा ११।२।३।११ पृ २०९९, * प्रयाजाः पाशुकाः तिष्ठति पशौ वर्तन्ते 'तिष्ठत पशौ प्रयजति' इति वचनात् । १२।१।१।२, * प्रयाजाः समिदादयः मैत्रायणीयानां न समाम्नायन्ते । अथ च गुणाः श्रूयन्ते 'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति । तेन सर्वशाखाप्रत्ययमेकं कर्म । २।४।२।११, * 'अपबर्हिषः प्रयाजान् यजति' ज्योतिष्टोमे अवभृथे । १०।७।१५।४७ * प्रयाजे एकादशापि सोमेऽग्नीषोमीये पशौ विहिते प्राकृतपञ्चान्तराणां न बाधः । १०।३।१।११-१२ * प्रयाजेनवापि चातुर्मास्येषु विहिते प्राकृतानां तेषां न बाधः । भा १०।३।१।११-१२, * प्रयाजे पौरोडाशिके आसन्ने हविषि मन्त्रितयम् । १२।३।१।१।२ * प्रयाजस्य पञ्चमस्य मन्त्र 'स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा प्रजापतिं स्वाहाग्नीषोमौ' इत्यादि दर्शपूर्णमासेष्टौ । वि १०।१।७, * प्रयाजयोः चतुर्थपञ्चमयोर्निष्पादकमानयनम् औपभृताज्यस्य प्रयोजकं दर्शपूर्णमासयोः । ४।१।१९, * प्रयाजानाम् अग्नीषोमीये पशौ एकादशत्वार्थं स्वस्थानविवृद्धौ स्वीकृतायां प्रथमस्य द्विरावृत्तिः, एवं द्वितीयस्य तृतीयस्य चतुर्थस्य चावृत्तिः इत्यष्टौ, पञ्चमस्य त्रिरावृत्तिः इत्येकादश । (इदं सर्वं शुद्धम् । वस्तुतस्तु पञ्चप्रयाजमन्त्रा भिन्नाः पशुगतैकादशप्रयाजमन्त्राश्च भिन्नाः । एकादशसंख्यया च पञ्चसंख्याया बाध एवेति साठे इत्युपाह्व काशीनाथशास्त्री च केवलानन्दश्च । प्रयाजैकादशत्वादिसंख्या स्वसमपत्त्यर्थं प्रकृत्यन्तराणि आक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयानेव आक्षिपति, तदङ्गभूतयोः प्राकृतसदृशदेवताकयोः पूर्वयोः भेदयोः मध्ये षण्णामन्येषामप्राकृतदेवत्यमन्त्राणां पशौ आम्नानात् । यदि आद्यानां त्रयाणामभ्यासः स्यात्, ततो मन्त्राणाम् अप्यपकर्षापत्तिः, समिन्नामत्वस्यानुपस्थितिश्च । अतः सन्निधानाविशेषात् चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुर्वारमावृत्तिः इति । भाट्ट ५।३।२ अयमेव च आशयः सोमनाथीयतन्त्ररत्नादिष्वपि ।) । ५।३।१ * प्रयाजानामपकर्षे प्रयाजान्तकाण्डस्यैवापकर्षः । ५।१।१२।२३-२४ * प्रयाजानाम् आरादुपकारकता, समिदादिपदानां नामधेयत्वात् । भा. ९।२।२०।५८-५९ * प्रयाजानां क्रमः 'समिधो यजति' इत्यादिविधिवाक्यपाठक्रमेण नियम्यते । वि ५।१।४ * प्रयाजानां पशौ एकादशसंख्या चातुर्मास्येषु च नवसंख्या सर्वसमुदायस्य न तु प्रत्येकम् । एवमनूयाजानाम् । चयने उपसदां च षट्संख्या । भा ५।३।१।१-२ * 'प्रयाजेऽपीति चेत्' (९।२।२०।५८) इत्यत्राधिकरणे श्रुत्या विनियुक्तानां मन्त्राणां स्वार्थसमवायकल्पकत्वासंभवात् मान्त्रवर्णिक देवताप्राप्त्यभावेन तत्सरूपयागाभावात् नामधेयत्वानुपपत्तेः 'विष्णुं यजति' इतिवत् समिदादिशब्दानां द्वितीयान्तानां देवतां विधिं पूर्वपक्षयित्वा (नाचोदितत्वात् । ५९ इति-) यजेः पूजार्थत्वाभावेन देवतायाः पूज्यमानकर्मत्वायोगात् तदुद्देशत्यागस्य वा समाप्तित्वेन अनन्वयित्वात् तत्कर्मणः अभिभूतत्वेन विवक्षाऽनुपपत्तेः, उद्देश्यत्वेऽपि च अनीप्सित

स्यात् प्राधान्यलक्षणकर्मत्वानुपपत्तेः श्रुत्यविनियुक्तानामपि मन्त्राणां उपांशुयाजवत् यागाकाङ्क्षितदेवताकल्पकत्वोपपत्तेः देवताविधित्वस्य निराकरिष्यमाणत्वात् । सु. वृ ७१९.

• ॐ प्रयाजेऽपीति चेत् । ९।२।२०।५८ ॥

दर्शपूर्णमासयोः प्रयाजा आम्नाताः ' समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति ' इति । अत्र किं देवता विधीयन्ते, उत यागा आरादुपकारका विधीयन्ते इति विचारे पूर्वपक्षमाह । प्रयाजे इति एकवचनं सामान्याभिप्रायम् । प्रयाजेष्वपि समिदादिशब्दैः देवता विधीयन्ते ( उत्तरसूत्रे ' अचोदितत्वात् ' इत्यत्र वर्तमानस्य चतुर्थ्यन्तत्वाभिप्रेत्य चोद्यन्ते इति विपरिणम्य पूर्वपक्षप्रतिज्ञा समर्थनीया । ) । इति चेत् ।

नाचोदितत्वात् । ५९ ॥

- पूर्वपक्षं निषेधति सिद्धान्ती । नात्र देवतात्वेन समिदादयश्चोद्यन्ते, चतुर्थ्या तद्धितेन वा अचोदितत्वात् । मान्त्रवर्णिक्यस्तु देवताः प्रयाजेषु । तस्मादारादुपकारकत्वेन समिदादिनामकयागविधय एवैते । समिदादिभिर्यागैर्भावयेत् इति वाक्यार्थोऽत्र । के.

• ' प्रयाजे च तन्न्यायत्वात् ' इत्यधिकरणे, किंचित् देवतोद्देशादीन दृष्टार्थं द्रव्यप्रक्षेपाख्येन अदृष्टार्थं यथा उत्तम प्रयाज । तत्र हि ' स्वाहाऽग्निं स्वाहा सोमम् ' इत्यादि यावनामन्त्रलिङ्गात् क्रमेण प्रत्यभिज्ञायमाना आज्यभागादिदेवताः संस्कार्याः इति प्रतिपादितम् । भाट्ट. पृ. ८२.

ॐ प्रयाजे च तन्न्यायत्वात् । १०।१।७।१४॥

दर्शपूर्णमासयोः उत्तमं प्रयाजे संस्कारकर्मत्व प्रत्येतव्यम् । चशब्देन पूर्वोक्तं संस्कारकर्मत्वमत्रातिदिश्यते । तन्न्यायत्वात् तस्याः स्विष्टाहुतेः न्याय एव न्यायः यस्मिन् उत्तमः प्रयाजः तन्न्यायः । तन्न्यायत्वात् प्रकृतयागीयदेवताना संस्कारकर्म उत्तमः प्रयाज । न्यायश्च ' शेषभूता. आज्यभागादिषु अग्न्यादयः । तदर्थो याग सन् प्रयोजनवान् भवति, शेषभूतत्वात् तत्संस्कार. ' इति । ' दृष्टे संभवति अदृष्टकल्पना न युज्यते इति न्यायसाम्यम् ' इति कुतूहलम् । इदं सिद्धान्तसूत्रम् ।

लिङ्गदर्शनाच्च । १५ ॥

लिङ्गस्य दर्शनात् दर्शपूर्णमासयोः उत्तमः प्रयाजः प्रकृतयागीयदेवताना संस्कारकर्म । किं लिङ्गम् ? सप्तपञ्चदेवताक. चातुर्मास्येषु उत्तमप्रयाजस्य निगदो दृश्यते ' स्वाहाऽग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणम् ' इत्येवलक्षणकः । स देवतासंस्कारपक्षेऽवकल्पते । तस्मात् उत्तमः प्रयाज. संस्कारकर्म इति सिद्धान्तः । के.

• ' प्रयाजेप्रयाजे कृष्णलं जुहोति ' सौर्ये चरौ । वि. ७।४।२. • प्रयाजेषु देवताविधिर्मान्त्रवर्णिकः, समिदादिशब्दास्तु कर्मनामधेयम् । भा. ९।२।२०।५९–६०. • प्रयाजेषु न सर्वहोमः, प्रशासनोपकरणकाभिघारणविधिनैव धारणाक्षेपात् । भाट्ट. ४।१।१४ पृ. १०३.

ॐ प्रयाजेषु पाशुकेषु आद्याश्चत्वारः प्राकृतानां चतुर्णां क्रमेण विकारः । अन्त्यश्चान्त्यः पञ्चमादिषु षट्सु त्रयस्त्रयः चतुर्थपञ्चमयोर्विकार. ॥

एकादशप्रयाजानामपि निरेकीकरणेन समपक्षया विभागेन अन्त्यस्यान्त्यात्मको विकारः, अन्येषां द्वौद्वौ ।' इति प्राप्ते, प्रथमादीनां चतुर्णां देवतासामान्यात् क्रमेण चत्वारो विकाराः । एवमन्त्यस्यान्त्यः । अन्त्योपान्त्यमध्ये ये तावदप्राकृताः षट् प्रयाजाः पठितास्तेषां देवतासामान्याभावात् ' सम स्यात् ' इति न्यायेन चतुर्थपञ्चमयोस्त्रयस्त्रयो विकाराः क्रमेण भवन्ति । संकर्ष. २।३।६.

• प्रयाजेषु बर्हिष चतुर्थत्वमाह । ' चतुर्थोत्तमयोः प्रतिसमानयति ' इत्युक्ते सति ' अविहायैतो बर्हिः प्रतिसमानयति ' इति । भा ५।१।४।७, • प्रयाजेषु मान्त्रवर्णिको देवताविधि । ९।२।२०।६०.

• प्रयाजाधिकरणम् । ९।२।२०।५८–५९.) मीको. पृ. २०५२ ' दर्शपूर्णमासयोः प्रयाजा आरादुपकारका. ' इत्यत्र द्रष्टव्यम् ।

• प्रयाजानुमन्त्रणक्रमाधिकरणम् । पञ्चमे ' अनियमोऽन्यत्र ' इत्यधिकरणे ( ५।१।३ ) शाखाभेदेन आम्नातानां प्रयाजानुमन्त्रणानां ' एको ममैका च

त्वस्य ' इत्यादीना ' वसन्तमृतूना प्रीणामि ' इत्यादीना च समुच्चय सिद्ध कृत्वा कि कश्चिन्नियत क्रमोऽस्ति उता नियत इति चिन्तितम् । तत्र शङ्क्यते । ननु यदि अनुमन्त्रणानामदृष्टार्थत्वम्, ततो मन्त्राधिकरणविरोध । तथा ' क्रमश्च देशसामान्यात् ' ( ३।३।५।१२ ) इत्यत्र 'न चानिशावलिङ्गाना प्रक्रिया विनियोजिका । अतीत्यन्य च सामर्थ्यं संनिधानुपपद्यतम् ॥ ' इत्यनुमन्त्रणदृष्टार्थतोक्त्या विरोध । तथा ' मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । दोषेण क्रमता भूत्वा स्यादेतदनुमन्त्रणम् ॥ ' इत्येवलक्षणानुमन्त्रणस्य बाधात । अथ दृष्टार्थत्वम्, ततः समुच्चयाभावे क्रमचिन्ता न युक्ता इति । अत्र केचित् । मन्त्राणा स्मृतिरूप दृष्टमेव प्रयोजन लोनशास्त्राणामिव । स्मृतिस्तु लोनशास्त्रवत् अदृष्टार्था । प्रयाजानुमन्त्रणेषु च यद्यपि श्रुतिवृत्त्या कर्मस्मृतिर्न भवति, तथापि अनुमन्त्रणसमाख्यया तात्पर्यग्रहात् सा अवश्याभ्युपेया । या तु 'क्रमश्च' ( ३।३।५।१२ ) इत्यत्र स्मृतेरपि दृष्टार्थतोक्तिः ' प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात् ' इति ग्रन्थे ( वा. पृ ८१९–८२० ), सा अभ्युपेत्यवादमात्रमिति । तद्युक्तम् । तथा सति पूर्वाद्स्मृतेरपि अदृष्टार्थाया दर्शमरणे मरणसमवेते तदनुमन्त्रणाना उत्कर्षयोगात् । अतो यत्र मन्त्राणा लिङ्गात् कर्मसमवेतार्थप्रकाशकता तत्र स्मृतेरपि दृष्टार्थतैव । तद्विषयत्वादेव च प्रायिक अनुमन्त्रणलक्षण लिङ्गमूलत्वात् । अतो न तद्वशात् प्रयाजानुमन्त्रणमन्त्राणा स्मृत्यर्थता इत्यदृष्टार्थतैव । 'प्रकृतयाग' इत्यादि वार्तिक च स्मृत्यर्थानुमन्त्रणविषयमेव नाभ्युपेत्यवाद । तदभिप्रायमेव तु ' सत्यपि चादृष्टार्थत्वे ' इति वार्तिक ( वा. पृ ८१० ) नित्यानुवाद इति । यद्वा 'मन्त्रार्थत्वेन' ( अनुमन्त्रणलक्षणस्थ पद ) इति न मन्त्रप्रतिपाद्यतया इत्यर्थे, करणमन्त्रेषु अतिप्रसङ्गात् । किन्तु प्रयोजनवचनोऽयमर्थशब्दः । ततश्च क्वचित् अप्रतिपाद्य, क्वचित् प्रतिपाद्य शेषी मन्त्रप्रयोजनत्वेन यत्र स्मर्यते, तदनुमन्त्रणमित्यर्थः । एव च मन्त्रमुच्चारयन् इति शतृप्रत्ययो वर्तमानार्थः समर्थितो भवति । मन्त्रजन्यानुस्मृतिः मन्त्रपाठोत्तरकाल इति तत्र मन्त्रमुच्चारयन् स्मरेत् इत्यनुपपन्नम् । तेन दृष्टार्थस्यापि आग्नेयाद्यनुमन्त्रणस्य अदृष्टार्थस्यापि च प्रयाजानुमन्त्रणस्य पाठकाले शेषानुसंधानात् उत्तरत्रानुमन्त्रणताऽपि युक्ता । अदृष्टार्थत्वाच्च समुच्चयोऽपि इति । ऋजवस्तु ' करणत्वाभावे सति ' इति विवक्षितत्वात् न करणेषु अतिप्रसङ्ग । उच्चारयन् इति च ' वर्तमानसामीप्ये वर्तमानवद्वा ' इति शता, मन्त्रार्थत्वेन इति मन्त्रप्रतिपाद्यत्वेन इत्येवार्थ । ततश्च प्रयाजानुमन्त्रणेष्वपि अनुमन्त्रणसमाख्ययैव लक्षणया दृष्टार्थत्वकल्पनेऽपि अन्वारम्भणमन्त्रवत् वचन समुच्चयार्थं भविष्यति । क्रमचिन्ता वा इत्याहु. । शाख पृ. ११२–११३.

● **प्रयाजानुमन्त्रणमन्त्राणाम्** ' वसन्त ऋतूना प्रीणामि स मा प्रीतः प्रीणातु ' इत्यादीना नियतपाठक्रमाद्यभावात् नास्ति नियत क्रम. । वि ५।१।३

● **प्रयाजानुयाजाः** अङ्गकर्म न फलप्रयुक्तम्, तत्र फलश्रुतिरर्थवाद. । ते च आग्नेयाद्यर्थाः क्रत्वर्थाः । भा ४।३।१।१–४. ● प्रयाजानुयाजा क्रत्वर्थाः । क्रत्वर्थश्च प्रकरणेन । वि. ४।३।१. ● प्रयाजानुयाजाश्चाग्नेयादेते ( पाशुका पौषैकादशिकाश्च ) दार्शपौर्णमासिका । तत्र प्रयाजानुयाजशब्दौ प्रख्यातौ । ते च चोदकेनेह प्राप्ताः संनिहिता विद्यन्ते । प्रकृतगामित्व च शब्दस्य न्याय्यम् । न चैक शब्दोऽनेकार्थो युक्त । तस्माद्दार्शपौर्णमासिकाश्चैते । तदुपकारोऽप्येषा दार्शपौर्णमासिक एव । स हि तेषा प्रख्यात । भा १२।१।१।७ पृ २२१०

● **प्रयाजानुयाजार्थता** औपभृतान्यस्य । ४।१। १६।४२–४५.

● **' प्रयाजानूयाजेभ्यस्तत् '** इत्यत्र प्रहेश्वरादिकृत युत्पादितकौस्तुभोक्तरीत्या न वाक्यभेद. । भाट्ट ४।१।१६. ● ' प्रयाजानूयाजेभ्यस्तत् ' इत्यत्र प्रयाजेभ्यः ( च ) अनूयाजेभ्यः ( च ) इति विग्रहे न दोष । ( परिनिष्ठितविभक्त्या विग्रह )। भाट्ट ४।१।१५

● **प्रयाजानूयाजादीनामेकादशत्वादिसख्या** सर्वसाधा पक्षादौ । ५।३।१. ' प्रयाजैकादशत्वन्याय ' इत्यत्र द्रष्टव्यम् ।

● **प्रयाजान्ताङ्गकलापापकर्ष**· ज्योतिष्टोमे अग्नीषोमीयपशौ । 'विहर्न्त पशु प्रयजन्ति' इति प्रयाजानामप-

कर्तृ. श्रुत, स च न केवलं प्रयाजानामेव । वि. ५।१।१२.

* प्रयाजाभावे तदर्थमाज्यं न गृह्यते 'अप्रयाजास्ताः (उपसद्.) अननुयाजास्ताः' इति यत्र श्रूयते तत्र । भा. ९।४।१६।५४.

* प्रयाजार्थमाज्यसमानयनं औपभृताज्यस्य प्रयोजकम् । ४।१।१५. मीको. पृ. ८७८ 'आज्यसमानयनाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* प्रयाजाज्यपात्रात् अनुयाजार्थपृषदाज्यपानं मिव अग्नीषोमीये पशौ । भा. ५।२।८।१६.

* प्रयाजादीनि अदृष्टेनोपकारसंबन्धेनोपकुर्वन्ति । बर्हिरादीनि यागद्रव्यधारणेन । अपराणि अधिकरणसंस्कार द्वारेण । कर्तारस्तु क्रियानिर्वृत्या उपकुर्वन्ति । भा. ११।२।१०।५९. * प्रयाजादीन्यपि स्वकीयावान्तरापूर्वद्वारा मुख्यापूर्वसाधनान्येव । वि. ३।७।१. * प्रयाजादीनि दर्शपूर्णमासयोः श्रुतानि विध्यन्तेन सौर्यादिष्वपि अतिदिष्टानि । भा. ८।१।११।१२२. * प्रयाजादिः शेषः, परार्थत्वात्, मुखादिवत् । वि. ३।१।२. * प्रयाजादयः एकप्रयोगवचनगृहीतत्वेऽपि 'गुणानां च परार्थत्वात्' (३।१।१२।२२) इत्येव परस्परशेषत्वं न प्रतिपद्यन्ते । भा. ३।७।१।४. * प्रयाजादयो वैदिककृत्यापूर्वस्य गुणाः । भा ७।४।१।४. * प्रयाजादिभिः अङ्गैः पश्वर्थैः पशुपुरोडाशस्य प्रतप्रसिद्धिः । १२।१।१।१-६. * प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं प्रकरणात्, न प्रधानत्वम् । वि. ३।३।४।११. मीको. पृ. २६६४ 'प्रकरणाधिकरणम्' इत्यत्र द्रष्टव्यम् । * प्रयाजादीनां विश्वजिदादिवत् न फलकल्पनम्, नापि दर्शपूर्णमासफलानुपङ्गः । भा. ३।३।४।११ पृ. ८१८, * प्रयाजादिषु उपकार्यमपेक्षमाणेषु दर्शपूर्णमासयोः च उपकारमपेक्षमाणयोः अनिष्पन्नानसे एवोपकारे प्रकरणात् तादर्थ्यं प्रतीयते । ३।१।२।२ पृ ६५८, * प्रयाजादिषु एकादशत्वादिगुणविधिः अग्नीषोमीयपश्वादौ । १०।३।१. मीको. पृ. १०७ 'अग्नीषोमीयपश्वादौ प्रयाजादिषु' इत्यत्र द्रष्टव्यम् ।

* प्रयाजाद्यङ्गानां एकस्मिन् प्रयोगे सकृदनुष्ठानम् । ११।१।७।२९-३७. 'फलभूमाधिकरणम्' इत्यत्र द्रष्टव्यम् । * प्रयाजाद्यङ्गानां देशकालकर्तारस्त एव, ये प्रधानानाम् । ११।२।२.

* प्रयाजादीतिकर्तव्यता अग्नीषोमीयपशौ प्राकृतवैल्याद्यपेऽपि आतिदेशिकी एव । १०।३।१.

* प्रयाजादिधर्मा अपूर्वप्रयुक्ताः । ७।१।१. मीको पृ २३६ 'अतिदेशन्याय.' इत्यत्र द्रष्टव्यम् । * प्रयाजादिधर्माणां उपदेशेन प्रकृतिमात्रार्थता । ७।१।१।१-१२.

**प्रयाजैकादशत्वन्यायः ।** अग्नीषोमीये पशौ प्रयाजानुयाजानामेकादशत्वसंख्या सर्वसंबाधा ॥

**विप्रतिषिद्धि: कर्मभेदात् पृषदाज्यवत् तस्यतस्योपदिश्येत । ५।३।१।१ ॥**

भाष्यम्— अग्नीषोमीये पशौ श्रूयते 'एकादश प्रयाजान् यजति, एकादशानुयाजान् यजति' इति । चातुर्मास्येषु 'नव प्रयाजान् यजति, नवानुयाजान् यजति' इति । अग्नौ श्रूयते 'पशुपसद' इति । तत्र सन्देहः किं प्रतिप्रयाजं एकादशसंख्या प्रत्यनुयाजं च, तथा चातुर्मास्येषु नवसंख्या, तथा अग्नौ चोपसत्सु षट्संख्या, उत सर्वसंपाद्या संख्या इति । किं प्राप्तम्? प्रतिप्रधानं संख्या भिद्यते इति । भिन्नानि हि तानि कर्माणि । तानि च प्रधानानि प्रति संख्या श्रूयते । प्रधानसंनिधौ च गुणः शिष्यमाणः प्रतिप्रधानं भिद्यते । यथा 'पृषदाज्येनानुयाजान् यजति' इति प्रत्यनुयाजं पृषता गुणो भिद्यते, एवमिहापीति ।

टुप्— 'एकादश प्रयाजान् यजति' इति संख्या प्रयाजानामङ्गत्वेन विधीयते । तेषां चोद्देश्यमानत्वात् साहित्यमविवक्षितम् । अत एकैक एकादशसंख्यया संबध्यते ।

**अपि वा सर्वसंख्या स्यात् तद्विकारः प्रतीयेत । २ ॥**

भाष्यम्— सर्वसंपाद्या संख्या कल्प्येत । कुतः? पृथक्त्वनिवेशिनी हि संख्या भवति पृथक्त्वे अभ्यासेन कल्प्येत, यावति अर्थसंभवो भेदस्य तावति एव अभ्यस्येत ।

यावति सम्भवति तावति पृथक्त्वनिवेशैव एव न्याय्यः। तस्मात् सर्वसपाद्येव सख्या। यत्तु पृषदाज्यवदिति। न पृथक्ता एकस्य न सम्भवति, नाप्यै पृथक्त्वनिवेशिनी। न चैकस्य क्रियमाणा सर्वेषां तन्त्रेण उपकरोतीति। तस्मा-दवश्य मेतव्या। कर्नेण तूपकरोति सख्या। इतरापेक्षा हि सा भवति। एव सति सङ्ख्यस्य मापकः प्रयोग-वचनः अनुग्रहीष्यत इति।

टुप्-- पृथङ्निवेशिनी संख्या। तत्र द्रव्याण्य (एतावत् रत्ने नास्ति, इतं स्यात्) पृथङ्निष्पन्नरूपाण्य एक- (आनयनादि-) क्रियया संबध्यमानाना (तेनैवा-वच्छेदेन) युज्यते सख्या 'दश घटा आनीयन्ताम्' इति। इद तु प्रयाजानाम् (क्रियारूपाणा द्रव्यवत्) पृथङ्निष्पत्तेरभावात् या (इयमेकादशत्व-) सख्या (निष्पत्तिव्यतिरिक्तक्रियाऽवच्छेदनिबन्धना), सा न युज्यते। (कुतस्तदाह-) उत्पत्त्यपेक्षा हि कर्मणां सख्या। उत्पत्तौ (प्रयाजविधौ) च द्विधाऽपि (यदि एकैक-स्मिन् अथ समस्तेषु इत्युभयथाऽपि) एकादशसख्या न घटते। (तथाहि-) यदि (तावत्) एकस्मिन् स्यात्, तत्स्तान साक्षाद्युज्यमानत्वात् तल्लक्षितेन प्रयोगेण युज्येत। एवं चेत् यत्र (प्रयाजस्वरूपे) श्रुता (सख्या) तत्र न कृता, अश्रुते (प्रयोगे) कृता (स्यात्, तत्र विधिबाधप्रसङ्गः। किञ्च-) अश्रुत च पञ्चपञ्चाशत् संख्याऽन्तरमुपजायेत (एकैकस्य एकादशसख्यासम्बन्धात्। अतो न तावत् प्रत्येक सबन्ध)। समस्तेरपि (सख्या) न शक्या योजयितुम्। [उत्तरः ग्रन्थस्य लिखिते नास्ति अस्मदीये। तन्त्ररत्ने मुद्रिते चास्त्येव]। कथम्? (अस्मिन् पक्षे-) प्रयाजैः (एकादश-) संख्यैकदेशः (पञ्चत्वम्) संबध्येत। अन्यस्य सख्यैक देशस्य (प्रयाजस्वरूपेण-) असंबध्यमानस्य सपत्वे प्रयाजाः प्रयोग लक्षयेयुः (लक्षयेरन् इति रत्ने पाठः)। तेन (लक्षितेन प्रयोगेण) असौ (संख्यैकदेशः पञ्च त्वम्) संबध्येत। (तत्र दोषमाह--) तत्र प्रयाजाः संख्या चोभयमपि बाध्येत। संख्या तावत् प्रयाजे श्रूय माणा (प्रयाजेषु श्रुता सती इति रत्नम्) प्रयोगे कृता (बाधिता स्यात्)। प्रयाजा अपि संख्यैकदेशेन योजिताः, अन्यश्च संख्यैकदेशः प्रयाजलक्षितेन प्रयोगेण युक्तः (बाध्येत। तत्र किमत आह-) तत्र प्रयाजो ऽन्यार्थः श्रुतः (सख्याऽर्थः श्रुतः), अन्यार्थ उच्चारित' (स्यात् न च तद्युक्तम्)। किञ्च (अयमपरो दोषः-) सकृदुच्चारितः (प्रयाजः) सख्यया संबध्यते, प्रयोग च लक्षयेत् (न च युगपत् श्रुतिलक्षणावृत्ती सम्भवतः। तेन) द्वयोरपि (अनयोः पक्षयोः) अश्रुतकल्पना (स्यात्)। तस्मात् (श्रुतिवृत्त्योः सख्याप्रयाजयो रन्वयायोगात्) अन्यः प्रकार आश्रीयते। यदि वा प्रयाजशब्दः प्रयोग लक्षयेत्, अथवा सख्या लक्षणा-वृत्ता (पञ्चत्वलक्षणार्था)। तत्र प्राथम्यात् अविरोधाच्च मुख्यवृत्ता सख्या। यदि च (सख्या) लक्षणा वृत्ता स्यात्, तत्तथा पञ्चत्वे लक्ष्यमाणे (प्रकृतिन एव पञ्चत्वस्य प्राप्तत्वात्) अप्रवृत्तिविशेषकर वाक्य स्यात्। तस्मात् (पारिशेष्यात्) प्रयाजाः प्रयोग लक्ष यन्ति। ते च लक्षयन्त. इतरेतरसव्यपेक्षा लक्षयन्ति। (कुतः?) सख्याया इदमेव स्वाभाव्यम् (स्वभाव स्वाभिक. व्यञ्) यत्तु भिन्नेष्वितरेतरयुक्तेषु वर्तते। (यत्तु पूर्वपक्षे पृषदाज्यवत् इत्युक्तम्, तत्राह-) योऽन्यो गुण (पृषदाज्यादि') ॥ इतरेतरनिरपेक्षैरेव सबध्यते। (किञ्च) एकैकेन च प्रधानेन परस्परनिरपेक्षेण यत्रो क्रियते। सख्याया उभयमपि नास्ति। (न हि सा कर्म स्वरूपेण सनद्धुं समर्था, न च अन्यनिरपेक्षा एकत्र वर्तते)। अतोऽय गुणोऽपि सन् इतरगुणविलक्षणः (सर्वसपात्र.। तदिदमुक्तं सूत्रकारेण 'सर्वसख्यत्वात्' इति सर्वलक्षितप्रयोगसपात्रत्वात् इत्यर्थः। यद्वा सर्वेषा समुदितानामेकसंख्याऽन्वयसम्भवादित्यर्थः। व्याख्याना न्तरमाह--) प्राकृतसंख्योपमर्देन च अस्या (सख्याया') निवेश। प्रकृतौ च पञ्चत्वं समुदितानाम्, न त्वेकैकस्य। इहापि समुदितानामेव एकादशसख्या। ननु पृथङ्-निर्दिष्टाना अर्थैत्स्यत्वात् प्रयाजा. अनूद्यन्ते। उच्यते। अर्थात् शब्दात् वा प्रकृतौ इयत्ता पञ्चसंख्यापरिच्छिन्ना। इहापि प्रयाजसंनिधित्वेन (प्रकृतिलिङ्गेन) एकादश संख्या (समुदितानामेव) परिच्छेदिका भवितुमर्हति इति। (सर्वसख्यत्वात् इति प्रकृतौ समुदितानां संख्या

संबन्धात् इहापि एकादशसंख्या तद्विकार एव युक्ता इति सूत्रार्थः ) ।

( अधिकरणस्य लक्षणसंगतिं दर्शयति– ) सर्वसंपादने अन्यादृशः प्रश्न., अन्यादृशं इतरत्र ( प्रत्येकसंबन्धपक्षे )। ( किञ्च ) उत्तरस्य ( अधिकरणस्य ) च उपोद्घाताधिकरणमिदम् । स्थिते ह्येतस्मिन् ( समुदायसंबन्धे ) दण्डकलितवत् आवृत्तिः स्वस्थानविवृद्धिर्वेति चिन्ता अवतरति ( प्रत्येकसंबन्धे तु स्वस्थानविवृद्धिरेवेति निश्चयात् न चिन्ता स्यात् ) ।

शा— ' तत्रोद्दिश्यप्रयाजादि संख्या तस्योपदिश्यते । उद्देश्यानां च साहित्यं शक्यते न विवक्षितुम् ॥ ' तस्मात् प्रतिप्रयाजं, प्रत्युपसदं च संख्या स्यादिति प्राप्ते, अभिधीयते । ' प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते । अशक्यत्वात् प्रयोगे तु लक्षिते सोपदिश्यते ॥ '

सोम— सूत्रार्थस्तु— यथा पृषदाज्येनानूयाजानिति पृषदाज्य प्रत्येकं तथा एकादशत्वादिसंख्यानुवृत्तिरपि तत्र तत्र प्रयाजादेः उपादिश्येत इति ।

वि— ' एकादश प्रयाजाः किं प्रत्येकं स्यादुतान्यथा । संख्यावृद्धिः, रिहायोऽस्तु प्रतिमुख्यं गुणो यत ॥ , प्रत्येकं समुदाये वा स्वरूपेण न सिध्यति । संख्यावृद्धिः प्रयोगस्तु साऽऽवृत्त्या संभविष्यति ॥ ' पञ्च प्रयाजान् द्विरावर्त्य पुनरपि चरमप्रयाजे सकृदावर्तिते इति एकादशत्वसंख्या संपद्यते ।

भाट्ट— विकृतौ ' एकादश प्रयाजान् यजति ' ' षडुपसदः ' इत्यादि, वैकृती अनेकव्यक्तिवृत्तिः अधिकसंख्या श्रुता । सा ' प्रतिप्रधानं गुणावृत्ति'न्यायेन पृषदाज्यादिवत् एकैकस्मिन् प्रयाजादौ प्रत्येकमसंबध्येत इति एकैकः एकादशवारं आवर्तनीय । इति प्राप्ते, द्वित्वादिसंख्यायाः पृथक्त्वनिवेशितात् एकैकस्मिन् पञ्चस्वपि वा पृषदाज्यवदावृत्तिं विना एकादशत्वानुपपत्तेः उत्पत्तिवाक्यगतत्वेन च कर्मभेदकत्वायोगात् आवश्यके जघन्ये प्रयाजपदे प्रयोगलक्षणया संख्याविधौ वर सहितैरेव प्रयाजैस्तल्लक्षणात् सहितप्रयाजप्रयोगाणां सहितानामेवोद्देशात् एतत्प्रयाया संख्या इति प्राप्तः । वस्तुतस्तु प्रयोगो नाम न पदार्थान्तरम्, येन लक्षणा स्यात्, अपि तु प्रयाजानामेव व्यक्त्यन्तरम् । अतश्च यथैव प्रकृतौ ' पञ्च प्रयाजाः ' इत्यादौ तत्तद्व्याप्यजात्यवच्छिन्ना एव व्यक्तयः प्रयाजत्वव्याप्यजात्यवच्छेदेन उच्यन्ते, तथा अत्रापि एकादशत्वादिसंख्यासंपत्त्यर्थं तावद्व्यक्तीनामुक्तौ क लक्षणा । अत. तदभावेऽपि व्यापकधर्मावच्छेदोद्देशेन विहितैकादशत्वादिसंख्या अनेकव्यासज्यवृत्तित्वसामर्थ्यात् व्यक्त्यन्तराण्याक्षिपन्ती लाघवात् प्रकृतिक्लृप्तव्यक्त्यात्मिकप्रयाजैः पदैवाक्षिपति, नाधिका, इति सर्वसंपाद्यत्वसिद्धिः । न चैवं प्रयोगलक्षणाभावे ' तिस्र आहुतीः ' इत्यादाविव व्यक्तिभेदापत्तिः । तत्र विधेयताऽवच्छेदकविजातीयहोमत्वस्य एकस्य पूर्वपक्षकृप्तत्वेन भेदप्रतियोगिताऽवच्छेदकतया प्रयाणामेव तेषां कल्पनयोपपत्तौ तत्तद्व्यक्तित्वस्य प्रतियोगिताऽवच्छेदकीभूतस्य विधेयताऽवच्छेदकत्वकल्पने गौरवात् । प्रकृते तु व्याप्यप्रयाजत्वस्य उद्देश्यताऽवच्छेदकत्वात् संख्यायाश्च विधेयत्वात् न काचित् कल्पना इति वैषम्यम् ।

मण्डन— ' संख्या प्रयाजवृन्दस्य । '

शंकर— ' प्रयाजैकादशौ पशौ । ' संस्काराः इत्यनुवर्तते । पशौ संस्काराः ।

* त्रिवृदस्तोमकेषु संख्यासंपत्तिः प्रयाजैकादशत्वन्यायेन अभ्यासेनापि उपपत्तेः न सामान्तरागममाक्षिपति । वस्तुतस्तु प्रयाजैकादशत्वन्यायेन ऋचामपि अभ्यास एव । आवापविधिस्तु यावद्वचन अपूर्वविधिरेव, इति प्राप्ते । भाट्ट १०।५।६, * पद्विंशाद्यावे ' षडहा भवन्ति, चत्वारो भवन्ति ' अत्र सत्यप्येकवाक्यत्वे प्रयाजैकादशत्वन्यायेन निर्वाहसंभवात् ननु संख्या आवृत्त्यापादिकैव । ८।३।२, * सारस्वते ' त्रिवत्सः साण्डः सोमक्रयणः ' । न च एकत्वस्यापि प्रतिक्रियं निवेशापत्ते न सर्वक्रयेषु एकद्रव्यतासिद्धिः ( इति वाच्यम् ) तथात्वे द्रव्यबहुत्वात् बहुवचनप्रसङ्गेन एकत्वस्य क्रयसमुदाये एव प्रयाजैकादशत्वन्यायेन विधेयत्वात् एकद्रव्यतासिद्धेः । १०।३।१६, * सौत्रामण्यां पशुषु विभिन्नद्रव्यदेवतासंबन्धवत्त्वात् उत्पत्तिवाक्यविहितात् प्रयाजे-

दशत्वन्यायेन पशुपुरोडाशयागस्य अभ्यासः सम्पद्यते। १०।१।९.

* 'तिस्र आहुतीर्जुहोति' इत्यस्य न प्रयाजैकादशत्वन्यायविषयत्वम्, एकादशत्वविधिः पूर्वं प्रकृतौ प्रयाजानां प्रत्येकैकत्वेन वा प्रचयविशिष्टपक्षत्वेन वा निर्ज्ञातसंख्यत्वात् । प्रकृते तु न संख्यानुमानम्, प्रत्यक्षश्रुतत्वात् । कौ २।२।७।२० पृ. २३४.

* प्रयाजहूयार्थं औपभृतान्यं जुह्वामर्धं समानेयं न तु अर्धन्यूनम् । भाट्ट. ४।१।१७.

* (वरुणप्रघासाख्यपर्वे) आमिक्षाहविःशेषस्य निष्कासस्य अस्मिन् कर्मणि हविष्ट्वयोगात् प्रयाजन्यायेन (प्रयाजशेषाभिघारणन्यायेन ४।१।१४) प्रतिपत्तिः स्यात् । निष्कासः संस्क्रियते । इति प्राप्ते । वि. ११।२।१५. * दीक्षाकाले यूपच्छेदे प्रयाजन्यायेन (प्रयाजान्तापकर्षन्यायेन तदन्तापकर्षन्यायेन ५।१।१२) तदन्तानुबन्धस्यापकर्षणात् प्रणयनमपि अपकृष्यतामिति प्राप्ते । वि. ५।१।१४. * सौमिकाग्निप्रणयनानन्तरं पश्वङ्गतया 'यूप छिनत्ति' इत्युक्तं यूपच्छेदनं 'दीक्षासु यूपं छिनत्ति' इत्यनेनापकृष्टं प्रयाजन्यायेन (तदन्तापकर्षन्यायेन ५।१।१२) प्राचीनोऽपि पदार्थान् अग्नीषोमप्रणयनादीनपकर्षेति । इति प्राप्ते । भाट्ट. ५।१।१४.

* प्रयाजमन्त्रेषु 'समिधः समिधो अग्न आज्यस्य व्यन्तु' इत्यादिषु समिदादिशब्दैः देवता निर्दिष्टाः । वि. ९।२।२०.

* प्रयाजवाक्ये श्रूयमाणस्य अभिक्रमणस्य प्रयाजेष्वेव निवेशः, न तु सर्वस्मिन् दर्शपूर्णमासप्रकरणे । ३।१।१०।१९-२०.

* 'प्रयाजशेषेण हवींष्यभिघारयति' इत्येतत् अङ्गप्रधानार्थम् । वा. ३।७।१।५, * 'प्रयाजशेषेण हवींष्यभिघारयति' इति सत्यपि शेषस्य तृतीयानिर्देशे कार्यान्तरयोगित्वात् संस्कार्यत्वावधारणम् । ३।३।८।२७ पृ. २८४, * 'प्रयाजशेषेण हवींष्यभिघारयति' प्रयाजशेषे हवींषु धारयति इति वचनार्थः सम्पद्यते । कपिष्ठ. पृ १८४. * प्रयाजशेषेण हविरभिघारणं प्रतिपत्तिश्च हविःसंस्कारश्चेति उभयुक्तोपयोगस्यमाणोभयप्रसङ्गात् । भा. ४।१।१४।३३-३९.

* प्रयाजशेषाभिघारणं आग्नेयपुरोडाशस्य पूर्वं कर्तव्यं ततः सान्नाय्यस्य, सूचिवमात्रानुल्लङ्घनस्य बलीयस्त्वात् । भा. ५।४।२।२-४. * प्रयाजशेषाभिघारणप्रमाणपल्यनना वैकल्पिकम् । शास्त्र. पृ. १६१.

* प्रयाजशेषाभिघारणाधिकरणविचारः । चतुर्थे (४।१।१४।३३-३९) प्रयाजशेषाभिघारणाधिकरणे किञ्चिदुच्यते । 'चतुर्जुह्वा गृह्णाति प्रयाजेभ्यस्तत्' इति प्रयाजार्थं चतुर्गृहीतं 'चतुर्गृहीतं वा एतदभूत् तस्याघारमाघार्य निरिदः प्राचीन प्रयाजान् यजति' इत्यनेन प्रयाजत्रये उत्सृष्टम्, तेन 'जुह्वा जुहोति' इति होमे विहिते कृत्स्नमेव होतव्यम् । ननु प्रयाजशेषाभिघारणरूपप्रतिपत्त्यनुरोधेन अकृत्स्नहोमः स्यात् । न । प्रतिपत्तीनामप्रयोजकत्वात् । न च उत्पत्तिप्रयोजकत्वमेव तासां नास्ति, धारणप्रयोजकत्वं तु तासामस्तु इति वाच्यम्। अधिकरणचतुष्टयविरोधात् । तथाहि [१] 'सोमेऽवचनाद्भक्षो न विद्यते' (३।५।६।१९) इति पूर्वपक्षिते 'ग्रहैर्जुहोति' 'चमसैर्जुहोति' इति सर्वहोमप्राप्तावपि 'अल्पं जुहोति' इति वचनेन सिद्धान्तितम्, तत् विरुध्येत, अकृत्स्नहोमस्य न्यायप्राप्तत्वे अल्पवाक्यस्य विधित्वायोगात् । [२] तथा 'आज्याच्च सर्वसंयोगात्' (३।५।२।१) इत्यत्र 'चतुर्गृहीतं जुहोति' इति श्रौतान्यात् गृहीतेन चतुर्गृहीतेन उपांशुयागे हुतेऽपि शेषकार्यानुरोधेन शेषः स्थाप्येत इति तदधिकरणविरोधः । [३-४] एवं 'शाकम्प्रस्थाप्ये (स्वाध्याये) स्विष्टकृदिड च तद्वत्' (३।१०।२।११) 'सौत्रामण्यां च ग्रहेषु' (३।५।३।१४) इत्यनयोरपि अधिकरणयोः सिद्धान्तौ प्रत्युद्धृतौ स्याताम् । किञ्च न केवल सिद्धान्तविरोध एव, किन्तु प्रतिपत्तीनां प्रतिपाद्यप्रयोजकत्वाद्योगरूपन्यायेन यथा प्रतिपाद्योत्पत्तिप्रयोजकत्वाभावः सिध्यति, एवं प्रतिपाद्यस्य शाक्यतः कृत्स्नहोमे प्राप्ते तद्धारणप्रयोजकत्वमपि सिध्यत्येव । तदुक्तम् 'सोमेऽवचनात्' (३।५।६।१९) इत्यधिकरणे शास्त्रदीपिकायाम् 'अथ शेषकार्यमस्त्यत् शेष्येत, ततश्चेदानीं प्रयोजकत्वात्

अधिकरणत्वमेव तु अत्र विवक्षितम्, न तु व्याप्यमानत्वम्। (तस्मात् अप्रयोजकानि हवींषि इति सिद्धम्)।

**हेतुत्वाच्च सहप्रयोगस्य । ३५ ॥**

**भाष्यम्**— हेतु वाचाभिधारणस्य, 'सहालभते' इति स्तुतिर्भवति । 'तीर्थे वै प्रातःसवनम्, यत् प्रातःसवने पशव आलभ्यन्ते, तीर्थ एवैतानालभते, सयोनित्वायायो वपानामभिघृतत्वाय' इत्यर्थान्तरेण वपाऽभिधारणमनुगृह्णन् नेहास्तीति दर्शयति ।

**अभावदर्शनाच्च । ३६ ॥**

**भाष्यम्**— अभावं एतस्यापि अभिधारणस्य दर्शयति 'रुक्षा वा एतर्हि वपा यर्हि अनभिघृता, ब्रह्म वै प्रस्तराम, यद् ब्रह्मणा सहालभते, तेनारुक्षा, तेनाभिघृता' इति । रुक्षशब्दो रूक्षे भाष्यते । 'रुक्षा वपा' इत्यनभिघृततां दर्शयति ।

**सति सव्यवचनम् । ३७ ॥**

**भाष्यम्**— आह, नैतद्दर्शनम्, सत्येव ह्यभिधारणे भवत्येतत् सव्यवचनम्। अस्ति हि वपाया अन्यदभिधारणम् । 'उपस्तृणात्याज्यम्, हिरण्यशकलम्, वपा, हिरण्यशकलम्, ततोऽभिधारयति' इति । तस्मिन् सति कथं रुक्षा भवेत् । श्रूयते च । तस्मान्नैतच्छक्यमवगन्तुम्, 'रुक्षा वपा इत्यते' इति । तेन मूलमभिधारणं प्रयाजशेषेणास्तीति । सति अस्मिन्नभिधारणे प्रत्यक्षमरूक्षता । अतो रुक्षावचनं व्यामोह इति ।

**न तस्येति चेत् । ३८ ॥**

**भाष्यम्**— एवं चेद् दृश्यते, सत्यभिधारणे रुक्षा इति वचनमलिङ्गमिति । नालिङ्गम्, तस्यैतद्वचनं यत् स्नेहनं करोति । कतमस्य ? यत् प्रथमम् । प्रथमं हि स्नेहनं करोति, न द्वितीयम् । स्निग्धस्य तद्भवति । न हि स्निग्धस्य स्नेहनं क्रियते । यथा भवति लोके वाद, यदस्माभिः धान्तायानिर्गतैर्देवदत्तस्य गृहे स्निग्धमन्नं भुक्तम्, तेन वयमरुक्षा कृता इति, तस्यापि अयं स्निग्धेष्वेव भोजनेषु । एवं तस्यारुक्षकरस्याभिधारणस्य अभावाद् रुक्षा इति वचनमुपपद्यते, अस्मिंस्तु सति नोपपद्यते । तस्मादपि प्रयाजशेषेणाभिधारणं प्राजापत्यानां नास्तीति ।

**स्यात् तस्य मुख्यत्वात् । ३९ ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । यदि प्रथमस्याभावात् रुक्षा इति वचनं भवत्यनुपपन्नम्, तर्ह्यन्यस्य प्रथमस्य विद्यमानत्वात् । कतमत् ? यच्छ्रूयमाणया अपरमुद्वासितायाः । अतो न्यते । स्यात् तस्य मुख्यत्वात् । यत् प्रयाजशेषेण अभिधारणं तस्यैवाभावादेतदुपपद्यते, सत्यपि श्रूयमाणायाः अभिधारणे उद्वासितायाश्च । यतः यत् श्रप्यमाणायाः, तदग्नेरर्चींषि दहन्ति, यदुद्वासितायाः, तदग्न्यवयवाः ऊष्माणश्चाश्नुवन्ति । सैषा रुक्षैव । इदं तु प्रयाजशेषेण शीतायाः क्रियते । तत् स्नेहयति । तेन स्निग्धायाः प्रदानकालमभिधारणं यत्, तत् न स्नेहयति । तदिदं स्नेहनस्याभिधारणस्य अभावात् रुक्षावचनमुपपद्यते इत्युक्तम् । तस्मान्न प्रयाजशेषो धार्यते इति ।

**शा**— 'तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा । हविषामेव संस्कारो, न शेषस्य विपर्ययात् ॥ सत्यमेव तथापीह शेषस्य प्रतिपादनम् । न्याय्यं, दृष्टार्थतालाभादन्यथाऽदृष्टकल्पनात् ॥ हविराधारनियमात् तत्संस्कारोऽपि गम्यते । तस्मादुभयसंस्कारः स्विष्टकृत्सूक्तवाक्यवत् ॥'

**सोम**— यथा पूर्वत्र उत्तरार्धात्यत्वबलात् प्रकृतग्रहणम्, तथेह द्वितीयाविभक्तिबलात् हविःसंस्कारत्व इति प्रत्यक्षश्रवणात् सगति । सूत्रार्थस्तु— यथा पशौ अनूयाजार्थपृषदाज्यधारणार्थं पात्रभेदः, तथा प्राजापत्यवपाऽभिधारणे निमित्ते तदर्थं पात्रभेदः स्यादिति । यद्यपि इदं सूत्रं अग्नीषोमीयहृदयाद्यभिधारणपरतयाऽपि व्याख्यातुं शक्यते, तथापि 'हेतुत्वाच्च सहप्रयोगस्य' इत्याद्यग्रिमसूत्राणां प्राजापत्यविषयत्वात् भाष्ये तद्विषयतयैव इदमपि व्याख्यातम् ।

**वि**— 'अभिधार्यं प्रयाजानां शेषेण हविरस्ति किम् । दोषधारणतत्पात्रे कार्ये नो वाऽभिधारणम् ॥ नान्यथा तेन ते कार्ये, न कार्ये प्रतिपत्तितः । प्राजापत्यवपायां न कोऽप्यर्थोऽभिधारणात् ॥'

**भाट्ट**— दर्शपूर्णमासयोः 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रुतम् । तत्र प्रयाजशेषाभिधारणस्य

तृतीयाद्वितीयाभ्यां उपयुक्तसंस्कारापेक्षया चोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वात् हविःसंस्कारत्वमेव, न तु प्रयाजशेषप्रतिपत्त्यर्थत्वम्, लक्षणाद्यप्रसङ्गात्। न च हविःसंस्कारकत्वे अदृष्टकल्पनाऽऽपत्तेः अपेक्षितदृष्टसम्प्रतिपत्त्यर्थत्वाभाय लक्षणाद्यङ्गीकरणमपि न दोषायेति मिश्रमतं युक्तम्, निषादस्थपत्यधिकरणन्यायेन अदृष्टकल्पनादेः फल्गुत्वात्। किञ्च, द्वितीयायाः सप्तम्यर्थलक्षकत्वे हविषामभिघारणं प्रति उपादेयत्वापत्तेः तद्गतबहुत्वस्य विवक्षाऽऽपत्तौ निष्फैव कल्पनापत्तिः। तथा च ग्रहैकत्वाधिकरणे तदविवक्षाऽभिधानं वार्तिककारीयं नोपपद्येत। यत्तु अभिघारणं प्रति आधारत्वेनान्वितानामपि हविषामाधारतानियमं प्रति उद्देश्यत्वात् तद्विशेषणाविवक्षेति, तन्न, शुद्धाभिघारणं प्रति उपादेयमात्रत्वेन विवक्षितत्वे आर्थिकाधारतानियमं प्रत्यपि त्रयाणामेवोद्देश्यताऽऽपत्तेः। किञ्च, यदर्थो नियमाश्रयः, तदर्थ एव नियम इति सर्वत्र क्लृप्तेः आधारतानियमोऽपि अभिघारणनियमवत् तद्द्वारा प्रयाजशेषेणोपयुज्येत। अन्यथा पशुरसनायनीयुपोपयापादियाग्येष्वपि करणतानियमस्य ज्ञापनीप्रतिपत्त्यर्थत्वकल्पसंस्कारकत्वापत्तेः एकत्वाविवक्षाऽऽपत्तिः।

एतेन पक्षद्वयेऽपि लक्षणामङ्गीकृत्य आधारतानियमोद्देश्यतामात्रेणैव हविःसङ्ख्याविवक्षामुक्तवतो भट्टसोमेश्वरस्यापि मतं प्रत्युक्तम्। यत्तु केचित्तृतीयाया एव द्वितीयाऽर्थे लक्षणामङ्गीकृत्य अभिघारणस्य उभयार्थत्वनिश्चायाभावेऽनेकोद्देश्यकत्वाच्च न वाक्यभेद इत्युक्तम्, तदपि न, निषादस्थपत्यधिकरणविरोधस्य तादवस्थ्यात्, श्रुतोद्देश्यत्वे लाक्षणिकस्य उपादानासम्भवाच्च, न्याय्यत्वेऽपि श्रुतहविरुद्देश्यकसंस्कारस्यैव धारणप्रयोजकत्वापत्तेश्च। किञ्च, वैजात्यं न तावन्निमित्तफलादिवत्, उभयोरपि ईप्सिततमत्वोद्देश्यत्वस्य समानत्वात्। अथ वैजात्याभावेऽपि साकाङ्क्षत्वादेव नानेकोद्देश्यता, तथात्वे गोदोहनादेरपि पशुप्रणयनादुभयोद्देश्यताऽऽपत्तेः। अतोऽभिघारणस्य ऐन्द्रहविःसंस्कारार्थत्वात् निनयनकालीनपुरोडाशकपालन्यायेन शेषोत्पादनाप्रयोजकत्वेऽपि धारणप्रयोजकत्वोपपत्तिः। अतश्च दैक्षे हृदयाद्यभिघारणार्थं वाजपेये च प्राजापत्यवपाऽभिघारणार्थं च धारणीय एव पात्रान्तरे प्रयाजशेषः। प्रकृतौ हि प्रयाजोत्तरं वपायागमात्रं कृत्वा कालान्तरे हृदयादियागः। वाजपेये च प्राजापत्यान् पशूनालभ्य सहोपक्रम्य दशप्रयाजोत्तरं पर्यग्निकरणान्ते कृते प्राजापत्यानां वैकल्पिको ब्रह्मसाम्नकाले उत्सर्गः। अतश्च पर्यग्निकरणोत्तरमायुत्तमप्रयाजशेषेण क्रतुपशुवपाऽभिघारणवत् कालान्तरभाविप्राजापत्यवपाऽभिघारणार्थमपि धार्यः शेषः। इति प्राप्ते, सत्यं प्रयाजशेषाभिघारणं हविःसंस्कारार्थमेव वाक्येन, तथापि तु प्रयाजशेषस्य प्रतिपत्त्यपेक्षत्वात् तदनुरोधेन स्विष्टकृद्वदेव वाक्यान्तरकल्पनया अभिघारणस्यैव तत्प्रतिपत्त्यर्थत्वमङ्गीक्रियते। न च प्रयाजेषु सर्वहोमस्यैवापत्तेर्न प्रतिपत्त्यपेक्षा, आर्थिकप्रतिपत्त्यन्तरविद्यमानेऽपि प्रयाजशेषकरणकाभिघारणविधिनैव द्वितीयतृतीययोपयापवत् धारणाक्षेपापत्त्या सर्वहोमानापत्तेः। न च स्विष्टकृद्वत् हृदयासभेदाभावादभिघारणस्य श्रौतेन हविरर्थत्वेन अपेक्षाभावप्रमाणकप्रतिपत्त्यर्थत्वबाधः, श्रौतविधेर्धारणाक्षेपशक्तिकल्पनागौरवपरिहारार्थमेव फल्गुप्रतिपत्तिविधिकल्पनाऽनुमतेः। अत एव ज्ञानाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थमधिकारिसङ्कोचनवत् सन्निहितहविःसङ्कोचोऽपि न दोषाय। अत एव यत्र न प्रतिपत्तिः यथा द्वितीयतृतीयोपयाजकपालादौ, तत्र न तत्कल्पना। वाक्यं तु वक्ष्यते। न च आर्थिकप्रतिपत्तिविधेरपि धारणाक्षेपशक्तिकल्पनाऽऽवश्यकत्वे श्रौतविधेरेव तत्कल्पनौचित्यमिति वाच्यम्, पूर्वाधिकरणादेव आनुमानिककल्पनस्य अदोषत्वात्, अनुमानस्य फल्गुत्वाच्च। अतश्च प्रतिपत्तिलिङ्गेनाक्षिप्तस्य धारणस्योपजीवनात् विधिगमनाविरहेण सन्निहितसर्वहविःषु अभिघारणोपपत्तावपि न कालान्तरीयहविरर्थं धारणमिति। अत एव प्राजापत्यवपाना क्रतुपशुभिः सह करणपक्षे 'सह पशूनालभते वपानामभिघृतत्वाय' इति लिङ्गं ब्रह्मसामकालीनत्वपक्षे तदभावं दर्शयति। स्पष्टं च 'ध्रुवा वा एतर्हि वसा यदनभिघृता' इति रूक्षत्वाख्यं दोषं तस्मिन् पक्षे दर्शयति। न च अभिघारणान्तरेण रूक्षत्वनिवृत्तिः, तस्य शाकमात्रनिवर्तकत्वेन रूक्षताया अनिवर्तनात्।

अधिकरणत्वमेव तु अत्र विवक्षितम्, न तु व्याप्यमानत्वम्। (तस्मात् अप्रयोजकानि हवींषि इति सिद्धम्)।

**हेतुत्वाच्च सहप्रयोगस्य। ३५॥**

भाष्यम्— हेतुत्वाच्चाभिघारणस्य, 'सहाज्यमत्रे इति स्तुतिर्भवति। वीर्यं वै प्रात सवनम्, यत् प्राप्त सवने पशव आलभ्यन्ते, वीर्यं एवैतानालभते, सशेनि वायायो वपानाममिघ्रतत्वाय' इत्यर्थान्तरेण वपाऽभिघारणमनुगृह्णत् नेहास्तीति दर्शयति।

**अभावदर्शनाच्च। ३६॥**

भाष्यम्— अभाव एवापि अभिघारणस्य दर्शयति 'सत्या वा एतर्हि वपा यर्हि अनभिघृता, अन्न वै प्रसताम, यद् प्रसताम्यालभते, तेनामत्या, तेनाभिघृता' इति। सत्यशब्दो रूक्षे भाष्यते। 'सत्या वपा' इत्यनभिघृततां दर्शयति।

**सति सत्यवचनम्। ३७॥**

भाष्यम्— आह, नैतदर्शनम्, सत्येव अभिघारणे भवत्येतत् सत्यवचनम्। अस्ति हि वपाया अन्यदभिघारणम्। 'उपस्तृणात्याज्यम्, हिरण्यशकलम्, वपा, हिरण्यशकलम्, ततोऽभिघारयति' इति। तस्मिन् सति कथ सत्या भवेद्। श्रूयते च। तस्मात्तेनरूक्षत्वमवगन्तुम्, 'रूक्षास्ता वपा इत्यन्ते' इति। तेन नूनमभिघारणं प्रयाजशेषेणास्तीति। सति अस्मिन्नभिघारणे प्रत्यक्षमरूक्षात्। अतो रूक्षावचन व्यामोह इति।

**न तस्येति चेत्। ३८॥**

भाष्यम्— एव चेद् दृश्यते, सत्यभिघारणे सत्या इति वचनमल्किमिति। नान्यद्, तस्यैतद्वचन यत् स्नेहन करोति। कतमत्? यत् प्रथमम्। प्रथमं हि स्नेहन करोति, न द्वितीयम्। स्निग्धस्य न भवति। न च स्निग्धस्य स्नेहनं क्रियते। यथा भवति लोके वाद, यदस्माभि कान्तारान्निर्गतैर्देवदत्तस्य गृहे स्निग्धमन्नमुक्तम्, तेन वयमरूक्षा कृता इति, सत्स्वपि अन्येषु स्निग्धेष्वेव भोजनेषु। एव तस्यारूक्षाकरणस्याभिघारणस्य अभावात् रूक्षा इति वचनमुपपद्यते, अस्मिस्तु सति नोपपद्यते। तस्मादपि प्रयाजशेषाभिघारणं प्राजापत्यानां नास्तीति।

**स्यात् तस्य मुख्यत्वात्। ३९॥**

भाष्यम्— इदं पदोत्तर सूत्रम्। यदि प्रथमस्याभावात् सत्या इति वचन भवत्यनुपपन्नम्, तदन्यस्य प्रथमस्य विद्यमानत्वात्। कतमत्? यच्छ्रूयमाणाया अपरमुद्वासिताया। अनोच्यते। स्यात् तस्य मुख्यत्वात्। यत् प्रयाजशेषेण अभिघारण तस्यैवाभावादेतदुपपद्यते, सत्यपि श्रप्यमाणाया अभिघारणे उद्वासितायाश्च। यस्मात् श्रप्यमाणाया तदमेर्वीपि दहन्ति यदुद्वासिताया, तदर्चयवा रूमावयवाश्च नाशयन्ति। सैषा रूक्षैव। इदं तु प्रयाजशेषेण शीताया क्रियते। तत् स्नेहयति। तेन स्निग्धाया प्रदानकालेऽभिघारण यत्, तद् न स्नेहयति। तदिद स्नेहनस्याभिघारणस्य अभावात् सत्यवचनमुपपद्यते इत्युक्तम्। तस्मान्न प्रयाजशेषो धार्यते इति।

शा— 'तत्रोपयोक्ष्यमाणानां द्वितीयायोगिना तथा। हविषामेव संस्कारो, न शेषस्य विपर्ययात्॥ सत्यमेव तथापीह शेषस्य प्रतिपादनम्। न्याय्यं, दृष्टार्थलाभादन्यथाऽदृष्टकल्पनात्॥ हविराधारनियमात् तत्संस्कारोऽपि गम्यते। तस्मादुभयसंस्कार स्विष्टकृत्सत्फलाकरत्॥'

सोम— यथा पूर्वत्र उत्तरार्धशब्दबलात् प्रकृतग्रहणम्, तथेह द्वितीयाविभक्तिबलात् हविसंस्कारत्व इति प्रत्यक्षानात् सगति। सूत्रार्थस्तु— यथा पशौ अनूयाजार्थपृषदाज्यधारणार्थं पात्रभेद, तथा प्राजापत्यवपाऽभिघारणे निषिद्धे तदर्थं पात्रभेद स्यादिति। यद्यपि इद सूत्रं अग्नीषोमीयहृदयाद्यभिघारणपरतयाऽपि व्याख्यातु शक्यते, तथापि 'हेतुत्वाच्च सहप्रयोगस्य' इत्यादिमिमसूत्राणां प्राजापत्यविषयत्वात् भाष्ये तद्विषयतयैव इदमपि व्याख्यातम्।

वि— 'अभिघार्यं प्रयाजानां शेषेण हविरत्र किम्। शेषधारणपक्षाने कार्यं नो वा अभिघारणम्॥ नान्यथा तेन ते कार्ये, न कार्ये प्रतिपत्तित। प्राजापत्यवपायाश्च न कोऽप्यर्थोऽभिघारणात्॥'

भाट्ट— दर्शपूर्णमासयो 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रुतम्। तत्र प्रयाजशेषाभिघारणस्य

मण्डन— ‘ प्रयाजार्थेऽभिघारणम् । ’ १६

शबर— ‘ हवि षु क्षारण तथा । ’ १७. तथा अप्रयोजकम् ।

* प्रयाजशेषाभिघारणन्यायेन भक्षस्य तद्गतकर्तृनियमस्य वा कर्तृसंस्कारकत्वात् हविर्विशेषणस्येव तद्विशेषणस्यापि अविवक्षा । इति पूर्वपक्ष । भाट्ट ६।४।७, * ‘ गुदेनोपयजति ’ इत्यत्र असदुक्तप्रयाजशेषाभिघारणन्यायेन उपयुक्तस्य गुदस्य प्रतिपत्त्यपेक्षत्वात् उपयजनप्रक्षेपांशेन वाक्यान्तरकल्पनया प्रतिपत्तित्वोपपत्ति । १२।४।४, * ‘ जाघन्या पत्नीसंयाजं यजति ’ अस्य वचनस्य नियममात्रपरत्वेऽपि प्रयाजशेषाभिघारणन्यायेन नियमस्यैव जाघनीसंस्कारार्थत्वकल्पन इत्यपि अना शङ्क्यम् । १२।४।६, * नहि ‘ यद्यपि संस्कारक यत् भक्षणम्, तत् तद्वियोगसंनिधिपदार्थकर्तृसंस्कारकम् ’ इत्यत्र प्रमाणमस्ति । प्रयाजशेषाभिघारणन्यायेन हवि संस्कारस्य सत कर्तृसंस्कारकत्वमानकल्पनात् । इति चेन्न, यद्यपि संस्कारक यत् भक्षणम्, तत् तद्वियोगसंनिधिपदार्थकर्तृनिरूपम्, तद्वियोगाद्‌वच्छिन्नक्रियमाणपदार्थे विषये मलाधानरूप वा संस्कार जनयति इत्येव कल्पनात् । १०।३।८, * पार्थसारथिमते तु प्रयाजशेषाभिघारणन्यायेन आचारनियमस्य पशुसंस्कारार्थत्वापत्त पूर्वपक्षेऽपि सौगामञ्जनप्रसङ्गात् प्रयोजनानुपपत्तिरिति भाष्यविरोधोऽपि । ४।४।१०, * प्रकृतौ इडाभक्षणादय शेषभक्षा द्वितीयया शेषप्रतिपत्त्यर्था अपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारार्था अपि इत्युक्त पक्षे । १०।७।६, * यजमानकर्तृकाणां शेषभक्षाणामपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि सत्त्वात् प्राणधारणार्थत्वानापत्ते । सत्यपि द्वितीयया शेषप्रतिपत्त्यर्थत्वे असदुक्तप्रयाजशेषाभिघारणन्यायेन आनुमानिकस्यैव प्राणधारणस्य प्रयोजकत्वाभ्युपगमे तस्य च पयोव्रतेन प्रसङ्गसिद्ध्युपपत्ति । इति प्राप्त । १२।१।१५, * ‘ यजमानपञ्चमा इडां भक्षयन्ति ’ अत्र ऋत्विक्षां भक्षस्य ‘ प्रयाजशेषाभिघारणन्यायेन ’ कर्तृसंस्कारकत्वस्यापि वक्ष्यमाणत्वेन आनन्तर्यत्वात् प्रातिस्विकेन न विधानम् । ६।७।२ * ‘ वेदमर्थी स्तृणीयात् ’ इति वचनान्तरस्य यद्यपि आनन्तर्ये वाच्य भाति, तथापि प्रकृते वाक्यार्थभेदे अध्ययनस्य वक्ष्यमाणता भज्येत इति तदविरोधाय प्रयाजशेषाभिघारणन्यायेन उत्तरकालत्वमात्रमेव लक्षणया प्रतीयते । वैद्यनाथ १।१।१।१ पृ ७ * श्रौतविधेरर्थकमत्वेऽपि असदुक्तप्रयाजशेषाभिघारणन्यायेन आर्थिकदानप्रतिपत्तिविध्यन्तरकल्पनया प्रवृत्तेऽपि कार्यमशेषोपपत्ति । न चात्र मध्ये प्रतिपत्त्यपेक्षाऽभावेन कल्पनाभावात् तन्न्याय वैलक्षण्यम् दानविधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्पनाभिप्रायेण संकोचमङ्गीकृत्यापि मध्ये वदयेऽपपत्ते । भाट्ट ४।२।६, * ‘ सह शाखया प्रस्तरं प्रहरति ’ अत्र शाब्दबोधे गुणत्वभावेऽपि प्रयाजशेषाभिघारणन्यायेन आर्थिकप्रतिपत्त्यन्तरविधिकल्पनेन प्रस्तरवत् शाखाया अपि कृतार्थत्वाविशेषेण प्रतिपाद्यत्वम् । ६।४।१२, * सामिधेनीविवृद्धौ प्रयाजशेषाभिघारणन्यायेन लक्षणया ‘ पञ्चदश सामिधेनीरनुब्रूयात् ’ इतिविहितपञ्चदशसंख्यत्वेन अभ्याससमानविधानम् । इति पूर्वपक्षे । १०।५।८

* अत एव प्रयाजशेषन्यायेन ‘ यो वा यावति ’ इत्यादिलक्षण्या प्राधान्यलक्षणा इत्यपास्तम्, निषादस्थपत्यधिकरणन्यायविरोधेन प्राचीनप्रयाजशेषन्यायस्य अप्रवृत्तत्वात् । इद पूर्वपक्षे । भाट्ट ९।२।२ * ऐकादशिनेषु पशुषु एकादशानां गुदानां विकल्प इति चेन्, नैतम् । प्रयाजशेषन्यायेन ( प्रयाजशेषाभिघारणन्यायेन ४।१।१४ ) तृतीयाश्रुतेर्विपरिणामे सति शेषप्रतिपत्तिसंस्कारविधानात् । तस्मात् समुच्चय । वि १२।४।४ * प्रकृतौ शेषभक्षा शेषप्रतिपत्त्यर्था इति वक्ष्यते । शेषप्रतिपत्त्यर्थत्वेऽपि प्रयाजशेषन्यायेन कर्तु करिष्यमाणकर्मणि मलाधानार्था अपि इत्युक्त पक्षे ( ६।४।१ ) । भाट्ट १०।२।३,९ * ‘ वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति ’ । इत्यत्र निष्कासपदस्य स्वसंनिधिवचनात् वारुण्या इत्यनेन विशेषणाच अथकर्मत्वबाद्यमितेऽपि परप्रयुक्तद्रव्योपजीविकस्य आरम्भकत्वेन लौकिकनिष्कासग्रहणानुपपत्ते उपयुक्तस्य निष्कासस्यैव तेन ग्रहणात् प्रयाजशेषन्यायेन युक्त संस्कार्यत्वम् । कौ २।३।१।२४ पृ ८४ * शेषभक्षा हवि प्रतिपत्त्यर्था प्रयाजशेषन्यायेन कर्तु करिष्यमाणकर्मणि मलाधानार्थाश्च, न तु

आनलम्भो. । भाट्ट. १०।२।९, * सोमे 'पयसा मैत्रावरुण श्रीणाति, स्रुगभिमर्शनम्' इत्यत्र प्रयाज शेषन्यायेन श्रयणस्य सोमसंस्कारत्वे अदृष्टार्थत्वप्रसङ्गात् पय संस्कारकत्वं गम्यते. तदन्यथानुपपत्त्या यागे तस्य विनि योगकल्पनेन प्रदेयत्वावगतिः इति न च वाच्यम् । ९।४।११, * यद्यपि आहिताग्निशरीरप्रतिपत्त्यर्थदाहे विधीयमाने पात्राणामपीना च गुणत्वमेव तृतीयाश्रवणात्, दाहस्य शरीरप्रतिपत्त्यर्थतया दृष्टार्थत्वेन प्राचीनप्रयाजशेष-न्यायस्याप्यभावाच्च, तथापि न पात्रान्तरक्षेप. । ११।३। ११, * ज्योतिष्टोमे प्रायणीयानिर्वापेण निष्कासस्य इव प्रतिपत्तिरूपसंस्कारजनने प्राचीनप्रयाजशेषन्याया-भावः । ११।२।१५, * 'पयसा मैत्रावरुण श्रीणाति' इति श्रयणार्थपयस. प्रयाजशेषवदुपयुक्तत्वाभावेन अस उपयुक्तप्रयाजशेषन्यायाभाव. । ९।४।११, * 'स्वाणाहुति जुहोति' इत्यत्र होमेन तस्य (यूपस्थाणोः) प्रतिपत्ति जननेन प्रयाजशेषन्यायासंभवः । १०।१।६. * न चातिदेशिकप्रतिपत्त्यन्तरनिराकाङ्क्षस्य 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति वाक्यविहितनिष्कासस्य प्रयाजशेषन्यायविषयत्वासंभव', अर्थकर्मत्वपक्षेऽपि निष्कासाने आतिदेशिकप्रतिपत्तिबाधस्य आवश्यकत्वात् प्रयाजशेषस्यापि सर्वहोमसंभवेन अनपेक्षत्वेन प्रतिपत्ति-विधानाच्च । कौ. २।१।११।२४ पृ. ८४.

※ प्रयाणे त्वार्थनिर्वृत्ते. । ११।४।१८।५४ ॥

दीक्षितस्य यज्ञसाधनसामग्रीप्राप्त्यर्थं प्रयाणे 'भद्रादभि श्रेयः प्रेहि०' इति मन्त्र । स किं विश्रामविश्रामे पुन-पुन प्रतिष्ठमानो मन्त्र प्रयुञ्जीत, स्वगृहात् प्रस्थाने सकृदेव वा इति विचारे सिद्धान्तमाह । प्रयाणे तु अथ अर्थ निर्वृत्ते. इति पदच्छेदः । प्रयाणस्य अर्थनिर्वृत्तिपर्यन्त मन्त्र. । अर्थमुद्दिश्य असौ प्रतिष्ठते । तस्मात् स्वगृहात् प्रथमे प्रयाणे एव सकृत् मन्त्र जपेत् । के

* प्रयाणमन्त्रः 'भद्रादभि श्रेय. प्रेहि०' इति । वि. ११।४।१९.

८ * प्रयासानुरूपेण कर्मकरेषु भृतितारतम्य दृष्टम् । वि. १०।३।२३.

* प्रयासरूपेषु नानाविधव्यापारेषु स्वयमशक्तः सन् यजमानः कर्मकरान् परिक्रीणाति यजमानः । वि. ३।८।३.

* प्रयुक्तिनिर्णयः । आचार्यकरणविधिप्रयुक्त अध्य-यनमिति प्रतिपाद्यते, स्वविधेर्नियोज्याभावात् अध्यापन-विधिप्रयुक्तेश्चोपपत्तेः । कः पुनराचार्यकरणविधिः ? 'उपनीय तु यः शिष्य वेदमध्यापयेद् द्विज. । सकल्पं सरहस्य च तमाचार्यं प्रचक्षते ॥' इति स्मृत्यनुमित-विधि । ननु, स्मृतेः प्रसिद्धान्याप्यानस्मात् यच्छब्द-योगाच्च न विध्यनुमानमिति चेत्, न, क्रियायोग्येन वाक्यांशेन विध्यनुमानात्, इतरस्य च विधिसिद्धानु वादात् । यच्छब्दयोगोऽनुवादभाग एव, न विधिभागः, अतो विधिस्वरूपेण पदेन विध्यनुमान इतरत्तु अनुवाद-कम् । न च लोकसिद्धार्थतया आचार्यकस्य तदुपायस्य न विधेयत्वम्, यूपाहवनीयादिवदुपपत्ते. । न च क्रियायोग एवाचार्यकमिति वाच्यम्. तूष्णीमुपनीय वेदाध्यापके तत्पदप्रयोगाभावात् । विशिष्टक्रियायोगो वाच्य इति चेत्, तर्हि सत्यत् अदृष्टमापतितम् । प्राङ्मुखत्वादिनियमस्य अलौकिकनियमस्य अदृष्टोत्पादकत्वेनैव भवति । प्राङ्मुखभोजनादिविहितनैर्नियमयुक्ताध्यापके आचार्य-पदप्रयोगात् अलौकिकमाचार्यकमिति । उपाध्यायपदमप्येवं चेदेवम् । नो चेत्, नैवमिति न तत्राऽऽस्था । किञ्च 'आचार्यात् वरो देव' इत्यतीतेऽपि क्रियायोगे वैदिकप्रयोगदर्शनात् तदानीमपि अनुवर्तमानस्यादृष्टस्यैव आचार्यपदवाच्यत्वं युक्तम्, इतरथा लक्षणाप्रसङ्गात् । न च 'आचार्याधीनो वेदमधीष्व' इति प्रयोगदर्शनात् क्रियायोग एव मुख्य इति वाच्यम् । क्रियायोगादृतेऽपि तदानीं भावात्, भवान्तरेऽपि तुल्यत्वात् । तर्हि मुख्यार्थ-त्याग अर्थान्तरकल्पनाया सर्वत्र लक्षणोच्छेदप्रसङ्ग इति चेन्न, अत्रापि पूर्वोक्तेन न्यायेनार्थस्य सिद्धत्वात् । अयं च वाच्यत्वे हेतु', नादृष्टकल्पनायाम् । अत अलौकिकत्वात् आचार्यकस्य तदुपायतया अध्यापनविधिर्युक्तः । ननु अत्रापि नियोज्यो न श्रूयते । आचार्यकफलश्रवणात् कल्प्यते इति चेत् तर्हि तत्राध्ययनस्यादर्शनात् किमिति न कल्प्यते ? नैवम्, अध्यापनविधेर्थैकस्याधिकारत्वात् । आचार्य-

कस्य लौकिकत्वेऽपि दक्षिणाऽऽदिसाधनत्वेन स्मृतिविहितत्वात् । काम्यमानत्व द्रव्यार्जननियमवत्, अर्थज्ञानस्य तु ज्ञातेऽज्ञाते च काम्यमानत्व न सम्भवतीति अर्थवादाधिकरणे वक्ष्यामः । अध्यापनस्य अध्ययनमात्रसाध्यत्वात् विशिष्टाध्ययनप्रयुक्तिर्न सम्भवति, इति चेन्न, उपनयन तावत् करणप्रत्ययेन अध्यापनाङ्गमवगम्यते, अध्ययनं चोपनयन प्रक्रम्य विहितम् । तेन उपनयनप्रयुक्तिनान्तरीयकतया विशिष्टाध्ययनप्रयुक्तिः । आराडुपकारक तु नास्त्येव । ननु द्वितीयाश्रुतेः माणवकाङ्गत्वमवसीयते । द्वितीयाश्रुते प्राबल्यम् ' यूप परिवीयोपाकरोति ' इत्यत्रोक्तम् । नैवम्, अध्यापनाङ्गभूतोपनयनस्य द्वारतया माणवकाङ्गत्वोपपत्तेः, अपूर्वाङ्गभूतस्यावघातस्य द्वारतया व्रीहि सम्बन्धवत् । स्मृत्यन्तर च व्यक्तम् 'उपनीय गुरु शिष्यम्' इत्यादि । किञ्च अध्यापनविध्यभावेऽपि स्वविधिप्रयुक्तिर्न संभवति, क्रतुविधिप्रयुक्त्युपपत्तेः । तथा च सति स्वर्गकामस्य शूद्रस्याप्यधिकारः स्यात् । अनुपनीतनिषेधोऽपि प्रत्यासन्नत्रैवर्णिकानुपनीतविषय एव । शूद्रोल्लेखेन निषेधोऽपि रागप्राप्तविषयः, न वैधविषयः ' न हिंस्यात् ' इतिवत् । अस्मन्मते तु प्रयोज्यापेक्षया अङ्गार्थार्थितया च अध्यापनविधे. प्रयुक्तिः श्रौमता, क्रतुविधेस्तु प्रयोज्यफलविद्यापेक्षया अङ्गोपायापेक्षया च विलम्बिता । श्रौतो वा आचार्यकरणविधि. ' अष्टवर्षं ब्राह्मणमुपनयीत ' ' तमध्यापयेत् ' इति । अत्र आचार्यकरणप्रयोजने नयतेरात्मनेपदविधेराचार्यकरणार्थमुपनयनमवगम्यते, तच्च तदुत्पत्तिविधेर्निर्वहति इत्युत्पत्तिविध्यपेक्षायाम् ' तमध्यापयेत् ' इत्ययमाचार्यकरणविधिः । न च ' अध्यापयेत् ' इति परस्मैपद नोपपद्यते, कर्त्रभिप्राये ' णिचश्च ' इत्यात्मनेपदापत्तेरिति वाच्यम् । ' बुधयुध ' इत्यादिना विशेषतः परस्मैपदविधे. । न च ' अचित्तवत्कर्तृकार्थोऽयमारम्भः' इति वृत्तिग्रन्थविरोध, ' अणावकर्मकाच्चित्तवत्कर्तृकात् ' इत्यकर्मकेषु चित्तवत्कर्तृकाणामप्राप्त्वादकर्मके एव चित्तवत्कर्तृकार्यतामाह, अस्य सकर्मकत्वादिदो न विरोधः । न चास्मिन् सूत्रे ' इङ् गतौ ' इति धातुः पठितः ' माणवकमध्यापयति ' इत्युदाहरणात् 'निगरणचलनार्थेभ्यश्च' इति गत्यर्थस्य इणः प्राप्तत्वात् । अतो न परस्मैपदविरोधः ।

ननु ' उपनयीत ' इत्यात्मनेपदं नोपपद्यते, कर्त्रभिप्रायेण स्वरितञितसूत्रेण प्राप्ते समानन सूत्रवैयर्थ्यं स्यात्, तथा च वृत्तिकारः ' अकर्त्रभिप्रायार्थोऽयमारम्भः ' इति । नैव क्रियाफलस्य कर्त्रभिप्रायत्वे स्वरितञित्सूत्रं प्रवर्तते । अत्र तु कारकावस्थाया क्रियाफलमुपनेयगतमेव, आचार्यक तु प्रयोजनमिति तस्य कर्त्रभिप्रायत्वेऽपि स्वरितञित्सूत्रेण न प्राप्तिः, एवं च समाननसूत्रं आचार्यकरणे सार्थकं स्यात्, इतरथा ' स्वरितञितः कर्त्रभिप्राये क्रियाफले ' इति सूत्रेणैव गत्यर्थत्वादाचार्यकरणे आत्मनेपदविधान व्यर्थं स्यात् । क्रियाफलतत्प्रयोजनविभागे तु सूत्रद्वयमपि समञ्जस भवति । ननु 'अग्नीनादधीत' ' ओदन पचते ' इत्यात्मनेपदं न स्यात्, क्रियाफलस्य विक्लेदनस्य कर्मगतत्वात् । नैवम्, कर्मगतत्वेऽपि क्रियाफलस्य प्रयोजनस्य कर्त्रभिप्रेतत्वात् । ननु अत्र उपनेयासत्तिरूप क्रियाफल कर्त्रभिप्रेतम्, तस्य कर्मणोऽध्ययनेऽस्ति उपयोगः, कर्तुरध्यापने । नैवम्, आसत्तिरूपस्य क्रियाफलत्वाभावात् । साङ्गोपनयने कृते यन्माणवकगतं तत् संस्कारारख्यं फल नासत्तिरूपम्, तस्य लौकिकोपनयनेनापि समानत्वात् । एवं च क्रियाफल अकर्त्रभिप्रेतमेवेति स्वरितञित्सूत्रस्याविषयत्वात् समाननसूत्रारम्भः सार्थक इति सिद्धं आत्मनेपदादपि उपनयनस्याध्यापनाङ्गत्वम् । प्र. वि. पृ. १-६.

§ प्रयुक्तिविचारप्रतिज्ञा । प्रयोज्यप्रयोजकभावविचारप्रतिज्ञा ॥

**अर्थे समवैषम्यमतो द्रव्यकर्मणाम् । ४।१।८।२१ ॥**

भाष्यम्— अतिक्रान्तस्तृतीयविषय. । अत. प्रभृति द्रव्याणा कर्मणा चार्थे प्रयोजने समवैषम्यं वक्ष्यते । क्वचित्साम्य क्वचिद्वैषम्यम् । आमिक्षावाजिनयोर्वैषम्यम्, क्रयपासना वैषम्यम्, दण्डस्य मैत्रावरुणधारणे यजमानधारणे च साम्यम् । एव तत्र तत्र द्रष्टव्यं साम्य वैषम्यं चेति ।

वि— ' शेषत्वमुपरिग्रन्थे चिन्तनीयमुतेतरत् । शेषो मानात्, न तस्यात्र प्रयुक्ताख्यफलेक्षणात् ॥ '

भाट्ट— एवं तावत् क्रत्वर्थपुरुषार्थविचारद्वारेण प्रयोजकत्वं चिन्तितम् । इदानीं तु साक्षादेव तत् चिन्त्यते । तन्निरूपणार्थस्तु क्वाचित्कोऽङ्गाङ्गिभावविचारः इति सुखग्रहणार्थं प्रतिज्ञामात्रमिदम् ।

मण्डन— ' तृतीयत्रिपयो यतः । '

शंकर— ' साम्यं वैषम्यमर्थगम् । '

• प्रयोक्तृत्वाप्रयोक्तृत्वयोः प्रयोक्तृत्वं श्रौतम्, अनपेक्षत्वन्यायात् । बृहती पृ. ३१-३२.

• प्रयोगः अनुमानाद् बलवान् । भा. ३।३।२।३ पृ. ५८५. • प्रयोगः ऋग्यजुर्मन्त्राणां यज्ञकर्मणि तानस्वरेण । तानः एकश्रुतिः । ९।२।८।१०-११ वर्णकं ३. • प्रयोगश्च अङ्गप्रधानसाधारणः । भाट्ट. ११।२।७, सु. पृ. ७८७. • प्रयोगश्चोद्यते ' दर्शपूर्णमासाभ्यां यजेत ' इति । फलस्य क्रियाऽर्थौ दर्शपूर्णमासौ श्रूयेते ' दर्शपूर्णमासाभ्यां स्वर्गं कुर्यात् ' इति । तत्र आकाङ्क्षा भवति ' कथम् ' इति । सा समिदादिभिर्निवर्त्यते ' समिधो यजति ' इत्येवमिति । तदर्था एता. समिदादिचोदनाः, तेन आकाङ्क्षितत्वात् अफलत्वात् फलवत्संनिधानाच्च । तैषां दर्शपूर्णमासयोः फलं साधयतोः इतिकर्तव्यता । न च इतिकर्तव्यतामन्तरेण कर्मचोदना अर्थवती भवति । तस्मात् सेतिकर्तव्यताकस्य कर्मणः प्रयोगश्चोद्यते । तथा च सिद्धत्वात् प्रधानप्रयोगवचनेनैव शब्देन अङ्गानां प्रयोगश्चोद्यते इति । भा. ११।१।२।८. • प्रयोगो ब्राह्मणचतुष्कपालानां भेदेनैव, साहित्यस्याविवक्षितत्वात् । परन्तु वार्तिके तन्त्ररत्ने च ' वचनान्तरमेतेषां साहित्ये द्रष्टव्यम् ' इत्युक्तम् । मीम. ५।२।१. • प्रयोगः सकृद् अवहननमन्त्रस्य प्रहारसमुदायार्थः, दर्शपूर्णमासयोः । भा. ११।४।१३।४२. • प्रयोगः सर्वाङ्गोपसंहारेण । ११।१।३।११-१९. • प्रयोगः सर्ववैदिककाले आदित एव अन्यजोऽवधार्य आरभ्यते । वा. ३।५।१८।४६. • प्रयोगः साधूनामेव पदानाम् । वि. १।३।९. • सर्वेषामेव शब्दानामर्थज्ञाने लौकिकः प्रयोगोऽभ्युपायः । भा. ६।१।१।१ पृ. १३४७. • प्रयोगात् चोदको बलवान् । वि. ५।१।१०. • प्रयोगात् ( शब्दप्रयोगात् ) स्मृतिर्बलीयसी । प्रयोगाद्धि स्मृतिरनुमीयते । भा. २।३।२।३, • प्रयोगस्य ( शब्दप्रयोगस्य ) असार्वलौकिकस्य सार्वलौकिकेन प्रयोगेण विरुध्यमानस्य अप्रामाण्यं स्यात् । २।३।२।३, • प्रयोगे असदायत्ते किमिति अवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके । १।३।४।१४. • प्रयोगे एकस्मिन् प्रयाजाद्यङ्गस्य सकृदनुष्ठानम् । ११।१।७।२९-३७. • प्रयोगे एकस्मिन् फलद्वयादिद्वयोगः । सु. पृ. ८९७.

ॐ प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् । ६।१।२।३॥

प्रयोगे प्रयोजके प्रवर्तके स्वर्गकामादिवाक्ये पुरुषश्रुतेः ' स्वर्गकामः ' इति एकवचनस्य अविवक्षितत्वेन संख्याविशेषशून्यपुरुषमात्रस्य श्रवणात् प्रयोगे अनुष्ठाने प्रयुज्यमाने कर्मणि वा एको द्वौ बहवो वा कर्तारः इति यथाकामी स्यात् । याथाकामी इति वा पाठः । यथा इच्छा तथा स्यादित्यर्थः । प्रयोगे अपुरुषश्रुतेः पुरुषस्य संख्याविशिष्टस्य अश्रवणात् । तथा च कर्त्रेकत्वनियमः इति पूर्वपक्षः । अत्र प्रयोगे अपुरुषश्रुतेः इति कुतूहले पाठः । वार्तिके तु पुरुषश्रुतेः अपुरुषश्रुतेः इति द्वेधा पाठः । याथाकामी इति कुतूहलपाठः ।

प्रत्यर्थं श्रुतिभाव इति चेत् । ४ ॥

पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्ती आह । प्रत्यर्थं अर्थमर्थं प्रति, प्रत्येकं गुणभावप्रधानभावरूपार्थद्वये श्रुतिभावः ' यजेत स्वर्गकामः ' इति श्रुत्यभिप्रायः । तत्र फलं प्रति पुरुषस्य प्रधानभावे तद्गतसंख्या अविवक्षिता भवतु तथापि यागानुरक्ता क्रिया विदधता आख्यातेन क्रिया गुणभूतकर्त्रुपश्लेषाद् विधीयमाना संख्या विवक्षिता स्यात् । तस्मादेक एव कर्ता । इति चेत् सिद्धान्ती ब्रूयात् ।

तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् । ५ ॥

अत्राह पूर्वपक्षी । तादर्थ्ये तदर्थत्वे फलार्थत्वे पुरुषस्य प्राधान्यात् न गुणार्थता, गुणभूतयागाङ्गत्वं न स्यात् प्रधानत्वगुणत्वयोरेकत्र विरोधात् । अनुक्ते न्याये उभयभावं न प्रतीमः । अर्थान्तरं यतः गुणभावात् प्रधानभावः । अत्र कर्तुः प्रधानभूतत्वात् न गुणभावः शक्यो

विज्ञातुम् । तस्मात् कर्तृसंख्यायां यथाकाम्य इति पूर्वपक्ष ।

, अथवा । अनुक्ते शब्देन अनुक्तेऽपि विशेषे अर्थान्तरत्वात् प्रत्यक्षादिप्रमाणान्तरगम्यत्वात् । प्रधानस्य पुरुषस्य न गुणायता । कर्तुं प्रधानत्वात् तादर्थ्ये सति इत्यन्वय । इति पृ ।

अथवा । तादर्थ्ये स्वर्गस्य पुरुषाभिलषणीयत्वे अव गते सति पुरुषस्य फलोद्देन स्वर्ग याग वा प्रति न गुण भाव सम्भवति । अनुक्ते न्याये संख्याविवक्षा भवेत् । उक्तश्च प्रत्येकवाक्य प्रधानगता संख्या न विवक्षिता इति । न च संख्याया विवक्षा चाविवक्षा च सम्भवत अर्थान्तरत्वात् अथभेदात् अर्थान्तरत्वप्रयुक्तवाक्यभेद दोषापातात् । कर्तुं प्रधानभूतत्वात् । प्रधानपद भाव प्रधान प्राधान्यमित्यर्थ । भूत इति गमते कौरादिकात् प्राप्त्यर्थात् निष्ठा प्राप्तमित्यर्थ । प्रधानभूतत्वात् प्राधान्य प्राप्तत्वात् । याग प्रति कर्तु पुरुषस्य एकस्यैव फल भोक्तृत्वलक्षण प्राधान्य प्राप्तत्वात् अनुक्ते नास्ति पुरुष भेद । तस्मादविवक्षिता संख्या । इति कु ।

चोदनैकत्वात् । ६ ॥

वस्तुत नास्त्येव गुणभाव इत्याह पूर्वपक्षी । 'यजेत स्वर्गकाम ' इति एकैव विधायिका चोदना । सा यदि फलोत्पत्ति यागोत्पत्ति वा विधत्ते, तदा कर्ता न स्वार्थेन । यदा पुन स्वार्थेन, तदा याग फल वा तादर्थ्येन । न चैतद्योगपद्येन भवति । तस्मात् न यागे फले वा पुरुषस्य गुणभाव । अत एको द्वौ बहवो वा यजेरन् इति पूर्वं पक्ष ।

अपिवा कामसंयोगे सम्बन्धात् प्रयोगायोप दिश्येत, प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् । ७ ॥

अपिवा इति पूर्वपक्षव्यावृत्ति । स्वर्गकाम इति कामेन काम्यमानेन फलेन संयोगे गम्यमाने, सम्बन्धात् यजेते त्येकवचनेन एकस्यैव कर्तु सम्बन्धात् यागस्य प्रयोगाय अनुष्ठानाय एक एव कर्ता उपदिश्येत न द्वौ बहवो वा । यत्र तु अनेके अर्था वक्तव्या भवन्ति तत्र प्रत्यर्थं अर्थे अर्थे विधिश्रुति पृथक् भवति । विषाणावत् । यथा 'कृष्णविषाणया कण्डूयति ' इति विषाणाकरणककण्डूयने पृथक् विधि , 'चात्वाले कृष्णविषाणां प्रास्यति ' इति विषाणाकर्मकप्रासने पृथक् विधि । प्रकृते तु विधि श्रुति पृथक् नास्ति, तस्मात् स्वर्गकाम इति वा यजेत इति वा एकवचन विवक्षितमेव । अत एक एव कर्ता । हिशब्द कृष्णविषाणादृष्टान्तस्य प्रसिद्धयर्थक । कर्तृ-शब्देनात्र यजमान एव ग्राह्य ।

अत्र भाष्यपदानि सूत्रार्थप्रतिपादकानि इमानि भवन्ति— अपिचेति पक्षव्यावृत्ति । प्रयोगाय उपदिश्येत कर्ता न स्वार्थेन । कामसंयोगे सम्बन्धात् कामस्य आत्म सम्बन्धोऽवगम्यते सम्बन्धात् । फलकाम आत्मन एव फल कामयते, न परस्य । यत्र तु उभौ अर्थौ वक्तव्यौ भवत प्रत्यर्थं तत्र विधि श्रूयते । यथा 'कृष्ण विषाणया कण्डूयति, चात्वाले कृष्णविषाणां प्रास्यति' इति ।

अथ सुबोधिनी— आख्यातस्य इति शेष । काम संयोगे काम्यस्य कामशब्दस्य संयोगो यस्मिन्, तत् काम संयोग 'यजेत स्वर्गकाम ' इति वाक्यम् । तस्मिन् कामसंयोगे वाक्ये आख्यातस्य सम्बन्धात् पक्षत्वेन सम्बन्धात् प्रयोगाय पुरुषप्रवृत्त्यर्थं उपदिश्यते श्रूयते । आख्यातसंख्या विवक्षितेति भाव । प्रत्यर्थं प्राधान्यार्थं विधेयत्वार्थं च विधिश्रुति विधितात्पर्यज्ञापिका यथा विषाणाया तथा अत्र नेति ।

अथ कुतूहलम्— यत्र गुणप्रधानभावौ उभौ विधि त्सितौ भवत तत्र प्रत्यर्थं प्रत्येक विधिश्रुति विधायिका श्रुतिरस्ति । विषाणावत् । त्रिलिङ्गो विषाणशब्द । कामसंयोगे कामसंयुक्ते वाक्ये प्रयोगाय याग प्रयोक्तु पुरुष कर्तृत्वेन एकत्वेन च उपदिश्येत, न तु फल प्राप्तुत्वादिति फलप्राप्त्यलक्षणप्रधानत्वेन । कुत ? सम्बन्धात् अर्थादेव फलव्याप्तेरवगमसंभवात् । इति ।

अन्यस्यापीति चेत् । ८ ॥

पूर्वपक्षी आह— अन्यस्यापि स्वर्ग कामयमान कश्चिद्यान् अन्यो यजेत । इति चेत् पूर्वपक्षी ब्रूयात् ।

अन्यार्थे नाभिसंबन्ध । ९ ॥

सिद्धान्ती आह । अन्यस्य स्वर्गं कामयमानोऽपि स्वर्गकामपदवाच्य स्यात्तत्र तथापि अन्यार्थे अनुष्ठाने

इति तस्य अन्यस्य फलेन स्वर्गेण अभिसम्बन्धो न स्यात्। कर्तृगामिनि क्रियाफले एव उभयपदाद्धातोः आत्मनेपद-विधानात् अत्र यजेत इति आत्मनेपदप्रयोगात्।

अन्यार्थेन अन्यस्य स्वर्गेच्छावता सम्यं कर्तुं न अभिसंबन्धः, न अभेदः। आत्मनेपदश्रवणात् इति पूर्णार्थं इति **सुबोधिनी**। अन्यस्य इति पूर्वसूत्रादनुवर्तते। 'नार्थेनाभिसम्बन्धः' इति सूत्रम्। अर्थेन फलेन अन्यस्य अभिसंबन्धः व्याप्यमानत्वं न भवति। यजेत इत्यात्मने-पदस्य कर्तृगामिनि फले विहितत्वात्। इति **कुतूहलम्**।

**फलकामो निमित्तमिति चेत्। १०॥**

आह पूर्वपक्षी। स्वर्गरूप फलं अन्यस्य कामयमानोऽपि फलकामः आनुषङ्गिकफलकामः 'आशास्तेऽयं यजमानः आयुराशास्ते सुप्रजास्त्वमाशास्ते' इत्यादि सूक्तवाकोक्त फलं स्वस्य कामयमानः 'यजेत' इत्यात्मनेपदस्य निमित्त भवेत्। इति चेत् ब्रूयात् पूर्वपक्षी।

फलकाम स्वर्गकामपद निमित्त यजेत इत्यात्मनेपदस्य निमित्तत्वद्योतकम्। इति चेत्। इति **सुबोधिनी**। फलकामः प्रयोक्तृगताङ्गफलकामना आत्मनेपदस्य निमित्त इति चेत्। इति **कुतूहलम्**।

**न नित्यत्वात्। ११॥**

पूर्वपक्षिण. शङ्का सिद्धान्ती निरस्यति। न केवलं आनुषङ्गिकफलकामना समवति। यस्यैव प्रधानकर्मफलं तस्यैव आनुषङ्गिकमपि फलं भवितुमर्हति। प्रधान-यागफलस्यैव प्रयोक्तृगामित्वे आत्मनेपदस्य नित्यत्वात्। तस्मात् स्वस्यैव यागफलमिच्छन् यजेत न परस्य। स च यागकर्ता एक एव, न द्वौ बहवो वा।

**कर्म तथेति चेत्। १२॥**

पूर्वपक्षी शङ्कते। बहिष्पवमाने श्रुत 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयो. प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यात्' इति, अत्र स्पष्टमेव यजमानद्वित्व यजमानबहुत्व चोक्तम्। एव च द्वियजमानके बहुयजमानके च कर्मणि प्रति-पद्विधाने कर्म तथा द्विबहुयजमानकमेव स्यात्, तथा च यजमानसंख्याया याथार्थ्यम्। इति चेत् पूर्वपक्षी ब्रूयात्। कुतूहले तु, तथा सत्येव यजमानसंख्याया अविवक्षितत्वे सत्येव द्विबहुयजमानके ज्योतिष्टोमे प्रति-पद्विशेषयुक्तं बहिष्पवमानकर्म अप्रमाणं स्यादिति इति व्याख्यातम्।

**न समवायात्। १३॥**

यदुक्त पूर्वपक्षिणा तत् न। समवायात् तादृशस्य बहिष्पवमानस्य अहीने समवायात्। केषु चिदहीनेषु सत्रेषु कुलाययज्ञे च अनेकयजमानकत्वमस्त्येव। तत्रैतत् प्रतिपद्विशेषविधानम्। तत्र तत् समर्थेति। तस्मात् दर्शपूर्णमासज्योतिष्टोमादौ यजमानैकत्व विवक्षितमेव। तस्मात् एको यजेत, न द्वौ बहवो वा। के.

* प्रयोगाङ्गं देशकालकर्तारः न विधिशेषाः। भा. ११२।१।१–२, ४–७, * प्रयोगाङ्ग हि कालः पदार्थानामुपकारकः। ११३।१।७.

* प्रयोगाङ्गत्वाख्यः न्याय एव चिकीर्षाऽधिकरण-(३।७।३।७,९) मुख्यसिद्धान्तयुक्तिः। सु. ३।७।९ पृ. ९.

* प्रयोगैकत्वाविचारार्थं पञ्चदशोऽध्यायः शेषे-यत्ताप्रसङ्गेन। टुप्. ७।१।१।१.

**ꣻ प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात्। १।३।९।२४॥**

गौगावी गोणी गोपोतलिकेत्येवमादय. शब्दा उदा-हरणम्। यथा गोशब्दः सास्नादिमतः प्रमाणं तथा गाव्यादयोऽपि, उत नेति संदेह। किमत्र एकः शब्दः अविच्छिन्नपारम्पर्यः अर्थाभिधाने, इतरे तु अपभ्रंशाः, उत सर्वे अनादय इति। अत्र प्रभाकरेण संगति-लोभात् 'न चोदाहरणमादरणीयम्' इति भाष्यकारीय-मुदाहरणमनादृत्य 'अश्वमालभेत' इत्यादिचोदनागतः अश्वशब्दः उदाहृत्य विचारितः। लोके अश्वशब्दस्य तुरगे दरिद्रे च प्रयोगो दृश्यते। तेन च न ज्ञायते कुत्रार्थे साधुः, कुत्र चासाधुरिति। न च व्याकरणस्मृतिर्विनिगमना-कारणम्। निर्मूलत्वेन तस्याः प्रमाणत्वासंभवात्। अतः 'अश्वमालभेत' इत्यनध्यवसितार्थाश्वपदवती चोदना न प्रमाणमिति पूर्वः पक्षः। सिद्धान्तस्तु व्याकरणस्मृतेः अनादिप्रयोगमूलत्वेन प्रमाणत्वात् तद्द्वारेण तालव्य-शकारयुक्तोऽश्वशब्दः तुरगे एव साधुः। दन्त्यसकार-

पुनश्च ' न विद्यते स्वमस्मिन् ' इति व्युत्पत्त्या दरिद्रे साधु , न तात्पर्यशकारयुक्त इति ' अश्वमालभेत ' इति चोदना अध्यवसितार्थवत्त्वात् प्रमाणमेवेति । तदिदम युक्तम् , पूर्वपक्षे हि व्याकरणस्मृतेर्निर्मूलत्वेन अप्रामाण्ये सति प्रयोगवशादेव सर्वत्र साधुत्व वक्तव्यम् । तच्चोभय त्रापि अविशिष्टमिति कुत्स्ने दरिद्रे च व्ययमस्वशब्द प्रयुज्यमान साधुरेव । तथा च सति अनेकार्थाक्षादिशब्दे- ष्विव अर्थप्रकरणाभ्यामध्यवसायसंभवात् नानध्यवसायात् अप्रामाण्यम् । इति यथवार्तिकमेतदधिकरण प्रस्तूयते । पूर्वं स्मृत्याचारयोर्धर्मं प्रति सर्वप्रकार प्रामाण्य निरूप्य इदानीं प्रसङ्गत व्याकरणस्मृते शब्दसाधुत्व प्रति प्रामाण्य- मस्ति नास्तीति ' साधुमिर्भाषेत ' इति साधुशब्दस्य धर्मं प्रति उपयोगित्वेन निरूप्यते । अयमेवात्र पारमार्थिक संदेह । भाष्यकारेण तु किं सर्वे गोगाव्यादय शब्दा सास्नादिमत्पदार्थे साधव उत गोशब्द एव साधु गाव्यादय अपभ्रंशा इति फलभूत संशयो दर्शित इति मन्तव्यम् ।

अत्राय पूर्वपक्षिणोऽभिसंधि – गोगाव्यादिशब्दाना साध्वसाधुविवेके व्याकरणस्मृति प्रमाण भवेत्, यदि मन्वादिस्मृतिवत् मूलभूत प्रमाणमनुमातु शक्येत । तत्र न तावत् प्रत्यक्ष मूल संभवति, तस्य वर्णस्वरजातिरिक्त वाचकशक्तिरूपसाधुत्वविषयत्वासंभवात् । नापि व्याकरण स्मृतिसहस्रत्वम् निर्मूलत्वेन व्याकरणस्मृते सहकारित्वा संभवात् । नाप्यनुमानम्, तद्व्याप्तिविशिष्टलिङ्गाभावात् । नापि शब्द , तस्य पौरुषेयत्वे अन्धपरम्परादोषात् । अपौरुषेयस्य च प्रवृत्तिनिवृत्तिविषयत्वेन सिद्धविषये प्रामाण्यायोगात् । उपमान तु सादृश्यैकविषयत्वात् अनाशङ्कनीयमेव । नापि अर्थापत्ति , तस्या अपि अर्थे प्रतिवस्य यथाऽनुपपत्तिविषयत्वेन गाव्यादिष्वपि अवि शेषात् । अत पञ्चप्रमाणानुत्पत्त्या व्याकरणस्मृतिमूल अभावप्रमाणविषयमेवेति सिद्धम् । किञ्च स्ववचन व्याघातादपि व्याकरणमप्रमाण साधुत्वे । तथा हि 'जनि कर्तु प्रकृति ' ( पा० १।४।३० ) इति सूत्रम् । अत्र जनिशब्देन जननमेव विवक्षितम् । तेनायमर्थ , जननस्य कर्ता जायमान तस्य ॥ प्रकृति उत्पादक तस्य अपादानसंज्ञा भवति । न च जनिशब्देन इगन्तेन जननमभिधीयते, ' इक्श्तिपौ धातुनिर्देशे ' इति स्वय मेव प्रतिपादितत्वात् । तथा जनिकर्तुरिति समासोऽप्यनु पपन्न , ' तृजकाभ्या कर्तरि ' ( पा० २।२।१५ ) इति तृजन्तस्य कर्तृशब्दस्य स्वयमेव षष्ठीसमासप्रतिषेधात् । तथा अकप्रत्ययान्तस्यापि अनेनैव षष्ठीसमासनिषेधात् ' तत्प्रयोजको हेतुश्च ' ( पा० १।४।५५ ) इत्यत्र सूत्रे तस्य प्रयोजक इति तच्छब्देन सह अकप्रत्ययान्तस्य प्रयोजकशब्दस्य षष्ठीसमासोऽपि अनुपपन्न ।

एवमर्थनिश्चयानवधारणादपि न प्रमाणम् । तथाहि, ' भूवादयो धातव ' इत्यत्र किं धातुशब्दप्रवृत्तिनिमित्तम् । न तावत् गणपाठ , ' भू सत्तायाम् ' इत्यत्र ' सत्ता शब्द स्यापि धातुत्वप्रसङ्गात् । नापि क्रियावचनत्वम्, ' भू ' इत्येतस्यापि अधातुत्वापत्ते । अत एव न मिलितयोरपि धातुशब्दप्रवृत्तिनिमित्तत्वम्, ' भू सत्तायाम् ' इत्यस्यैव क्रियावचनत्वाभावात् । तस्मादर्थानिश्चयादपि अप्रामाण्यम् । एव कारकानुशासनमपि असंबद्धमेव । तथाहि, ' स्वतन्त्र कर्ता ' इति कर्तृलक्षणम् । अत्र च स्वातन्त्र्यमेव न ज्ञायते । यदि इच्छाप्रयत्नाधारत्व स्वातन्त्र्यम्, तर्हि ' काष्ठानि पचन्ति ' ' स्थाली पचति ' इत्यत्र अकर्तृत्वप्रसङ्ग । अथ धातूपात्तव्यापारत्व कर्तृत्वम्, तर्हि पचतीत्यत्र पचिधातुना स्थालीसमावर्तनोपक्रमस्य सिक्थपरीक्षणपर्यन्तस्य व्यापार निचयस्य उपात्तत्वात् सर्वकारकाणामपि कर्तृत्वप्रसङ्ग ।

एव कर्मादयोऽपि अधिकरणपर्यन्ता सर्वे एव दुर्निरूपा इत्युक्तमपि वार्तिके विस्तरभयात् नोच्यते । अतो व्याकरणस्य साधुशब्दप्रयोगोत्पत्तौ अशक्तत्वात् तदनुगते ष्वेव शब्देषु साधुत्व नावतिष्ठते इति न साधुत्व प्रति व्याकरणस्मृते प्रामाण्यम् । इति । एव प्राप्ते, अभिधीयते—

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् । २५ ॥

अयमभिप्राय । भवेदेव यदि शब्दसाधुत्वे व्याकरण स्मृति प्रमाण न भवेत् । न च निर्मूलत्वादप्रामाण्यम्, प्रत्यक्षस्यैव मूलत्वात् । तथाहि, साधुत्व नाम कश्चिदर्थ विशेषे स्वाभाविकप्रतिपादनशक्तियोगित्व शब्दस्य

विलक्षणं रूपम् । न च प्रकृतिप्रत्ययादिद्वारेण व्याकरणस्मृत्या यस्य प्रतिपाद्यते, तस्यैव व्याकरणस्मृतिसहकृतेन श्रोत्रप्रत्यक्षेणासाधुशब्दव्यावृत्तं साधुत्वरूपं सुस्पष्टतरमन्वयव्यतिरेकाभ्यां प्रतीयत एव, ब्राह्मणत्वमिव मातापितृस्मरण-स्मरणसहकृतेन चाक्षुषप्रत्यक्षेण, रत्नत्वमिव रत्नपरीक्षाशास्त्रज्ञानाहितसंस्कारसहकृतेन चाक्षुषप्रत्यक्षेणेव । तेन पाणिनेरपि पूर्वतरव्याकरणस्मरणाहितसंस्कारसहितश्रोत्रप्रत्यक्षेणैव साधुत्वोपलम्भात् निर्मूलत्वं व्याकरणस्मृतेरिति । नापि अन्धपरम्परा, स्मृतिप्रत्यक्षयोः पौर्वापर्यानादित्वात् । तदुक्तम्— 'यथा च पद्मरागादीन् काचस्फटिकसंश्रितान् । परीक्षका विजानन्ति साधुत्वमपरे तथा ॥' इति ( वा. १।३।८।२७ पृ. २८२ ) ।

अतः स्मृत्यन्तरसहित–संस्कारसहकृत–प्रत्यक्षमूलत्वात् व्याकरणस्मृतेः प्रामाण्यमेवेति । नापि 'जनिकर्तुः प्रकृतिः' इत्यादिषु लक्षणवाक्यादप्रामाण्यम् । दृष्टा हि सर्वैरेव सूत्रकाराणां सूत्रेषु लौकिकलाक्षणिका एव प्रयोगाः । यथा हि जैमिनेरेव नित्ये वाच्ये औत्पत्तिकशब्दप्रयोगः, तथा पाणिशब्दोऽपि कारणार्थे, जननि लाक्षणिकत्वात्र दोषमावहति । तथा 'तृज्भ्याम्‌ कर्तरि' इति निषिद्धषष्ठीसमासाश्रयणमपि निषेधस्य वैकल्पिकत्वप्रदर्शनार्थमेव । यच्च 'भूवादयो धातवः' ( पा० १।३।१ ) इत्यत्र धातुशब्दार्थापरिज्ञानादप्रामाण्यमुक्तम्, तदयुक्तम्, तिङादिप्रत्ययप्रकृतित्वमेव हि धातुत्वम् । एतदेव 'प्रत्ययः, परश्च' ( पा० ३।१।१,२ ) इति सूत्राभ्यां पाणिनिना स्वयमेव दर्शितम् । यदपि 'स्वतन्त्रः कर्ता' इति कर्तृलक्षणे स्वातन्त्र्यानिरूपणात् अयुक्तमित्युक्तम्, तदयुक्तम्, क्रियासिद्ध्यनुकूलेतरकारकप्रयोक्तृत्वं हि स्वातन्त्र्यम् । तच्च क्वचिदप्रयुक्तस्य, क्वचिदन्यप्रयुक्तस्य । तदुक्तं भर्तृहरिणा 'प्रवृत्तौ वा निवृत्तौ वा कारकाणां य ईश्वरः । अप्रयुक्तः प्रयुक्तो वा स कर्ता नाम कारकम् ॥' इति । यत्तु 'काष्ठानि पचन्ति' इत्यादिषु अचेतनेषु कर्तृनिर्देशः, स वैवक्षिक एवेति मन्तव्यम् । एवं कर्मादिष्वपि ईप्सिततमत्वमूहनीयम् । अतः श्रोत्रप्रत्यक्षमूलत्वेन शब्दसाधुत्वेन व्याकरणस्मृतिः प्रमाणमेवेति गवादिशब्दा एव साधव इति । गाव्यादिशब्दानां पुनः उच्चारणसामर्थ्यतो मूलशब्दापभ्रंशानां विवक्षितेषु मूलशब्दानुसारेण अर्थप्रतिपादकत्वम्, अविवक्षितेषु तु वाचकभ्रान्त्यैवेति ।

प्रयोजनम्— तस्मै वरणमरणसंकल्पादिशब्देषु अपभ्रंशेनापि व्यवहर्तव्यम्, यदि पूर्वः पक्षः । सिद्धान्ते तु 'साधुभिर्भाषितव्यम्' इति साधुशब्देनैवेति ।

सूत्रं तु– शब्दे अभिव्यज्यमाने तदभिव्यक्तेः प्रयत्नाधीननिष्पत्तिकत्वात् अपराधभागित्वं अपभ्रंशं अभिव्यञ्जकदोषादेवेति भावः । टीका.

सू प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् । १।३।८।२४ ॥

गौर्गावी गोणी गोपोतलिका इत्येवमादिषु शब्देषु अयमेव शब्दः साधुः अनेनैव व्यवहर्तव्यम्, नायं साधुः न तेन व्यवहर्तव्य इति व्यवस्था न स्यात् । व्याकरणस्मृत्या व्यवस्था स्यादिति चेत्, न, प्रयोगोत्पत्त्यशास्त्रत्वात् । प्रयोगस्य उत्पत्तिर्नियमः तस्य अशास्त्रत्वात् शास्त्रमूलकत्वाभावात् । अथवा प्रयोगस्य उत्पत्तिः व्यवस्था यया सा प्रयोगोत्पत्तिः व्याकरणस्मृतिः । प्रयोगोत्पत्तेः अशास्त्रत्वात् मूलभूतश्रुतिरहितत्वात् अप्रामाण्यात् । अथवा साधुभिर्भाषेत असाधुभिर्न इति प्रयोगोत्पत्तेः उच्चारणनियमस्य अशास्त्रीयत्वात् । तस्मात् यः कोऽपि शब्दः कर्मादौ प्रयोक्तव्यः इति पूर्वः पक्षः ।

शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ।२५॥

सिद्धान्ती आह । सत्यं साधुत्वासाधुत्वनिर्णयो न युक्तः । कथम् ? शब्दोच्चारणे हि महान् प्रयत्नो भवति । वायुर्नाभेः उत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः वक्त्रे विचरन् विविधान् शब्दान् अभिव्यनक्ति । एवं शब्दे उच्चारयितव्ये सति उच्चारयितुः प्रयत्नेन शब्दस्य निष्पत्तेः अभिव्यक्तेः अपराधस्य भागित्वम् । अपराधः अवश्यं भवितुमर्हति । तेन गावी इत्यादयः शब्दा भवन्ति । तथा च अपराधस्य सम्भवात् नैकान्ततः सर्वेषामनादित्वम् ।

अथवा शब्दे अप्रयत्ननिष्पत्तेः इति छेदः । यो हि अस्खलितप्रयत्नः शब्दमभिव्यनक्ति तस्य परम्परागत-

शब्दोच्चारणमात्रात् सर्वे समानप्रकारा भवेयुः । यदा तु अप्रयत्ननिष्पत्तिरपि शब्दे समाश्रीयते, तदा तत्र अपराधस्वरूपा तदुपपत्तिप्रसङ्गात् न सर्वशब्दानां समानप्रकारत्वम् ।

अथवा शब्दे शब्दविषयस्य प्रयत्नस्य या निष्पत्तिः तस्यां अपराधः सुनिपुणानामपि अविकलकरणानां दृश्यते किमुत अनिपुणकरणानाम् । 'अतश्चापराधेन भज्यमानेषु साधुता । साधवोऽप्यसाधुत्वं व्यत्ययेन च सङ्कुलाः ॥' (वा पृ २७५) । 'अपराधस्य भागित्वादुभये साधवस्साधकम् । साधोरनियता प्राप्तिरसाधोश्च प्रयोज्यता ॥' तथा सति साधुत्वनियमकारिणो व्याकरणादेः नियामकत्वम् उपपद्यते । तस्मात् साधव एव प्रयोक्तव्या नासाधव इति सिद्धान्तः ।

शब्दे गाव्यादिशब्दे प्रयुज्यमाने अपराधस्य अयथोच्चारणस्य भागित्वम् । भागो भजनं प्रवृत्तिः । चनक्ति सम्बन्धेन तद्वान् भागी, तस्य भावः भागित्वं प्रवर्तकत्वम् इति यावत् । प्रयत्ननिष्पन्ने प्रयत्नविशेषत एव शब्दस्वरूपस्य यथावत् अभिव्यक्तेः । इति कुतूहलम् ।

अन्यायश्चानेकशब्दत्वम् । २६ ॥

ननु सर्वेषामेव वाचकत्वं कुतो न स्वीक्रियते इति चेत्, तत्राह । अनेकशब्दत्वं अनेकः शब्दः वाचको यस्य एकस्यार्थस्य सः अनेकशब्दः, तस्य भावः अनेकशब्दत्वम् । सः अन्यायः । नीयते इति न्यायः । कर्मणि घञ् । घनवत्ता पुंसि इति नित्यपुल्लिङ्गता । नञ्तत्पुरुषे परवल्लिङ्गः इति पुंस्त्वम् । एकस्यार्थस्य अनेकशब्दवाच्यत्वं न युक्तं योग्यार्थापत्त्यनुदयात् अन्यानर्थक्यात् विकल्पापत्तेः अर्थभेदापत्तेः वाच्यत्वावच्छिन्नवाचकाश्रितैकशक्तिमात्रेण उपपत्तेश्च ।

अस्यैव सूत्रस्य रूपपरिवर्तनेन 'अन्यायश्चानेकार्थत्वम्' इति परिभाषा प्रवर्तितेति ज्ञेयम् ।

तत्र तत्त्वमभियोगविशेषात् स्यात् । २७ ॥

ननु गवादिशब्दा एव साधवो वाचकाः गाव्यादिशब्दास्तु असाधवः इत्यत्र किं विनिगमकम् ? अत आह सिद्धान्ती । तत्र गोगाव्यादिशब्देषु तत्त्वं साधुत्वस्य ज्ञानं अभियोगविशेषात् स्यात् । 'लक्षणश्रवणाभ्यासादभियोगं प्रचक्षते । तेन लब्धात् तत्त्वज्ञानं तद्विशेषोऽभिधीयते ॥' (वा पृ २७८) । लक्षणस्य व्याकरणस्य श्रवणं अभ्यासश्च ताभ्यां अभियोगविशेषो भवति । यत् लक्षणं उदाहरणीकृत्य लक्षणं श्रुतमभ्यस्तं च तद्व्युत्पत्तिरिक्तानामपि तुल्यजातीयानां लक्ष्याणां ज्ञानं भवति । एवं च लक्षणश्रवणाभ्यासातिशयः अभियोगविशेषः । तेन शब्दतत्त्वज्ञानं भवति । तथा च शब्दसाधुत्वे व्याकरणं विनिगमकम् ।

तदशक्तिश्चानुरूपत्वात् । २८ ॥

ननु गाव्यादिशब्दस्य शक्त्या विना कथं अर्थप्रतिपादकता लोकसिद्धा संभवति । तत्राह । तदशक्तिः तेषां गाव्यादिशब्दानां गवाद्यर्थे अशक्तिः नास्ति शक्तिः । अर्थप्रतिपादकता तु गोशब्दानुरूपत्वात् गोशब्दस्मारकत्वात् । अयं भावः — गोशब्दमुच्चारयितुकामेन केनचित् इन्द्रियापाटवेन गावीत्युच्चारितम् । अपरेण शब्दसास्नादिमानर्थः अस्य विवक्षित इति । तत शिक्षिता अपरेऽपि सास्नादिमति विवक्षिते गावीत्युच्चारयन्ति । एवं गाव्यादीनां अर्थप्रतिपादकता साधुशब्दस्मरणद्वारा ।

एकदेशत्वाच्च विभक्तिव्यत्यये प्रत्ययः स्यात् । २९ ॥

'कुत आगतोऽसि' इति पृष्टे 'अश्मकेभ्य आगच्छामि' इति वक्तव्ये केनचित् 'अश्मकैराग च्छामि' इत्युक्तम्, तत्र अश्मकप्रातिपदिकस्य एकदेशत्वात् अश्मकेभ्य इति शब्दस्मरणात् पृष्टस्योत्तरं प्रष्टा प्रतिपद्यते । एवं अश्मकेभ्य इत्यत्र अश्मकैः इति विभक्तिव्यत्ययेऽपि यथा इष्टस्यार्थस्य प्रत्ययो भवति तथा गाव्यादिशब्दात् वाचकसाधुशब्दस्मरणद्वारा अर्थस्य प्रतिपत्तिः । न तु गाव्यादिशब्दः वाचकः साधुः । तस्मात् व्याकरणात् शब्दसाधुत्वासाधुत्वज्ञानम् । साधुरेव प्रयोक्तव्यो नासाधुः इति सिद्धम् । के

* प्रयोगकाले पदार्थस्योपस्थानं मन्त्रस्य वचनार्थं । मन्त्रेणोपस्थितः पदार्थः कर्तव्य इति विज्ञायते । भा १२।३।१०।२५

**卐 प्रयोगचोदनाभावादर्थैकत्वमविभागात् ।। १।३।१०।३०।।**

अथ गौरित्येवमादय शब्दा विमाकृते प्रमाणम्, उत व्यक्ते इति सन्देहे उच्यते । इद तावत् परीक्ष्यता किं ये एव लौकिका शब्दास्ते एव वैदिका , उत अन्ये इति । यदा ते एव, तदा किं ते एव एवमर्था , उत अन्ये इति भवय । अत्र प्रभाकरेण य एव लौकिका से एव वैदिका उत अन्ये इत्यस्यापि विचारस्य आकृत्यधिकरणोपोद्घाततामभ्युपगत्यापि साक्षात् सगतिलोभात् अप्रामाण्येन पूर्वपक्षमुक्त्वा पृथक् सगतिर्दर्शिता । सा चेयमतिदानरसिकतया आमानृतदायस्यापि यौतुकदानमिव भाति । यतो न हि उपोद्घातस्यापि पृथक् सगत्यपेक्षा भवति । प्रकृतविचारासिद्ध्यर्थतया तत्सगत्यैव तस्य सगतत्वादिति यथावार्तिकमेव अधिकरण मस्यूयते ।

पूर्वाधिकरणे हि गवादिशब्दाना वाचकत्वे निरूपिते तत्प्रसङ्गेन वाच्यनिरूपणमारभ्यते किमेषामाकृतिर्वाच्या, उत व्यक्ति इति । अस्य च विचारस्य निष्प्रयोजनत्वमाशङ्क्य तत्प्रयोजनवर्णनाय इदमुपोद्घातेन विचार्यते किं ये एव लौकिका शब्दा ते एव वैदिका , ते एवैषामर्था , उत अन्ये इति । तत्राय पूर्वपक्षिणोऽभिसधि – ' अथ शब्दानुशासनम् ' इत्युक्त्वा ' केषा शब्दानाम् , लौकिकाना वैदिकाना च ' इत्यभियुक्ताना मेव शब्दविदा ( महाभाष्यकाराणा ) व्यपदेशभेददर्शनात् भेदस्तावदवगम्यते । तथा रूपभेदादपि भेद । तथाहि, वेदे ' अष्टाकपाल ' इति पठन्ति । लोके च 'अष्टकपाल ' इति । तथा वेदे ' अग्निष्टोम ' इति, लोके च ' अग्निष्टोम ' इति । एव वेदे ' गृभ्णामि ' इति, लोके ' गृह्णामि ' इति । तथा अर्थभेदोऽपि दृश्यते । वेदे श्रूयते– ' उत्ताना वै देवगवा वहन्ति ' इति, तथा 'सुवर्णपर्णो वनस्पति ' एव 'घृत मधु' इति । न च गवादिशब्दानामेवम्भूतोऽर्थो लोके समस्ति । तेन यद्यपि गवादिशब्देषु रूपभेदो नावगम्यते, तथाप्यर्थभेदादेव शब्दभेद शब्दस्यानिर्धनत्व एकस्याप्यस्ताय इति । यद्यपि रूपभेद क्वापि तद्भेदादेव अर्थभेदोऽपि । अर्थप्रतिपत्तिस्तु वेदे लौकिकशब्दसादृश्यादेवेति । अतो लोके वेदे च शब्दार्थयोर्भिन्नत्वात् लौकिकगवादिशब्दानामाकृतिव्यक्तिवाचित्वनिरूपण वेदप्रामाण्यानुपयोगित्वेनायुक्तमेवेति । एव प्राप्ते, अभिधीयते । भवेदेव यदि लौकिकवैदिकशब्दयोर्भेदो भवेत् । तौ तु प्रत्यभिज्ञानात् लोकवेदयोरपि एकावेव । ये एव गवादिशब्दा लोके प्रतीयन्ते, ते एव वेदेऽपि प्रत्यभिज्ञायन्ते । न च अष्टाकपालाग्निष्टोमगृभ्णामीत्यादिशब्दा किञ्चिद्विकारात् न प्रत्यभिज्ञायन्ते इति वाच्यम् । यतश्छिन्नलूनगुल्फभग्नविराजगोत्वनिश्चयत् प्रत्यभिज्ञायमानत्वात् । अन्यथा लौकिकाविकृताष्टकपालादिशब्दाना वैदिकाष्टाकपालादिशब्देष्विव अविकृतार्थावगमाभावप्रसङ्गात् । भवतु वा केषाञ्चित् अन्यत्वम्, न चैवम् , अविकृतप्रत्यभिज्ञायमानाना गवादिशब्दानामपि अन्यत्वे किञ्चित् कारणमस्ति ।

व्यपदेशभेदस्तु ब्राह्मणपरिव्राजकवत् भिन्नरूपवैदिकवाक्यान्तर्गतिनिबन्धन एव । यत्तु ' उत्ताना वै देवगवा वहन्ति ' इति तदपि अर्थवादमात्रम् , लोकसिद्धस्य गोपदार्थस्योत्तानवहनरूपक्रियाविशेषप्रतिपादनस्य प्रमाणाऽर्थत्वात् । एव उदाहरणान्तरमपि स्तुत्यर्थमेव इति । तदुक्त भाष्ये ' य एव लौकिका शब्दास्त एव वैदिकास्त एव चैषामर्था ' इति ।

प्रयोजनम्– पूर्वपक्षसिद्धान्तयोरग्रहत्यधिकरणानारम्भारम्भाविति । सूत्र तु लोकवेदयो शब्दरूपस्य अर्थरूपस्य चैकत्व प्रत्यभिज्ञारुपपत्त्ययाविभागात् । एव च सति दर्शपूर्णमासादिप्रयोगचोदनाना भाव स्यादिति । लौगा.

**卐 प्रयोगचोदनाभावादर्थैकत्वमविभागात् । १।३।९।३० ।।**

गो इत्येवमादयो य एव लौकिका शब्दा ये च तेषामर्था किं त एव वैदिका उतान्ये इति विचारे सिद्धान्तमाह । अर्थैकत्व अर्थस्य अभिधानस्य अभिधेयस्य च एकत्वम् । य एव लोके शब्दा अर्थाश्च त एव वेदे नान्ये । प्रयोगचोदनाभावात् लोकवेदयो पदपदार्थानामभेदे वैदिकपदाना अगृहीतसङ्गतिकतया वेदवाक्यार्थबोधाय वाक्योच्चारणमभाव । प्रयुज्यते इति प्रयोगो वाक्यम् । तस्य चोदना उच्चारण तस्या भावात् विद्यमानत्वात् । तथा च प्रयोगचोदनासिद्ध्यर्थं पद-

पदार्थैक्य अवश्य स्वीकार्यं लोकवेदयो । ननु प्रयोजनमिदम् । हेतुरुच्यताम् । उच्यते, अविभागात् पद पदार्थयो विभागेन भेदेन अनुपलब्धत्वात् अर्थैकत्व सिध्यति । पदपदार्थयोर्भेदे तु सर्ववैदिकपदाना अनत्र गतसम्बन्धेन अर्थज्ञानाभावात् क्रियाकारकसम्बन्धात्मकप्रयोगचोदनाना अभावात् अभावप्रसङ्गात् । एष च भावात् अभावात् इत्युभयथा पदच्छेद । तस्मात् लोके वेदे च पदाना तदर्थाना चैक्य इति सिद्धान्त ।

अथ आकृति शब्दार्थो व्यक्तिर्वा इति विचारे पूर्व पक्षमाह । व्यक्ति शब्दार्थो नाकृति । प्रयोगचोदनाऽभावात् आकृते पदार्थत्वे 'व्रीहीनवहन्ति' 'पशुमालभते' इत्यादीना प्रयोगचोदनाना अभावात् अभाव प्रसङ्गात् । नहि अवहनन आलभन आकृते सभवति । तस्मात् व्यक्ति शब्दार्थ ।

अद्रव्यशब्दत्वात् । ३१ ॥

शब्दस्य शक्ति व्यक्तौ एव स्वीकार्या न जातौ । जातिशक्तिपक्षे अद्रव्यशब्दत्वात् द्रव्यशब्दत्वाभावप्रसङ्गात् शब्दस्य द्रव्यवाचकत्वाभावप्रसङ्गात् । 'एका देया, षड् देया , द्वादश देया ' इति आधानदक्षिणा विधायकादिवाक्ये षडादिशब्दाना गोपदेन अन्वयो न स्यात् , गोत्वजातेरेकत्वात् ।

अन्यदर्शनाच्च । ३२ ॥

'यदि पशुरुपाकृत पलायेत अन्य तद्वर्णं तद्वयस मालभेत' इति वचने प्रथम स्वीकृतस्य पशो स्थाने अन्यस्य दर्शनात् । यदि पशुशब्द आकृतिवचन स्यात् तदा अन्यस्य आलम्भो नोपपद्यत । अन्यस्यापि पशो सैवाकृति । तस्मात् व्यक्तिवचन शब्द इत्येव स्वीकर्तव्य इति पूर्व पक्ष ।

आकृतिस्तु क्रियार्थत्वात् । ३३ ॥

शब्दाना व्यक्ति शक्योऽर्थ इति पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रम् । तुशब्द पूर्वपक्षव्यावृत्त्यर्थ । आकृति आकृतिगम्या जाति शब्दाना शक्योऽर्थ न व्यक्ति । जातेरेव क्रियार्थत्वात् । 'श्येनचित चिन्वीत' इत्यादि वाक्याना श्येनसदृशाग्न्याख्य-स्थण्डिलविशेष-निष्पादकचयनादिक्रियाप्रतिपादकत्वसभवात् व्यक्तेर्वाच्यत्वे तद सभवात् ।

न क्रिया स्यादिति चेदर्थान्तरे विधान, न द्रव्यमिति चेत् । ३४ ॥

शब्दस्य शक्तिराकृतौ इति पक्षे अवहननादि क्रिया न स्यात् । व्यक्तावेव अवहननालम्भनादिक्रियाया सभव न जातौ, इति चेत् । आकृतिशक्तिपक्षे 'यदि पशुरुपाकृत पलायेत अन्य तद्वर्णं तद्वयसमालभेत' इति अर्थान्तरे व्यक्त्यन्तरे विधान न स्यात् तस्यापि आकृतेरेकत्वात् इति चेत् । 'षड् देया द्वादश देया' इत्यादौ षट्त्वादेरन्वय गवादौ न स्यात् आकृतेरेकत्वात् न द्रव्य उपदिश्यमान युक्त स्यात् , इति चेत् । तस्मात् व्यक्तावेव शक्ति स्वीकार्या, इति चेत् पूर्वपक्षी ब्रूयात् । त्रिषैकत्रिंशद्द्वात्रिंशत्सूत्रेषु पूर्वपक्षहेतवो ये उक्ता तेषामेव अनानुवाद । अत्र च वाक्यत्रय 'न क्रिया स्यादिति चेत्' इत्येकम्, 'अर्थान्तरे विधान न स्यादिति चेत्' इति द्वितीयम्, 'न स्यात् द्रव्यमिति चेत्' इति तृतीयम् ।

वस्तुतस्तु अस्मिन् सूत्रे ये पूर्वपक्षहेतवस्त्रय उक्ता ते पूर्व सूत्रैरेवोक्ता इति पुनरनुवादो व्यर्थ इति सूत्रमेवेद व्यर्थ भवति ।

अत्र सुधा— आकृत्यभिधानपक्षपरामर्शात् आकृति वाचिताया आलम्भनादिक्रिया न स्यात् , 'अन्य तद्वर्णं तद्वयसमालभेत' इति चार्थान्तरे आलम्भविधान न स्यात्, 'षड् देया' इति च द्रव्याश्रयस्य सख्यालक्षणस्य वाचक षडिति शब्दो न स्यादिति पूर्वपक्षसूत्रार्थोप भाषणार्थं सूत्र इति ।

तदर्थत्वात् प्रयोगस्याविभाग । ३५ ॥

शब्दस्य व्यक्तौ एव शक्ति नाकृतौ इति पूर्वपक्षे ये हेतव त्रिंश सूत्रमारभ्य चतुर्स्त्रिंशत्सूत्रेषु उक्ता तत्र स्वरूपानेन सूत्रेणोच्यते सिद्धान्तिना । प्रयोगस्य अवहननादिप्रयोगस्य तदर्थत्वात् व्यक्त्यर्थत्वात् व्यक्तिद्वारा आकृतौ सिद्धत्वात् न कश्चित् विरोध । अविभाग , यस्मात् जाते व्यक्ते सकाशात् अत्यन्त विभागो नास्ति तस्मात् न विरोध । जातिवाचित्वेऽपि लक्षणया व्यक्ति-

चोदकत्वात् अवहननादेरुपपत्तिः। शब्दशक्तिस्तु आकृतावेवेति सिद्धान्तः।

अथ वार्त्तिकम्— तदर्थत्वात् अपूर्वार्थत्वात्, आलम्भनप्रोक्षणाद्यङ्गानां अपूर्वसाधने प्रयोगेण भवितव्यम्। द्रव्यं च अपूर्वसाधनं यागेन स्वसिद्ध्यर्थं आक्षिप्तत्वात्, नाकृतिः असमर्थत्वात्। तदभिधानं तु द्रव्यनियमार्थं प्रतिपत्तव्यं न स्वार्थे जातेरनपेक्षितत्वात् अदृष्टार्थत्वप्रसङ्गात्, साधनत्वाप्रतीतेश्च। यदपि जातेः प्रातिपदिकाभिहितायाः करणत्वं प्रतीयते तदपि द्रव्यनियामकत्वेनैव न साक्षात् अयोग्यत्वात्। तेन आकृत्यभिधानस्य (तदर्थत्वात्—) द्रव्यनियमार्थत्वात् द्रव्ये च आलम्भनप्रोक्षणसंस्कारकसामानाधिकरण्यादिसंभवात् द्रष्टव्या। तदाह— प्रयोगस्य अविभागः (मूलं) इति। आकृतिपक्षेऽपि आलम्भनादिप्रयोगस्य द्रव्यात् अविभक्ततैवेति। यद्वा आकृतिव्यक्त्योः अत्यन्तभेदाभावात् कदाचित् व्यक्तिरूपेण द्रव्य अभिधीयते, कदाचित् सामान्यरूपेण, यथा विवक्षितं तथा, शब्दस्य उभयरूपपरत्वसंभवात् (तदर्थत्वात्)। व्यक्त्यनभिधानेऽपि न प्रयोगस्य विभागः नानात्वेनेति। जातेर्वा व्यक्तितः अत्यन्तभेदाभावात् व्यक्तौ कृता धर्मा जातौ कृता एव भवन्ति इति न प्रयोगस्य विभागेन प्रयोजनमिति। यद्वा आकृतिव्यक्त्योरुभयोः (तदर्थत्वात्—) यागार्थत्वात् धर्माणां च यत्र क च यागसाधने कृतानां प्रयोजनवत्त्वात् प्रयोगादविभक्ततेति।

तस्मात् आकृतिपक्षेऽपि आलम्भादिसंभवात् आकृतिरेव शब्दार्थ इति सिद्धम्। के.

* प्रयोगपरिच्छेदस्य कर्मसिद्धिं विना असिद्धिः। सु. पृ. ८१६.

* प्रयोगवचन. उपसंग्रहः। उपशब्दः समीपवचनः, संशब्दः साकल्यवचनः, ग्रहशब्दो ग्रहणवचनः। एवञ्च प्रयोगवचनः। तस्यायं ग्रहणात्मकस्वरूपः। (अङ्गप्रधानात्मके यः अनुष्ठापनात्मकग्रहणांशः स प्रयोगवचनस्य स्वरूपं इति भावः)। इतरे त्वस्य समीपकरणसाकल्ये विशेषणे। ताभ्यां विशिष्टः वचनेनोपलभ्यते। टुप्. १२।१।२।७. * प्रयोगवचनः चोदकात् दुर्बलः जघन्यकालत्वात् इति उक्तं गुणमुख्यव्यतिक्रमाधिकरणे (३।३।२) न्यायम्। वक्ष्यते च भाष्येण (५।१।१०।१८) इत्यत्र। वा. ३।७।२३।५१. * प्रयोगवचनश्चोदकापेक्षया दुर्बल इति द्वादशे (१२।१।२।७) वक्ष्यते। सोम. ५।१।१०. * प्रयोगवचनस्तान् पदार्थान् प्रापयति येषां कर्तव्यत्वम्। भा. ५।१।१०।२७, * प्रयोगवचनः प्राप्तानामुपसंग्राहकः। चोदकस्तु धर्माणामुत्पादकः प्रापकश्च। तेन प्रयोगवचनः उत्तरकालः अर्थविप्रकर्षात् दुर्बलः। ९।३।१।९, * प्रयोगवचनः सर्वाङ्गोपसंहारी। ६।१।४।१७, ६।५।१८।५९. * प्रयोगवचनः सर्वाङ्गग्राही। १०।३।४।२६. * प्रयोगवचनः सहकर्तव्यतावगतेषु पदार्थेषु सर्वात्मना त्वरमाणस्य यावानेवात्यन्ताशक्त्या कालविप्रकर्षो भवति तावन्मात्रमेव अनुमन्यते। शक्तस्तु क्षणमात्रमपि यदि विक्षेपं कुर्यात् तदस्य प्रयोगवचननिषिधिं न सहेत। भा. ११।१।१।६, * प्रयोगवचनेन सर्वे पदार्थाः प्रधानकालाः विधातव्याः इति प्रतिपादितम्। ११।३।३।६. * प्रयोगवचनेन हि एकेन शब्देन अङ्गप्रधानानि उच्यन्ते। भा. १०।३।१।६, * प्रयोगवचनात् उत्पन्नोपसंहारकात् चोदकः उत्पादकः प्रापकश्च बलवान्। तेनाध्वरकल्पायां बार्हस्पत्यधर्माः पूर्वम्, सारस्वतान्यधर्माः पश्चात्। ५।१।१०।१७-१८. * प्रयोगवचनस्य व्यापारः उपसंग्रहः। चोदकव्यापारोत्तर उपसंग्रहः। टुप्. १२।१।२।३.

* प्रयोगवचनाश्रयं चोदकाश्रयेण बाध्यते, यथा श्येने आकृताङ्गेषु उद्गातुः कर्तृत्वं चोदकप्राप्तेन नानर्त्विककर्तृत्वेन। बाल. पृ. १४१.

* प्रयोगवचनाश्रितं चोदकाश्रयेण बाध्यते, अप्राप्तबाधः अयम्। वा. ३।३।७।१४ पृ. ८६०.

* प्रयोगवचनाश्रितत्वात् मुख्यप्रवृत्तिक्रमयोर्दौर्बल्यं चोदकाश्रितत्वात् तु श्रुत्यर्थपाठक्रमाणां बलीयस्त्वम्। टुप्. ५।१।१०।१८.

* प्रयोगवाक्येन अवधृतस्वरूपाणि कर्माणि गृह्यन्ते। वा. २।२।१।२ पृ. ४६६.

* प्रयोगविधिः एककर्तृकानेकपदार्थानुष्ठापकः। सोम. ५।१।१ पृ. ४०६. * प्रयोगविधिः कृतिसाध्यत्व,

बोधको विधिः । भाट्ट ११।२।१ पृ १५१ * प्रयोगविधिः क्रमविषयेऽपि दुर्बलः । स्वसत्त्वकल्पनाशून्यस्यापि प्रयोगविधेः कल्पनामूलोच्छेदात् न क्रमान्तरकल्पकत्वम् । सोम ५।१।१०, * प्रयोगविधिश्चोदकाद्दुर्बलः, पदार्थप्राप्त्यधीनत्वात् प्रयोगविधेः तत्प्राप्तेश्चोदकाधीनत्वात् । इति अध्वरकल्पायां धार्हस्पत्यचरुनिर्वापः पूर्वं तत्र सरस्वत्याज्यनिर्वापः । ५।१।१० * प्रयोगविधिः चोदकोपजीवितया दुर्बलः । ५।१।१०।१७–१८ * प्रयोगविधिः नित्याधिकारेऽपि सर्वाङ्गविशिष्टमेव प्रधानं अनुष्ठापयति । सु पृ ५३२ * प्रयोगविधिः साङ्गानुष्ठानबोधको विधिः । स च नित्यकाम्यो मिश्रः उत्पत्तिविनियोगविध्युपजीवकश्च । न च विमर्थे तत्करणमिति वाच्यम् । समानदेशकालकर्तृताया अन्येन अलाभात् । तन्माभाव तस्यावश्यकत्वात् । अङ्गप्रधानविध्येकवाक्यताबोध एव प्रयोगविधिरित्यन्ये । मणि पृ ९९ * प्रयोगविधिना यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्था विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात् क्रमोऽपि प्रयोगविधिना विधीयते । सोम ५।१।१ पृ ४०६ * प्रयोगविधेः निमित्तपदश्रवणात् तदनुरोधेन निमित्तश्रुतिबाधायोगः । सु पृ ५३२ * प्रयोगविधौ प्रयाजादेर्गुणत्वात् न प्रत्येकमेकक्रियान्वयः । बाल पृ १६५

* प्रयोगविध्याश्रितस्य दौर्बल्यं तमवत्र निरूपितम् । भाट्ट ११।२।७

* प्रयोगविधिप्रयोज्यत्वेन यस्यैव शक्तौ अनुष्ठानप्रवृत्तिः, तस्यैव अशक्तौ निमित्तश्रुत्यनुरोधेन त्यागः । भाट्ट ६।२।७

प्रयोगशास्त्रमिति चेत् । १।३।७।११ ॥

इह कल्पसूत्राणि उदाहरणम् । माशक हास्तिक कौण्डिन्यकमित्येवलक्षणानि किं प्रमाणं अप्रमाणमिति संदिग्धानि । अत्र प्रमाकरेण संगतिलोभात् इत्थमधिकरणमुपवर्णितम् । कल्पसूत्राणामपि वेदवत् स्वाध्यायानध्यायरूपादरविशेषात् अर्थाविशेषाच्च, मशकादिसमाख्याना च काठकादिवत् प्रवचनतोऽपि उपपत्तेर्वेदत्वम् । सति च वेदत्वे परस्परबाधातोऽत्र दृश्यते । तथाहि, 'सर्वासु तिथिषु दर्शपूर्णमासौ' इति कल्पसूत्रम्, पौर्णमास्यमावास्ययोरेवेति वेदः । न चात्र व्रीहियववत् विकल्पः संभवति । असंकीर्णार्थयोर्हि परस्परविरोधे विकल्पो भवति । अत्र सर्वासु तिथिषु दर्शपूर्णमासाविति पौर्णमास्यमावास्ययोरपि प्राप्तत्वात् विकल्पासंभवेन विरुद्धार्थयोः परस्परबाधतात् अप्रामाण्यमेवेति पूर्वपक्षः । सिद्धान्तस्तु स्यादेवम् । काठकादिवत् समाख्यामात्रेण भवेत् । किन्तु अनिच्छिन्नदृढतरमशकादिकर्तृस्मृतेः तत्कर्तृकत्वमेव । वेदतुल्यादरस्तु नान्तरीयकः वेदमिश्राम्नानात् । अतः कल्पसूत्राणां पौरुषेयत्वात् वेदविरोधेन अनादरणीयत्वमेवेति । तदेतदसम्बद्धम् । न हि संकीर्णार्थयोः परस्परविरोधेन अप्रामाण्यं भवति । तथा सति 'एष्व वेद्याः' इत्यादिष्वपि अप्रामाण्यप्रसङ्गात् । अथ तत्र फलभूयस्त्वकल्पनया अविरोधः तथा अत्रापि फलभूयस्त्वार्थमेव पौर्णमास्यमावास्ययोः श्रवणं भविष्यतीति यथावार्तिकमेव अधिकरणं प्रस्तूयते ।

पूर्वं मन्वादिस्मृतिमुदाहृत्य तुल्यन्यायतया कल्पसूत्राणां पुराणानां च श्रुतिमूलत्वेन प्रामाण्ये निरूपिते इदानीं कल्पसूत्रमुदाहृत्य तेषामेव स्वातन्त्र्येण वेदवत् प्रामाण्यमाशङ्क्य तन्निराकरणेन स्मृत्यधिकरणन्याय एव व्यवस्थाप्यते । न च वाच्यम् 'धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्ष्यं स्यात्' इत्यनुपलभ्यमानमूलशब्दानामेव अष्टकादिस्मृतीनां तन्न्यायविषयत्वात् कथं प्रत्यक्षोपलभ्यमानमूलानां कल्पसूत्राणामपि तन्न्यायविषयत्वम् । यतो न स्मृतीनामपि सर्वासामनुपलभ्यमानमूलत्वम् उपनयनादिस्मृतीनां मूलभूतप्रत्यक्षवेदोपलम्भात् । नापि कल्पसूत्राणां सर्वेषामेव प्रत्यक्षवेदमूलत्वम् । नानाशाखासनाङ्गोपसंग्राहिणां तेषां मूलभूतकृत्स्नवेदोपलम्भाभावात् । स्वल्पभूयस्त्वे परं विशेषः । न चैतावता तन्न्यायविषयत्वं भवति । यत्तु प्रथमं कल्पसूत्रमात्रमेव उदाहरणमित्युक्तम् तत् भाष्यानुसारेणेति नादरणीयम् । अत्राय पूर्वपक्षिणोऽभिसन्धिः — स्मृतीनां पुराणानां कल्पसूत्राणां च महाजनादरपरिगृहीतानां दृष्टार्थविषयत्वात् अग्निहोत्रादिचोदनावत् वेदत्वमेव । तथा आचार्यवचनं प्रमाणमिति वेदादेवावगम्यते । तच्चैषां नित्यत्वे सति उपपद्यते ।

अन्यथा नित्यानित्यसंयोगविरोधात् माशकादिसमाख्यायाश्च काठकादिसमाख्यावत् प्रवचनादेवोपपत्तेः । कर्तृव्यपदेशश्च मन्त्रकृद्व्यपदेशवदुपपत्स्यते । यथाहि 'शिशुर्वाऽऽङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्' इति (ता. ब्रा. १३।३।२४) मन्त्रप्रवक्तरि मन्त्रकृद्व्यपदेशो वेदे, तथा प्रवक्तरि माशकादौ लोके कर्तृव्यपदेश इति । एवं च सति बुद्धायागमानामपि वेदवदेव तुल्यन्यायतया प्रयोगशास्त्रत्वाविशेषात् धर्मे प्रामाण्यं पूर्वपक्षिणोऽभिमतमिति । एवं प्राप्ते, अभिधीयते ।

नासंनियमात् । १२ ॥

अयमभिप्रायः । भवेदेवं यद्यत्र महाजनावरपरिग्रहीतातीन्द्रियार्थविषयत्वं वेदत्वमन्तरेण अनुपपद्येत । तत्तु उभयथाऽपि उपपद्यते, वेदत्वेन वेदमूलत्वेन च । तत्र अविच्छिन्नदृढतरकर्तृस्मृतेः पौरुषेयत्वेन वेदत्वासंभवात् स्मृत्यधिकरणसिद्धान्तन्यायेन वेदमूलत्वेनैव व्यवस्थाप्यते । यत्तु नित्यत्वेऽपि मन्त्रकृद्व्यपदेशवत् कर्तृव्यपदेश इत्युक्तम्, तदसंगतम्, व्यपदेशमात्रं हि मन्त्रकृद्व्यपदेशवत् यथाकथञ्चित् समाधानमधिकुरुते । दृढतरकर्तृस्मृतिस्तु अनित्यतामन्तरेण कथञ्चित् समाधातुं शक्यते । न च सा वेदे समस्ति । तथा सति वेदस्यापि अनित्यत्वप्रसङ्गात् । एवं च सति समाख्याऽपि पौरुषेयत्वनिबन्धना, न तु काठकादिवत् प्रवचननिबन्धना ।

यत्तु 'आचार्यश्च प्रमाणम्' इति वेद एव कल्पसूत्रादीनां नित्यत्वं प्रतिपादयति, इतरथा नित्यानित्यसंयोगविरोधादित्युक्तम्, तदसत् । नह्ययं वेदो सूत्रकादीनां कल्पसूत्रकारप्रवचनविषयः, किं तर्हि ? आचार्यवचनविषय एवायम् । आचार्यश्च मन्वादिभिरुक्त एव । 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति (मनु. २।१४०) । तस्य च वचनं शिष्यविषयं प्रमाणमेवेति । तदुक्तम् 'व्याचक्षाणस्य वेदार्थान् वेदांश्च वदतः स्वयम् । शिष्यान् प्रत्याप्तभावात्स्यादाचार्योक्तिप्रमाणता ॥' इति (वा. १।३।६।१४ पृ. २४२) । नापि नित्यानित्यसंयोगविरोधः । आचार्यशब्दस्य प्रवृत्तिनिमित्तोपाधिसामान्याश्रयणेन पाचकादिशब्दवत् नित्यार्थत्वात् । अथवा आचिनोति श्रौतबुद्धिमिति व्युत्पत्त्या आचार्यो वेद एवेति नानुपपन्नम् । अत एव दृढतरकर्तृस्मृतेः बुद्धाद्यागमानामपि न स्वातन्त्र्येण प्रमाणता । इयांस्तु विशेषः—कल्पसूत्रादीनां वेदमूलत्वेन प्रामाण्यम्, तेषां तु असन्मूलत्वेन अप्रामाण्यमेवेति ।

प्रयोजनम्— पूर्वपक्षे अधीतकल्पसूत्रप्रस्मरणेऽपि वेदप्रस्मरणप्रायश्चित्तम्, सिद्धान्ते तु अवेदत्वान्नेति ।

सूत्रं तु—न वेदत्वं कल्पसूत्रादीनां प्राक् असत्ता-मेव मशकादिभिः नियमात् निबन्धनादिति । तौता.

प्रयोगशास्त्रमिति चेत् । १।३।६।११ ॥

माशक हास्तिक कौण्डिन्यक इत्येवंजातीयकं कल्पसूत्रं प्रमाणं न वेति विचारे पूर्वपक्षमाह । प्रयोगशास्त्रं प्रयोगस्य अनुष्ठेयपदार्थपौर्वापर्यस्य शास्त्रं शासकं कल्पसूत्रं प्रमाणं स्वातन्त्र्येण इति चेत् ।

नासंनियमात् । १२ ॥

पूर्वपक्षं निषेधति सिद्धान्ती । न कल्पसूत्रं स्वातन्त्र्येण प्रमाणम् असंनियमात् । नैतत् सम्यङ्निबन्धनं स्वराभावात् इति भाष्यम् । प्रागभावादिः अन्यैः बौधायनादिपुरुषैः नियमात् नियमनात् प्रणीतत्वात् इति कुतूहलम् ।

अवाक्यशेषाच्च । १३ ॥

सिद्धान्ते युक्त्यन्तरमाह । यथा वेदे वाक्यशेषाः अर्थवादाः सन्ति तथा कल्पसूत्रेषु न सन्ति इति अवाक्यशेषात् वाक्यशेषशून्यत्वात् न वेदवत् स्वातन्त्र्येण प्रमाणकल्पनम् । सर्वेनामकल्पप्रत्ययनिर्देशाच्च इति चकारार्थः ।

सर्वत्र च प्रयुक्तत्वात् संनिधानशास्त्राच्च । १४ ॥

कल्पसूत्राणि सत्यवाचा वचनानि इति स्वातन्त्र्येण प्रमाणानि इति पूर्वपक्षोक्तं दूषयति सिद्धान्ती । 'पूर्वपक्षे सर्वासु तिथिषु अमावास्या' इति कल्पसूत्रवचने सर्वत्र सर्वासु पूर्वपक्षतिथिषु अमावास्याशब्दस्य प्रयुक्तत्वात् अमावास्यायामकर्तव्यता उक्ता । अमावास्यायाम-संनिधाने शास्त्रं श्रुतिवचनं तु 'अमावास्यायां अमावास्यया यजेत' इति । एवं सर्वत्र प्रयुक्तत्वात् संनिधानशास्त्राच्च न सत्यवचनता कल्पसूत्रकारस्य सिध्यति । तस्माच्च स्वातन्त्र्येण प्रामाण्यं कल्पसूत्राणां इति सिद्धान्तः ।

अत्र कुतूहलम्– चकारः अर्थः हेतौ यतो वेदमूलकतयैव कल्पसूत्राणि प्रमाणं न स्वतन्त्रतया, तस्मात् प्रत्यक्षश्रुतिविरोधे अप्रमाणं इति । द्वितीयश्चकारस्तु ' अविशेषाद्वुभौ वा ' इत्यादिविषयान्तरसमुच्चयार्थः– इति । के.

* प्रयोजकं अपूर्वं अग्निहोत्रादिगतानामङ्गानाम्, तेन ऊहसिद्धिः । ९।१।२।१. * प्रयोजकं अपूर्वं आरादुपकारकाणामिव संनिपत्योपकारकाणामपि अङ्गानाम् । भा. ९।१।१।१, * प्रयोजकं अपूर्वं उलूखलमुसलयोः प्रोक्षणस्य । ९।१।२।२–३, * प्रयोजकं अपूर्वं चतुर्होतृपञ्चहोतृमन्त्राभ्यां अभिमर्शनस्य न तु दर्शपूर्णमाससमुदायः । ९।१।५।११–१९, * प्रयोजकं अपूर्वं 'त्रीन् परिधीन्०' इति मन्त्रस्य, न तु परिधित्वं दर्शपूर्णमासयोः । ९।१। ५।११–१९, * प्रयोजकं अपूर्वं देवताप्रकाशकस्य मन्त्रस्य । ९।१।३।४–९. * प्रयोजकं अपूर्वं प्रोक्षणादीनां संनिपत्योपकारकाणां वाक्यविनियुक्तानाम् । ९।१।२।२–३, श्रुतिविनियुक्तानाम् । ९।१।५।११–१९. * प्रयोजकं अपूर्वं फलप्रकाशकमन्त्रस्य । भा. ९।१।३।४, * प्रयोजकं अपूर्वं व्रीहिप्रोक्षणस्य न तु व्रीहिस्वरूपं दर्शपूर्णमासयोः । ९।१।५।११–१९, * प्रयोजकं अपूर्वं ' दर्व्या जुहोति ' इति उक्तस्य होमस्य, न तु स्रुवरूपाद्यहेतुप्रयुक्तः होमः वरुणप्रघासेषु । ९।१।५।११–१९. * प्रयोजकं आज्यसंस्कारकं समानयनं आज्यस्य दर्शपूर्णमासयोः । भाट्ट. ४।१।१५. * प्रयोजकं आतिथ्योपसदग्नीषोमीयत्रितयेकस्य बर्हिषः ज्योतिष्टोमे । ४।२।१४।२९–३०. * प्रयोजकं एकहायन्याः आनयनस्य वा न भवति अक्ष्याभ्यञ्जनं पदपांसवः पदहोमो वा ज्योतिष्टोमे सोमक्रये । ४।१।१०।२५. * प्रयोजकं चतुर्थपञ्चमप्रयाजनिष्पादकमानयनं औपभृताज्यस्य दर्शपूर्णमासयोः । वि ४।१। १५, * प्रयोजकं न फलं चक्षुरञ्जनस्य, फलश्रुतिस्तु तत्र अर्थवादः । ४।३।१. * प्रयोजकं न निरसनं लोहितादेः पशालम्भस्य ॥ अग्नीषोमीये पशौ । ४।१।१२।२७. * प्रयोजकं न परमापूर्वं अग्निष्टोमे अग्नीषोमीयात् प्राचीनस्य उपाकुरणस्य, किन्तु तत्तत्पदार्थजन्यापूर्वमेव । ९।१।६।२०–२२, २५. * प्रयोजकं न प्रहरणं शाखायाः किन्तु प्रतिपत्तिः दर्शपूर्णमासयोः, तच्च पूर्णमासयागे नास्ति । ४।२।४।१०–१३. * प्रयोजकं न फलं आश्वत्थ्या उपभृतः, खादिरस्य स्रुवस्य, पर्णमय्या जुह्वाः च । तत्र फलश्रुतिरर्थवादः । भा. ४।३।१।१–४, * प्रयोजकं न फलं कर्मणां आघाराज्यभागप्रयाजानूयाजानाम् । तानि च कर्माणि क्रत्वर्थानि । तत्र फलश्रुतिः अर्थवादः । दर्शपूर्णमासयोः । ४।३।१।१–४, * प्रयोजकं न भवति नित्यं नैमित्तिकानाम् । ज्योतिष्टोमे बार्हद्गिर ब्राह्मणस्य प्रस्ताम, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य इति नैमित्तिकमेव न नित्यम् । ४।३।२।४. * प्रयोजकं न भवति फलं द्रव्यसंस्कारकर्मणाम् । तत्र फलश्रुतिरर्थवादः । ४।३।१।१–४, * प्रयोजकं न भविष्यतैव संयोगेन यत् निर्दिश्य अन्यनोपदिश्यते । भा. ४।१।११।२६. * प्रयोजकं न वाजिनं दध्यानयनस्य चातुर्मास्यवैश्वदेवपर्वणि । ४।१। ९।२२–२४. * प्रयोजकं पश्वादिफलं गोदोहनादेः, न तु क्रतुः । भाट्ट ४।३।२. * प्रयोजकं पुत्रगतपूतत्वादिफलं वैश्वानरेष्टेः । ४।३।१६।३८–३९. * प्रयोजकं प्रतिष्ठाफलमेव रात्रिसत्राणां न तु स्वर्गः । ४।३।८। १७–१९. * प्रयोजकं प्रधानं स्विष्टकृत्प्रक्षेपस्य दर्शपूर्णमासयोः । भाट्ट. ४।१।१३. * प्रयोजकं प्रयाजद्वय आज्यसमानयनादेः दर्शपूर्णमासयोः । ४।१।१५।४०–४१. * प्रयोजकं प्रैषानुवचने मैत्रावरुणाय दण्डदानस्य । भाट्ट. ४।२।६. * प्रयोजकं फलं क्रतुश्चोभयं अग्निहोत्रे दध्यादेः । ४।३।२।५–७. * प्रयोजकं फलं ' नेक्षेतोद्यन्तमादित्यम् ' इति पर्युदासस्य प्रजापतिव्रतेषु । ४।१। ३।३–६. * प्रयोजकं यस्मिन् कृते यन्निष्पद्यते प्रयोजनवत् तत् तस्य प्रयोजकमिति गम्यते ( यथा तप्ते पयसि दध्यानयने कृते आमिक्षा निष्पद्यते इति आमिक्षा दध्यानयनस्य प्रयोजिका इति ) । भा. ४।१।९।२२ । यत् प्रयोजनवत् तत् प्रयोजकम् । टुप्. * प्रयोजकं वत्सापाकरणमेव शाखाछेदनाहरणपरिवासनानाम्, न तु कपालोपधानं दर्शपूर्णमासयोः । भा. ४।२।३।८–९. * प्रयोजकं व्रीह्यवघातस्य प्रधानं दर्शपूर्णमासयोः । वि. ४।२।११. * प्रयोजकं श्रपणं पुरोडाशकपालस्य, न तु तुषोपवापः । ४।१।११।२६. * प्रयोजकं सवनं

प्रणीतानाम्, निनयने तु प्रतिपत्तिः । दर्शपूर्णमासयोः । ४।२।५।१४-१९. * प्रयोजकं सर्वं फलं ज्योतिष्टोमस्य दर्शपूर्णमासयोश्च । भा. ४।३।१०।२५-२६. * प्रयोजकं हविष्कृदाह्वानात् प्राचीनावान्तरापूर्वं प्रणीताद्यनियमस्य दर्शपूर्णमासयोः । ९।१।७।२३-२४. * यद्धि फलवत् तत् प्रयोजकम् । यज्ञकर्म च प्रयोजकं न देवता । भा. ९।१।८।९. * यस्य च अङ्गद्वारेण प्रयोजकत्वं तदेव प्रयोजकं इति आमिक्षाधिकरणे वक्ष्यामः । ऋजु. पृ. ९. * येषु धर्मेषु विधीयमानेषु यदपूर्वमुत्पद्यते तत् तेषां प्रयोजकं भवति, न यावत् किञ्चित् । भा. ३।१।५।१० पृ. ६७०. * यदर्थं हि क्रियन्ते धर्माः तत् प्रयोजकम् । यस्मिन् सति क्रियन्ते तत् निमित्तम् । भा. ९।२।१।२ वर्णकं २, यद्धि येन कर्तव्यं भवति, तत् तस्य प्रयोजकम् । ९।१।१।२. * यन्निष्ठकृतिसाध्यफलनिष्ठविनोद्देश्यताशालि यत् तत् तस्य प्रयोजकम्, यथा– आमिक्षादर्थादि दध्यानयना- (नप्रयाजा) देः । भाट्ट ४।१।१. * प्रयोजके न घाष्टोहिते पशोः अग्नीषोमीये पशौ । ४।१।१२।२७. * प्रयोजकानि अन्विताभिधाने आकाङ्क्षायोग्यतासंनिधानानि, न तु शब्दोपात्तत्वमपि । सोम. ५।१।१ वर्णकं १. * प्रयोजकः आग्नेययागः पुरोडाशस्य, न स्विष्टकृत् । ४।१।१३।२८-३२. * प्रयोजकः क्रतुः ब्राह्मणादिरूपाधिकारिसम्बन्धेन निहितस्य पयोव्रतादेः ज्योतिष्टोमे । ४।३।४।८-९ * प्रयोजको द्रव्यार्जनस्य पुरुषार्थ एव न क्रतुः । भा. ४।१।२।२ वर्णक २. * प्रयोजको न अवघातकालीनस्तुषोपवापः कपालोपधानासादनयोः । भाट्ट. ४।१।११. * प्रयोजको न तुषोपवापः पुरोडाशकपालस्य दर्शपूर्णमासयोः । ४।१।११।२६. * प्रयोजको न निनयनकालीनस्तुषोपवापः कपालोपादानस्य । भाट्ट. ४।१।११. * प्रयोजको न पुरोडाशः स्विष्टकृत् दर्शपूर्णमासयोः । ४।१।१३।२८-३२. * प्रयोजको न विधिः फलस्य । भा. ४।१।२।२ वर्णकं २. * प्रयोजको न शकृत्प्रक्षेपः पशालम्भस्य किन्तु प्रतिपत्तिः । अग्नीषोमीये पशौ । ४।१।१२।२७. * प्रयोजको न शाखाछेदस्य उपवेषः । पौर्णमास्या तु उपवेषार्थं किञ्चित् काष्ठं ग्राह्यम् । ४।२।३।८-९. * प्रयोजको न स्वरुच्छेदनादेः अग्नीषोमीये पशौ । ४।२।२।१-६. * प्रयोजको न स्विष्टकृद्यागः अवयविनो हविषस्तदुत्तरार्धस्य वा, आज्यप्रक्षेपस्य तु प्रयोजकः । दर्शपूर्णमासयोः । भाट्ट. ४।१।१३, * प्रयोजकः निनयनकालीनस्तुषोपवापः कपालधारणस्य । ४।१।११. * प्रयोजकः पुनः द्विविधः, स्वार्थ एव प्रयोजकः परार्थ एव प्रयोजकश्चेति । आद्यो यथा– शेषी स्वर्गादिः शेषं यागादिकं स्वार्थं प्रयुङ्क्ते न परार्थम् । द्वितीयो यथा– निमित्त जीवनमेदनादि अशेषिभूतं दर्शादिकं भेदनहोमादिकं च न स्वार्थं प्रयुङ्क्ते । बाल. पृ. १७७. * प्रयोजकः पुरुषार्थ एव वैश्वसृजात्ततायाः, वेदेः आहार्यपुरीषतायाः, अनतिदृश्यकारणस्य, गोदोहनस्य च । भा. ४।१।२।२ वर्णक २. * प्रयोजकः प्रजापतिव्रतानां पुरुषार्थः । ४।१।३।३-६. * प्रयोजको यागः स्वर्गादिफलस्य न विधिः । वि. ४।१।२ वर्णकं २. * प्रयोजकः स्वर्गो विश्वजिदादेः । ४।३।५।१०-१२. * प्रयोजकः स्विष्टकृद्यागोऽपि स्विष्टकृत्प्रक्षेपस्य दर्शपूर्णमासयोः । भाट्ट. ४।१।१३. * प्रयोजकः हृदयादियागः पशोः, न तु शकृत्प्रयागः लोहितनिरसनं वा । ४।१।१२।२७. * प्रयोजकौ प्रयाजानुयाजौ औपभृताज्यस्य दर्शपूर्णमासयोः । भा. ४।१।१६।४२-४५. * प्रयोजकाः न प्रयाजाः औपभृताज्यसमानयनस्य तत्संस्कृताज्यस्य च, किन्तु अन्यप्रयाजाङ्गमेव । भाट्ट. ४।१।१५. * प्रयोजकस्य च प्रयोज्यव्यापारेऽपि कर्तृत्वं न विहन्यते । वा. ३।८।१२।२४. * प्रयोजकस्य प्रयोज्यं प्रति (उत्पादकस्य उत्पाद्यं प्रति) यो व्यापारः, स भावनेत्युच्यते । टुप्. ११।१।२।१०. * प्रयोजिका आमिक्षा दध्यानयनस्य चातुर्मास्यवैश्वदेवपर्वणि । ४।१।९।२२-२४. * प्रयोजिका शाखा छेदनादेः दर्शपूर्णमासादौ । ४।२।३।८-९.

* प्रयोजकाप्रयोजकत्वं चतुर्थाध्यायार्थः । वा. २।१।१।१ पृ. ३७२. * प्रयोजकाप्रयोजकत्वं दोषशैथिल्यादतो नास्ति । टुप्. ७।१।१।१. * प्रयोजकाप्रयोजकत्वं हि 'अर्थे समौपम्यम्' ४।१।८।२१ इत्यतः

प्रभृति साक्षात् चिन्तित आग्नेयमलिप्सविचारात् ( ४।१। ८।२०–२२ ) । रत्न ५।१।१।१ . * प्रयोजकाप्रयोजकत्वादृते क्रमो नास्ति । वा ७।१।१।१

* प्रयोजकाप्रयोजकनिरूपणं चतुर्थाध्यायार्थः । चतुर्थे प्रयोजकाप्रयोजकौ निरूपितौ । तत्र प्रयोजकः सप्तधा, अप्रयोजकोऽपि सप्तधा । तथाहि, [ १ ] कश्चित् उत्पत्तेरपि प्रयोजकः, उपादानस्यापि पालनस्यापि । यथा– आग्नेययागामिक्षायागादिर्यथाक्रम अष्टाकपालामिक्षादेः । [ २ ] कश्चित्तु नित्यस्यापि अप्रयोजकः, यथा– तुषोपवापः कपालस्य नोत्पत्तेः प्रयोजकः, नोपादानस्य, न पालनस्य । स तु पुरोडाशायमेवोत्पन्नं उपात्तं पालितं च कपालं साधनत्वेन गृह्णाति । [ ३ ] कश्चित्तु उत्पत्तेरप्रयोजकः, उपादानपालनयोस्तु प्रयोजकः, यथा– अक्षाभ्यञ्जनं न पाम्नामुत्पत्तेः प्रयोजकम्, स्वत एव उत्पन्नस्य दिङ्नामा तेषां पदग्रहणरूपोपादानस्य प्रयोजकः पालनस्य च । एवं प्रातर्दोहयागोऽपि अशितपीतोत्पन्नस्यैव रूपं स्निग्धदुग्धस्य दोहनरूपमुपादानं पालनं च प्रयुङ्क्ते । वाजिनयागोऽपि वाजिनोत्पत्तेः अप्रयोजकः तस्या आमिक्षार्थदध्यानयनाधीनत्वात्, वाजिनोपादानपालनयोस्तु प्रयोजक एव । [ ४ ] कश्चित्तु उत्पत्तेरेव प्रयोजको नोपादानपालनयोः, यथा– आमिक्षा वाजिनोत्पत्तेः प्रयोजिका, नोपादानपालनयोः । एवं स्वर्गादिफलं यागोत्पत्तेरेव प्रयोजकम्, न यागोपादानपालनयोः, उत्पत्तिव्यतिरिक्तयागोपादानासम्भवात्, क्षणिकस्य च पालनासम्भवात् । [ ५ ] कश्चित्तु उत्पत्त्युपादानयोर्न प्रयोजकः पालनमात्रस्य तु प्रयोजकः, यथा– स्विष्टकृद्यागादिः शेषस्य । [ ६ ] कश्चित्तु उपादानस्यैव प्रयोजकः, नोत्पत्तिपालनयोः यथा– आरुणि सप्तमपदनिधाने अक्षाभ्यञ्जनं असंस्कृतपांसूपादानस्यैव प्रयोजकम्, न पांसूत्पत्तिपालनयोः । एवं चरौ तुषोपवापो हस्तोपादानस्यैव प्रयोजकः, न तदुत्पत्तेः पालनस्य वा । एवं आग्नेयादियागो देवताया उद्देशात्मकोपादानस्यैव प्रयोजकः, न देवतोत्पत्तेः तत्पालनस्य वा । [ ७ ] कश्चित्तु उत्पत्तिपालनयोरेव प्रयोजकः, न तूपादानस्य, यथा– स्वर्गादिफलं अपूर्वस्योत्पत्तेः प्रयोजकं पालनस्यापि यमनाद्यत्रकर्मनाशजन्यस्वर्गादि हि कृते स्वर्गानुत्पत्तेः, न तु उत्पत्तिव्यतिरिक्त किञ्चिदपि अपूर्वस्योपादानम्, यत् स्वर्गादिना फलेन प्रयुज्येत । [ ८ ] कश्चित्तु उत्पत्त्युपादानयोरेव प्रयोजकः, न पालनस्य, यथा– अग्नीषोमीयस्य विकारे निरूढपशौ अदीक्षिते मैत्रावरुणाय दण्डदानं दण्डोत्पत्त्युपादानयोः प्रयोजकम्, न तत्पालनस्य पूर्वमविद्यमानत्वात् तस्येति ।

एवं प्रयोजक आद्यभेदस्य तृतीयादिभेदाना च गणनया सप्तविधः । अप्रयोजकोऽपि द्वितीयस्य तृतीयादिभेदाना च गणनया सप्तविध इति सिद्धम् ।

पुनरपि प्रयोजको द्विविधः । कश्चित् स्वार्थं प्रयुङ्क्ते, यथा– शेषी स्वर्गादि शेषं यागादिकं स्वार्थं प्रयुङ्क्ते, न परार्थम् । कश्चित्तु परार्थं किञ्चित् प्रयुङ्क्ते, न स्वार्थम्, यथा– निमित्तं जीवनभेदनादि अशेषिभूतम्, दर्शादिकं भेदनहोमादिकं च न स्वार्थं प्रयुङ्क्ते, किन्तु पापक्षय क्रतूपकारादिशेष्यर्थं प्रयुङ्क्ते । तदुक्तमाचार्यैः– 'तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः । निमित्तैर्न च तेष्वेषां होमानां शेषता मता ॥' इति । अप्रयोजकोऽपि पुनर्द्विविधः । कश्चित् स्वाङ्गस्यापि अप्रयोजकः, यथा– तुषोपवापः कपालस्य स्वाङ्गभूतस्यापि अप्रयोजकः । कश्चित्तु पराङ्गस्य स्वोपकारिणोऽपि अप्रयोजकः, यथा– दध्यानयनस्य वाजिनयागः, यथा वा अक्षाभ्यञ्जनं एकहायनीनयनसाध्यमपि न तस्य प्रयोजकम् । यथा वा प्रतिपत्तिः शाङ्कलोहितनिरसनस्विष्टकृद्यागचात्वालप्रासनादिः प्रतिपाद्यस्य शकृल्लोहितस्य, शेषस्य, कृष्णविषाणादेश्च अप्रयोजिका । तथा प्रसङ्गी अपि पशुपुरोडाशयागादिः परवाङ्गस्य प्रयाजादेः स्वोपकारिणोऽपि अप्रयोजकः । बाल पृ १०६–१०८.

* प्रयोजकत्वं अन्वयव्यतिरेकवत्त्वे सति नियतपूर्ववृत्तित्वम् । मणि पृ ४५ * प्रयोजकस्त्वं द्वेधा भवति, यदि वा गण्डस्य समर्प्यते अथवा ब्रूहि इत्यभिधीयते इति । चा ३।८।८।१८ * प्रयोजकत्वं यस्य सिद्ध्यर्थं किञ्चित् क्रियते तत्त्वम् । वि ९।१।१ वर्णक २

* प्रयोजकनिरूपितं प्रयोजकत्वं चतुर्थेऽध्याये निरूप्यते । भाट्ट ४।१।१

■ 'प्रयोजकवशौ चेष्टौ मुख्यप्रवृत्तिजन्मौ।' या. ३।१।११ पृ. ६९१.

■ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायः। अयं न्यायो महाचार्यैर्विवृतः। तथाहि, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते। जगद्यामृजतस्तस्य किं नाम न कृतं भवेत्॥' इति। (श्लोकवार्तिके सम्बन्धाक्षेपपरिहारप्रकरणे 'जगद्यामृजत-स्तस्य किं नामेष्टं न सिध्यति॥ ५४॥ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'॥ ५५॥ इति पाठः। के.)। साहस्री. ३५९.

■ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायेन प्रयोजनं विना परे (परमात्मनि जगत्सृष्टि-स्थित्यादिषु) प्रवृत्तिर्न संभवति (इति शङ्का)। सनत्सुजातीये, नीलकण्ठः १।१९. ■ प्रयोजनं असत्तया अपि भवति सकृद्वचनेन ज्ञातस्य पुनर्वचने। भा. ५।१।११, ■ प्रयोजनं कृत्स्नचिन्तायां न वक्तव्यम्। ३।२।१२।३२. ■ प्रयोजनं (अर्थः) क्रमे प्रमाणम्, व्युत्क्रमे तस्य अनुपपद्यमानत्वात्। भाट्ट. ५।१।२. ■ प्रयोजनं दक्षिणानां धर्मेषामुद्दिश्य आनमनम्। भा. १०।३।१९।७१, ■ प्रयोजनं प्रति द्रव्याणि शेषभूतानि। ६।३।१९।३९, ■ प्रयोजनं लक्षणकर्मणि न वक्तव्यम्। ४।२।११।२७. ■ 'यमर्थमधिकृत्य प्रवर्तन्ते तत् प्रयोजनम्' इति नैयायिकोक्तं लक्षणम् (न्या. द. १।१।२४)। मु. पृ. ४४५, कणिका. पृ ३३९. ■ 'सर्वेण विधिनेच्छया प्रयोजनमपेक्ष्यते'। 'ऐन्द्राग्नं गृह्णाति' इत्येतद्वाक्यप्रवृत्तिकाले किं प्रयोजनमित्यपेक्षा भवति। या. २।२।६।१९ पृ. ५११, ■ प्रयोजनेन प्रयोजकेनैव भवितव्यं इति न नियमः। ३।४।१८।३७. ■ प्रयोजनस्य प्रयोजनं नोच्यते। यत् प्रयोजकं तस्य प्रयोजनम्। भा. १०।७।११।३७.

■ प्रयोजनाधिकरणम्। सत्रे प्रत्येकं कृत्स्नेन फलेनार्थिनामधिकारः॥

पुरुषार्थैकसिद्धित्वात् तस्यतस्याधिकारः स्यात्। ६।२।१।१॥

भाष्यम्— 'द्वादशाहेन प्रजाकामं याजयेत्' 'ऋद्धिकामा उपेयुः'। तथा तत्रतत्र एवंकामाः 'सत्रमुपेयुः', 'सम्यग्वाक्यश्रनुरिदादिपरमाः सत्रमासीरन्' इति। तेषु संदेहः किं तस्यतस्य कृत्स्नेन फलेन अर्थिनः सत्रे अधिकारः, उत पर्षदः अर्थिन्या अधिकार इति। आह, ननु अर्थिनो बहुसंख्याविशिष्टा निर्दिश्यन्ते, कथमेषां एकैकस्योऽधिकारो भविष्यतीति। उच्यते 'ऋद्धिकामाः' इत्येवमादि विधीयमानं ऋद्धिलक्षितेषु समस्तेषु व्यस्तेषु च प्राप्तं न शक्यं बहुवचनेन विशेषे अवस्थापयितुम्। तेन तत्रं आधिकुर्यात् पर्षद् वेति भवति संदेहः। किं तावत् प्राप्तम्? एकैको न समर्थो बहुकर्तृकं सत्रं रचयितुम्। पर्षद् तु कर्त्री अर्थिनी अवगम्यमानः। न चाकर्तुः फलं भवति। न चैकः कर्तोच्यते। तस्मात् समस्तानां फलं एकैकस्य पञ्चायवः, मध्यमं स्यात् कृत्स्नं फलमिति। एवं प्राप्ते, ब्रूमः। तस्यतस्यार्थिनः कृत्स्नं फलं सत्रात् निर्वर्तते। कुतः? पुरुषार्थस्य एकैकस्य सिद्धिर्यतो भवति। सह क्रियमाणे सर्वः एवैव पुरुषार्थं साधयति कृत्स्नेन। कर्तृणां फलं च भवति, एकैकश्चात्र कर्ता। आह, ननु एतदुक्तम्, एकैको न शक्नोति बहुकर्तृकं कर्तुमिति। उच्यते। शक्नोति एकैकस्य स्वातन्त्र्यविवक्षायाम्। यदा एकैकः स्वातन्त्र्येण प्रवर्तते तदा अन्यान् सहायान्निर्वृत्त्यर्थं क्षमादिभिः प्रयोक्ष्यते। एष एक. पुरुषार्थं साधयति इतर इतरश्च। तेन सर्वे कर्तारः सम्पंस्ता भविष्यन्ति। सर्वे चेत् कर्तारः, पृथक्त्वेनैव फलेन संभन्त्स्यन्ते।

टुप्— ननु इतरेतरयुक्ता इतरानपि अनुतिष्ठन्ति इतरत्रापि। तस्मात् प्रयोगे नास्ति विशेषः। प्रयोगमात्रे या अधिकारचिन्ता सा युक्ता (कर्तुम्)। कृत्स्नेन फलेन व्याप्यते फलायनेन वा इति फलदन्तरतोऽश्च, प्रयोगाविशेषात्। उच्यते। किं कृत्स्नफलार्थिनो यागोपदेशः, उत (फल-) आयतार्थिनोऽपि इतरेतरमुपदेशः अधिकार एव चिन्त्यते। (कर्मोपदेशो योऽत्र ऋद्धिकामाधिकार. स एव चिन्त्यते इति कृत्स्नं व्याख्यानम्। अधिकारे इति सप्तम्यन्तं छित्वा अधिकाराध्याये चिन्त्यते इति न अध्यात्मगाति. इत्यपि व्याख्यानं शक्यमिति वयं प्रतीमः। के.) यद्यपि (यान्त्रिकनाथिन-) अनुष्ठाना-

विशेषे (मानसी स्मृतिः किं कृत्स्नफलविषयाधिकारविशेषणम्, उत तदवयवविषया इति युक्ता चिन्ता । एतेन लक्षणसंगतिर्दर्शिता ) । अथवा क्रियाफलं कर्तृगामि भवति एकस्मिन् पक्षे इतरत्र अकर्तृगामि । ( पूर्वपक्षवाद्यभिप्रायोऽयमुक्तः । स हि पर्यन्तकर्तृकं मन्यमानः स्वपक्षे- स्वपक्षे कर्तृगामि फलम्, सिद्धान्तपक्षे तु प्रत्येकं भोक्तृत्वात् तेषामकर्तृत्वात् अकर्तृगामि फलमिति मन्यते । एवमन्ये नाहुः- ) एवं चेत् ( यथा पूर्वपक्षी मन्यते तथा चेत् ) समुदायस्य कर्तृत्वात् न ते ( समुदायिनः ) कर्तारः । ईदृशी प्रतीतौ, ( समुदायकर्तृत्वप्रतीतौ, अनुष्ठाने- ) अस्ति विशेषः । ( तथाहि, ) समुदायकर्तृत्वे कर्ममध्ये एकस्मिन् मृते नान्य आनेतुं लभ्यते । सिद्धान्ते तु एकैकस्य कर्तृत्वात् ( एकस्मिन् मृते सप्तदश- ) संख्यापूरणार्थमानीयते । ननु इतरत्रापि (पूर्वपक्षेऽपि) अविशिष्टं संख्यापूरणम् । ( उच्यते, ) द्रव्यभेदात् तत्र ( पूर्वपक्षे ) संख्या, न कर्तृभेदात् । एवं चेत् 'सप्तदश प्राजापत्यान्' इत्यत्र यथा पूर्वपक्षे एकस्मिन् पशौ विनष्टे ( समुदायात्मकं साधनं विनष्टम्, इति ) कृत्स्नं पशुगणम् आवर्तते, एवमिहापि एकस्मिन् विनष्टे ( यः संख्यापूरणार्थमानीतः, तेन सह ) सप्तदश भूत्वा पुनरादौ आरभ्य यागमनुतिष्ठन्ति, ईदृशस्य (सप्तदशसंख्यस्य) साधनत्वावगमात् ।

( एवं संदेहं प्रसाध्य पूर्वपक्षं गृह्णाति- ) किं तावत् प्राप्तम् ? ( एवं- ) फलावयवेनैव ( प्रत्येकं ) संबन्धः । ( न कृत्स्नेन फलेन ) । कुतः ? कृत्स्नं फलं प्राप्नुयात् यदि एकैकः, ( तत ) पृथक् पृथक् प्रयोगः स्यात् । ततो बहुवचनं नोपपद्यते ( तस्मात् फलावयवकामस्य सत्रेऽधिकारः ) । अपि च यत् कर्म ( ज्योतिष्टोमादि ) बहुषु फलेषु चोद्यते, तत् ( अपि तावत् ) एकत्र प्रयोगे एकमेव फलं साधयति इत्युक्तं ( योगसिद्ध्यधिकरणे ४।३।११ ) किमुत यदेकफलमेव चोदितं ( सत्रादि । एवं तावत् आख्यातावगतसहप्रयोगकत्वेन फलेऽपि साहित्यमित्युक्तम् । इदानीं कामशब्दादपि बहुवचनान्तात् अयमर्थो गम्यते इत्याह- ) किञ्च 'ऋद्धिकामाः' इत्येकशेषोऽयम् । तत्र यदि इतरेतरयुक्ताः फलं कामयन्ते, तत ( इतरेतरयोगं प्रतिपादयन् ) एकशेष उपपद्यते । द्वन्द्वापवादो हि अयं ( एकशेषः । तस्मात् अनेन इतरेतरयोगस्य प्रतीतेः सहजातानामेव फलम् ) । ननु उद्दिश्यमानत्वात् ( ऋद्धिकामानामेकशेषादवगते ) इतरेतरयोगाविवक्षा ( स्यात् ) । उच्यते । सत्यम्, ( यद्यपि ) अस्मिन् पदे अविवक्षितः ( इतरेतरयोगः ), तथापि ( आख्यातोपात्तानां ) यावतां साधनभावः ( कर्तृभावः ) अवगतः, तावतामेव फलसम्बन्धो युक्तः ( कर्तृगामित्वात् फलस्य ) । इतरेतरयुक्ताश्च साधनत्वेन ( आख्यातेन ) अवगताः । तत इतरेतरयुक्ता एव फलेन संभत्स्यन्ते । ( कामशब्दावगतस्तु इतरेतरयोगः अभ्युच्चयमानत्वेन उक्तः । )

एवं प्राप्ते, ब्रूमः । 'यस्मिन् प्रीतिः पुरुषस्य' ( ४।१।१।२ ) इत्यनेन न्यायेन ( फलस्याविधेयत्वात् ) एकैकस्य कृत्स्नं फलं प्रार्थयमानस्य सत्रमुपायो विधीयते, न सत्रं प्रति ते विधीयन्ते ( तेषां तु सत्रं प्रति उद्दिश्यमानत्वात् अविवक्षितं साहित्यम् । अत प्रत्येकं अधिक्रियन्ते । तस्मात् प्रत्येकं कृत्स्नं फलम् । तत्रैव हेत्वन्तरमाह- ) कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति ( कर्तृत्वं च प्रत्येकमेव ) यदि च एकैकः कर्ता ( स्यात् ) ततो बहुत्वात् कर्तॄणां बहुवचनमुपपद्यते । इतरथा ( प्रत्येकं कर्तृत्वाभावे ) परिषदः कर्तृत्वात् तस्याः ( च ) एकत्वात् कर्तृभेदाभावे, कर्तृभेदाभावात् ( च आख्यातोपात्तकर्तृत्व- ) बहुत्वम् अनुपपन्नं ( स्यात् ) । अथ कर्तृत्वे ( कर्तृरूपे ) श्रुतं ( बहुत्वं ) द्रव्येषु कल्प्यते तत अयमेव दोषः यत् अन्यत्र श्रुतम् अन्यत्र कल्प्यते ( इति ) । 'सामर्थ्यादिभिः प्रयोक्ष्यते' इत्यस्य ( भाष्यस्य अय- ) अर्थः, फलं प्रार्थयतः सत्रमुपायो विधीयते, तच्च ( सत्रं ) बहुकर्तृकं फलसाधने समर्थम् ( आख्यातोपात्तस्य बहुत्वस्य विवक्षितत्वात् ) । तत्र ( एकः स्वतन्त्रः प्रवर्तमानः अन्यानपि स्वतन्त्रान् प्रवर्तमानान् सहायापेक्षित एव प्रवर्तते- ) मया सह भवता यष्टव्यम्, नान्येन इति अस्मिन् ( सहायनियम ) विषये सामाद्यः अवतरन्ति ( उपायाः ) पथिकवत् ( यथा दुर्गं पन्थानमभिप्रतिष्ठमानाः सर्वे स्वतन्त्रा एव सन्तः मिथः सहाया भवन्ति, तद्वत् ) । यदि एकस्य ( स्वतन्त्र ) कर्तृत्वम्, इतरे ( तु ) संख्या

पूर्णाया (ऋत्विक्स्थानीया) स्यु, तत्र (वेशा स्वन्त–) कर्तृत्वाभावात् बहुवचनाभाव इति स (एव पूर्वपक्षोक्त) दोष (तस्मात् यथोक्त एव भाष्यार्थ इति)।

यदुक्त (प्रत्येक कर्तृत्वे) प्रयोगभेदात् बहुवचनाभाव इति, (तत्र) उच्यते। स एव (प्रयोग) एकैकस्य (तत्र) तुल्य (न व्यस्त), तत्र न गम्यते विशेष, इतरस्य प्रयोग नेतरस्येति। (कथ न गम्यते? तदाह–) देवतोद्देशेन द्रव्यस्य य त्याग, स एकैकस्याविशिष्ट। एव च (सति एकस्मिन्नेव प्रयोगे सर्वेषामेव कर्तृत्वोपपत्ते) प्रयोगभेदो न लभ्यते (प्रसज्यते)।

अपि चोत्पत्तिसंयोगाद्यथा स्यात् सत्त्वदर्शनं तथा भावोऽविभागे स्यात्॥ २॥

भाष्य— अपि च नैतद्विरुद्ध 'यदेक कर्म बहुभि क्रियते' इति। यदि उच्येत, विरुद्धम्, एकेन कर्मणि कृते द्वितीय किं कुर्यादिति। अत्रोच्यते। पर्यायेण क्रियापातेन दोष। क्रमेण तु क्रियाया भवति कश्चित् संभव। यथा स्यात् सत्त्वदर्शनं तथा भावोऽविभागे स्यात्। यथा एकैकस्य सत्त्वस्य हस्तिनोऽश्वस्य वा दर्शन एकैकेन कृत्स्न अभिनिर्वर्त्यते, एवमेव सत्रे सत्रभावो भवेत्। सर्वेषां मध्यक द्रव्यम्। मध्यकस्य आहवनीयस्योपरि अध्वर्यु उपविश्यति। तत्र सर्वे कर्तारस्तत्रेण भवन्ति। न चात्र उत्पन्नसंयोग। उत्पत्त्यैव तु सख्यया कर्म संयुज्यते। यदि हि उत्पन्न संयुज्येत, तत्र 'अनेकसत्राय्यैं' इति वचन गम्येत। उत्पत्तिसंयोगे तु एतन्नास्ति। तस्मात् एकैकस्य कृत्स्नेन फलेन अभिसंबन्ध इति।

रत्न— इद पदोत्तर सूत्रम्। 'ननु एकस्मिन् प्रयोगे न बहूना कर्तृत्व संभवति, एकेन कृते कर्मणि अपरस्य कर्तृत्वायोगात्' इति पदानि। तत्र चोत्तर 'अपि चोत्पत्तिसंयोगात्' इति।

टुप्— (उत्पत्तिसंयोगात् इति सूत्रस्य व्याख्यानार्थमिद भाष्यम्—) नाप्युत्पन्नसंयोग, (किन्तु) उत्पत्त्यैव तु संख्यया कर्म संयुज्यते (इति। ननु व्याकरणे—) 'ऋद्धिकामा' इत्यत्र उत्पत्तिवाक्ये एव (कर्मवाक्ये एव) (स्वन्त–) कर्तृगामिनी सख्या श्रूयते। यदि (हि) गुणवाक्ये श्रूयेत, न (तु उत्पद्यमाने) यागे, तत्र एकैकस्य क्रियाफलेन संयोगो न स्यात्। तस्मिन् (उत्पन्नसंयोग–) पक्षे न फलेन व्याप्यमाना स्यु इति (एवमर्थं बहुवचन) उच्चार्यते, किं तर्हि? यागो बहुसख्याविशिष्ट कार्य इत्येवमर्थं (उच्चार्यते। उत्पत्तिवाक्यस्य तु बहुवचनस्यैव स्वतन्त्रकर्तृत्वाभिधायित्व प्रत्यक्षविरोधाभावात् कर्तृणामेव बहुत्वात् प्रत्येकमेव फलम्)।

श्रा— 'समुदायस्य कर्तृत्वात् तस्य कृत्स्नफलान्वय। फलावयवयोग स्यात् प्रत्येक समुदायिनाम्॥' इति प्राप्ते, अभिधीयते 'समुदायस्य कर्तृत्व यद्यपि स्यात्तथापि तु। प्रत्येकमधिकारित्वात् सर्वेऽत्र फलमाप्नुयु॥ कर्तृत्वमपि चैतेषा प्रत्येकमवगम्यते। कर्तृगामि बहुत्व हि द्रव्यगाम्यन्यथा भवेत्॥'

सोम— पूर्वस्मिन् पादे स्वर्गकामनिषादस्थपत्यादिभिरधिकारिनिरूपणपरवाक्यैरधिकारो निरूपित, इह तु आख्यातेनाधिकारो निरूप्यते। आख्यात च अनवगतसंख्यामात्रप्रतिपादक तद्द्वारा नरप्रतीतिर्विलम्बिता इति पादान्तरत्वमानन्तर्यं चेत्याहु। सूत्रार्थस्तु– तन्त्रतस्त्रपृथगधिकार स्यात्, पुरुषार्थस्य फलस्यैकसिद्धत्वात् प्रत्येकसिद्धत्वादिति।

वि— 'सर्वे फलाय प्रत्येक सत्रे वा, ऽऽद्य समूहे। कर्तृत्वा, दन्त्य एकैकस्यापि तन्वाद् बहुत्वत॥'

भाट्ट— 'ऋद्धिकामा सत्रमासीरन्' इत्यादौ अनेककर्तृकसत्रप्रयोगात् एक फल सर्वै कर्तृभि अवयवशो भुज्यते उत कृत्स्न इति विचारे यद्यपि सर्वेषा प्रत्येक कर्तृत्व यदि वा दम्पत्योरिव व्यासक्तम्, उभयथाऽपि एकसत्रप्रयोगात् अनेकफलनिष्पत्तौ दर्शादावपि एकस्मादेव प्रयोगात् युगपत् क्रमेण वा अनन्तस्वर्गोत्पत्त्यापत्ते एकप्रयोगात् एकफलोत्पत्तिनियमस्य अवश्य वाच्यत्वात् एकमेव फल सर्वै अवयवशो भुज्यते। इति प्राप्ते, न तावत् एकस्य फलावयविनो भुक्त्यायतना सम्भवन्ति मुख्यादि-

रूपस्य तस्य अन्वयव्यभावात्। सत्रत्र यता ऽवच्छेदकबुद्धित्वादे तावत्पुरुषनिष्ठवृद्धिषु व्यासज्यवृत्तित्वमात्र पर वाच्यम्, न च तत्र प्रमाणमस्ति, भूतऋद्धिकामादि शब्दाना फलमात्रप्रतिपादकपरत्वात्, ऋद्धिकामकर्तृनिष्ठफलभोगप्रतिपादके फल्याधिकारविधावपि ऋद्धिकामनाया व्यासज्यवृत्तित्वस्य बाधितत्वेन व्यासज्यवृत्तित्वामनाव्य ऽन्यातिरिक्तधर्मांङ्गीकारे प्रमाणाभावाच्च प्रत्येकमेव ऋद्धिकामवावसायात् प्रत्येकमेव फलावगति। नहि तत्र बहुवचनात् ऋद्धिकामपदेन बहुत्वावच्छिन्नाना ऋद्धिकामत्व प्रतिपाद्यते, येन व्यासज्यवृत्तित्वावगतिर्भवेत्। अपि ■ ऋद्धिकामत्वावच्छिन्नाना बहुत्वम्, पदत्व इत्यादिवत्। न च कर्तव्यस्य व्यासक्तत्वात् फलत्वस्य अपूर्व वत्वस्य च व्यासक्तत्वम्, फलादौ कर्तृत्वसामानाधिकरण्यस्य प्रत्येकवृत्तित्वेऽपि उपपन्नत्वेन एतादृशनियमे प्रमाणाभावात्। अतश्च दम्पत्यो व्यासज्यवृत्तिकर्तृत्वेऽपि अपूर्व फल च भिन्नमेव जयताऽवच्छेदकधर्म पर्याप्त्यधिकरण वाच्यम्। प्रकृते तु बहुवचनश्रवणेन कर्तृत्वमेदस्यैव अवगते न फलवत्वादे व्यासज्यवृत्तित्व कल्पनावसर। न च एकप्रयोगात् अनेकफलानुत्पत्ति, समवायसबन्धेनैव फलतावच्छिन्न प्रति फलत्वेन प्रतिबन्ध कल्पनात् आत्मान्तरे बाधकाभावात्। न च एवमपि प्रत्येकवृत्तित्वापेक्षया फलत्वादे र्व्यासज्यवृत्तित्वकल्पने गौरवादेरभावात् नियामकाभाव, जयताऽवच्छेदकऋद्धिकामनादे व्यासज्यवृत्तित्वकल्पने तत्पर्याप्त्यधिकरणताऽवच्छेदकस्य सत्रे यावत्कर्तृनिष्ठतत्तद्यक्तित्वादे कल्पनीयत्वेन गौरवापत्ते। तदुक्त सत्रजन्यफलत्वादेरेव तत्कल्पनाया लाघवात् प्रत्येकमेव फलम्। प्रयोजन सङ्कल्पे तादृशानुसधानम्।

मण्डन—'एकैकस्य सत्रफल सामग्रम्।'

शबर—'सत्रे प्रत्येकमेव च।' फलम्।

* 'प्रयोजना- (एकप्रयोजना इति मु-पाठ) भिसबन्धात् पृथक् सता तत स्यादैककर्म्यमेक शब्दाभिसयोगात्' (११।१।१।१) इति न्यायेन दर्शपूर्णमासौ पहत्य फल अथवत। मु पृ ५४८

**प्रयोजनाभिसबन्धात् पृथक्सता तत स्यादैककर्म्यमेकशब्दाभिसयोगात्। ११।१।१।१॥**

दर्शपूर्णमासयो आग्नेयादीना षण्णा पृथक् सता स्वरूपत भिन्नाना सता एकशब्दाभिसंयोगात् 'दर्शपूर्णमास' इति एकेन शब्देन अभिसयोगात् चोदितत्वात् प्रयोजनाभिसबन्धात् एकेन स्वर्गरूपेण प्रयोजनेन फलेन अभिसबन्धात् तत तस्मादेतस्मात् कारणात् ऐककर्म्य स्यात्। कर्मशब्देनात्र फलमुच्यते क्रियते इति कर्म व्युत्पत्त्या। एक कर्म फल येषा षण्णा यागाना ते एककर्माण। तेषा भाव ऐककर्म्यं एकफलकत्वमिति। ततश्च षण्णामपि यागाना दर्शपूर्णमासेत्येकशब्दवाच्यत्व तेन च एकेन शब्देन एकेन फलेन सबन्ध इति ज्ञायते। तस्मात् तत्रैव फलम्, न येन केन इति सिद्धान्त।

**शेषवद्वा प्रयोजन प्रतिकर्म विभज्येत। २॥**

पूर्वपक्षी आह। यथा 'गणाय स्नानम्, गणयातु लेपनम्' इत्युक्ते स्नानादि शेष न समुदायेन सनध्यते किन्तु समुदायिभि। एव शेषवत् स्वर्गरूप प्रयोजनमपि पन्तु यागेषु प्रतिकर्म प्रतियाग विभज्येत विभक्तेन भवित स्यात्। तस्मात् न दर्शपूर्णमाससमुदायस्य तन्मेव फलम्। इति पूर्व पक्ष।

**अविधानात्तु नैव स्यात्। ३॥**

पूर्वपक्ष निरस्यति। नैव स्यात् समुदायिना प्रत्येक फल न स्यात्। तथा अविधानात् प्रत्येक फलस्य विधाना भावात्। किन्तु समुदायस्येव फलम्। फलमुद्दिश्य समुदायस्यैव साधनत्वेन विधानात्।

**शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधान भाव स्यात्। ४॥**

शेषवत् इति पूर्वपक्षोक्त दृष्टान्त वैषम्येण परिहरति। शेषस्य स्नानानुलेपनादे परार्थत्वात् विधानात् परार्थेन पुरुषसंस्कारकत्वेन विधानात् प्रतिप्रधानभाव स्यात्। प्रतिपुरुष प्रधानभाव प्रधानत्व स्यात्। दार्शपौर्णमासिकषड्यागेषु तु नैतादृश किञ्चिदिति समुदायस्यैव फलम्। के

* प्रयोजननिष्पत्तिपर्यन्तमभ्यास इत्यर्थनामन घातादीनाम्। ११।१।५।२७

• प्रयोजनलक्षणं अक्षपादोक्तं 'यदधिकृत्य कृतिः प्रवर्तते तत् प्रयोजनम्' (१।१।२४) इति। ऋजु. पृ. ९८.

• ये यत्र क्रियमाणाः प्रयोजनवन्तः ते तत्र कर्तव्याः। अनुपकारकास्तु न कर्तव्याः। भा. ३।२।४७. • प्रयोज्यं गोदोहनं पशोः स्वर्ग्यकामनायामेव। भाट्ट. ४।१।२ वर्णकं २, • प्रयोज्यं दध्यानयनं आमिक्षायाः चातुर्मास्येषु वैश्वदेवपर्वणि। ४।१।९।२२–२४. • प्रयोजने द्रव्यार्जनं पुरुषार्थस्य न तु क्रतोः। भा. ४।१।२।२ वर्णकं १. • प्रयोज्य न एकहायनीनयनं अक्षाभ्यञ्जनाय पदपांसूनां पदहोमस्य या ज्योतिष्टोमे सोमक्रये। भाट्ट. ४।१।१०. • प्रयोज्यं न दध्यानयनं वाजिनस्य चातुर्मास्येषु वैश्वदेवपर्वणि। ४।१।९।२२–२४. • प्रयोज्यं न पुरोडाशकपालं तुषोपवापस्य। ४।१।११।२६. • प्रयोज्यं न लोहितं निरसनस्य शकृत् संप्रैषणस्य पशौ। ४।१।१२. • प्रयोज्यं प्रजापतिव्रतजात पुरुषार्थस्य। ४।१।३।३–६. • प्रयोज्यं वेदपरत्वानुत्थम्, वेदैरुत्तिष्ठत्सरणम्, वेदैः आहार्यपुरोपत्वं च पुरुषार्थस्य। भा. ४।१।३।२ वर्णकं २. • यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य तत् तत्प्रयोज्यं यथा दध्यानयनं आमिक्षाप्रयोज्यम्, प्रयाजादि वा दर्शपूर्णमासप्रयोज्यम्। भाट्ट. ४।१।१. • रागप्रयोज्यं स्वर्गादिफलं न विधिप्रयोज्यम्। वि. ४।१।२ वर्णकं १.

• प्रयोज्यः न पश्वालम्भः लोहितनिरसनस्य शकृत्संप्रैषणस्य वा। ४।१।१२।२७. • प्रयोज्यः न पुरोडाशः स्विष्टकृतः। ४।१।१३।२८–३२. • फलप्रयोज्यः 'नेक्षेतोद्यन्तमादित्यम्' इति पर्युदासः प्रजापतिव्रतेषु। भाट्ट. ४।१।३.

• 'प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः। ण्यन्ता एव प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥' वा. २।१।१।१ पृ. ३७८। सुधा— प्रयोज्यकर्तृकाणां भवनादीनां व्यापाराणां प्रतिपादकाः ये भ्वादयो धातवः तेषां प्रयोज्यानां भवादीनां ये प्रयोजकाः कुलालादयः, तेषां व्यापारेषु ण्यन्ता एव प्रयुज्यन्ते (भावयति, विक्लेदयति इति)। भवनादीनां अन्योत्पादानुकूलत्वाभावेन अव्यापारत्वमाशङ्क्य एकान्तेत्युक्तम्। अन्योत्पादानुकूलत्वाभावेऽपि अनिष्पन्नरूपत्वात् एकान्तेन व्यापारता अस्तीत्याशयः। पृ. ५५८.

• प्रयोज्यत्वं यदुद्देशप्रवृत्तकृतिव्याप्यत्वम्। कृतिव्याप्यत्वं च अनुष्ठाप्यत्वरूपं काम्यादिप्रयाकृतं वाजपेयाधिकरणे कौस्तुभे प्रयोपपादितम्। अतश्च कालादेः कृतिकारकत्वघटिताकृत्वसत्त्वेऽपि प्रयोज्यत्वाभावः। अङ्गत्वाच्च प्रयोज्यत्वस्य भेदः। येन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं यस्य, तत् तत्प्रयोज्यं यथा दध्यानयनप्रयाजादि आमिक्षादर्शपूर्णमासादेः। उद्देश्यता चात्र अनुपादेयपदार्थकत्वाघटिता ग्राह्या। तेन काम्यनिमित्तादेः प्रयोजकत्वाविघातः। यद्यपि विधिरेव सर्वत्र अनुष्ठापकः, प्रवर्तनारूपत्वात्। प्रवर्तनारूपो हि विधिः इष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायं प्रयोज्यत्वमपि विषयस्य आक्षिपति, इति भवति प्रयोजकः, तथापि स यदुद्देशेन प्रयोजयति तस्यापि प्रयोजकत्वव्यवहारः शास्त्रे। भाट्ट. ४।१।१.

• प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञा। ४।१।८।२१. मीको. पृ २०९० 'प्रवृत्तिविचारप्रतिज्ञा' इत्यत्र द्रष्टव्यम्।

• 'प्ररूढकक्षे यष्टव्यं' इति बह्वृचब्राह्मणं भवति। आपश्रौ. ८।५. (इद च वाक्यं ऐतरेयके कौषीतके च नास्ति तेन बह्वृचब्राह्मणान्तराणि सन्तीति ज्ञायते)।

• प्ररोचना (अर्थवादात्) अन्येन कृता न कर्मान्तरम्। वा. १।२।१।७ पृ. ११५. • यदा न स्तुतिपदानि विधिशब्देनैव तदा प्ररोचना, यदा स्तुतिवचनं तदा स्तवनेन। भा. १।२।१।७, प्ररोचनया [illegible] प्रवर्तते, द्वेषात् निवर्तते। १।२।२।१०. (इदं सविस्तरं अर्थवादाधिकरणे भाष्ये वार्तिके च द्रष्टव्यम्)।

• प्ररोचनाविधेः प्रवृत्तिप्रतिबन्धकालस्यादिभङ्गरूपा इतिकर्तव्यता, न स्तुतिः। स्वार्थे तु यथा स्तुतिः आकाङ्क्ष्यते, निःश्रेयसश्रेयःसाधनत्वादेव तु प्रवृत्तिहेतुविच्छापनेन तद्विरोध्यालस्यादिनिराकरणसिद्धेः अनर्थिका स्तुतिः। सु. पृ. ५०.

* प्ररोचनाशब्देन इच्छाविशेषविषयत्वप्रयोजकत्वेन तद्धेतुभूतगुणातिशयवत्त्वलक्षणा प्राशस्त्यस्य लक्षणया व्युत्पत्त्या वा उक्तम् । सु. पृ. ३५.

* प्रलपितमन्त्रः 'अक्षी ते इन्द्र पिङ्गले कुलेरिव' इति । बाल. पृ. ५९.

* प्रलयः । न च प्रलयः ( अशेषः सर्वनाशः ) न संभाव्यते । दृश्यते हि प्रमादालस्यादिभि. पुरुषस्यात्र अलविषयत्वम् । ' न चैवं सति यत् किञ्चित् प्रमाण आपत्स्यते, चिरनैवर्णिकदृष्टसरणोत्पत्त्यानुपपत्ति-कल्प्यत्वात् श्रुत्यनुमानस्य । वा. १।३।१।२ पृ. १६४.

* प्रलयः । ननु प्रलये किं मानमिति चेत्, न । कालकरणान्यवृत्तिः प्रागभाव. कार्यद्रव्यानाधार-कालानधिकरणवृत्तिः, अभावत्वात्, आत्मवृत्त्यन्योन्याभाववत् इत्यनुमानेन, घटः कार्यद्रव्यानधिकरणधर्माधि-करणवृत्तिध्वंसप्रतियोगी, भावकार्यत्वात्, शब्दवत् इत्यनुमानेन च खण्डप्रलयस्य सिद्धिः । घटः अदृष्टासमान-कालीनध्वंसप्रतियोगी, भावकार्यत्वात्, मुक्त्यव्यवहित-प्राक्कालीनज्ञानवत् । बुद्धिः प्रागभावासमानकालीनध्वंस-प्रतियोगिनी, भावकार्यत्वात्, मुक्त्यव्यवहितप्राक्कालीना-दृष्टवत् । सुखं गन्धानाधारसमवृत्तिध्वंसप्रतियोगि, कार्यगुणत्वात्, स्वकाश्रयजलानुभववत् व्यतिरेकेण आकाशवत् । एककालीनाः सर्वे परमाणवः समवायोपादेय-प्रबन्धशून्याः, आरम्भकत्वात्, नष्टावस्थारम्भकपरमाणुवत् । कृत्स्नसंततिः अत्यन्तमुच्छिद्यते, संततित्वात्, प्रदीपसंतति-वत् इत्याचार्योपदर्शितानुमानेन च महाप्रलयस्य च सिद्धेः । एवं च 'नन्दान्तं क्षत्रियकुलं' इत्यादिपौराणि-कव्यवहारोपपत्तिः इत्याहुः ।

अत्र जैमिनीयाः । उक्तानुमानेन 'धाता यथापूर्व-मकल्पयत्' इत्यादिमन्त्रलिङ्गेन अवान्तरप्रलयसिद्धावपि महाप्रलये नास्ति प्रमाणम्, उक्तानुमानानां सोपाधिक-त्वात् । तथाहि, अमूर्तमात्रवृत्त्यभाववत्त्वस्य उपाधित्वात् । उक्तः पक्ष. कार्यद्रव्यानाधारः मूर्तमात्रवृत्त्यभाववत्त्वात्, तन्तुनिष्ठघटप्रागभाववत् इति साध्यविरहाच्च । एवं द्वितीयतृतीययो. अमूर्तमात्रवृत्त्यभाववत्त्वमुपाधिः । एवं महाप्रलयानुमाने उक्ताः परमाणवः समवायोपादेयप्रब-न्धवन्तः, प्रागभाववत्त्वात्, कपालवत् इति सत्प्रतिपक्ष ।

आचार्यानुमानं तु 'धाता यथापूर्वमकल्पयत्' इति श्रुतिविरोधात्, 'अचन्द्रार्कग्रहा भूमिः कदा चित् भविष्यति । अपौरुषा तु पृथिवी कदापि न भवि-ष्यति ॥' इति हरिवंशरूपव्यासस्मृतिविरुद्धत्वात् 'दन्त-चैल तावद् व्याख्यानम्' इतिदृष्टान्तप्रसिद्धदैत्यमाचारि-रूपोपाधिविस्मरणाच्च अनाप्ततार्किकानुमानमेव । अन्यथा नरशिरःकपालं शुचि, प्राण्यङ्गत्वात् शङ्खवत् इत्यनुमान-स्यापि प्रामाण्यापत्तेः । एवमन्येष्वप्यनुमानेषु दूषणानि ऊह्यानि इति दिक् । मणि. पृ. ४६–४८.

* प्रलापः अर्थवादः 'न चैतद् विद्मो ब्राह्मणाः स्मो वयमब्राह्मणा वा' इति । बाल. पृ. ५०.

* प्रलीनशाखावादः । स्मृत्याचारव्यवहाराणां प्रलीनशाखामूलत्वकल्पनाया यस्मै यद्रोचते स तत् प्रमाणीकुर्यात् । वा. १।३।२।१ पृ. १६१, यदि तु प्रलीनशाखामूलत्वं कल्प्येत ( स्मृतीनां ) तत. सर्वासां बुद्धादिस्मृतीनां अपि तद्द्वारं प्रामाण्यं प्रसज्येत । यस्यैव च यदभिप्रेतं स एव तत् प्रलीनशाखागतत्वेन निक्षिप्य प्रमाणीकुर्यात् । ( इद पूर्वपक्षे ) । १।३।१।२ पृ. १६२.

* प्रवचनं प्रकर्षेण वचनं असन्यसाधारणम् । भा. १।१।८।३०. * प्रवचनं ब्राह्मणस्यैव 'प्रब्रूयाद् ब्राह्मणो नेतराविति निश्चयः' इति स्मृतेः । सु. पृ. ११९.

* प्रवणवत् । यथा 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति देशः कर्माङ्गम्, तथा आहवनीयादीनां अत्र देश. । ( इह पूर्वपक्षे ) । भा. ११।१।७।२२.

* प्रवरः यत्र यजमानस्यार्षेयं व्रियते सः । भा. २।१।९।३४.

प्रवरः होतुरेव पूर्वः, अध्वर्योरुत्तरः ॥

होतृप्रवराध्वर्युप्रवरयोः क्रमेण मन्त्रपाठः ब्राह्मणपाठश्च शाखाभेदेन क्वचिद्विपरीतोऽपि दृश्यते । तथापि अध्वर्युप्रवर एव पूर्वः स्यात्, मन्त्रलिङ्गोपोद्बलितब्राह्मणपाठस्य मन्त्रपाठात् बलवत्त्वात् । 'ब्रह्मण्वद् च वक्षद्' इति मन्त्रे वदेर्लिटि लिपि रूपेणाऽऽवाहन कुर्यादित्यावाहनस्या-भिहितत्वेन गमनात् । आवाहनोत्तरस्य मन्त्रस्य वाचि-

दर्शयितव्यत्तेः । इति प्राप्ते, मन्त्रेण होता देवहोतार प्रति 'आह' इति प्रैषमात्रे कृतेऽपि तदाख्ये एव देवाहोता-हूताः इत्यत्र मानाभावेन अभिहृतदेवआवाहनस्याधुनाऽप्यसिद्धत्वाभिप्रायेण मन्त्रलिङ्गोपपत्तेः मन्त्रपाठानुसारेण होतृप्रवर एव पूर्वः । संकर्ष. ४।२।६.

● प्रवरा. । आर्षेयस्यैव कर्माधिकारो नान्यस्य । भा. ६।१।११।४१ । क्रियासंपादनसमर्थोऽधिक्रियते । चतुरार्षेयस्य नित्यसंपादने अस्ति सामर्थ्यम् । मनुवत्पक्षे तु यस्याप्येको यस्यापि पञ्च तस्यापि सकृदेवोच्चार्यं मनुवदिति । वा. ● चतुरार्षेयेण पञ्चार्षेयेणापि च कर्मणि त्रय एव प्रवरा उच्चार्याः । भा. ६।२।११।४१.
● प्रवरेषु अध्वर्युवशात् होतुरपि आनुपूर्वीनियमः । संकर्ष. ३।४।४. मीको. पृ. १००५ 'आर्षेयवरणे अध्वर्युवशात् होतुरपि' इत्यत्र द्रष्टव्यम् ।

● प्रवरनामधेययोर्न मन्त्रत्वम् । यत्र प्रवर एवं पठन्ति 'आङ्गिरस बार्हस्पत्य भारद्वाज' इति । नामधेय च 'असौ देवदत्तः अमुष्य पुत्रः अमुष्य पौत्रः अमुष्य नप्ता, अमुष्याः पुत्रः अमुष्याः पौत्रः अमुष्या नप्ता' इति । भा. २।१।९।३४.

● प्रवरप्रवरणे पञ्चप्रवरा अपि त्रीनेव प्रवरानुच्चारयेयुः, न न्यून नाप्यधिकान् । वि. ६।१।११. .

● प्रवरवत् । यथा याज्यायामपनीयमानायां प्रवरो नापनीयते । भा. १।५।१८।४४.

● प्रवरवरणे द्विगोत्राणाम् 'एकतो द्वौ अन्यत एक.' इति नयः । संकर्ष. ३।४।८. मीको. पृ. २२१९ 'द्विगोत्राणां प्रवरवरणे०' इत्यत्र द्रष्टव्यम् ।

● प्रवर्ग्यः. अग्निष्टोमस्य प्रथमे प्रयोगे निषिद्धः, न [illegible] ज्योतिष्टोमस्य प्रयोगमात्रे । ३।३।१२।३२-३३. ● प्रवर्ग्यः अतिरात्रे प्रथमाहारे नित्यमेव न कर्तव्यः । विकल्पान्तरेषु नित्यमेव कर्तव्यः । अग्निष्टोमे प्रथमाहारे विकल्प. । वा. ३।३।१२।३३ पृ. ८८०. ● प्रवर्ग्यः कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरणे अधीतः । सु. पृ. १३२२, ● प्रवर्ग्य. प्रथमप्रयोगादुत्कृष्टः सर्वत्रान्यत्र प्रवर्तते । पृ. ३९२. ● प्रवर्ग्यः यस्मिन् कर्मणि प्रवृज्यते प्रवर्ते सः । प्रवृजनं [illegible] तप्ते घृते पयःप्रक्षेपः । भा. ३।३।१२।३२ टिप्पणी. ● प्रवर्ग्यं प्रकृत्य 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति निषेधः । स चानूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे एव । वि. ३।३।१७ । अग्निष्टोमप्रथमप्रयोगे अनूचानस्य प्रवर्ग्यस्य नित्य प्रयोगः, अन्येषां नित्यमप्रयोगः । अतिरात्रप्रथमाहारे तु सर्वेषामेवाप्रयोगः, प्रतिप्रसवाभावात् । शा. ३।३।१२ । अननूचानस्याश्रोत्रियस्य कर्मण्यनधिकारात् प्रथमअनूचानपरः अनूचानशब्दः इति वार्तिके । सोम. ● प्रवर्ग्यस्य अग्निष्टोमे प्रथमाहारे विकल्पः । तत्रापि 'काम यो ऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात्' इति वचनं तदा प्रतिप्रसववचनस्य विकल्पकारिणः कर्तृविशेषमात्रिस्वात्तद्विषय एव विकल्पः । नान्येषां नियमेवाभावः । वा. ३।३।१२।३३, ● प्रवर्ग्यस्य अतिरात्रप्रथमाहारे नित्य प्रतिषेधः, अग्निष्टोमे तु विहितप्रतिषिद्धत्वात् विकल्प इति के चित् । ३।३।१२।३३ पृ. ८७८. ● प्रवर्ग्यस्यापि उपसद्वत् पूर्वाह्णापराह्णभेदेन कर्तव्यस्यापि 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ति' इति एकप्रयोगत्वात्पत्तिः । सु. पृ. ७८७. ● प्रवर्ग्यस्य कौषीतकिब्राह्मणे ज्योतिष्टोमप्रकरण एव स्वल्पमस्वरस्य उत्पत्तिः ( कौषा. ८।३ ) । भा. ३।३। १२।३२, ● प्रवर्ग्यस्य प्रतिषेधः अतिरात्रस्यास्य ज्योतिष्टोमस्यैव प्रथमाहारे, अग्निष्टोमे तु विधिः इत्यपरे । सोऽयं सामान्येन उभयोः सत्ययोः प्रतिषेधः, अग्निष्टोमे तु विशेषविधिः स बलीयान् इति । एतदपि न युक्तम् । ३।३।१२।३३. ● प्रवर्ग्यस्य साङ्गस्य उपेद्भवम्, 'उपैः प्रवर्ग्येण' इति करणविभक्तिनिर्देशात् । टुप्. ९।११ ६।१५. ● प्रवर्ग्ये 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति प्रथमयज्ञग्रहणेन ज्योतिष्टोमस्य प्रथमप्रयोगमात्रे प्रस्तुते, न सर्वसंस्थ. सर्वप्रयोगतत्स्य गृह्यते । भा. ३।३।१२। ३२-३३. ● प्रवर्ग्ये रौहिणौ नाम पुरोडाशौ यवमयौ वृथ्वी कार्यौ, पुरोडाशशब्दस्य जातिवाचकत्वात् । सोम. १।४।८ टिप्पणी.

● प्रवर्ग्याङ्गमहावीरभेदने 'त्वं भिन्नमभिमृशे- रात्त्वे चिदभिभिषः' इति सामवेदविहितस्य उपेद्रुं ज्योतिष्टोमे । वा ३।३।२।९ पृ. ८१२.

● प्रवर्ग्याधिकरणम् । ३।३।१२।२२-२३. 'प्रवर्ग्यन्याय' इत्यत्र द्रष्टव्यम् ।

● प्रवर्ग्याधिकरणदूषणोद्धार । प्रवर्ग्याधिकरणे (३।३।१२।२२-२३) वार्तिककृता मिश्रैश्च सिद्धान्त उक्त 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति प्रथमप्रयोगाङ्गभूतो ऽयं निषेध. । तस्य च प्रतिप्रसवोऽयम् 'अग्निष्टोमे प्रवृणक्ति' इति । तच्चैतत् न द्वितीयादिप्रयोगविषयम्, तत्र 'यत् प्रवर्ग्यं प्रवृञ्जन्ति' इति प्रवर्ग्योत्पत्तिविधिनैव अनुष्ठान सिद्धे । अत प्रथमप्रयोगे निषिद्धस्य प्रतिप्रसवार्थमिदम्, अतस्तत्र विहितप्रतिषिद्धत्वात् विकल्प । अतिरात्रप्रथमाहारे तु नियमकरणमेव वैकल्पिकातिरात्रप्रथमाहारविधानेन तत्र निषेधातिदेशात् अग्निष्टोमप्रसक्त्यभावेन च प्रतिप्रसवानतिदेशादिति । तत्र न्यायसुधाकृता दूषणद्वय मुक्तम् । प्रथमे 'प्रतिषेध प्रदेशोऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्विकल्प स्यात्' (१०।८।१।१) इत्यनोक्तेन 'दुर्बलोऽपि विधि तदर्थानामलाभेन प्रतिषेधेन तुल्यबलो भवति' इति न्यायेन 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यस्य प्रतिषेधत्व वैधप्रवर्ग्ये प्रतिषेधवचनादेव विकल्पसिद्ध अग्निष्टोमवाक्यानर्थक्य इत्येको दोष । 'न प्रथमयज्ञे' इत्यस्य प्रतिषेधत्वे तु अतिदिष्टतद्वचनादेव अग्निष्टोमप्रथमप्रयोगे इव अतिरात्रप्रथमाहारेऽपि विकल्प एवापद्येत, न नियमकरण सिध्येत् इति द्वितीयो दोष । स्वय तु (सुधाकृता) समाहितम्, 'न प्रथमयज्ञे' इति न प्रतिषेध, किन्तु पर्युदास 'यत् प्रवर्ग्यं प्रवृञ्जन्ति' इति प्रवर्ग्योत्पत्तिवाक्यशेष, पर्युदस्तप्रतिप्रसवश्च अग्निष्टोमवाक्यम् ।

ननु अकर्तव्यत्वेन उक्तस्य कर्तव्यत्वेनोक्ते प्रतिप्रसवत्वात् पर्युदासस्य च अकर्तव्यत्वोक्त्यर्थत्वाभावस्य 'विधीनामेकदेश स्यात्' इति सूत्रेण (१०।८।१।४ सर्वैकदेश) अविकल्पाय दर्शने सिद्धान्तयिष्यमाणत्वात् पर्युदस्तप्रतिप्रसवो न युक्त । अत एव अग्निष्टोमप्रथमप्रयोगे विकल्पोऽपि अयुक्त, कर्तव्याकर्तव्यत्वयोरदर्शनेन पर्युदासेन सामान्यविधे द्वितीयादिप्रयोगमात्रविषयत्वेनोपसंहारात् । प्रथमप्रयोगे तु विध्यभावादेव अननुष्ठाने प्राप्ते अग्निष्टोमविधिना तत्राप्यनुष्ठानमात्र सिध्येत् । इति चेत्, सत्यम्, अन्यत्र पर्युदासो नैव अकर्तव्यत्वोक्त्यर्थ, तथापि अवश्य तदर्थताऽभ्युपेया । अन्यथा प्रथमप्रयोगे नित्यानुष्ठानमात्रस्य पर्युदासाग्निष्टोमवाक्यद्वयसाध्यस्य अनारभ्यवादेनैव सिद्धे तद्द्वयानर्थक्य स्यात् । 'नानुयाजेषु' इतिवत् नित्याननुष्ठानेन पर्युदासमात्रत्वे तु पुनर्विधि स्वै स्यात् । अतोऽत्र पर्युदासस्य अकर्तव्यत्वोक्त्यर्थत्वात् पुनर्विधिना विकल्प, तस्य च प्रतिप्रसवत्व युक्तमिति । योऽपि निषेधत्वे अतिरात्रे विकल्पापत्तिरुक्ता, साऽपि न, प्रकृतौ सामान्यवाक्यशेषभूतस्य पर्युदासस्य अतिरात्रे अतिदेशात् प्राप्ते नियमकरणात् विकल्पार्थस्यैव प्रतिप्रसवस्य अनतिदेशादिति । तदेतदपि सोमेश्वरमतमयुक्तम् । यत्तावदिह पर्युदासोऽपि अकर्तव्यत्वोक्त्यर्थ इति क्वापि अन्यत्र अदृष्टमश्रुत च कल्पितम्, तत्, एव हि सत्यापि अतिरात्रप्रथमाहारेऽपि विकल्प अपरिहार्य ।

यत्तु अत्रैव विकल्पार्थस्य प्रतिप्रसवस्य अनतिदेशात् नित्याकरणमिति, तदपि न । नहि विकल्प प्रतिप्रसवस्य वाक्यार्थे एव किन्तु पर्युदासस्य अकर्तव्यत्वतात्पर्यनिर्णय द्वारा प्रयोजनम्, ततश्च तात्पर्यग्राहकस्य अनतिदेशेऽपि तेनाकर्तव्यत्वे गृहीततात्पर्यकतया निर्णीतार्थस्यैव पर्युदासस्य अतिदेशात्, एकस्य च तस्य प्रकृतौ अकर्तव्यत्वे तात्पर्यम्, विकृतौ तु न इति तात्पर्यविरुद्धानेकार्थत्वायोगात्, विकृतावपि अकर्तव्यत्वोक्त्यर्थत्वात् अतिरात्रेऽपि विकल्पस्तथा तथापि दुष्परिहर । निर्णीतं चैतन्नवमे एकत्वाऽधिकरणे (९।३।११।३०-३२) यद्युत 'प्रकृतौ अन्यार्थत्वेन निर्णीतस्य वाक्यस्य विकृतौ अतिदेशो अन्यार्थपरता न न्याय्या' इति (शा आधिक्योऽनुवाद)। तेन पर्युदासस्य अकर्तव्यत्वोक्त्यर्थत्वे अतिरात्रप्रथमाहारेऽपि विकल्पापत्तिरपरिहार्या, इतरपर्युदासवत् अकर्तव्यत्वोक्त्यर्थत्वाभावे अग्निष्टोमप्रथमप्रयोगे नित्यानुष्ठानापत्ते विकल्पासिद्धि, इति उभयत पाशा रज्जु, अग्निष्टोमवाक्यानर्थक्यापत्तिश्च स्यादिति ।

ननु एव महतोमेश्वरमतदूषणेऽपि वार्तिककृन्मते तदुक्त दूषणद्वय कथमुद्धर्तव्य इति चेत् । अत्र ब्रूम । 'न प्रथमयज्ञे' इति प्रतिषेध एव, तस्य च वैधक्रियाविषयत्वात् विकल्प सिद्ध एव, न तथो अग्निष्टोमवाक्यस्य ।

एवमपि तु अग्निष्टोमवाक्यानर्थक्यम्, तादवस्थ्यं विकल्प. अतिरात्रे प्रसज्येत इति भट्टसोमेश्वरोक्तं दूषणद्वयं एवं परिहर्तव्यम्, अग्निष्टोमवाक्यार्थे ( वाक्य ) परिसंख्यायाम्, अग्निष्टोमातिरात्रप्रथमाहारयोः प्रसक्तो विकल्पः अग्निष्टोमे एव, न अतिरात्रप्रथमाहारे इति। प्रतिप्रसवोऽपि च तदा अग्निष्टोमवाक्यं भजेत, अवर्जं परत्वेन पुरुषस्य कर्तव्यत्वरोधात्। न च प्रतिप्रसवत्वं परिसंख्यात्वं च विरुद्धम्। यद्वा परिसंख्यैव प्रतिप्रसवशब्देन पूर्वोक्तसादृश्यात् गौण्या उच्यते।

ननु विकल्पपरिसंख्या अतिरात्रे अननुष्ठानमात्रेणापि निर्वहति अनुष्ठानमात्रेणापि च, इति अननुष्ठानमेव न सिध्येत् इति चेत्, मैवम्। नहि अत्र विकल्पपरिसंख्या शाब्दी, किन्तु 'अग्निष्टोमे एव प्रवृणक्ति, नातिरात्रे' इति प्रवर्ग्यानुष्ठानपरिसंख्यारूपा आर्थी, इति अतिरात्रे नित्याननुष्ठानसिद्धिः। एवं विकल्पपरिसंख्यारीतिः क्वापि अदृष्टा इति यदि ब्रूयात्, प्रतिवादेनं ( सोमेश्वर ) अकर्तव्यलोकस्यपर्यनुयोगानुसारिता क्व दृष्टा इति। अथ असौ अनेन कल्प्यते, तत. पूर्वोऽपि अनेन कल्प्यते, इति तुल्यौ पर्यनुयोगपरिहारौ।

ननु अग्निष्टोमे एव प्रवृणक्ति नान्यत्र इति परिसंख्याया अतिरात्रद्वितीयादिप्रयोगेष्वपि विकृत्यन्तरे च सर्वत्रैव प्रवर्ग्यो न स्यात्, तत्र वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायां सत्यां अतिरात्रप्रथमाहारस्यस्यैव प्रवर्ग्यस्य पाक्षिकत्वात् परिसंख्या स्यात्, ननु वैकल्पिकप्रवर्ग्यमात्रपरिसंख्यायामेव प्रमाणमस्ति इति चेत्। उच्यते। लाघवात् तद्विषयता लभ्यते। अग्निष्टोमे एव प्रवृणक्ति नान्यत्र इति हि परिसंख्यया या अन्यत्र प्रवर्ग्यनिवृत्तिर्बोध्यमाना यत्र अतिरात्रप्रथमाहारे विकल्पातिदेशात् पक्षे प्रवर्ग्यनिवृत्तिः प्रसक्ता तत्रैव पक्षान्तरेऽपि सा चेत् बोध्यते लाघवं भवति। यत्र तु अतिरात्रे द्वितीयादिप्रयोगे विकृत्यन्तरे च प्रवर्ग्यनिवृत्तिः पक्षेऽपि न प्रसक्ता, तत्र चेत् परिसंख्यया सा बोध्यते, तत्र अत्यन्तं गौरवं स्यात्। यथा नियमविधिः अवघाते. अप्राप्तिपक्षमेव पूरयति, प्राप्तिपक्षे तु उदास्ते, एवमियमपि परिसंख्या यत्र प्रवर्ग्यनिवृत्तेः अप्राप्तिपक्ष. तमेव पूरयति, तत्प्राप्तिपक्षे तु उदास्ते। यथा च व्रीहिनियमः यत्र आग्नेयादौ व्रीहयः पक्षेऽप्राप्ताः तमेव तदप्राप्तिपक्षं पूरयन् प्रवर्तते, नोपांशुयाजादौ, तदनुत्पत्तिविशिष्टस्य सामान्यविहितस्यापि प्रोक्षस्य प्राप्तेः पक्षेऽपि व्रीहीणामप्राप्तेः। तथाभाष्य- विशेषप्रवृत्तस्यापि वाक्यस्य विशेषपरता दशमे ( १०।२।१२-१७ ) उक्ता, यथा- चातुर्मास्ये पशौ 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' इति श्रुतं उत्तरे चोदकाघारे एव, अनेन 'इन्द्र ऊर्ध्वोऽध्वरः' इति प्राकृतमन्त्रान्यनियमादृष्टकल्पनाविरोधात्। पूर्वाघारे तु तत्कल्पनाऽऽपत्तेर्गौरवादिति।

ननु एवमपि एषा प्रवर्ग्यपरिसंख्या, सा च त्रैदोष्यपरिहारणभावात् न क्वचिदपि अङ्गीकृता, इति चेन्न। अस्या अपि वस्तुतः अप्राप्तपरिसंख्यारूपत्वात्। यथा हि 'इमामगृभ्णन् रशनामृतस्य' इत्युदाहरणे यदि इयं न स्यात्, ततो लिङ्गात् विनियोगकल्प्यवाक्यकल्पनया गर्दभरशनाऽऽदानेऽपि मन्त्रः प्राप्नुयात्, अस्यां तु सत्यां लिङ्गकल्प्यवाक्यस्यानेन प्रतिषिध्यते, एवमत्रापि यदि 'अग्निष्टोमे प्रवृणक्ति' इति परिसंख्या न स्यात्, ततः अतिरात्रप्रथमाहारे 'यत् प्रवर्ग्यं प्रवृञ्ज्यात्, न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यनयोः अविशेषकल्पनात् विकल्पः प्राप्नुयात्, अस्यां तु सत्यां अविशेषप्रतिलम्भात् नातिरात्रप्रथमाहारे विकल्पो भवति। इति सर्वं निरवद्यम्।

'परीपाकाच्छाप्ते गुरुवितमहो वार्तिककृता, तदन्या सोमेश्वर इह बहु सान्त्वयपति। तदुद्धृत्याहं त्वा प्रकृतिमनयं वार्तिकमत, तदन्यत्ता पूज्यं न, विबुधजनैर्दृपविशुगैः ॥' इति प्रवर्ग्याधिकरणदूषणोद्धारः। याल.

पृ ९८–१०१.

ज्योतिष्टोमस्य प्रथमे प्रयोगे प्रवर्ग्यस्य निषेध., द्वितीयादिप्रयोगे तु न निषेध इति भाष्यसिद्धान्तः। अनूचानश्रोत्रियस्य अग्निष्टोमप्रथमप्रयोगे प्रवर्ग्यस्य विकल्पः, इतरयजमानस्य अग्निष्टोमप्रथमप्रयोगे नित्यमेवाभावः। अतिरात्रप्रथमाहारे प्रथमप्रयोगे नित्य अकरणम्। विकृत्यन्तरेषु तु प्रथमप्रयोग एव नास्ति इति तेषु न निषेध.। 'न प्रथमयज्ञे' इति च न पर्युदास. किन्तु प्रतिषेध एव। इति वार्तिककृत्सिद्धान्त.। अग्निष्टोम-

पादितम् ( दृष्टान्तत्वेन अग्निष्टोमवाक्यशेषत्वस्य अनुपपन्नत्वं त्वयैवोक्तम् ) । अतिरात्रवाक्येऽपि यदि तदीयकृत्यभावपूरणवेलाया एतदुच्येत, ततः दोषो भवेत् । न तु तथोक्तम्, तस्याः अश्रमानविधानत्वात्, अत्रान्तरप्रकरणे च प्रतिषेधाश्रवणात् । न हि अनेकज्योतिष्टोमिकवाक्यान्तरव्यवहितातिरात्रप्रकृतिवच्छब्दस्य एष शेषः अवकल्पते । तस्मात् ' न तौ पशौ ' इतिवत् प्रतिषेधः एवाय विधायते । ननु प्रतिषेधोऽपि सन् प्रकृतिविषय एव प्राप्नोति । प्राप्नुयात्, यदि विकृतावपि नोपपद्येत । स तु ( प्रतिषेधः ) प्राप्तिमात्रापेक्षित्वात् उपदेशमविवेच्य वा अनादृत्य उभयत्रापि प्रवर्तते । ( प्रकृतिमात्रविषयत्वमनुजानाति- ) शक्यं तु इह ( अपि ) वक्तुं ' प्रकृतौ वा द्विरुक्तत्वात्' इति । ननु च तुल्यार्थत्वे एतदेव युक्तम् । अस्ति चेह अर्थभेदः, प्रकृतौ षोडशिग्रहणात् अतिरात्रे च षोडशग्राहस्य नित्यप्रतिषेधात् । न एतत् ( द्विरुक्तत्वापत्तिः ) अस्ति । वक्ष्यति हि एतत् ' प्रतिषेधः प्रदेशे, अनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पः स्यात्' ( १०।८।१।१ ) इति । ( सूत्रार्थमुपपादयति- ) यस्य शास्त्राद्‌ते प्राप्ति नास्ति, तस्य प्राप्तिमनभ्यनुज्ञाय प्रतिषेधासंभवात् अवश्यं प्रतिषेधेनैव तद्विषयोऽपि विधिः अङ्गीकर्तव्यः । स चेत् अङ्गीकृतः, शास्त्रत्वाविशेषात् तुल्यबलत्व ( विधिप्रतिषेधयोः ) । अत सर्वथा अतिरात्रे विकल्पेन भवितव्यम् । तस्मात् द्विरुक्तत्वात् उपदेशातिदेशयोश्च प्राप्तिकालवैषम्यात् प्रकृत्यर्थतैव वर इति । ननु एवं सति ' अग्निष्टोमे प्रवृणक्ति ' इत्यनेनैव प्रकृतिविधेः सिद्धत्वात् अनारभ्यवादः अनर्थकः प्राप्नोति । नैष दोषः । तेन उत्पत्तिः, अनेन विनियोगः इत्येवं व्यापारभेदात् । अथवा अनारभ्यवादः अग्निष्टोमव्यतिरिक्तविषयो भविष्यति । ननु अग्निष्टोमवाक्येन उपसंह्रियते । न शक्यमेतत् उपसंहर्तुम् । तथाम विशेषवचनेन उपसंह्रियते, यत् नतुर्थयोगात असमर्थं कथञ्चित् परोक्षवृत्त्या संयुज्यते, यथा साद्यस्क्रम् । अथ तु साक्षात्त्वसम्बन्धसामर्थ्यात् नोपसंहारमर्हति । अतश्च विकृत्यर्थो भविष्यति तथा सति च ' न प्रथमयज्ञे ' इत्यनारभ्यवादशेषः उपपद्यते इति अतिरात्रप्रयमाहारे नित्यमप्रयोग अग्निष्टोमे च वैकल्पिकसम्बन्धात् नित्यं प्रयोगः । नहि तद्वाक्यशेषोऽपि अय भवतीत्युक्तम् । ( एकदेशी अनारभ्यवादस्य विकृत्यर्थत्वं निरस्यति- ) एतावत्तु इह अवधारयितुं शक्यम्, नायमनारभ्यवाद प्रकृतेरन्यत्र गच्छति । यदि गच्छेत्, ततः इषिषुवन्तानपि गच्छेत् । न च गन्तुमर्हति, ' पुरस्तादुपसदाम् ' इति स्थाननियमस्य तत्रानुपपत्तेः । अतो यत्र उपसदः, तत्र गच्छति । तत्रश्च प्राप्तिकालवैषम्यात् प्रकृतौ तावत् ता ( उपसदः ) सन्ति, इति अन्तरेणापि वचनं गच्छेत्, किमुत यदा विस्पष्टमेव वचनम् । स्फुटसामान्यसम्बन्धस्यापि च एवमादेः उपसंहार इति व्याख्यातं चतुर्थाधिकरणे ( ३।१।१५ इति तु टिप्पणी युक्तम् ) तस्मात् उत्पत्तिविनियोगाभ्यामेव अपुनरुक्तत्वम् । एवं सति येषा प्रकरणे एव प्रवर्ग्यपाठ , न सह संगतार्थता भविष्यति । ( एकदेशमतं दूषयति- ) यदि तर्हि द्वयोरपि एकवाक्यत्वेन ' अग्निष्टोमे प्रवृणक्ति ' इत्यसमर्थो नियमः , तत ' न प्रथमयज्ञे ' इत्येतस्य अप्रथमयज्ञे अग्निष्टोमे इत्येवं प्रवर्तमानस्य न कश्चित् विरोध इति पर्युदासात् नित्यमेव अकरणेन भवितव्यम् ।

अग्निष्टोमवाक्य विकल्पसिद्ध्यै वर्णयितुमाह- ( अतः एवं वर्णनीयम् । अनारभ्यवादस्य प्रकृत्यर्थताया स्थितायां ' अग्निष्टोमे प्रवृणक्ति ' इत्येतस्य अनन्यप्रयोजनत्वात् प्रतिषिद्धप्रतिप्रसवार्थता गम्यते । ननु नैवायं प्रतिषेध इत्युक्तम् । अग्निष्टोमयुक्तवाक्यार्थत्वाय प्रतिषेधः इति ब्रूमः । नहि अनेन सह पर्युदासः अवकल्पते इति दर्शितम् । न च अनारभ्यवादः अनग्निष्टोमार्थः , यतः तद्विषयः पर्युदास अवकल्पते । तेन द्वयोरपि ( पर्युदासपक्षे अग्निष्टोमवाक्ययोः ) अग्निष्टोमविषयत्वम् । अतश्च यद्यपि अयं पर्युदासः , तथापि उभयोः सामर्थ्यात् विकल्पेनैव भवितव्यम् । कुतः ? ' नित्यं हि क्रियमाणेऽस्मिन् पर्युदासो वृथा भवेत् । नित्यमक्रियमाणे वा पुनः विधिरनर्थकः ॥ ' ततश्च यस्माद्विकल्पात् विभ्यद्भिः पर्युदास आश्रीयते, स तस्मिन् सत्यपि आगतः , इति वर शब्दस्वरसम्यः प्रतिषेधः [illegible] आश्रितः । तेन प्रयमाहारे अग्निष्टोमे विकल्पः । तथापि यदा येषा

चित् ईदृशं वचनं ' कामं तु योऽनूचानः श्रोत्रियः स्यात्, तस्य प्रवृञ्ज्यात् ' इति, तदा प्रतिप्रसववचनस्य विकल्पकारित्वे कर्तृविशेषणाभिधानात् तद्विषयः एव विकल्पः, अन्येषां नियमेनाभावः । कथं पुनः अश्रोत्रियस्य अन्येषां नियमेनाभावः । कथं पुनः अश्रोत्रियस्य धर्मेणि प्रवृत्तिः, येन तत् विशेषणं नेन अपृक्ते ? सर्वं प्राप्तस्य पुनर्वचनं तारतम्यमात्रफलं अनर्थकं इति सामर्थ्यात् प्रकर्षगतिर्विधीयते । यथा ' अभिरूपाय कन्या देया ' इत्यत्र अभिरूपतराय इति गम्यते । अनूचानग्रहणं तु ब्राह्मणस्य अनुश्रवणागमनात् श्रोत्रियस्यानिवृत्तयें भविष्यति ।

तदेतत् अतिरात्रेऽपि एवमेव प्राप्नोति । तत्र ' न प्रथमयज्ञे ' इति प्रतिषेधात् अनग्निष्टोमत्वेन च प्रतिप्रसवाभावात् नियमेन न वर्ग्यः । विकृत्यन्तरेषु प्रथमप्रयोगानुपपत्तेः नियमेन करणम् । ननु तत्रापि ' न प्रथमयज्ञे ' इत्यनिर्देशात् अग्निष्टोमसंस्थायाश्च प्रतिप्रसवनिमित्तस्य अभावात् प्रथमप्रयोगेषु अभाव एव प्राप्नोति । नैतदेवम् । प्रथमशब्दस्य अविशेषितस्य ज्योतिष्टोमप्रथमप्रयोगविषय एव नेयं प्रतिषेध इति सिद्धम् ।

शा— ' वाक्यात् प्रकरणाद्वायं ( प्रतिषेधः ) क्रत्वोरङ्गं, तदुच्यते । वाक्यादेव प्रयोगाङ्गं प्रयोगः प्रथमो यतः ( मतः ) ॥ ' अग्निष्टोमप्रथमप्रयोगे अनूचानस्य नित्यं प्रयोगः, अन्येषां नित्य अप्रयोगः । अतिरात्रप्रथमाहारे तु सर्वेषामेव अप्रयोग ।

सोम— भवतु पूर्वत्र प्रकरणवाक्ययोर्विसंवादात् वाक्येन प्रकरणबाध. । इह तु विसंवादाभावात् न प्रकरणं बाध्यं इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु— क्रत्वासुक्त लक्षणया प्राथम्ययुक्त न प्रथमयज्ञे इत्येतत् निषेधनं प्रकरणात् क्रतोः स्यात् इति ।

वि— ' न प्रवृञ्ज्यादाद्यक्ते क्रतौ सोऽनुष्ठितायुत । प्रतिषेध., क्रतौ युक्त उत्त तस्याद्यक्तता ॥ , प्रकरणत्युपलक्ष्यः प्रागिति वाक्यात् क्रतौ विधेः । आद्यप्रयोगे प्राथम्यविशेषः कश्चिदेव स. ॥ ' क्वचित् अनूचानातिरिक्तकर्तृके अग्निष्टोमप्रथमप्रयोगे । १७.

भाट्ट— अनारभ्याधीतः प्रवर्ग्यः ' नवनर्ग्यं प्रवृणक्ति ' इति श्रुतः । तत्र च ' पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति ' इति ज्योतिष्टोमाङ्गत्वेन विनियोगः, अव्यभिचरितक्रतुसंबन्धपदार्थत्वन्यायेन तदुपस्थितेः । न च उपसदसंबन्धकृताद्दूरत्वन्यायेन तदुपस्थितेः । न च उपसत्वस्य पुरस्तादुपसदामेव किं न स्यादिति वाच्यम् । उपसत्वस्य पुरस्तात्त्वस्य अन्निष्टोमत्वेन स्वार्थोपस्थापकस्य उद्देश्यसमर्पकत्वाभावात् । उपस्थितत्वात् तद्वाचकपदान्तरकल्पनया उद्देश्यमावात् । उपस्थितत्वात् ज्योतिष्टोमोपस्थितेत्वाङ्गीकारे तु उपसदां पुरस्तात्स्थानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः । कौपीतकिब्राह्मणे प्रवर्ग्ये एव प्रवर्ग्यप्रानाम ।

तत्र च ' न प्रथमयज्ञे प्रवृञ्ज्यात् ' इति श्रुतम् । प्रथमयज्ञपदेन सर्वसंस्थः सर्वांशयश्च ज्योतिष्टोमोऽभिधीयते, उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायाम्, प्रथमयज्ञशब्दो ज्योतिष्टोमवाचकः ' एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः ' इति सामानाधिकरण्यात्, तस्य प्रथमप्रयुज्यमानत्वेन प्रवृत्तिनिमित्तत्वाच्च । यद्यपि च अग्निष्टोमोत्तरकालसंस्थाना अन्यपदेनाभिधानात् तासु ज्योतिष्टोमोत्तरकालसंस्थाना सर्वसंस्थाकज्योतिष्टोमस्य प्रथम प्रयुज्यमानत्वविधानात्र सर्वसंस्थाकज्योतिष्टोमस्य प्रथम प्रयुज्यमानत्वम्, तथापि ज्योतिष्टोमत्वसामानाधिकरण्येन तावत् तदस्तीति प्रवृत्तिनिमित्ताविघात. । अतो वाक्यात् प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैव अयं प्रतिषेधः पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति, अन्यथा विकल्पापत्तेः । यत्तु ' अग्निष्टोमे प्रवृणक्ति ' इति वचनं तत् पर्युदासप्रतिप्रसवार्थम् । तदपि च ' कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् ' इत्यनेन उपसंह्रियते । तेन अनूचानस्य श्रोत्रियस्य अग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणम्, अन्यज्योतिष्टोमे नित्यमकरणम्, विकृतिषु च नित्य करणम् । इति प्राप्ते, प्रत्येकवाक्यस्यैव अर्थबोधोपपत्तौ अतिरिक्तशक्तिकल्पनाया प्रमाणाभावात्, प्रथमशब्दस्य च अप्रकृतपर्यवसायित्वात् आद्यप्रयोगपरत्वावगतेः, यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वम्, प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वा अङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स च अग्निष्टोमसंस्थाकज्योतिष्टोमस्य, पात्रिमिकन्यायात् । ' प्रथमं यजमानोऽग्निष्टोमेन यजेत ' इति वचनाच्च नियमसत्त्वाच्च च । अतः

प्रथमतापि अनेन वचनेन प्रवर्ग्यस्य प्रतिषेध पर्युदासो वा । न तु विकृत्यन्तरे, तत्र उपदेशातिदेशाभ्यां तत्प्राप्तेः । न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वात् विकृतावपि तद्वद्द्वितीयादिप्रयोगापेक्षया प्रयोगवृत्तिप्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यम् । प्राथम्यस्य निरूपकापेक्षाया द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पनात् । 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात् । अत एव प्रथमप्रयोगविषयोऽपि ज्योतिष्टोम एव बोध्य । तथा च प्रथमयज्ञशब्दो वाक्यशेषात् वैदिकप्रयोगाख्य निरूढलक्षणया सोमान्तरनिरूपितप्राथम्यवत् प्रयोगविषय ज्योतिष्टोममेवाभिधत्ते । अन्यथा स्वस्वद्वितीयादिप्रयोग निरूपितप्राथम्यवत्प्रयोगविषयकमात्राभिधाने 'आदित्या-प्रय इष्टप्रथमयज्ञा गृहपतिसप्तदशा सत्रमासीरन्' इत्यादौ उक्ते पवमानोत्तरकालापत्ते । अत एव उक्त द्विविधज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यप्रतिषेध ।

वस्तुतस्तु नायं प्रतिषेध, तथात्वे 'न तौ पशौ करोति' इतिवत् अतिरात्रप्रथमाहारेऽपि विकल्पापत्ते । न च क्रियायाः स्वरूपेण उद्देश्यसम्बन्धित्वेन वा निषेधे एव विकल्पो यथोक्तस्थले, यत्र तु कारकनिषेध यथा 'रात्रौ श्राद्धं न कुर्वीत' इत्यादौ, तत्र निषेधस्य कारक मात्रविषयत्वेन क्रियानिषेधाभावात् क्रियाविषयविधि विकल्पापादकत्वानुपपत्ति । प्रकृते च प्रथमयज्ञ शब्दस्य नोद्देश्यपरत्वम्, अपि तु 'मन्द्रं प्रातःसवने' इतिवत् अधिकरणकारकपरत्वम्, अतश्च न विकल्पा पत्तिरिति केषांचिदुक्तं युक्तमिति वाच्यम् । कारक स्यापि प्रयोगाधिकरणत्वस्य विधित प्राप्तौ न्याय्यतोक्त्वेन प्रथमप्रयोगाधिकरणत्वस्यैव निषेधापत्तेरापादकत्वात् । अत एव आक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्य पैच्छिकत्वेन रात्र्यादेर्या विधयाभावात् न तन्निषेधस्य विकल्पापादकत्वम् । प्रकृते तु प्रथमप्रयोगाधिकरणत्वं न पैच्छिकम्, प्रतिप्रधानं गुणावृत्तेः वैधत्वात् । अत स निषेधोऽपि विकल्पापादक एव । वस्तुतस्तु प्रथम प्रयोगस्य उद्देश्यत्वमेव शास्त्रदीपिकाद्युक्तमिति न किञ्चि देतत् । अतो 'नानूयाजेषु' इतिवत् पर्युदास एवायं अनारभ्यवाक्यशेष उक्तविधप्रथमप्रयोगभिन्ने प्रवृञ्ज्या दिति । ततश्च प्रापकप्रमाणाभावात् प्रथमप्रयोगे अप्रवृक्तौ 'अग्निष्टोमे प्रवृणक्ति' इति वचनं वस्तुत अप्राप्तावाप्रापकमपि प्रतिप्रसवफलकं सत् अग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थम्, न तु विकल्पेन, विकल्पे प्रमाणाभावात् । अस्य नानारभ्यविधेः शाखान्तरविहित एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोग विषयत्वेव । अनेन च काममित्यनूचानवाक्यस्योपसंहार । तेन अग्निष्टोमसंस्थाकप्रयोगे अनूचानस्य नित्यं करणम् । तथा श्रोत्रियस्यापि । अनूचानो वेदाध्यापक । तेन क्षत्रियवैश्ययोर्निवृत्ति । श्रोत्रिय प्रकर्षेण वेदतदर्थज्ञ । कामपदेन प्रकर्षाभिधानात् । तस्य इत्येकपदेन उभयो कर्तृत्वविधानाच्च न विशेषणैकत्वम् । तदन्येषामग्निष्टोम प्रथमाहारेऽपि नियमकरणम् । यत्तु वार्तिके— अनू चानादेर्विकल्पोऽन्येषां तु नित्यकरणमित्युक्तम्, तत् प्रौढिमात्रम् । अत एव पार्थसारथिना अनूचानादे नित्यमेव प्रयोग इत्युक्तम् । यदि तु तदेव समर्थनीयमित्या ग्रह तदा 'काम'पदेन विकल्पाभिधानात्, अग्निष्टोम वाक्यस्य च तेनोपसंहारात्, अनूचानादेर्विकल्प इत्येव समर्थनीयम् । सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावा न्नित्यमेवाप्रयोग । विकृतौ तु प्रथमप्रयोगेऽपि नित्य करणमिति स्थितम् ।

मण्डल— 'नाद्यप्रयोगे प्रावर्ग्यम् ।' १७

शाकर— 'नाद्ये प्रयोगे प्रवृञ्ज्यात् ।' १७

* प्रवर्ग्यन्यायेनैवाश्वदानगतप्रयोजनवत्त्वजिज्ञासाया अवश्योपस्थितत्वेनतोरेव शेषित्वकल्पनौचित्यात् नाश्वदानस्य हेतुत्वं शेषितया, अपितु निमित्ततयैव । भाट्ट ३।४।१४, * कर्तुं प्रयोजनवत्त्वसिद्ध्यर्थं अवश्य प्रकरणालोचने क्रियमाणे तयोरुपस्थितत्वेन कृत्वाद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन कल्पयितुं युक्तत्वात् पदान्तरकल्पनया न प्रामाण्यम् । ३।४।८ पृ ३१०, * जञ्जभ्यमानपुरुषस्य ध्यानगुणत्वस्यापि सर्वप्रधानभूताया भावनाया चैत्रादिवद् विशेषणत्वेनोपादानात् प्रवर्ग्यन्यायेन प्राधान्यकल्पनानुप पत्ति । ३।४।९, * 'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इत्यत्र उपचितिवाक्यवेऽपि प्रवर्ग्यन्यायेन ३।३।१२

स्वसम्बन्धिफलजनकत्वज्ञानस्य स्वाराज्यजनकत्वाधीनत्वात् तदर्थत्वमेव युक्तं सोमस्य । ४।४।२.

● प्रवर्ग्यसाम्नां 'उच्चैः प्रवर्ग्येण' इति करणविभक्त्या साङ्गस्य उच्चैस्त्वविधानात् प्रवर्ग्यप्रयोगबहिर्भवि-ऽपि प्रवर्ग्याङ्गत्वाविशेषात् उच्चैस्त्वम् । सु. पृ. ११८४.

● प्रवर्तकं ज्ञानं विचार्यते । ननु किमत्र विचार्यते इष्टसाधनत्व-कृतिसाध्यत्व-बलवदनिष्टाननुबन्धित्वज्ञानानां प्रवृत्तिहेतुत्वस्य स्फुटतरत्वात् इति चेत् । अत्र गुरवः । स्वविशेषणवत्ताप्रतिसंधानजन्यकार्यताज्ञानस्यैव चिकीर्षाद्वारा प्रवृत्तिहेतुत्वम्, न इष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वज्ञानयोरपि, अन्यथा हेतुहेतुमद्भावद्वयकल्पनागौरवात् । तथाहि । कार्यताज्ञानं द्विविधम् 'मयेदं कर्तुं शक्यते' इत्येकरूपमेकम् । 'ममेदं अवश्यं कार्यम्' इत्येवंरूपं द्वितीयम् । तत्र आद्यं पदार्थनिष्ठयोग्यतामात्रम् इति न प्रवृत्तिं प्रति हेतुः । द्वितीयं तु स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यं इति चिकीर्षाद्वारा प्रवृत्तिं प्रति हेतुः । इदमेव स्वविशेषणवत्ताप्रतिसंधानजन्यत्वम् । नित्ये शुचित्वं नियोज्यः, तद्विशेषणं काम्ये फलकामना, नित्ये शुचित्वकालजीवित्वादि । इति स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यकार्यताज्ञानस्य चिकीर्षाद्वारा प्रवर्तकत्वं सिद्धं भवति । अत एव इष्टसाधनत्वेन अज्ञाते मध्वन्नभोजने, अनिष्टसाधनत्वेन ज्ञाते विषभोजने, बलवदनिष्टानुबन्धित्वेन ज्ञाते मधुविषसम्पृक्तान्नभोजने न प्रवृत्त्यापत्तिः ।

न च तत्र 'मध्वन्नभोजनजन्यं सुखं भवतु' इतीच्छया तदापत्तिः । विषसंपृक्तमध्वन्नभोजनसुखत्वेनैव इच्छागोचरीभावात् । नापि जीवनकर्तृत्वकालिकत्वकार्यताज्ञानेन विषभक्षणे प्रवृत्त्यापत्तिः, न वा काम्ये शौचादिलिङ्गककार्यताज्ञानात् प्रवृत्त्यापत्तिः । एतेन भाविभोजराज्ये, तत्रस्थ भोजने च प्रवृत्त्यापत्तिर्निरस्ता ।

केचित्तु इदानींतनमत्कृतिसाध्यताज्ञानं हेतुः । तच्च इदानींतनमदिष्टसाधनताज्ञानाधीनं इति तदभावान्न प्रवृत्तिः इत्याहुः । तन्न, वक्तुमर्हत्वाभावेऽपि 'यदि मया क्रियते तदेदं भविष्यति' इत्येवाद्यकृतिसाध्यताज्ञानस्य तदानीमपि सत्त्वात् ।

एवं च इष्टसाधनत्व-बलवदनिष्टाननुबन्धित्वस्फुरितत्कालजीवित्वज्ञानजन्यानां कार्यताज्ञानानां कार्यताज्ञानत्वेन अनुगतानां प्रवृत्तौ हेतुत्वं इति लाघवम् । इष्टसाधनत्वज्ञानादीनां प्रवृत्तिं प्रति हेतुत्वे तु हेतुहेतुमद्भावानन्त्यकल्पनागौरवम् ।

न च इष्टसाधनत्वादिज्ञानानां कार्यताज्ञानहेतुत्वकल्पने 'तद्धेतोरेवास्तु' इति न्यायात् प्रवृत्तिं प्रति तेषामेव कारणत्वं युक्तम् । शाब्दबोधे तात्पर्यज्ञानस्येव प्रवृत्तौ कार्यताज्ञानस्य लाघवेन हेतुत्वात्, तद्धेतु-(तात्पर्यज्ञानहेतु-) प्रकरणादीनां शाब्दबोधहेतुत्वाभाववत् कार्यताज्ञानजनकेष्टसाधनत्वज्ञानादीनां अपि तद्धेतुत्वकल्पनाऽयोगात् । तस्मात् कार्यताज्ञानमेव प्रवर्तकम्, कार्यत्वमेव विध्यर्थः । मणि. पृ. ८३-८४.

● प्रवर्तनं औदासीन्यात् प्रच्युतिः । सोम. १०।२।२. ● प्रवर्तना इष्टसाधनत्वमेव इति शास्त्रदीपिकाकारस्य मतम् । सोम. १।२।१ पृ. ७. ● प्रवर्तना च भट्टमते प्रवृत्तिहेतुः प्रवर्तकधर्मः । प्रवर्तकधर्मत्वं च 'अहमेनं प्रवर्तयामि' 'देवदत्तस्त्वां प्रवर्तयति नाहम्' इत्यादिप्रतीतिसाक्षिकम् । भोक्तृस्य स्वनिष्ठप्रवृत्तिहेतुत्वेन प्रवर्तनात्वनिवारणाय प्रवृत्तिहेतुः इति । प्रवृत्तिहेतुरिच्छादिवारणाय धर्मत्वं समवेतं बोध्यम् । स च धर्मः लोके इच्छादिरूपः । वेदे तु तदसंभवात् लिङादिनिष्ठः अलौकिकः कल्प्यते । मणि. पृ. १०, ● प्रवर्तना प्रवर्तयितुः परप्रवृत्त्यनुकूलव्यापारविशेषः । मणि. पृ. १०, सोम. २।१।४ पृ. १०९. ● प्रवर्तना प्रवृत्तिहेतुभूतः प्रवर्तयितुः धर्मः कश्चित् । स्वातन्त्र्ये 'देवदत्त एव मा प्रवर्तयति, न यज्ञदत्तः' इति व्यवस्थानुपपत्तेः । स च लिङ्धर्मः । प्रवर्तनाज्ञापनमात्रेण प्रवर्तकत्वे देवदत्तवत् प्रवर्तयति इति प्रवर्तनात् यज्ञदत्तस्यापि प्रवर्तकत्वप्रसङ्गः । तथैव लोके पुरुषस्य आचार्यादेः प्रवर्तयितुर्धर्मः 'अहमेनं प्रवर्तयामि' इति प्रवर्तयितुः मानसप्रत्यक्षवेद्यः, प्रेषादिरूपः (व्यापारः) नाभ्युपेतुं शक्यते । वेदे तु पुरुषाभावेन लिङादेरेव प्रवर्तकत्वात् तद्धर्मो भविष्यति । सु. पृ ३०.

● प्रवर्तना लिङर्थः । मीन्या.

* प्रवर्तनोपायाः सामादयोऽपि । परिक्रयस्तु यत्रे प्रयत्नमाम्नातः । भा. १०।२।८।२५.

* प्रवर्तनात्वं ( लिङः शक्यतावच्छेदकं ) परनिष्ठप्रवृत्तिजनकज्ञानविषयप्रवर्तकधर्मत्वम् । मणि. पृ ११७, इष्टसाधनत्वमेव प्रवर्तना इति मण्डनः । पदार्थान्तरं प्रवर्तना इति भाट्टाः । अर्थभावनाभिधानानुकूलशक्तिरेव प्रवर्तना इति पितृचरणाः । ११८. * प्रवर्तनात्वं प्रवृत्त्यनुकूलव्यापारत्वम् । अनुकूल्यं च जनकत्वम् । तच्च लोके पुरुषाश्रयवृत्ति । वेदे च तदभावात् इच्छाभिधाय कस्य चित् प्रवर्तनात्वं बोध्यम् । अर्थभावनाभिधानानुकूलायाः लिङादिनिष्ठशक्तेरेव अभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यते इति पार्थसारथिः । रहस्य. पृ. ११.

* प्रवर्तनारूपो हि विधिः । भाट्ट. ४।१।१.

* ' प्रवर्तेऽहमिति ज्ञानं येन शब्देन जन्यते । स चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥ ' इत्युक्तम् । सु. पृ ५७-५८, रत्नाकरः. चोदनासूत्रम् श्लो. ११.

* प्रवादः । निर्युक्तिकप्रवादः हेयः । मणि. पृ. १२.

* प्रवासगतस्य यजमानस्य अग्निहोत्रेषु अभ्युपस्थानार्थं आशीर्मन्त्रः ' इहैव सन् तत्र सन्तं त्वाग्ने ' इति । वा. १।८।६।१६.

* प्रवाहनित्यत्वं सजातीयप्रागभावसमानकालीनध्वंसानधिकरणत्वम् । मणि. पृ. १७५. * प्रवाहनित्यस्य नैमित्तिकत्वाविरोधः । सु. पृ. १२०१.

* प्रवाहसमुद्रन्यायेन सर्वाणि वेदान्तवाक्यानि ऋजुकुटिलमार्गेण परमशिवप्रतिपादकान्येव । ( गङ्गादिप्रवाहाः सर्वे अन्ततः समुद्रमेव प्राप्नुवन्ति तद्वत्, इति न्यायाशयः ) । श्रीकर ११।१२ ब्रसू.

* प्रवीणः । चतुरः वीणावादस्य गुणेषु तत्सु निपुणे एव प्रवीणशब्दो वर्तमानो रूढ इत्युच्यते । भा. १।७।१०।२२.

* प्रवृञ्जनं तत्सूत्रे पयःप्रक्षेपः । वा. ३।१।१२।३२ टिप्पणी.

# प्रवृत्तेऽपीति चेत् । ६।३।१७।३६ ॥

श्रुतद्रव्यापचारे प्रतिनिधौ उपात्ते, प्रवृत्तेऽपि कर्मणि कृतेषु केषु चित् संस्कारेषु यदि तदेव मुख्यं लभ्येत मुख्यमेव ग्राह्यम् ।

. अत्र टुप्टीका— ' केषु चित् संस्कारेषु कृतेषु अनभिनिर्वृत्ते ( मुख्ये ) प्रयोजने श्रुतमेव उपादातव्यम् । न संस्काराणामनुरोधः, द्रव्यगुणत्वात् । तस्मात् ये अभिनिर्वृत्ताः संस्काराः तेषां ( मुख्ये ) आवृत्तिः स्यात् । एवमिदं सिद्धान्तसूत्रं भवति । पूर्वपक्षस्तु उत्प्रेक्ष्यः । अथवा प्रवृत्तेऽपीति चेत् कृते ( मुख्ये ) प्रयोजने मुख्यमागमयितव्यमिति ( पूर्वः पक्षः ) ' इति ।

खदिरालाभे कदरेण प्रयोगः प्रारब्धः । पशुनियोजनात् प्राचीनाः संस्काराः कृताः । तावति काले खदिरो लब्धः । तदा सति खदिरे आदित आरभ्य सर्वे संस्काराः पुनः कर्तव्याः । पशुनियोजनं च खदिरे कृत्वा शिष्टः प्रयोगः समापनीय इति सिद्धान्तः । अत्र ' प्रवृत्तेऽपीति चेत् ' इति प्रवृत्तशब्दः पशुनियोजनातिरिक्तसंस्कारग्राहकः ।

अथवापक्षे तु प्रवृत्तशब्दः पशुनियोजनान्तान् सर्वानेव संस्कारान् ग्राहयति । पशुनियोजनान्तेषु संस्कारेषु कृतेषु पश्चाल्लब्धः खदिरः । तत्रापि सर्वः प्रयोगः खदिरेण पुनः कर्तव्यः इति पूर्वः पक्षः । तत्र प्रथमपक्षे सूत्रार्थस्तु ' इति चेत् ' इति पूर्वसिद्धान्तपरामर्शः । मुख्याभिलाभे मुख्य इति चेन्न्यायः ततः प्रवृत्तेऽपि प्रतिनिधौ मुख्यमेवोपादेयं इति । अथवापक्षे तु क्लेशः ।

नानर्थकत्वात् । ३७ ।

मुख्यस्य द्रव्यस्य खादिरस्य अलाभे कदरे प्रतिनिधौ पशुनियोजनं कृतम्, अथ खदिरो लब्धः, परंतु प्रवृत्ते जाते नियोजने सति खदिरो मुख्योऽपि न ग्राह्यः । अनर्थकत्वात् निष्फलत्वात् । इति सिद्धान्तः । के.

* ' प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात् ' इत्यष्टमाधिकरणे ( ८।१।३।१ ) पूर्वपक्षपरत्वमागच्छन्तोपकारत्वात् दार्शपौर्णमासिकानां धर्माणां प्रकृतस्य कृत्स्नविधानात् तत्पूर्वत्वमिति सिद्धान्ते निराकरिष्यमाणत्वेन अयागात् । सु. पृ. ११७८.

ग्रहणम् । ( इष्टिशब्देन ) ...... । वा २।२।३।२ पृ ४८२.

॥ प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत । १२।१।१८।३६ ॥

दर्शपूर्णमासयोः होतुर्वरणं ' अग्निर्देवो दैव्यो होता देवान् यक्षत् ' इत्याम्नातम् । तत् सोमाङ्गभूतेषु ऐष्टिकेषु कर्मसु प्राप्यते । सौमिके होतुर्वरणं ' अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते ' इत्याम्नातम् । तत्र सौमिकेन वरणेन आनतो होता इति दार्शिकं वरणं न कर्तव्यं इति प्राप्ते सिद्धान्तमाह । प्रतितन्त्रं प्रतीष्टिकर्म होतुः वरणं क्रियेत । कुतः ? प्रवृत्तवरणात् वरणात् प्रवृत्ते कर्मणि दार्शिकं वरणं क्रियते, अतः तत्र आनर्थक्यम् । किं तर्हि ? धर्ममात्रम् । तदकरणे गुणवैगुण्यं स्यात् । तस्मात् प्रतिकर्म होतुर्वरणं भेदेन कर्तव्यं इति सिद्धान्तः ।

ब्रह्माऽपीति चेत् । ३७ ॥

पूर्वपक्षी अतिप्रसङ्गेन शङ्कते । यदि प्रवृत्ते कर्मणि होतुर्वरणं नियमतः प्रतिकर्म कर्तव्यं तर्हि ब्रह्मा अपि प्रवृत्ते कर्मणि क्रियते प्रणीताप्रणयनकाले, तस्मात् तदपि धर्ममात्रत्वात् प्रतिकर्म कर्तव्यम् । इति चेत् ।

न प्राक्नियमात् तदर्थं हि । ३८ ॥

होतृवरणवत् ब्रह्मवरणमपि प्रतिकर्म कर्तव्यं इति चेत् तत्राह सिद्धान्ती । न ब्रह्मवरणं प्रतिकर्म कर्तव्यम् । न तद्धर्ममात्रम् । प्राक् नियमात् प्राक् वरणात् न किञ्चित् ब्रह्मकर्मास्ति । वरणादुत्तरकालं ब्रह्मणः कर्म । यस्मात् ब्रह्मवरणं तदर्थं कर्मार्थमेव न धर्मार्थम् । तस्मात् ब्रह्मवरणं न प्रतिकर्म कर्तव्यम् । नास्ति तेनातिप्रसङ्गः ।

निर्दिष्टस्येति । ३९ ॥

पुनः पूर्वपक्षी शङ्कते । निर्दिष्टस्य वरणात् ब्रह्मणोऽपि प्रवृत्तवरणं इति चेत् । अमावास्यायां औपवसथ्येऽहनि वेदिकर्म निर्दिष्टम् । ' पूर्वेद्युरमावास्यायां वेदिं करोति ' इति । तत्र वेदिपरिग्रहस्थाने ब्रह्मा क्रियते । तेन ब्रह्माऽपि प्रवृत्तवरणः । प्रवृत्तवरणात् प्रतिकर्म ब्रह्मणो वरणं क्रियेत इति चेत् ।

नाश्रुतत्वात् । ४० ॥

अमावास्यायां पूर्वेद्युर्वेदिकर्मण्यो निर्दिष्टस्य वरणात् ब्रह्मणोऽपि प्रवृत्तवरणत्वात् तद्वरणमपि प्रतिकर्म कर्तव्यमापद्येतेति चेत् । न । पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतम्, न परिग्रहणम्, अश्रुतत्वात् यथाकालमेव प्रवृत्ते ब्रह्मणि परिग्रहः करिष्यते । अतो न प्रतिकर्म ब्रह्मवरणं कर्तव्यम् । विषमो दृष्टान्तः ।

होतुस्तथेति चेत् । ४१ ॥

पूर्वपक्षी शङ्कते । यदि प्रवृत्ते कर्मणि ब्रह्मणो वरणम्, न च वरणात् प्राक् किञ्चित् ब्रह्मणः कर्मास्ति, तस्मात् प्रवृत्तवरणो ब्रह्मेति । तर्हि होतुः अपि तथा प्राग्वरणात् किञ्चित् कर्मास्ति । ततः तस्यापि वरणं न धर्ममात्रम् । इति चेत् ।

न कर्मसंयोगात् । ४२ ॥

न होतुर्वरणं न धर्ममात्रं किन्तु धर्ममात्रमेव । दृष्टार्थं कर्मसंयोगात् । अस्ति होतुः प्राग् वरणात् सामिधेनी कर्मणा संयोगः । ' अवृतः सामिधेनीरन्वाह ' इति । तत् दीक्षणीयादिषु ऐष्टिकेषु कर्मसु कर्तव्यम् । इति सिद्धान्तः । के.

● प्रवृत्तिः क्रमबोधकं प्रमाणम् । मणि. पृ. ११. ● प्रवृत्ति द्वेधा स्वेच्छाधीना पराधीना च । तत्र आद्यायां इष्टसाधनत्वादिधीः कारणम् । अन्त्यायां राजगुर्वादि आज्ञाप्रेरणादिधीः । पृ. ८९. ● प्रवृत्तिः प्रथमा द्वितीया द्विपदार्थक्रमनियामिका, यथा वाजपेये प्राजापत्यपश्वादि संस्कारेषु । वि ५।१।५ ● प्रवृत्ति विधिविदा । सु. पृ. ६. ● ये हि सह चोदितास्तेषां प्रवृत्तिः नियन्त्री । वा. ५।१।२।२.

॥ प्रवृत्त्या कृतकालानाम् । ५।१।१३।२५ ॥

ज्योतिष्टोमे सुत्यादिने प्रथमं प्रातरनुवाकः, ततः प्रचरण्याख्यया स्रुचा 'धाना करम्भः०' इति मन्त्रेण होमः, ततः सवनीयपुरोडाशनिर्वापः इति पठितम् । अध्वर्युरेव प्रातरनुवाकेन दत्वा प्रतिप्रस्थातारमेव प्रेष्यति 'प्रतिप्रस्थातः सवनीयान्निर्वपस्व ' इति । तेन प्रचरणीहोमादिभ्यः ऊर्ध्वं प्राप्तोऽपि सवनीयपुरोडाशनिर्वापः प्रातरनुवाककाले प्रैषवशादपकृष्टः । एवं ' बहिष्पवमाने स्तुते प्राह

अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशानलङ्कुरु' इति प्रैषवशाच्च पुरोडाशालङ्कारादेरुत्कर्षः । एवं स्थिते प्रचरणीहोमादिभिः बहिष्पवमानान्तैः सौमिकपदार्थैः प्रोक्षणादिपदार्थानां पैष्टिकानां एकतन्त्रत्वेन अनुष्ठाने प्राप्ते प्रातरनुवाककाले सवनीयनिर्वापोत्तरं प्रथमं किं प्रचरणीहोमादयः सौमिकाः पदार्थाः कर्तव्या उत पौरोडाशिकाः प्रागलङ्करणात् ये पदार्थास्ते कर्तव्याः इति विचारे नियमकारणाभावात् अनियम इति पूर्वपक्षे अस्मिन् सूत्रे प्राप्ते सिद्धान्तमाह । कृतकालानां प्रकृतौ विहितकालानां ज्ञातकालानां पदार्थानां प्रवृत्त्या प्रवृत्तेन प्रथमोपस्थितेन नियमेन नियमः स्यात् । प्रवृत्त्या इति कर्मणि क्तिन् । प्रकृत्या इति पाठं स्वीकृत्य दर्शपूर्णमासप्रयोगेण कृतकालानां ज्ञातकालानां नियमः इति वृत्तौ व्याख्यातम् । मयूखमालिकायां तु कृतकालानां ज्ञातक्रमाणां प्रकृत्या नियमः इति व्याख्यातम् । तथा च आदौ पौरोडाशिकाः पश्चात् सौमिकाः इति क्रमः इति सिद्धान्तः । अत्र प्रावृत्तिकः क्रमः ।

शब्दविप्रतिषेधाच्च । २६ ॥

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । पूर्वपक्षे स्वीकृते शब्दविप्रतिषेधात् शब्देन विरोधस्य प्रसङ्गात् । अलङ्कुरु इत्युक्ते प्रोक्षणादीन् प्रतिपद्येत । असत्पक्षे तु अलङ्कुरु इत्युक्ते अलङ्करणमेव प्रतिपत्स्यते । तस्मादत्र प्रावृत्तिकः क्रमः । के.

● प्रवृत्त्या क्रमो नियम्यते । वाजपेये प्राजापत्यपशुषु उपाकरणक्रमेण नियोजनादिकर्मानियमः । ५।१।५। ८–१२. ● प्रवृत्त्या क्रमः प्रातरनुवाके सवनीयनिर्वापादिप्रागलङ्करणानां पौरोडाशिकानां धर्माणाम् । ५।१। १३।२५–२६.

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् । ५।१।५।८॥

वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रूयते । तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः । तत्र प्रथमं पदार्थः यत्र कुतश्चित् पशोरारब्धव्यः । द्वितीयादिषु पदार्थेषु भवति संशयः किं तत एव द्वितीयादिरपि पदार्थ आरब्धव्यः उत द्वितीयादिषु अनियम इति । अनियमः नियमकारणाभावात् इति पूर्वपक्षे प्राप्ते सिद्धान्तयति । तुल्यकालानां एककालीनानां गुणानां उपाकरणादीनां प्रवृत्त्या प्रथमाङ्गप्रवृत्त्यनुसारेण क्रमः स्यात् तदुपक्रमात् प्रथमाङ्गस्य तथैव उपक्रमात् । तथा च प्रथमाङ्गक्रमानुसारेण द्वितीयाद्यङ्गक्रमः तत्र स्वीकार्यः, सोऽयं प्रवृत्त्या क्रमः ।

सर्वमिति चेत् । ९ ॥

पूर्वपक्षी आह । प्रतिपशु सर्वं अङ्गजातं काण्डानुसमयेन स्यात् इति । इति चेत् ।

नाकृतत्वात् । १० ॥

पूर्वपक्षिणा उक्तं निरस्यति सिद्धान्ती । इति चेन्न । अकृतत्वात् उक्तस्य साहित्यस्य अकृतत्वप्रसङ्गात् । तस्मात् प्रवृत्तिक्रमेण पदार्थानुसमय एव ।

क्रत्वन्तरवदिति चेत् । ११ ॥

वाजपेये प्राजापत्यपशुषु उपाकरणादिसर्वगुणकाण्ड प्रतिपशु पृथक् कर्तव्यं क्रत्वन्तरवत्, यथा सौर्ये ऐन्द्राग्ने च प्राजापत्येभ्यः क्रत्वन्तरे सर्वं गुणकाण्डं प्रत्येकं पृथक् क्रियते तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

नासमवायात् । १२ ॥

तन्न । कुतः ? असमवायात् सौर्यविकारेष्टीनां तत्तत्कालपर्यन्ततया विहितानां साहित्यस्य असम्भवात् गुणकाण्डं पृथक् भवति । प्राजापत्येषु तु एकस्मिन्नेव क्रतूपकारे साहित्याम्नानात् गुणकाण्डं पृथक् कर्तुं शक्यते । तस्मात् अत्र उपाकरणादीनां पदार्थानुसमयेन प्रथमप्रवृत्त्यनुसारेण द्वितीयाद्यङ्गस्य अनुष्ठानक्रमः स्वीकार्यः इति सिद्धान्तः । के.

● प्रवृत्त्या प्राजापत्येषु पशुषु उपाकरणादीनां प्रवृत्तौ अनिरूपित एव क्रमो निरूप्यते । प्रवृत्तावपि च समवति तत्र क्रमनियमः । यथा सान्नाय्ययोर्दध्नः पूर्वं धर्माः ततः पयस इति । रत्न. ५।१।१।१ . ● प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविता ज्योतिष्टोमे सुत्यायाम् । ५।१।१३। २५–२६. ● प्रवृत्तेः तत्प्रकारकनिश्चयहेतुकत्वम् । मणि. पृ. २८. ● प्रवृत्तीनां अभिप्रायकाल्पनिकत्वेन ऐदम्पर्यं निरूप्यते । वा. ३।४।४।१२ पृ. ९०१. ● प्रवृत्तौ (क्रमे) अङ्गनिरूपितप्राधान्यग्रहो बीजम् ।

भाट्ट. ५।१।७. ● प्रवृत्तौ समीहितसाधनताज्ञानमेव कारणम् । सोम. १।२।१ पृ. ६. ● प्रवृत्तौ हेतुः । अन्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैव शुक्तौ प्रवृत्त्यादिहेतुता । न च एवं चैत्रो रजतज्ञानवान्, कार्यताज्ञानवत्त्वात् इति ज्ञानात् मैत्रस्य प्रवृत्त्यापत्त्या भ्रान्तिभ्रान्तिसाधकयुक्तिः इति वाच्यम् । भ्रान्तिज्ञस्य बाधादेव प्रवृत्त्यभावोपपत्तेः । परकीयरजतत्वप्रकारकज्ञानज्ञानवतः स्वाविषयत्वेन रजतत्वप्रकारकज्ञानत्वेन प्रवृत्त्यङ्गीकारात्, ज्ञानाविषयकज्ञानत्वेन प्रवृत्त्यङ्गीकाराद्वा । यद्वा रजतविषयकप्रवृत्तित्वावच्छिन्नं प्रति रजतत्वप्रकारतानिरूपितरजतनिष्ठमुख्यविशेष्यताशालिज्ञानत्वेन हेतुत्वात् न कोऽप्यनुपपत्तिः । मणि. पृ. २७.

● प्रवृत्तिक्रमः अतिदेशविषयेऽपि । टुप्. ५।१।१।११ । न उपदेशविषय एव । प्राकृता हि प्राजापत्येषु पशुषु उपाकरणादीनां प्रवृत्तौ अनिरूपित एव क्रमो निरूप्यते । प्रवृत्तानामपि च सोमक्लृप्तेन तथा क्रमनियमः यथा सान्नाय्यदोहः पूर्वं घर्माः तत पयस इति । रत्न. ● प्रवृत्तिक्रमः प्रयोगवचनाश्रयत्वात् दुर्बलः । श्रुत्यर्थपाठकाण्डास्तु चोदकाश्रितत्वात् बलीयांसः । टुप्. ५।१।१०।१८. ● प्रवृत्तिक्रमः । यतः पूर्वपदार्थे आरब्धस्तत एवोत्तर आरम्भणीयः, प्राजापत्यसप्तदशपशुषु प्रोक्षणादिधर्मेषु यथैवेति । भा. ५।१।५।८, ● प्रवृत्तिक्रमेण किं पूर्वं दर्शः अवदानाभिघारणासादनानि उत मुख्यक्रमेण पूर्वमाग्नेयस्येति संदेहे, अवदानादीनां प्रदानचोदनागृहीततरत्वात् पूर्वमाग्नेयस्येति सिद्धान्तः । प्रवृत्तिक्रमात् मुख्यक्रमो बलीयान् । मुख्य प्रधानम् । ५।४।१२-४. ( दर्शपूर्णमासयोः त्रिस्त्रिदधरणम्, प्रयाजशेषाभिघारणम्, बर्हिषि हविरासादनं चोदाहरणानि– वार्तिकम् । [illegible] तु प्रधानस्यानुरत्नावधारणाभिघारणविषयम् –तन्त्ररत्न. ) ● प्रवृत्तिक्रमात् मुख्यः क्रमः प्रबलः । अत एव सान्नाय्यावदानादितः प्राक् आग्नेयावदानादिकं क्रियते । अन्यथा हि सान्नाय्यकरणे पूर्वदिने प्रवृत्तत्वात् आग्नेयनिर्वापस्य च उत्तरे दिने प्रवृत्तत्वात् वैपरीत्यं स्यात् । वि. ५।४।१२. ● प्रवृत्तिक्रमात् मुख्यक्रमो बलवान् । ५।४।१२।१२-४. मीको. पृ २०२० ' दर्शे आग्नेयपुरोडाशस्य० ' इत्यत्र द्रष्टव्यम् । ● प्रवृत्तिकर्मे अङ्गनिरूपितप्रत्यासत्त्यनुग्रहो बीजम् । भाट्ट. ५।१।७.

● प्रवृत्तिक्रमनियमाधिकरणम् । ५।१।५।८-१२. ' प्रवृत्तिक्रमन्यायः ' इत्यत्र द्रष्टव्यम् ।

● प्रवृत्तिक्रमविचारस्य पदार्थानुसमयो बीजम् । भाट्ट. ५।२।१.

● प्रवृत्तिनिवृत्त्योः कार्यानिर्णयपूर्वकत्वम् । ऋजु. पृ. १६.

● प्रवृत्तिनिवृत्त्युभयरूपं वैदिकं कर्म । इतरेण पर्युदास इत्युच्यते । इदं द्विविधं क्रत्वर्थं पुरुषार्थं चेति । बाल. पृ. ८६.

● प्रवृत्तिरूपं वैदिकं कर्म क्रत्वर्थपुरुषार्थोभयरूपम्, यथा सन्ध्योपासने अध्ययनं आधानं च । बाल. पृ. ८१, ● प्रवृत्तिरूपं वैदिकं कर्म । तत्र द्रव्यप्रक्षेपात्मकं देवतोद्देशेन च द्रव्यार्पणम्, यथा उत्तमः प्रयाजः । पृ. ८३, ● प्रवृत्तिरूपं वैदिकं कर्म द्विविधं क्रत्वर्थं पुरुषार्थं चेति । पृ. ८१.

● प्रवृत्तिविक्षेपकरो यो न भवति सोऽनर्थकः । भा. १।४।१।२.

## प्रशंसा । १।४।१२।२३-४ ॥

' अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः ' ' अयज्ञो वा एष योऽसामा ' ' असत्रं वा एतद् यदच्छन्दोमम् ' इति श्रूयते । अर्थवादा एते । गोअश्वान् स्तोतुं इतरेषां अजादीनां अपशुत्वमुक्तम् । एवं सामसहितस्य अग्निष्टोमादेः प्रशंसार्थं दर्शपूर्णमासादीनां सामरहितानां अयज्ञत्वमुक्तम् । एवं छन्दोमसहितानां द्वादशाहादीनां प्रशंसार्थं छन्दोमरहितानां असत्रत्वमुक्तम् । तेनात्र अपशव अयज्ञ असत्र एते शब्दाः गौण्या प्रवृत्ताः । निमित्तं तु अत्र प्रशंसा ।

' पशुशीर्षाण्युपदधाति ' इत्युपक्रम्य ' पुरस्तात् प्रतीचीनमश्वस्योपदधाति, पश्चात् प्राचीनमृषभस्य ' इति यथाविधिक्रमेण तयोः प्राशस्त्यादेवाऽऽह इति ' अपशवो वै ' इत्युक्तम् । के.

● प्रशंसा गौण्याः शब्दवृत्तेः अन्यतमो हेतुः । ' अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः '

अश्वान्येभ्यः पशुभ्यः गोअश्वानां प्रशस्तता निमित्तीकृत्य 'अन्ये अपशवः' इत्युक्तम् । शा. १।४।१६. * प्रशंसा द्वेधा [ १ ] वस्तुनि विद्यमानगुणोत्कर्षः, [ २ ] स्तावकेन शब्देन संपादितगुणोत्कर्षश्चेति । प्रथमोदाहरणं 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति । 'आग्नेयो वै ब्राह्मणो देवतया' इति द्वितीयोदाहरणम् । वि. १।४।१६. * 'प्रशंसा वा संस्कारः प्रस्तरस्य संनिधानात् समिन्धनार्थे इध्मः' । सकर्ष. २।८।३ सिद्धान्तसूत्रम् । कु. ३।२।५।१३.

## प्रशंसाऽधिकरणम् ॥

प्रशंसा । १।४।१२।२३-४ ॥

भाष्यम्— 'अपशवो वा अन्ये गोअश्वेभ्य पशवो गोअश्वाः' 'अपशुर्वा एष योऽसामा' 'अयज्ञो वा एतद् यदच्छन्दोमम्' इति श्रूयते । तत्र विध्यर्थवादसंदेहे अर्थवत्त्वात् विधयः । इति प्राप्ते, अभिधीयते । यदि विधयो भवेयुः गोअश्वा एव पशवः स्युः, सामवानेव यज्ञः, छन्दोमवदेव सत्रम् । अन्येषां पशूनां यज्ञानां सत्राणां च उत्पत्तिर्बाधिका स्यात् । विकल्पश्च नावकल्पेत । अतः स्तुत्यर्थं प्रवादः । योऽश्वान् प्रशंसितुं अन्येषां पशूनां निन्दा । सामवतः प्रशंसितुं असाम्नां निन्दा । छन्दोमवन्ति प्रशंसितुं अच्छन्दोमकानि निन्द्यन्ते । यथा यदन्न अभोजनं तत् । कमलिन अयावसत् इति ।

वा— ननु सर्वेषु प्रशंसानिमित्तस्य गुणवादस्य उक्तम् । सत्यम्, परमन्यत्र गुणवादस्य प्रशंसा, अत्र तु गुणवादस्याविषयत् प्रवृत्तिनिमित्तम् । कथमिति चेत्, 'गवाश्वादिगतां पूर्वमुपादाय प्रशस्तताम् । तदभावोऽन्यपश्वादौ लक्षणासमासेन कथ्यते ॥' न तावत् महिषादीनां पशुत्वस्वरूपाभावः शक्यते वक्तुम्, प्रत्यक्षविरोधात् । कार्यप्रतिषेधः कल्प्येत । तदपि तदन्यवचनविहितत्वात् न शक्यमेव । न च विकल्पः, वैषम्यात् । कल्प्यो हि अत्र विधिः, इतरत्र क्लृप्तः । स्तुत्या वा अर्थवत्त्वात् नावश्यं तदाश्रयणम् । तुल्यश्च पुनरुक्तार्थता । 'पशवो गोअश्वाः' इति च पुनरुक्तानमनर्थकम् । न च पशुत्वैकार्थसमवायिनि क्रियागुणाः शक्याः प्रतिषेद्धुम् । अथ गवाश्वलक्षणायिनो विशेषाः प्रतिषिध्येरन्, एवमपि मन्दं फलम् । अन्यशब्देनैव च तावानर्थः सिद्धः इत्यनर्थकम् । अवश्यं च उत्तरपदेन प्रतिषेध्ये अर्थे प्रथमश्रुतेन तत्र अनुवर्तितव्यम्, विशेषणरहितप्रतिषेधासंभवात् । न च प्रशस्तत्वात् अन्यत् उपादीयमानं उपलभ्यते । शक्नुवन्ति च गवाश्वादिसंबन्धात् तत्त्व प्राशस्त्यं गमयितुम् । यद्यपि अप्रशस्तत्वमपि शक्नुवन्ति, तथापि प्रकृतापेक्षया सदिह अनाकाङ्क्षितमिति प्राशस्त्यमेव निगम्यते । तत्प्रतिषेधमानमपि च नैव औपयिकम्, इति तद्द्वारेण अन्येषां प्रशस्ततरस्य कल्प्यते । एतदुक्तं भवति, गवाश्वादीनपेक्ष्य नैव अन्येषां प्राशस्त्यं विद्यते इति । एवं अन्यगतप्रशंसानिमित्तः प्रतिषेधः । सा चेह प्रथमतरमाश्रिता इति अनन्यप्रयोजनतया पश्चादवगम्यते । अन्यत्र पुनः उत्तरकालेन एषा भक्ती निमित्तत्वेन कल्प्यते ।

शा— 'अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गोअश्वाः' इत्यत्र नामधेयत्वमनाशङ्कनीयमिति गुणविधित्वेनैव पूर्वः पक्षः । ('अपशवो वा अन्ये गोअश्वेभ्यः' इत्यन्यशब्देन पश्वादयो नोच्यन्ते, किन्तु उपास्त्याश्च सहचरत्वात् अजादय एवोच्यन्ते । तैत्तिरीयशाखायां 'अपशवो वा अन्ये गोअश्वेभ्यः पशवः' इत्यन्यशब्दसामानाधिकरण्येन पशुशब्दश्रवणाच्च । ततश्च अन्यशब्दसमानाधिकृतस्य अपशुशब्दस्य अजादिनामधेयत्वेन साम्यम्, तच्च विरोधादनाशङ्कनीयमित्यर्थः ) पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः क्रियते अजादीनामिति । सिद्धान्तस्तु, तत्र अजादीनां विहितत्वात् अशक्यः पशुकार्ये प्रतिषेधः । तस्मादर्थवादः । प्रशंसानिमित्तस्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्य अपशुशब्दस्य पदत्र अजादिषु पशुषु प्रयोगः । ननु सर्व एव प्रशंसानिमित्तोऽर्थवादः, किमत्र विशेषेणोपन्यस्यते ? सत्यम्, परमन्यत्र गुणवादेन प्रशंसा । तत्सिद्ध्यादिना गुणेन परशब्दः प्रवृत्तः प्रशंसापरो भवति । इह तु शब्दप्रवृत्तिनिमित्तमपि गुणः प्रशंसैव । १।४।१६.

सोम— नामधेयप्रस्तावे तत्प्रतिपक्षतया प्रशंसकगुणविध्यर्थवादविचाररूपत्वात् संगतिः । अभिचयने पशु-

शीर्षोपधाने 'पुरस्तात् प्रतीचीनमश्वस्योपदधाति, पश्चात् प्राचीनमृषभस्य' इति विधेः अर्थवादोऽयं 'अपशवो वै०' इत्यादिः।

वि— 'पशवोऽन्ये गवाश्वेभ्योऽपशवो वा इति श्रुतम्। अजादिष्वपशुत्वं यद् गुणो वादोऽयथा, ऽस्तु तत्॥ स्तुत्यभावाद्गुणस्तेषु पशुकार्यनिषेधनम्। अशक्यत्वान्निषेधस्य घटाद्यर्थाभिधायिना॥, पशवोऽपशुशब्देन प्राशस्त्याभावतोऽक्ततः। लक्ष्यान्त्र निमित्तं तु प्रशस्यैव गवाश्वयोः॥'

भाट्ट— 'अपशवो वा अन्ये०' इत्यत्र अजादीनां पशुत्वे विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य च अनुपपत्तेः अर्थवादत्वम्। अपशुशब्दो घटादौ मुख्यः गवाश्वगतप्राशस्त्याभावरूपगुणयोगात् अजादौ गौणः सन् लक्षणया गवाश्वगतस्तुत्यर्थः। प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतप्राशस्त्यं लक्षयित्वा, नञा तदभावरूपो गुण उपस्थाप्यते इति विशेषः। सर्वथा प्रशंसा गौणीनिमित्तघटिका इति सिद्धम्।

मण्डन— 'प्रशंसाऽश्वे पशूक्ति. स्यात्।' १६.

शंकर— 'प्रशंसातः क्वचिच्चैवम्।' १६. इयं गौणी।

● अर्थवादानां अवयवार्थपरत्वाभावे प्रशंसाधिकरणविरोधः। तत्र अपशुशब्दस्य अप्राशस्त्यगुणयोगात् गौण्या वृत्त्या अजादिपशुषु वृत्तेर्व्यवस्थापनात्। कु. १।२।१।१८.

● प्रशंसार्थवादः 'वायुर्वै क्षेपिष्ठा देवता' इति। बाल. पृ. ५०.

प्रशसाऽभ्यभिधानम्। ९।४।४।२३॥

अध्रिगुप्रैषे 'प्रशसा बाहू' इति पठितम्। तत्र प्रशसा इति प्रातिपदिकेन आभ्यभिधानं असेः अभिधानं स्यात्। असौ हि शसशब्दः प्रसिद्धः 'दश प्रशासानिष्ट्वाऽऽह शसमाहरेति', 'असिं वै शसमाचक्षते' इति। तस्मात् प्रशसा असिना बाहू छिन्धि इत्यर्थः। इति पूर्वः पक्षः।

बाहुप्रशंसा वा। २४॥

अध्रिगुप्रैषे 'प्रशसा बाहू' इति पठ्यते। तत्र प्रशसा इत्यस्य असिना इत्यर्थः इति पूर्वः पक्षः। तं वाशब्देन व्यावर्त्य सिद्धान्तमाह। प्रशसा इति शब्देन बाहुप्रशंसा बाह्वोः प्रशंसा वोच्यते। प्रशसा बाहू इत्युनात् प्रशस्तौ बाहू छेत्तव्यौ इत्यर्थः। पशुविशसनार्थं स्वधितिः (क्षुरिका) विहिता नासिः। असिश्च पूर्वपक्षिणा उच्यते इति वैचित्र्यम्। तस्मात् प्रशसा प्रशस्तौ इत्यर्थः। के.

● प्रशसाशब्देन अध्रिगुप्रैषगतेन बाह्वोः प्रशंसा। ९।४।४. मीको. पृ. ३४५ 'अध्रिगुप्रैषगतेन प्रशसा शब्देन०' इत्यत्र द्रष्टव्यम्।

● प्रशस्तं च प्रतिपाद्यम्। भा. ६।७।१२।२६.

● प्रश्नः अर्थवादः 'वेदकर्णवर्ती सूर्मिम्' इति। बाल. पृ. ५०. ● प्रश्नेनैवोपक्रमो भवति (क्वचित्), यथा—का नामेयं नदी, को नामायं पर्वतः, किमिदं फलं इति। भा. ३।३।४।११, ● पूर्वं हि प्रश्नेन भवितव्यं ततः प्रतिवचनेन। ३।५।१६।४२.

● प्रश्नमन्त्रः 'पृच्छामि त्वा परमन्तं पृथिव्याः' इति। बाल. पृ. ५९.

● प्र(ष्ठ)ष्ठौही वर्षत्रयवयस्का। वि. ४।४।१.

● 'प्र(प)ष्ठौहीमधिम्याम्' (तैसं. १।८।१९) इति राजसूये पठ्यते। ४।४।१.

● प्रसक्तस्य च प्रतिषेधो न्याय्यः (नाप्रसक्तस्य)। भा. ६।७।१२।२७.

प्रसक्तानुप्रसक्तन्यायः। अयमन्योद्देशेन अन्यदीयस्यापि सदनुष्ठाने अन्योद्देशेन प्रवृत्तौ अन्यस्यापि सिद्धौ यावत् तत्र प्रवर्तते। यथा अलं प्रसक्तानुप्रसक्तेन इत्युक्तिः प्रायो ग्रन्थेषु दृश्यते। साहस्री. ५६४.

● प्रसङ्गः अभिचयने देवसुवा हविःषु अनुनिर्वाप्येषु अग्नीषोमीयपशुपुरोडाशतन्त्रस्य। १२।१।२।२–८. मीको. पृ. ३८३ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम्।

● प्रसङ्गः। अधुना प्रसङ्गलक्षणं द्वादशो व्याख्यायते। प्रसङ्गशब्दार्थः अन्यैरुक्तः (साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः) 'एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके

विधौ ' इति । अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिः प्रसङ्गः । यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम् । भा. १२।१।१।१. ● प्रसङ्गः अनुबन्ध्यायाः अनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रस्य । १२।३।२, मीको. पृ. ३८३ ' अनुनिर्वाप्याधिकरणम् ' इत्यत्र द्रष्टव्यम् । ● प्रसङ्गः अन्योद्देशेन अन्यदीयस्यापि तदनुष्ठानम् । पश्वर्थे प्रयाजेषु कृतेषु पशुपुरोडाशार्थं पृथक् प्रयाजा न क्रियन्ते, प्रसङ्गसिद्धत्वात् पश्वुद्देशेन क्रियमाणानां पशुपुरोडाशीयप्रयाजानां अनुष्ठानं भवत्येवेति । वि. १२।१।१ प्रसङ्गश्च. ● प्रसङ्गः अमावास्यातन्त्रस्य निशीष्टौ । १२।२।५, मीको. पृ. २३८५ ' निशीष्टिन्याय ' इत्यत्र द्रष्टव्यम् । ● प्रसङ्गस्तु, यत्र अन्यार्थेनाङ्गेन अन्यस्योपकारः । यत्र सकृत् कृतं सर्वेषामुपकरोति तत्र तु तन्त्रम् । रत्न. १२।२।७।२४, ● प्रसङ्गः त्रिविधः अनुष्ठानप्रसङ्गः, पदार्थप्रसङ्गः, शास्त्रप्रसङ्गश्चेति । तत्र पदार्थस्य तत्त्वे सति परार्थमनुष्ठानेन परस्योपकारः अनुष्ठानप्रसङ्गः । यथा पशुपुरोडाशादौ पश्वर्थप्रयाजादेः । पदार्थस्य भेदे सत्यपि परार्थमुपात्तेन परस्योपकारः पदार्थप्रसङ्गः । यथा सौमिकया वेदेः इष्टिपशुवेद्यपेक्षया भेदेऽपि तया सोमाङ्गभूतेष्टिपशूनामुपकारः । एतेन शास्त्रेण शास्त्रान्तरस्य उपकारः शास्त्रप्रसङ्गः । यथा ' याजनादिभिर्ब्राह्मणो धनमर्जयेत् ' इति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विग्वरणस्य अविशेषेण त्रैवर्णिकमात्रविषयमाक्षेप्य वृत्तस्य उपकारः । तस्मात् ' अन्यार्थेन प्रमाणविरोधेन अन्यस्य तन्मध्यपतितस्य उपकारः प्रसङ्गः ' इत्यादिकमन्यदेव प्रसङ्गसामान्यलक्षणं बोध्यम् । मोम. १२।१।१ पृ. ८४६. ● प्रसङ्गः त्रिविधः प्रधानप्रसङ्गः, अङ्गप्रसङ्गः, प्रधानाङ्गप्रसङ्गश्च इति । तत्र प्रधानप्रसङ्गः त्रिविधः प्रकृत्योः विकृत्योः प्रकृतिविकृत्योश्चेति । तत्र [ १ ] प्रकृत्योः प्रसङ्गो यथा— काम्येन अग्निहोत्रादिप्रयोगेण नित्यप्रयोगस्य प्रसङ्गः । [ २ ] विकृतिप्रधानयोः प्रसङ्गो यथा— या विकृतयो निमित्ते कामे च विहितास्तत्र युगपत् निमित्तफलकामोत्पत्तौ अग्निहोत्रवदेव काम्यप्रयोगेण नित्यप्रयोगस्य प्रसङ्गसिद्धिः । स्मार्तोदाहरणं तु दर्शश्राद्धविकृतिभूतयोः महालयापरपक्ष-श्राद्ध-नित्यश्राद्धयोर्मध्ये पूर्वेण उत्तरस्य प्रसङ्गसिद्धिः । प्रकृतिविकृतिप्रसङ्गस्तु द्विविधः प्रकृत्या विकृतेर्विकृत्या वा प्रकृतेः । तत्रोभयत्र श्रौतमुदाहरणं मृग्यम् । स्मार्ते तु [ ३ ] आद्योदाहरणं यथा— दर्शश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति । [ ४ ] द्वितीयोदाहरणं तु यथा— तीर्थश्राद्धेन दर्शश्राद्धस्य प्रसङ्गसिद्धिरिति । अङ्गप्रसङ्गस्तु पोढा, तद्यथा [ ५ ] औपदेशिकेन अङ्गेन औपदेशिकस्य प्रसङ्गः, यथा— वैश्यनिमित्तकेन सप्तदशेन नित्याङ्गस्य पञ्चदशस्य । [ ६–७ ] तथा काम्येन नित्यस्य नैमित्तिकस्य च, यथा— प्रतिष्ठार्थस्य एकविंशत्यनुवचनस्य अङ्गेन एकविंशतिवत्त्वेन नित्यस्य पञ्चदशस्य, वैश्यनिमित्तकस्य च सप्तदशस्य प्रसङ्गसिद्धिः । [ ८ ] तथा औपदेशिकेनाङ्गेन आतिदेशिकस्य प्रसङ्गो यथा— दर्शार्थेन प्रयाजादिना निशीष्टयर्थस्य प्रयाजादेः प्रसङ्गसिद्धिः । [ ९ ] तथा आतिदेशिकेन आतिदेशिकस्य प्रसङ्गो यथा— पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः प्रसङ्गसिद्धिः । [ १० ] तथा आतिदेशिकेन औपदेशिकस्य प्रसङ्गो यथा— श्येने अतिदिष्टैः ऋत्विग्भिः प्रयोगविधितः चोदकवलीयस्त्वेन प्रापितैः श्येनस्य औद्गात्रसमाख्यया प्रापितस्य उद्गातुः कार्यसिद्धेः प्रसङ्गः । प्रधानाङ्गप्रसङ्गश्चतुर्धा । प्रकृतिप्रधानेन अङ्गस्य प्रसङ्गसिद्धिः, अङ्गेन च प्रकृतिप्रधानस्येति द्वौ भेदौ । विकृतिप्रधानेन अङ्गस्य प्रसङ्गसिद्धिः, अङ्गेन च विकृतिप्रधानस्य इति द्वौ भेदाविति । एषु चतुर्ष्वपि भेदेषु श्रौतोदाहरणानि मृग्याणि । स्मार्तानि तूच्यन्ते । [ ११ ] तत्राद्ये भेदे उदाहरणं यथा— काम्येन अमावास्याश्राद्धेन यात्राङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । [ १२ ] द्वितीयभेदे उदाहरणं यथा— यात्राङ्गभूतश्राद्धेन नित्यामावास्यस्य प्रसङ्गसिद्धिः । [ १३ ] तृतीयभेदोदाहरणं यथा— काम्यमाघ्यादिश्राद्धेन यात्राङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । [ १४ ] चतुर्थभेदोदाहरणं यथा— यात्राङ्गभूतश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिरिति ।

तदेवं चतुर्दशविधः प्रसङ्गो निरूपितः । बाल. पृ. १४९–१५०. ● प्रसङ्गः दाशाध्यायार्थः । द्रष्.

७।११।११. * प्रसङ्गो न ज्योतिष्टोमे दीक्षाकालीनेन जागरणेन दार्शिकजागरणस्य । १२।१।८।१७.

* प्रसङ्गो न ज्योतिष्टोमे सवनीयपुरोडाशादिषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनाम् ॥

पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् । १२।१।४।१० ॥

भाष्यम्— सोमे एव यानि दर्शपूर्णमासप्रकृतीनि ग्रहचमसे प्रयुक्ते वर्तन्ते, यथा सवन पशु., सवनाः पुरोडाशाः, सौम्यश्चरुरिति । तेषु विचार्यते किं तेषां ग्रहैश्चमसैर्वा होमः कर्तव्यः, अथवा दार्शिकैः स्रुगादिभिः पात्रैरिति । तत्रोच्यते । पात्रेषु च प्रसङ्गः स्यात् । कुतः ? होमार्थत्वात् । होमार्थानि तानि पात्राणि । स च होमो ग्रहचमसेनापि निर्वर्त्यते । सोमतन्त्रमध्यपतितानि कर्माणि । तेषु ग्रहैश्चमसैर्वा होमः कर्तव्यः ।

न्याय्यानि वा, प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् । ११ ॥

भाष्यम्— न्याय्यानि वा दार्शपूर्णमासिकानि स्युः । तैर्होमः क्रियते । कुतः ? प्रयुक्तत्वात् । प्रयुक्तानि तानि विद्यन्ते । यदगृहीत्वाऽऽज्यानि सोममासादयेयुः अपघ्नन्ति यजमानम् । अथ यद्गृहीत्वा आज्यान्यासादयन्ति, न यजमानमपघ्नन्ति इति प्रथमं तावत् तेषां प्रयोगः । प्रोक्षणं संमार्जनं च, तत आज्यग्रहणम् । तान्येव आज्यप्रयुक्तानि विद्यन्ते । अप्रयुक्ते प्रसङ्गः स्यात् । यन्मध्यपातिनोऽङ्गं न प्रयुक्तम्, तत्कार्ये तन्त्रिणोऽङ्ग प्रसज्यते । स्वस्याभावे हि परकीयमुपजीव्यते । असंनिहिते हि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति । संनिहिते तु स्वयानेनैव याति । तत्र हि तस्य यादृशं स्वातन्त्र्येण गमनसुखम्, न तादृशं परयाने । पुरोडाशानामपि दार्शिकैः पात्रैः यादृशं सादुगुण्यं तादृशं ग्रहचमसैर्न । न तत्र प्रकृत्यो हूयन्तातय. प्रोक्षणादयश्च संस्कारा लभ्यन्ते । ग्रहचमसे तेषामभावः । येऽपि सौमिकाः, तैः पुरोडाशानामसंबन्धः । यदि पुनर्दार्शिकान्यप्रयुक्तानि भवेयुः, किं ग्रहचमसं प्रसज्येत ? नेति ब्रूमः । दार्शिकान्येव प्रसज्येरन् । यत्र तन्त्रिणोऽङ्गं क्रियमाणं इतरस्यापि कृतं भवति, तत्र प्रसङ्गः. यथा पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः । न तु ग्रहचमसे प्रयुक्ते, नेतराणि प्रयुक्तानि भवन्ति । न हि सोमे हूयमाने पुरोडाशा हुताः । तस्मान्नात्र प्रसङ्गः । किं तर्हीदमुच्यते अप्रयुक्ते प्रसङ्गः स्यादिति । यदि प्रयोग एषां नोपपद्येत, प्रतिषिध्येत वा, ततः प्रसङ्गः स्यादित्यर्थः । अपि च न्याय्यानि दार्शपूर्णमासिकानि, न ग्रहचमसम् । किं तेषां न्याय्यत्वम् ? दर्शपूर्णमासयोस्तानि शब्देनोक्तानि । ततश्चोदकेन पुरोडाशे अतिदिश्यन्ते इत्यस्ति शब्दसंस्पर्शः । ग्रहचमसेन तु हविर्षये न कश्चिद्धोम श्रुतः । अर्थात् क्रियेत । अपवि शब्दोक्ते अर्थक्रिया भवति । दर्शयति चैतानि पात्राणि, 'युनज्मि ते पृथिवीं ज्योतिषा सहेति ध्रुवामभिमृशति, युनज्मि वायुमन्तरिक्षेण ते सहेत्युपभृतम्, युनज्मि वाचं सह दिवा सूर्येणेति जुहूम्' इति । तस्मादेतैर्होमः कर्तव्यः ।

शा— सोमाङ्गेषु पैष्टिकेषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन्, उत जुह्वादीनि पात्राणि पृथक् प्रयोक्तव्यानि इति संदेहे सौमिकैरेव होमार्थैः पैष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्ग मन्यते । जुह्वादिकार्याणि होमादीनि अन्यैः क्रियमाणानि विगुणीभवेयुः । न चात्र अन्यैरेव होमादयः कृताः, येन पृषदाज्यानूयाजवत् न पुनः क्रियेरन् । तेन कर्तव्याः सन्तो होमादयः सादगुण्यसंभवे किमिति निर्गुणाः क्रियन्ते । तस्मान्न पात्रप्रसङ्गः ।

सोम— यदि प्रधानार्थतयाऽपि सेवा प्राकृतहविरासादनसिद्धिः, तदा किमु वक्तव्यं होमार्थतया ग्रहार्थैः पात्रैः प्रकृतहोमसिद्धिः इत्युचितैः सगतिः ।

वि— 'सौम्यचर्वादिहोमः किं सौमिकैर्नैष्टिकैरुत (पात्रैः)।, कार्यसिद्धेः सौमिकैः स्यात्, दवैगुण्यादैष्टिकैः ॥'

भाट्ट— सौमिकानां ग्रहचमसादिपात्राणां स्वप्रासादनोत्तरं यान्यैष्टिकविकाराणि सवनीयपश्वादीनि, तेषु तैरेवोपात्ते, कार्यसिद्धेः न प्राकृतजुह्वादिपात्राद्यपेक्षत्वम् । इति प्राप्ते, न तावत् तैः सोमप्रक्षेपेण हविरन्तरप्रक्षेपसिद्धिः, तस्य पृथगनुष्ठानावश्यकत्वात् । हविरन्तरप्रक्षेपादौ च न ग्रहादीनां कारणता प्रकृते प्रामाणिकी, उद्देशातिदेशयोरभावात् प्रयाजाद्यङ्गानां हि पुरोडाशोपकारकत्वे

अतिदेशेन सिद्धे युक्तं यत् सिद्धानामेव तेषामुपजीवनम्, प्रकृते तु सौमिकानामेकप्रक्षेपावच्छिन्नत्वे प्रमाणाभावात् ग्रहा-येदिवस्य ग्रहचमसेषु आधारविशेषविशिष्टकार्यविशेषत्वादि-रूपग्रहत्वादिरूपसत्त्वे प्रमाणाभावात्, आतिदेशिकपात्राणा-माज्यानवेक्षयैवोपात्तत्वेन लाघवस्याप्यभावात् नात्र प्रसङ्गसिद्धिः। अत एव सुत्यादिने 'युनज्मि ते पृथिवीं ज्योतिषा सहेति स्रुचमभिमृशति' इत्यादिना वैदिक-पात्राणामभिमर्शनं विहितम्। अत एव 'ग्रहैर्जुहोति' इत्यादिना अङ्गप्रधानसाधारणप्रक्षेपानुवादेनैव 'हिरण्मय्यः स्रुचो भवन्ति' इतिवत् ग्रहादिविधानादुपदेशेनैव हवि-स्तत्प्रक्षेपे ग्रहादिप्राप्तेरैष्टिकपात्राभावः इत्यपि अपास्तम्, तथात्वे स्रुवादिदर्शनवैयर्थ्यात्, ग्रहादीनां सोममात्रार्थत्वे नामकरणादीनामपि तत्त्वाच्च।

मण्डन— 'ग्रहादिभिर्नैष्टिकहोम इष्यते।'

शंकर— 'पात्राणि प्रसजन्ति न।' सौमिकानि वैष्णवी।

* प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया ॥

शेषभक्षास्तथेति चेत्। १२।१।७।२४ ॥

भाष्यम्— अथ शेषभक्षा अपि तथा निवर्तेरन्, यथा अन्वाहार्यः, इति चेत्। परिक्रयार्थाशङ्कयोच्यते।

न, कर्मसंयोगात्। २५ ॥

भाष्यम्— नैते निवर्तेरन्। नह्येते परिक्रयार्थाः। अन्वाहार्येण कर्मार्थैः आनतानां निवृत्तेः भूयिष्ठे कर्मण्येते विधीयन्ते। न चात्मानमनाय। तस्मान्नैते परिक्रयार्थाः, किंतु संस्कारार्थाः। अतस्तदर्थं कर्तव्याः।

शा— पूर्वं यजमानभक्षस्य वृत्त्यर्थत्वात् कर्तेन निवृत्तिराशङ्किता। संप्रति ऋत्विग्भक्षाणां परिक्रयार्थ-तया प्रधानदक्षिणया निवृत्तिराशङ्क्यते। निराकरणं च तद्वदेव शेषप्रतिपत्त्यर्था भक्षाः नानत्यर्था इति। दशमे एव च (शेषभक्षाश्च तद्वत् १०।२।१।३०) आनत्य-र्थत्वं भक्षाणां निराकृतम्। अत्रेदं प्रयोजनं प्रसङ्गात्मक-त्वेन इहोक्तम्।

सोम— यदि प्रधानदक्षिणया आनतिः कृता इत्य-न्वाहार्यनिवृत्तिः, तदा भक्षाणामपि निवृत्तिः स्यात् इत्युत्थिते. संगतिः। सूत्रे तथा अन्वाहार्यवत् इत्यर्थः।

वि— 'ऋत्विग्भक्षाः, निवर्तेरन् यद्यन्वाहार्यवत्, न तत्।, यागमानवदेतेषां कार्यत्वात् प्रतिपत्तये ॥'

भाट्ट— ऋत्विक्कर्तृकाणां शेषभक्षाणां द्वितीयया शेष-प्रतिपत्त्यर्थत्वेऽपि प्रधानशेषाभिहरणन्यायेनानत्यर्थत्वस्यापि करिष्यमाणकर्मणि बलाधानार्थत्ववत् संभवात्, तस्यैव चानुमानिकतया प्रयोजकत्वावगते. युक्त एव द्वादशशत-दक्षिणया प्रसङ्गः। इति प्राप्ते, अन्वाहार्यदक्षिणानियम-विधिरत्वेन शेषभक्षस्यानत्यर्थत्वाकल्पनात् केवलं द्वितीयया शेषप्रतिपत्त्यर्थत्वम्। प्रयाजशेषन्यायेन च शरीरकृशाणा-वारणापरपर्यायबलाधानार्थत्वमित्युक्तं दशमादौ। अतो नात्रापि प्रसङ्गसिद्धिः।

मण्डन— 'न चानतिद्वारकृतिप्रदानादङ्गेष्टिभक्षा विनिवर्तनीयाः।'

शंकर— 'ऋत्विग्भक्षास्त्वैष्टिकाः स्युः।' २८.

* प्रसङ्गो निषिध्यते अमावास्यातन्त्रस्य, परतु इष्टा-र्हिः पृथक् कार्यं अन्वन्वाधानं च यदि देवतार्थम्। १२।२।५।१४–१८. * प्रसङ्गः पर्यग्निकृतस्यापि परोपकारकत्वम्। रत्न. १२।२।१।१. * प्रसङ्गः पशुपुरोडाशतन्त्रस्यैवानुनिर्वाप्येषु (अग्निचयनादौ) देव-सुवां हविरादिषु। १२।३।२. मीको. पृ. १८१ 'अनुनिर्वाप्याधिकरणम्' इत्यत्र द्रष्टव्यम्। * प्रसङ्गः निशेषग्रहणे सकृदनुष्ठानम्। विशेषग्रहणं च सप्तधा— फल-कामनातः निमित्ततः रूपतः संख्यातः कालतः मन्त्रतः कर्तृत्वश्चेति। बाल. पृ. १४९. * प्रसङ्गः सवनीय-पुरोडाशेषु पशुतन्त्रस्यैव, न विकल्पः। १२।२।१२। ३०–३२. 'सवनीयादिन्याय.' इत्यत्र द्रष्टव्यम्। * प्रसङ्ग. सौमिकवेद्या दार्शिकवेदेः। १२।१।३।८–९. * 'एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ'। तन्त्रवदेव प्रसङ्गः। अयं तु विशेषः विद्यमाने स्वके विधौ इति। यद्यप्यस्य अन्यो विधिर्विद्यते, परविधिना तु कृतार्थत्वान्न क्रियते। यथा प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि। पशुना एव [illegible] इत्या. पशु-

पुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते। भा.
१२।१।१।१, * न च तुल्यकालत्वे प्रसङ्गो भवति।
यथा वैमृत्यः इष्टयः दर्शपूर्णमासाभ्यां तुल्यकाला अपि न
दार्शपौर्णमासिकं तन्त्रं उपजीवन्ति। १२।२।५।१५.
* प्रसङ्गस्य विषयः। अस्ति प्रसङ्गः। तस्य विषयो
निरूप्यते। अन्यस्य तन्त्रे प्रकृते यदन्यत् तुल्यधर्म-
कमापतति कर्म, तस्य पूर्वकर्मणो वैतिकर्तव्यता, सा
प्रसज्यते। यथा पशौ प्रकृते पशुपुरोडाश आपतति। तस्य
पाशुकीतिकर्तव्यता प्रसज्यते। कथम्? तदुच्यते।
भावयेत्। किम्? पशूपकारम्। केन? पुरोडाशयागेन।
कथं इत्यनेन यागगतो व्यापारः। स चोपमितलक्षित-
प्रापणेन अग्नीषोमीयस्य यो यागगतो व्यापारः, स तद
श्येनाकाङ्क्षति। स इह पाशुकेन प्रयोगवचनेन कृत-
त्वात् न भूयः पौरोडाशिकः समीपे करोति। तस्मात्
पौरोडाशिकः प्रयोगवचनो लुप्यते। एष प्रसङ्गः। टुप्.
१२।१।१।२.

* प्रसङ्गत्वं विशेषग्रहणात् अन्यार्थस्यापि अन्योप-
कारकत्वम्। बिन्दुः. १२।१।१।१

* प्रसङ्गलक्षणः प्रासनाथ समविधः — प्रधान
प्रसङ्गः एक, अङ्गप्रसङ्गः पेन्द्य। बाल पृ १३२.
* प्रसङ्गलक्षणे (द्वादशाध्याये) अन्यार्थैरेव अङ्गैः
उपक्रियमाणा पशुपुरोडाशादयः न स्वाङ्गान्युपस्थापयन्ति।
न च तदान्या विनिर्देगुण्यं भवति। वा. ३।६।३।१०.
* प्रसङ्गसंगतिः। यत्प्रसक्त्या मे निवार,
तत्समाप्तौ स एव बुद्धिस्थो भवति। मु पृ ४७०.

* प्रसङ्गसिद्धं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिक
आरण्यभोजन चोदकप्राप्तं सौमिकेन पयोव्रतादिना।
१२।१।१४।३०. * प्रसङ्गसिद्ध दार्शिक व्रत प्रायणीयादिषु
सौमिकपयोव्रतादिना। १२।१।११. मीको पृ. १८१८
'ज्योतिष्टोमे प्रायणीयादिषु' इत्यत्र द्रष्टव्यम्। * प्रसङ्ग
सिद्ध न होतृवरण ज्योतिष्टोमे ऐष्टिकेषु कर्मसु। तत्
प्रतिकर्म भेदेन कर्तव्यम्। भा. १२।१।१८।३५-४१,
* प्रसङ्गसिद्ध प्रातःसवनीयानां पुरोडाशानां तन्त्रं पाशुकेन
तन्त्रेण, माध्यन्दिनसवनीय-तृतीयसवनीय-पुरोडाशतन्त्रं तु
पाशुकेन वा प्रातःसवनीयपुरोडाशतन्त्रेण वा प्रसङ्गसिद्धम्।

१२।२।१२।३०-३२, * प्रसङ्गसिद्ध अवघरण ज्योति-
ष्टोमे ऐष्टिकेषु कर्मसु दार्शिक चोदकप्राप्त सौमिकेन।
१२।१।१८।३६-३९. * प्रसङ्गसिद्ध हविष्कृदाह्वानं
पत्न्यर्थेन आह्वानेन सवनीयपुरोडाशेषु। १२।२।३।११.
* प्रसङ्गसिद्धः न दार्शिकः ऐन्द्रादिः सोमभक्ष ज्योति-
ष्टोमे ऐष्टिकेषु कर्मसु चोदकप्राप्तः, संस्कारार्थत्वात्।
१२।१।१५।३१-३२. * प्रसङ्गसिद्धः परिक्रयः अन्वा
हार्य. दार्शिकः ज्योतिष्टोमे ऐष्टिकेषु कर्मसु चोदकप्राप्त.
सौमिकेन परिनयेण। १२।१।१६।३३. * प्रसङ्गसिद्धा
न आरम्भणीया विकृतिषु दर्शपूर्णमासारम्भणीयया।
१२।२।६।१९-२१. * प्रसङ्गसिद्धा हविष्कृत् सवनीय-
पत्न्यर्थया, तृतीयसवने सवनीयपुरोडाशेषु, सौम्ये चरौ
आग्निने द्विकपाले च, भेदेन नाह्वानस्य। १२।२।८।
१२-१३.

* प्रसङ्गसिद्धिः अग्नीषोमीयपशुपुरोडाशतन्त्रेण देव-
सुवा हविषा तन्त्रस्य। १२।३।२।३-८. * प्रसङ्ग
सिद्धिः अनुबन्ध्यातन्त्रेण अनुनिर्वाप्याणां वैशिकाहविषां
तन्त्रस्य। भा. १२।३।२।३-८. * प्रसङ्गसिद्धि.
उपसदग्नीषोमीयबर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन।
१२।१।१९. मीको. पृ ८८७ 'आतिथ्याबर्हिःप्रोक्षणा
दिना०' इत्यत्र द्रष्टव्यम्। * प्रसङ्गसिद्धिः दार्शिकारण्य
भोजनस्य सौमिकप्रायणीयादीष्टिषु पयोव्रतादिना।
१२।१।१४।३०. * प्रसङ्गसिद्धि. दार्शिकवेदेः सौमाग्नेष्टि-
पश्वादिषु सौमिकवेद्या। १२।१।३।१. 'सौमिकवेदियाय.'
इत्यत्र द्रष्टव्यम्। * प्रसङ्गसिद्धि दीक्षणीयादिषु अन्वाहार्य
दक्षिणायाः. सौमिकदक्षिणया। १२।१।१९. 'सौमिक
दक्षिणान्याय' इति बिन्दौ द्रष्टव्यम्। * प्रसङ्गसिद्धि-
र्नास्ति आतिथ्यबर्हिस्तरणमन्त्रेणाग्नीषोमीयार्थस्तरणमन्त्रस्य
ज्योतिष्टोमे। १२।१।२०।४४. * प्रसङ्गसिद्धिर्नास्ति
ज्योतिष्टोमे दीक्षाकालीनजागरणेन प्रायणीयादिषु दार्शिक-
जागरणस्य। १२।१।८।१७. * प्रसङ्गसिद्धिर्नास्ति दर्श
पूर्णमासार्थान्वारम्भणीयया विकृतिषु अन्वारम्भणी-
यायाः। १२।२।६।१९-२१. * प्रसङ्गसिद्धिर्नास्ति
दार्शिकहोतृवरणस्य सौमिकेष्टिपश्वादिषु सौमिकेन होतृ-
वरणेन। १२।१।१८।३५-४२. * प्रसङ्गसिद्धिर्नास्ति

पशुपुरोडाशे आज्यभागयोः । १२।१।२।७. * प्रसङ्गसिद्धिर्नास्ति सोमाङ्गेष्टिषु शेषभक्षाणां सौमिकदक्षिणया । १२।१।१७।२३–२४. * प्रसङ्गसिद्धिर्नास्ति सौमिकेन दीक्षाकालीनजागरणेन दार्शिकजागरणस्य । १२।१।८. मीको. पृ. १७५३ 'जागरणन्यायः' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धिर्नास्ति सौमिकयागैर्दार्शिकयागानां पशवीय पुरोडाशादिषु ज्योतिष्टोमे । १२।१।४।१०–११. * प्रसङ्गसिद्धिर्न इध्मस्य बर्हिषः अन्वाधानस्य च तिथिवशे अमावास्यायामनुगतस्य । मा. १२।२।५।१८.

**प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकप्रतभक्षेण ॥**

**शेषभक्षास्तथेति चेत् । १२।१।१५।३१॥**

भाष्यम्— दर्शपूर्णमासयोः शेषभक्ष ऐडादिः, सोमे वैष्टिकेषु कर्मसु चोदकप्राप्तः । सोऽपि सौमिकेन व्रतेनाऽऽरण्यवन्निवर्तते इति चेत् ।

**नान्यार्थत्वात् । ३२॥**

भाष्यम्— न । कस्मात् ? न स वृत्त्यर्थः । नहि अत्र वृत्तये । संस्कारार्थोऽसौ, उपयुक्तशेषत्वात् भक्षाणाम्, द्वितीयानिर्देशाच्च 'यजमानपञ्चमा इडां भक्षयन्ति' इति । तस्मात् कर्तव्यम् ।

शा— तदिदं षष्ठे एव साधितम् (६।८।८)। तस्य तु इह प्रयोजनकथनं प्रसङ्गात्मकत्वात् इहोक्तम् (इति संगतिः)।

सोम—सूत्रे आरण्याशनवत् अकर्तव्यत्वं तथाशब्दार्थः ।

वि— 'यजमानगता भक्षा, न त्वन्यारण्यवद् यदि ।, न वृत्त्यर्था इमे किन्तु कर्तव्याः प्रतिपत्तये ॥'

भाट्ट— एवं तर्हि यजमानकर्तृकाणां शेषभक्षाणामपि प्रयाजशेषाभिघारणन्यायेन कर्तृसंस्कारकत्वस्यापि सत्वात् प्राणधारणार्थत्वोपपत्ते, सत्यपि द्वितीयया शेषप्रतिपत्त्यर्थत्वे अस्मदुक्तप्रयाजशेषाभिघारणन्यायेन आनुमानिकस्यैव प्राणधारणस्य प्रयोजकत्वावगतेः, तस्य च पयोव्रतेन प्रसङ्गसिद्ध्युपपत्तिः । इति प्राप्ते, आरण्याशननियमविधानात् तेनैव प्राणधारणकर्तव्यत्वप्रतीतेः यजमानभक्षस्य चैवदृष्टप्रतिपत्त्यर्थत्वावसायात् तस्य च प्रसङ्गसिद्धिभावेन भक्षयितव्य एव यजमानेन प्रायणीयादिष्वपि शेषः ।

मण्डन— 'स्याच्छेषभक्षः पुनरत्र दर्शवत् ।'

शंकर— 'भट्टभक्षाः पृथक् तु स्युः ।' १६.

* प्रसङ्गसिद्धिः निषिध्यते वेद्युद्धननस्य व्रतस्य च अमावास्यायामनुगतस्य । मा. १२।२।५।१४–१८. * प्रसङ्गसिद्धिः पश्वर्थानुष्ठितप्रयाजादिभिः पशुपुरोडाशस्य । १२।१।१।१–६. * प्रसङ्गसिद्धिः पशुपुरोडाशानुयाजानां पाशुकैरनुयाजैः । बिन्दु. ५।१।१५. * प्रसङ्गसिद्धिः प्रकृतेर्वैकृताङ्गेन प्रकृतिविकृत्योः समानतन्त्रत्वे । (हत्याचिन्ता) । १२।२।१३।३३. मीको. पृ. २६९५ 'प्रकृतिविकृत्योः समानतन्त्रत्वे' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धिः प्राकृतस्य आरण्यभोजनस्य सौमिकपयोव्रतादिना प्रायणीयादिषु । १२।१।१४. मीको. पृ. ९७२ 'आरण्यभोजनन्यायः' इत्यत्र द्रष्टव्यम् । * प्रसङ्गसिद्धिः सोमाङ्गदीक्षणीयादीष्टिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया । १२।१।१६।३३.

**प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन सौमिकेष्टिपशुषु पत्नीसंनहनस्य ॥**

**संनहनं च, वृत्तत्वात् । १२।१।१३।२९॥**

भाष्यम्— पत्न्याः संनहनं च दर्शपूर्णमासयोः समाम्नातं 'योक्त्रेण पत्नीं संनह्यति' इति । तत् सोमाङ्गभूतेष्वैष्टिकेषु कर्मसु चोदकेन प्राप्तमपि न कर्तव्यम् । कुतः ? वृत्तत्वात् । दीक्षाकाले सोमार्थं पत्न्याः संनहनं वृत्तम्, 'योक्त्रेण पत्नीं संनह्यति, मेखलया दीक्षितम्, मिथुनत्वाय' इति यदाम्नातम् । संनहनं च यावत्कर्म धारणार्थं सर्वार्थम् । सौमिकेनैव आकर्मापवर्गात् प्रसङ्गेन सिध्यतीति ।

सोम— पूर्वोक्तान्वाधानवैलक्षण्यात् संगतिः । सूत्रार्थस्तु संनहनं च न कर्तव्यं सोमे तस्य प्रवृत्तत्वात् इति ।

वि— 'पत्नीसंनहनं, कार्यं चोदकादिति चेत्, न तत् । अन्यथाऽऽसोपावसानोक्त्वा तत्रान्यत्र विहितः ॥'

भाट्ट— दर्शपूर्णमासयोः 'योक्त्रेण पत्नीं संनह्यति' इति विहितं संनहनं प्रायणीयादिषु दीक्षाकालकृतेन योक्त्र-

करणकपत्नीसंनहनेन प्रसङ्गसिद्धेर्न कार्यम्, दीक्षणीयायां तु कर्तव्यमेव। बोधायनेन तु तत्रापि नेत्युक्तम्। नहि तददृष्टार्थम्, येन जागरणन्यायेन पुनः क्रियेत, वासोधारणार्थत्वरूपदृष्टप्रयोजनसंभवे अदृष्टकल्पनस्यान्याय्यत्वात्। न च अत्र अन्वाधानवत् आद्यवासोधारणार्थत्वाप्रतीतेः उत्कृष्टस्यापि पुनःस्पर्शाभावप्रतीनेन पत्नीवे यूपदार्ढ्यातिशयार्थं परिव्याणान्तरवत् पुनः संनहनोपपत्तिरिति वाच्यम्। उपदिष्टपरिव्याणस्य विकृतौ प्रयोजनान्तरकल्पनायामपि प्राकृतस्य संनहनस्यासनद्धसंनहनार्थत्वेन क्लृप्तप्रयोजनस्य विकृतौ कार्यान्तरकल्पनानुपपत्तेः। यदि तु संनहनं प्रकृतावेव न वासोधारणार्थम्, अपि तु करिष्यमाणकर्मणि बलाधानार्थमित्युच्येत, तथापि सोमार्थसंनहनेनैव बलाधानसिद्धेः, तदभावे च तस्यैव प्रहृनिवत् कर्तव्योपपत्तेः प्रसङ्गसिद्ध्यविरोधः।

मण्डन—'पत्न्याश्च संनाह इष्टेष्वने न वै।'

शंकर—'पत्नीसंनहनं नैव।' सोमे इष्टिषु। १४.

● प्रसङ्गसिद्धिः सौमिकयेषा दार्शिकवेदेः सोमाङ्गेष्टिषु। १२।१।३।८–९. ● प्रसङ्गसिद्धिः सौमिकअग्नेः ज्योतिष्टोमीयप्रायणीयादिषु दार्शिकव्रतानाम्। १२।१।११।२०–२३. ● प्रसङ्गसिद्धेः उदाहरणानि मीको. पृ. १२९१ 'एकादशाध्यायार्थः' इति हिन्दी द्रष्टव्यानि।

● यदीयतन्त्रमध्ये अर्थान्तरं स तन्त्री, अर्थान्तरं प्रसङ्गि। वि. १२।२।१२. ● यस्य पूर्वमुपक्रमः यस्य पश्चात् समाप्तिः स तन्त्री, इतरस्तु प्रसङ्गी। शा. १२।२।१२.

● प्रसङ्गित्वम्। मुख्यं तन्त्रित्वम्, अन्यस्य प्रसङ्गित्वम्। प्रसङ्गः उपकारलाभनिमित्तः। (यस्य प्रसङ्गेन सिद्धिः स प्रसङ्गी, येन च तन्त्रं स तन्त्री)। भाट्ट. १२।२।७–८.

● प्रसज्यप्रतिषेधः। 'प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्' । ("न कलञ्जं भक्षयेत्" इत्यादौ नञर्थः प्रसज्यप्रतिषेधः)। मीन्या.

● प्रसज्यप्रतिषेधार्थकत्वे नञो विधायकेनान्वयः, पर्युदासार्थकत्वे तु धातुनाऽन्वयः। 'न कलञ्जं भक्षयेत्' अत्र नञः लिङा अन्वयः, प्रसज्यप्रतिषेधार्थकत्वात्। 'नेक्षेतोद्यन्तमादित्यम्' अत्र नञः 'ईक्ष' धातुनैवान्वयः। वि. ६।२।५.

● प्रसज्यप्रतिषेधस्थले नञो न समासः 'न तौ पशौ करोति'। वि. १०।८।२.

● प्रसञ्जकचिन्ता। यत्प्रसङ्गतया या चिन्ता क्रियते तत्समाप्तौ प्रसञ्जकचिन्ता बुद्धिस्था भवति। सु. पृ. ८०७.

● 'प्रसरं न लभन्ते हि यावत् केचन मर्कटाः। नाभिद्रवन्ति ते तावत् पिशाचा वा स्वगोचरे॥' इति न्यायः (भा. १।३।२।३ पृ. १७१)। आरोपितार्थत्वमेव गौणत्वं लोकवेदानुगुणं इति चेत्, सत्यम्। तथापि वेदे आरोपितार्थत्वस्वीकारे अप्रामाण्यापत्तेः अयं पक्षः आचार्यैः (पार्थसारथिभिः) दूषितः। यद्यपि रुद्ररोदनादिवत् असदर्थेनापि स्तुतिसंभवात् नाप्रामाण्यप्रसक्तिः, तथापि 'प्रसर० गोचरे' इति न्यायेन वेदे प्रामाण्यविरोधिनः आरोपितार्थत्वस्यावकाशो न देयः इत्याशयेन तन्निराकरणं कृतमिति ध्येयम्। सोम. १।४। १३ पृ. ८५. ● वार्तिकादिषु यदारोपप्रच्छादन (आरोपितत्वरूपगौणत्वस्य निषेधः) तत् वेदप्रामाण्यसंरक्षणव्यसनितया। 'प्रसरं न लभन्ते हि०' इति न्यायमवलम्ब्य वेदप्रामाण्यप्रतिषेधकारणस्य कियतोऽपि अवकाशस्यालाभाय आरोपांशः मौक्या प्रच्छादितः। परिमल. ३।२।४।९ असू.

● प्रसर्पकाः प्रसर्पन्ति यज्ञमण्डपेषु तत्रतत्र। यज्ञे अर्थसंशये निर्णायकाः। यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टा ब्राह्मणा सिद्धप्रभृतयः। ज्योत्स्ना. १०।१।१०.

● प्रसक्तो देवताक्तित्वसाधकः 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति चेत्, न, अर्थवादानां स्वार्थे तात्पर्याभावात्। वि. ९।१।४.

● प्रसिद्धमुद्दिश्याप्रसिद्धो बोध्यते इति न्यायः। उपदेशसाहस्री - पद्य. १८।१७७ रामतीर्थ.

● प्रसिद्धेन अप्रसिद्धं निर्णीयते। मीन्या. ● 'प्रसिद्धे०

नाप्रसिद्धस्य नित्यमिष्टं विशेषणम्' इत्यनेन न्यायेन विश्वजिदादिपदवत् यागनामधेयत्वमेव अमीषां ( दाक्षा-यणयज्ञ-साकंप्रस्थायीय-संक्रमयज्ञशब्दानाम् ) । वा. २।३।४।५ पूर्वपक्षे.

• प्रसिद्धस्य प्रतिषेधे यदभिधीयते किञ्चिदिदं कर्तव्यमिति तत्र आकृतिवचनं गम्यते, यथा-अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम् इति, अर्जुनस्य मेढल्यः क्रियन्ताम् इति, सिंहाकृतिवचनं मेढल्याकृतिवचनं च गम्यते । भा. ९।४।५।२५.

※ प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयमिति न्यायः । अयं न्यायो दृग्दृश्यविवेकापरपर्यायवाक्यसुधा-ख्यग्रन्थटीकायां व्यवहृतः "वाक्यार्थज्ञानस्य चान्वयव्यति-रेकाभ्यां पदार्थपरिशोधनपूर्वकत्वात्, पदार्थपरिशोधनस्य 'प्रसिद्धानुवादेनाप्रसिद्धं निरूपणीयम्' इति न्यायेन प्रसिद्धशरीरे अहमहमिति प्रसिद्धजीवस्वात्मकत्वं पदार्थपरि-शोधनपूर्वकत्वात्" इति । साहस्री. ६१९.

• प्रसिद्धिः नाम प्रज्ञानम् । भा. ३।२।१।१ पृ. ७४८, • प्रसिद्धिर्लिङ्गेन बाध्यते । ३।३।७।१८.

• प्रसिद्धपदानामप्रसिद्धकल्पनं व्यवहारोच्छेदकार-णम् । वा. १।४।१२।२३-१ पृ. ३५६.

• प्रसूनबर्हिर्नियम आग्रयणे कपालवत्त्वाप्रवृत्ति-विरोधेन मुख्यस्याप्यैन्द्राग्नादेः विरोधाभावात् । भा. १२।२। १४।३४.

• प्रसूनमयं बर्हिः आग्रयणे धारावृत्तिरेककपाला-नुसारेण हविर्विकृतमेऽपि । प्रसून पुष्पितम्, लूनोत्पात मूलम् पुनरुत्पन्नं वा । वि. १२।२।१४.

• प्रस्तरः आहुतिः, सूक्तवाके बाध्या इति पूर्वपक्षे । भा. ३।२।५।१२, • प्रस्तरः स्तरो बर्हिषः ( उपरि ) सादयितव्यः । १।४।१२।२३-१. • प्रस्तरस्तावत् प्रासङ्गिकसेवया सवनीयपुरोडाशानाम् । यदर्थश्च प्रस्तरः यत्स्वर्थः तदर्थं प्रहरणम्, प्रहरणाद्गतं च सूक्तवाकः । टुप्. ११।३।१६।५४. • प्रस्तरः दर्भमुष्टिविशेषः ( प्रथमलूनः कुशमुष्टिः ). वि. ३।२।५. • प्रस्तरः स्रुग्धारणार्थः । भा. ३।२।५।११, ६।४।१४।४८. •, 'यजमानः प्रस्तरः' अत्र विधेयः प्रस्तरः यजमान-शब्देन स्तूयते । यागसाधनत्वं चात्र यजमानगुणः । वि. १।४।१३. • प्रस्तरस्य शाखायाश्च प्रहरणं प्रतिपत्तिः । भा. ६।४।१४।४४, • शेषस्यापि वचनात् अनेकत्र गुणभावो भवति, यथा प्रस्तरस्य । १२।४।६।१६.

※ प्रस्तरे शाखा श्रयणवत् । ६।४।१४।४४॥

दर्शपूर्णमासयोः 'सह शाखया प्रस्तरं प्रहरति' इति श्रूयते । तत्र प्रस्तरे अग्नौ प्रह्रियमाणे शाखा अङ्गं स्यात् । प्रस्तरस्य अङ्गभूता शाखा । अदृष्टश्च शाखया प्रस्तरे उपकारः । प्रस्तरे प्रहृते तदङ्गभूता शाखाऽपि अग्नौ प्रहर्तव्या इति पूर्वः पक्षः । श्रयणवत् । यथा 'पयसा मैत्रावरुणं श्रीणाति' इति मैत्रावरुणग्रहे पयसः श्रयणं मिश्रणं श्रुतम् । तत्र द्वितीयातृतीयासंयोगात् अदृष्ट उपकारो गम्यते तद्वत् ।

कालविधिर्वोभयोर्विद्यमानत्वात् । ४५ ॥

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । 'सह शाखया प्रस्तरं प्रहरति' इति कालविधिः स्यात् । यस्मिन् काले प्रस्तरप्रहरणं तस्मिन् काले एव शाखा-प्रहरणं इति कालार्थः संयोगः । नात्र प्रस्तरस्य विधिः, नापि शाखायाः, उभयोः शाखाप्रस्तरयोः विद्यमान-त्वात् । वत्सापाकरणार्था शाखा पूर्वं विहिता । प्रस्तरो-ऽपि स्रुग्धारणार्थं प्राप्तः । तस्मात् कालार्थः संयोगः ।

अतत्संस्कारार्थत्वाच्च । ४६ ॥

पूर्वपक्षस्य निराकरणे हेत्वन्तरमाह सिद्धान्ती । तस्य प्रस्तरस्य संस्कारः तत्संस्कारः । तत्संस्कारः अर्थः प्रयो-जनं यस्याः सा तत्संस्कारार्था, एवंभूता शाखा च तत्संस्का-रार्था न भवति । न शाखया प्रस्तरस्योपकारो दृष्टः क्रियते । काष्ठं द्रव्यान्तरस्य तृणस्य नोपकारे वर्तते, तृणं तु काष्ठस्योपकुर्यात् । तस्मान्न शाखा प्रस्तरार्था ।

तस्माच्च विप्रयोगे स्यात् । ४७ ॥

'सह शाखया प्रस्तरं प्रहरति' इति यस्मात्प्रस्तरस्य शाखा नाङ्गं तस्मात् पौर्णमास्यां शाखायाः प्रस्तरस्य विप्रयोगे असंयोगेऽपि विना शाखया प्रस्तरः प्रहर्तव्यः स्यात् । किंच सवनीयेषु हविःषु सवनीयपशुगतं प्रस्तरं इति द्वादशे वक्ष्यते । अतः पाशुक एव प्रस्तरः सवनी-यानां नान्यः । तत्र च प्रहरणं तदानुकर्षन्यायेन

चार्थकर्म, किन्तु प्रतिपत्तिः दर्शपूर्णमासादौ । तच्च पूर्णपात्र्यायें नास्ति । ४।२।४।१०-१३. ● प्रहरणं शाखायाः प्रस्तरप्रहरणकाले । ६।४।१४।४४-४८. ● प्रहरणं शाखायाः प्रस्तरस्य च प्रतिपत्तिः । भा. ६।४।१४।४४, ● प्रहरण सोमान्ते स्वरोः अग्नीषोमीये उपानस्य दन्तत्या प्रवृत्तस्य, नानुबन्ध्याकालस्य । ११।३। ५।८-१२. ● प्रहरणे प्रस्तरस्य च प्रतिपत्तेः शाखाया अपि । तत्र अनियतकाले प्रहरणे प्राप्ते सह प्रहर्तव्ये इति विधीयते ' सह शाखया प्रस्तरं प्रहरति ' इति । टुप्. ४।२।४।११.

● प्रहास. भक्तादपत्वेन आननः ताद्यात्वकत्वम् । मणि. पृ. ११६.

॥ प्रागपरोधान्मलवद्वाससः । ३।४।७।१८॥

दर्शपूर्णमासयोः श्रूयते ' मलवद्वाससा न संवदेत, नास्या अन्नमद्यात् ' इति मलवद्वाससा सह संवादस्य प्रतिषेधोऽयं किं दर्शपूर्णमासाङ्गस्य उत पुरुषस्य सर्वत्र प्रतिषेध इति विचारे सिद्धान्तमाह । मलवद्वाससः रजस्वलायाः संवादादिप्रतिषेधः पुरुषस्य सर्वत्र । पुरुषार्थ एवायं न क्रत्वर्थः । प्राक् ताइमयोगारम्भात् प्रागेव तस्याः अपरोधात् अपरोधस्य उक्तत्वात् ' यस्य व्रत्येऽहन् पत्नी अनालम्भुका भवति तामपरुध्य यजेत ' इति । तस्मात् पुरुषार्थः । इति सिद्धान्तः ।

अन्नप्रतिषेधाच्च । १९ ॥

मलवद्वाससः नाम रजस्वलायाः स्त्रियाः ' नास्या अन्नमद्यात्, अभ्यञ्जनं वै स्त्रिया अन्नम् ' इति श्रुत्या अन्नस्य अभ्यञ्जनापरपर्यायस्य सादेश्यप्रसिद्धस्य मिथुनभक्षणस्य प्रतिषेधाच्च संवादादिनिषेधस्य पुरुषधर्मत्वसिद्धिः । तस्मात् अयं निषेधः न क्रतुधर्मः किन्तु पुरुषार्थः प्रकरणादुत्कृष्टः इति सिद्धान्तः । के.

● प्रागुपनयनात् कामचारवादभक्षाः । टुप्. ६।२।६। २२. ● ' प्राङ्नाभिवर्धनात् पुंसो जातकर्म विधीयते । ' अयं पञ्चमलकारेण विधिः स्मार्तः । बाल. पृ. ४०. ● प्राग् लोकंपृणायाः चित्रिण्याद्युपधानम् । भा. ५।३। ८।२०.

॥ प्राग् लोकंपृणायास्तस्याः संपूरणार्थत्वात् । ५।३।८।२०॥

चित्रिण्यादय इष्टकाः मध्यमायां चितौ उपधेयाः इति पूर्वाधिकरणे समधिगतम् । मध्यमायामपि लोकंपृणायाः नाम इष्टकायाः प्रागेव उपधेयाः न पश्चात् । तस्याः लोकंपृणायाः चितेः संपूरणार्थत्वात् । चितेः संपूरणं लोकंपृणया क्रियते । तस्मात् सा अन्ते एव उपधीयते एका अनेका वा । तत उत्तरं न काऽपि उपधातुं शक्यते । तस्मात् चित्रिण्यादयः मध्यमायां चितौ लोकंपृणायाः प्राक् उपधातव्याः इति सिद्धान्तः । के.

● प्राकरणिकेन अनारभ्याधीतं बाध्यते यथा सप्तदशत्वं पाञ्चदश्येन । बाल. पृ. १४१. ● प्राकरणिकानां कृत्स्नानामङ्गं हस्तावनेजनं वाग्यमः मुष्टिकरणं इत्यादि । वि. ३।१।१४.

● प्राकरणिकाङ्गता उपवीतस्य दर्शपूर्णमासयोः । ३।१।११।२१.

॥ प्राकरणिकाप्राकरणिकेष्टकासाधारण्यं इष्टकाधर्माणां अक्ष्णयात्वादीनाम् । चित्रिण्यादयोऽपि अन्यतम् ॥

अन्यत्रकरणे वद्वत् । ३।६।१२।२५॥

भाष्यम्— अनारभ्याधिरुच्यते ' चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति ' इति । सन्ति तु प्रकरणे इष्टकाधर्माः ' अपरिमितामक्ष्णयाभिष्टका कुर्यात् ' इति, तथा ' मसलेष्टकाः संयुक्यात् ' इति । तत्र संदेहः किमप्रकरणे समाम्नातानामिमे धर्माः कर्तव्या उत नेति । किं प्राप्तम् ? न कर्तव्याः । कुतः ? असंनिधानात् । इति प्राप्ते, उच्यते । अन्यत्रापि एवंजातीयकं यद्देव स्यात्, यद्वत् प्रहाः । प्रकरणादि वाक्यं बलवत् । अन्यथा चेष्टकानामनर्थकत्वात् ।

शा— पूर्वत्र अंशुदाभ्ययोः अनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसंस्पर्शयुक्तो धर्मसंबन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति प्रकरणसंस्पर्शाभावात् तद्धर्मसंबन्ध इति विशेषाशङ्का, प्रकरणसंस्पर्शाभावेऽपि प्रकृतापूर्वसंस्पर्शात् तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः ।

सोम— सूत्रार्थस्तु अप्रकरणे यदन्यत्र विनियोगादिकं तदपि संनिधानाम्प्रकृतवद्धर्मयुक्तं स्यात् इति ।

वि— 'अप्रकरणादीष्टकाधर्मीभिनियोगादिषु नोचिताः । सन्ति वा, वाक्यमप्यनारभ्योक्तं ततो न ते ॥, प्रकृतापूर्वसम्बन्धाद्वाक्यादपि वास्यतः । अन्यपदरादयोऽप्यर्थविनियोगादिषु सन्ति ते ॥'

भाट्ट— इष्टकाधर्माणामकृत्स्नादीनामनारभ्याधीतविनियोगादीष्टकाविनियोगस्याप्यनारभ्याधीतत्वात् प्राकरणिकेष्टकामात्रधर्मत्वम् । इति प्राप्ते, पूर्ववल्लुप्तानधदेशत्वात् इष्टकायोरपचयनापूर्वसंबन्धित्वस्य तत्रयोरपचयनापूर्वसम्बन्धित्वस्यैव वा लक्षणीयस्यानारभ्याधीतास्वप्यविशेषात् उभयधर्मत्वम् ।

मण्डन— 'स्तुरिष्टका दूरगता· सधर्मा· ।'

शंकर— 'विनियोगादिधर्मकम् ।' १३

● प्राकारन्यायः । हृदयात् पुरीतत् गच्छन्तो (जीवस्य) नाडीना मार्गत्वोपपादनाय हि 'हृदयात् पुरीततमभिप्रतिष्ठन्ते' इत्युक्तम् । अतः प्राकारन्यायोऽत्र न प्रवर्तते । नहि 'प्राकाराभिर्गम्य प्राकारे शेते नृपतिः' इति वाक्य प्राकारवेष्टितप्रासादमध्यगतपर्यंकशयनेनोपपादयितु शक्यम् (शङ्कापत्र.) । परिमल ३।२।२।७

असू., ● 'प्राकारे शेते, प्रासादे शेते, पर्यङ्के शेते' अत्र शयने अधिकरणत्वेन त्रयाणामपि समुच्चयः । नाडीना पुरीततिवेष्टितहृदयपुण्डरीकमध्यगतब्रह्मप्राप्तिमार्गत्वेन समुच्चयो घटते । पुरीततोऽपि प्राकारन्यायेन स घटते (सिद्धान्ते) । ३।२।२।७.

● प्राकाशौ अध्वर्युभागस्यैव निवर्तकौ, न तु कृत्स्नस्य ऋतुदाक्षिण्यस्य अश्वमेधे (इति भाष्यम् । वस्तुतस्तु राजसूये दशपेये तैत्तिरीयके प्राकाशवाक्यम्) । भा. १०।३।१७।६३–६४.

प्राकाशौ तयेति चेत् । १०।३।१७।६३॥

राजसूये दशपेये 'प्राकाशावध्वर्यवे ददाति' इति श्रुतम् । इमौ प्राकाशौ तया धेनुवत् (१०।३।१४।५७) कृत्स्नस्य ऋतुदाक्षिण्यस्य निवर्तकौ । इति चेत् पूर्वपक्षी ब्रूयात् । प्राकाशौ ददाति इत्यन्वयः । अध्वर्युशब्दस्तु अनर्थक्यानुवाद ।

अपित्वसयवार्थत्वाद् विभक्तप्रकृतित्वाद् गुणेदन्ताविकारः स्यात् । ६४ ॥

पूर्वपक्ष अपितु इति शब्दो व्यावर्तयति । प्राकाशौ न कृत्स्नक्रतुदाक्षिण्यनिवर्तकौ । अवयवार्थत्वात् कृत्स्नदक्षिणाया समुदायरूपाया दक्षिणायाः अध्वर्युभाग. अवयवो भवति । सोऽवयवः अर्थः प्रयोजन ययो. तौ प्राकाशौ अवयवार्थौ । तयोर्भाव. अवयवार्थत्वम् । विभक्तप्रकृतित्वात् विभक्ता 'इदमध्वर्यो.' इति विभागयुक्ता प्रकृति. ज्योतिष्टोमरूपा ययोः तौ प्राकाशौ विभक्तप्रकृती, तयोर्भावः विभक्तप्रकृतित्वं तस्मात् । यस्मात् प्रकृतौ अध्वर्युविभागः, तस्मात् विकृतावपि । प्राकाशयो. अवयवार्थत्वात् विभक्तप्रकृतित्वाच्च गुणेदन्ताविकार स्यात् प्राकाशौ । किमिदं गुणेदन्ताविकार इति, गुणस्य अध्वर्युभागस्य इदन्ता इयत्ता परिमाण गुणेदन्ता । इदम भाव. इदन्ता । गुणेदन्ताया. विकारः गुणेदन्ताविकार. । अध्वर्युभागस्य सर्वस्य विकार. प्राकाशौ इत्यर्थ. । प्राकाशौ एव अध्वर्यवे ददाति नान्यत् इति श्रुतिवाक्यार्थ. । तस्मात् प्राकाशौ अध्वर्युभागस्यैव निवर्तकौ न सर्वस्याः क्रतुदक्षिणायाः इति सिद्धान्त. । के.

● प्राकाशौ दीपस्तम्भौ इति के चित् । दर्पणौ इत्यपरे । अश्वमेधे (१ राजसूये दशपेये) 'प्राकाशावध्वर्यवे ददाति' । वि. १०।३।१७. ● प्राकाशौ धौतवर्णदर्पणौ इति भट्टभास्कर. । सोम. १०।३।१७.

● प्राकाशाभ्यां अश्वमेधे विहिताभ्या प्राकृताध्वर्युभागमानस्य बाध. । १०।३।१७।६३–६४.

● प्राकाशाधिकरणे अभ्युदितेष्टेः दर्शयागभेदेऽपि तदवच्छिन्नप्रयत्नान्तरत्वाभ्युपगमेन वाक्यभेदः परिहार्यते । पृ. ७७३, ● समस्ताया ज्योतिष्टोमिक्या दक्षिणाया अश्वमेधे अतिदेशप्राप्ताया. प्राकाशाधिकरणे अध्वर्युभागमात्रविकारत्वमभिहितम् । पृ. ७६९.

प्राकाशन्यायः । राजसूयगते दशपेये दक्षिणारूपाभ्या प्राकाशाभ्या अध्वर्युभागस्यैव प्राकृतस्य बाध. ॥

प्राकाशौ तयेति चेत् । १०।३।१७।६३॥

भाष्यम्—अश्वमेधे (१ राजसूये) श्रूयते, 'हिर-

मयौ प्राकाशावध्वर्यवे ददाति ' इति । तत्रैषोऽर्थः सांशयिकः, किं प्राकाशौ कृत्स्नस्य ऋतुदाक्षिण्यस्य निवर्तकौ, उताध्वर्युभागस्य निवर्तकाविति । कुतः संशयः ? इह प्राकाशावित्येष यदि ददातिना सम्बध्यते, ततः कृत्स्नस्य ऋतुदाक्षिण्यस्य निवर्तकः । अथाध्वर्युणा, तदा अध्वर्युभागस्य । किं प्राप्तम् ? कृत्स्नस्येति । तदेतदुच्यते, प्राकाशाविति शब्दो ददातिना सम्बध्यते इति । कुतः ? एवं ददातिसम्बन्धविधाने श्रुतिरनुगृहीता । अध्वर्युणा सम्बन्धे वाक्यम् । अपि च प्राकाशाविति द्वितीया कारक-विभक्तिः सामर्थ्यादेव आख्यातेन सम्बध्यते, न नाम्ना । तस्मात् ददातिना सम्बन्धः । अध्वर्युसम्बन्धे चाध्वर्यु-शब्दात् षष्ठी अभविष्यत् । तस्मादपि ददातिना सम्बन्धः । ददाति लक्षयित्वा प्राकाशौ विधीयेते । तत्र न शक्यो ददातिरध्वर्युणा विशेष्टुम् । वाक्यं हि तदा भिद्येत । अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण सम्बध्यते, अविशिष्ट एव कार्ये प्राप्नोति । प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि । तस्मात् योऽर्थं युनक्ति सोऽध्वर्युरिहाभिप्रेतः । अतः कृत्स्नस्य ऋतुदाक्षिण्यस्य निवर्तकौ प्राकाशाविति ।

टुप्— ददाति ( प्रकृतिः भागे ) अनूद्य प्राकाशौ विधीयेते, हिरण्मयौ इति न विधीयते । कुतः ? प्राकाशौ इति हिरण्मयावेव उच्येते, नायसमयौ धेनुशब्दवत् । यदि प्राकाशाध्वर्युसम्बन्धो भवेत् तथा सति अनन्वितं वाक्यं स्यात् । न वाक्यार्थो विधीयते, न वाक्यार्थोऽन्वयः, न भावार्थे किञ्चित् । कारकविभक्तिश्च श्रुत्यैव प्राकाशयो-र्ददातिना सम्बन्धं ब्रवीति । अध्वर्युसम्बन्धे (अध्वर्युशब्दात्) षष्ठी अभविष्यत् । अत्र ( भाष्य- ) ग्रन्थः ' अपि च विशेषणे सत्यपि यदि ददातिः अविशिष्टः पदान्तरेण सम्बध्यते, अविशिष्ट एव कार्ये प्राप्नोति ' इति । (तस्य) कोऽभिप्रायः ? ( उत्तर- ) अस्मिन् वाक्ये ददातिमनूद्य प्राकाशौ विधीयेते । एतस्यां च अवस्थायां ( अनुवादा-वस्थायां ) ददातेर्विशेषणं ( श्रूयमाणमपि ) अविवक्षितम्, वाक्यभेदप्रसङ्गात् । प्रयुज्यमानमपि विशेषणमशक्तं विशेष्टुम्, न विशिनष्टि । कथं ( अशक्तम् ? ) प्रधान-भूतोऽत्र ददातिः । प्रधानभूतस्य च लिङ्गसंख्यमविवक्षितम् । ( कथम् ? ) प्रत्ययः ( तावत् साधीतं ) क्रियां विधत्ते, क्रिया ( च ) विधीयमाना कारकैर्विना न भवति, कारकाणि ( च ) स्वविशेषणैर्विना न भवन्ति । तस्मात् क्रिया ( च ) कारकाणि ( च ) कारकविशेषणानि च प्रत्ययेन पर्यामृश्यन्ते, न ( तु ) यः क्रियां प्रति उद्दिश्यते । स प्रधानभूतः क्रियां प्रति, न तु स क्रियाङ्गम् । क्रिया ( एव तु ) तदर्था । तस्य ( प्रधान-भूतस्य ) यत् लिङ्गसंख्यं तदनङ्गत्वात् क्रियायाः प्रत्ययेन न पर्यामृश्यते । तस्माद् यद् क्रियार्थं प्रातिपदिकं उपादीयते तस्य यत् लिङ्गसंख्यं तदेव विवक्षितम्, क्रियाङ्गत्वात् । ( प्रधानस्य तु ददातेः विशेषणं अध्वर्युः न विवक्षितम् । इत्ययं भाष्यार्थः । तस्मात् कृत्स्नविकारौ प्राकाशौ अध्वर्युशब्दस्तु अवयुत्यानुवाद इति ) ।

अपित्वययथार्थत्वाद् विभक्तप्रकृतित्वाद् गुणे-दन्ताविकारः स्यात् । ६४ ॥

भाष्यम्— अपि त्विति पक्षव्यावृत्तिः । दक्षिणा-वयवकार्यार्थौ प्राकाशौ, न कृत्स्नदक्षिणाकार्यार्थौ । विभक्ता हि तेषां भागा अध्वर्य्वादीनाम् । अयमध्वर्यो-र्भागः, इमेऽन्येषामिति । तस्मात्, गुणेदन्ताविकारः स्यात् । किमिदं गुणेदन्ताविकार इति ? गुणेदन्ता गुणे-दन्ता । इदमस्यार्थं इदन्ता । गुणेदन्ताया विकारो गुणेदन्ता-विकारः । अध्वर्योर्भागस्य निवर्तकौ प्राकाशौ । कथमिव ? एकमिदं हि वाक्यं ' हिरण्मयौ प्राकाशौ ' इति । नैवं प्रथमा, नापि दक्षिणाशब्देन सम्बन्धः, येन दक्षिणाकार्ये भवेयाताम् । का तर्हि ? द्वितीया । ददातिनैव सम्ब-ध्यते । तदेकं वाक्यं ' हिरण्मयौ प्राकाशावध्वर्यवे ददाति ' इति । अध्वर्युसम्प्रदानकेन ददातिना एतयोः सम्बन्धः । तस्माच्चाध्वर्युदक्षिणाभागं निवर्तयतः । यदि सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते । दृष्टार्थत्वो-दप्यर्थो. अन्यान् भागान्यथान् प्रत्याख्यास्यति । अथ यदुक्तं प्राकाशयोर्ददातिसम्बन्धो विधीयते इति, तथा हि श्रुतिरनु-गृहीता भविष्यतीति । नासौ वाक्यानपेक्षिणी श्रुतिः । असति ददातिना आनन्तर्ये नावकल्पते । यदप्युच्यते

कारकविभक्तिरसत्यातेन संबन्धयोग्येति । योग्यत्वं दर्शनेन बाध्यते । दृश्यते ह्यानन्तर्यं प्राकाशयोरध्वर्युशब्देन । यत्प्रयुक्त तत्संबन्धे षष्ठ्यमभिष्यदिति । सत्यं प्राप्नोति षष्ठी, न तु तदभावे संबन्धो नास्त्यध्वर्युणा । गम्यते हि स वाक्येन । आह । चतुर्थीश्रुतिस्त्र या, सा वाक्यमपबाधिष्यते इति । नाविधीयमाना बाधितुमुत्सहते । कथं सर्वविशिष्टे संप्रदाने श्रूयते इति । सामर्थ्यप्राप्तस्यानुवादेनेति । तस्माददोषः । उक्तं वा सर्वविशेषणविशिष्टं दानं विधीयते इति । एवमन्येषामनिवृत्तौ यथाप्रकृतिभावे चोदकानुग्रहो भविष्यति । तस्मादध्वर्युभागस्य निवर्तकौ प्राकाशाविति ।

टुप्— न कृत्स्नस्य दाक्षिण्यस्य निवर्तकौ प्राकाशौ । कुतः । यदि दक्षिणामनूद्य ( प्राकाशौ प्रथमान्तौ ) विधीयेयाताम्, ततः कृत्स्नाया दक्षिणाया निवर्तकौ स्याताम् ‘प्राकाशौ दक्षिणा ( इति ), तौ चाध्वर्यवे’ ( इति, पश्चात् वाक्यान्तरेण पुरुषापनयः स्यात् ) यथा ‘औदुम्बरः सोमचमसो दक्षिणा, स ब्रह्मणे देयः’ इति ( न तु एवमस्ति । कथम् ? ) एकं चेदं वाक्यं प्राकाशौ ( अध्वर्यवे ददाति ) इति ( चशब्दो हेतौ । प्राकाशौ इति- ) न चेयं प्रथमा, यथा सोमचमसः इति । का तर्हि ? द्वितीया । सा ( च ) अध्वर्युददातिना सबध्यते ( न ददातिमात्रेण ), एकवाक्यत्वात् ( अध्वर्युपदैकवाक्यत्वाविरोधः । तत्र च- ) अध्वर्युप्राकाशयोर्ददातिना ( ददातिपदेन विधिना ) संबन्धो विधीयते । ( ‘न ददातिमध्वर्युविशिष्टमुद्दिश्य । नापि ददातिमुद्दिश्य, अध्वर्युशब्दस्य अवयुत्यानुवाददोषात्, व्यवहितसंबन्धाच्च । किन्तु अध्वर्युमेवोद्दिश्य इति । तत्र चतुर्थ्यन्तोऽध्वर्युः संप्रदानभूतः । प्राकाशप्रातिपदिकं च द्वितीयान्तमध्वर्युं प्रति गुणभावेन, तयोः प्रातिपदिकयोः संबन्धात् चतुर्थी लभ्यते इति । ननु ददातिमनूद्य प्राकाशौ विधीयेते इत्युक्तम् । उच्यते । अध्वर्युपदसामर्थ्यात् तदानन्तर्येण योऽर्थः स प्रतीतयः, न प्राकाशददात्योः संबन्धो प्रतीतयः’ इति आनन्दाश्रमीयपुस्तके अधिकम्, अस्मदीयलिखितपुस्तके तन्त्ररत्ने च अयं ग्रन्थो न उपलभ्यते ) तत्र चतुर्थ्यन्ताध्वर्युसंबन्धो प्रतीतयः ( इयं पङ्क्तिः आनन्दाश्रमीये नास्ति ) ( नाध्वर्युः स्वरूपेण )। ननु श्रुत्यैव क्रियया कारकाणि संबध्यन्ते ( तेन ) ददातिप्राकाशयोः संबन्धो भविष्यति ( न तु अध्वर्युप्राकाशयोः ) । उच्यते । अविधीयमानत्वात् ददातेः वाक्यसंबन्ध एव बलवान् भवति । ( एतदेव विवृणोति- ) विधीयमानाया तु क्रियाया कारकाणि उद्भूतशक्तीनि भवन्ति । तानि च क्रियया संबध्यन्ते, कारकत्वात् । अविधीयमानाया तु ( क्रियाया कारकाणि उद्भूतशक्तीनि ) न भवन्ति । तत्र ( अविवक्षिते श्रुत्यर्थे सति ) आनन्तर्येण यः संबन्धो वाक्यलक्षणः ( प्रतीयते ) स एव प्रतीतय, न व्यवहितेन ददातिना, अध्वर्युपदेन व्यवधानात् प्राकाशयोः । ‘ नासौ वाक्यानपेक्षिणी श्रुतिः ’ इत्यादि ( भाष्य- ) ग्रन्थः अनेनैव (श्रुत्यर्थस्य अविवक्षितत्व- ) न्यायेन नेयः । ( ‘योग्यत्वं दर्शनेन बाध्यते ’ इति भाष्य अर्थत उपादाय व्याचष्टे- ) ‘ प्रसिद्धि- ( कारकविभक्तिरसत्यातसंबन्धिनी इति, ) दर्शनेन बाध्यते ’ इत्ययमपि ( ग्रन्थः ) अविधीयमानत्वादेव नेयः ( तस्मात् अध्वर्युणा संबन्धात् तद्भागस्यैव निवृत्तिः ) ।

(उद्धृषितं ‘एका षष्ठेति’ इत्यधिकरणं व्याचष्टे-) ‘एका गा’ इत्येकशब्दस्य गोशब्देन संबन्धः, न ददातिना, अनूद्यमानत्वादेव क्रियायाः, इत्ययमेव न्यायः । (उपरितनमधिकरणनयमनैव स्थित्वा दाक्षिण्य दर्शयति-) द्वितीयमधिकरण ( प्राकाशाधिकरणमपेक्ष्य द्वितीयम् ) कृत्स्नस्य ( दाक्षिण्यस्य निवर्तकोऽश्वः इति ) । तृतीयमपि (‘ तथा च सोमचमसः ’ इति ) कृत्स्नस्यैव ( ऋत्विग्दाक्षिण्यस्य निवर्तकम् । तत्र विशेषशङ्कामाह- ) लिङ्गाशङ्कानिवृत्त्यर्थं तु आरभ्यते । ( मधुग्रहाधिकरणं तु- ) न कृत्स्नविकारः, नेदन्ताविकारः ( न भागविकारः ), अध्वर्युभागनियमार्थं तु अन्यत् ।

भा— अश्वमेधे ( वस्तुतस्तु राजसूये श्रूयते ‘प्राकाशावध्वर्यवे ददाति’ इति । तत्र संशयः, किं प्राकाशौ कृत्स्नस्य ऋतुदाक्षिण्यस्य निवर्तकौ, उत अध्वर्युभागस्य निवर्तकाविति । यदि ‘प्राकाशौ ददाति’ इति संबन्ध, ततः कृत्स्नस्य । अथ प्राकाशौ अध्वर्यवे इति, ततः

तद्वाक्यस्यैव । तत्र 'तद्दानान्तर्यसंप्राप्तं बाधित्वाऽध्वर्युसंगमम् । द्वितीयाश्रुतिसामर्थ्याद्ददातीति नियोऽन्वयः ॥' दान च चोदकप्राप्तमुद्दिश्यते । न चोद्देश्यमध्वर्युणा शक्यं विशेष्टुम् । तस्मात् 'अध्वर युङ्क्ते' इत्येवमध्वर्युशब्दं कथञ्चित् ऋत्विङ्मात्रे व्याख्याय (अनुवादत्वात् कथञ्चित् व्याख्याने न दोषः) दानमात्रे प्राकाशविधिः, इति कृत्स्ननिवृत्तिः । 'उच्यते, ऽध्वर्युसंबन्ध एव प्राकाशयोरिह । विधीयतेऽथवा पूर्वं दानं द्वाभ्यां विशेषितम् ॥' अध्वर्युशब्दस्यानर्थक्यभयात् न दानमात्रे विधानम् । अतः नित्यान्वयनिमित्तो यः पश्चात्तनः संप्रदानस्याध्वर्योः संप्रदेयभूतयोश्च प्राकाशयोर्मिथः संबन्धः, स एव विधीयते । (चतुर्थीबलात् अध्वर्युविशिष्टं संप्रदानकारकमुद्दिश्य द्वितीयाबलात् प्राकाशविशिष्टं कर्मकारकं विधीयते । कारकस्य चापेक्षत्वात् उद्देश्यस्य अध्वर्युणा विशेषणेऽपि न वाक्यभेदः । प्रदेयसंप्रदानसंबन्धश्च दानक्रियाऽधीन इति ददात्यन्वितयोः पार्ष्णिको वा संबन्धः, तत्र विधिपर्यवसानात्, तदुभयसंबन्धघटकत्वेन अपेक्षितदानक्रियोपस्थापकत्वात् ददातेर्नात्यन्तानर्थक्यम् । केचित्तु प्राकाशाध्वर्युशब्दार्थयोरेव स्वस्वामिभावसंबन्धो विधीयते । स च प्राकाशयोः अध्वर्यवे दानात् भवति, इत्यध्वर्युसंप्रदानत्वस्य प्राकाशकर्मत्वस्य दानत्वस्य च प्राप्ते: द्वितीयाचतुर्थीभ्यां सह ददातिरनुवादः इत्याहुः । तत्र क्रयादिसाधारणस्य स्वस्वामिभावसंबन्धस्य नियमेन दानाक्षेपकत्वाभावात् तदपि विधेयं स्यात् इत्यपरितुष्यता प्रकारान्तरेण कारकसंबन्ध एवोपपादितः ) । अथवा अध्वर्युशब्दस्य आनर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वं अध्वर्युप्राकाशविशिष्टं विधीयते । तेन च दृष्टार्थत्वात् अध्वर्युतुष्टिसिद्धेः तदभावात् प्राकृतो निवर्तते इति न कृत्स्ननिवृत्तिः (अयमेवेतिपक्षः पौर्वपक्षिकपक्षाद्, विशिष्टविधेः पदानामनेकार्थ्यसंभवनिरूपणत्वात्) ।

सोम— एकाभिप्रायस्य ददात्यन्वयाभावात् कृत्स्नदाक्षिण्यानिवृत्तावपि इह तदन्वयसंभवात् कृत्स्ननिवृत्तिः इत्युदियते: संगतिः । प्राकाशौ इति, प्रकाशन्ते रूपाण्यत्र इत्यधिकरणे घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' (पा॰ ६।३।१२२) इति उपसर्गस्य दीर्घः, छान्दसो वा । तत्रश्च सौवर्णदर्पणद्वयं प्राकाशौ इत्याह भट्टभास्करः । सूत्रे चेनुवद् सर्वनिवर्तको इति तत्रार्थसन्दार्यः ।

वि— 'किं प्राकाशौ बाधकौ स्तः कृत्स्नस्याथवैकस्य वा ।, ददातियोगात् कृत्स्नस्य, न विशिष्टेन योगतः ॥' (विशिष्टेन संप्रदानविशिष्टदानक्रियया योगतः संबन्धात्) । प्राकाशौ दीपस्तम्भौ इत्येके । दर्पणावित्यपरे ।

भाट्ट— अग्निमेधे 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति श्रुतम् । तत्र तृतीयविधिप्रकारलिप्सया दानानुवादेनैव प्राकाशविधिः । न च हिरण्मयत्वस्यापि विधाने वाक्यभेदः, प्राकाशपदार्थस्याप्यद्रव्यकत्वाभावेन हिरण्मयत्वस्य नित्यप्राप्तत्वात् । उद्देश्यस्य च दानस्याध्वर्युणा विशेष्टुमशक्यत्वात्, 'अध्वर युनक्ति' इति श्रुतस्य अध्वर्युशब्दं ऋत्विङ्मात्रे कथञ्चिद्व्याख्याय प्राकृतदक्षिणामात्रस्य निवृत्तिः । इति प्राप्ते, अध्वर्युपदवैयर्थ्यापत्तिभिया तृतीयविधिप्रकारत्यागेनाध्वर्युसंप्रदानकमुद्दिश्य प्राकाशविधानम् । संप्रदानत्वं च न दानातिरिक्तक्रियायामिति योग्यतयैव दानस्याश्रयत्वसिद्धिः । यत्तु 'प्राकाशाध्वर्युसंबन्धो विधीयते' इति मूलम्, तस्याप्ययमेवार्थः, न तु अपदार्थस्य युगपन्नस्य संबन्धस्य विधेयत्वमित्येव यथाश्रुतः । अतश्च यथैव गोदोहेनेनैकत्वविधिः, इन्द्रियोद्देशेन वा दधिविधिः, तथाऽत्रापि संप्रदानत्वमुद्दिश्य प्राकाशविधानेऽपि उद्देश्यविधेययोरुभयोर्भावनायामेवान्वयात् वाक्यभेदाभावः । यदि तु विभक्त्यर्थकर्मत्वद्वारैव सर्वत्र प्रातिपदिकार्थस्यैव यागादेर्भावनायामुद्देश्यत्वम्, न तु कर्मत्वसंसर्गेण विभक्त्यर्थसंप्रदानत्वस्येति विभाव्यते, अत एव न मैत्रावरुणादीनामपि संप्रदानत्वेनोद्देश्यत्वम्, अपि तु तत्त्वेन गुणत्वेऽपि पदान्तरकल्पनया तद्धर्मस्यैव तदित्युक्तम्, तदाऽस्तु अत्र चतुर्थविधिप्रकारस्यापि त्यागेन विशिष्टदानान्तरविधिरेव । न च तथापि चतुर्थ्या कर्मत्वलक्षणया अध्वर्योरेवोद्देश्यत्वेन प्राकाशभावना प्रति अन्वयोपपत्तेर्न दानान्तरविधिकल्पना युक्ता इति वाच्यम्, तथात्वे दानस्यैव नित्यप्राप्त-

भावेनानुवादानुपपत्ते । अत. पशुविधिप्रकारदृष्टीकारेणापि दानान्तरमेव सम्प्रदानप्रानाशोमयविशिष्ट पदान्तरकल्पनया विधेयसामर्थ्यानुरोधेन अभ्यर्थ्यानतिजनकत्वेन विधीयते, कार्यान्तरकल्पनाया प्रमाणाभावात् । अतश्च तज्जनकीभूतप्राकृतदानाभ्यासस्यैव निवृत्त्या तदीयमात्रस्यैव निवृत्ति. । वस्तुतस्तु श्यावदतिदेशप्रवृत्ते. पूर्वप्रवृत्त्यङ्गीकारेणोक्तदानाभ्यास एव उक्तविशेषणद्वयविशिष्टो विधीयते, पूर्ववदभ्यर्थ्यानतिसिद्धयर्थमिति प्राकृतदान निवृत्त्यभावेऽपि प्राकृततद्भागनिवृत्ति । सर्वथा न प्राकृतकृत्स्नदक्षिणानिवृत्तिरिति सिद्धम् ।

मण्डन-- ' प्रापशशोषे न तु सर्वबाध । '

शंकर-- ' प्राकाशौ भागबाधकौ । '

* प्राकाशन्यायेन श्यामोऽश्व अश्वभागस्यैव बाधक इति पूर्व पक्ष । वि १०।३।१८.

* प्राकाशशब्दवाच्य प्रदीप. । सु पृ. ७६१.

' प्राकारयं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ' इति न्यायः । यत्र निकृष्टजातीयोऽपि गुणी स्वगुणोदयेन ख्याति यायात् नताय प्रचरतीति । माहस्री ७९१.

* प्राकृतमङ्गं यत् विकृतौ श्रूयते, तदेव विकृतिः निराकाङ्क्षत्वात् स्वीकरोति । टुप्. १०।३।१।२. * प्राकृत अर्थलोपेन बाध्यते, यथा कृष्णलचरौ अवघात प्राकृतः चोदकप्राप्त. वैतुष्यरूपार्थलोपेन, यथा वा स्वयदिवे बर्हिषि स्वन प्राभिरूपार्थलोपेन । बाल. पृ. १३१, * प्राकृत पर्युदासेन बाध्यते, यथा होतृवरण प्राकृत चोदकप्राप्त विश्वाया ' न होतार वृणीते ' इति पर्युदासेन । पृ. १३१. * प्राकृत पूर्वं वैकृतमन्ते, यथा नक्षत्रेष्टिषु उपहोमेभ्य प्राक् नारिष्ठहोमा । ५।२।९।१७-२०. * प्राकृत प्रत्याम्नानेन अनारभ्याधीतेन बाध्यते, यथा ' ■ इष्टया० ' इत्यनारभ्यविहितेन स्वस्थाल्यत्वेन निकृतिषु अतिदिष्टाहकाल्यत्वम् । बाल. पृ. १३२, * प्राकृत प्रत्याम्नानेन आरभ्याधीतेन बाध्यते, यथा कुशमयं बर्हि. प्राकृत चोदकप्राप्त श्येनादौ शरमयेन आरभ्याधीतेन । पृ. १३१, * प्राकृत यत् वैकृतेन बाध्यते तथापि पत्तदेव कारण ' न अनाधित्वा पूर्वविज्ञान वैकृत संभवति ' इति । प्राकृत च पूर्वम् । यतो विकृतौ तदपेक्षा । भा. ६।५।१९।५४. * प्राकृत वैकृतेन बाध्यते, प्रमबाधोऽत्र । वा. ३।३।७।१४ पृ ८६०.

प्राकृताच्च पुरस्तायत् । ५।२।११।२२॥

अग्निचयने ' सावित्राणि जुहोति ' इति सावित्रहोमा आम्नाता. । ततो महता प्रबन्धेन उख्यासंभरणादिकमाम्नातम् । पश्चात् ' आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाण ' इति दीक्षणीया आम्नाता । तत्र प्रकृतौ दीक्षणीया क्रत्सोपकारत्वात् चयने शीघ्रं स्मर्यते, तस्मात् अग्निचयने दीक्षणीया प्राक् कर्तव्या, पश्चात् सावित्र होमादय. इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । चकार: ' स देश. स्यात् ' इति पूर्वसूत्रस्थस्यानुकर्षणार्थ. । यत् सावित्रहोमादि प्राकृतात् दीक्षणीयाकर्मण पुरस्तात् तस्य स एव दीक्षणीयायाः प्राचीन एव देशः स्यात्, न तु दीक्षणीयाया अन्ते । अग्निकाण्डे चोदकप्राप्तस्यापि दीक्षणीयादेः सावित्रादिभ्य ऊर्ध्वं पुन पाठात् । तस्मात् सावित्रादयः पूर्वं पश्चाद्दीक्षणीया । के

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् । १०।४।१४।२६॥

प्राकृतस्य प्रकृतिगतस्य देवताऽभिधानस्य विकृतौ गुणश्रुतौ गुणस्य श्रवणे सति सगुणेन देवताशब्देन आवाहनादिनिगदेषु अभिधान स्यात् । तथा कर्तव्यम् । यथा पवमानहविःषु ' अग्निं पवमानमावह ', ' अग्निं पावकमावह ', ' अग्निं शुचिमावह ' इत्यादि वक्तव्यम् । न तु निर्गुण केवलमग्निशब्दम् । इति सिद्धान्त ।

अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत् । २७ ॥

पवमानेष्टिषु ' अग्नये पवमानाय शुष्ट निर्वपामि, अग्नये पावकाय, अग्नये शुचये ' इतिरीत्या उक्तेन प्राकृतस्य देवताभिधानस्य विकृतौ अविकार स्यात् विकारो न स्यात् निर्गुणमभिधान कर्तव्यम् । वाशब्द इतरपक्षनिरासार्थ. । अर्थशब्दानपायात् अर्थश्च शब्दश्च अर्थशब्दौ, तयो अनपायात् अपायाभावात् । तत्र अर्थो देवता शब्दश्च अग्निशब्द । अग्निशब्दस्तावत् उच्चारणीय एव । अथ पवमानादिगुणशब्दे सति असति वा सैव देवता

भवति, न तस्य अपायः । द्रव्यवत् यथा 'या वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत भूतिकामः' इति अजावशाशब्देन चोदितेऽपि कर्मणि छागशब्देन निगमा भवन्ति, न च तत्र अर्थस्य शब्दस्य अपेतो भवति तद्वत् । तस्मादविकारः स्यात् इति पूर्वः पक्षः ।

आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् । २८ ॥

वाशब्दः पूर्वपक्षनिरासार्थः । आरम्भासमवायात् देवतायाः स्वेन रूपेण कर्मारम्भेण समवायस्य सम्बन्धस्य अभावात्, अर्थस्य देवतारूपस्य च श्रुतिसमवायित्वात् 'अग्नये पवमानायाष्टाकपालं निर्वपेत्' इति श्रुत्या देवतारूपस्य अर्थस्य समवायित्वं साक्षात्सम्बन्धत्वं अभिधीयते । तस्मात् चोदितेन विहितेन सगुणदेवतापदेन अर्थस्य देवतारूपस्य अभिधानं आवाहननिगदादिषु स्यात् । सगुणेन अवचने च पवमानादिगुणवाचकपदसहितेन अग्निपदेन अनभिधाने तु गुणशासनं विशेषणविधायकं पवमानादिपदं अनर्थकं स्यात् । तस्मात् सगुणेन अग्निपदेन निगदादिषु देवताया अभिधानं कर्तव्यम्, न निर्गुणेन इति सिद्धान्तः । के.

द्रव्येष्वारम्भगामित्वादर्थेऽविकारे सामर्थ्यात् । २९ ॥

पवमानेष्टिषु विशेषणपदरहितेन केवलेनाग्निपदेन आवाहनादिनिगदेषु देवताऽभिधानं कर्तव्यं इति पूर्वपक्षे 'द्रव्यवत्' इति पदेन अत्रावशाद्दृष्टान्त उक्तः (१०।४।१४।२७) तं वैधर्म्येण निरस्यति । 'या वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत' इति विहिते पशुयागे अजाद्रव्यं स्वेन रूपेण समवायं गच्छति । तदेतदाह द्रव्येषु आरम्भगामित्वात् इति । अर्थे अविकारेऽपि छागरूपे द्रव्ये विकाररहितेऽपि अजावशारूपविशेषणरहिते केवले छागशब्दे उच्चारितेऽपि इत्यर्थः । सामर्थ्यात् अभिधानसामर्थ्योपपत्तेस्तत्राविकारो युक्तः । प्रकृतपवमानेष्ट्यादौ तु देवतायाः स्वरूपेण कर्मसंबन्धाभावात् चोदनानुसारेण सगुणेनैवाभिधानं कर्तव्यं इति युक्तः सिद्धान्तः ।

कृतद्रव्ये तु द्रव्येषु द्रव्यनिर्देशात्मके अर्थे कार्ये कर्तव्ये अविकारः प्रकृतिः अवैषम्यं आश्रयणीयं छागशब्देनैव द्रव्यं निर्देष्टव्यम् । न तु वशाशब्देन । सामर्थ्यात् चोदकस्य संगतार्थकत्वात् । वशाशब्देन द्रव्यनिर्देशाभावेऽपि विधौ वशाशब्दस्य संगतार्थकत्वात् इत्यप्यर्थः । कुतः । आरम्भगामित्वात्, आरम्भः उपाकरणेन अजादिद्रव्यपरिग्रहः, तद्गामित्वात् । विधौ वशाशब्दाभावे हि अवशाऽपि परिगृह्येत, तद्व्यावृत्तये वशाग्रहणमावश्यकम् । इति व्याख्यातम् । के.

* 'अग्नये पवमानायाष्टाकपालं निर्वपेत्' इति विहिते त्रिभिः पवमानादिगुणशब्दसहितेन अग्निशब्देनाभिधेयः केवलेन वेति संदेहे 'प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात्' इति सिद्धान्तेनोपक्रम्य, 'अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत्' (२७) इत्यनेनार्थस्याग्नेः चोदकप्राप्तस्य चाग्निशब्दस्य केवलाभिधानेऽपि अनपायात् यथा 'या वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकामः' इत्यजाशब्देनापि विहिते द्रव्ये वशाशब्दवाच्यवन्ध्यात्वगुणयुक्ते च अविशेषप्राप्तौ न छागशब्देन निर्गुणेनाभिधानं तथेहापि अविकारः स्यात् इति पूर्वपक्षमुपन्यस्य 'आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात्' (२८) इत्यनेन अर्थस्य देवतायाः श्रुतिसमवायित्वात् आरम्भेण स्वरूपेण कर्मणि असमवायात् गुणानभिधाने च गुणशास्त्रस्य आनर्थक्यापत्तेः चोदितेन सगुणेन अभिधानं स्यात् इत्येवं निरस्य 'द्रव्येष्वारम्भगामित्वादर्थे विकारसामर्थ्यम्' (२९) इत्यनेन आरम्भेण स्वरूपेण द्रव्येषु क्रियागामित्वात् विकाररहितस्यापि शब्दस्य द्रव्यरूपेऽर्थे सामर्थ्यमस्ति इति वैधर्म्यं वदता द्रव्येषु अर्थरूपेण कर्मणि समवायः अभ्युपगतः । सु. पृ. ४६८–४६९. * प्राकृतानामङ्गाना विकृतौ कुलायकना वाच. । १०।३।१।१–३ वर्णकं १.
* प्राकृतानामङ्गाना वैकृतेभ्यः प्राक् प्राप्तिः 'निर्देशात्तु विकृतावपूर्वस्यानधिकारः' (३।८।१६।३२) इत्यत्र स्थितं । सु. पृ. ६३४. प्राकृते यत्ते यागराजे व्यापारः

प्रयोगवचनेन कल्पितः सगृहीतश्च विद्यते । मा, १०।१।२।२.

● प्राकृतधर्माः विकृत्यपूर्वपदार्थानां नाङ्गम् । यूपावटस्तरणबर्हिर्न्यायः । बर्हिर्न्यायः । ३।८।२६।२२.

● प्राकृतधर्माणां विकृतावतिदेशो कार्यं नियामकम् । वि. ३।८।१७.

● प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदऊहो मौद्गे चरौ । ९।३।२।३.

● प्राकृतवैकृतयोः पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाधः । टुप्. ६।५।१९।५४. ● प्राकृतवैकृतयोर्दैव युगपद्य संभवः, तत्र वैकृतेन प्राकृत बाध्यते । भा. १०।३।४।२४.

● प्राकृतव्रीह्यादिस्थानापन्नेषु नीवारादिषु व्रीह्यादिधर्माणामूहेनानुष्ठानम् । ९।२।१९।२९.

● प्रागभावः । 'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।' श्लोवा. अभावप्रामाण्यवादे २. ● प्रागभावे प्रमाणाभावः । न च प्रागभावानङ्गीकारे उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः, आवत्तन्तुमते द्वितन्तुकपटोत्पत्तिप्रसङ्गश्च इति वाच्यम् । तद्यत्नैरेव प्रतिबन्धकत्वाङ्गीकारात् । अकल्प्तप्रागभावनहेतुत्वकल्पने गौरवात् ।

के चित्तु प्रागभावो नाभावरूप. । किन्तु आवश्यकार्यरूपघटोत्पत्तिपूर्वकालरूप एव प्रागभावः । तस्य उत्तरकालमेव नाशात् अनित्यत्वम् । अत एव घटो भविष्यति इति प्रतीतिः । नहि 'प्रागभावोऽस्ति' इति कश्चित् प्रत्येति । अतः प्रागभावो नास्ति इति वदन्ति । मणि. पृ. २९.

※ प्रागाथिकं तु । ९।२।६।२५ ॥

अग्निष्टोमे 'बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवति' इति श्रूयते । रथंतरस्य 'अभि त्वा शूर नोनुमः' इति बृहती योनिः, 'न त्वावाँ अन्यः' इति च पङ्क्तिः उत्तरा । ते एते द्वे ऋचौ मिलित्वा प्रगाथो भवति । एवं बृहतो योनिः 'त्वामिद्धि हवामहे' इति बृहती, 'स त्वं नश्चित्र वज्रहस्त' इति पङ्क्तिः उत्तरा, ते द्वे मिलित्वा प्रगाथो भवति । अनयोः बृहद्रथंतरयो. गानं त्रिरभ्यस्तछन्दस्कयोः द्वयोरेव ऋचोः स्थाने भवति । तदुक्तं 'न वै बृहद्रथंतरमेकच्छन्दो यदयोः पूर्वा बृहती ककुभावुत्तरे' इति । उत्तरे द्वे ऋचौ अक्षरतः ककुभौ भवत. इति । अत एव विचार्यते यत् उत्तराग्रन्थे बृहद्रथंतरयोः येयं उत्तरा ऋक् पठिता तामपनीय तस्याः स्थाने द्वे वाक्यनिक्यौ ककुभौ आगमयितव्ये न वेति । आगमने तु 'ककुभावुत्तरे' इति यदुक्तं तत् सार्थकं स्यात् नान्यथा । अत्र सिद्धान्तमाह । प्रगाथिकं गानं बृहद्रथंतरयोः कर्तव्यमिति । बृहतीपङ्क्त्योरेव प्रग्रथनेन तिस्र. ऋचः संपादनीयाः । संपादिते च उत्तरे द्वे ककुभौ भवतः तथा सति 'ककुभावुत्तरे' इत्यपि उपपन्नम् । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे 'त्रिच्छन्दा माध्यंदिनः पवमानः पञ्चसामा' इत्युक्तम् । माध्यंदिने पवमानस्तोत्रे गायत्री बृहती त्रिष्टुप् इति त्रीणि छन्दांसि भवन्ति । गायत्रम्, आमहीयवम्, रौरवम्, यौधाजयम्, औशनं चेति पञ्च सामानि भवन्ति । तत्र रौरवयौधाजययोर्विचारः । तयोः 'पुनानः सोम धारया' इति प्रथमा बृहती, 'दुहान ऊधर्दिव्यं मधु' इति उत्तरा विष्टारपङ्क्तिः । किमेतां विष्टारपङ्क्तिं परित्यज्य तत्स्थाने अन्यतः उत्पत्तितो बृहत्यौ आगमय्य तासु गानं कर्तव्यं उत बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन तिस्रो बृहतीः कृत्वा तासु गानं कर्तव्य इति विचारे सिद्धान्तमाह । प्रगाथिकं गानं कर्तव्यमिति । नोत्पत्तितो बृहत्यौ आगमयितव्ये इति ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे 'पञ्चच्छन्दा आर्भवः पवमानः सप्तसामा' इति श्रुतम् । तृतीयसवनगते आर्भवे नाम पवमानस्तोत्रे गायत्री, अनुष्टुप्, उष्णिक्, ककुप्, जगती इति पञ्च छन्दांसि भवन्ति । गायत्रम्, संहितम्, श्यावाश्वम्, आन्धीगवम्, सफम्, पौष्कलम्, काव इति सप्त सामानि च भवन्ति । अत्र श्यावाश्वान्धीगवयोः साम्नोः 'पुरोजिती वो अन्धसः' इति प्रथमा अनुष्टुप्, 'यो धारया पावकया' इति द्वितीया गायत्री, 'तं दुरोषमभी नरः' इति तृतीया गायत्री । एवमत्र आनुष्टुभः प्रगाथ. । अत्र गायत्रीद्वयं परित्यज्य अन्यत एव द्वे उत्पत्तितः अनुष्टुभौ आगमय्य तासु

गानं कर्तव्यं उत पठितयोर्ऋचोरेव अनुष्टुप्प्रकारं प्रग्रथनेन तृचं संपाद्य गानं कर्तव्यं इति विचारे सिद्धान्तमाह । प्रागाथिकमेव गानं कर्तव्यमिति ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तत्र प्रगाथात्मकयोः द्वयोर्द्वयोर्ऋचोः पादप्रग्रथनेन जायमाने तृचे एव गानम्, न तु प्रथमे प्रगाथे द्वितीयप्रगाथस्य प्रथमा ऋचमुपादाय, एवमुत्तरत्रापि कृत्वा जायमानेषु तृचेषु गानम् ।

स्वे च । २६ ॥

सिद्धान्ते हेत्वन्तरं आह । एवं सति स्वे छन्दसि गानं कृतं भवति । उत्तरपाठेन हि पङ्क्तिरेवोपदर्शिता तस्मात् ककुभात्मके प्रगाथे एव गानम् ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमानस्तोत्रे रौरवयौधाजययोः साम्नोर्गानं स्वे स्वीये बृहतीविष्टारपङ्क्त्यात्मके प्रगाथे एव कर्तव्यम् ।

अथ तृतीयं वर्णकम् । श्यावाश्वान्धीगवयोः स्वीये प्रगाथे एव गानं कर्तव्यम् ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तत्र स्वे प्रगाथे एव पादप्रग्रथनेन संपादिते तृचे गेयम् ।

प्रगाथे च । २७ ॥

हेत्वन्तरमाह । एवं सति प्रगाथे गानं भविष्यति । प्रगाथशब्द उपपन्नो भविष्यति । प्रग्रथने कृते सति प्रगाथः संपद्यते नान्यथा ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमाने रौरवयौधाजययोः साम्नोर्गानं बृहतीविष्टारपङ्क्त्यात्मके प्रगाथे एव कर्तव्यं न तु उत्पत्तिबृहत्यौ आनयितव्ये ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे आर्भवे पवमाने श्यावाश्वान्धीगवयोः साम्नोः आनुष्टुभे प्रगाथे एव गानं कर्तव्यम् । न तु उत्पत्तिः अनुष्टुभौ अन्यत आनेतव्ये ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तत्र प्रगाथात्मके स्वीये पादप्रग्रथनेन संपादिते तृचे एव गेयम् ।

लिङ्गदर्शनाव्यतिरेकाच्च । २८ ॥

अग्निष्टोमे बृहद्रथंतरे सामनी प्रथमा बृहती द्वितीया पङ्क्तिः इति उत्तराग्रन्थपठितयोः द्वयोरेव ऋचोः गातव्ये । प्रग्रथनेन च ऋक्त्रयं संपद्यते । इति सिद्धान्तितः । तत्र हेत्वन्तरमाह । "एषा वै प्रतिष्ठिता बृहती या पुनःपदा, यत्र पादं पुनरारभते तस्मात् वत्सो मातरमभि हिंकरोति" इति अर्थवादे पुनःपादारम्भलिङ्गदर्शनस्य अव्यतिरेकात् गत्यन्तराभावात् । किंवा व्यतिरेकः असंसर्गः अव्यतिरेकः संबन्धः प्रग्रथनेन स्वीयाभ्यां ऋग्भ्यामेव संबन्धः । लिङ्गदर्शनेन स्वीयाभ्यामेव ऋग्भ्यां संबन्धस्य ज्ञानात् नान्ये उत्पत्तिककुभौ आनयितव्ये किन्तु प्रगाथे एव प्रग्रथनेन संपादिते तृचे बृहद्रथंतरे गातव्ये इति सिद्धान्तः । प्रग्रथनं तु 'अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥' इति यथाश्रुतबृहत्या रथंतरं गेयम् । 'ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो न पार्थिवः । न जातो न जनिष्यते ॥' इति द्वितीयायां प्रग्रथनेन संपादिताया ककुभि रथंतरं गेयम् । 'न जातो न जनिष्यते अश्वायन्तो मघवन्निन्द्र वाजिनः । गव्यन्तस्त्वा हवामहे ॥' इति प्रग्रथनेन संपादितायां द्वितीयायां ककुभि आदितः तृतीयाया रथंतरं गेयम् । इति ।

बृहत्साम्नोऽपि इत्थमेव प्रग्रथनरीतिर्ज्ञेया ।

अथ द्वितीयं वर्णकम् । अग्निष्टोमे माध्यंदिने पवमाने रौरवयौधाजययोः साम्नोः गानं बृहतीविष्टारपङ्क्त्योः प्रगाथे प्रग्रथनेन बृहतीतृचात्मके संपादिते कर्तव्यं इत्यत्र अव्यतिरेकेण लिङ्गं दर्शयति 'पञ्चनिधनं माध्यंदिनं सवनम्' इति । यदि प्रग्रथनेन बृहतीकारं गानं क्रियते ततः सर्वस्मिन् सवने या ऋचः समाम्नाताः ता. परिमिताः सन्ति । उत्पत्तिबृहत्योः आनीयमानयोस्तु अभ्यधिका भवेयुः । तस्मात् अन्यतो नानेतव्ये । प्रग्रथनमित्थम्— 'पुनानः सोम धारयापो वसानो अर्षसि । आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥' इति बृहती पठितैव गातव्या । 'उत्सो देव हिरण्यय उत्सो देव हिरण्ययः । दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत् ॥' इति संपादिता बृहती गातव्या । 'प्रत्नं सधस्थमासदत्

त्र्यन्यमाददत् । आनुष्टुभ घर्मो वानमांसि नृभिर्वृतो विवस्वः ॥ ' इति समाप्तिः तृतीया बृहती गातव्या इति ।

अथ तृतीयं वर्णकम् । अग्निष्टोमे आर्भवे पवमाने यज्ञायज्ञीयवतोः आनुष्टुभे एव प्रगाथे गानं कर्तव्यं इत्यत्र अभ्यतिरेको लिङ्गं भवति ' चतुर्विंशावतिरेकम्यः तृतीयसवनं एव कुर्युः ' इति । अस्यानुष्टुभोद्यमस्ते तु एतल्लिङ्गं उपपद्यते । अन्यत्र तु ' पुरोजिती वो अन्धसः ' इत्यनुष्टुप् यथापाठं गातव्या । तस्या एव चतुर्थं पादं पुनरादाय ' यो धारया पावकया ' इत्यनया गायत्र्या सहैव गेयम् । पुनस्तस्याः चतुर्थं पादं पुनरादाय ' तं दुरोषं ' इत्यनया सहैव गेयम् । इति ।

अथ चतुर्थं वर्णकम् । गवामयने अभीवर्तं ब्रह्मसाम । तत्र द्वयोर्दशे प्रगाथयोरेकस्योः पादप्रक्षेपेण प्रगाथिते तृचे गेयम् । न तु प्रथमस्य प्रगाथस्य ऋग्द्वयं द्वितीयस्य च प्रगाथस्य प्रथमा ऋचं गृहीत्वा प्रागन्ते तृचे गेयम् । लिङ्गदर्शनाद्यतिरेकात् ' अन्या अन्या ऋचो भवन्ति ' इति ऋगन्यत्वविधायकलिङ्गदर्शनस्य अनतिरेकात् अविरोधात् । के.

• प्राग्वंशः ज्योतिष्टोमे पत्नीशाला । मु. पृ. ६४.

• प्राग्वंशे आतिथ्या क्रियते । ( प्राचीनवंशा चतुर्दिक्षु संश्रया दक्षिणतो वर्गान्ती चतुर्दिक्षु अवलिम्बन्मध्यवर्ती षोडशप्रक्रमन्दीर्घा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा । तस्याः प्राच्यः दक्षिणतो गार्हपत्यागार भवति । एकम् पत्नीशाला । इत्र शालि प्राग्वंशः इत्युच्यते ) । वि. १२।२।२०.

• प्राग्वंशदेशः आतिथ्याया स्थलीन सम्बन्धः, नौतद्वेदिदेशः । भा. १२।१।२०।४४.

• प्राची दिक् इति न प्रत्यक्षेण गृह्यते, नानुमानेन । शब्दादेव गृह्यते । टुप्. १०।८।११।२३ । ननु प्रत्यक्षैव दिक् । सत्यम्, प्रमाणेन एतदुक्तमं इत्यदोषः । रत्न.

• ' प्राचीनं हरति ' इति शब्दाद्दो न दिग्वादः । ४। २।१. ' शब्दादः ' इत्यत्र द्रष्टव्यम् । • ' प्राचीनं हरति ' यूपस्य प्राचीना शाखानिर्यः । न तु प्राचीदिशं प्रति इति । यदिदमस्तु दिग्वदन्तु । भाट्ट. ४।२।२.

• ' प्राचीं देवा अभजन्त ' इति ज्योतिष्टोमे दिग्विभाग वाक्ये विधिरर्थवादो वा इति संशयः । अर्थवादः इति सिद्धान्तः । भा. ३।४।२।१०. • प्राच्यां दिशि ऐन्द्रीगन्धदेशः, इन्द्रस्य पुरस्ताद्विहारेषु प्राचीदिक्स्थत्वस्मरणात् । मु. पृ. १०८८.

• प्राकृत-कठुत्व-सततत्वानामभावे समुच्चयः, विप्रकर्षत्वात् । भा. १२।३।३।९.

• ' प्राङ्मुखोऽचामि सुग्रीव ' । अर्थं नियमविधिः पुरुषार्थः । बाल. पृ. २४.

• ' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इति देशस्य नियमविधिः, नानुवादः । भा. ४।२।१।२३-२४.

• प्राचीनवंशः नाम मण्डपो यागिकी वैदिमन्तर्माग्न्य अवस्थितो ज्योतिष्टोमे । वि. ३।७।१, • प्राचीनवंशः । यस्य मण्डपविशेषस्य दारविकाः प्रागग्राः भवन्ति सः । ३।४।६, • प्राचीनवंशे पश्चिमवह्नेः पूर्वप्रसिद्धमुख्याहवनीयस्य प्राग्बहिः इति पूर्वोत्तरसञ्ज्ञा । १२।१।६, • प्राचीनवंशे पूर्वमध्यस्थापित. दोनो वैसर्जनहोमपूर्वं हविर्धाने प्रणीयते । ५।१।१।४, • प्राचीनवंशे समानयन्ति क्रीतं सोमम् , यत्रैव अवस्थाप्य । ४।३।११.

• प्राचीनवंशगतो वह्निः वैसर्जनहोमपूर्वं अग्नीषोमीये प्रणीयते । वि. ५।१।१४.

• प्राचीनवंशशालायां पूर्वभागे वर्तमानः आहवनीयः प्राग्बहुलीनो भाग । वि. १२।१।९.

• प्राचीनावीतं दक्षिणेतरस्कन्धोपरिन्यासलक्षणम् । मु. पृ. १३५१. • ' प्राचीनावीतं निपातम् ' इति दर्शपूर्णमासप्रकरणस्य वाक्ये प्राचीनावीत धारोविधानम्, न तु पिण्डपितृयज्ञस्य । नि. ३।४।१, • प्राचीनावीतं पैतृके कर्माणि । ३।४।१.

• प्राच्याः अन्यदेशे निर्गतास्त्रवालिकाः होत्रकाद्येन कुर्वन्त्येव । भा. १।३।७।१९. • प्राच्यैरेव होत्रकाः कर्तव्या इति न नियम, किन्तु सर्वधर्मः सः । १।३।७।१५-२३. • प्राच्यैः होत्रकाद्याः क्रियन्ते । होत्रका नाम वषट्कर्तारः । वि. १।३।८.

● **प्राजहितः** प्राचीनवंशस्य पश्चिमतश्चिह्नरूपः मुख्य-गार्हपत्य एव । इयं च पूर्वाचार्यसंज्ञा । वि. १२।१।६. ● प्राजहितेऽग्नौ मासाग्निहोत्रमयनम्, न गार्हपत्य इत्यत्र कौण्डपायिनामयने । १२।१।६।१२. ● प्राजहिते एव अग्निहोत्रपाकः पशोः शूलहरणत्वे । संकर्ष. ३।५।२५. मीको. पृ. ९५ 'अग्निहोत्रपाकः पशोः०' इत्यत्र द्रष्टव्यम् ।

● **प्राजहितपादः** 'स वैव स्यात्' इति ज्योतिष्टोमे । संकर्ष. ३।२।२१. मीको. पृ. २८३० 'ज्योतिष्टोमे स वैव स्यात्' इत्यत्र द्रष्टव्यम् ।

● **प्राजापत्यं** अग्नीषोमीयं वैष्णवं वेति दर्शपूर्णमासयोरुपांशुयाजाज्यम् । भा. ५।४।६।२२. ● प्राजापत्यं वैष्णवं वा उपांशुयाजाज्यं ब्राह्मणेन सोमात् प्राक् कर्तव्यम् । अग्नीषोमीयं तु उपांशुयाजाज्यं सोमात् प्राक् न कर्तव्यं इति उपांशुयाजस्य न उत्कर्षः । ५।४।६।१९–२२. ● प्राजापत्याः सप्तदश पशवो यद्यपि ऋतुपशुभिः सहोपक्रान्ताः तथापि पर्यग्निकरणोत्तरं चिरं विलम्ब्य ब्रह्मसामकाले आलभ्यन्ते, ऋतुपशवस्तु प्रातरालभ्यन्ते । तत्र 'दैव्याः शमितारः' इत्यध्रिगुप्रैष आवर्तनीयो न वेत्यत्र । वि. ११।४।११. ● प्राजापत्याः सप्तदश पशवः वाजपेये । तत्र एते सप्तदशैव यागाः, न तु सप्तदशपशुगुणकं एकं कर्म । २।२।७।२१. ● 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति श्रूयते । तस्मिन् हिरण्ये ओदनस्य निष्पत्त्यसंभवात् । ८।१।१८।३५–३९. ● 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' 'चत्वारि चत्वारि कृष्णलान्यवद्यति' । इति कृष्णलानां हविष्ट्वम् । भा. १०।१।१०।४०, ● प्राजापत्यान् पशून् प्रकृत्य 'तान् पर्यग्निकृतान् उत्सृजन्ति, ब्रह्मसाम्नि आलभन्ते' इति श्रूयते । तत्र पूर्वः पर्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थः । ११।२।१२।५१–५३. ● प्राजापत्यैः पशुभिः ऋतुपशूनां समुच्चयः वाजपेये । १०।८।३।६. 'वाजपेयोपदिष्टैः प्राजापत्यैः' इत्यत्र द्रष्टव्यम् । ● प्राजापत्यस्य उपांशुधर्मत्वं इति एकः पक्षः । 'प्रजापतिं मनसा ध्यायेत्' इति तूष्णींभाव एव प्रजापतिधर्मः इत्यपि पक्षः । वि. १०।८।१७. ● प्राजापत्यानां आलम्भः माध्यंदिने सवने ब्रह्मसामकाले श्रूयते । भा. ४।१।१४।३३.

☸ प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रम् ॥

पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत् तस्मात् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् । ११।२।१२।५१॥

भाष्यम्—वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'तान् पर्यग्निकृतानुत्सृजन्ति', 'ब्रह्मसाम्न्यालभते' इति । तत्र विचार्यते, 'तान् पर्यग्निकृतानुत्सृजन्ति' इति किं अयं कर्मशेषप्रतिषेधः, 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरचोदना, अथवा पूर्वः पर्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः, उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थं इति । किं प्राप्तम् ? कर्मोत्सर्गः । कर्मशेषप्रतिषेध इत्यर्थः । श्रुतिसामान्यात् आरण्यवत् । यथा 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इत्ययं कर्मशेषप्रतिषेध इत्युक्तम् 'शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्' ( ९।४।१३।५२ ) इति । तथा अन्या तुल्यैव श्रुतिः । किमत्रयोस्तुल्यत्वम् ? तत्र कर्माणि चोदितानि 'वसन्ताय कपिञ्जलानालभेत' इति । तेषु सर्वेषु प्राकृता गुणाः प्राप्ताः । तेषु प्राप्तेषु पर्यग्निकरणान्तं गुणजातं पुनः श्रुतम् 'पर्यग्निकृतानुत्सृजति' इति । निर्गुणं पुनर्वचनमितरपरिसंख्यापकं भवतीति कर्मशेषस्य प्रतिषेधकं विज्ञायते । एवमिहापि 'प्राजापत्यानालभेत' इति चोदितानां कर्मणां तथैव सर्वाङ्गेषु प्राप्तेष्विदं पर्यग्निकरणान्तस्य गुणजातस्य निर्गुणं पुनर्वचनं कर्मशेषस्य निवर्तकम् । अस्मादेवं तस्मात् 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरचोदना स्यात् । पूर्वापेक्षया ब्रह्मसाम्न्यालभते सप्तदश प्राजापत्यानिति ।

टुप्—'पर्यग्निकृतानुत्सृजन्ति' इति पर्यग्निकरणान्ताङ्गप्रतिषिध्यते । तथैते प्राकारया निराकाङ्क्षीक्रियन्ते पशुमेधीयान् । 'ब्रह्मसाम्न्यालभते' इति कर्मान्तरम् । तत्र यदेव द्रव्यदेवतं पूर्वेषु यागेषु तदेवानुपजन्ते ।

संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् । ५२ ॥

भाष्यम्— न वा कर्मशेषप्रतिषेध इति । किं तर्हि ? संस्काराणां प्रातःसवनात् तस्मादवसरात् प्रतिषिध्य ब्रह्मसाम्नि प्रतिप्रसव । किं कारणम् ? वाक्यैकत्वे क्रतुसामान्यात् । एकमिदं वाक्यम् ‘तान् पर्यग्निकृतानुत्सृजन्ति’ ‘ब्रह्मसाम्न्यालभते’ इति । कथं ज्ञायते ? आलभत इति द्रव्यदेवतस्याश्रवणात् । समाने च क्रतौ वाक्यैकत्वं भवति । तदा हि केवल आलम्भो वक्तव्य, द्रव्यदेवतस्योक्तत्वात् । अथ वाक्यभेदः स्यात्, तत्र पूर्वेण कर्मशेष प्रतिषिध्येत, परेण कर्मान्तरं चोद्येत । तत्र द्रव्यदेवतं वक्तव्यम् । ननु पूर्वोक्तं समस्त्येव इति । तत् तत्रैव कृतार्थत्वादिह न सम्बध्येत । तस्मादेकं वाक्यम् । न चैकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिध्यन्ते, परेण विधीयन्ते इत्यर्थभेदात् वाक्यभेद एव भवति । न हि ‘ब्रह्मसाम्न्यालभते’ इत्युक्ते अर्थादेव पर्यग्निकरणान्तं उत्सर्गं सिद्ध । स न विधीयते । तमनूद्य आलम्भ केवल उत्कृष्येतेति नास्ति क्रतुसामान्ये वाक्यभेद ।

टुप्— यथावसरं प्राप्ता (पर्यग्निकरणोत्तरकाल आलम्भादय) संस्कारा अस्मिन् काले न कर्तव्या (किन्तु ब्रह्मसाम्नि) इत्येवमपि वाक्यार्थे उपपद्यमाने अङ्गोत्पत्तिविधानं न गृह्णीम, (तथा सति मिथ कर्मद्वये अस्य सन्निधानाभावात्) वाक्यभेदात् (ततश्च कर्मभेद, कर्मभेदाददृष्टभेद इति) अदृष्टकल्पनाभयाच्च । यदा हि आलम्भोऽप्यस्मिन् काले विहित तदा न्यायादेव सर्वसंस्काराणामुत्कर्षात् क प्रसङ्ग अन्यस्मिन् (पर्यग्निकरण) काले संस्काराणाम्, येन प्रतिषिध्येरन् । (तस्मादुत्कर्षमात्रविधिरिति एकवाक्यता । अत न पर्यग्निकरणान्त माध्यंदिने पुनरुत्सर्जनीयम्) ।

वपाना चानभिघारणस्य दर्शनात् । ५३ ॥

भाष्यम्— ‘छ्यया वा एतर्हि वपा यदनभिघृता, ब्रह्म वै ब्रह्मसाम, यद्ब्रह्मसाम्न्यालभते तेनास्यास्तेनाभिघृता’ इति । यदि संस्कारप्रतिषेध, ततो जुहा सवनीयप्रचारेण रेचितत्वात् प्रयाजशेषो नास्ति । तद् भावादनभिघृता युज्यते । अथ कर्मशेषप्रतिषेधस्ततो ब्रह्मसाम्न्यालम्भ कर्मान्तरे । तत्र प्रयाजा पुनरिज्यन्ते । तेषां शेषोऽस्ति । तेनाभिघारणं स्यात् । अनभिघारणदर्शनं नोपपद्येत । तस्मादपि संस्कारप्रतिषेध ।

टुप्— यद्यपि ‘ब्रह्मसाम्न्यालभते’ इति कर्मान्तरम्, तथापि पशुपुरोडाशस्येव (उत्कृष्टाना कर्मान्तराणामपि ‘पशोश्च विप्रकृष्टत्वमध्ये विधानात्’ इति न्यायात्) प्रासङ्गिका प्रयाजा । तस्माद्देशदर्शनमयुक्तम् । द्वयोरपि (वादिनो प्रयाजाभावेन अनभिघारणस्य) तुल्यत्वात् । तत्र केचित् वर्णयन्ति । तेषां (पशूनाम्) द्वौ पक्षौ । एक पक्षो (आश्विनग्रहग्रहणानन्तरमनुपशुमि सहोपाकृताना पशूना पर्यग्निकरणान्तं कृत्वा तत उत्सृज्य) ब्रह्मसामकाले आलम्भ । द्वितीय सह क्रतुपशुमि समाप्ति । अस्मिन् द्वितीये पक्षे वपानामभिघारणं भिद्यते (सन्निहितत्वात्) । यदा च माध्यंदिने (सवने) आलम्भ, तदा यत् तद्वपाभिघारणं तन्नास्ति, प्रयाजानन्तरे वपाया अनुत्पन्नत्वात् । वाक्यैकत्वे योऽसौ अभिघारणसंस्कारो नान्तरीयको हविषि अनुभूत तस्य इदानीं अविद्यमानत्वात् (दोषस्य) आशङ्कावचनम् (‘छ्यया वा एतर्हि’ इति) उपपद्यते । कर्मान्तरपक्षे तु (तदीयवपाभि) य धर्म (अभिघारणाख्य) अननुभूतपूर्व । तत्र (‘छ्यया वा एतर्हि’ इति) शङ्कैव नास्ति इति (दोषाशङ्कादर्शनात् अकर्मान्तरत्वं इति) । इदमपि नोपपद्यते । कर्मान्तरवादिन अपि हविषा चोदकेन संस्कार प्राप्नोति इति स इह नास्तीत्याशङ्कावचनमुपपन्नत एव इति । (तस्मादुक्तमेवेद लिङ्ग परमतत्वेन नेतव्यम् ।) ।

शा— अत पर्यग्निकरणान्ता प्राजापत्या ‘ब्रह्मसाम्न्यालभते’ इति ‘आज्येन शेष’ इतिवत् कर्मान्तरमिति मन्वानस्योत्तरम् ‘नान्यकर्मविधिर्युक्तोऽनेकादृष्टप्रकल्पनात् । वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना ॥’

सोम— पूर्वत्र कर्तृभेदादाग्निहोत्रहोमानामिव इह कालभेदादावृत्तिरित्युक्तिः सङ्गति । सूत्रे भुवि

सामान्यात् शब्दसारूप्यात् चोदनापृथक्त्वं कर्मान्तरविधिः इत्यर्थः ।

वि— ' पर्यग्निकरणे त्याग आलम्भो ब्रह्मसामनि । कर्मशेषनिषेधश्च कर्मान्तरविधिर्मवेत् ॥ किं चोत्सर्गोऽपशिष्टस्य, ह्यारण्यैर्किञ्चिदादिमः । अदृष्टवाक्यभेदाभेदैर्याभावेन चान्तिमः ॥ '

भाट्ट— वाजपेये प्राजापत्यान् पशून् प्रकम्य ' तान् पर्यग्निकृतानुत्सृजति ', ' ब्रह्मसाम्न्यालभते ' इति श्रुतम् । तत्र पूर्ववाक्येन ' पर्यग्निकृतानारण्यान् उत्सृजन्ति ', ' पर्यग्निकृतं पात्नीवतमुत्सृजन्ति ' इतिवत् पर्यग्निकरणान्ताङ्गरीतिविधानात् गृहमेधीयाज्यभागन्यायेनापूर्वत्वापत्तौ उत्तराङ्गानामकर्तव्यत्वापत्तेः ' ब्रह्मसाम्न्यालभते ' इति ' आज्येन शेषं संस्थापयति ' इतिवत् कर्मान्तरविधिः । तत्र च तद्वदेव ' सप्तदश प्राजापत्यान् पशून् ' इत्यस्यानुषङ्गेण द्रव्यदेवतालाभ । इति प्राप्ते, आश्विनग्रहग्रहणोत्तर क्रतुपशुभिः सहोपाकृतानां प्राजापत्यानां ब्रह्मसाम काले पर्यग्निकरणोत्तरक्रियमाणालम्भोत्कर्षमात्रविधाने ' ब्रह्मसाम्न्यालभते ' इत्यनेन कृते अर्थात् पर्यग्निकरणान्तस्य क्रतुपशुभि. सह करणावगतेः, तदन्ते उत्सर्गस्य प्राप्तत्वात् पूर्ववाक्यस्यानुवादतया अर्थवादत्वविषया उत्तरविध्येकवाक्यत्वसंभवादेः, पूर्वोत्तरवाक्ययोर्वाक्यभेदमङ्गीकृत्य पूर्वस्मिन् परिसंख्याफलकतृतीयनिक्षिप्ताङ्गीकरणे तूत्तरस्मिंश्च द्रव्यदेवताविशिष्टापूर्वकर्मविधिफलक—पशुविधिप्रकाराङ्गीकरणे गौरवापत्तेः, अतोऽत्र आलम्भोत्कर्षमात्रं विधीयते । तदा च तदुत्तराङ्गानामुत्कर्ष. ' तदादि वाऽभिसम्बन्धात् ' ( ५।१।१२।२४ ) इति न्यायादेव लभ्यते । तेन अग्नारण्यन्यायासंभवात् न पर्यग्निकरणान्तानामङ्गानामावृत्तिः ।

अत एव प्राजापत्यवपाना क्रतुपशुभि. सह करणपक्षे ' सह पशून् आलभते वपानामभिघृतत्वाय ' इति वदन् उत्कर्षपक्षे तन्मात्राभावं दर्शयति । पर्यग्निकरणान्ताङ्गरीतिविधाने तु वपानामेवाभावादभिघारणाभावदर्शनमसमञ्जसं स्यात् । एतद्भिप्रायकमेव च ' वपाना चानभिघारणस्य दर्शनात् ' इति सूत्रम् ।

' यत्तु भाष्यकारेण इदम् ' कथ्या वा एतर्हि वपा यदनभिघृता यद्ब्रह्मसाम्न्यालभते तेनाभिघृता. ' इति लिङ्गमुत्कर्षमात्रत्वे प्रयाजशेषस्य क्रतुपशुवपाभिघारणेन रिक्तत्वादनभिघृतत्वं युज्यते, कर्मान्तरत्वे तु तदर्थं पुनः प्रयाजकरणात् तेनैव तद्वपाभिघारणोपपत्तेरनभिघृतत्वदर्शनं न युक्तमिति व्याख्यातम्, तत् कर्मान्तरत्वपक्षेऽपि माध्यंदिनकालीनपशुपुरोडाशसवनीयहविर्याभिश्च सवनीयतन्त्रमध्यपातित्वेन प्रसङ्गितया प्रयाजपुन.करणानापत्तेरुपेक्षितम् ।

मण्डन— ' संस्कारो मार्यते पशौ । '

शंकर— ' ब्रह्मसाम्नि न कर्मभित् । '

* प्राजापत्यानां मतानां पुरुषार्थता । ४।१।३।३–६. * प्राजापत्ये शतकृष्णलचरौ औपधस्य विध्यन्तः । ८।१।१८।३५–३९. * प्राजापत्येषु एकादशिनीविष्वग्व्यतिषेधः यक्ष्यते ' तत्प्रकृतिगणेषु स्यात् ' ( ८।१।८।१९ ) इत्यत्र । सु. पृ. ८११. * प्राजापत्येषु क्रतुपशुषु च अग्निगो. आवृत्तिः कालभेदात् वाजपेये । भा. ११।४।२०।५४–५६. * ' प्राजापत्येषु च आम्नानात् ' ( १०।४।३।६ ) इत्यत्र वाजपेये उपदिष्टाना प्राजापत्यपशूनामतिदिष्टाना सवनीयपशूना च समुच्चय. उक्तः । भा. ४।१।१४।३२, बाल. पृ १७७. * ' प्राजापत्येषु चाम्नानात् ' इत्यादौ तन्त्रं तत्र अविरोधात् समुच्चयं वक्ष्यति ( इति शङ्का ) । वा ३।६।१६।४२ पृ. १०६३.

प्राजापत्येषु चाम्नानात् । १०।४।३।६॥

प्रकृतौ क्रतुपशवः समाम्नाताः । वाजपेये च ' सप्तदश प्राजापत्यान् पशूनालभते ' इति विहितम् । तत्र प्राजापत्येषु च आम्नानात् क्रतुपशुभि समुच्चय. । आम्नायन्ते हि वाजपेये क्रतुपशवः ' ब्रह्मवादिनो वदन्ति नाग्निष्टोमो, नोक्थ्यो, न षोडशी, नातिरात्र इति, अथ कस्मात् वाजपेयेन सर्वे यज्ञक्रतवोऽवरुध्यन्ते ! पशुभिरिति ब्रूयात् । यदाग्नेयं पशुमालभते अग्निष्टोम तेनावरुन्धे, ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनम्, सारस्वत्याऽतिरात्रम्, मारुत्या बृहत् स्तोत्रम् । एतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे ' इति समुच्चय दर्शयति ।

तस्मात् प्राजापत्यानां क्रतुपशुभिः समुच्चयः । ब्रह्माणामिवेति चशब्दार्थः । इति सिद्धान्तः । के.

● प्राजापत्येषु पशुषु कुम्भी तन्त्रम् । भा.११।४।११।३९. ● प्राजापत्येषु पशुषु 'छागस्य वपाया मेदसः' इत्यत्र 'छागानां वपानां मेदसाम्' इत्यूहः । बाल. पृ. १२७. ● प्राजापत्येषु पशुषु वाजपेये कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।८।३१. ● 'प्राजापत्येषु यागानामेकानेकत्वसंशये । कुतः प्रकृतिवच्छन्दाद्यविशेषेण निर्णयः ॥' वा. ३।२।११।२ पृ. ६५०.

● प्राजापत्याग्निप्रचारो वाजपेये सर्वसोमोपरम् । ११।३।१५।४८–५४.

● न च प्राजापत्याधिकरण– ( २।२।७।२१ ) पूर्वपक्षन्यायात् एकपदोपादानात् सहितानां हृदयादीनां एकदेवतासंबन्धोपपत्तेः कथमनेकयागत्वम् इति वाच्यम् । कौ. २।२।६।१७ पृ. २०९.

● प्राजापत्यन्यायः । प्राजापत्यपशुधर्माणां पदार्थानुसमयो वाजपेये । ५।२।१. मीको. पृ. २४३७ 'पदार्थानुसमयन्यायः' इत्यत्र द्रष्टव्यम् । ● एकदेवत्ये पशुगणे प्राजापत्यन्यायेन ( ५।२।१ ) देवतावदाना-दिना प्रत्येकमनुसमयः । अन्ते च तन्त्रेण देवताहोमः । न च प्रकृतौ एकस्य पशोः देवतावदाननयं आनन्तर्येण कृतमिति इहापि तथैव कार्यमिति शङ्क्यम्, प्राजापत्यन्यायेनैव पश्वेकत्वस्य प्रकृतौ आर्थिकत्वेन चोदकविशेषाभावात् । भाट्ट. ५।२।६.

● प्राजापत्यन्यायाभावः चोदकाभावे । बाल. पृ. ८७.

● प्राजापत्यपशूनां क्रतुपशुभिः सहकरणत्वपक्षः ब्रह्मसामकालीनत्वपक्षश्च । भाट्ट. ४।१।१४. ● प्राजापत्यपशूनां क्रतुपशूनां च वाजपेये प्रातःसवने सहोपक्रमः । प्रयाजानुष्ठानं उभयार्थं प्रातरेव । प्राजापत्यानां पर्यग्निकरणान्तमनुष्ठानं प्रातरेव, आलम्भस्तु माध्यंदिने ब्रह्मसाम्नि । तेषां प्रयाजाभिघारणं दुष्यते, अभिघारणस्य दोषप्रतिपत्तित्वात् । वि. ४।१।१४. ● प्राजापत्यपशूनां धर्मसाहित्यं प्रयोगवचनेन परिकल्प्यते । ५।२।१. ● प्राजापत्यपशूनां ब्रह्मसामकालीनत्वपक्षे प्रयाजशेषेणाभिघारणाभावः, 'सह पशूनालभते वपानामभिघृतत्वाय' इति लिङ्गात् । भाट्ट. ४।१।१४. ● प्राजापत्यपशूनां वपायाः अभिघारणापेक्षैव नास्ति, ब्रह्मसाममाहात्म्येनैव तद्वपानां स्निग्धतायाश्च अभिघृततायाश्च सिद्धत्वात् । अत एव श्रूयते 'शम्या वा एतर्हि वपा यर्हानभिघृता । ब्रह्म वै ब्रह्मसाम । यद् ब्रह्मसाम्न्यालभन्ते तेनाशम्यास्तेनाभिघृताः' इति । शम्याः रूक्षाः । अशम्याः स्निग्धाः । वि. ४।१।१४. ● प्राजापत्यपशूनां वपाहोमः तन्त्रं वाजपेये । ११।२।५।२५.

§ प्राजापत्यपशूनां सवनीयपशूनां च शामित्रोऽग्निस्तन्त्रम् ॥

दैक्षे पशौ 'अग्निना पुरस्तादेति रक्षसामपहत्यै' इति श्रुतं पशौ, शामित्रदेशनयनकाले वपानयनकाले चोल्मुकस्य नयनं प्रत्याहरणं च तद्वाजपेये प्राजापत्यानां क्रतुपशूनां च कालभेदेन प्रचारादावर्तेत, उभयेषामपि रक्षोपहननस्यावश्यकत्वात् । इति प्राप्ते, रक्षोऽपहननश्रुतेरर्थवादत्वेन अपयार्थताया एवोचितत्वात् कालान्तरे आनीतस्यापि अपयार्थस्यानपायात् तन्त्रम् । संकर्ष. २।१।९.

● प्राजापत्यपशूनां साहित्यमवगम्यम् 'सप्तदश प्राजापत्यान् पशूनालभते' इति । वि. ५।२।१. ● प्राजापत्यपशुषु अग्निप्रैषस्य प्रत्येकमावृत्तिः वाजपेये । ११।४।२०. ● प्राजापत्यपशुषु अभिघारणार्थं प्रयाजशेषधारणतत्पात्रे न कर्तव्ये वाजपेये । ४।१।१४।३३–३९.

§ प्राजापत्यपशुषु उत्कर्षे यूपोन्मोचनप्रभृति माध्यंदिने एव ॥

वाजपेये प्राजापत्यान् प्रकृत्य 'तान् पर्यग्निकृतान् उत्सृजते, ब्रह्मसाम्न्यालभते' इति श्रुतयोः पर्यग्निकरणसंज्ञपनयोर्मध्यवर्तिपदार्थः शामित्रदेशं प्रति प्रापणम्, स च क्रतुपशुभिः सह प्रातःसवने एव कार्यः, अग्निप्रैषस्य तदानीमेव वक्तव्यत्वात् । अन्यथा प्रैषस्य आवृत्त्यापत्तेः । निष्प्रयोजनस्य उत्सर्जनपूर्वत्वस्य व्यवधानेऽपि सुवचत्वात् इत्याशङ्क्य अविशेषात् । यूपादुन्मोचनमेव चोत्सर्गपदार्थ इति कार्ष्णाजिनेर्मतेन प्राप्ते, यूपादुन्मोचनादिप्रागग्निसंयोगान्त व्यापारस्य एकपदार्थत्वात्, संज्ञपनकरणक-

भावनायाः सेतिकर्तव्यताकाया एवालम्भविधिनोत्कर्षात् उत्सृज्यतिरुत्तरव्यापारोपरममनुनदतीति क्त्वाप्रत्ययोक्तकर्म-व्यवहितपूर्वत्वं न बाधनीयम् । अभिगोस्त्वावृत्तिभेदेनोत्पा-देरिव युक्तैवेत्युक्तम् । संकर्ष. २।१।४.

● प्राजापत्यपशुषु उपाकरणे य ऐच्छिकः क्रमः स्वीकृतस्तेनैव नियोजनादय उत्तरसंस्काराः कर्तव्याः । सोऽयं प्रवृत्तिक्रमः । ५।१।५।८–१२. ● प्राजापत्य पशुषु उपाकरणानन्तरमेव नियोजनं इति यथाप्रकृति अनुष्ठानम् । भाट्ट. ५।२।१. ● प्राजापत्यपशुषु उपा-करणादीनां महतो अनिश्चित एव क्रमो निरूप्यते प्रहृत्या । रत्न. ५।१।१।१. ● प्राजापत्यपशुषु एकैकस्मिन् उपाकरणादीनां पदार्थानामावर्तनीयानां पदार्थानुसमयो वक्ष्यते (५।२।१) । भाट्ट. ५।१।५. ● प्राजापत्यपशुषु कर्मशेषप्रतिषेधपूर्वपक्षेऽपि 'ब्रह्मणाम्बालभते' इति पर्यग्निकरणोत्तरकालीनानां संस्काराणां कालान्तरे अनुष्ठेय-त्वश्रुतेः सर्वथा प्रतिषेधायोगेन पर्यग्निकरणोत्तरकालीन-त्वमात्रं निषेधस्य फलादौ (११।२।१२।५१–५३) वक्ष्यते । सु. पृ. ९१९. ● प्राजापत्यपशुषु देवतावदाना-दिना अनुसमयः । भाट्ट. ५।२।६. ● प्राजापत्यपशुषु पशु-धर्माणां पदार्थानुसमयः कर्तव्यः (पङ्क्तिपरिवेषणन्यायेन) वाजपेये । ५।२।१।१–२. ● प्राजापत्यपशुषु प्रत्यक्ष एवोपदेशः पूर्वपक्षे चिन्तितः । टुप्. ७।१।१।१. ● प्राजापत्यपशुषु प्रधानार्थानि स्विष्टकृदर्थानि इडाभक्षणा-र्थानि च इति त्रिविधानि अवदानानि त्रयः पदार्थाः । पदार्थानुसमयेनैव चानुष्ठानं कर्तव्यम्, न काण्डानु-समयेन । एवं सर्वत्र पशुगणे । वि. ५।२।६. ● प्राजापत्य-पशुषु संनिपत्योपकारकेषु पदार्थानुसमयः, न तु काण्डानु-समयः । तद्भावात् पदार्थास्ततोऽवत्यभावी । टुप्. ५।२।१।१–२. ● प्राजापत्यपशुषु सप्तदशसु कस्मिं श्चिद्भिन्नेऽपि तत्स्थाने पुनरानीतस्यैव उपाकरणादयः संस्काराः कर्तव्याः, न तु पुनः सर्वेषाम् । मीम. २।२।७. ● प्राजापत्यपशुषु सर्वेषामेव दैवतैः अवदानैः दैवतानामनुसमयः. सौविष्टकृतैः सौविष्टकृतानां ऐडैश्च ऐडानाम् । ५।२।६।१०–१२.

● प्राजापत्यवपानां प्रयाजशेषाभिघारणं वैक-ल्पिकम् । बाल. पृ. १६३.

● 'प्राजापत्यवपाभिघारणार्थं प्रयाजशेषधारणं न कर्तव्यम्, तदर्थं पात्रान्तरं नोत्पादनीयम्, प्राजा-पत्यवपाश्च न अभिघार्याः । आ. ४।१।१४।२३–२६. ● प्राजापत्यवपाभिघारणार्थं प्रयाजशेषस्थापनं चतुर्थे निरस्तं (४।१।१४) ब्रह्मसाभकाध्यक्षे । बाल. पृ. १६३.

● प्राजापत्यवसाहोमानां तन्त्रेण अनुष्ठानम् । ११।२।५।२५.

● प्राजापत्यसप्तदशपशुप्रचारः वाजपेये आग्र-यणानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् कर्तव्यः । 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति । ११।२। १५. 'वाजपेये सर्वसोमोत्तरम्' इत्यत्र द्रष्टव्यम् ।

● 'प्राणांस्तु सततं रक्षेद्दारैरपि धनैरपि' इति न्यायेन प्राणस्य परमधनत्वम् । कौषीतक्युपनिषत् – शंकरा-नन्द. २।२.

● 'प्राणापानावेवात्मन् धत्ते' इत्यनेन वाक्येन कर्मविधानं न क्रियेत इति वक्ष्यामः (४।१।१।१–३) । शा. ३।४।५।१५.

● 'प्राणभृत उपदधाति' अत्र प्राणभृच्छब्दस्य समुदायपरत्वात् न्यूनस्य अधिकार्यैकदेशपरत्वकल्पने गौणत्व-दोष. । बाल. पृ. ३. ● 'प्राणभृत उपदधाति' अत्र मन्त्रविधिरिति पूर्वपक्षः । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानविधिरिति सिद्धान्तः । वि. १।४।१८. ● 'प्राणभृत उपदधाति' इत्यत्र प्राणशब्दघटितमन्त्रोप-धेया इष्टका एव । संकर्ष. २।१।१३. मीको. पृ. १०६५ 'इष्टका एव प्राणशब्द०' इत्यत्र द्रष्टव्यम् । ● 'प्राणभृत उपदधाति' । प्रथममन्त्रे एव प्राण-शब्दिनमाम्नायते 'अयं पुरोभुवस्तस्य प्राणो भौवायनः' इति । एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते, तेन च पुनः तैर्मन्त्रैः उपधातव्या इष्टकाः उपलक्ष्यन्ते । तथा चात्र वाक्ये प्राण-भृत इष्टकाः । वि. १।४।१८.

पदेषु निर्देश एव वाच्य शक्यतावच्छेदको वा । निर्देशश्च वाचकवर्णानां स्वपरत्वम् । यथा 'कस' इत्यत्र ककारसकारावेव कसपदे प्रतीयेते । तत्र नरक- पदान्तर्गतसानुस्वारककारेण नरकप्रतीतिः, समाश्रितपदा न्तर्गतककारेण च समाश्रितप्रतीतिः । तेन स्वोपस्थाप्य सानुस्वारककारसकारवत्पदव्यवच्छेदेन ककारसकारावेव वाच्यौ शक्यतावच्छेदकौ वा इति । एवं चामुण्डादि पदेऽपि चण्डमुण्डानयनव्युत्पत्तिसंसर्गेण वर्णत्रयमेव शक्यं शक्यतावच्छेदकं वा । एवं परिक्षितादिपदे 'परि क्षीणे कुले जात' इत्यादिसंबन्धेन तत्तद्वर्णत्वं बोध्यम्। एतेषु च जातिगुणक्रियाद्युपाधिर्नैव जात्यादिशब्दत्वम्, नापि यदृच्छाशब्दत्वम्, सवर्णदर्शनात् । नापि योगि धरम्, पिण्डार्थान्त प्रविष्टार्थवाचकान्वयासत्त्वासंभ वात् । नापि लक्षणा, सम्बन्धाग्रहात् । द्विरेफपदस्य भ्रमरपदादौ रेफद्वयसंबन्धज्ञानसत्त्वात् युक्ता लक्षणा । नापि लक्षितलक्षणा, लक्षणाया अभावात् । अतस्ते वर्णा एव शक्यतावच्छेदका शक्या वेति ।

अत्र केचित् । शक्तिसंकेतपक्षे सर्वासु व्यक्तिषु संकेत एको नाना वा । नाद्य, आनन्त्यात् । नान्त्य, व्यभिचारापत्ते । गौः शुक्लः चलः इत्यादिपदानां व्यक्त्यैक्येन अर्थभेदाभावात् सहप्रयोगानुपपत्तेश्च । अतो धर्मे एव शक्तिः । हेतुताऽपि शक्तिग्रहस्य तत्तत्पदवद्धर्मितावच्छेदककगोत्वप्रकारकनिश्चयत्वेन । तत्र जातौ च निरवच्छिन्नैव प्रकारता इति लाघवम् । अन्यथा गोत्व धर्मितावच्छेदककतत्तत्पदप्रकारकनिश्चयत्वेन हेतुतायां तत्तत्पदत्वस्य प्रकारतावच्छेदकतया गौरवं इति जातावेव शक्तिर्युक्ता । आकाशादिपदे अननुगतशक्तिधर्मस्याऽभावेन न धर्मे शक्तिः । एवं च सर्वत्र नानानीलपीतरूपव्यक्तिषु वर्तमाना नीलत्वपीतत्वादिजाति नीलपीतादिपदवाच्या । चलना इत्यत्रापि चलनक्रियानिष्ठा जातिरेव । डित्थादि शब्दानामपि बालयुवस्थविरावस्थापरिणते नानाविधधर्माध्यासात् भिन्नडित्थाद्यर्थनिष्ठा डित्थत्वजातिरेव वाच्या । 'बाल वृद्धशुकोदीरितशब्दभेदेन शब्दनिष्ठैव जातिर्वाच्या' इत्यपि केचित् ।

तन्मतेऽपि विभाग, जातिरेव नामार्थ, तत्र युक्त्या आक्षेपाद् व्यक्तिलाभ । अर्थापत्ति समानवित्तिवेद्यत्वं वा आक्षेपो निरूढलक्षणा वा । तेन वृत्त्या प्रकृत्युपस्थाप्य त्वस्य प्रकृत्यर्थत्वात् न प्रत्ययार्थान्वयाद्यनुपपत्तिः । 'शक्यादन्येन रूपेण भाने भवति लक्षणा' इति नियमस्य अप्रयोजकत्वादिति । एवं च घटादिबोधे घटत्वप्रकारकज्ञानत्वेन कारणताया लाघवम् ।

अन्ये तु सर्वत्र व्यक्तिरेव पदार्थः । अशक्याया अपि जाते उपलक्षणतया तदुपलक्षितव्यक्तिशक्त्यङ्गीकारेण न व्यभिचारानन्त्यशक्तिकल्पनादिदोष । तदुक्तं 'आनन्त्ये ऽपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकर संबन्धो न च व्यभिचरिष्यति ॥' इति ।

परे तु जातिविशिष्टा व्यक्तिर्वाच्या । अन्यथा घट त्वादौ शक्त्यभावेन घटत्वादे शाब्दविषयत्वासंभवात् । न च घटविशेष्यकघटत्वप्रकारकबोधे जातिशक्तिज्ञानस्यैव व्यक्तिशक्तिज्ञानत्वेन वा हेतुत्वात् नायं दोष इति वाच्यम् । द्रव्यादिपदानामपि एवमापत्तौ घटादिपदात् द्रव्यत्वप्रकारकबोधापत्ते । न च पदज्ञानस्य शक्तिज्ञान विषया हेतुत्वेन येन रूपेण उपस्थितयो संबन्ध तेन रूपेण उपस्थापकत्वनियम । एवं च घटत्वादौ शक्ति ग्रहेऽपि तेनैव रूपेण उपस्थितिः इति वाच्यम् । उप स्थितस्य आकाशादेरपि अन्वयापत्तेरिति । एवं च त्रिक प्रातिपदिकार्थ इति ।

यद्वा जातिव्यक्तिलिङ्गानि इति त्रिकमर्थ । लिङ्गं द्वेधा, शास्त्रीयव्यवहारहेतु लौकिकं च, अवयवसंस्थानविशेषवत्त्वं अन्त्य तत्तद्व्यक्तिविशेषनिष्ठं व्यवस्थितम्, अयं पुमान्, इयं स्त्री, इदं वस्तु इति सर्वत्र व्यवहारात् । अव्य वस्थितं लिङ्गनियमनिबन्धनकार्योपयुक्तं आद्यम् । तच्च सत्त्वरजस्तमोगुणानां वृद्ध्यपचयस्थितिरूपमिति पतञ्जलि स्वामिन । स्त्रीत्वपुंस्त्वनपुंसकत्वादिर्जातिरेव इत्यर्थ । तत्र लौकिके लिङ्गे शक्ति । अलौकिके गौण्या प्रयोग आरोपात् । 'पशुना यजेत' इत्यादौ पुंस्त्वपुंस्त्वविवक्ष णात् न स्त्रीपशुना यागप्रसङ्ग इत्याहु । अन्ये तु पशु शब्दस्य लिङ्गद्वयसाधारण्येन प्रयोगेऽपि मान्त्रवर्णिक

ब्राह्मणपदस्य क्वचित्प्रयोगेण लौकिकपुंस्त्वे शक्तिमादाय दोषोद्धार इत्याहुः ।

यद्वा शास्त्रीयं लिङ्गं शब्दनिष्ठमेव, लौकिकं तु अर्थनिष्ठम् । तत्र अर्थनिष्ठे शक्तिः । कुमारब्राह्मणपदानां तत्रैव प्रयोगात् । अत एव 'ग्रामा अग्नि मरुत' इत्यत्र उपस्थितव्यक्तिगतपुंस्त्वे शक्तिस्वीकारात् केचन्नेच्छामूहुः । शब्दगते लक्षणा इति ।

अत्र टाबादीनां ङीबादीनां चौप्रभृतीनां द्योतकत्वं व्यस्मिन्मते । ङीबादीनामेव वाचकत्वं इत्यपि केचित् ।

यद्वा जातिव्यक्तिलिङ्गसंख्या इति चतुष्कं प्रातिपदिकार्थः । 'दधि पश्य' इत्यादौ प्रातिपदिकादेव तत्प्रत्ययात् । एवं च विभक्तेर्द्योतकत्वमागमम् । तेनैव च नामार्थप्रकारकशाब्दबोधे सुबादिजन्योपस्थितेर्हेतुत्वनिर्वाह इति दिक् । एतत् सर्वं महाभाष्ये 'सरूपाणामेकशेषः' ( पा. १।२।६४ ) इति सूत्रे स्पष्टम् ।

आलङ्कारिकास्तु 'विगलत्वमनादृत्य शब्देनार्थः प्रकाश्यते' इतिमतावष्टम्भेन पञ्चकं प्रातिपदिकार्थः ।

परे तु शब्दस्यापि प्रातिपदिकार्थत्वात् षट्कं प्रातिपदिकार्थः । तथाहि — 'गामुच्चारय' इत्यादिलौकिकप्रयोगे 'यिपिविश्वयवीतु रथंतरं गायति' इत्यादिवैदिकप्रयोगे च शब्दोऽपि भासते इति निर्विवादम् । वृत्तिविषय एव शाब्दबोधे विषयः इति नियमः । तथा च शब्दस्यापि शब्दशक्तिविषयतया मानं अङ्गीकार्यम् । तत्र घटादिपदे शब्दनिरूपिताऽपि शक्तिः भिन्ना कल्प्यते इति केचित् ।

अन्ये तु शक्तिविषयः अर्थो भासते । शक्तिविषयत्वं च आश्रयतानिरूपकत्वान्यतरसम्बन्धेन शक्तिमत्त्वम् । तथा च अर्थशक्तिज्ञानेनैव पदस्यापि भानम् । तेन घटादिपदानां शक्तिसंबन्धेन घटत्वादिवत् पदमपि शक्यम् । एतावांस्तु विशेषः यत् संबन्धस्योभयनिरूप्यत्वेन संबन्धिद्वयोपस्थापकत्वाविशेषात् घटत्वाद्यवच्छिन्नशक्त्यैव घटादिवत् शब्दस्यापि तथैव वृत्त्या उपस्थितौ सत्यां अर्थबोधे तात्पर्ये सति तत्र विशेषणतया स शब्दो भासते । तथापि घटत्वादिरूपेण विशिष्य शक्तिग्रहवता घटकाद्यनुभवप्रकारकबोधः । नत्वनुभविताद्यादिपदार्थविशिष्य शक्तिग्रहाभावे तु व्यक्तिविशेष्यकः केवलपदप्रकारकः नलपदवाच्यः कश्चित् इत्याद्याकारको बोधः । यत्र तु उक्तोदाहरणेषु शब्दमात्रे तात्पर्यं तदा तत्र शक्त्या शब्दस्वरूपस्य प्राधान्येन भानमिति । एवं च क्वचित् तात्पर्यवशात् शब्द एव प्राधान्येन भासते क्वचित् तदभावे अर्थविशेषणत्वेन इति सिद्धम् ।

अत एव 'अग्निहोत्रं जुहोति' इत्यादौ तस्य विशेषणत्वेन अन्वयात् अग्निहोत्रनामकेन इति बोधः ।

एतेन अग्निहोत्रनामके निरूढलक्षणा इति निरस्तम् । अनुपपत्त्यभावात् । मत्वर्थलक्षणागौरवेण सिद्धान्तानुवन्धाच्च । अतः शब्दोऽपि वाच्यः । यत्रं च 'उदेति सविता ताम्रस्ताम्र एवास्तमेति च । संपत्तौ च विपत्तौ च महतामेकरूपता ॥' इत्यादौ 'रक्त एवास्तमेति' इति यदा क्रियते तदा पदान्तरप्रतिपादितः स एवार्थः अर्थान्तरतयेव प्रतिभासते इति काव्यप्रकाशोक्तिः संगच्छते ।

अतः षट्कं प्रातिपदिकार्थः इति । तदुक्तम् 'ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा । तथैव सर्वशब्दानामेते पृथगवस्थिते ॥' इति दिक् । मञ्जि. पृ. ११८–१२३.
● प्रातिपदिकार्थः प्रधानं विभक्त्यर्थो गुणः । सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम् । भा. १।२। ५।१५. ● प्रातिपदिकार्थो यद्यपि गौणः, प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यात्, तथापि 'पौर्णमास्यां चतुर्होत्रा अभिमृशेत्' इत्यादौ अभिमृष्टव्यविशेषानवगमात् समलक्षुवादिविषयसंशयोपप्लवे सति विशेषोऽन्यत एव लभ्यतः इति साकाङ्क्षत्वात् अर्थदिग्धपरिहारार्थं प्रथमगृहीतत्वेन च प्रातिपदिकार्थं मुख्यमाश्रित्य विभक्तिः सप्तम्यर्थेऽधिकरणत्वे पौर्णमास्यामिति । वा. ३।७।३।१०. ● 'प्रातिपदिकार्थः सत्ता' इति सत्त्ववाचित्वस्मृतिः । सु. पृ. ९५४. ● गुणश्च विभक्त्यर्थः, प्रधानं प्रातिपदिकार्थः । प्रातिपदिकार्थविशेषो विभक्त्या अभिधीयते । भा. ९।३।५।१९. ● प्रातिपदिकार्थस्य लिङ्गसंख्यापेक्षया प्राधान्यं स्मर्यते । सु. पृ. १०१४.

● प्रातिपदिकार्थकारकत्वप्रकाशिनी विभक्तिः । सु. पृ. ७२९.

पदेषु निर्देश एव वाच्यः शक्यतावच्छेदको वा । निर्देशश्च वाचकवर्णानां स्वपरत्वम् । यथा 'कस' इत्यत्र ककारसकारावेव कसपदे प्रतीयेते । तत्र नरक-पदान्तर्गतसानुस्वारककारेण नरकप्रतीतिः, समाश्रितपदा-न्तर्गतसकारेण च समाश्रितप्रतीतिः । तेन स्वोपस्थाप्य सानुस्वारककारसकारत्वस्वद्वन्द्वघटकत्वेन ककारसकारावेव वाच्यौ शक्यतावच्छेदकौ वा इति । एवं चामुण्डादि पदेऽपि चण्डमुण्डानन्तरत्वादिसत्त्वेन वर्णत्रयमेव शक्यं शक्यतावच्छेदकं वा । एवं परिक्षितादिपदे 'परि क्षीणे कुले जातः' इत्यादिस्वघटकत्वेन तत्तद्वर्णत्वादि ज्ञेयम् । एतेषु च जातिगुणक्रियाद्यप्रवृत्तिनिमित्तत्वेन जात्यादिशब्दत्वम्, नापि यदृच्छाशब्दत्वम्, सर्वत्र प्रयोगदर्शनात् । नापि यौगि कत्वम्, पिण्डार्थान्तःप्रविष्टार्थवाचकावयवारब्धत्वासंभ वात् । नापि लक्षणा, सम्बन्धाग्रहात् । द्विरेफपदस्य भ्रमरपदादौ रेफद्वयसम्बन्धघटकत्वात् युक्ता लक्षणा । नापि लक्षितलक्षणा, लक्षणाया अभावात् । अतस्ते वर्णा एव शक्यतावच्छेदकाः शक्या वेति ।

अत्र केचित् । व्यक्तिसंकेतपक्षे सर्वासु व्यक्तिषु संकेत एको नाना वा । नाद्यः, आनन्त्यात् । नान्त्यः, व्यभिचारापत्तेः । गौः शुक्लः चलः इत्यादिपदानां व्यक्त्यैक्येन अर्थभेदाभावात् सहप्रयोगानुपपत्तेश्च । अतो धर्मे एव शक्तिः । हेतुताऽपि शक्तिग्रहस्य तत्पदवाच्यधर्मिता वच्छेदकगोत्वप्रकारकनिश्चयत्वेन । तत्र जातौ च निरवच्छिन्नैव प्रकारता इति लाघवम् । अन्यथा गोत्व-धर्मितावच्छेदकतत्पदप्रकारकनिश्चयत्वेन हेतुताया तत्तत्पदस्यापि प्रकारतावच्छेदकतया गौरवम् इति जातावेव शक्तिर्युक्ता । आकाशादिपदे अनन्तशक्तिकल्पनाऽभावेन न धर्मे शक्तिः । एवं च सर्वत्र नानानीलपीतरूपव्यक्तिषु वर्तमाना नीलत्वपीतत्वादिजातिः नीलपीतादिपदवाच्या । चलतीत्यत्रापि चलनक्रियानिष्ठा जातिरेव । डित्थादि शब्दानामपि बालवृद्धत्वाद्यवस्थाभेदेन नानाविरुद्धधर्माध्यासात् प्रतिव्यक्तिभेदधर्मनिष्ठा डित्थत्वजातिरेव वाच्या । 'बाल-वृद्धशुकोदीरितशब्दभेदेन शब्दनिष्ठैव जातिर्वाच्या' इत्यपि केचित् ।

तत्राप्येवं विभागः, जातिरेव नामार्थः, तत्तुल्या आक्षेपाच्च व्यक्तिलाभः । अर्थापत्तिः समानवित्तिवेद्यत्वं वा आक्षेपो निरूढलक्षणा वा । तेन वृत्त्या प्रकृत्युपस्थाप्य त्वस्य प्रकृत्यर्थत्वात् न प्रत्ययार्थान्वयाद्यनुपपत्तिः । 'शक्याद्‌न्येन रूपेण भाने भवति लक्षणा' इति नियमस्य अप्रयोजकत्वादिति । एवं च घटशब्दबोधे घटत्वशक्तिज्ञानस्यैव कारणतया लाघवम् ।

अन्ये तु सर्वत्र व्यक्तिरेव पदार्थः । अशक्याया अपि जातेः उपलक्षणतया तदुपलक्षितव्यक्तिशक्त्यङ्गीकारेण न व्यभिचारानन्तशक्तिकल्पनादिदोषः । तदुक्तं 'आनन्त्ये ऽपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकर सम्बन्धो न च व्यभिचरिष्यति ॥' इति ।

परे तु जातिविशिष्टा व्यक्तिर्वाच्या । अन्यथा घटत्वे शक्त्यभावेन घटत्वादेः शाब्दविषयत्वासम्भवात् । न च घटविशेष्यकघटत्वप्रकारकबोधे जातिशक्तिज्ञानस्य व्यक्तिशक्तिज्ञानत्वेन वा हेतुत्वात् नायं दोष इति वाच्यम् । द्रव्यादिपदानामपि एवमापत्तौ घटादिपदात् द्रव्यत्वप्रकारकबोधापत्तेः । न च पदज्ञानस्य शक्तिज्ञान विषया हेतुत्वेन येन रूपेण उपस्थितयोः संबन्धः तेन रूपेण उपस्थापकत्वनियमः । एवं च घटत्वादौ शक्त्य ग्रहेऽपि तेनैव रूपेण उपस्थितिः इति वाच्यम् । उप स्थितस्य आकाशादेरपि अन्वयापत्तेरिति । एवं च त्रिक प्रातिपदिकार्थ इति ।

यद्वा जातिव्यक्तिलिङ्गानि इति निष्कर्षः । लिङ्गं द्वेधा, शास्त्रीयव्यवहारहेतु लौकिकं च, अवयवसंस्थानविशेषवत्त्वम् अन्यत् तत्तद्‌व्यक्तिविशेषनिष्ठं व्यवस्थितम्, इयं नारी, अयं पदार्थः, इदं वस्तु इति सर्वत्र व्यवहारात् । अत्र यस्मिन् लिङ्गनियतनिबन्धनकार्योपयुक्तम् आद्यम् । अत्र सत्त्वरजस्तमोगुणानाम् उपचयापचयस्थितिरूपमिति पतञ्जलि स्वामिनः । स्त्रीत्वपुंस्त्वनपुंसकत्वादिर्जातिरेव इत्यन्ये । तत्र लौकिके लिङ्गे शक्तिः । अलौकिके गौण्या प्रयोग आरोपात् । 'पशुना यजेत' इत्यादौ मुख्यपुंस्त्वविवक्ष णात् न स्त्रीपशुना यागसिद्धिः इत्याहुः । अन्ये तु पशु-शब्दस्य लिङ्गत्रयसाधारण्येन प्रयोगेऽपि मात्रर्गिक-

मिन्द्राय हूयन्ते । इतरयोस्तु सवनयोर्दशाक्षा । तत्र होत्रकाणां चमसेषु सकृत्सकृत् इन्द्राय हुतेषु तच्छेषेषु सत्स्वेव अभक्षितेषु पुनरपि द्रोणकलशात् सोममुन्नीय मित्रावरुणादिदेवताभ्यो हुत्वा तेषु चमसेषु हुतशेषः सोमो भक्ष्यते इति स्थितिः ( सत्याषाढः- ८।७।१-३८ ) । सु. ३।२।१२।२७. ● प्रातःसवने शाद्वलसमार्गादयो मद्धर्माः पठिता अपि सवनत्रयेऽपि संबध्यन्ते । वि. ३।६।९. ● 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' ज्योतिष्टोमे । भा. २।२।६।१७.

● प्रातःसवनीयानां पशोः या तन्त्रे असदाय पठिताः माध्यंदिनसवनीयतृतीयसवनीयपुरोडाशाः । भा. १२।२।१२।३२, ● प्रातःसवनीयानां पुरोडाशानां तन्त्रं पाशुनेन तन्त्रेण प्रसङ्गसिद्धम् । १२।२।१२।३१.

● प्रातर्होमस्य सूर्यप्रजापती देवते । भा. २।२। ५।१६ पृ. ५०७.

● प्रातिपदिकं अभिधानी श्रुतिः । तत् द्विविधम्, 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' इत्येकम्, 'कृत्तद्धितसमासाश्च' ( पा० १।२।४५-४६ ) इति द्वितीयम् । भाट्ट पृ. ४१. ● प्रातिपदिकं आकृतिमात्राभिधायकम्, 'न चास्य ( विशेषणस्य ) प्रातिपदिकमभिधायकम्, आकृतिमात्राभिधायित्वात्' । वा. १।३। ६।१२ पृ ६७३. ● प्रातिपदिकं जाति ब्रूते लक्षणया तु द्रव्यम् । सर्वत्रैव लक्षणया लिङ्गसंख्ये प्रवर्तेते । टुप्. १२।१।१।१. ● प्रातिपदिकं यद् बहुषु वर्तते ततो बहुवचनं भवति । भा. ३।५।८।२३. ● प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः । न केवलं प्रातिपदिकं स्वार्थे वर्तते । टुप्. ६।४।६।२२. ● स्त्रिया यत् प्रातिपदिकं युज्यते तस्मात् स्त्रीप्रत्ययो भवति । भा. ३।१। ६।१२ पृ. ६८१-६८२. ● प्रातिपदिकेन अन्वयव्यतिरेकाभ्यां जात्यभिधानम् । वा. ३।१।४।१२ पृ. ९२०. ● प्रातिपदिकात् उत्पन्ना द्वितीयादिविभक्तिः प्रातिपदिकार्थो विशेषकः इत्याह । ( अन्यथाना प्रकृत्यर्थानुरक्तस्वार्थबोधकत्वाभावात् ) । भा. १।१।७।२५ पृ. १९. ● प्रातिपदिकस्य विशेष्ये वर्तमानस्य भावप्रत्ययार्थो निमित्तम् । वा. ३।१।६।१२ पृ. ६७४,

● प्रातिपदिकस्य समुदायप्रसिद्धौ संभवन्त्यां अवयवप्रसिद्धिर्न युक्ता 'उद्गातृणा' इत्यादौ । ३।५।८।२६. ● प्रातिपदिकानां सर्वेषां रुचाप्रक्तित्वं आकृत्यधिकरणे निरस्तम् । सु. पृ ५०६.

● प्रातिपदिकार्थो निरूप्यते । धातुप्रत्ययतदन्तभिन्नत्वे सति अर्थवच्छब्दत्वं प्रातिपदिकत्वम् । 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (पा० १।२।४५) इति सूत्रात् । विभक्त्यन्तानां तत्सञ्चारणाय प्रत्ययान्तेति । एवं च पूर्वनिपातितेपदसमाप्त्यर्थक-बहुव्रीहिप्रत्ययप्रयुक्तबहुपद्वशास्य प्रातिपदिकसंज्ञा । तत्र तद्धितान्तत्वाभावेन तत्संज्ञायाः 'कृत्तद्धित०' इति सूत्रेण (पा० १।२।४६) अलाभात् । तद्धितयोगमात्रविवक्षया 'पञ्चकि' इत्यत्र अकृत्प्रत्ययपुक्तेऽपि तदापत्तेः । न चैवं कृत्तद्धितान्तेषु अनर्थकशतशृङ्गादिसमासेषु प्रातिपदिकत्वं न स्यादिति वाच्यम् । 'कृत्तद्धितसमासाश्च' इति सूत्रेण तत्र संज्ञाविधानात् ।

अन्ये तु अर्थवत्सूत्रेण वाक्यसमासयोरपि संज्ञाप्राप्तौ कृत्सूत्रेण समासेषु पुनः संज्ञाकरणं वाक्यपरिसंख्यार्थमित्याहुः ।

तच्च प्रातिपदिकं चतुर्धा पूर्वमुक्तं रूढं यौगिकं योगरूढं यौगिकरूढं चेति । तच्चतुर्विधमपि जातिगुणक्रियायदृच्छाशब्दभेदात् चतुर्विधं इति महाभाष्यकारः । वस्तुनिर्देशशब्दावधिरो इति चन्द्रालोककारः ।

सर्वेषु द्रव्यवाचकघटादिपदेषु जातिरेव वाच्या, वाच्यतावच्छेदिका वा । इदं चाग्रे स्फुटीकरिष्यते । नीलशुक्लादिपदेषु गुणपदसमानाधिकरणेषु गुणिवाचिसमानाधिकरणेष्वपि गुण एव वाच्यो न नीलत्वादिजातिः, गुणिनि तदभावात् । नापि गुणी गौरवात् । लक्षणया सामानाधिकरण्योपपत्तेश्च । वाच्यतावच्छेदको वा गुणः । एवं पाचकादिपदे पाकक्रियैव वाच्या, तस्या एव प्रतीतेः । तस्याश्चैकत्वात् वाच्यत्वं वाच्यतावच्छेदकत्वं वा । एवं दण्डी इत्यादौ दण्डसंबन्धो वाच्यो वाच्यतावच्छेदको वा । पाचकादिपदे पचनस्य विशेषणत्वेन मानात् । दण्डसंबन्धस्य विशेषणत्वेन मानात् भेदः । डित्थादियदृच्छाशब्देषु शब्द एव वाच्यो वाच्यतावच्छेदको वा । एवं कंसपरिक्षितचामुण्डादि-

शब्दानामतिगौरवम् । एकोनत्यनासिताना तु नार्थविशेषो निरूप्यते ॥'' विशिष्टायां भावनाया आधाय गौणं विधित्वं यदि अन्यत्रापि श्रुतेषु पुनर्विधियेत, ततः पुनरुच्चारणदोषं औदिकत्वापत्त्या लभेत । अयं पुनः सकृद्विधाय निवृत्तव्यापारः स्वार्थान्यथानुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराण्याविर्भावयन् समाम्नायादनेकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते । १।२।३।६ पृ. ४८५, ● प्राप्ते कर्मणि संबन्धप्रकरणे वाक्यं भिद्यते । ३।१।११।२१ पृ. ७१४, ● 'प्राप्ते पुनरारम्भो नियमाय' इति न्यायेन 'यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा' इति विहिते पुनः 'उपव्ययते' इति विधि. दर्शपूर्णमासयोः पित्र्येऽपि कर्मणि यज्ञोपवीत्येव कुर्यात् । सत्याश्रौ. १।१।५७ वैजयन्ती. ● प्राप्ते वचनं न विधिरिति गम्यते । प्राप्तस्यानुवादो भवितुमर्हति । भा. ६।१।१३।२१.

● प्राप्तानुवादेन हि अप्राप्तं विधेयमिति न्यायः । (स्पष्टार्थः) । आमरणम् . ३।२।९।१८ बम् .

● प्राप्ताप्राप्तविवेकन्यायः । 'अग्नीषोमीयेण यजेत पौर्णमासीम्, अमावास्यामभिचरन्' इति वाक्ये दार्शिकाग्न्यदेवतोद्देशेन भ्रातृव्यवत्प्रयोगे सोमसाहित्यविधिः प्राप्ताप्राप्तविवेकेन तथा पर्यवसानात् । इति पूर्वपक्षः । संकर्ष. १।२।१७. ● प्राप्ताप्राप्तविवेकन्याय. । न च ('द्या हो' इत्यत्र) विशिष्टस्य विधेयत्वेऽपि प्राप्ताप्राप्तविवेकन्यायेन 'द्या' शब्दे एव विधेयता पर्यवस्यति ... । मूर्तिः . पृ. १९८ परि० ४०.

● प्राप्तपरिसंख्या निर्दोषा । अस्या भाष्यकृतोक्तमुदाहरणं सिद्धान्ते नास्त्येव । पूर्वपक्षे तु 'गृहमेधीये' पञ्चमे पक्षेऽस्ति । भाष्यकारान्तरमते तु सिद्धान्तेऽप्यस्ति यथा, दशमे आङ्गिरसे द्विरात्रे 'वैमानं पूर्वेऽहन् साम भवति षोडश्युत्तरे' इति । तत्र द्विरात्रोत्तमाह्नाना अतियत्प्रसक्तत्वात् प्रकृतिवत्प्राप्तः षोडशिविकल्पे प्राप्ते 'उत्तरेऽहन् द्विरात्रस्य क्रतौ' इति वाक्यान्तरेणाम्नायमानेन षोडश्युत्तरे इत्यनेन आङ्गिरसे द्विरात्रे एव परिसंख्यायते तेन द्विरात्रान्तरे निवृत्तः इति । सार्वोदाहरणं अन्येव, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति । बाल. पृ. २५.

● प्राप्तबाधः द्विविधः नित्यो वैकल्पिकश्चेति । बाल. पृ. १११. ● प्राप्तबाधः नाम 'साधारणस्य शास्त्रस्य विशेषविषयादिना । संकोचः कल्पलक्ष्यस्य प्राप्तबाधोऽभिधीयते ॥' यत्र कल्प्तस्यैव शास्त्रस्य सामान्यद्वारेण विशेषानुपसर्पतः क्वचित् विशेषमार्गादिना प्राप्तिरपोह्यते, तत्र प्राप्तबाध. । न्यायमाला. भङ्गनिर्णयः श्लो. १४, ● प्राप्तबाध, प्राकृताङ्गस्य विकृतौ चोदकप्राप्तस्य अन्याम्नानात् अर्थलोपात् प्रतिषेधाद्वा यो बाधः । यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात्, अवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनस्य लोपात्, पित्र्येष्टौ होतृवरणस्य 'न होतारं वृणीते' इति प्रतिषेधात् । मीन्या. ● प्राप्तबाधः यत्र अतिदेशसामान्यशास्त्रादिजनिते ज्ञाने बाधो सर्वविषये वा 'भिद्येद्' इति प्रत्ययान्तरं भवति स प्राप्तबाधः । अथ प्रमेयपदारम्भको बाध इत्युच्यते । बाल. पृ. १११. ● प्रमाणतद्दाभाव–नित्यनैमित्तिक–क्रत्वर्थपुरुषार्थ–पौर्वापर्य–प्राकृतवैकृत–सामान्यविशेष–नियमोजनप्रयोजन–अल्पभूयस्त्व–सावकाशानवकाश–अङ्गप्रधान–तद्धर्मतादिषु प्राप्तबाधः । भा. ३।१।७।१४ पृ. ८६१. ● यत्र प्रापकप्रमाणं कल्प्तं तत्र प्राप्तबाधः, यथा सामान्यशास्त्रस्य विशेषशास्त्रेण । प्राप्तबाधत्वं नाम कल्प्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । कौ. ३।३।७।१४ पृ. ३६८.

● प्राप्तबाधभेदाः, नित्याः २८+ वैकल्पिकाः ४८ =७६ । यदा तु नित्यबाधभेदाः जातिद्रव्यगुणक्रियाविषयत्वेन भिन्ना निरूप्यन्ते तदा ते ११२ भवन्ति इति नित्याः ११२+वैकल्पिकाः ४८= १६० इति प्राप्तबाधभेदा भवन्ति । बाल. पृ. १३४.

● प्राप्त्यां अधिकरणे प्रयोजनं न वक्तव्यम् । उत्तरविवक्षा तत्र प्रयोजनम् । भा. २।१।७।३२.

● प्राप्तिपूर्वकं हि दर्शनं भवति । भा. १२।४।१४।४१, ● प्राप्तिपूर्वकः प्रतिषेधो भवति । १०।८।१०।२६

● प्रातिरूप्यं वैदिकं कर्म यथा, पयो दोग्धि । दोहनं दुग्धप्राप्त्यर्थम् । बाल. पृ. ८४.

● प्राप्यं ईप्सितं कर्म । सतः अप्राप्तस्य प्राप्यं प्राप्तिः । यथा 'पयो दोग्धि' । मणि. पृ. १२९.

● प्राबल्यं पदार्थस्य पदार्थधर्मापेक्षया । वि. ३।३।४. ● प्राबल्यं पूर्वपूर्वस्य श्रुतिलिङ्गादीनाम् । ३।३।७।१४. ● प्राबल्यं श्रुतेः स्मृतिभ्यः । वि. १।३।२.

● प्राभाकराः अनीश्वरवादिनः । कु. १।२।१।१८ पृ. २६. ● प्राभाकरैः शृङ्गिकारान्तरैश्च 'आम्नायस्य क्रियार्थत्वात्' (१।२।१।१) इति सूत्रं सकलवेदाप्रामाण्यपरतया व्याख्यातम् । तन्न युक्तम् । सु. पृ. ६.

● प्राभाकरवत् अस्माभिः द्व्यहकोणेङ्गहानेश्च प्रतिसमाधानमनपेक्ष्य नानुष्ठानमिष्यते । सोम. ६।१।९. ● प्राभाकरवत् कार्य-नियोगापरपर्यायस्वतन्त्रापूर्वाभ्युपगमे परोक्ता दोषाः स्युः, नास्मदभिमतशक्तिरूपाभ्युपगमे । सु. पृ. ५१८.

● प्रामाण्यं अकार्यबोधकवाक्यानाम् । १।२।१।१-१८. ● प्रामाण्यं अप्रामाण्यं च ज्ञानस्य उभयं स्वतः इति सांख्याः, उभयं परतः इति तार्किकाः । अप्रामाण्यं स्वतः प्रामाण्यं तु परतः इति बौद्धाः । प्रामाण्यं स्वतः अप्रामाण्यं तु परतः इति मीमांसकाः । वैद्यनाथ. १।१।२।२ पृ. १४. ● प्रामाण्यं अर्थतथात्वरूपविषयधर्मः, धर्मिणि ज्ञाने प्रमाण-बुद्धिव्यपदेशो भाक्तः । तच्च स्वतो ग्रहणे ज्ञानेनैव विषयीक्रियते यावदेव । बाल. पृ. ६. ● प्रामाण्यं आचमनादिस्मृतीनाम् । १।३।३।५-७. ● प्रामाण्यम् । तार्किकास्तु प्रमाकरणं प्रमाणम् । प्रमात्वं च यथार्थानुभवत्वम् । याथार्थ्यं च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । अनुभवत्वं तु 'अनुभवामि' इतिप्रतीतिसिद्धः साक्षात्परानुमित्युपमितिशाब्दबोधसाधारणः स्मृतिव्यावृत्तो जातिविशेषः । न तु अगृहीतग्राहित्वं धारावाहिके अव्याप्तेः इत्याहुः । तदेतदयुक्तम् । 'अनुभवामि' इतिप्रतीतिसिद्धानुभवत्वस्य साक्षात्कारे एव सत्त्वेन अनुमित्यादौ अव्याप्तेः । 'पर्वतमनुभवामि' 'पर्वते वह्निमनुभवामि' इति प्रतीत्यभावेन अनुमित्यादौ तत्सत्त्वे मानाभावात् । तस्मात् अनधिगतार्थगन्तृत्वमेव अनुभवत्वम् । न च धारावाहिके अव्याप्तिः, तत्तत्क्षणविशिष्टघटादेः पूर्वपूर्वज्ञानागृहीतस्यैव उत्तरोत्तरज्ञानविषयत्वात्, 'इदानीं स्पृशामि' 'इदानीं पश्यामि' इत्यादिप्रतीत्या कालस्यापि षडिन्द्रियवेद्यत्वात्, कालान्यद्रव्यचाक्षुषत्वस्यैव रूपकार्यतावच्छेदकत्वात्, अनुभवानुसारेण कार्यकारणभावकल्पनात् अन्यथा लाघवात् चाक्षुषत्वस्यैव कार्यतावच्छेदकत्वापत्तेः ।

न च कालः अतिसूक्ष्मत्वात् कथं प्रत्यक्षमात्र इति वाच्यम् । ज्ञानधारायामुपरतायां 'किमत्र घटोऽवगतः' इति पृष्टः सन् कथयति 'अस्मिन् क्षणे मयोपलब्धः' इति 'प्रातरारभ्य एतावन्तं कालं मयोपलब्धः' इति च । कालभेदे तु अगृहीते कथमेव भवेत् । 'शतपत्रपत्रशतं मया सूच्या युगपद् भिन्नम्' इति तु स्थूलकालविषयकम् ।

वस्तुतस्तु धारावाहिकस्थले तावत्कालयायिनी एकैव ज्ञानव्यक्तिः, कारणभेदाभावात्, तद्भेदकल्पने मानाभावात्, योग्यविभुविशेषगुणानां त्रिक्षणावस्थायित्वस्य परिभाषामात्रत्वात् ।

वस्तुतस्तु स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वमेव अनधिगतार्थगन्तृत्वम् । अतः कालभेदस्य इन्द्रियवेद्यत्वाभावेऽपि न क्षतिः । दिनान्तरे गृहीतस्य घटादेः दिनान्तरे पुनर्ज्ञानमपि प्रमैव । याथार्थ्यमपि प्रमालक्षणे देयम् । तच्च तद्वति तत्प्रकारकत्वम्, विशेष्यावृत्त्यप्रकारकत्वं वा । अनुमितेरपि वह्निविशिष्टः पर्वतो विषयः इति अनधिगतार्थगन्तृत्वम् । न च पर्वतस्य अनुमितिविषयत्वे 'पर्वतमनुमिनोमि' इत्यनुव्यवसायापत्तिः, विधेयताख्यविषयताशालिन एव 'अनुमिनोमि' इत्यनुव्यवसायविषयत्वनियमात् । एवं शाब्दादावपि अनधिगतार्थगन्तृत्वं बोध्यम् । लौकिकशब्दजन्यज्ञानं तु न प्रमा, अनधिगतार्थगन्तृत्वाभावात् । न च लौकिकशब्दः प्रमाणम्, तस्य प्रमाकरणत्वाभावात् । लौकिके शब्दे तज्जन्यज्ञाने च प्रामाण्यव्यवहारस्तु तद्वति तत्प्रकारकत्वांशमादाय गौणः । आप्तत्वं च अग्रेऽप्युच्यते । वेदस्तु प्रमाणम्, तस्य वक्तृदोषाशङ्कानास्पदत्वात् । 'व्रीहिभिर्यजेत' इत्यादिवाक्येषु यागादिपदार्थविषये प्रमाण-

सिद्धमेव । तदुक्तम् 'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥' इति ( वा. १।३।८।२४ पृ. २७३ )। ( अत्र श्लोके सुधा– यथा ब्राह्मणशब्दे ब्रह्मशब्दार्थो नञर्थश्च णकारार्थ एव वा ज्ञानाख्यः अतिरिक्तस्तश्च नास्ति, कम्बलशब्दे च कंशब्दार्थः बलशब्दार्थो वा नास्ति, तथा देवदत्तादयः शब्दाः वाक्ये अनर्थकाः स्युः इति टीकाकारश्लोकार्थः । पृ. ३०४ )।

प्रामाण्यं च स्वतः । अप्रामाण्यं तु परतः । स्वतस्त्वं च कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । परतस्त्वं तु बाधकज्ञानकारणदोषविसंवादज्ञानाधीनत्वम् । याथार्थ्यरूपप्रामाण्यस्य स्वतस्त्वम्, अयाथार्थ्यरूपाप्रामाण्यस्य च परतस्त्वं ज्ञानग्राहकत्वं कारणदोषादिज्ञानग्राह्यत्वं च क्रमेण बोध्यम् । कु. १।१।५।५ पृ. ६–७. ● प्रामाण्यं नास्ति 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतेः । वि. १।३।२. ● प्रामाण्यं नास्ति प्रत्यक्षादेर्धर्मे । १।१।४। ४. ● प्रामाण्यं नास्ति बाह्यग्रन्थानाम् । वा. १।३।२।४ पृ. १९४. ● प्रामाण्यं नास्ति वेदाविरुद्धस्यापि शाक्यवचनस्य । भाट्ट. १।३।२ वर्णकं २. ● प्रामाण्यं नास्ति श्रुतिविरुद्धायाः स्मृतेः । १।३।२।३–४. ● प्रामाण्यं नास्ति स्वतः कल्पसूत्राणाम् । १।३।६।११–१४. ● प्रामाण्यं परत उत्पद्यते ( गुणतः ) एवं ज्ञानान्तरेण गृह्यते च । अर्थक्रियादिज्ञानेषु तु अगत्या स्वतःप्रामाण्याङ्गीकारः । इति नैयायिकाः । मणि. पृ. १४, ● प्रामाण्यं प्रमाकरणत्वम् । पृ. ११. ● प्रामाण्यं म्लेच्छप्रसिद्धशब्दार्थस्य आर्यप्रसिद्ध्यविरोधे । १।३।५. ● प्रामाण्यं यागनामतया उद्भिद्–बलभिद्– विश्वजित्– आदीनाम् । १।४।१।१. ● प्रामाण्यं वाक्यार्थस्य पदार्थमूलतया । भा. १।१।७।२४–२६. ● प्रामाण्यं सदाचाराणां वसन्तोत्सवादीनाम् । वा. १।३।३।७ पृ. २०३. ● प्रामाण्यं स्मृतीनाम् । १।३।१।१–२. ● प्रामाण्यं स्वतः अप्रामाण्यं तु परतः । स्वतस्त्वं च कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । परतस्त्वं तु बाधकज्ञानकारणदोषविसंवादज्ञानाधीनत्वम् । कु. १।१।५।५. ● प्रामाण्यं स्वतः विधेः, अबोधकत्वापेक्षत्वयोरप्रामाण्यकारणयोरभावात् । वि. १।१।५. ● 'परिच्छेदफलत्वाद्धि प्रामाण्यमुपपाद्यते ।' श्लोवा. शब्दपरिच्छेदः १०४. ● प्रामाण्यस्य स्वतस्त्वं कारणगुणसंवादार्थक्रियाज्ञानानधीनत्वम् । बाल. पृ. ५–६.

● प्रामाण्याभावः ( अननुष्ठानलक्षणः ) श्रुतिविरुद्धस्मृतीनाम् । भा. १।३।२।३–४.

● प्रामाण्यपरीक्षा धर्मे प्रमाणानाम् । भा. १।१।३।३.

● प्रामाण्यवादः । ज्ञानप्रामाण्यं ज्ञानहेतुभिन्नहेतुजन्यं ज्ञानग्राहकभिन्नज्ञानग्राह्यं च, उतस्वज्ञानसामग्रीजन्यं ज्ञानग्राहकसामग्रीग्राह्यं चेति निरूप्यते ।

अत्र नैयायिकाः । 'प्रमात्वं ज्ञानसामान्यकारणभिन्नकारणजन्यतावच्छेदकं ज्ञानवृत्त्यनित्यधर्मत्वात् अप्रमात्ववत्' इत्यनुमानेन प्रमात्वस्य इन्द्रियादिगतगुणजन्यत्वं सिध्यति । दोषाभावस्य कारणत्वे गौरवात्, 'पीतः शङ्खः' इति शङ्खभ्रमानुत्पत्तिप्रसङ्गाच्च । अन्वयव्यतिरेकाभ्यां तद्धेतुकत्वसिद्धेश्च । एवं च प्रमायां गुणः भ्रमे च दोषः कारणम् ।

किञ्च रजतादपि रजतज्ञानोत्पत्तिदर्शनात् न ज्ञानमात्रस्य तत्प्रकारकत्वावच्छिन्नतद्वद्विशेष्यकत्वनियमः । अतस्तत्र भिन्ना सामग्री वाच्या । ज्ञानसामान्यकारणजन्यत्वे जन्यज्ञानमात्रस्य प्रमात्वप्रसङ्गः । तेन प्रामाण्यं अप्रामाण्यं च परत उत्पद्यते । एवं ज्ञानान्तरेण गृह्यते । तत्र 'इदं ज्ञानं प्रमा, गुणवत्कारणजन्यत्वात्, अर्थक्रियासंवादात्, बाधाभावात्' इत्याद्यनुमानम् । संवादत्वं च तद्विषयविषयकत्वम् । न चैवं वेदवाक्यजन्ययागस्वर्गसाध्यसाधनभावज्ञाने अर्थक्रियासंवादाभावात् न कदाऽपि प्रामाण्यनिश्चयः स्यादिति वाच्यम् । तेषां ईश्वरवाक्यजन्यतया गुणवत्कारणजन्यत्वेन तदनुमानात् । न च अर्थक्रियादिज्ञानेषु कथं प्रामाण्यनिश्चयः इति वाच्यम् । अगत्या तत्र स्वतःप्रामाण्याङ्गीकारात् । तस्मात् परतः प्रामाण्यं निश्चीयते इत्याहुः ।

सिद्धान्तस्तु— अनन्तगुणानां हेतुत्वमपेक्ष्य ज्ञानसामान्यसामग्रीजन्यत्वस्यैव उचितत्वात् दोषवदिन्द्रियजन्यत्वाभि धर्मस्य प्रमात्वाच्च ।

अवगम्यते, इत्यपरे (नैयायिकाः)। तदपि अपेशलम्। एवं हि गुणदोषावधारणात् प्राक् अन्यतरेणापि आकारेण अयं अनवगमयत् विज्ञानं निःस्वभावं स्यात्। तस्मात् अप्रामाण्यं स्वतः, प्रामाण्यं तु संवादज्ञानादिभिः इत्येतदेव युक्तम् (इति सौगताः)। तथाहि। न ज्ञानमुत्पन्नं इत्येतावता अर्थतथात्वावधारणं युक्तम्, व्यभिचारात् अनिश्चयाच्च। अप्रामाण्यमेव तस्या वेलाया न्याय्यम्। पश्चात् कारणगुणज्ञानात् संवादज्ञानात् अर्थक्रियाज्ञानाद्वा प्रामाण्यावगमात् अपोद्यते। शब्दे च आप्तप्रणीतत्वं गुणः। न च वेदे तदस्ति, अपौरुषेयत्वाभ्युपगमात्। 'वनस्पतयः सत्रमासत' 'शृणोत ग्रावाणः' इत्येवमादीनां उन्मत्तप्रलपितकल्पत्वात् अनाप्तप्रणीतत्वात् अप्रामाण्यमेव वेदानाम्। इति प्राप्ते, अभिधीयते। 'परापेक्षं प्रमाणत्वं नात्मानं लभते क्वचित्। मूलोच्छेदकरं पक्षं को हि नामाध्यवस्यति॥' यदि हि सर्वमेव ज्ञानं स्वविषयतथात्वावधारणे स्वयमसमर्थं विज्ञानान्तरमपेक्षेत, ततः कारणगुणसंवाद– अर्थक्रियाज्ञानान्यपि स्वविषयभूतगुणाद्यवधारणे परमपेक्षेरन्, अपरमपि तथा, इति न कश्चिदर्थो जन्मसहस्रेणापि अध्यवसीयेत इति प्रामाण्यमेव उत्सीदेत्। अथ अर्थक्रियाज्ञानं स्वतःप्रमाणमिति चेत्, को विशेषः? अव्यभिचार इति चेत्, न, स्वप्नावस्थायां असत्यपि उदकाहरणे अर्थक्रियाविज्ञानदर्शनात्। अथ सुखज्ञानमेव अर्थक्रिया, तच्च अव्यभिचारि एव। नहि क्वचिदपि असति सुखे सुखज्ञानमस्ति। सत्यमेतत्, न तु तेन पूर्वज्ञानस्य प्रामाण्यावधारणं संभवति, अप्रमाणेनापि मिथ्यागगनविज्ञानेन स्वप्नावस्थायां सुखदर्शनात्। तस्मात् स्वतःप्रामाण्यं प्राप्तं अर्थान्यथात्वकारणदोषज्ञानाभ्यां अपोद्यते इत्ययं अङ्गीकरणीयम्। एवं च शब्देन आप्तपुरुषसंपर्करहितत्वात् दोषाणां अपौरुषेये वेदे तदभावात् स्वतः अर्थान्यथात्वज्ञानाभावात् अनपोदितं प्रामाण्यं भवति। पौरुषेयवचनानि तु पुरुषबुद्धिप्रभवत्वात् भ्रान्त्या विप्रलिप्सया वा प्रयुक्तानि मूलदोषेण दुष्टत्वात् अयथार्थानि भवन्ति इति वैषम्यम्। अनाप्तवचसां स्वत एव अप्रामाण्ये वक्तृदोषाधीनत्वात् वेदे च तदभावात् प्रामाण्यं वक्तव्यम्। शा. तर्कपादे पृ. २०–२१.

* प्रामाण्यवादार्थः। 'विज्ञानस्य प्रमाणत्वं स्वतो निर्णीयते यथा। परतश्चाप्रमाणत्वं तथा न्यायोऽभिधीयते॥ १॥' स्वतः सर्वप्रमाणानामित्यारभ्य स्वतःप्रामाण्यं परतश्चाप्रामाण्यमाचार्यैर्निबद्धम्। तत्र व्याख्यातारो विवदन्ते— स्वशब्दः किमात्मवचन आत्मीयवचनो वा, तथा प्रामाण्यं किं स्वतो भवति किं वा भाति, तथा प्रामाण्यं नाम किं अर्थतथात्वं किं तथाभूतार्थनिश्चायकत्वमिति। तत्र च 'आत्मवाची स्वशब्दोऽयं स्वतो भाति प्रमाणता। अर्थस्य च तथाभावः प्रामाण्यमभिधीयते॥ २॥' तत्र के चित्तावदाहुः प्रामाण्यं नाम अर्थाव्यभिचारित्वं तथाभूतार्थविषयत्वमिति यावत्। तच्च ज्ञानानां स्वत जायते। स्वशब्दोऽयमात्मीयवचनः स्वीयादेव कारणात् तथाभूतार्थविषयत्वं ज्ञानस्य जायते, न गुणात्। अप्रामाण्यं तु अयथार्थविषयत्वलक्षणं न स्वीयादेव कारणाज्जायते, अपि तर्हि तद्गताद्दोषादिति परत इत्युच्यते। यदि हि सत्यार्थविषयता गुणनिमित्ता स्यात् स्वकारणदोषात् स्वसत्याविषयतैव, यथा सति दोषयुक्तात् गुणहीनादिन्द्रियादेः पीतशङ्खादिज्ञानेषु न किञ्चित् सत्यं गम्येत। गम्यते तु तत्रापि शङ्खस्वरूपादिकं सत्यम्। दोषाधीने त्वयथार्थत्वे स्वकारणाधीने सत्यविषयत्वे इत्युभाभ्यां मिलिताभ्यां जायमानं सत्यासत्यार्थविषयकं भवतीत्युपपन्नम्। तस्मात् स्वीयात्कारणात् यथार्थत्वलक्षणं प्रामाण्यं जायते, न तु भाति। न हि ज्ञानमात्मानमात्मीयं वा प्रामाण्यमवगमयति, अर्थप्रत्यक्षमात्रोपक्षीणत्वात्। परतस्तु कारणदोषादयथार्थत्वलक्षणमप्रामाण्यमिति दोषाभावादेवास्य यथार्थत्वमिति। अस्मिंस्तु पक्षे 'जातेऽपि यदि विज्ञाने' (श्लोक. चोदनासूत्रम् ४९) इत्यादिना अनवस्थाप्रसङ्गेन परतःप्रामाण्यदूषणं न घटते। गुणज्ञानाधीने हि प्रामाण्ये स्यादनवस्था। गुणस्वरूपाधीने तु अनवगता एव गुणा इन्द्रियवत् ज्ञानप्रामाण्यं जनयन्ति इति न अनवस्थापत्तिः। तथा 'दोषाभावे गुणेभ्यश्चेत् उभयीरितमेव'

( श्लोवा. चोदनासूत्रम् ६६ ) इति चोदयित्वा ‘ यदा न व्याप्रियन्ते हि ज्ञायमानतया गुणाः ’ ( श्लोवा. चोदनासूत्रम् ६७ ) इति परिहरन् परपक्षे गुणज्ञानादेव प्रामाण्यम्, न गुणस्वरूपात् इति दर्शयति । तथा ‘ तस्माद् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥ ’ ( श्लोवा. चोदनासूत्रम् ५३ ) इति वदन् सिद्धान्ते दोषज्ञानादेव अप्रामाण्यम्, न दोषस्वरूपात् इति व्यक्तमेव आह । तथा ‘ अपरे कारणोत्थगुणदोषावधारणात् ’ ( श्लोवा. चोदनासूत्रम् ३४) इत्यादयो बहवः श्लोवा अस्मिन् पक्षे न सङ्गच्छन्ते । अतो न वार्तिककाराभिमतोऽयं पक्षः । अन्ये त्वाहुः । अनधिगततथाभूतार्थनिश्चायकत्वं प्रामाण्यम् । तच्च ज्ञानात् स्वतः एव जायते । स्वशब्दश्चात्र प्रमाणवचनः । ज्ञानस्वरूपादेव तथाभूतार्थनिश्चयो जायते न गुणज्ञानात्, *संवादज्ञानात्, अर्थक्रियाज्ञानाद्वा, अनवस्थाप्रसङ्गात्* । अर्थान्यथात्वनिश्चयस्तु परतो दोषज्ञानात् अर्थान्यथात्वज्ञानाद्वेति परत इत्युच्यते इति । अस्मिन्नपि पक्षे स्वतः प्रामाण्य जायते, न तु ज्ञायते । अत्रेदं वक्तव्यम्— यदि प्रामाण्यस्य जन्मनि स्वयमेव कारणं ज्ञानम्, तथा तस्याप्रामाण्यस्यापि जन्मन्येव दोषज्ञानबाधकज्ञानयोः कारणत्वं वक्तव्यम् । तत्र कथमप्रामाण्यं कारणदोषज्ञानाद्बाधकज्ञानाद्वा जायते ? न हि शुक्तौ रजतज्ञानस्य बाधकादिजन्यमप्रामाण्यम्, उत्पत्तावेव तस्याप्रमाणत्वात् । अतथाभूतार्थनिश्चयो ह्यप्रामाण्यम् । तच्च अप्रमाणज्ञानं स्वत एव भवतीति न तद्बाधकज्ञानादिकमपेक्षते । न खलु पूर्वं प्रमाणं सत् पश्चाद्बाधकेनाप्रमाणीक्रियते, अपि तूत्पत्त्यैवास्यभूतमप्रामाण्यं बाधकेन ख्याप्यते, न तदर्थस्यान्यथाभावावधारणनिश्चयो बाधकेनैव जन्यते । यत्नम्, न तु तदेवाप्रामाण्यम् । न ह्यर्थान्यथात्वनिश्चयः पूर्वज्ञानस्याप्रामाण्यम्, किन्तु वस्तुतोऽर्थस्यान्यथाभावः, अन्यथाभूते वा तथाभावनिश्चायकत्वम् । नैतदुभयमपि बाधकजन्यम्, स्वत एवार्थस्यान्यथाभावात्, स्वत एव चाप्रमाणज्ञानादन्यथाभूतेऽर्थे तथात्वनिश्चयात् । तथा चाप्रामाण्यमपि स्वत एवोत्पद्यते । ‘ तस्मात् बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता । अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते ॥ ’ ( श्लोवा. चोदनासूत्रम् ५३ ) इति श्लोकोऽपि भवता इत्थं व्याख्येयः बुद्धेः स्वतो जातं प्रामाण्यं पश्चादपोद्यते इति । तदयुक्तम्, उत्पत्त्यैवाप्रमाणत्वात् । अथ निश्चायकत्वं प्रामाण्यम्, तदभावोऽप्रामाण्यम्, तच्च बाधकेन निराक्रियते इति मतम् । तदयुक्तम् । न हि बाधकेन निश्चयस्य विनाशः क्रियते, तस्य स्वत एव क्षणिकत्वात् । तस्मादेव वक्तव्यम् । ‘बुद्धेः स्वीयं प्रमाणत्वं स्वत एवावगम्यते । परतस्त्वप्रमाणत्वं दोषबाधकबोधतः ॥ ३ ॥ नन्वत्रापि ग्रन्थविरोधो न्यायविरोधश्च स्यात् । तथाहि । न हि विज्ञानमात्मानं गृह्णाति, नतरामात्मीयं प्रामाण्यम्, अर्थग्रहणोपक्षीणत्वात् । तथा च ‘ ननु प्रमाणमित्येवं प्रत्ययादि न गृह्यते । न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ’ ( श्लोवा. चोदनासूत्रम् ८२ ) इति प्रामाण्याग्रहणदोषं चोदयित्वा ‘ *प्रमाणग्रहणात्पूर्वं स्वरूपेणैव संस्थितम् । निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः* ॥ ’ ( श्लोवा. चोदनासूत्रम् ८३) इति प्रमाणत्वाग्रहणमङ्गीकृत्यैव दोषप्रसङ्गं समाधत्ते, तद्विरुध्यते प्रामाण्यस्यात्मना ग्रहणे । तथा ‘ निश्चायकत्वस्यात् प्रामाण्य जन्यते गुणैः ’ इति निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात् प्रमादकारणगुणज्ञानकार्यत्वेन अभ्युपगन्तमिति पूर्वपक्षे प्रामाण्यस्य जन्मन्येव गुणानां कारणत्वमिति वदन् सिद्धान्तेऽपि जन्मैव स्वत इति दर्शयति । तस्मात् स्वतो ज्ञायत्वमपि पक्षोऽनुपपन्न इति ।

अत्राभिधीयते । यत्तावत् उक्तम् ‘ न ज्ञानं आत्मानं गृह्णाति, विषयप्रकाशकत्वात् । न चात्मन्यगृह्यमाणे तत्सम्बन्धितया प्रामाण्यं शक्यते ग्रहीतुम् ’ इति । यदि वयं ज्ञानं ‘ अहं प्रमाणम् ’ इत्येवं ‘ मदीयं वा प्रामाण्यम् ’ इत्येवं गृह्णातीति वदेम तदैवमुपालभ्येमहि, न त्वेवमस्माभिरुच्यते । यत् वस्तुतो ज्ञानस्य प्रामाण्यं यद्वशात् ज्ञानं प्रमाणं भवति तत् प्रमाणबुद्धिशब्दयोर्निमित्ततया लब्धप्रामाण्यशब्दाभिधानीयकमात्मन्येव ज्ञानेन गृह्यत इत्युच्यते । किं पुनस्तत् अर्थतथात्वम् ? इदमेव हि ज्ञानस्य प्रामाण्यं यदर्थस्य तथाभूतत्वम्, अतथाभूतविषयस्य ज्ञानस्याप्रामाण्यात् । इदमेव चाप्रामाण्यं यदर्थस्यान्यथात्वम् । येन

स्वत एव ज्ञानादर्थतथात्वरूपमात्मीयं प्रामाण्यं निश्चीयते, न तु गुणज्ञानात् संवादज्ञानात् अर्थक्रियाज्ञानाद्वा तदवगन्तव्यम् । अप्रामाण्यं त्वात्मीयमर्थान्यथात्वरूपं स्वतो नावगम्यते, न तु ( ? किन्तु ) कारणदोषज्ञानात् बाधज्ञानाद्वा नैतदेवमिति ज्ञानादवगम्यते इत्येतदत्र प्रतिपाद्यते । आह च । 'मिथ्यैकत्वर्यविज्ञानमिति नाज्ञायि तेन हि । प्रमाणरद्धि तेनार्थस्तथैवेत्यवधारितः । अन्यथारव इन्द्रियस्य सिद्धे ज्ञानान्तरपदते ॥' इति । तथा 'अप्रमाणं पुनः स्वार्थे प्रमाणमिव हि स्वतः । मिथ्यात्वं तस्य गृह्येत न प्रमाणान्तरादृते ॥ न ह्यर्थस्यातथाभावः पूर्वेणोक्तस्तथात्ववत् । तथात्वे त्वनुपलब्धत्वान्निष्फला स्यात् पुनः प्रमा ॥ अन्यथात्वे त्वसिद्धत्वात् सापेक्षं प्रमान्तरम् ॥' इति । तथा विचारोपक्रमे 'प्रमाणत्वाप्रमाणत्वे ज्ञानस्य स्वत एव किम् । अथवैकमपि स्पष्टं स्वभावेनानिरूपितम् ॥ परतो भवतस्तद्विषयमेकं पक्ष प्रपद्यते ॥' इति यदत्र प्रमाणत्वाप्रमाणत्वनिरूपणमेव हि स्वतः परतो वेति चिन्त्यते इति स्पष्टमेवाह । यत्तु 'ननु प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते । ( न चैवमगृहीतेन व्यवहारोऽवकल्पते ॥ ) प्रमाणं ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम् ।' ( श्लोवा, चोदनासूत्रम् ८२–८३ ) इति वार्तिकं तत् प्रमाणमस्मीत्यनेन आकारेण अग्रहणात् तथा च प्रमाणमित्येवं प्रत्यक्षादि न गृह्यते इत्याह । ननु यदि प्रमाण्यं ज्ञानोत्पत्तिसमये अवगम्यते, यत् उत्पत्तौ प्रमाणतया न चकास्ति तदप्रमाणमित्युत्पत्त्यैव परिशेषात्सिध्येत् इत्यर्थं विनापि कारणदोषबाधकप्रत्ययाभ्या इति अप्रामाण्यमपि स्वत एवापद्येत ।

मैवं मोच' । न हि स्वशब्दोऽयं प्रामाण्यपरतया प्रयुक्तः प्रामाण्यादेव प्रामाण्यं भवतीति, नापि प्रमाणपरतया । यदि हि तथा स्यात् ततोऽप्रमाणेषु प्रमाणत्वानवभासात् परिशेषसिद्धमप्रामाण्यं स्यात् । विज्ञानपरस्तु स्वशब्दः विज्ञानादेव प्रामाण्यं भवतीति । ततश्चाप्रमाणज्ञानादपि प्रामाण्यमेवात्मनोऽसदपि बोध्यत इति नाप्रामाण्यस्य परिशेषसिद्धिः । अप्रामाण्यं तु प्रतीतप्रामाण्यापवादरूपेण पश्चाद्बोध्यत इति । यथाऽऽह– 'यस्मात् स्वतः प्रमाणत्वं सर्वत्रौत्सर्गिकं स्थितम् । बाधकारणदुष्टत्वबोधाभ्यां तदपोद्यते इति ॥' स्थितं प्राप्तं प्रतिपन्नमित्यर्थः । सर्वत्रेति न केवलं प्रमाणेषु, ज्ञानमात्रे इति यावत् । तथा 'अप्रमाणमपि स्वार्थे प्रमाणमिव हि स्वतः ।' इति । न च प्रमाणज्ञानान्यधिकृत्य चिन्तेयं प्रमाणानां प्रामाण्यं स्वतः परतो वेति । किं तर्हि ? यानि तावत् स्थाणुर्वा पुरुषो वा इति परस्परोपमर्दकानेककोटिस्पर्शिज्ञानेभ्यः स्मृतिज्ञानेभ्यश्चातिरिक्तानि घटोऽयं पटोऽयमित्येवंरूपाणि ज्ञानानि तानि सर्वाण्यधिकृत्य चिन्तेयम् । 'सर्वविज्ञानविषयमिदं तावत्परीक्ष्यताम् ।' ( श्लोवा, चोदनासूत्रम् ३ । प्रतीक्ष्यतामिति पाठः । ) इत्युपक्रम्यते । यदि प्रमाणान्येव विषयीकृत्य चिन्त्येत ततो विषयस्योभयवादिसिद्धत्वात् यान्युभयोः प्रमाणतया प्रसिद्धानि तेषां प्रामाण्यं स्वत इत्येतावत् सिध्यन्येत । ततश्च वेदस्योभयवादिसिद्धप्रमाण्याभावेन विचाराविषयत्वात् नास्य स्वतः प्रामाण्यं साधितं स्यात् । तत्र वेदप्रामाण्यानुपयोगिनी चिन्ता काकदन्तपरीक्षावदकर्तव्या स्यात् । ज्ञानमात्रं त्वधिकृत्य स्वतः प्रामाण्ये परतश्चाप्रामाण्ये साध्यमाने वेदस्यापि स्वतस्तावद्विषयतथात्वरूपं प्रामाण्यमवगतं स्यात् ( ? अत् ) कारणदोषज्ञानादेरभावान्निरपवादं स्थितं भवतीति प्रयोजनवती चिन्ता ।

ननु नार्थतथात्वमत्र प्रामाण्यम्, स्मृतेरपि तथात्वप्रसङ्गात् । सत्यम्, न तावन्मात्रम् । अपि तु प्रकरणे तावन्मात्रमेन स्वतः परतो वेति चिन्त्यते । प्रमाणशब्दो ह्यधिगततया अननुसंधीयमानतयाभूतार्थनिश्चायकत्ववाची । तस्य भावः प्रामाण्यम् । कथं तस्य भावः ? प्रमाणान्तरानधिगततया अननुसंधीयमानत्वम्, तथाभावश्च अर्थस्य, ज्ञानस्य तन्निश्चयजनकता, इति त्रितयं मिलितं प्रमाणबुद्धिशब्दयोर्वाच्यं प्रामाण्यम् । तत्र यदेतदर्थस्यानवगततया अननुसंधीयमानत्वं तद्योग्यानुपलब्धिगम्यत्वेन न ज्ञानस्वरूपाद् गम्यते । न हि घटज्ञानं घटस्यान्यतः अनवगतत्वं प्रतिपद्यते । नापि गुणज्ञानादिभिस्तदवगतिः । तेन न तत्र स्वतः परतो वेति चिन्ता । यदेव तु तन्निश्चयाभूतनिश्चयेनाप्रयार्थतत्त्वान्यथात्वप्रामाण्यमभावाद्धि तत्परिहारयथार्थतयार्थस्य निश्चयजनकं प्रामाण्यं स्वत इति साध्यते । यत्तु 'निश्चयात्मकप्रामाण्योत्पादनम्' इति प्रमाः सोऽप्य-

विरुद्धः। तथाहि यदर्थतथात्वनिश्चायकं तदेव तद्विषयस्य निश्चयस्योत्पादकं भवति। यदेव हि ज्ञेयापेक्षया ज्ञापकं तदेव ज्ञानापेक्षया जनकं भवति। निश्चयोऽपि च प्रमाणशब्दप्रवृत्तिनिमित्तत्वात् प्रामाण्यमेव। 'तेन अर्थतथात्वलक्षणं प्रामाण्यं गुणज्ञानान्निश्चीयते' इति प्रतिपादयतः पूर्वपक्षिणो नार्थगतः 'निश्चयात्मकप्रामाण्योत्पादनं तु वस्तुस्वरूपत्वात् संवादगुणज्ञानकार्यत्वेन स्वप्रत्ययात्मकम्' इति ग्रन्थः। यदि पुनरिदमेव साक्षादुच्यते 'निश्चयात्मकं प्रामाण्यं स्वतो जायते' इति, तथा सत्यप्रामाण्यमपि परतो जायत इति वक्तव्यम्। अन्यथाऽस्य प्रतिपन्नत्वमेव न स्यात्। प्रामाण्यं स्वतो जायते, अप्रामाण्यं परतोऽवगम्यते इति। तस्मात् स्वतः परतश्च प्रामाण्यमप्रामाण्यं चावगम्यते इत्येव प्रकरणार्थः। एवं हि न्यायो ग्रन्थश्च समञ्जसो भवति।

तद्यथात्र पूर्वोत्तरपक्षसंक्षेपः। पश्चादुत्पन्नघटज्ञानदर्शनान्न तन्मात्रेण घटो निश्चेतुं शक्यते। तेनार्थक्रियादर्शनादेव तद्धेतुभूतघटनिश्चयपुरःसरं पूर्वस्य घटज्ञानस्य यथार्थत्वनिश्चेतव्या। अर्थक्रियाज्ञानं तु अव्यभिचारात् स्वतःप्रामाण्यमर्थक्रियायाः निश्चाययत् शक्नोति पूर्वज्ञानस्य प्रामाण्यं निश्चाययितुम्। तथा ज्ञानान्तरसंवादोऽपि नार्थतथात्वाभावे घटते इति ततोऽप्यर्थतथात्वनिश्चयः। तथा गुणवत्कारणजन्यं विज्ञानं यथार्थमेव भवतीति कारणगुणावधारणादपि शक्यतेऽर्थस्य तथाभावो निश्चेतुम्। तस्मात् परत एव ज्ञानस्य प्रामाण्यनिश्चयः, न स्वतः तस्यार्थतथात्वलक्षणं प्रामाण्यं निश्चेतुं शक्यम्, अनैकान्तिकत्वात्। अनिश्चिते चार्थे नास्ति प्रामाण्यमित्यप्रामाण्यमेव ज्ञानस्य स्वतः। किञ्च निश्चयप्रागभावो न दोषज्ञानेन शक्यते जनयितुम्, निश्चयस्तु वस्तुत्वाच्छक्यते गुणज्ञानादिना जनयितुम्। तस्मात् परत एवार्थतथात्वरूपप्रामाण्यं निश्चीयते इति पूर्वः पक्षः।

सिद्धान्तस्तु न ज्ञानमव्यभिचारमुखेनैव अर्थं निश्चाययति, किन्तु स्वत एव। यदि हि स्वतो निश्चेतुं न शक्नुयात् तदा सति निश्चायकान्तराभाव एव स्वारसिक्याऽप्यर्थेनाक्षेपस्य स्थाने भवेत्। न हि स्वतोऽनिश्चितोऽर्थः परतो निश्चेतुं शक्यते, परस्यापि तद्वदेवासामर्थ्यात्। यथा हि घटज्ञानमसत्यपि घटे दृष्टमित्यनिश्चायकम्, तथा अर्थक्रियाज्ञानमप्यसत्यामेवार्थक्रियायां स्वप्नावस्थायां दृष्टमिति न तेनापि सा निश्चेतुं शक्या, ततश्च तया घटनिश्चय इत्यायातमान्ध्यमशेषस्य जगतः। अथ अर्थक्रियाशब्देन नोदकाहरणादिरुच्यते, किन्तु ज्ञानमेव सुखात्मकम्, तच्च सुखज्ञानं स्वात्मनि स्वत एव प्रमाणम्, अव्यभिचारात् इत्युच्यते। तथा सति भवतु नामार्थक्रियानिश्चयः, तथापि न तया पूर्वज्ञानस्य शक्यं याथार्थ्यं निश्चेतुम्। अयथार्थादपि स्वप्ने चन्दनलेपादिना सुखोत्पत्तेः। अपि च गृहीताविनाभावयाऽर्थक्रियया पूर्वज्ञानविषयस्य निश्चयः। अनुमानं ह्येतत् कार्यात् कारणयोरवगमः। न चागृहीते संबन्धिनि संबन्धग्रहणसंभवः। तेन संबन्धग्रहणसमये अवश्यं घटज्ञानादेव घटनिश्चयोऽङ्गीकर्तव्यः। एवं गुणज्ञानसंवादज्ञानयोरपि वाच्यम्। न हि गुणज्ञानाद् गुणोऽपि निश्चेतुं शक्यते, किं पुनः पूर्वज्ञानप्रामाण्यम्। तथा संवादोऽपि। संवादो नाम तद्विषयं ज्ञानान्तरम्। तस्य पूर्वज्ञानात् को विशेषः येन पूर्वज्ञानानिश्चितमनेन निश्चीयते। यद्यपि वस्तुत्वादन्यो निश्चयः तथापि ज्ञानेनैव जन्यते, नान्येन। तस्मात् स्वत एव प्रामाण्यं परतश्चाप्रामाण्यं दोषज्ञानाद्बाधकज्ञानाद्वा निश्चेयम्।

ननु अवस्तुत्वाद् दोषजन्यमप्रामाण्यं भवति, अतः जन्यं च न ततोऽवधारयितुं शक्यम्। उच्यते। न तावन्निश्चयप्रागभावरूपमप्रामाण्यं दोषैर्लभ्यते इति ब्रूमः, किन्तु अर्थान्यथात्वरूपम्। तद्धि शक्यं दोषज्ञानेन निश्चेतुम्, दोषनिमित्तकत्वादयथार्थत्वस्य दुष्टेषु कारणेष्वयथार्थत्वदर्शनात्। वेदेऽपि स्वतस्तावत् प्रामाण्यं दोषाभावादनपोदितं स्थितम्।

कथं पुनरवगम्यते दोषनिमित्तमयथार्थत्वम्, न गुणाभावनिमित्तमिति? सर्वत्र हि गुणविधुरेषु दुष्टेषु च कारणेषु अयथार्थत्वं ज्ञायते। तत्र कुतोऽयं विवेकः दोष एव निमित्तं न गुणवैधुर्यमिति? तस्माद्यद्यपि परत एवाप्रामाण्योपलम्भः तथापि गुणाभावादेवोपलभ्यमाने वेदे च आप्तप्रणीतत्वगुणायोगात् स्यादप्रामाण्यस्यापि

वेदस्य परत एव गुणाभावादप्रामाण्यमापद्यते इति । तदभिधीयते । दृष्टानुसारिणी हि कल्पना भवति, न दृष्टवैपरीत्येन । तेन वेदस्य स्वत एव प्राप्तं प्रामाण्यं यथा न विरुध्यते तथा चेतत् कल्पयितुं शक्यते । ततो विरुद्धं न कल्पयितुं युक्तम् । तेन यद्यपि प्रत्यक्षे-न्द्रियार्थज्ञानेषु गुणाभावो दोषाश्च दृष्टाः, तथापि वेदे गुणाभावेऽपि प्रामाण्यदर्शनात् तस्मा व्याचीति दोष-निमित्तमेवायथार्थत्वं शुक्तिरजतादिज्ञानानां कल्प्यते । अन्यथा हि ज्ञानान्तरनिबन्धनमयथार्थत्वं कल्प्येत, सर्वेष्व-प्रमाणेषु ज्ञानान्तरदर्शनात् । तत्र यथार्थेष्वपि प्रत्यक्षादिषु ज्ञानान्तरदर्शनान्न तन्निमित्तमयथार्थत्वम् । एवं गुणाभावो-ऽपि यथार्थे वेदे दृष्टत्वात् नायथार्थत्वस्य निबन्धनम् । असिद्धं तस्य यथार्थत्वमिति चेत्, प्रत्यक्षादीनां वा कुतः सिद्धम् ? स्वत इति चेत्, तद्वेदेऽपि समानमन्यत्र नास्तिक्याभिनिवेशात् । तस्मात् तन्निबन्धनं प्रामाण्यम् । अपि च शुक्तिकारजतादिज्ञाने गुणाभावेऽपि शुक्लभास्वर-त्वादिरूपाणां यथाभूतानामेव दर्शनात् गुणायत्तं यथार्थत्वं ज्ञानस्य । यदि तु स्वकारणादेव यथार्थत्वं दोषाद्ययथार्थ-त्वमिति । तथा सति शुक्तिकारजतादिज्ञानानि स्वकारण-वशाद्दोषाच्च यथाभूतं शुक्लत्वादि अतथाभूतं च रजतत्वा-दिकं गोचरयन्तीत्युपपन्नं भवति । तस्मात् स्वतः सिद्धं प्रामाण्यं सर्वज्ञानानाम्, तच्च वेदस्यानपोदितमिति सिद्धम् । 'पार्थसारथिमिश्रेण स्वतःप्रामाण्यनिर्णयः । व्याख्याविषादसंजातमोहव्यावृत्तये कृतः ॥ ४ ॥' रत्नमाला. पृ. ३०–३९.

● प्रायोवृत्त्या भवति हि तद्बुद्धिः, यथा अन्य-प्राये लिखितः अन्यः इति गम्यते । भा. ९।७। ११।५०.

● 'प्रायेणानृतवादित्वात् पुंसां भ्रान्त्यादिसंभवात्' इति न्यायेन पुरुषविशेषप्रणीतवेदस्य प्रामाण्यानवधारणम् । वृ. १।३।१।१.

⧗ 'प्रायेण मार्यादौश्रीत्यं स्नेहान्धो नेक्षते जनः' इति न्यायः । स्पष्टार्थः । मादृशी. ९४९.

● प्रायेण दयन्ते वर्तपूर्णमासप्रकरणम् । भा. ७।१।१।२.

⧗ 'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः.' इति न्यायः । साहस्री. ७७२.

● प्रायादपि च अर्थनिश्चयो भवति । यथा अन्य-प्राये लिखितः अन्य इति गम्यते । भा. २।३।६।१६.

● प्रायदर्शनम् । 'प्रायवचनाच्च' (२।२।४।१२) इत्यत्र प्रधानप्राये यत्रान्यानि प्रधानानि तत्र वचनात् इत्युक्तम् । तथा 'निश्चये प्रायदर्शनात्' (२।२।४। १६) इत्यत्र संस्कारप्राये यत्रान्ये संस्कारा गोदोहनादयः तत्रास्य दर्शनं इत्युक्तम् । 'वेदो वा प्रायदर्शनात्' (३।१।१।२) इत्यत्र तु वेदप्राये वाक्ये वेदोपक्रमे निगम्यमाना इमे शब्दाः श्रूयन्ते इत्यर्थः भाष्ये । वा. ३।३।१।२, ● विनापि वाक्यग्रहणेन 'प्रायदर्शनात्' इति वाक्यविनियोगः गम्यते । ३।१।१।१ पृ. ९५१.

● सर्ववेदान्तप्रत्ययत्वेन अन्यत्र विहितानां अन्यत्रोपासन-विधानाभोपादानात् प्रायदर्शनन्यायेन उपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः । मांभा. ३।३।१।४ भा.

● 'प्रायवचनाच्च' (२।४।४।१२) इत्यत्र हि प्रधान-प्राये प्रधानानि प्रधानानि तत्र वचनात् इत्युक्तम् । वा. ३।३।१।२ पृ. ८०९.

● प्रायणीयं द्वादशाहे प्रथममहः गवामयने च प्रथम-महः, तयोः प्रकृतिविकृतिभावो नास्ति इति न द्वादशाह-प्रायणीयात् धर्मातिदेशः । वि. ७।३।२. ● प्रयन्ति अनेन इति प्रायणीयम्, प्रवर्तन्ते अनेन यज्ञे इति एष (प्राय-णीय–)शब्दः गुणेन क्रियायोगेन कस्मिन् कर्मणि श्रुतेन प्रयुज्यते । भा. ७।३।२।५ । प्रयन्ति अनेनेति प्रायणीयमित्यनेन योगेन द्वादशाहे इयं संज्ञा प्रवृत्ता । गवामयनेऽप्यत्र योगो विद्यत एवेति धर्मातिदेशो नास्ति । टुप्. ७।३।२।५. ● प्रारम्भ अपरे गच्छति प्रवर्तते यज्ञे अनेनेति व्युत्पत्त्या 'प्रायण्यविशिष्टं कर्म' प्राय-णीयं नाम । वि. ७।३।२. ● प्रायणीयोऽतिरात्रो गवामयने द्वादशाहिकं प्रथममहः, तस्य धर्मा द्वादशाहोक्ताः । भा. ७।४।३।१९. ● प्रायणीयो ज्योतिष्टोमे 'आदित्यः (अदितिदेवताकः) प्रायणीयः पयसि चरुः' इति विहितः । तत्र पयसि चरुप्रापणादयः सोमान्य-धर्माः न कर्तव्याः, किन्तु अवहननादयः सौमिकधर्माः

कर्तव्याः । वि. ९।४।१०. • प्रयन्ति प्रारभन्ते अनेन इति प्रायणीयः । बाहुलकात् करणे अनीयर् प्रत्ययः । प्रायणं आरम्भः, तत्र भवः इति वा प्रायणीयः । गहादिषु वेणुकादेराकृतिगणत्वात् छण् । तथा च प्रायम्य प्रायणीयशब्दप्रवृत्तिनिमित्तम् । सोम. ७।३।२. • प्रायणीयस्य निष्कासे उदयनीयाभिर्वापि अर्थकर्म संस्कारः । ११।२।१६।६७–६९. • प्रायणीयस्य पूर्वमप्राप्ततया द्रव्यम्, देवता, अपणाधारभूतं पयश्च इत्येवमनेकैर्गुणैर्विशिष्टं कर्म एकेन वाक्येन 'आदित्यः प्रायणीयः पयसि चरुः' इत्यनेन विधीयते ज्योतिष्टोमे । वि. ९।४।११. • प्रायणीयेऽतिरात्रे पञ्च ऐकादशिनाः आलभ्यन्ते उदयनीये षट् । १०।६।४।६–१२. • प्रायणीये आदित्ये चरौ श्रूयते 'अग्नये स्विष्टकृते समवद्यति' इति 'आज्यादेकस्मात् हविषोऽवद्यति' इति । भा. ३।५।२।३ 'आज्यस्य एवं चरुमभिपूर्य आज्यभागौ, पथ्यास्वस्त्यादयो देवता यष्टव्याः' इति । [redacted], • प्रायणीये पथ्यादयश्चरावेऽपि यागाः द्रव्यसामान्यात् उपांशुयाजविकाराः । आदित्यश्चरुराग्नेयविकारः । ३।५।१।३. • प्रायणीये पयसि चरुः । तत्र पयसि प्रदानार्थां धर्मा न कर्तव्याः । ९।४।९।३२–४०. • प्रायणीयायां चतुर्विंशतिमानं हिरण्यं दक्षिणा श्येने । भा. ८।२।१।१६, • प्रायणीयाया दार्शपौर्णमासिको विध्यन्त प्रवृत्तः । ८।३।३।३. • प्रायणीयाया द्वादशाहगताया ऐन्द्रवायवाग्रत्वम् । वि. १०।५।२३. • प्रायणीयाया प्राकृतानि समाम्नातानि धर्माणि क्रियन्ते । शा. १।२।१।१० पृ. १२६. • 'प्रायणीयाया मन्द्र अनुब्रूयात्' अत्र स्वरः प्रायणीयापूर्वप्रयुक्तः न परमापूर्वप्रयुक्तः ज्योतिष्टोमे । ९।३।२।२–३ वर्णके २.

• प्रायणीयनाम्नः धर्मातिदेशकत्वम् । ७।३।२।५–६. मीको. पृ २४८ 'अतिदेशो न प्रायणीयनाम्ना' इत्यत्र द्रष्टव्यम् ।

• प्रायणीयन्यायः । ९।४।९. मीको. पृ. ९०९ 'आदित्यपयोऽधिकरणम्' इत्यत्र द्रष्टव्यम् । • प्रायणीयन्यायेन (९।४।९।३२–४०) पशुकामेष्टौ दधिशृतयोः सप्तम्या अपणाधारत्वावगमात् प्रणीता धर्मा एव कार्याः । वि. ९।४।१२, • प्रायणीयन्यायेन (वि. ९।४।१०) सप्तमीनिर्दिष्टयोर्दधिशृतयोः प्रदेयद्रव्यधर्माः न कर्तव्याः, किन्तु प्रणीताधर्माः । इति पूर्वपक्षः । ९।४।११.

• प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः । भा. ७।३।२।५ । यत्र तु पञ्चमः षष्ठो वा प्रायणीयः शब्दो न पूर्वाधिकरणापवादः । टुप्.

• प्रायणीयातिरात्रे द्वादशाहगवामयनयोः ज्योतिष्टोमिको विध्यन्तः । टुप्. ७।४।३।१९.

• प्रायणीयाविध्ययोर्नियमेन शम्विडान्तत्वं ज्योतिष्टोमे । १०।७।१२।३८–३९. मीको. पृ. १८१७ 'ज्योतिष्टोमे प्रायणीया शंय्वन्ता' इत्यत्र द्रष्टव्यम् । • प्रायणीयाविध्ययोः पूर्वाभ्यामेव शम्विडाभ्या शम्विडान्तत्वं ज्योतिष्टोमे । १०।७।१३।४०–४२. मीको. पृ. १८१५ 'ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता' इत्यत्र द्रष्टव्यम् ।

• प्रायणीयाविध्यादौ 'सप्तम्या तु तदाधारो यावन्मन्त्रः प्रयुज्यते । तत्र सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः ॥' वा. ३।३।३।९ पृ. ८१२.

• प्रायणीयादीनि दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि अस्थियज्ञे । भा. १०।२।२१।५२. • प्रायणीयादौ सर्वस्मार्ते दीक्षदशाया क्रियमाणे सूक्तवाकान्तर्गतप्रशासनादेरनुवचनम् । १०।२।२५।६१–६२.

• प्रायणीयादीष्टिषु दार्शिकाज्यभोजनस्य सौमिकपयोव्रतविना प्रसङ्गसिद्धिः । १२।१।१४।३०. मीको. पृ. ९७९ 'आरण्यमोजनन्यायः' इत्यत्र द्रष्टव्यम् । • प्रायणीयादीष्टिषु दार्शिकजागरणस्य सौमिकदीक्षाजागरणेन प्रसङ्गसिद्धिर्न भवति ज्योतिष्टोमे । १२।१।८।१७. • प्रायणीयादीष्टिषु दार्शिकस्नाना नानुष्ठानं ज्योतिष्टोमे । १२।२।११।२०–२१. मीको. पृ. १८१८ 'ज्योतिष्टोमे प्रायणीयादिषु' इत्यत्र द्रष्टव्यम् । • प्रायणीयादीष्टिषु पत्नीसंनहनं सौमिकसंनहनेन प्रसङ्गसिद्धत्वात् पृथक् न कार्यम् । १२।१।१३।२९. • प्रायणीयादीष्टिषु शेषभक्षणस्य सौमिकपयोव्रतादिना प्रसङ्गसिद्धिर्नास्ति । १२।१।१५।३१–३२.

• प्रायणीयादिशब्दानां यौगिकानां नाम्त्यतिदेशकत्वम्, तत्र नाम्ना धर्मातिदेशो नास्ति । अग्निहोत्रादि-

शब्दाना तु कर्मनामधेयाना अविदेशकत्वमस्ति । वि ७।३।१-२

* प्रायणीयेष्टौ पयसि प्रदेयधर्मा नानुष्ठेया । ९।४।९ मीको पृ ९०९ 'आदित्यपयोऽधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* प्रायणीयेष्ट्यादौ अस्थियज्ञे मृताधिकारपक्षे मन्त्रप्रहरणे सूक्तवाकमन्त्रगत यजमानाऽऽशासनपर 'आशास्तेऽयं यजमानोऽसौ' (असौ इति नाम यज्ञाति 'केशवशर्मा' इत्यादि) इत्यादि लुप्यते (इत्याचित्ता)। १०।२।२३।५३-५५.

* प्रायणीयोदयनीययो ऐकादशिनालपेक्षमाणयोरपि भवति समास । प्रधानस्य पदान्तरमपेक्षमाणस्यापि भवति समास । टुप् १०।६।४।८.

* प्रायणीयोदयनीयैकादशिनीवत् अवयवश ध्रुवयो भवति (सूक्तवाके) । भा ३।२।६।११ । सुब्रा- प्रायणीये पञ्च, उदयनीये पञ्च अन्त्योऽपि आवृत्तत्वात् उदयनीये एव इत्यवयवश द्वादशाहे प्रायणीयोदयनीयान्ययो वक्ष्यते दशमे ।

* प्रायणीयाग्निष्कासे उदयनीयानिर्वाप उदयनीयासंस्कार, नार्थकर्म नापि प्रतिपत्ति । ११।३।१६ मीको पृ ११११ 'उदयनीयानिर्वापाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

* प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् । ६।४।१५।४५॥

दर्शपूर्णमासयो अधिकारे 'भिन्ने जुहोति, स्कन्ने जुहोति' इत्यादि यत् किञ्चित् प्रायश्चित्त उक्त तत् सर्वत्र यत्रयत्र भिद्यते स्कन्द्यते वा तत्रतत्र अग्निहोत्रादावपि स्यात् । दोषसामान्यात् दोषस्य भेदनादे समानत्वात् इति पूर्व पक्ष ।

प्रकरणे वा शब्दहेतुत्वात् । ४६ ॥

पूर्वपक्ष सूत्रेण प्राप्त वाशब्देन निरस्यन् सिद्धान्तमाह । प्रायश्चित्त एवजातीयक प्रकरणे तस्मिन्नेव कर्तव्य स्यान्नान्यत्र कर्मणि । शब्दहेतुकत्वात् प्रकृतैकवाक्यतापादकप्रयोगवचनरूपस्य शब्दस्य हेतुत्वात् । तस्मात् यत् प्रायश्चित्त यस्मिन् प्रकरणे उत्पन्न तत् तत्रैव प्रकरणे स्यान्नान्यत्र फलान्तरकल्पनाप्रसङ्गात् । इति सिद्धान्त ।

अतद्विकाराच्च । ४७ ॥

सिद्धान्ते हेत्वन्तरमाह । अग्निहोत्रस्य ज्योतिष्टोमादेर्वा अतद्विकारात् तद्विकारत्वाभावात् दर्शपूर्णमासविकारत्वाभावात् । भावप्रधानो निर्देश । प्रकृतौ उत्पन्न प्रायश्चित्त विकृतौ तु स्यात् । चकारो हेत्वन्तरसमुच्चये । के

* प्रायश्चित्त अपच्छेदयौगपद्येऽपि । ६।५।१७।४९-५० मीको पृ ४९८ 'अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्तमभ्युदितेष्टेस्य चन्द्राभ्युदयनिमित्तक अर्थनयतोऽपि भवति । ६।५।६ मीको पृ ५८३ 'अभ्युदितेष्टिस्य चन्द्राभ्युदय निमित्तक' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्त कपालादेः एकदेशभेदनस्कन्दनादावपि । ६।४।४।१०-१८ मीको, पृ २०३९ 'दर्शपूर्णमासयो कपालादे' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्त कृत्स्नपुरोडाशदाहे । ६।४।५।१७-२१ * प्रायश्चित्त पञ्चशरावे ओदने दधि दोहयोरेकनाशेऽपि । ६।४।६।२२-२३ मीको पृ ९९२ 'आर्तिन्याय' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्त पर निमित्तकमनुष्ठेय अपच्छेदपौर्वापर्ये । ६।५।१९।५४.

* प्रायश्चित्त पापाभिभूतस्य श्रूयते । सोम ६।८।४.

* प्रायश्चित्त पुनराधान उभयाग्निनाशे । ६।४।८।२६-२७ मीको पृ १४ 'अग्निहोत्रे उभयाग्निनाशे' इत्यत्र द्रष्टव्यम् । *प्रायश्चित्त पुरुषार्थे लौकिक एव यूपोपस्पर्शने न वैदिके । 'यद्येक यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात् । यदि द्वौ, एतौ ते वायू इति । यदि बहून् एते ते वायव इति' । ९।३।३।९ मीको पृ ११८ 'अग्नीषोमीये पशौ यागसमाप्त्युत्तरम्' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्त आधानेनाग्निना आहवनीयादे संसर्गे 'अग्नये शुचयेऽष्टाकपाल निर्वपेत्' इति । भा १२।४।७।२२ * प्रायश्चित्त यूपविरोहणे प्रकृतावपि । सङ्कर्ष १।३।१० 'यूपविरोहणे प्रायश्चित्त प्रकृतावपि' इत्यत्र द्रष्टव्यम् । * प्रायश्चित्त विनष्टसंस्कारार्थम् । भा ६।८।४।११, * प्रायश्चित्त (कर्मणि) न्यूने । २।७।२।८.

* प्रायश्चित्त शकृत्प्रवेश-लोहितनिरसन-लोमनिर्मे

भवत्येव, यद्वस्त्रोहिनयोरभावे नाद्रो वा अग्नीषोमीयपशौ। भाट्ट. ४।१।१२. ● प्रायश्चित्त सोमेन्द्रश्यामाकचरुः वैदिकसोमपानन्यापदि। ३।४।१२।३२–३३. ● प्रायश्चित्तानि द्विप्रकाराणि। कानि चित् वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि, कानि चित् निमित्ते कर्माङ्गानि। भा. १२।३।५।१६, ● विप्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि, यथा 'भिन्ने जुहोति' इति। ६।२।१।७. ● प्रायश्चित्तानां अदोषनिर्घातार्थानां समुच्चय। १२।३।६।१७. 'समुच्चयाधिकरणम्' इत्यत्र अधिकरण द्रष्टव्यम्।

- प्रायश्चित्तानां दोषनिर्घातार्थानां विकल्पः॥

. प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः। १२।३।५।१६॥

भाष्यम्— प्रायश्चित्तानि द्विप्रकाराणि। कानि चिद्वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि। कानि चिन्निमित्ते कर्माङ्गानि। तत्र समाधानार्थानि यथा 'यद्युक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्, अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहेत्याहवनीये। यद्यविज्ञातो भूर्भुवः स्व स्वाहेत्याहवनीय एव' इति। आर्तिमियात्, विनाशमियादित्यर्थः। कः पुनर्यज्ञस्य विनाशः? विहितस्याक्रिया, प्रतिषिद्धसेवनं च। कथं पुनर्ज्ञायते विनष्टस्य समाधानार्थं तत् प्रायश्चित्तमिति? वाक्यसंयोगात्। यद्यार्तिमियादिदं कुर्यात्। यदि तस्मिन् कृतेऽपि तत् विनष्टमेव, कोऽर्थस्तेन कृतेन। यस्त्वत्र भ्रेषे, आर्तौ निमित्ते कर्माङ्गं प्रायश्चित्तमिति। च वक्तव्यम्। अङ्गं नाम तत्, यत् प्रधानं कृत्स्नं करोति। प्रधानं च विनाशादकृत्स्नमापन्नम्। यदि तदनेन कृत्स्नं क्रियते एवदङ्गम्। तथेदमप्रकृत्तमेतेन कृत्स्नं क्रियते, हन्त तर्हि जातस्य विनष्टस्य समाधानार्थम्। अथ न क्रियते, न तर्हि कर्माङ्गम्। यत् यदुच्यते निमित्ते कर्माङ्गमिति तदेव नास्ति। अपि च तत्रात्र नष्टसमाधानमेव वाक्यशेषे श्रूयते 'अग्निर्वै देवानां पथिकृत् स्वेन भागधेयेनोपासीरन्। स एवैनं पन्थानमपि नयति, स एव यज्ञमालम्भयति' इति। तस्मादेते दोषनिर्घातार्थाः। तेषु विकल्पः स्यात्। कुतः? ऐकार्थ्यात्। कथमैकार्थ्यमेतेषाम्? निष्पन्नेन दोषेण केवलस्य तस्य तस्याभिसंयोगः, 'यद्युक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति जुहुयात्' इति। तस्मात् सर्वस्य दोषस्यैकेन निर्घातः। एकेन चेन्निर्हृतो दोषो द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति। एवं स्मार्तेष्वपि द्रष्टव्यम्।

सोम— न नैमित्तिकमात्रस्य वैगुण्यसमाधानार्थत्वम्, किन्तु कर्मवैगुण्ये निमित्ते विधीयमानस्य। तेन भिन्नादिहोमाना न वैगुण्यसमाधानार्थत्वम्। भवनाथस्तु (प्रभाकरानुयायी) यज्ञार्तिरूपेण अङ्गान्वयः, न तु ऋगाद्यार्तितया इत्यैकार्थ्यमाह। सूत्रार्थस्तु— प्रायश्चित्तेषु यस्मात् निष्पन्नेन वैगुण्यरूपनिमित्तेन योगः, तस्मादैकार्थ्यम्। अतश्च एकेन सर्वस्य वैगुण्यस्य निर्घातः इति विकल्पः इति।

वि— 'वैश्वानरे पथिकृते साहित्य वा विकल्पनम्।, साहित्य स्याददृष्टाय, विकल्पः स्यात् समाधये॥' वैगुण्यसमाधानाय।

भाट्ट— प्रायश्चित्तानि कर्मवैगुण्यनिमित्तदोषनिर्घातार्थानि। तेषु यानि एकस्मिन्नेव वैगुण्ये अनेकानि निरपेक्षाणि तत्तद्वाक्यैर्विधीयन्ते तेष्वपि सत्यपि अदृष्टार्थत्वे पूर्ववत् विकल्पः। यथा 'यदि सामतो यज्ञ आर्तिमियात् सुवःस्वाहेत्याहवनीये जुहुयात्' इति कर्म्याश्चिच्छाखायामभ्युक्तोऽन्यो होमः। अपरस्या तु 'यदि सामतो यज्ञ आर्तिमियात् स्वःस्वाहेत्याहवनीये' इति प्रत्यक्कर्तृको होमः। इदं चैकजातीयदर्शनेव तत्परिहारार्थं प्रायश्चित्तद्वयम्। तथा दर्शपूर्णमासातिक्रमणे एव कस्मिंश्चित्पथिकृदीष्टिः, क्वचिच्च वैश्वानरीति। तदुभयमपि दर्शपूर्णमासातिक्रमनिमित्तकत्वात्तत्परिहारार्थत्वमपेक्षितविधिमन्त्रात् वाक्यशेषात् च अवगम्यते। अतश्च व्रीहियवादिवदेव तत्तद्विनियोगविधिवेलायामेव एकवैगुण्यध्वंसरूपकार्यान्तरकार्यनैरपेक्ष्येण साधनत्वावगमात् पुनरोऽपि विकल्पः। न च कारणतावच्छेदकवैजात्यात् धर्मव्यवस्थासिद्धये च अनन्तापूर्वभेदस्यावश्यकत्वात् कथं न व्रीहियवादिवत् समुच्चयः। तदेवेदेऽपि नैरपेक्ष्येणैव विनियोगविधिस्थानां उभयोस्तददृष्टयोः एकवैगुण्यध्वंसजनक-

स्यावगतेः प्रयाजादिवत् औत्तरकालिकेन प्रयोगविधिना समुच्चयावगतेः। नहि एकादशोक्तरीत्या (११।१।५) एकस्मिन् प्रधानोपकारलक्षणे महाकार्ये प्रयाजादीनां सर्वेषामङ्गानां प्रयोगविधिना साहित्यावगमवत् अवान्तरकार्येऽपि साहित्यावगमः, तथात्वे उपपत्तिविनियोगावगतनैरपेक्ष्यबाधापत्तेः। अतस्तस्य विनियोगवाक्यमितावान्तरकार्यनिरूपितत्वस्य आवश्यकत्वात् युक्तो विकल्पः। न चैवमपि प्रकृते नैरपेक्ष्यस्य तत्तदवान्तरापूर्वनिरूपितत्वेनैवोपपत्तेः वैगुण्यध्वंसनिरूपितत्वे प्रमाणाभावः, तस्य वैगुण्यध्वंसनिरूपितनैरपेक्ष्यानवगमोत्तरकालं धर्मध्वंसादिसिद्ध्यर्थं कल्पितस्य तद्बाधकत्वानुपपत्तेः।

मण्डन— 'प्रायश्चित्तं स्याद् विकल्पेन नाशे।'

शंकर— 'दोषे प्रायश्चित्तयोश्च।' विकल्पनम्।

● 'प्रायश्चित्तेषु चैकार्थ्यात्' (१२।३।५।१६) इत्यधिकरणे पाथिकृतस्य वैश्वानरद्वादशकपालस्य च विकल्पो वक्ष्यते, एकार्थत्वात्। बाल. पृ. ८५. ● 'प्रायश्चित्तेषु चैकार्थ्यात्' इति न्यायेन एतेषां नैमित्तिकानां कर्मणां (चन्द्राभ्युदयेष्ट्यादीनां) स्वकाले क्रियमाणदर्शाङ्गत्वं प्रकरणात्। तत्र अपाठोपक्रमनिमित्तदोषनिर्घातार्थत्वात् च द्वादशाधिकरणन्यायेन विकल्प्येत, इति प्राप्ते। भाट्ट. ६।५।१.

■ प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥१२।३।५।१६॥

'यदि क्रतौ पत्र आर्तिमियात् भूः स्वाहा इति गार्हपत्ये जुहुयात्' इत्यादिषु दोषनिर्घातार्थेषु प्रायश्चित्तेषु ऐकार्थ्यात् एककार्यत्वात् विकल्पः स्यात्। निष्पन्नेन दोषेण अभिसंयोगः, तस्यतस्य प्रायश्चित्तस्य नाशकत्वेन भवति इति ऐकार्थ्यं भवति। तस्मात् अन्यतमेन प्रायश्चित्तेन सर्वस्य दोषस्य निर्घातः नाशो भवति। इति सिद्धान्तः। एवं स्मार्तेऽपि। के.

● प्रायश्चित्ताचरणात् दुःखेनाल्पेनापि सता महते दुःखान्ताय प्रवृत्तः सन् अधर्मो विनाश्यते इति वचनात् गम्यते। बा. ३।८।३।९.

● प्रायश्चित्ततपांसि यानि तेषां दोषापहारमात्रेण फलम्। बा ३।८।३।९.

● प्रायश्चित्तपशुः (वात्यपशुः) आधानयज्ञहितसोमानुष्ठाने सोमात् प्रागेव सोमाधिकारसिद्ध्यर्थं कर्तव्यः। न तेन व्यवधानं भवति। टुप्. ५।४।३।६.

● प्रायश्चित्तरूपो वैश्वानरयागः अग्निचयने एव स्वयमुख्याग्निधारणाक्षमत्वे नैमित्तिकः। ४।४।६।१२-१३.

● प्रायश्चित्तरूपज्योतिष्मतीष्टिः दर्शपूर्णमासार्थेद्धृताग्निनाशेऽपि नानुष्ठेया। ९।४।६।२८.

● प्रायश्चित्तविधिः। वैकल्पिकानामादित एवाङ्गीकरणात् आश्रितक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते। वा. २।४।२।२३.

● प्रायश्चित्तहोमाः दर्शपूर्णमासयोः, पत्नीकरणहोमोत्तरं कपालोद्वासनात् प्राक् क्रियन्ते। चि. १०।७।१२.

● प्रारब्धं परिसमापनीयं मन्यते। भा. १०।५।२८.

● प्रारब्धकाम्यकर्मणो नित्यकर्मणश्च भुवद्व्यापारे प्रतिनिधिना समापनम्। ६।३।४।१३-१७. ● प्रारब्धकाम्यकर्मणः समाप्तिनियमः। ६।२।३। १४-१६. 'शिष्टगर्हाधिकरणम्' इत्यत्र द्रष्टव्यम्।

● प्रारब्धलौकिककर्मसमाप्तेः अनियमः। ६।२।४। १७-१९.

● प्रावचनस्वरः प्रवचनकालीनः स्वरः त्रैस्वर्यम्। भा. १२।३।८।२०.

● प्राशित्रहरणम्: यः प्राशयति। भा. ११।१।८।३१.

● 'यदि प्रावृषि यजेत सक्तुपस्तृणीयात् द्विरभिघारयेत्'। भा. १०।४।२५।५९.

● प्रावृत्तिकः क्रमः प्रयोजकवशः। बा ३।१।१।१ पृ. ६५१. ● प्रावृत्तिकः क्रमः प्राजापत्यपशुसंस्कारेषु द्वितीयादिषु, प्रथमे उपाकरणे तु इच्छया प्रवृत्तिः। वि. ५।१।९.

■ प्रावृत्तिकक्रमन्यायः ॥

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात्। ५।१।५।८ ॥

भाष्यम्— वाजपेये 'सप्तदश प्राजापत्यान् पशूनालभते' इति श्रूयते। तेषु पशुषु चोदकप्राप्ताः प्रोक्षणादयो धर्माः। तत्र प्रथमः पदार्थः सर्वः कृत्वाभिदारब्धव्यः। द्वितीयादिषु भवति संशयः, किं तत एव द्वितीयोऽपि

पदार्थं आरभ्यन्त उत द्वितीयादिष्वनियम इति। किं तावत् प्राप्तम्? नियमकारिणः शास्त्रस्याभावादनियम इति।

एवं प्राप्ते, ब्रूमः। यतः पूर्वं आरभ्यस्तत एव द्वितीयादयोऽपि पदार्था आरभ्या इति। कुत एतत्? तदुपक्रमात्। सर्वे हि पदार्थाः प्रधानस्यार्थेन विप्रकृष्टव्या.। प्रधानं हि चिकीर्षितम्। कृतं वा तेषां निमित्तम्। सहवचनं हि भवति पदार्थैः सह प्रधानं कर्तव्यमिति। बहुपदार्थसमाम्नानात् तु अवश्यम्भावी विप्रकर्षः। तथापि [redacted] यावद्भिर्नाव्यवहित. उक्तः पदार्थैः कर्तुं तावद्भिर्न प्रधानमवश्यं कर्तव्यम्, ततोऽन्यधिकेन न व्यवधातव्यमिति। यदि द्वितीयं पदार्थमन्यत आरभेत, ततोऽधिकैरपि व्यवदध्यात्। तथा प्रयोगवचनं बाधेत। ननु तथा सति कश्चिदल्पेऽव्यवहितो भविष्यति। उच्यते। अनुमतानां व्यवधायकानां त्यागेन कश्चिदन्यविशो गुणो भवतीति। तस्मात्क्रमः पूर्वपदार्थे आरभ्यस्तत एवोत्तर आरम्भणीय इति।

टुप्— 'वैश्वदेवी कृत्वा प्राजापत्यैश्चरन्ति' इत्यस्मिन्काले उत्पादीयमानाः सेतिकर्तव्यताकाः इतरेतरयुक्ताः (वैश्वदेवानन्तरकाले करणत्वेन उपाचलात्) सह कार्या इत्यवगते समभिव्यक्ते। तत्र प्रथमे पदार्थे अनियम (एव)। यतः कुतश्चित् (पशोरारभ्य) कर्तव्यः। द्वितीयस्तु (पदार्थः) किं प्रथमो [redacted] आरभ्यः तत एवारम्भणीयः [redacted] (तत्रापि) अनियमः (एव) इति (संशयः)। श्रुत्यर्थपाठाभावादनियमे प्राप्ते (अभिधीयते–) प्रवृत्तेर्नियमः। (प्रथमः पदार्थो येन क्रमेण कृतः स एवोत्तरेष्वपि नियम्येत।) कुतः एतत्? (इति प्रश्नभाष्यम्। प्रयोगविधिप्रयोजनस्य भाविनी प्रवृत्तिः कथं तदाधारस्य नियन्त्री भवति इत्यर्थः।) तदुपक्रमात् (इत्युत्तरभाष्यम्)। सर्वे हि पदार्थाः प्रधानकल्पात् न विप्रकृष्टव्याः। सहवचनं हि भवति पदार्थैः सह प्रधानं कर्तव्यं इत्येवं व्यवहितो अपकर्षः (वर्ज्यः)। कथं (व्यवहितापकर्षः? उच्यते—) प्रधानकाल्यात् न विप्रकृष्टव्या इत्यस्य हि सहवचनं भवतीत्युपचितः। (भवे योग्यतापेक्षयोः अन्यापेक्षत्वात्यर्थं प्रधानं हि चिकीर्षितं इत्यादिभाष्यं अवश्यम्भावी विप्रकर्ष इत्यस्य अनन्तरं द्रष्टव्यम्।) कथं (पदार्थैः सह प्रधानस्य वचनं यावता 'दर्शपूर्णमासाभ्यां यजेत' इत्यादिषु प्रधानमात्रं श्रूयते।) भवन्तं भावयेत्यागेनेत्यमिति ('यजेत' इत्यस्य अर्थः)। तत्र यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते। तस्मात् त्रितयस्य फलकरणेतिकर्तव्यतास्य (युगपत्) भवेतेत्यनेन कर्माभ्युपगम्यते। शब्दतश्च तावदेवम्, वस्तुतश्चैवमेव। यदि भूतकालं भाव्यम्, भविष्यति काले करणेतिकर्तव्यते, ततोऽनयोः करणेतिकर्तव्यतात्वमेव न स्यात्। (न हि पश्चाद्भावि करणम्।) भविष्यति भाव्ये भूते (च) करणे अयमेव दोषः (न हि विनष्टं करणं भवतीति।) करणेतिकर्तव्यतयोरपि विप्रकर्षे अयमेव दोषः। अतः ग्रन्थवस्तुभ्यामेककालतैषाम्। तत्र यदि फलस्य कालः अवगम्येत, ततस्तदीयेन कालेन करणेतिकर्तव्यतयोः परिच्छेदः स्यात्। इह तु स्वर्गस्य अनवगतः कालः, करणेतिकर्तव्यतयोस्तु अवगतः। तयोस्तु कालेन स्वर्गभवनकालः परिच्छिद्यते। ततः प्रधाने सेतिकर्तव्यताके एकैकस्मिन् क्षणे सह कर्तव्ये प्राप्ते, एककर्मा बहूनि प्रधानानि इतिकर्तव्यता वा अशक्यैः कर्तुं योगपद्येनेत्यवश्यम्भावी विप्रकर्षः। ईदृशेन विप्रकर्षेण क्रियमाणेन अपि सहैव पदार्थाः कृता भवन्ति। तत्र प्रधान (आवृत्ति–)नियमेन पदार्थाः प्राप्नुवन्ति आग्नेयादीनां यथासे। [redacted] श्रुत्यर्थपाठैः अनियमेन या आवृत्तिः सा व्यावर्त्यते। (नियममात्रे श्रुत्यर्थादीनां व्यापारः, न तु क्रमस्वरूपे इत्यर्थः। असिद्धावसरे उक्तं भाष्यं व्याख्यातुमपि आह–) अवश्यम्भाविनि विप्रकर्षे प्रधाने हि चिकीर्षितम्, कृतं वा तेषां निमित्तं इत्येतयोः अपकर्षः। ('चिकीर्षितं कृतं वा' इत्यनयोः व्याख्यां दर्शयति–) अग्न्याधानादीनां करिष्यमाणं प्रधानं निमित्तम्, स्विष्टकृदादीनां तु कृतम्। तेनैवं (अवश्यम्भाविनि विप्रकर्षे) केचित् पदार्थाः समभ्याहिताः (प्रधानेन) अपेक्ष्यन्ते, केचिद् द्वाभ्याम्, केचिन् बहुभिः। महत्वासमर्थं इति (इह) विप्राप्यमेव न्यायः (योग्यतोः)।

अभ्यन्वाधानादि प्रागुपाकरणात् साधारण सर्वेषां (पशूनां) सकृत् कृतम्। उपाकरणादयोऽपि संनिपत्योपकारका साहित्येन (पशुभिः) अनुभवितव्याः, सह चोदितत्वात् तेषाम्।

तदेव यस्य प्रथममुपाकरणं क्रियते, तस्य पाठेन यद्यपि द्वितीयः पदार्थः (नियोजनरूपः) उपस्थाप्यते, तथापि सहवचनादिममर्थमाकाङ्क्षति, सजातीयेन षोडशक्षणान्तरितं द्वितीयं पदार्थम्, द्वितीयस्तु (पशुः) पञ्चदशभिरुपाकरणक्षणैरेकेन च (प्रथमस्यैव पशोः) नियोजनक्षणेन (व्यवहितं स्वीयं द्वितीयं पदार्थम्)। एवं तृतीयादयोऽपि (पशवः) सजातीयविजातीयव्यवहितानपेक्षन्ते। अन्त्यस्तु विजातीयक्षणव्यवहितमेव अपेक्षते। संनिपत्योपकारकाणामेव्य ईदृशी अपेक्षा (षोडशक्षणव्यवधानापेक्षा) प्रधानानां भवति। अत आह (भाष्यकारः—) यावद्भिर्नाव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिः व्यवधानमवश्यम्, ततोऽभ्यधिकैस्तु न व्यवधातव्यम्। यद्येकं पदार्थं कृत्वा द्वितीयोऽपि तस्यैव क्रियेत, सहवचनं नोपपद्येत। एवं तर्हि योज्यम्। (उत्तरभाष्यं अनुमापयते—) उच्यते। अनुमतानां व्यवधायकानां त्यागे न कश्चिदभ्यधिको गुणो भवतीति किमुक्तं भवति? अनुमतैर्व्यवधायकैः परित्यज्यमानैर्दोष एव, अभ्यधिकैर्व्यवधाने अश्रुतकरणम्, न्यूनैरपि अश्रुतकरणमेव। तस्मात् साहित्यसंपत्तये यः क्रमोऽपेक्षितः स द्विधा (न्यूनैरधिकैश्च व्यवधाने) बाध्यते।

सर्वमिति चेत्। ९॥

भाष्यम्— इति चेत् पश्यसि प्रधानाविप्रकर्षेण प्रयोगवचनानुग्रह इति। सर्वं तर्हि गुणकाण्डमेकस्मिन् पवर्जयितव्यम्, यथा सौर्यादिषु।

टुप्— यदि प्रधानानामङ्गानां विप्रकर्षो नेष्यते, एवं तर्ह्येकैकः पशुरन्याङ्गप्रयोगवचनेन निरपेक्षः पदार्थकाण्डेन संबध्यताम्। (उत्तरसूत्रेण कीदृशमुत्तरं दत्तं तद्दर्शयति—) उत्तरं तु सर्वं एवैते (प्राजापत्याः पशवः) इत्येतस्मिन्नुक्तम् आदीयन्ते।

भाक्तत्वात्। १०॥

भाष्यम्— नैतदेवम्। सहप्रयोग एव हि नानुष्ठितः स्यात्।

ऋत्वन्तरवदिति चेत्। ११॥

भाष्यम्— अथ यदुक्तम्, यथा ऋत्वन्तरेषु सौर्यादिष्विति, तत् परिहर्तव्यम्।

नासमवायात्। १२॥

भाष्यम्— न तेषामर्थात् क्रमः प्राप्नोति यो नियम्येत। अङ्गाश्रयो हि नियमो भवितुमर्हति। अनङ्गसमाश्रितस्य स्वयमङ्गता कल्प्येत।

टुप्— ये लोकप्रयोगवचनपरिगृहीतास्तेषां क्रमो नियामकः। सौर्यं इतिकर्तव्यता यजन् ऐन्द्राग्नमिति लोको गृह्णाति। अत ऐन्द्राग्नस्य येतिकर्तव्यता सा सौर्यस्य नाङ्गम्। तस्मात् क्रमः परिच्छेदकत्वेन नापेक्ष्यते। अत आह— अङ्गाश्रयो हि नियमो भवितुमर्हति। अनङ्गसमाश्रितस्य स्वयमङ्गता कल्प्येत। येषां पदार्थानामङ्गत्वं नावगतं तेषामङ्गत्वं नियामकत्वं च कल्प्येत। अङ्गाश्रितश्च क्रमः।

शा— नियामकाभावात् प्रथमवत् द्वितीयादौ अपि अनियम, इति प्राप्ते, सिद्धान्तमाह— 'प्रवृत्त्या या नियम्येत प्रत्यासत्तेरनुग्रहात्। अन्यथा व्यवधानं स्यादनुष्ठानाधिकैरपि॥'

सोम— प्रथमपदार्थो येन क्रमेण कृतः तेनैव क्रमेण द्वितीयाद्यनुष्ठाने प्रतिपदार्थं षोडशभिः एव व्यवधानं भवति, इतरथा प्रथमपदार्थानुष्ठाने यः प्रथमः तस्य पशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने द्वात्रिंशता व्यवधानम्, द्वितीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने एकत्रिंशता व्यवधानम्, तृतीयपशोः सर्वान्ते द्वितीयपदार्थानुष्ठाने त्रिंशता, इत्येवं अतिव्यवधानं स्यात्, अत 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इति तृतीयाबलेन करणभूतानां प्राजापत्यानां साहित्यावगमात् सेतिकर्तव्यतानामेव करणत्वात् सामान्ये पशूनां साहित्ये सति पदार्थानुसमयात् षोडशभिः पदार्थैः व्यवहितिः प्रत्यासत्तिः शास्त्रार्थ इति भावः। सूत्रार्थस्तु—तुल्यकालानां नियोजनादीनां प्रवृत्त्या क्रमः नियुज्येत, तदुपक्रमात् तेषामङ्गानां प्रधानसमीपे

अनुष्ठाननियमात् अङ्गानां प्रधानप्रत्यासत्तरत्वात् इति यावत् ।

वि— 'उपाकृतानां किं सप्तदशानां पृथक्त्वने । क्रमो नास्त्यस्ति वा, नास्ति नियामकविवर्जनात् ॥ आद्यसंस्कृत्यनुष्ठानं यत्क्रमेण स एव हि । क्रमोऽन्यत्र प्रवृत्तिस्तु क्रमस्यात्र नियामिका ॥'

भाट्ट— एवं 'मरुद्भ्यः प्राजापत्यान् पशूनालभते' इत्यादौ एकैकस्मिन् पशौ उपाकरणादीनां पदार्थानामावर्तनीयानां पदार्थानुसमयस्य वक्ष्यमाणत्वात् आद्य उपाकरणपदार्थो येन क्रमेण कृतस्तेनैव क्रमेण नियोजनादिद्वितीयप्रभृतिपदार्थाः कर्तव्याः । अन्यथा प्रकृतिप्राप्तस्य उपाकरणनियोजनयोरव्यवहितानन्तर्यस्योपदेशिकपशुसाहित्यानुरोधेन षोडशक्षणव्यवधानेऽप्यधिकक्षणव्यवधानापत्तेः । अत्र द्युत्पत्तिवाक्ये, 'येऽश्वद्वेषी कृत्वा प्राजापत्यैश्चरन्ति' इति प्रयोगवाक्ये च शाखानां सप्तदशयागानां साहित्यावगमाद् साहित्यानुरोधेनैकैकाङ्गेन सप्तदशयागानां युगपदुपकर्तव्यत्वावगतेः आवर्तनीयाङ्गेषु चैकेन कर्त्रा युगपदुपकारासंभवादवश्यं षोडशक्षणव्यवधानेऽपि तदधिकव्यवधाने औपदेशिकसाहित्यस्यातिदेशिकानन्तर्यस्य च बाधः स्पष्ट एव । अत एव केषु चित् पशुषु न्यूनक्षणव्यवधानमपि दोषः एव । अतः पूर्वपदार्थक्रम एव प्रयोगविध्यवगतप्रत्यासत्त्यनुगृहीतोत्तरपदार्थक्रमनियमे प्रमाणम् । अत्र मूर्धस्युपलक्षणम् । उत्तरपदार्थप्रवृत्तिक्रमेणापि पूर्वपदार्थक्रमनियमस्य न्यायतौल्येन वक्ष्यमाणत्वात् ।

अत्र च प्रवृत्तिक्रमोऽनुष्ठानकालीनोऽपि प्रयोगविधिप्रवृत्तेः पूर्वमपेक्षावशात् अवगम्यमानस्तदवगम्यप्रत्यासत्त्यनुगृहीतः पदार्थान्तरक्रमं बोधयति । ततश्च तद्विनियोजकवाक्यकल्पनया तस्याङ्गत्वेऽवधारिते प्रयोगविधिना प्रयोगविधानम् । तदुत्तरं च प्रयोगविधेः पर्यवसानमिति ध्येयम् । न चेदं सर्वं साहित्यानुरोधेन स्यात्, तत्र च प्रमाणाभावः, शेषकाण्डाम्नानादिति वाच्यम् । एकेन पदेनानेकोपस्थितौ क्रियान्वये एककालावच्छिन्नत्वरूपसाहित्यस्यानुभूयमानस्य शाब्दत्वसिद्ध्यर्थं लक्षणादीनापादत् । प्रतीयते हि, 'शतायुधजनानीर्थः' 'पृथिव्यां राजानो बहवः' इत्यादौ बहुत्वावच्छिन्नानामयधानादीनां चैत्रान्वयोऽसति बाधके एककालावच्छिन्नः । अतः प्राजापत्यपदादौ लक्षणेत्यपि ध्येयम् ।

मण्डन— 'प्रवृत्त्या पशुषु क्रमः ।'

शंकर— 'द्विपश्वादौ प्रवृत्तितः ।'

* प्राशस्त्यं अप्राशस्त्यं च । ननु किमिदं प्राशस्त्यमप्राशस्त्यं वा ? न तावत् गुणवत्त्वं दोषवत्त्वं वा, गुणदोषयोरेव निर्वक्तुमशक्यत्वात् । नहि 'वायुर्वै क्षेपिष्ठा देवता' 'अपशवो वा अन्ये गोअश्वेभ्यः' इत्यादौ वायुक्षेपिष्ठत्वादिकं गुणः, अपशुत्वं गवाश्वगतप्राशस्त्याभाववत्त्वं वा दोषः । तज्ज्ञानस्य प्रवृत्तिनिवृत्तिं प्रति व्यभिचारित्वेन अनुपयोगित्वात्, क्षेपिष्ठत्वादेः शक्त्यैवोपस्थितत्वेन लाक्षणिकसिद्धान्तभङ्गापत्तेश्च । नापि स्वर्गनरकादिजनकत्वे, स्वर्गादिपदसमभिव्याहारादेश्च तदविवक्षौ अर्थवादवैयर्थ्यापत्तेः । इति चेत् । क्रियाजन्यदुःखापेक्षया अधिकसुखसाधनत्वं प्रशस्तत्वम् । तज्जन्यसुखापेक्षया अधिकानिष्टजनकत्वं अप्रशस्तत्वं इत्येवंविधयोस्तयोः उपपत्तेः । नहि अयमर्थः अन्यतः सिद्धः, विधिना इष्टानिष्टसाधनत्वमात्रस्यैव आक्षेपात् । अत एव यत्र नार्थवादः पठितः, तत्र विधिना तत् आक्षिप्यते एव । न च एवंविधतज्ज्ञानस्य प्रवृत्तिनिवृत्त्योः अनुपयोगः, एवंविधज्ञानाभावेऽपि प्राचीनकर्मवशेन तात्कालिकसुखदुःखयोः उत्कटरागद्वेषसत्त्वे प्रवृत्तिनिवृत्त्योः उदयसत्त्वात् । एवंविधज्ञानसत्त्वेऽपि च प्राचीनकर्मवशेनैव प्रवृत्तिनिवृत्त्योरनुदयात् इति वाच्यम् । तथात्वेऽपि एवंविधज्ञानसत्त्वे क्रियाजन्यतात्कालिकदुःखापेक्षया अधिके प्रायशो लोके वेदे वा सर्वेषां पुरुषाणां उत्कटरागदर्शनेन तात्कालिकसुखापेक्षया अधिके दुःखे उत्कटद्वेषदर्शनेन च तज्ज्ञानस्य स्वपरव्याप्तमनोत्कटरागद्वेषोपयोगित्वस्य सर्वसिद्धत्वात् । क्वचिदेव ॥ प्राचीनकर्मणः औत्कट्ये तत्सत्त्वेऽपि तदभावः, न तु सर्वत्र । अतः उत्कटप्राचीनकर्माभावे उक्तविधप्राशस्त्याप्राशस्त्यज्ञानस्य उत्कटरागद्वेषजनकत्वात् तद्द्वारा प्रवृत्तिनिवृत्त्योरुपयोगः । न चैवं यस्य स्वत एव स्वप्रवृत्ती, यं प्रति प्राशस्त्याप्राशस्त्यज्ञानस्य अनुपयोगेन सर्वान् पुरुषान् प्रति अनुपयोगः इति वाच्यम् । सर्वपुरुषान् प्रति अनुप-

योगेऽपि पुरुषविशेषं प्रति उपयोगेनैव अर्थवादप्रामाण्योपपत्तेः । स्वत सिद्धस्मरणस्य मन्त्रजन्यस्मरणस्य अनुपयोगेऽपि मन्त्राम्नानवशेन तज्जन्यस्मरणस्य अभ्युदयकारित्वकल्पनवत् अर्थवादाम्नानबलेन तद्बोधितप्राशस्त्यस्य अभ्युदयकारित्वकल्पनोपपत्तेश्च ।

एवंविधप्राशस्त्यादेश्च लक्षणयैव अर्थवादैः प्रतिपादनात् मार्गणवन्धरिद्धान्तस्यापि न भङ्गः । सा च वाक्यलक्षणाया बाधकाभावात् अर्थवादस्थपदसमुदाये एकस्मिन्नेव वा पदे लक्षणा । इतरपदानि तात्पर्यग्राहकाणि इत्यन्यदेतत् ।

तच्च प्राशस्त्यमप्राशस्त्यं वा इतिकर्तव्यतात्वसंबन्धेन शाब्दभावनायामन्वेति इति बहवः । स्वरूपसंबन्धेन धात्वर्थादावेव अन्वेति इति केचित् । वस्तुतस्तु वक्ष्यमाणरीत्या अन्यप्रमुक्तार्थवादेव कार्यकारणभावकल्पनागौरवानुरोधेन प्राशस्त्यस्य स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसंबन्धेन प्रवृत्तौ, अप्राशस्त्यस्य च स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसंबन्धेन प्रवृत्तौ एव अन्वयः । न चैवं प्रधानार्थवादेनैव क्रियाजन्यतात्कालिकदुःखापेक्षया स्वफले आधिक्यसिद्धौ अङ्गार्थवादवैयर्थ्यम्, प्रधानजन्यफलापेक्षया अङ्गजन्यफलस्य भेदाभावात् प्रकारे च आधिक्यासंभवात् इति वाच्यम् । तत्तदङ्गजन्यतात्कालिकदुःखापेक्षया प्रधानफले आधिक्यबोधनार्थत्वात् । अतः विध्यर्थवादेषु प्रवृत्त्यङ्गफलत्वरूपप्राशस्त्यलक्षणा । निषेधार्थवादेषु च प्रवृत्त्यद्वुःखजनकत्वरूपाप्राशस्त्यलक्षणा इति मूलग्रन्थोक्तीत. पन्थाः ।

वस्तुतस्तु अस्मदनुज्ञाविध्यर्थवादेषु 'वातिरात्रे षोडशिनं गृह्णाति' इत्यादिविधेयार्थवादेषु च नैवंविधप्राशस्त्याप्राशस्त्यलक्षणासंभवः । नहि 'हुताया वपाया दीक्षितान्नमश्नीयात्' इत्यत्र क्रियाजन्यानिष्टापेक्षया तृप्त्याख्यस्य फलस्य आधिक्यं बोधयितुं शक्यम्, निषेधप्रयुक्तानिष्टस्य आधिक्यावश्यंभावात् । क्रियाजन्यतात्कालिकदुःखापेक्षया आधिक्यस्य लोकसिद्धत्वेन निषेधस्थले तज्ज्ञानस्य प्रवृत्त्यनुपयोगित्वात् । षोडशिग्रहणजन्यसुखापेक्षया तदन्यदुःखस्य आधिक्यं नैव संभावयितुं शक्यम् ।

अपि च श्येनार्थवादे श्येनजन्यतात्कालिकदुःखापेक्षया यदि अभिचाराधिक्यं बोध्यते तदा तज्ज्ञानस्य नैव प्रवृत्त्युपयोगित्वम् । श्येनप्रयोज्यनरकादिदुःखापेक्षया आधिक्यं तु नैव बोधयितुं शक्यम् । 'न हिंस्यात्' इति निषेधार्थवादेन तस्य अभिचारापेक्षया आधिक्यबोधनाच्च ।

अतो विध्यर्थवादेषु विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वरूपं प्राशस्त्यं लक्ष्यते । निषेधार्थवादेषु च निषेध्यतावच्छेदकसामानाधिकरण्येन बलवदनिष्टानुबन्धित्वरूपप्राशस्त्यम् । अत्र अनिष्टे बलवत्त्वं उत्कटद्वेषविषयत्वम्, न तु आधिक्यम् । स्वर्गन्यूनेऽपि तात्कालिकदुःखे प्राचीनकर्मवशेन कदाचित् उत्कटद्वेषो दृश्यते । अत एव नैव तदा यागादौ प्रवर्तते । नरकन्यूनेऽपि च तात्कालिकसुखे प्राचीनकर्मवशेन उत्कटरागो दृश्यते । अत एव अभिचारादौ प्रवर्तते । अत एव यागादौ कदाचित् प्राचीनशुभकर्मवशात् बलवदनिष्टानुबन्धित्वम्, न तु सर्वदा । अत एव विधेयतावच्छेदकसामानाधिकरण्येन इत्यनेन तस्य कालिकाव्याप्यवृत्तित्वं विवक्षितम् । एवं 'न कलञ्जं भक्षयेत्' इत्यादौ कदाचिदेव शुभकर्मवशात् बलवदनिष्टानुबन्धित्वज्ञानम् । अतस्तत्रापि कालिकाव्याप्यवृत्तित्वसिद्ध्यर्थं निषेध्यतावच्छेदकेत्यादि । एतादृशाव्याप्यवृत्तित्वज्ञापनार्थमेव कौस्तुभादौ योग्यतापदम् । (कौस्तुभे तावत् 'तदुक्तं च—प्राशस्त्याप्राशस्त्यं बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वम्' इति पृ. २८ पं. १० । भाट्टदीपिकायां च आदिशब्दोक्तायां 'स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वरूपे' पृ. २१ पं. १५–१६ ) । एवंविधबलवदनिष्टाननुबन्धित्वज्ञानस्य च येन पुरुषेण यागे सर्वदैव बलवदनिष्टाननुबन्धित्वं बुद्धम्, तं प्रति तद्बुद्धिकाले अप्रामाण्यज्ञानादिविघटकतया उपयोगः । येन च कलञ्जभक्षणे बलवदनिष्टानुबन्धित्वं सर्वदैव बुद्धम्, तं प्रति तद्बुद्धिकाले अप्रामाण्यज्ञानसंपादकतया एवंविधबलवदनिष्टानुबन्धित्वज्ञानस्योपयोगः, अवच्छेदकावच्छेदेन तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरोधित्वात् । अतश्च एतादृश-

प्राशस्त्यज्ञानस्य सामग्रीसंपादनद्वारा प्रवृत्तौ उपयोगः। दोषज्ञानस्य च प्रवृत्तिसामग्रीविघटनद्वारा निवृत्तावुपयोगः। संभवति चेदमस्तुत्याविप्यर्थवादे, वपाहोमोत्तरदीक्षितान्नभोजनस्य निषेधप्रयुक्तानिष्टाननुबन्धित्वज्ञापनात्। न च तस्य दोषाभावरूपस्य विधिनैव आक्षेपात् कृतमर्थवादेन इति वाच्यम्। तेन तदाक्षेपेऽपि सामानाधिकरण्येन फलवदनिष्टाननुबन्धित्वस्य अर्थवादेन बोधनोपपत्तेः। एवं षोडशिग्रहणनिषेधार्थवादेऽपि ग्रहणजन्ये तात्कालिके स्वल्पेऽपि दुःखे सामानाधिकरण्येन फलवद्द्वेषविषयत्वाख्यं प्रकारं बोध्यते इति न काचिदनुपपत्तिः।

अतः पशुविधे स्तुतिनिन्दे क्वचित् 'वायुर्वै क्षेपिष्ठा' इत्यादौ अर्थवादपदैः स्ववाक्यार्थज्ञानजन्यशाब्दबोधविषयीभूतवाक्यार्थसंसर्गादेव लभ्येते। स च वाक्यार्थः 'क्षेपिष्ठत्वादिगुणको वायुः स्वदेवताककर्मजन्यं फलं शीघ्रं प्रयच्छति' इत्येवंरूपः। अत्र हि 'स एव' इत्यत्र एवकारस्य वैयर्थ्यपरिहारार्थं गमकत्वेन इत्येवं योजना। ततश्च तेन औदासीन्यस्यापि व्युदासात् दाने शीघ्रत्वादिप्रतीतिः। शाब्दबोधश्च तात्पर्यविषयीभूत एव जन्यते वाक्यपदेन प्रयाजोऽभ्युदितवत्। फलज्ञानोत्पत्त्यज्ञानस्य च प्रायशः फले रागोत्पादजनकत्वदर्शनात् तत्संबन्धत्वेन स्तुतिलक्षणासिद्धिः। एवमन्यत्रापि ऊह्यम्।

यत्र तु अयोग्यतानिश्चयसत्त्वे नैतादृशशाब्दबोधः यथा 'यजमानः प्रस्तरः' इत्यादौ अभेदान्वयस्य बाधितत्वात्, तत्र यजमानपदं यजमानकार्यकारित्वयजमानवृत्तिधर्मकारित्वरूपगुणयोगेन प्रस्तरे गौणमङ्गीकृत्य 'यजमानः प्रस्तरः' इति वाक्यजन्यशाब्दबोधोत्तरं स्वार्थकर्तृत्वरूपपाठकार्थसंबन्धात् तेन वाक्येन फलवदनिष्टाननुबन्धित्वरूपस्तुतिलक्षणा।

न च यजमानपदे गौणीमङ्गीकृत्यैव फलवदनिष्टाननुबन्धित्वलक्षणा अङ्गीकृत्य तस्य प्रस्तरे अन्वयः किं न स्यात् इति वाच्यम्। यजमानपदस्य प्रस्तरस्तुतिनिरूढस्तुतिलक्षणायां शक्यसंबन्धाभावात्। अस्मन्मते गुणत्वयोः परस्परसंबन्धाभावेन प्रस्तरे अन्वयानुपपत्तेश्च।

न चैवं तात्पर्यविषयीभूतशाब्दबोधदशायां गौण्या वृत्त्या उक्तस्य स्वकार्यकारित्वविशिष्टस्यापि अभेदसंबन्धेन प्रस्तरे अन्वयानापत्तिः। अध्याहृत-अस्ति-आख्यातार्थे एव उभयोरन्वयेन परस्परान्वयस्य पार्ष्ठिकत्वात्। तस्मात् अध्याहृताख्यातपदेन वाक्येन शाब्दबोधे जनिते पश्चात् तद्बोधितप्राशस्त्यस्य विधौ अन्वयः।

न चैवं पश्चादपि यजमानपदेनैव प्राशस्त्यवत्त्वं लक्षयित्वा तस्य पार्ष्ठिकान्वयरूपपरस्परसंबन्धाङ्गीकारेण अध्याहृताख्यातार्थे एव उभयान्वयो भवतु। पूर्वमेव यजमानपदे गौणीगर्भां स्तुतिलक्षणां अङ्गीकृत्य तदन्वयोपपत्तेः। एक एव वा शाब्दबोधोऽस्तु, कृतं द्विरन्वयेन, वाक्यैकवाक्यतया एव तदाकाङ्क्षितपूरणोपपत्तेः इति वाच्यम्। वाक्ये लक्षणामङ्गीकृत्य एकवाक्यत्वे संभवति वाक्यभेदस्य अन्याय्यत्वात्।

न च असदुक्तरीत्या अध्याहृताख्यातार्थान्वयेऽपि 'पश्य मृगो धावति' इतिवत् एकाख्यातार्थस्य द्वितीयाख्यातार्थे प्रकारतया अन्वयेनापि एकवाक्यतोपपत्तिः। आख्यातार्थस्य गुणविशेष्यत्वव्युत्पत्तिभङ्गभयेन 'स्योनं ते' इतिवत् आख्यातद्वयसत्त्वे भिन्नवाक्यत्वस्यैव न्याय्यत्वात्। अन्यथा प्रयाजादिभावनाया अपि हविर्गन्त्यात्वेन प्रधानभावनान्वयापत्तेः सर्वस्यापि एकवाक्यतापत्तिः। 'पश्य मृगो धावति' इत्यादौ तु 'पश्य' इत्यस्य कर्मान्वयं विना शाब्दबोधाजनकत्वात् युक्तो धावनभावनायाः कर्मत्वेन तस्यामन्वयः। नहि कर्मान्वयं विना शाब्दबोधापर्यवसानवत् द्रव्यपरकान्वयं विना तदपर्यवसानम्, वाक्यमात्रस्य साकाङ्क्षत्वापत्तेः। तस्मात् यजमानपदमात्रे प्राशस्त्यलक्षणा अङ्गीकृत्य अध्याहृताख्यातार्थे अन्वयाङ्गीकारे वाक्यभेदापत्तेः वाक्ये लक्षणाङ्गीकरणम्।

वस्तुतस्तु आख्यातद्वयसत्त्वे वाक्यभेदस्य अदोषत्वेन वाक्यलक्षणाया प्रमाणाभावः। तेन 'यजमानः प्रस्तरः' इत्यादौ वाक्यैकवाक्यत्वेऽपि न काचित् क्षतिः। न चैवं 'वर्तिरसंनाग्ना वा जुहुयात्' इत्यादावपि प्राशस्त्यलक्षणया पयोहोमविध्येकवाक्यतापत्तेः भिन्नवाक्यताऽनुपपत्तिः, तत्र वाशब्देन पक्षान्तरत्वप्रतीतेः। 'एकं वृणीते' इत्यादावपि विधायकतया भिन्नवाक्यत्वस्य

विकल्पापादकतया अनुपपत्तेः अगत्या वाक्ये प्राशस्त्यलक्षणयाऽपि एकवाक्यत्वाङ्गीकरणम्। नहि तत्र 'यजमानः प्रस्तरः' इतिवत् एकस्मिन् पदे लक्षणामङ्गीकृत्य लक्षितप्राशस्त्यस्य उत्तरपदार्थे अन्वयः संभवति। अत इत्त्र वाक्ये एव लक्षणा। तेन यत्र एकस्मिन् पदे प्राशस्त्यलक्षणामङ्गीकृत्य तस्य इतरपदार्थान्वयं अङ्गीकृत्य वाक्यार्थपर्यवसानं तत्र अर्थवादविध्योः वाक्यैकवाक्यता। यत्र तु न तथा तत्र सर्वत्र वाक्य एव प्राशस्त्यलक्षणामङ्गीकृत्य पदार्थविषया उपस्थितस्य विध्याख्यातार्थे एव अन्वयात् विध्यर्थवादयोः पदैकवाक्यतैव इति युक्तमुत्पश्यामः। रहस्य. पृ. २०–२५.

* प्राशस्त्य फलोत्कर्षरूपम्। इदं च बलवदनिष्टाननुबन्धित्वे पर्यवस्यति। सोम. १।२।१ पृ ७. * प्राशस्त्य स्तुतिपदवाच्य बलवदनिष्टाननुबन्धित्वयोग्यतारूपम्। भाट्ट. १।२।१.

* प्राशस्त्यरूपोऽर्थः अनन्वयमनुत्तविध्युद्देश्याकाङ्क्षितत्वात् प्रयोजनाकाङ्क्षा शक्नोति पूरयितुम्। शा. १।२।१ पृ. ६.

* प्राशित्रावदानं दर्शादौ 'आग्नेयस्य मस्तकं विभज्य प्राशित्रमवद्यति' इति सर्वेभ्यः। तत्र आग्नेयस्य मस्तकादेवावदानम्, अग्नीषोमीयादेस्तु मस्तकात् अन्यस्माद्वा इत्यनियमः। भा. ३।१।१५।२६–२७.

* प्राशित्रादिभक्षाः ज्योतिष्टोमगतेष्टिषु सन्त्येव, प्रतिपत्त्यर्थत्वात्। वि. १२।१।१५.

* प्राशित्रादिभक्षणं ऋत्विजामेव, नान्येषाम्। ६।४।३. * प्राशित्रादिभक्षणं गृहमेधीये नास्ति, स्विष्टकृदाज्यभागाभ्यां इतरेषां अङ्गानां परिसंख्यातत्वात् (पञ्चमपूर्वपक्षाभिप्रायेण परिसंख्या कृत्वा–चिन्त्येयम्)। १०।७।११.

* प्राशित्रादिभक्षणोत्तरं अनुयाजा दर्शपूर्णमासयोः। वि.१०।४।२२.

* प्राशित्रेडादिभक्षाः प्रतिपत्त्यर्थाः, न कर्मान्तरार्थाः। १०।२।९.

* प्राशित्रभक्षः प्रकृतौ द्वितीयः। भा.१०।२।१। १३. * प्राशित्रभक्षः शेषकार्यम्। भा. ३।४।१५।४२, वा. ३।४।१४।३७.

* प्राशित्रभक्षार्थः उपहारः। उपहारः उपहारसमर्पणम्। वि. १०।२।४, * प्राशित्रभक्षार्थमवत्तस्य नाशे प्राशित्रभक्षलोपः। ६।४।२.

* प्राशित्रभक्षणं दर्शपूर्णमासादौ। वि.१०।७।११.

* प्रागुभावः अविलम्बः। मीन्या.

‡ प्रासङ्गिकं च नोत्कर्षेदसंयोगात्। ५।१। १५।२८॥

सवनीये पशौ 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति वचनात् उत्कृष्यमाणा अनुयाजाः दाक्षिणाग्निके पिष्टलेपफलीकरणहोमौ अपि तदानुकर्षन्त्यनेन उत्कर्षन्ति न वेति विचारे उभयाद्युत्कर्षन्ति इति उत्प्रवर्तेन प्राप्त पूर्वपक्षं चयन्देन निरस्य सिद्धान्तयति। प्रासङ्गिकं परार्थं सत् प्रसङ्गात् पशुपुरोडाशे उपकारकं अनुयाजकर्म दाक्षिणाग्निरो होमौ नोत्कर्षेत्। तयोः पाशुकैरनुयाजैः असंयोगात् असंबन्धात्। तस्मात् तयोः स्वस्थाने एवानुष्ठानम्। के.

‡ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्, तदर्थे हि विधीयते। ९।४।६।२८॥

अग्निहोत्रे आम्नायते 'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्रे उद्वायेत्' इति। यदि दर्शार्थेन पौर्णमासार्थेन वा अग्निरुद्धृत अनुगते अग्निहोत्रे उद्वायेत् तदा किं ज्योतिष्मतीष्टिः कर्तव्या न वा इति विचारे सिद्धान्तमाह। दर्शार्थेन पौर्णमासार्थेन वा अग्नेरुद्धरणे प्रासङ्गिकत्वम्। तस्मिन् प्रासङ्गिके अग्नौ अनुगते (शान्ते सति) प्रायश्चित्तं ज्योतिष्मती न विद्यते न कर्तव्या। परार्थत्वात्, तत् उद्धरणं परार्थं दर्शपूर्णमासार्थम्, न स्वार्थं अग्निहोत्रार्थम्। हि यस्मात् तदर्थे स्वार्थे अग्निहोत्रार्थे अग्नौ उद्धृते अनुगते प्रायश्चित्तं विधीयते न परार्थे। तस्मात् अग्निहोत्रार्थमुद्धृते अनुगते एव प्रायश्चित्तं इति सिद्धान्तः। के.

* प्रासङ्गिकचिन्ता प्रकृताव्यवधायिका। मु पृ. ९९०.

-● प्रासन ( त्याग ) इडाया' इडापात्रे इडाप्रस्कार एव । वि १०।७।५ ● प्रासन कृष्णविषाणाया चात्वाले ह्यस्याद्दे उत्तमाहदक्षिणानयनोत्तरम् । प्रवृत्तिश्च तथा प्रथमाहदीक्षाकाल आरभ्य । ११।३।६।१५-१६. ● प्रासन कृष्णविषाणाया न प्रयोजकम् , किन्तु प्रतिपत्तिकर्म, कण्डूयन [illegible] प्रयोजकम् । ४।२।७।१९

ॐ प्रासनवन्मैत्रावरुणाय दण्डप्रदान कृतार्थत्वात् । ४।२।६।१६ ॥

ज्योतिष्टोमे 'क्रीते सोमे मैत्रावरुणाय दण्ड प्रयच्छति' इति श्रुतम् । दीक्षाया दीक्षिताय प्रदत्तो दण्ड सोमक्रयोत्तर मैत्रावरुणाय प्रदीयते । तदिद दण्डप्रदान प्रतिपत्तिर्वा अर्थकर्म वा इति विचारे पूर्वपक्षयति । प्रतिपत्ति इति शब्द पूर्वसूत्रादनुवर्तते । मैत्रावरुणाय दण्डप्रदान प्रतिपत्ति स्यात्, तस्य दीक्षाया कृतार्थत्वात् । एकत्र कृतार्थस्य द्रव्यस्य अन्यत्र विनियोग प्रतिपत्तिर्भवति । प्रासनवत् । यथा दीक्षितस्य स्वाङ्गकण्डूयने कृतार्थाया कृष्णविषाणाया दक्षिणादानोत्तर चात्वाले प्रासन प्रक्षेप प्रतिपत्ति तद्वत् । अत्र भाष्ये यद्यपि 'मैत्रावरुणाय दण्डदान' इत्येवोक्त न तु दण्डप्रदानमिति तथापि विषयश्रुतौ 'प्रयच्छति' इति प्र-उपसर्गप्रयोगात् सूत्रेऽपि प्रदानशब्दप्रयोग एव युक्तो भवति इति अस्माभिरपि सूत्रे सर्वत्रोपलभ्य प्रदानशब्दप्रयोग एव स्वीकृत इति ध्येयम् ।

अर्थकर्म वा कर्तृसंयोगात् स्रग्वत् । १७ ॥

सिद्धान्तसूत्रम् । ज्योतिष्टोमे मैत्रावरुणाय औदुम्बरस्य दण्डस्य प्रदान न प्रतिपत्ति, किन्तु अर्थकर्म । कर्त्रा मैत्रावरुणेन प्रधानेन गुणभूतस्य दण्डस्य संयोगात् 'मैत्रावरुणाय दण्ड प्रयच्छति' इति श्रुत्या संयोगस्य प्रतिपादनात् । स्रग्वत् स्रज इव स्रग्वत् । यथा 'स्रजमुद्गात्रे' इति उद्गात्रे स्रग्दान अर्थकर्मैव राजसूये तद्वत् ।

कर्मयुक्ते च दर्शनात् । १८ ॥

सिद्धान्ते हेत्वन्तरमुच्यते । चकारो हेत्वन्तरसमुच्चयार्थ । कर्मयुक्ते प्रैषानुवचनलक्षणकर्मसंयुक्ते एव मैत्रावरुणे 'दण्डी प्रैषानन्वाह' इत्यनुवादवाक्ये दण्डस्य दर्शनादपि दण्डप्रदान अर्थकर्म, न प्रतिपत्ति इति सिध्यति । के

● प्रासादपर्यङ्कन्याय । नाडीपुरीतद्ग्रहणा प्रासादपर्यङ्कन्यायेन ( प्रासादे शेते, पर्यङ्के शेते इत्यत्र अधिकरणयो समुच्चय । ) समुच्चये संभवति न पाक्षिकबाधापादको विकल्प उपगन्तु युक्त ( अयमेव प्राकार० न्याय )। आमरणम् . ३।२।२।७ मद्.

ॐ प्रासादवासिन्याय । यथा एक एव देवदत्त, कालभेदेन प्रासादोपर्यपि वसन्नपि प्रासादवासप्राधान्येन प्रासादवासीत्युच्यते, तथा 'मुखनासिकावचनोऽनुनासिक' (पा० १।१।८) इति सूत्रस्थमहाभाष्ये [illegible] मुखग्रहण शक्यमकर्तुम्, केनेदानीमुभयवचनाना सिद्धिर्भविष्यतीति, प्रासादवासिन्यायेनेति । तद्यथा केचित् प्रासादवासिन , केचिद्भूमिवासिन , केचिदुभयवासिन । ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन, ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन, ये उभयवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन प्रासादवासिग्रहणेन च, एवमिहापि केचित् मुखवचना , केचिन्नासिकावचना , केचिदुभयवचना । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन, ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन, ये उभयवचना गृह्यन्ते ते मुखग्रहणेन नासिकाग्रहणेन चेत्युक्तम् । साहस्री ३६.

● प्रियङ्गव दीर्घप्रकाश ( सस्तन ) पूर्वसस्ये क्षीणे भवन्ति । भा ११।३।४।१. ● 'प्रियङ्गव शालयवानामन्तरा भवन्ति हि यथम् । यदा सर्वासु मोदन्ते सम्यग्जाता प्रियङ्गव ॥ तदा नान्योऽधिगच्छति सर्वासामेव मोदनात् ॥ ' भा ११।३।४।१ पृ २१८.

● प्रियङ्ग्वधिकरणम् । यवतराहाधिकरणमेवेदम् । १।३।४।८-९ 'यवतराहाधिकरणम्' इत्यत्र द्रष्टव्यम् ।

● प्रीत्यर्थं हि पुरुषो यतते । भा.६।१।१।२ .

● प्रेङ्खारोहण उत्सवादौ सदाचार महाव्रते इव । भा ११।३।३।७ पृ. २०५.

● प्रेताग्निहोत्रे 'अधस्तात् समिध धारयन् अनुद्रवेत् उपरि हि देवेभ्यो धारयति ' अत्र हैरिते हविषि स्रुग्दण्डस्योपरि समिदारोपे आपूर्वसादृश्यीस्ते । तस्य च

प्रेताग्निहोत्रादुत्कर्षः, न तु उपरिधारणस्य स्तुत्यर्थं अनुवादः । वि. ३।४।५ । ● समिद्धारणं स्रुग्दण्डोपरि इति शङ्कयः । बिल्स्योपरि इति शा. । शाखान्तरे बिलोपरिधारणवाक्यसद्भावात् इति सोम. । कुत्राचित्रोयं ' स्रुग्दण्डे निधाय समिधमनुद्रवति ' इति न्यायसुधाकृल्लिखितस्तत्रसद्भावात् इति भाट्ट. । ● प्रेताग्निहोत्रे ' प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयति ' । अनोपवीतमनूद्य प्राचीनावीतं मृतस्य अग्निहोत्रदोहने विधीयते, न तु अनोपवीतस्य विधिः, प्राप्तत्वात् । उपवीतानुवादश्च प्राचीनावीतस्तुत्यै । वि. ३।४।४, ● प्रेताग्निहोत्रे ' ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रान् स्तृणीयात् ' अत्रोत्तराग्रत्वमनूद्य दक्षिणाग्रत्वं विधीयते । उत्तराग्रत्वानुवादस्तु दक्षिणाग्रत्वस्तुतये । ३।४।४.

● प्रेरणं गुणादिना कर्मसम्पादनार्थं आत्माभिमुख्येन क्षेपः । सु. पृ. ८२०.

● प्रेरणा प्रवृत्त्युत्पादकव्यापारत्वात् भावनाशब्देन गीयते, भाव्योत्पादानुकूलस्य व्यापारस्य भावनात्वप्रसिद्धेः । व्यापारत्वं च तस्याः सिद्धरूपत्वे निर्व्यापारायाः प्रवृत्त्युत्पादकत्वासंभवेन, ज्ञानस्य च शेषव्यापारत्वायोगात् व्यापारान्तरकल्पनापत्तेः गौरवपरिहारार्थं कल्प्यते । प्रेषणाध्येषणादीनामपि पुरुषाशयविशेषाणां अनेनैव न्यायेन व्यापारत्वाध्यवसानं द्रष्टव्यम् । के. ● प्रेरणा विधिः नियोग शब्दभावना इत्येकोऽर्थः । बाल. पृ. ७५

● ' प्रैयङ्गवश्चरुः ' इति वाक्यात् प्रधानयागसाधनचरुप्रकृतित्वप्रतीतेः प्रियङ्गूणां प्रधानमात्रार्थत्वम् , न प्रकरणात् । सु पृ. ६३४. ● प्रैयङ्गवं चरुं मारुतं निर्वपेत् पृश्नीनां दुग्धे ग्रामकामः । भा. १०।१।१०।४१.

● प्रैयङ्गवन्यायेन ( यथा प्रैयङ्गवे चरौ प्रधानमात्रे प्रियङ्गुभिः व्रीहिनिवृत्तेः व्रीहिसाधनक एव अवघात. तथा ) प्रधानमात्रे माषेण पुरोडाशो निवर्तितः । वा. २।२।४।१२ पृ. ४१५.

☞ प्रैषः अग्नीदग्नीरित्यतः पृथक् उपप्रेष्य होतरिति ॥

पशौ अध्वर्युर्मैत्रावरुणं प्रेष्यति, स च ' अग्नीदग्नीरस्त नद्राजन् ' इत्यादिना ' उपप्रेष्य होतर्हव्या देवेभ्य ' इत्यन्तेन मन्त्रेण होतारं प्रेष्यति, सोऽपि ' दैव्याः शमितार आरभध्वम् ' इत्यादिना मन्त्रेण शमितॄन् प्रेष्यतीति स्थितिः । एवं सति 'उपप्रेष्य होतर्हव्या देवेभ्य,' इत्यादिश्रुतेरुपप्रैषविषयत्वप्रैषविधौ यावन्मात्रस्य मन्त्रस्य अदर्शनात् ' अग्नीदग्नी.' इत्यस्यैवान्त्यप्रतीकोपादानेन विनियोगविधिः, प्रथमप्रतीक एवोपादेय इति नियमे मानाभावात् । ' षड्विंशतिरित्येव ब्रूयात् ' इति मध्यमप्रतीकस्याप्युपादानादिति, 'अमृतमसि प्राणाय त्वेत्यभिमन्त्रयते' इत्यत्र ' आ न. प्राणः ' इति मन्त्रान्त्यप्रतीकस्याप्युपादानात् । इति प्राप्ते, ' एनानध्वर्युराह ' इति प्रक्रम्य ' उपप्रेष्य ' इति विधेयाम्नानादन्ते च ' होऽन्वाहाग्नीदग्नीरस्त नद्राजन् इति ' इति श्रुतेश्चाध्वर्युमध्याह्नोः प्रैषकर्तृत्वतदर्थप्रतिग्रहीतृत्वयोरवगमात् यावन्मात्रस्य प्रत्येकमन्त्रत्वादेव प्रैष एव नोपप्रैषः । संकर्ष. २।३।८ .

☞ प्रैषः अग्नीदग्नीरिति अध्वर्योर्मैत्रावरुणं प्रति ॥

तस्मिन्नेव प्रैषे होतरिति संबोधनाश्रवणाद्धोतारं प्रति एवायमुपप्रैषविषयकः प्रैषः । ' यदग्नविरय द्वितीयो होताऽन्वाह ' इत्यादौ इव द्वितीयादिपदसामानाधिकरण्याभावे मुख्यहोतुरेवोपस्थितेर्बुद्धिपरत्वात् । इति प्राप्ते, ' अग्नीदग्नीः ' इत्यस्य मैत्रावरुणकर्तृकत्वेन तत्रस्य ' होतरुपप्रेष्य ' इत्यस्योक्तन्यायेनैव तस्मिन् प्रैषासम्भवाच्च होत्रुद्देश्यकत्वस्यावश्यकतया प्रैषद्वयस्य वैयर्थ्यापत्त्या ' अध्वर्यून् वृणीते ' इति निरूपपदानामपि गणेषु प्रयोगदर्शनाच्च मैत्रावरुणं प्रत्येवाय प्रैषः । अत एव ' यदध्वर्युर्होतारमुपप्रेष्यत्यथ कस्मान्मैत्रावरुण उपप्रैषं प्रतिपद्यते ' इति लिङ्गदर्शनमुपपद्यते । संकर्ष. २।३।९.

● प्रैष. आध्वर्यव , प्रैषार्थस्तु आग्नीध्र , न तु वैपरीत्यम् , दर्शपूर्णमासयोः । ३।८।१२।२४–२५. मीको. पृ. २०७२ ' दर्शपूर्णमासादौ प्रैष ' इत्यत्र द्रष्टव्यम् ।

☞ ' प्रैषः उक्थशा यज सोमस्य ' इति शस्त्रवन्मात्रे निवेश्यते ॥

' उक्थशा यज सोमस्येति स्तुतशस्त्रवत. सोमानाह ' इति विहितः प्रैषः स्तोत्रशस्त्रोभयवन्तो ये सोमयागास्तेष्वेव निविशते, न केवलास्त्रादिशस्त्रवत्सु सोम-

भागम्यासेषु, छन्दोगगतत्वाद्विस्यन्वात् । इति प्राप्ते, स्तोत्रवत्सोमस्य साधारण्येन ग्रहणस्यान्तेऽस्य निवेशः । 'अयं यज्ञं संसवीसुवषष्ठ ' इति मन्त्रलिङ्गात् । केवलग्रहणधराणां केवलचतुर्धराणां च समवाये चतुःसङ्ख्यया इमे इति प्रयोगदर्शनाच्च । आज्यादिग्रहेष्वपि स्तोत्रत्वेनार्थवादर्शनात् तदभिप्रायेण तेषामपि स्तुतशस्त्रवत्कोपपत्तेश्च । संकर्ष. २।३।१०.

**⁂ प्रैषः 'उक्थशा यज सोमानां' इति शस्त्रयतस्यपि चमसैर्महेन्द्रे युगपद्धूयमानेष्वेव सोमेषु निवेश्यः ॥**

'उक्थशा यज सोमानामिति स्तुतशस्त्रान्ततः सोमानाह' इति बहुवचनान्तसोमपदघटितमन्त्रस्यापि ऊहन्यायेन शस्त्रयतस्येव निवेशादिक्रमः । इति प्राप्ते, शस्त्रयत्यपि ये चमसैर्महेन्द्रे युगपद्धूयन्ते सोमास्तेष्वेवायं मन्त्रः स्यात् । द्व्यादिद्रव्याणां तदाधारपात्रसंख्ययैव एकद्विबहुत्वादिव्यवहारदर्शनात् । एकवचनान्तमन्त्रस्तु केवलमहेन्द्रग्रहहोम एवेति लिङ्गाद् व्यवतिष्ठते । संकर्ष. २।३।११.

● प्रैषश्चानुवाक्या च यत्र सहोच्येते तत्र मैत्रावरुणः, न केवलप्रैषेषु केवलानुवचनेषु च । ३।७।२३।४२–४५. ● प्रैषः 'देवान् यज' इति अनुयाजेषु त्रिष्वपि साधारण एव । संकर्ष. २।१।३. मीको. पृ. ४२४ 'अनुयाजेषु देवान् यज' इत्यत्र द्रष्टव्यम् । ● प्रैषो नित्यो दर्शपूर्णमासयोः 'प्रोक्षणीरासादय' इति । भा. ६।८।८।२८. ● प्रैषः प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना । रहस्य. पृ. १९. ● प्रैष. प्राप्ते प्रवर्तनम् । अयमेव च विधिप्रैषयोर्विशेषः । प्रवर्तनस्पृशिः प्राप्ते, प्रैष इत्यभिधीयते । अप्राप्तेऽयं तु विधित्वं प्रतिपद्यते ॥' वा. २।१।१।१ पृ. ३८९, बाल. पृ. ७६ .

**⁂ प्रैषः 'बर्हिः स्तृणीहि' इति सोमार्थः ॥**

सवनीयस्य पशोः क्रमे 'अग्नीदग्नीन्विहर बर्हिः स्तृणीहि पुरोडाशानलङ्कुरु पत्नीं उदेहि' इति प्रैषः श्रुतः । तत्र बर्हिःस्तरणं पश्वर्थं पुरोडाशार्थं च । उभयोर्विशेषेण संनिधानात् आकाङ्क्षितत्वात् च, सर्वेषामपि सवनीयपशोरप्येकस्यैव प्रैषस्याम्नानात्, तत्र च पशोरभावात् तदेकस्यैव केवलपुरोडाशार्थत्वेन वा । इति प्राप्ते, ऐष्टिकेषु प्रत्यक्षस्य बर्हिर्विधेरभावात् 'अनुपृष्ठं बर्हिः स्तृणाति' इति सौमिकबर्हिर्विधेः सत्त्वाच्च तस्यैवायं स्तरणार्थः प्रैषः । संकर्ष. २।३।१५.

● प्रैषः यूपपरिव्याणे 'यूपाय परिवीयमाणायानुब्रूहि' इति । वा. ३।८।१०।२१, ● केवलोद्देशव्यापारेषु सवनूलरहितेषु 'यज' इति प्रैषो भवति । ३।२।४।१० पृ. ४१२, ● यावांश्च ब्राह्मणगतः प्रैषः स सर्वः प्राप्त्यभावाद्विधिरेव भवति । २।१।१।१ पृ. ३८२. ● प्रैषाः स्वस्य आध्वर्यवाः । वि. ३।७।२१. ● प्रैषं विना मध्यमपुरुषायोगः । सु. पृ. १०१८.

**⁂ प्रैषान् मैत्रावरुण एव ब्रूयात् ऋतुयाजेषु ॥**

प्रातःसवने हि आदौ प्रस्थितयाज्यानन्तरकाले ऋतुयाज्याः । उक्थसवनयोस्तु प्रस्थितयाज्या एव न ऋतुयाज्या इति स्थितिः । तत्र प्रस्थितयाज्यास्विव ऋतुयाज्येष्वपि प्रैषान् अध्वर्युर्विभज्य ब्रूयात्, प्रैषाणामाध्वर्यवसमाम्नानात् । इति प्राप्ते, प्रैषकाण्डोक्तनिगदोद्देशेन 'मैत्रावरुणः प्रेष्यति चानु चाह' इति वचनेन प्रत्यास्तुधर्मकत्वविधिः, स च प्रस्थितयाज्यासु व्यवतिष्ठते । संकर्ष. २।३।१३.

● प्रैषाणां सर्वेषां आध्वर्यवत्वम् । वा. ३।७।२३। ४३. ● प्रैषेषु अध्वर्युविकारो मैत्रावरुणः । भा. १०।७।६।१९. ● 'प्रैषेषु च पराधिकारात्' (३।८। ११।२२) इत्यनेन प्रैषाभावात् पराधिकारो नास्ति इति । वा. ३।२।४।१०.

**⁂ प्रैषेषु च पराधिकारात् । ३।८।११।२३ ॥**

दर्शपूर्णमासयोः 'प्रोक्षणीरासादय इध्माबर्हिरुपसादय' इत्यादयः प्रैषा आम्नाताः । 'इदं कुरु इदं च कुरु' इति आज्ञापनं प्रैषः । आज्ञापितश्चार्थः प्रैषार्थः । अनयोः प्रैषप्रैषार्थयोः कर्ता एक एव स्यात् । आसादय इत्यादिः लोट् प्राप्तकाले अर्थे स्यात् । तदत् कर्म कर्तुं अयं कालः प्राप्त इति मनसि कृत्वा स्व आज्ञापकं स्वयमेव आज्ञापयिष्यति इति पूर्वपक्षे उत्पन्ने प्राप्ते, सिद्धान्तमाह । अन्य इति पदं अनुवर्तते । प्रैषेषु कर्ता प्रैषार्थकर्तुः सकाशात् अन्यः स्यात् । प्रैषार्थेषु च कर्ता प्रैषकर्तुः सकाशात् अन्यः स्यात् इति चकारार्थः । कुतः ?

पराधिकारात्, प्रैषो हि परस्मिन्नुपपद्यते नात्मनि। संभवति प्रैषे लोटः प्राप्तकालार्थत्वं स्वीकर्तुं न युक्तम्। प्रैषकर्तुः परस्य अन्यस्यैव प्रैषार्थकरणे अधिकारः न स्वस्यैव। तस्मात् प्रैषाणां कर्ता प्रैषार्थकर्तुरन्य एवेति सिद्धान्तः। के.

✱ प्रैषेषु च पराधिकारात्। ३।८।१।२२॥

स्तौ दर्शपूर्णमासौ। तत्र प्रैषाः समाम्नाताः 'प्रोक्षणीरासादय, इध्माबर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि, पत्नीं संनह्याऽऽज्येनोदेहि' इति। तत्र संदेहः किं य एव प्रैषे स एव प्रैषार्थे उत अन्यः इति। प्रासङ्गिकं समाप्येदानीं प्रकृत एव समाख्याया लिङ्गेन विरोधश्चिन्त्यते।

अत्राय पूर्वपक्षः। 'प्रोक्षणीरासादय' इत्यादिप्रैषमन्त्रस्य प्रोक्षण्यासादनादिरूपस्य प्रैषार्थस्य समाख्यया अध्वर्युकर्तृकत्वमेव गम्यते। तेन द्वयोरेक एवाध्वर्युः कर्ता। न च आत्मनि प्रैषासंभवेन प्रैषरूपलिङ्गविरोधात् आध्वर्यवसमाख्याबाधेन भिन्नकर्तृकत्वमिति वाच्यम्। यतो नैवाय प्रैषः, किं तर्हि? प्राप्तकालतायामय लोट्प्रत्ययः। तथापि लोट्प्रत्ययानुशासनात्, तस्य चात्र प्रसम्भवात्। तेन 'प्रोक्षणीरासादय' इति प्रोक्षण्यासादनप्राप्तायाः प्राप्तकाल इत्यर्थो भवति। तथा च सति एक एवाध्वर्युः प्राप्तकालतां निर्दिश्य प्रोक्षण्यासादनं करिष्यति। भवतु प्रैषार्थत्वम्, तथाप्येक एवाध्वर्युः शरीरिशरीरयोरर्थान्तरत्वात् भेदमाश्रित्य प्रैषकः प्रैष्यश्च भविष्यतीति एककर्तृकत्वमेवेति। एवं प्राप्ते, अभिधीयते। भवेदेव यदि प्राप्तकालतायामत्र लोट्प्रत्यय उपपद्यते। तथाहि, 'प्रोक्षणीरासादय' इति मध्यमपुरुषनिर्देशोऽयम्। अयमर्थः स प्रैष्यो वक्तव्यः। स चान्तर्भावितयुष्मदर्थत्वात्पुरोवर्तिकर्तृविषय एव परं भवति। यथा 'माणवक, समिधमाहर' इति। प्राप्तकालायाश्च क्रियायाः प्राप्तकालता वक्तव्या। न च तत्र युष्मदर्थः कथञ्चिदपि संभवति, असंनिधानात् अचेतनत्वाच्च। न च प्राप्तकाल इति क्रियाया निर्देशः संभवेत्। तेन प्राप्तकालतेयं प्रथमपुरुष एव कथञ्चित् संभवति, न तु मध्यमोत्तमपुरुषयोः संभवति। संभवति तु प्रैषार्थत्वे, संनिहितस्य पुरुषान्तरस्य युष्मदर्थत्वोपपत्तेः। तेन प्रैषाभिधायकमन्त्रलिङ्गविरोधात् प्रैषार्थयोर्भिन्नकर्तृकत्वमेव। यत्तु शरीरिशरीरयोरर्थान्तरत्वाच्चाभेदे सति एकस्यैव प्रैषकत्वं प्रैष्यत्वं च भविष्यतीत्युक्तम्, तदयुक्तम्, शैशव्याद्यर्थत्वप्रसङ्गात्। विनापि प्रैषं शरीरिप्रयत्नादेव शरीरचेष्टोत्पत्तेः गौणत्वप्रसङ्गाच्च। श्रुत्यविरोधे मुख्यार्थत्वमेव मन्त्राणां न गौणत्वमित्यवधारितं गुणमुख्याधिकरणे। तस्मादेवमपि नैककर्तृकत्वं प्रैषप्रैषार्थयोः, किन्तु भिन्नकर्तृकत्वमेवेति सिद्धम्।

प्रयोजनम्— पक्षोक्तम्। सूत्रे तु प्रैषेषु [illegible] कर्ता ततोऽन्यः प्रैषार्थः प्रैषस्य स्वभावतोऽन्यविषयत्वादिति। शौता.

● सोमयागेऽपि 'यज' इति शब्दः 'प्रैषेषु च पराधिकारात्' इत्येवं निवर्तमानः मैत्रावरुणस्यैव। शा. १।७।२१।४४. ● वाग्विसर्गपूर्वपक्षवादिमते 'उत्तिष्ठन्न्याह अग्नीदग्नीन् विहर' इत्यस्य मन्त्रस्य प्रैषत्वाभावेन अभिविहरणादेः 'प्रैषेषु पराधिकारात्' इति न्यायविषयत्वाभावात् आग्नीध्रकर्तृकत्वानुपपत्तिः, समाख्याया आध्वर्यवत्वात्। कौ. १।२।४।१० पृ. २३१.

✱ प्रैषांशस्य उद्धारः अनुवाक्यासु ऋतुग्रहेषु॥

ऋतुग्रहे 'होता यक्षदिन्द्रं होत्रात्' इत्यादीन् 'होतर्यज' इत्यन्तान् प्रैषान् आम्नाय 'प्रैषेण यजन्ति' इति आम्नातम्। तथापि यथासमाम्नातस्यैव मन्त्रत्वेन प्रदानाङ्गयोः येयजामहेवषट्कारयोः ऋगाद्यन्तभागयोरिव शोभनया प्रयोगे प्राप्ते, 'होता यक्षत्' 'होतर्यज' इत्यंशयोरनन्वितत्वेन तावुन्मूल्य तत्स्थाने तयोर्योग्येन प्रयोगः। संकर्ष. २।४।२५.

● प्रैषाधिकरणम् (प्रैषप्रैषार्थौ भिन्नकर्तृकौ)। ३।८।१२. मीको. पृ. २०५४ 'दर्शपूर्णमासयोः प्रैषप्रैषार्थौ' इत्यत्र द्रष्टव्यम्।

● प्रैषानुवचनं मैत्रावरुणाय दण्डदानस्य प्रयोजकं सोमे। ४।२।६।१६–१८.

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् । ३।७।२२।४३ ॥

अस्ति ज्योतिष्टोमे पश्वग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमामनन्ति— 'तस्मान्मैत्रावरुणः प्रेष्यति चान्वाह' 'अनु चाह' इति भाष्यादौ पाठः इति । तत्र संशयः किं सर्वानुवचनेषु प्रैषेषु च मैत्रावरुणः स्यात् उत यत्रानुवचनं तत्र प्रैषः इति । सामान्यसमाख्याया विशेषसमाख्यया बाधे निरूपिते इदानीं यत्र वचनेन सामान्यसमाख्याया बाधः स किं सर्वनियमः उत एकदेशविषयः इति प्रपञ्चाभिरूप्यते ।

पूर्वपक्षस्तु सर्वप्रैषाणां आध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वम् । सर्वानुवचनानां च हौत्रसमाख्यया होतृकर्तृत्वम् । एवं च सति प्रैषेषु वचनानि चान्युभयकर्तृकाणि प्राप्नुवन्ति । विशेषेण च प्रैषे वचनात् उपदेशेन मैत्रावरुणोपादानं प्रतीयते । यद्यपि 'प्रेष्यति चान्वाह' इति चशब्दात्समुच्चयोऽवगम्यते, तथापि उद्देश्यगतत्वेन अविवक्षितत्वात् सकलप्रैषानुवचनमात्रोद्देशेनैव मैत्रावरुणो विधीयते इति । एवं प्राप्ते, अभिधीयते ।

पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात् । ४४ ॥

अयमभिप्रायः । भवेदेवं यद्यत्र विशेषो नावगम्यते । तथाहि, वेदे पुरोनुवाक्याविशिष्टं प्रैषमनुवचनं प्रतीयते । तयोः पदार्थरूपत्वादेकेन कर्तव्यम् । न चानुवचनकर्ता होता प्रैषितुमर्हति । न चाध्वर्युरनुवक्तुं कर्तुमर्हति । प्रैषकर्ता हि प्रेष्यते । तेनैव पुरोनुवाक्यानुरूपं प्रैषानुवचनं कर्तव्यम् । तत्संनिधौ च 'मैत्रावरुणः प्रेष्यति चान्वाह' इति श्रूयमाणं अपेक्षितविधानात् संनिहितविषयमवधार्यते । किञ्च साहचर्यसत्त्वादपि यत्रैवापेक्षितं तत्र मैत्रावरुणविधानमुचितम् । 'मैत्रावरुणः प्रेष्यति चान्वाह' इत्यत्र सहचरित एव प्रैषानुवचनः प्रतीयते, पुरोनुवाक्यस्य च तयोः साहचर्यमवगम्यते । एवं प्रथमं प्रतीयते । तेन मैत्रावरुणविधिर्न केवलेष्वनुवचनेष्विति न सर्वत्र सामान्यसमाख्याबाध इति सिद्धम् ।

प्रयोजनम्—पश्चोक्तम् । सूत्रे पुरोनुवाक्यास्वेव मैत्रावरुणविधिः सप्रैषानुवचनत्वेन तासामेव संनिधानात् । तौता.

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् । ३।७।२१।४३ ॥

पूर्वपक्षसूत्रम् । प्रैषाश्च अनुवचनानि च तेषां समाहारः प्रैषानुवचनम् । तत्र प्रत्येकं मैत्रावरुणस्य कर्म स्यात् । कुतः ? 'मैत्रावरुणः प्रेष्यति च अनु चाह' इति तस्य उपदेशात् । वाक्ये चकारौ उद्देश्यगतत्वात् अविवक्षितौ, तेन प्रैषानुवचनयोः समुच्चयो न विवक्षितः ।

पुरोऽनुवाक्याधिकारो वा प्रैषसंनिधानात् । ४४ ॥

वाशब्दः पूर्वपक्षनिरासार्थः । मैत्रावरुणस्य पुरोऽनुवाक्याधिकारः । यत्र प्रैषश्च अनुवाक्या च सह दृश्येते तत्र मैत्रावरुणः । यत्र केवलानुवाक्या केवलो वा प्रैषः तत्र न मैत्रावरुणः । सूत्रस्थः पुरोऽनुवाक्याशब्दः प्रैषान्वानुवचनपरः । पुरोनुवाक्याऽधिकार एव मैत्रावरुणस्य कस्मात् ? प्रैषसंनिधानात् 'मैत्रावरुणः प्रेष्यति चानु चाह' इति विधौ अनुवाक्यायाः प्रैषस्य संनिधानात् । तस्मात् यत्र प्रैषसंनिहिता अनुवाक्या तत्रैव मैत्रावरुण इति ज्ञायते ।

अत्र कुतूहलम्— केवलानुवचनेषु हौत्रसमाख्यया होता प्राप्तः, केवलप्रैषेषु च आध्वर्यवसमाख्यया अध्वर्युः प्राप्तः । उभयात्मकेषु तु 'होता यक्षत्' इत्यादिषु मन्त्रेषु मन्त्रैकत्वेन कर्तृभेदासंभवात् अध्वर्योः होतुश्च प्राप्त्युभयत्वात् अपेक्षितकर्तृविशेषत्वेन मैत्रावरुणस्य विधिः, इति ।

प्रातरनुवाके च होतृदर्शनात् । ४५ ॥

सिद्धान्ते हेत्वन्तरपरं सूत्रमिदम् । न केवलानुवचने मैत्रावरुणस्याधिकारः । कुतः ? प्रातरनुवाके केवलानुवचनात्मके होतुरेव कर्तुः दर्शनात् । 'यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात् तत्राध्वर्युर्गृह्णीयात् (आप॰)' इति प्रातरनुवाके होतारं दर्शयति । चकारो हेत्वन्तरसूचकः । के.

* प्रैषानुवचने उभे एक एव दण्डः । भाट्ट. ४।२।६.

* प्रैषानुवचनाधिकरणम् । अग्नीषोमीये पशौ प्रैषानुवचनयोः समुच्चितयोः मैत्रावरुणः कर्ता ॥

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् । ३।७।२१। ४३ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तस्मिंदं समामनन्ति, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति । तत्र संशयः किं सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुणः स्यात् उत यत्रानुवचने प्रैषः इति । किं तावत् प्राप्तम् ? सर्वानुवचनेषु अविशेषात् । न हि कश्चित् विशेष आश्रीयते, अस्मिन्ननुवचने मैत्रावरुणः अस्मिन् नेति । तस्मात् सर्वानुवचनेषु सर्वप्रैषेषु च मैत्रावरुणः स्यात् ।

वा— उपदेशात् सिद्धे समाख्याबाधे समस्तैकदेश-विषयत्वेन विचारः । ज्योतिष्टोमप्रकरणे एव एतत् श्रूयते 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति । प्रदर्श-नार्थं तु अग्नीषोमीये इत्युक्तम् । तत्र सर्वप्रैषाणामाध्वर्य-वत्वं सर्वानुवचनानां च हौत्रसमाख्यानम् । तत् किम-नेनोपदेशेन समस्तविषयः समाख्ययोर्बाधः, उत क्वचि देशेति । किं प्राप्तम् ? प्रैषानुवचनोद्देशेन मैत्रावरुणो-पादानात् उद्दिश्यमानयोश्च शब्दप्रतिपादितसाहित्यविवक्षा-नुपपत्तेः श्रूयमाणश्च चशब्दः समुच्चयान्वाचयमात्रं प्रति-पादयति नेतरेतरयोगसमाहारौ, नित्य समासाग्रहणात् । न चेह अन्वाचयलक्षण उभयोस्तुल्यत्वात् उपपद्यते, इति समुच्चय. स्यात् । स च पृथगपि सर्वेषु अनुष्ठीयमानेषु संभवत्येव इति सामान्यवचनात् सर्वप्रत्ययः ।

पुरोनुवाक्याधिकारो वा प्रैषसंनिधानात् ।४४॥

भाष्यम्— पुरोनुवाक्या वा मैत्रावरुणः अनु-ब्रूयात् । कुतः ? यत्र प्रैषश्चानुवाक्या च सहोच्येते तत्र मैत्रावरुणः । यत्र केवलानुवाक्या, न तत्र मैत्रावरुणः । यत्र वा केवलः प्रैषः तत्रापि न । यत्रोभे समुच्चीयेते तत्र स भवेत् । तथाहि समुच्चितयोः तं समामनन्ति, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति । च-शब्दात् समुच्चितयोरिति गम्यते ।

वा— न सर्वप्रैषानुवचनेषु असौ भवेत् । क्व तर्हि? पुरोनुवाक्यासु । प्रैषान्तानि अनुवचनानि पुरोनुवाक्याः । ताश्च प्रकृत्य एवप्रवचन प्रवृत्त 'तस्मात् मैत्रावरुण' इति । ताश्च तादृश्यो हौत्रे एव पठिताः इति तस्यैव केवलस्य प्राप्नुवन्ति । यत्तु साग्न्यन्ते यत्र इति शब्दः स इष्टिप्रकृतिकेषु तावत् अङ्गेषु अतिदेशेन अध्वर्योः प्राप्नोति । सोमयागेष्वपि 'प्रैषेषु च पराधिकारात्' इत्येवं निवर्तमानः 'तेषां यत्नो विशेषः स्यात्' (३। ८।१०।२१) इत्येवं मैत्रावरुणस्यैव । अथवा प्रैषकस्य उभयस्य कर्तृत्वात् वक्ष्यमाणेन न्यायेन प्रेष्यत्वं मैत्रा-वरुणस्य कल्पयित्वा होतुरेव प्राप्नोति । तथा अध्वर्योः 'प्रेष्य' इति प्रैषान्वारम्भानात् 'यज' इत्येव निवर्त-मानः प्रतिप्रस्थातुः प्राप्नोति । शेषाणि तु प्रैषानुवचनानि निर्ज्ञातकर्तृविशेषत्वात् निराकाङ्क्षाण्येव इति न तेषु मैत्रावरुणविधिः संभवति । पुरोनुवाक्यानां पुनः उभ-यासाधारणत्वात् एकपदार्थत्वेन च नानाकर्तृत्वानुपपत्तेः होतुरध्वर्योश्च प्रत्यवमानाना साकाङ्क्षत्वात् सन्निधानाच्च युक्तो मैत्रावरुणविधिः । एवं चशब्दोऽपि सहप्रयोगा-दपि प्रकृष्टार्थः समर्थितो भवति, प्रैषसन्निधानात् । न च 'प्रेष्य' इत्यादयोऽपि प्रैषाः तस्यैव आरम्-विषयाः संभवन्ति ।

प्रातरनुवाके च होतृदर्शनात् । ४५ ॥

भाष्यम्— इतश्च पश्यामो न सर्वानुवचनेषु मैत्रा-वरुणः इति । कुतः ? यतः प्रातरनुवाके होतारं दर्शयति । कथम् ? यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात् तदाऽध्वर्युर्गृह्णीयात् इति । तस्मात्र सर्वानुवचनेषु मैत्रावरुण इति ।

वा— उपदेशात् सिद्धे समाख्याबाधे तद्विशेष-चिन्ता । 'प्रैषानुवचनोद्देशात्साहित्यमविवक्षितम् । विधीयते प्रशास्ताऽतः समस्तव्यस्तयोस्तयोः ॥ नैवं समस्तयोरेव मैत्रावरुणचोदना । अज्ञातकर्तृ-कत्वेन व्यस्ते हि ज्ञातकर्तृके ॥'

सोम— सूत्रार्थस्तु— सर्वे प्रैषाः सर्वाण्यनुवचनानि च मैत्रावरुणस्य कर्तव्यानि स्युः उपदेशात् इति ।

वि— ' कर्मैत्रावरुणः प्रैषत्यनु चाहेति बाधनम् । होत्रादिस्समाख्यायास्तत् सर्वत्रोत कुत्र चित् ॥, आद्यो- ऽस्तु वचना, न्मैषं साहित्योक्त्युपलम्भनात् । प्रैषानु- वचने यत्र सहिते तत्र बाधनम् ॥ '

भाट्ट— ज्योतिष्टोमे ' मैत्रावरुणः प्रेष्यति चान्वाह च ' इति श्रुतम् । सन्ति च तत्र के चित् केवलाः प्रैषाः ' अग्नये समिध्यमानायानुब्रूहि ' ' यूपायाज्यमानायानु- ब्रूहि ' इत्यादयः । केवलानि च अनुवचनानि ' प्र वो वाजा अभिद्यवः ' ' अञ्जन्ति त्वामध्वरे देवयन्तः ' इत्यादीनि उपदेशानिर्देशमात्राणि । प्रैषोत्तरत्वाच्च एषा- मनुवचनत्वम् । कानि चित्तु प्रैषत्वे सत्येव अनुवचनानि यथा ' होता यक्षत् ' इत्यादीनि । एषां च ' प्रेष्य ' इत्यध्वर्युप्रैषोत्तरभावित्वात् ' होतर्यज ' इत्यन्ते प्रैषत्वाच्च उभयरूपत्वम् । तदिह मैत्रावरुणः प्रैषानुवचनोद्देशेन विधीयमानः सर्वत्र स्यात्, न तु प्रैषान्तानुवचनेष्वेव, उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात् । च-शब्द- स्यापि प्रैषानुवचनरूपधर्मिसाहित्यपरत्वेन प्रैषत्वानुवचन- त्वरूपधर्मयोः ऐकाधिकरण्यरूपसाहित्यबोधकत्वाभावात् । तस्य च प्रतिप्रधानं गुणावृत्तिन्यायेनैव असम्भवेऽपि सिद्धेः अनुवादकत्वाच्च । अतश्च सर्वत्रैव समाख्याप्राप्त- कर्त्रन्तरबाधेन वाक्यान्मैत्रावरुणनिवेशः । न चात्र अनेकोद्देशे वाक्यभेदो दोषः । ' अर्धमन्तर्वेदि मिनोति ' इतिवदावृत्तिकरत्वाभावात् । अत [illegible] एकवाक्योपादान- गम्यसाहित्यस्य उद्देश्यगतस्य अप्रतीतत्वादेव न विव- क्षापत्तिः । न चैवमपि शुद्धप्रैषेषु अध्वर्युकर्तृक- त्वस्य, शुद्धानुवचनेषु च होतृकर्तृकत्वस्यैव समाख्यया प्राप्तेः कर्त्रन्तरानपेक्षत्वादेव न मैत्रावरुणविधिः । प्रैषान्तानुवचनेषु तु प्रैषत्वेन अध्वर्युकर्तृकत्वस्य, अनुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेः विरोधेन उभयोरपि निवृत्तौ, कर्त्रन्तरापेक्षायां तत्रैव मैत्रावरुण- विधिः इति पार्थसारथ्युक्तं युक्तं इति वाच्यम् । प्रैषान्तानुवचनानामपि होत्रे एव पाठस्य वार्तिकोक्तत्वेन अध्वर्युकर्तृकत्वाप्राप्तेः, उभयत्र पाठेन तत्प्राप्तावपि वा विकल्पेन उभयनिवेशोपपत्तेः निवृत्त्यप्रसङ्गाच्च । यदपि वार्तिके अग्नीषोमीयाद्यङ्गभूतेषु प्रैषान्तानुवचनेषु यज इतिशब्दस्य प्राकृतत्वात् तन्मात्रे अतिदेशेन अध्वर्योः प्राप्तिः, ' प्रेष्य ' इति प्रैषान्वयाम्नानाच्च ' इतरमन्यः ' इति न्यायेन ( ३।८।१० ) प्रतिप्रस्थातुः, सोमाङ्गान्त- वर्तियजेतिशब्दे तु ' होतर्यज ' इति लिङ्गानुरोधेन समाख्या बाधित्वा मैत्रावरुणस्य, तदतिरिक्तपदार्थान्तरेषु होतुरेव । तथाच अंशभेदेन नानाकर्तृप्राप्तेः एकपदार्थत्वेन च कर्तृद्वयासंभवात् अन्युतयोस्तयोः मैत्रावरुणविधिः इत्युक्तम्, तदपि ' यज ' इति शब्दस्य अग्नीषोमीयादौ होत्रे एव प्रत्यक्षपठितत्वेन समाख्यया अतिदेशिकाध्वर्या- दिबाधेन होतृप्राप्तेः, तस्य च ' होतर्यज ' इति लिङ्गेन बाधेऽपि तदुत्तरस्य मैत्रावरुणस्यैव ' यज ' इति शब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्राप्तेरुपेक्षितम् । अबाधेऽपि वा समाख्याया दुर्बलत्वेन यजेतिशब्दे तदेकवाक्यतापन्न- पदान्तरेषु च प्रतिप्रस्थातुरेवैकस्य प्राप्तेः न कर्त्रन्तरापेक्षा । एवं सोमाङ्गभूतेष्वपि बोध्यम् । अतः सर्वत्रैव मैत्रावरुणः । इति प्राप्ते, वाक्यभेदाङ्गीकारे अनुपपन्नापत्तेः चशब्द- वैयर्थ्याच्च पदद्वयेन प्रैषान्तानुवचनान्येव ' अर्धमन्तर्वेदि ' इतिवत् लक्षयित्वा तेष्वेव मैत्रावरुणविधानम् । चशब्देन च धर्मिणोः इतरेतरयोगस्य स्वरूपे कार्ये वा असम्भवात्, समुच्चयस्य च न्यायादेव प्राप्तेः आनर्थक्यतदङ्गन्यायेन ( ३।१।१८ ) धर्मयोरेव प्रैषत्वानुवचनत्वयोः इतरेतरयोग- प्रतीतेः, निपातशक्ते च परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन वाक्यभेदाभावात् लक्षणां विनैव परस्परयुक्तप्रैषत्वानुवचन- त्वावच्छिन्नोद्देशेन मैत्रावरुणो विधीयते । अत एव प्रैषानुवचनान्यतरत्वावच्छिन्ने एव लक्षणोपपत्तेः न युक्तो वाक्यसंकोचः इत्यप्यपास्तम् । वस्तुतस्तु शुद्धानुवाक्या- स्वपि क्वचित् मैत्रावरुणस्य शाखिकत्वसंभवत्वात् च- शब्दो न इतरेतरयोगार्थः, अपि तु धर्मिसमुच्चयार्थ एव सन् अनुवादः । न चैवं सार्वत्रिकत्वापत्तिः । ' अनु- वादत्वे सति संभवे सन्निहितग्राहित्वम् ' इति नियमेन यानि केवलान्यनुवचनानि प्रैषान्तानुवचनानि च तान्य- धिकृत्य अयं विधिः प्रवृत्तः तद्विषयकत्वस्यैव युक्ती- भवत् ।

मण्डन– 'प्रशास्ता न वदेदेकम् ।'

शंकर– 'प्रशास्ता क्वचिदेव तु ।' २२.

* प्रैषार्थस्य आग्नीध्रकर्तृकत्वं प्रैषस्य चाध्वर्युकर्तृकत्वम् । ३।८।१२।२४–२५

* प्रैषप्रैषार्थौ तु विपर्ययेणाम्नातौ विपर्ययेण कर्तव्यौ (इति आर्थं क्रम) । भा ५।१।२।२, * प्रैषप्रैषार्थयो भिन्नकर्तृकत्वम् । ३।८।११।२१

* प्रैषमन्त्र 'अग्नीदग्नीन् विहर' इति । बाल पृ ५९ * प्रैषमन्त्रे द्विबहुपत्नीके दर्शपूर्णमासप्रयोगे पत्नीशब्दे ऊहो न । ९।३।६।२१, एवं विकृतावपि । ९।३।७।२२.

* प्रैषयागाधिकरणन्यायात् (३।८।११।२३) ऋतुप्रैषेषु 'इन्द्र होतात्' इत्यादय एव मन्त्रा भवन्ति । संकर्ष ३।४।११

* प्रोक्षण अग्निचयने 'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति' 'दध्ना मधुमिश्रेणाग्निं प्रोक्षति' इति । तच्च प्रोक्षण न प्रतीष्टकं किन्तु सकृदेव, अग्नेरैकत्वात् । ११।१।८ * प्रोक्षण अनवहन्तिरपि च संस्कार्यापेक्ष तत्र भवत्येव, यथा नखनिर्भिन्ने चरौ नखेषु प्रोक्षण भवति । भा ९।१।२।३ पृ १६४९, * प्रोक्षण अवहनन निर्वपण इत्यादय ओषधधर्मा । ३।१।४।७ * प्रोक्षण उलूखलमुसलयोरपूर्वप्रयुक्तम् । ९।१।२।२–३ * प्रोक्षण किं हन्तिविधिप्रयुक्त उत अपूर्वप्रयुक्त इति (संशय) । भा ९।१।२।२–३ । वाक्यात् हन्तिविध्यर्थं प्रोक्षणम्, प्रकरणादपूर्वार्थम्, वाक्य च प्रकरणाद् बलीय । इति पूर्व पक्ष । वाक्यम् आश्रित्य योऽर्थ स ग्रहीतव्य । वाक्ये चोपादिते द्वैविध्य भवति । प्रकरणपाठात् तण्डुलनिर्वृत्तिप्रणालिका वाक्यम् पूर्व लक्षयितुम्, तदस्ते च व्रीह्यर्थं प्रोक्षण प्रतिपत्तुम् । तत्र लक्षितलक्षणाया श्रुतप्रणाली फलकल्पना न भवति । श्रुतिवृत्ते फलकल्पना स्यात् । तस्मात् फलकल्पनाभयात् लक्षितलक्षणयाऽपूर्वार्थ प्रोक्षण इति सिद्धान्त । टुप् * प्रोक्षण ज्योतिष्टोमे अग्नीषोमीयम् 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशु प्रोक्षति' इति । भा ८।२।२।११, * प्रोक्षण पुरोडाशधर्म (पशुधर्मश्च) । ८।२।३।११, * प्रोक्षण दर्शपूर्णमासयो न द्रव्यप्रयुक्तम् (न व्रीहिस्वरूपप्रयुक्त), किन्तु अपूर्वप्रयुक्तम् । ९।१।५।११–१९, * प्रोक्षण प्राकृतोलूखलमुसलधर्म राजसूये नैर्ऋते चरौ नखेषु भवति । ९।२।१२।४०, * प्रोक्षण बर्हिष संस्कार । १२।३।१३।४२, * प्रोक्षण यवमतीभिरद्भि यूपधर्म । १२।२।१०।२६ * प्रोक्षण व्रीहिधर्म । वि ३।१।८ * प्रोक्षणस्य यूपावटबर्हिषि निवृत्ति । टुप्. १०।१।३।५ * प्रोक्षणस्य स्वर्ग प्रयोजक अग्नीषोमीये पशौ । ४।२।१।१–६. * सानाय्यपात्रप्रोक्षणस्य अङ्ग 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्र संनिधिक्रमात् दर्शपूर्णमासादौ । वि ३।१।५ * प्रोक्षणे मन्त्र अध्वर्युप्रतिप्रस्थातृभ्या भेदेन प्रयोक्तव्य, न तन्त्रम् । वरुणप्रघासेषु विहारपृथक्त्वे । भा १२।१।५।१८

* प्रोक्षणादि आतिथ्याबर्हिषि कृत सत् उपसत्सु अग्नीषोमीये च प्रसङ्गसिद्ध प्रतिकर्म न कर्तव्यम् । भा १२।१।१९।४३–४४. * प्रोक्षणादयो धर्मा श्रुतिविनियुक्ता अपूर्वप्रयुक्ता, न तु द्रव्यसंख्याहेतुसमुदाय प्रयुक्ता । ९।१।८. मीको पृ २१७२ 'द्रव्यसंख्या हेतुसमुदायश्च' इत्यत्र द्रष्टव्यम् । * प्रोक्षणादयो व्रीहिधर्मा वाजपेये नीवारेषु भवन्ति । भा ९।२।१२।४० * प्रोक्षणादीना पौरोडाशिकाना दौमिकपदार्थेभ्य पूर्वभावित्व ज्योतिष्टोमसुत्यायाम् । ५।१।१३।२५–२६. मीको पृ १७९४ 'ज्योतिष्टोमे दैक्षिका प्रोक्षणादय' इत्यत्र द्रष्टव्यम् । * प्रोक्षणादीना संनिपत्योपकारकाणा प्रयोजक अपूर्व वाक्यविनियुक्तानाम् । ९।१।२।२–३.

* प्रोक्षणमन्त्रस्य वेदित्रिषयकस्य सकृत् प्रयोगो दर्शपूर्णमासयो । ११।४।१५।४९–५०

* प्रोक्षण्य इति उपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते । सेचनसंयोगात्तु उपसर्गधातुकरणप्रत्ययसहित अप्सु प्रवर्तते इति (प्रोक्षणीभिरुद्दिशति स्म इति) प्रसिद्धिरनुग्रहीता भविष्यति । भा ३।४।८।११, * 'प्रोक्षणीरासादय' इति प्रोक्षणीशब्द यौगिक, न संस्कारनिमित्त, नापि जातिनिमित्त । ३।४।८।११. * 'प्रोक्षणीरासादय,

इध्माबर्हिरुपसादय०' इत्यादिः प्रैषः आध्वर्यवं कर्म। आसादनादिकं तु आग्नीध्रम् । वि. ३।८।११.

● प्रोक्षणीभिः संप्रोक्षिताः स्म इति असंस्कृतास्वेवाप्सु कस्मिंश्चिद्देशे वक्तारो भवन्ति। भा. १।४।८।११.

प्रोक्षणीष्वर्थसंयोगात् । १।४।८।११॥

'प्रोक्षणीरासादय' इत्यादिप्रैषमन्त्रे प्रोक्षणीशब्दः संस्कारनिमित्तकः उत जातिनिमित्तकः किंवा यौगिकः इति विचारे सिद्धान्तमाह। प्रोक्षणीषु अप्सु केवलासु प्रोक्षणीशब्दः यौगिकः स्यात्। अर्थसंयोगात् अवयवार्थसंयोगात्। प्रोक्ष्यते आभिः इति प्रोक्षण्यः इति योगः। येनयेन सेचनं क्रियते सा सर्वा प्रोक्षणी। तस्मात् प्रोक्षणीशब्दो यौगिकः इति सिद्धान्तः। के.

प्रोक्षणीष्वर्थसंयोगात् । १।४।९।११॥

'प्रोक्षणीरासादय' इति प्रोक्षणीशब्दं प्रति संदेहः, संस्कारशब्दो जातिनिमित्तो यौगिको वा इति। तत्रायं पूर्वपक्षिणोऽभिसंधिः। बर्हिराज्यशब्दवत् असंस्कृतास्वप्सु प्रोक्षणीशब्दप्रयोगादर्शनात् संस्कारवचनत्वमेव। इति प्रथमः पूर्वः पक्षः। तदयुक्तम्। मा नाम सर्वत्र प्रयुज्यताम्। प्रयुज्यते तावत् केषु चिद्देशविशेषेषु असंस्कृतास्वप्सु। तदुक्तं भाष्यकारेण 'प्रोक्षणीभिः संप्रोक्षिताः स्म इति कस्मिंश्चिद् देशे भवन्ति वक्तारः' इति (पृ. १४४)। अतो बर्हिराज्यन्यायेनैव न तावत् संस्कारवचनत्वम्। नापि यौगिकार्थत्वम्। प्रकर्षेण उक्ष्यते अनेन इत्यस्य योगस्य घृतमूत्रादिसाधारण्येन वत्सत्ते जातिनिगमनाभावात्। किंच उपसर्गधातुप्रत्ययार्थपरामर्शेन यौगिकप्रतीतिर्विलम्बेनोपजायते। समुदायप्रसिद्धिस्तु अक्षरग्रहणमात्रापेक्षिणी नान्यदनुसंधानमपेक्षते। अतस्ततो विप्रकृष्यते अवयवप्रसिद्धिः। तदुक्तम् 'अक्षरैरेव बध्यन्ते समुदायप्रसिद्धिषु। अर्थभागोपसंहारात्तिवरा विप्रकृष्यते॥' इति (वा. १।४।८।११ पृ. १४४)। अतः समुदायप्रसिद्धिबलेन बर्हिराज्यादिवत् जातिवचनत्वमेव। इत्येवं प्राप्ते, अभिधीयते। भवेदेवम्, यदत्र समुदायप्रसिद्धिः कल्प्या भवेत्। नैव हि सा कल्प्यते, यथान्यथार्थानुगमव्यतिरेकेण प्रयोगो दृश्यते, यथा कुशविशेषे अश्वकर्णशब्दस्य। तदुक्तम् 'असंतत्वयवार्थेषु योऽन्यत्रार्थे प्रयुज्यते। तत्रानन्यगतित्वेन समुदायः प्रसिध्यति॥' (वा. पृ. १४४) इति। अतः समुदायशक्तेः अकॢप्तत्वात् कॢप्तावयवशक्तिद्वारेणैव च प्रयोगोपपत्तेः प्रोक्षणीशब्दस्य यौगिकत्वमेव। ननु घृतमूत्रादिसाधारणत्वात् योगोऽतिव्यापकः। सत्यम्। ल्युडन्तात् प्रपूर्वकात् उक्षतेर्धातोः सेचनसमर्थं द्रवद्रव्यमात्रमेवावगम्यते, बहुवचनस्त्रीलिङ्गवशात्तु आप एव शब्दार्थः इति निश्चीयते। तेन 'प्रोक्षणीरासादय' इति वाक्यार्थसिद्धयौगिकत्वमेव प्रोक्षणीशब्दस्येति सिद्धम्।

प्रयोजनम्— विकृतौ यत्र श्रूयते 'घृतं प्रोक्षणं भवति' इति 'प्रोक्षणीरासादय' इति च प्रैषः अतिदेशप्राप्तः, तत्र यदि संस्कारवचनत्वं तदा 'प्रोक्षणीरासादय' इत्यविकृतस्यैव प्रयोगः। अथ जातिवचनत्वम्, तदा ऊहेन 'घृतमासादय' इति प्रयोगः। सिद्धान्ते तु यौगिकत्वेन वाच्यलिङ्गत्वात् घृतस्य नपुंसकलिङ्गत्वेन 'प्रोक्षणमासादय' इति प्रयोगः।

सूत्रे तु प्रोक्षणीषु यौगिकत्वं अर्थसंयोगात् अवयवार्थसंयोगादित्यर्थः। कौता. १।४।९।१०.

प्रोक्षण्यधिकरणम्॥

प्रोक्षणीष्वर्थसंयोगात्। १।४।८।११॥

भाष्यम्— 'प्रोक्षणीरासादय' इति श्रूयते। तत्र प्रोक्षणीशब्दं प्रति संदेहः, किं संस्कारनिमित्त उत जातिनिमित्त उत यौगिकः इति। तत्र संस्कारेषु प्रयोगदर्शनात् संस्कारशब्दतायामवगम्यमानायामसंस्कृते शब्दाभावाज्जातिशब्दः। असंस्कृतास्वेवाप्सु प्रोक्षणीभिः संप्रोक्षिताः स्मः इति कस्मिंश्चिद्देशे भवन्ति वक्तारः। तेन जातिशब्दः इति प्राप्ते, यौगिक इत्युच्यते। कुतः? अर्थसंयोगात्। प्रोक्षण्य इत्युपसर्गधातुप्रत्ययसमुदायस्य जातिनिमित्तता प्रयोगादनुमीयते। सेचनसंयोगात् तूपसर्गधातुकरणप्रत्ययसहितोऽप्सु प्रवर्तत इति प्रसिद्धिरनुगृहीता भविष्यति। यद्यन्यदपि सेचनं प्रोक्षणशब्देनोच्यते तदा तत्संयोगादेवाप्सु भविष्यतीति न समुदायार्थः कल्पयितुं शक्यते। तस्मात् यौगिकः। प्रयोजनम् 'घृतं प्रोक्षणं भवति'

इति, यदि संस्कारशब्दः प्रोक्षणीरासादयेति प्रैषः, यदि जातिशब्दः, घृतमासादयेति, यदि यौगिकः प्रोक्षणमिति।

वा— ननु समुदायप्रसिद्धेः श्रुतिस्थानीयत्वाद्वाक्यस्थानीयावयवप्रसिद्धिर्दुर्बला स्यात्। तथाहि। 'अक्षरैरेव शुध्यन्ते समुदायप्रसिद्धिषु। अर्थभागोपसंहारादितरा विप्रकृष्यते॥' सत्यमेवमेतत्। अवश्यं त्ववयवानामपि स्वार्थे शक्तिराश्रयणीया तदनाश्रयणेऽवयवप्रसिद्धिरवाभावात्। तत्र च 'असत्स्ववयवार्थेषु यो ऽन्यत्रार्थे प्रयुज्यते। तत्रानन्यगतित्वेन समुदायः प्रसिध्यति॥' रूढ्यात्मिका हि समुदायप्रसिद्धिरवयवप्रसिद्धिं बाधते, तस्यास्त्वात्मलाभो यत्र प्रमाणान्तरेण पूर्वानुभूतावयवार्थैरहितेऽर्थे शब्दप्रयोगो दृश्यते, यथाऽश्वकर्णत्वरहिते वृक्षेऽश्वकर्णशब्दस्य। न पुनः पूर्वप्रसिद्ध्यनुसारेण प्रतीतिरुपपद्यते इत्यर्थापत्त्या शक्त्यन्तरं कल्प्यते। तत्प्रोक्षणसमये अवयवार्थानुसंधानादिक्लिष्टाया अवयवप्रसिद्धेरक्षरश्रवणमात्रलभ्यत्वादिव बलीयसी भवति। अत्र पुनरप्सु प्रकर्षसेचनक्रियाकरणत्वसंभवादवयवशक्तिभिरेव वाक्यवत्प्रयोगोपपत्तेः शक्त्यन्तरे प्रमाणाभावात् समुदायप्रसिद्ध्यभावः। तथाहि 'भवेतां यदि वृक्षेषु वाजिकर्णौ कथञ्चन। अदृष्टा समुदायस्य कः शक्तिं जातु कल्पयेत्॥' तस्मादप्सु समुदायप्रसिद्धिरिति द्रव्यमात्रसाधारणता। ननु संस्कारनिमित्तत्वेऽपि अप्स्वासादनाधिकरण्यकृतस्यादीकारस्य कृतानिवृत्तिः स्यात्। यदि हि प्रागीकारात्संस्कारनिमित्तताऽवगम्येत तत स्त्रीप्रत्ययोऽयमाश्रयलिङ्गनिमित्त इत्यवधारणादन्यलिङ्गाभिवर्तेत। अथ पुनरन्यप्रयोगः संस्कारेऽप्यीकारान्तः स्यान्नवगतविभागो मैत्रादिवत् प्रयुक्त इत्यन्यार्थस्य वाचकस्य नाम्नार्थेन, तस्यादीकारान्तः स्यात्। यौगिकत्वे तु प्रागीकाराद्योगो गम्यते इति स्त्रीप्रत्ययोऽयं निमित्ताभावाद्घृते न प्रयोक्ष्यते, चोदकप्राप्तं तु प्रातिपदिकमात्रं प्रयोक्तव्यम्। न च द्रव्येष्वर्थसमवायादिभिरन्यप्रयोगनियमः, यतः प्रोक्षणशब्दभावेन जातिरश्ववद् घृतमित्येव प्रयोगः स्यात्।

शा— 'रूढिर्लक्षणिका योगं बाधते न त्वलब्धिका। यत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता॥ यथा वृक्षेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु। तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा॥ नादृष्टा समुदायस्य शक्तिं कल्पयितुं क्षमा। सन्ति त्ववयवार्थाः प्रकृष्टोक्षणहेतुत्वात्॥ स्त्रीलिङ्गत्वाच्च तेनात्र नात्मानं लभते रूढिः। वाक्यार्थे वाक्यवत् तस्मात् यौगिकः प्रोक्षणीशब्दः॥' (एषा चतुर्णामपि श्लोकानां मध्यमवृत्तिविशेषपरा बोध्यम्। सोम)

सोम— आपवादिकी संगतिः। सूत्रार्थस्तु-प्रोक्षणीषु अवयवार्थसंयोगात् योगत्वम्, न तु समुदायशक्तिः इति।

वि— 'प्रोक्षणीः संस्कृतिर्जातिर्योगो वा, हर्वभूमिषु। तयोक्तेः संस्कृतिः, जातिः स्यात्तद्वे प्रवृत्तत्वतः॥ अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः। योगः स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्याकरणाद् भवेत्॥'

भाट्ट— प्रोक्षणीशब्दस्यापि पूर्ववत् संस्कारवाचित्वे 'प्रोक्षणीभिरभ्युक्षिता. सः.' इति लोके संस्कारं विहाय जातिमात्रे प्रयोगदर्शनात् रूढ्या जलत्ववाचित्वे प्राप्ते, क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभावः। अत एवाश्वकर्णादिशब्दे योगबाधे एव तत्कल्पनम्। न चापामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभावः। फलोपधानाभावेऽपि उक्षणस्वरूपयोग्यत्वस्य संभवात्। न चैव रथकारपदेऽपि रथकर्तृत्वयोग्यत्वरूपयोगसंभवेन जातिविशेषशक्तिकल्पनानुपपत्तिः। अनुशासनबलेन तत्कल्पनात्। कर्तृत्वस्वरूपयोग्यत्वस्य अव्यावर्तकत्वेन 'वर्षासु रथकारः' इत्यस्य वैयर्थ्यापत्तेश्च। प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावात् यौगिकत्वमेव।

प्रयोजने तु विकृतौ 'घृतं प्रोक्षणं' इत्यादौ 'प्रोक्षणीरासादय' इत्यविकृतः प्रयोगः संस्कारवाचित्वपक्षे। 'घृतमासादय' इति जातिवाचित्वे। 'प्रोक्षणमासादय' इति यौगिकत्वे द्रष्टव्यम्।

मण्डन— 'यौगिकं प्रोक्षणीपदम्।'

शंकर— 'प्रोक्षण्यादि तु यौगिकम्।'

* अल्पप्रसिद्धेः विप्रकर्षोपपादनार्थम् ' अप्सुरैव बुध्यन्ते ' इति प्रोक्षण्यधिकरणवार्तिकोक्तं दौर्बल्यं स्मारयति । सु. पृ. ८३३.

* प्रोक्षण्यादिशब्दानां यौगिकता । १।४।८.

* प्रोक्षण्यासादनादीनां अनाम्नयंवत्ता । वि. ३।८।१२.

* प्रोक्षणीशब्दः प्रकर्षसेचनयोग्यत्वाकारणस्य द्रवत्वस्य अप्सु स्वाभाविकस्य भावात् उदासीनास्वपि साधु । सु. पृ. ९००.

* प्रोक्षति अग्नीषोमीयं पशुं ज्योतिष्टोमे ' अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि ' इति । भा. ८।२।२।११.

* प्रोत्साहनार्थानां मन्त्राणां ' अगन्म स्वः सं ज्योतिषाऽभूम ' इत्यादीनां ' यदेव श्रद्धया करोति तदेव वीर्यवत्तरं भवति ' इति वाक्यावधारितकर्माङ्गभूतश्रद्धाजननार्थं अनुष्ठेयकर्मस्मृतिफलकत्वम् । सु. पृ. १०२.

* प्रोत्साहनमन्त्राणां याजमानत्वम् । ३।८।६।१५-१६. मीको. पृ. १०१२ ' आशीरधिकरणम् ' इत्यत्र द्रष्टव्यम् ।

* प्लक्षशाखायाः अग्नीषोमीये पशावेव विनियोगः । संकर्ष. २।२।१४. मीको. पृ. ११७ ' अग्नीषोमीये पशौ प्लक्षशाखायाः० ' इत्यत्र द्रष्टव्यम् ।

ᛤ प्लवङ्गमगतिन्यायः । यथा पिपीलिकापेक्षया प्लवङ्गमः शाखाऽन्तरे उत्प्लवमानो द्वित्रिचतुष्कवैलक्षण्यमपि शाखाफलं स्वल्पायासेन लभते, तथैव मध्यमाधिकारी अज्ञान्यपेक्षया जन्मान्तरीयसुदृढसंस्कारतया शुद्धमनस्कः सद्गुरुप्रकाशात् उपाध्यायमविद्याभिदुनानन्दीयपदं झटित्यासादयते इति । साहस्री. ५१६.

---

# फ

' फलमत उपपत्तेः ' ( ३।२।८।३८ ब्रसू. ) इत्यधिकरणन्यायेन अनिष्टे. फलदातृत्वासंभवात् ईश्वर एव फलदाता । परिमल. ४।१।४।५ ब्रसू. * फलं अनुपादेयं कर्मभेदकम् । तस्य उदाहरणम् ' आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः ' इत्यादि । वा. २।३।१२।२५. * फलं अपि पुरुषं प्रति शेषः इति जैमिनिः । भा. ३।१।१।५. * ' फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ' ( ४।३।८।१८ ) । ' पुरुषार्थे तु निर्देशात् फलमात्रेयदर्शनात् । ' पुरुषार्थस्य नियमस्य अवश्यवक्तव्यनीयप्रयोजनत्वात् अर्थवादोपात्तमेव फलमाश्रयणीयम् । वा. ३।३।८।२७ पृ २८३. * अध्ययनकर्णिकाया भावनाया नियोगं प्रतीयमानः नियोज्यविशेषं विना अपर्यवस्यन् अमुतस्वर्गादिपरित्यागेन ' फलमात्रेयो निर्देशात्० ' इति न्यायेन फलजुत्यादिकमवलम्बते । सिद्धान्तचन्द्रिका. १।२।१. * यद्यपि चार्थवादस्वरूपत्वे याथार्थ्यानवधारणात् ' दुर्वर्णोऽस्य भ्रातृव्यो गच्छति ' इत्यादीना फलविधित्वं वक्ष्यति ' फलमात्रेयो निर्देशात् ' इति न्यायात् । वा. ३।४।८।२४. * फलं कामनमन्त्रकारत्वं कर्मोपयोगि भविष्यामि । भा. ३।८।१४। २८-२९. * फल करणमन्त्रप्रकाशस्य याजमानम् । ३।८।१३।२६-२८. * फलं क्रतुना इतिकर्तव्यताधिकत्वलक्षणेन प्रकरणेन युज्यते, तदवश्यं क्रत्वर्थं भवति । वल. ५।१।१।११.

ᛤ फलं चाकर्मसंनिधौ । २।३।१२।२५ ॥

अनारभ्य किञ्चित् श्रूयते ' आग्नेयमष्टाकपालं निर्वपेद्रुक्काम , अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ' इति । तत्र संदिह्यते किं प्रकृतेभ्याग्नेयादिषु फलं विधीयते उत प्रकृतेभ्यः कर्मान्तरं इति । इयन्तो यो नाम पूर्वोदाहरणे प्रकरणान्तरकृतं च कर्मभेदं मन्यते, न बुद्धिविच्छेदानुपादेयं मत्युपादेययोरेव, ( अत्र ग्रन्थः अविस्पष्टः । अत्र अनुमितः ग्रन्थः एवं स्यात्— यो नाम पूर्वोदाहरणे प्रकरणान्तरकृतमेव भेदं मन्यते, न बुद्धिविच्छेदानुपादेयत्वसंबन्धकृतम्, तं प्रति अनयोरेव— ) भेदकत्वप्रतिपादनार्थमिदमारभ्यते । तत्र पक्षत्वनुपादेयेषु फलदेशपोत्सुपादेयत्वं सम्भवादेव गुणानाम् । किञ्चिच्चापि निमित्त-

रवादेव । यस्मिन् देवनिष्पन्ने कर्मण्यस्य कार्यता तत् निमित्तम् (? यस्मिन् निष्पन्ने कर्मणोऽस्य कार्यता तत् निमित्तम्)। न च तदुपादेयं संभवति। तेनैतेषां तुल्यत्वात् पूर्वाधिकरणविषयत्वमेव। तत्र कालस्योदाहरणमुक्तमेव। देशस्यापि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन' 'शम्यापरासमीयात्' इत्यादि। अत्र च यद्यप्य तिरात्रादिवत् प्रतिश्रवणं नास्ति, तथापि द्रव्यदेवतासंबन्धस्य च प्रत्यक्षानुमानव्यतिरेकेणाश्रयवशादाग्निहोत्रादितुल्यत्वमेव इति कर्मान्तरत्वमेव। निमित्तस्यापि 'सत्रायावगूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित्' इत्यादि पूर्वाधिकरण एव द्रष्टव्यम्। इह तु फलसंस्कार्ययोरेव वचनीयमस्तीति विचारविषयत्वम्। तत्र फलोदाहरणमुक्तमेव। तत् तुल्यन्यायतया संस्कार्यस्याप्यनुक्तमपि द्रष्टव्यम्। 'नैधातवीया दीक्षणीया भवति' इत्यादि।

अत्र अथ पूर्वपक्षिणोऽभिसंधिः। फलस्य तावत् पुरुषापारनिष्पाद्यत्वादनुपादेयत्वम्। संस्कार्यस्यापि यज मानादेः नियतसिद्धत्वमनुपादेयत्वमेव। तेन एतयोरनु पादानाभावात् न कर्मभेदः। ननु उपादेयत्वेऽप्येतयो प्राप्तत्वेनाविधेयत्वात् कर्मणाश्च निघातःम्। तच्च न संनिहितमिति अग्निहोत्रादितुल्यमेवेति। मैवम्, अग्निहोत्रे खलु जुहोतीत्याख्यातेन नामधेयेन संयोगो विधी यते। नामधेयं च उत्पन्नत्वात्पूर्वकर्मोत्पत्त्युपस्थापक मिति कर्मान्तरत्वम्। इह तु पूर्वविहितस्य कर्मणो द्रव्य देवतासंबन्धेनैवोपस्थापितत्वात् तदेव कर्म फलस्य काम्य मानत्वेन उपादेयस्य च प्राप्तत्वेनाविधेयत्वेऽपि तस्मिन् विधीयमाने कर्म न भिद्यते इति वैषम्यम्। एवं 'नैधात वीया दीक्षणीया भवति' इत्यत्रापि 'मासं दर्शपूर्ण मासाभ्यां यजेत' इतिवत् श्रवणात् नैधातवीया प्रकरणान्तरत्वाभावात् पूर्वसिद्धस्य स्थानसिद्धनैधा तवीयोपस्थापकत्वमेव। तथाच प्रकरणं बाधित्वा वाक्येन पूर्वसिद्धैव नैधातवीया संस्कार्यभूता यजमानसंस्कारत्वेन दीक्षणीया ('कार्या' इति त्रुटितं कल्प्यते) विधीयते। तेन प्रकरणान्तरन्यायस्याप्यनुपादेय प्रत्युपा दानबुद्धिविच्छेदरूपस्याभावात् अत्राप्यकर्मान्तरत्वमेवेति। एवं प्राप्ते, अभिधीयते। भवेदेव यदि देवकाल्योरिव

फलसंस्कार्ययोरपि स्वभावसिद्धं अनुपादेयत्वं स्यात्। किं तर्हि? समभिव्याहृतक्रियापेक्षम्। तथाहि अन्यार्थ मनुत्पन्नत्वात् अनुपादेयत्वम्। तत् देशकालनिमित्तानामेव पर स्वभावसिद्धम्। फलसंस्कार्ययोस्तु न समभिव्या हृतक्रियार्थमुत्पाद्यत्वम्। किं तर्हि? क्रियाया एव तदर्थ मुत्पादनमिति तदपेक्षमनुपादेयत्वमेव। नापि पूर्वोत्पन्नस्य कर्मणो द्रव्यदेवतासंबन्धेनोपस्थापनम्। यतो अनुमानद्वारेण द्रव्यदेवतासंबन्धस्य यागप्रतिपादकत्वम्। न चैकस्यैव यजिपदस्य पूर्वोत्पत्त्युपस्थाने फलं प्रति विनियोगे चैकत्र करणत्वं संभवतीति फलसमभिव्याहृतस्य कर्मणः श्रुतस्यैवानुमितस्यापि अग्निहोत्रादिवत् अनुपादेयप्रत्यु पादानबुद्ध्यां कर्मान्तरत्वमेव इति। तत्तु 'नैधातवीया दीक्षणीया भवति' इत्यत्र न यजि श्रूयते। नापि द्रव्यदेवतासंबन्धेनानुमीयते, तदभावात् नैधातवीया पदस्य आख्यातपरत्वाभावात् अतिरात्रादिवाक्यवत् पूर्वकर्मोपस्थापकत्वमयाहृतमेवेति अथ कर्मान्तरत्वम्। उच्यते। स्यादेव यदि अनुच्चारितनैधातवीयापदं पूर्व कर्मोपस्थापनं कार्यान्तरे च विनियोगं कर्तुमुत्सहते। तदत्र कार्यान्तरविनियोगस्य आवश्यकत्वात् अनपेक्षितपूर्वकर्मोप स्थापनं कर्मान्तरमेव विनियुक्तम्। अतिरात्रादिवाक्येषु निनियोगे नेपरणाभेदरूपदोषाभावादिति प्रागेवैतदुक्तम्। एतच्च 'साम्युत्थाने विश्वजित्' इत्यत्रापि समानमिति सिद्धमत्रापि प्रकरणान्तरादेव कर्मभेद इति।

प्रयोजनम्—पूर्वपक्षे दर्शपूर्णमासप्रयुक्तेन अपवर्गे सैव यद्यपि फलं तस्मिन् न पृथगनुष्ठानम्। सिद्धान्ते तु दर्शपूर्णमासप्रयोगाद्बहिरेव आग्नेयधर्मानुष्ठानमिति। सूत्रं तु अकर्मसंनिधौ श्रूयमाणं फलं कर्मभेदं करोती त्यर्थं। तौता

**फलं चाकर्मसंनिधौ। २।३।१२।२५॥**

अनारभ्य श्रूयते 'आग्नेयमष्टाकपालं निर्वपेत् रुक्काम' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम' इत्यादि। अत्र प्राकृतेषु आग्नेयादिषु फलविशेषो विधीयते इति पूर्वपक्षे सिद्धान्तमाह। अकर्मसंनिधौ प्राकृताग्नेयादिकर्म संनिध्यभावे प्रकरणादन्यत्र श्रूयमाणं फलं कर्मभेदक भवति। अनुवादे सति न शक्येत फलं विधातुम्।

तस्मात् दार्शपौर्णमासिकात् कर्मान्तराण्येतानि इति सिद्धान्तः । एवं अश्वमेधे "नैधातवीया दीक्षणीया" इति श्रूयते । तत्रापि सत्कार्यस्य यजमानस्य संस्कारार्या नैधातवीया कर्मान्तरमेव । के.

● अग्निहोत्रवाक्यं हि केवलगुणविधिः इति पक्षे एव परं 'सायं जुहोति' 'प्रातर्जुहोति' इति वाक्ययोः अनुपादेयकालसम्बन्धात् कर्मविधित्वसम्भवः, न तु अग्निहोत्रवाक्यं कर्मविधिः इति पक्षे । तदा 'सायं जुहोति' 'प्रातर्जुहोति' इत्यनयोः सत्यपि अनुपादेयकालसम्बन्धे न कर्मान्तरविधायकत्वं 'फलं चाकर्मसंनिधौ' इति न्यायस्य कर्मभेदप्रयोजकत्वाभावात् । सोम. १।४।४ पृ. ६४. ● अनुपादेयत्वे 'फलं चाकर्मसंनिधौ' इति न्यायेन कर्मान्तरविधिरेव स्यात् नाभ्यासविधिः । 'शतोक्थ्यं भवति' इत्यादौ तात्पर्यास्य । ८।१।४. ● फलं तावत् पुरुषस्योपकरोति न कर्मणः । उक्तं हि 'फलं च पुरुषार्थत्वात्' (३।१।३।५) इति । भा ८।१।१।३।२१.

● 'फलं तु तत्प्रधानायाम्' (४।३।१।१) इति च कामपदोपबद्धायां (चोदनायां) तदर्थत्व (कामार्थत्वं) वक्ष्यते । वा ३।४।५।१९ पृ. ९४६, ● अन्यत्रापिवक्ष्ये 'फलं तु सह चेष्टया (शब्दार्थोऽभावाद् विप्रयोगे स्यात्' ३।१।४।१०) इत्येषोऽर्थः योजयितव्यः । ३।१।८।१७ ● फलं देशः कालः निमित्तं संस्कार्यं इत्यनुपादेयपञ्चकम् । बाल पृ. ८८.

※ फलं न विधेयम् ॥

यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभागात् । ४।१।२।२ वर्णके २ ॥

शा— (विचारद्वयके लक्षणकथन नास्तन्तस्तगत इत्यनुशयेन भाष्यानुक्रमपि वर्णकान्तरमाह–) अथवा, फलांशस्य किं विधिः प्रयोजको वेति चिन्त्यते । विधेयभावनाविशेषणत्वात् करणादिवत् फलस्यापि विधेयत्वशङ्का । रागतस्तु प्रवृत्तिसिद्धेः अविधेयत्वम् ।

सोम— प्रयोजनम्– पूर्वपक्षे श्येनयागफलस्याभिचारस्य हिंसात्मकस्य विधेयत्वेन तत्र 'न हिंस्याद्' इति निषेधाप्रवृत्तिः । सिद्धान्ते तु तत्प्रवृत्तिरिति ।

सूत्रार्थः— यस्मिन् स्वर्गादौ अनुभूयमाने पुरुषस्य प्रीतिः तृप्तिर्भवति, तस्य लिप्सा अर्थलक्षणा स्वाभाविकी इति यावत् । फलस्य प्रीत्या अविभागात् इति ।

वि— 'फलं विधेयं नो वा, ऽऽद्यो भावनांशत्वतोऽन्यवत् ।, न मान्त्यो विधेयः स्याद् रागात् तत्र प्रवर्तना ॥'

भाट्ट— यद्वा नानेन लक्षणकरणम् । अपि तु फलस्याधीपर्यायान् भावनाविशेषणत्वाद्विधेयत्वम् । न चान्ययोरपि विशेषणत्वातिरिक्तं विधेयत्वम् । यदि तु विशिष्टभावनाविधौ अर्थादितरयोर्विधिरुच्येत तत् फलस्याप्यविशिष्टम् । इति प्राप्ते, विशिष्टभावनाविधाने आर्थिकविशेषणविधेरावश्यकत्वात्, तस्य च यदंशे अप्राप्तिस्तदंशे एव कल्पनात्, फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावादविधेयत्वम् । प्रयोजनं पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम् । सिद्धान्ते तु रागप्राप्तत्वात् 'न हिंस्यात्' इति निषेधविषयत्वम् । न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्, तस्य च वैरिमरणस्याभिचारफलकश्येनरूपस्य विहितत्वात् कथं निषेधविषयत्वमिति वाच्यम् । 'अभिचरन् यजेत' इति सामानाधिकरण्यात् श्येनसमानकर्तृकत्वावगतेः अभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिरूपव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावसायात् रागप्राप्तस्य निषेधविषयत्वोपपत्तेः । एवं चानन्तरं श्येनेन विषदानाद्युत्पत्तिः तेन वैरिमरणम्, न तु श्येनेनैव साक्षादिति ध्येयम् । यत्तु वैरिनिष्ठो मरणानुकूलव्यापार एवाभिचारपदार्थः, तत्र न यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिति तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोत्पत्तिरिति येन चिदुक्तम्, तन्न श्येनस्यैव प्रयोजकव्यापारत्वात्, तस्य च विहितत्वात् तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम् । यत्र तु 'वैरिमरणकामो यजेत' इति श्रुतम्, तत्र वैरिमरणानुकूलकर्तृनिष्ठनिषिद्धव्यापाराभावेऽपि वैरिमरणरूपफलानिष्टचिन्तनादेव पापमिति ध्येयम् । अभिचारार्थकर्मणस्तामसधर्मत्वस्मरणाद्वा तथा । यत्नेऽपि तथैवास्तु ।

शंकर— ' विधेयं न फलं मतम् । ' ३.

● फलं प्रति कर्माणि शेष इति जैमिनिः । भा. ३।१।३।४, ● फलं प्रयोजकं गोदोहनस्य, न क्रतुः ।४।१। २।१ वर्णक २. ● फलं ' भद्रं ' इति मन्त्रोक्तं आध्वर्यु-यजमानोभयगामि ज्योतिष्टोमे उपवेषु । वि. ३।८।१६. ● फलं यागादिकर्मणां स्वर्गादिकम् । ६।१।१।१–३. ● फलं साध्यं प्रधानम् । वि. ११४।६. ● उद्दिश्यमानं हि सर्वेन फलं भवति । भा. ११४।९।८. ● कर्मप्रयोगेण फलं भाव्यते । कथं ज्ञायते ? प्राक् कृतात् कर्मणः फलं नास्ति । यदि भवेत् कर्मानर्थक्यं स्यात् । कर्मोत्तरकाले च भवतीति श्रुतितोऽवगम्यते । यत्र प्राक् कर्मणो नास्ति, कर्मोत्तरकालं च भवति, तत् तेन कर्मणा भाव्यते । कृषिवत् । भा. ११।१।४।२०, ● यस्यैव प्रधानकर्मफलं तस्यैवाऽऽनुषङ्गिकमपि भवितुमर्हति । ६।२।२।१०, ● शास्त्राद्धि फलं श्रूयते प्रयत्नात्, न चैवमतत् । शब्दश्च शास्त्रात् फलमाहेति वक्ष्यामः । ६।१।२।९. ● स्वातन्त्र्येण (अन्येच्छाधीनेच्छाया अविषयत्वेन अन्येच्छानधीनेच्छा-विषयत्वेन वा) यत्सुखमेव इच्छया काम्यते तदेव काम-शब्दोपबन्धात् फलं प्रतीमः । विस्तरेण चैतत् ' असाधकं तु तादर्थ्यात् ' ( ६।१।१।२ ) इत्यत्र वक्ष्यामः । वा १।४।२।२ पृ ३३०. ● फलेन व्याप्यमानः कर्ता भवति । टुप् . ६।३।८।२२. ● ' फलेभ्यो याति ' इयं कर्मणि चतुर्थी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४. ● फलस्य अविधेयत्वम् । वा. २।२।१।१। २५ पृ. ५४१, वि. पृ. ४३७. ● फलस्य अवेष्टि-यागेन सम्बन्धो विधीयते, न कर्मान्तरम् ' एतयाऽन्नाद्यकामं याजयेत् ' इति । वि. २।३।१।३. ● फलस्य उद्देश्य-तायाः स्वर्गकामाधिकरणसूत्रोक्तत्वात् भेदहेतुत्वं सम्भवति । सु. पृ. ९५८. ● फलस्य कृत्स्नस्य भोक्तृत्वं सर्वे सर्वे-षाम् । ६।२।१।१–२. ● फलस्य पुरुषार्थत्वं कामपदो-पादानादेव गम्यते । वा. ३।१।२।५. ● फलस्य पुरुषार्थत्वस्य द्वारे भाष्यकारेणोक्तम् (३।१।३) । तदुद्देशेन विधीयमानयागादिषु भवति पुरुषार्थः । भाट्ट. ४।१।२. ● फलस्य प्रकृतिगतस्य विकृतौ नातिदेशः । वि. ८।१।१।३. ● फलस्य प्रयोजनाख्यरूपेण उद्देश्यत्वात् न विधेयत्वोपपत्तिः । सु. पृ. ९५८. ● फलस्य यागं प्रति प्राधान्यात् तत्साधनं पुरुषमपि प्रति प्राधान्यम्, पुरुषं प्रति गुणत्वात् तदनुष्ठेये यागेऽपि गुणत्वम् । वा. ३।१।१६. ● फलस्य वृष्टिरूपस्य कामना यजमानस्यैव, ज्योतिष्टोमे सद्योमाने । वि. ३।८।६. ● विधित एव सर्वेन फलस्य कर्तृगामित्वसिद्धिः । सोम. ६।२।२. ● फलानां ऐहिका-मुष्मिकोभयार्थता । विन्दु. ४।३।१०. ● फले एकस्मिन् चोदितानां तन्त्रेण इतिकर्तव्यता भविष्यति । टुप् . ११।४। ५।१७. ● फले पुरुषः सौन्दर्यं जानन् स्वयं यागादेव प्रवर्तते इति व्यर्थस्तत्र विधिः, यथा स्वर्गे । नि. ४।१।१ वर्णक २. ● फले यथोद्यते स इतिकर्तव्यतया संबध्य-मान इतिकर्तव्यता प्रति प्रधानम् । टुप् . ७।१।१।२. ● फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति । तत्साधने तु दुःखकरे स्वभावत् द्वेष एव, अवश्यं च साधने प्रवर्तमानस्य तत्रैव रुच्या भवितव्यम् । शा. १।३।१ पृ. ७. ● फले हि स्वतः प्रवृत्तिः । कर्मार्थ-तया च प्रधाने । प्रधानोपकारकतया चाङ्गेषु । कृतु. पृ. ३१.

● फलापूर्वं येन साक्षात् स्वर्गादिफलं जन्यते तत् । वि. २।१।२.

● फलार्थं वर्जनीयस्यानुष्ठानं न दोषावहम् । सु. पृ. १६६.

● फलार्थता पुरुषप्रयत्नस्य स्वभावतः । भा. ६।१।१।१.

● फलार्थत्वात् अत्यग्निष्टोमादिसंस्थानां क्रतुभाव-नान्तर्भावो नास्ति, अग्निष्टोमसंस्थाया तु क्रतुभावनान्तर्गता । शा. ५।३।१३.

॥ फलार्थत्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात् । ६।१।२।४॥

' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादि शास्त्रं सर्वाधिकारं सर्वस्य प्राणिजातस्य अधिकारो यस्मिन्, तादृशं स्यात् । प्राणिमात्रस्य सुखकामुकत्वात् कर्मणश्च सुखरूप-फलार्थत्वात् । योयः फलं कामयते तस्य सर्वस्य फल-साधनकर्मविधायके शास्त्रे अधिकारः स्यात् । तिरश्चां वनस्पतीनां देवानामृषीणां मनुष्याणामिति च । इति

पूर्वपक्षः। फलार्थित्वात् इति पाठे तु कर्मणः विधायकं शास्त्रं सर्वाधिकारं स्यात् सर्वस्य प्राणिमात्रस्य फलार्थित्वात् फलकामुकत्वात् इति सूत्रार्थः ।

**कर्तुर्वा श्रुतिसंयोगात् विधिः कार्त्स्न्येन गम्यते । ५॥**

पूर्वपक्ष सूत्रेण प्राप्त पाक्षन्देन प्रत्याख्याय सिद्धान्तमाह । कार्त्स्न्येन कर्तुं साङ्गप्रधानानुष्ठानसमर्थस्य एव विधिः कर्मविधानं गम्यते । श्रुतिसंयोगात् उक्तेऽर्थे विधितात्पर्यात् । अथवा श्रुतिशब्दः कर्मणि विधानः। तथा च श्रुतेन फलेन साङ्गस्य प्रधानस्यैव संयोगात् साधनत्वेन सम्बन्धात्। तस्मात् साङ्गप्रधानानुष्ठानसमर्थस्य कर्तुरेव शास्त्रे अधिकारः । न तिरश्चाम्, न वनस्पतीनाम्, न मनुष्याणामपि अन्धपङ्ग्वादीनाम् । के.

* फलार्थ-स्वतन्त्रार्थपादकन्यो विधिर्यथा— 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इति । अत्र 'पर्णेन जुहूं कुर्यात्' इति विधिः फल्पः बाल पृ. १२.

* फलावगम्या शब्दशक्तिः । भा. ३।४।४।१३ पृ. ९१४.

* फलादे. सन्निधौ कर्मभेदनानाभाव. (देशकालनिमित्तकल्पनस्कारणाम्) । भा. २।३।१३।१६ .

* फलादीनां अनतिरेशः । ८।१।१३।२०-२२.

* फलादिसंबन्धेन समुदायत्वापादनं भवति, यथा रात्रकूपेन स्वाराज्यकाम· । भा. २।३।१।१ पृ. ४६२ .

* फलेच्छायां वीनाया अकामे वा फले समाप्तिनियमो दृश्यते वृष्टिकामेष्टनाम्, 'यदि वर्षेत् तावत्येव जुहुयात्, यदि न वर्षेत् श्वोभूते जुहुयात्' इति । भा. ४।३।९।२१.

* फलोत्पत्तिः निर्व्यापारात् जातिविशेषात् नावकल्पते । भा. ३।६।१।१ .

* फलोत्सर्गन्यायात् (सर्वं फलं यजमानस्य इति) फलोत्सर्गन्यायो दुर्बलः प्रधानवाक्यगतात्मनेपदश्रुतेः । परिमल. ३।४।१३।४४ ब्रस्.

* फलोद्देशपूर्वकस्य अनुष्ठानस्य कादाचित्कत्वेऽपि तन्निरपेक्षानुष्ठानस्य नित्यता उपपन्ना । सु. पृ. ८०३ .

* फलोपहितं कारणत्वं सहकार्यन्तरसाहित्यम् । मणि. पृ. ४९.

* फलैक्यं सौभरनिधनयोः (सौभर साम) । अत्र निधनविशेषनियमविधिः । २।२।१३।२८-२९.

* फलकल्पना विश्वजिति अन्यथानुपपत्त्या । टुप्. ७।१।१।२ . * फलकल्पनायाः प्रकरणसम्बन्धकल्पना ज्यायसी । वा. ३।३।९।१८. * गुणे फलकल्पनायां यजतेर्न विवक्षा । भा. १।४।२।३.

* फलकामनाया: विशेषग्रहण काम्याग्निहोत्रेण नित्याग्निहोत्रस्य प्रसङ्गे । बाल. पृ. १४७.

* कर्मगोचरे अल्पस्य कर्मणः परिमाणसामान्येन फलगोचरे अल्पमेवोपतिष्ठते, मध्यमस्य मध्यमम्, महतो महत् इति स्थानमेव विनियोजकम् । वा.

* फलचमस' अनित्यः, ब्राह्मणपक्षे विधानाभावात् (राजन्यवैश्ययोरेव विधानात्) । वा. ३।६।१३।३५. * फलचमस· इज्याविकारः, न भक्षविकारः । भक्षस्तु फलचमसस्य अर्थादेव स्यात् । भा ३।५।१९।४७-५१.

■ **फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् । ३।५।१८।४७॥**

ज्योतिष्टोमे श्रूयते 'यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति । तत्र सन्देह किं फलचमसः सोमभक्षविकारः उत इज्याविकारः इति । प्रसक्तसोमभक्षणानुप्रसक्तेन इदानीं फलचमसोऽपि भक्षणसंबन्धेन भूगणो विचार्यते ।

पूर्वपक्षस्तु, सोमस्य तावत् उभयसंबन्धः प्रतीयते यागसंबन्धो भक्षणसंबन्धश्च । तत्र तावद्यागसंबद्धस्य न सोमस्यायं फलचमसो विकारः, यागप्रकरणपठितत्वेन भक्षाश्रवणात् । किं तर्हि ? यदि सोमं बिभक्षयिषेत् ततः फलचमसमस्मै भक्षं प्रयच्छेदिति श्रुतेर्भक्षणसंबन्धिसोमविकार एव । तथाहि, पशौ श्रूयते 'प्लक्षे. स्विष्टकृतं यजति' इति । हृदयाद्येकादशाभिर्द्रव्यैः प्रधानभूतः पशुयागो निर्वर्त्यते । प्रकृतौ च सांनाय्ययागशेषस्यैव

स्विष्टकृत. प्रतिपादितत्वात् अत्राप्येकादशानां अवयवानां मध्ये ये. कैश्चिन्निमित्तैरविशेषे. स्विष्टकृद्यागः कर्तव्य इति पूर्वपक्षयित्वा, यागसम्बन्धापेक्षस्य नित्यस्य अङ्गैः सह समाससमसादेशवदवयवेषु मध्ये भक्षणाद अनान्तरसामान्यमङ्गानां निर्धारयितुमशक्तेर्न यागशेषाणामुपादानम्। किं तर्हि ? ' दोष्णो दक्षिणस्य पूर्वार्धादवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः ' इत्येकेनाप्युद्देशेन सम्बन्धात् नैव्यवधारितानि। तैरेव विशेषैः स्विष्टकृद्यागः कर्तव्य इति सिद्धान्तितम्। तेन यथा शरैर्बर्हिषां विकारः, तथा इहापि इध्मादीनां यागानामनिन्द्यदोषैः विकार इति। तदुक्तं सूत्रकृता 'प्रकृतौ शरवद्विकारः स्यात्' ( १०।७।३।११ ) इति। अतोऽप्यनिर्वादोषेण फलचमसेनेध्यादेरस्य सोमस्य विकारो न विरोत्स्यते। एवं च सति उत्पत्तिशिष्टः सोमः प्रधानकर्मणि यागे बाधितो न भविष्यति। ' न सोमम् ' इति अर्थप्राप्तभक्षणसोमनिवृत्त्यनुवादेनैव बाधात् अत्राप्युपपत्स्यते इति।

' ये त्वाहुरुपकारकं फलचमसद्रव्यं भक्षणं विधीयत इति पूर्वपक्षयन्ति, तैश्च पूर्वपक्षाभिप्रायाणि अनाकलितानि। न चायं पक्षो युक्त्याऽपि सङ्गच्छते, अनेकदोषदुष्टत्वात्। तथाहि, फलचमसान्तं मन्त्रं प्रयच्छेदिति विनियोगभङ्गिः ( ? ) न भक्षणं कुर्यादिति। तथा सोमभक्षणस्य फलचमसेनातुल्यकार्यत्वेन अनिवर्तितत्वात् सोममिति नापमर्थनानुवादः, निषेधपरत्वे च वाक्यभेदः। विहितसोमभक्षणप्रतिषेधाद् अष्टदोषदुष्टविकल्पापत्तिः। तथा अदृष्टकल्पनादयश्च दोषा अप्यभिहिताः। सिद्धान्तपक्षे षड्विकल्पनाशेन यच्चिन्तितं तदेवात्र तैः पूर्वपक्षीकृतं इत्युपेक्षणीयमेवेति। तस्मात् भक्षश्रुतिसंयोगात् राजन्यवैश्यनिमित्तकः फलचमसो भक्षविकार इति। एवं प्राप्ते, अभिधीयते।

इज्याविकारो वा संस्कारस्य तदर्थत्वात्। ४८॥

अयमभिप्रायः। भक्षेदेव यदि पूर्वपक्षे फलचमसः प्रतिनिधिर्न भवेत्। द्विविधं हि द्रव्यमपेक्ष्यमिति प्रतिनिधिर्लभ्यते, इज्याप्रयोजनत्वात् यथा सोमस्य. पुरोडाशो वा, प्रयोजनार्थोपादानान्तरीयकोपादानत्वात् यथा 'व्यङ्गैः स्विष्टकृतं यजति' इत्यादिषु व्यङ्गादि। न च पूर्वपक्षे फलचमस. इज्याप्रयोजनः। नापि प्रयोजनार्थोपादाननान्तरीयकोपादान इति प्रतिपत्त्यपेक्षाभावात् प्रतिपत्तिसम्बन्धो घटते। व्यङ्गस्य तु पशुयागार्थोपादाननान्तरीयकोपादानस्य आवर्जितत्वेन प्रतिपत्त्यपेक्षायां वचनाभावे पुरुषेच्छाधीना वा काचित् प्रतिपत्तिर्भवेत्। वचनसद्भावे तु यथावचनमेव प्रतिपत्तिर्भवति। तेन यागीयद्रव्यसंस्कारभक्षणस्यान्यथानुपपत्त्या फलचमसस्य सोमवत् अवश्यं यागसाधनत्वं कल्पनीयम्। तत्रापि 'स यदि सोमं बिभक्षयिषेत्' इति यजमानसम्बन्धिभक्षसङ्कीर्तनात् यावत् स्वाङ्गेऽनुपयुज्यमानो यजमानभक्षणसंस्कारः प्रतिपत्तिः, तावतैव यज्ञभागेनार्थवत्ता सम्बन्ध इति यजमानचमस एव सोमं विकरोति, न ग्रहचमसान्तरेष्विति स्थितम्। नैमित्तिकत्वाद्दुर्लाचचिह्नसोमबाधोऽपि न दोषः। एवं च सति ऋचाभिषवादिसंस्कृतेनैव यष्टव्यमित्यन्यत्र पादे प्रतिपादनीयम्। एवं 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यत्रापि सोमाभावे सोमसम्बन्धिनोऽभिषवसंस्कारस्य पूतीकेषु दर्शनात् पूतीकानां यागसाधनत्वमनेनैव न्यायेनावगन्तव्यम्।

प्रयोजनम्— पूर्वपक्षे यजमानस्य चमसेऽपि सोमेनैव यष्टव्यम्। भक्षणमात्रं तु फलचमसस्य। सिद्धान्ते तु फलचमसेनैव यष्टव्यम्। सूत्रं तु इज्याया फलचमसेन सोमस्य विकारेण भक्षणमात्र संस्कारस्य भक्षणस्य तदर्थत्वात् यागसाधनद्रव्यार्थत्वात् इति। कौ.सा.

फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात्। ३।५।१३।४७॥

ज्योतिष्टोमे श्रूयते ' स ( अध्वर्युः ) यदि राजन्यं वैश्यं वा याजयेत्, स ( राजन्यो वैश्यो वा ) यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति। बिभक्षयिषेत् भक्षयितुमिच्छेत्। न्यग्रोधस्तिभीः अङ्कुरान् ( न्यग्रोधफलानि वा )। अनेन वाक्येन राजन्यस्य वैश्यस्य वा फलचमस उक्तः। ( फलचमसशब्दस्य प्रयोगश्च 'फलचमसः, स्वरूप प्रयोगम' इ

विन्दो द्रष्टव्यः । ) स किं भक्षविकारः उत इज्याविकारः, किं फलचमसं भक्षयेदित्यर्थः उत फलचमसेन यजेत इत्यर्थः इति सन्देहे पूर्वपक्षमाह सूत्रम् । नैमित्तिकः राजन्येन वैश्येन वा निमित्तेन निर्वृत्तः फलचमसः भक्षस्यैव विकारः स्यात् नेज्यायाः । विभक्षयिषेत् इति भक्षश्रुतिसंयोगात्, 'तमस्मै भक्षं प्रयच्छेत्' इति च भक्षपदश्रुतिसंयोगात् ।

**इज्याविकारो वा संस्कारस्य तदर्थत्वात् । ४८ ॥**

सिद्धान्तप्रतिपादनार्थं सूत्रम् । वाशब्दः भक्षविकारत्वनिवृत्त्यर्थः । फलचमसः प्लक्ष– आश्वत्थ– औदुम्बर-फलैरभिषुतैः युक्तः चमसः इज्याविकार एव । यागार्थः सः, न केवलं भक्षार्थः । संस्कारस्य क्रयाभिषवादि-संस्कारस्य तदर्थत्वात् यागार्थत्वात् । सोमचमसेषु तथा दर्शनात् । तस्मात् यागार्थः फलचमसः ।

**होमात् । ४९ ॥**

ज्योतिष्टोमे राजन्यस्य वैश्यस्य वा यजमानस्य सतः यजमानचमसः न्यग्रोधफलचमसो भवति न सोमचमसः । स चायं फलचमसो यागार्थं एव विधीयते, भक्षस्तु शेषस्य वाक्यान्तरेण प्राप्तः स्यात् इति सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'यदा अन्यांश्चमसान् जुहोति, अथैतस्य दर्भतरुणकेन उपहत्य जुहोति' इति होमात् होमस्य उक्तत्वात् यागविकार एव फलचमसः ।

**चमसैश्च तुल्यकालत्वात् । ५० ॥**

सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'यदा अन्यांश्चमसान् उन्नयन्ति अथैनं चमसमुन्नयति' इति वचनेन इतरैः सोमचमसैः तुल्यकालत्वं फलचमसस्योक्तम् । यदा सोमचमसानां उन्नयनं क्रियते तदैव फलचमसस्यापि उन्नयनमुक्तम् । उन्नयनं नाम अन्यपात्रस्थितात् सोमरसस्य पिष्टाना दधिमिश्रिताना न्यग्रोधफलाना च चमसे होमार्थं ग्रहणम् । ततश्च यागार्थ एव फलचमसः । तुल्यः कालो यस्य स तुल्यकालः फलचमसः । तस्य भावः, तस्मात् ।

**लिङ्गदर्शनाच्च । ५१ ॥**

सिद्धान्ते हेत्वन्तरं वक्तुं सूत्रमिदम् । 'तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति वाक्ये यागार्थस्य सतः सोमस्य ऋत्विजामिव राजन्यवैश्ययजमानस्यापि प्राप्तस्य भक्षस्य यः सिद्धो निषेधः तस्यानुवादः कृतो दृश्यते । तदिदं यागार्थत्वसाधकस्य लिङ्गस्य दर्शनम् । अस्मात् लिङ्ग-दर्शनाच्च सोमस्येव फलचमसस्यापि यागार्थत्वं सिध्यति । तस्मात् इज्याविकारः फलचमसो न भक्षविकारः । के.

* फलचमसः राजन्यस्य वैश्यस्य च ज्योतिष्टोमे, न सोमचमसः । 'स यदि राजन्यं वा वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेत न सोमम्' इति । फलचमसः सोमचमसस्य विकारः । मा. ३।४। १३।३६. * फलचमसः, स्वरूपं प्रयोगश्च । ऐतरेय ब्राह्मणे — औदुम्बराणि आश्वत्थानि प्लाक्षाणि न्यग्रोधानि 'एतानि अग्न (अग्निचादेरर्थे) पुरस्तात् (सोमक्रयात् प्रागेव) उपकॢप्तानि भवन्ति, अथ सोमं राजानं क्रीणन्ति, ते (ऋत्विजः) तत एव आवृता (सोमस्य एव पद्धत्या) औपवसथात् (दिनात् पूर्वे) प्रतिवेशे धरन्ति (पूजा नैवेद्यसमर्पणं च कुर्वन्ति)' । ३५।६।१–४ । 'तत्र यदा (सोमस्य) चमसान् उन्नयेयुः तदेतं यजमानचमसं उन्नयेत्, तस्मिन् (फलचमसे) द्वे दर्भतरुणके (द्वौ ह्रस्वौ दर्भौ) प्रास्ते स्याताम् (एकं प्राग्य ततो द्वितीयं इति रीत्या) तयोः (मध्ये) वषट्कृते अन्तःपरिधि पूर्वं (प्रास्तं दर्भं) (प्रास्येत् 'दधिक्राव्णो अकारिषं' इत्येतया ऋचा सस्वाहाकारया, अनुवषट्कृते अपरं (चमसे पश्चात् प्रास्तं दर्भं) 'आ दधिक्राः शवसा पञ्च कृष्टीः' इति । ३५। ७।१। 'तत्रैतान् चमसान् (सोमचमसान् भक्षार्थं) आहरेयुः, तदेतं यजमानचमसमाहरेत्, तान् यत्र उद्-गृह्णीयुः तदेन उपोद्गृह्णीयात् । तद्यदा इळां होता उप-ह्वयेत यदा चमसं भक्षयेत् (होता सोमचमसं,) अथ एनं (फलचमसं यजमानः) एतया भक्षयेत्' 'यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि' इति । ३५।७।२–३ । 'शं न एधि हृदे पीतः प्र ण आयु-र्जीवसे सोम तारीः' इति आत्मनः प्रत्यभिमर्शः । ५ । 'आप्यायस्व समेतु ते, सं ते पयांसि समु यन्तु वाजाः'

इति (द्वाभ्यां) चमसमाप्याययति अभिरूपाभ्याम्' । ७ । 'तदत्र एतान् चमसान् सादयेयुः, तदेव यजमानचमसं सादयेत्, तान् यत्र प्रकम्पयेयुः तदेनमनु प्रकम्पयेत्, अथैनमाहृत्य भक्षयेत् 'नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामि' इति प्रातःसवने नाराशंसो भक्षः, 'ऊर्वैः' इति माध्यंदिने, 'काव्यैः' इति तृतीयसवने' (ऊहः कर्तव्यः) । ३५।८।१। 'समान आमनः प्रत्यभिमर्शो, समानमाप्यायनं चमसस्य' । ५ । इति । अथ सत्यापाढस्तु आह– 'न वैश्यराजन्ययोः सोमभक्षणं विद्यते ८।७।४२ । यदि अब्राह्मणः सोमं पिपासेत् न्यग्रोधस्तिभिनीरुह्य ताः सपिष्य दधनि उन्मृज्य यदन्याश्चमसाननुन्नयति अथैनं यजमानचमसे अत उन्नयति । यदन्याश्चमसान् जुह्वति अथैतस्य दर्भतरुणेन उपहत्य अन्तःपरिधि आहवनीयादङ्गारं निर्वर्त्य 'अहं स्वरस्मि' इति जुहोति । यदन्याश्चमसान् भक्षयन्ति अथैतस्य चमसस्य यजमानो भक्षयति' ८।७।४३। इति । ● फलस्य न्यग्रोधमुकुलरूपस्य यत्र चम्यते भक्ष्यते यत्र स फलचमसः । वि. ३।६।१२. ● फलचमसेन सोमस्य आगत्या बाध. । सु. पृ. ८८३. ● फलचमसस्य सोमधर्माः स्युः, सोमविकारत्वात् । ३।६।१३।३६. ● फलचमसस्य स्थानापत्त्या सोमधर्मलाभः । वक्ष्यति हि 'नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्' (३।६।१३।३७) 'धर्मस्यार्थकृतत्वात्' (९।२।१२।४०) इति च । धा. ३।५।२०।५३. ● फलचमसस्य होमः दर्भतरुणेन क्रियते 'दर्भतरुणेनोपहत्य जुहोति' इति । वि. ३।५।१९. ● फलचमसे ऊहोऽपि कर्तव्य इत्युक्तं भवति । 'इन्द्राय [illegible] वसुमते सोम गृह्णामि' इति सोमपदस्थाने फलचमसपदप्रक्षेपः कर्तव्यो भवति । धा. ३।६।१३।३६ टिप्पणी च. ● फलचमसे गुणकामानां अप्रवृत्तिः । भा. ३।६।१३।३६.

## ॥ फलचमसाधिकरणम् ॥

फलचमसो नैमित्तिको भक्षविकारः, श्रुतिसंयोगात् । ३।५।१९।४७॥

भाष्यम्– ज्योतिष्टोमे श्रूयते 'स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति । तत्र संदेहः किं फलचमसो भक्षविकारः, उत इज्याविकार इति । किं फलचमसं भक्षयेदित्यर्थः, उत फलचमसेन यजेतेति । किं प्राप्तम् ? फलचमसो नैमित्तिको भक्षविकारः । भक्षणेन हि श्रुतेनैकवाक्यता भवतीति । तमस्मै भक्षं प्रयच्छेदिति, न तेन यजेतेति शब्दोऽस्ति । तस्माद्भक्षविकारः ।

वा– योऽयं ज्योतिष्टोमे राजन्येन वैश्येन च निमित्तेन नैमित्तिकः फलचमसः श्रूयते, न्यग्रोधस्तिभीः न्यग्रोधाङ्कुरान् न्यग्रोधफलानि वा, ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेत्, इति । स किं भक्षविकारः, उतेज्याविकार इति संदेहे, बिभक्षयिषेदिति श्रुतिसंयोगात् तमिति प्रकृतमाहिश्रुतिसंयोगात् पुनरपि भक्षश्रुतिसंयोगात्, आनन्तर्यश्रुतेः समानवाक्योपादानाच्च भक्षो भूत्वा तत्समानस्थानं भक्षयन्नेव सोमं निवर्तयति यागगतम् । न ह्यन्यत्र श्रुतं अन्यविषयस्य बाधने समर्थम् । यागसंबन्धश्चास्य प्रकरणादिश्वयते । तच्च दुर्बलम् । एवं च उत्पत्तिवाक्यशिष्टः सोमो यागादर्थकर्मणो न निवर्तिष्यते । प्रतिपन्निवाधे तु विनाऽपि वाक्यं श्रुत्या मन्दोऽप्ययं किमुत श्रुत्यैव सत्याम् । तस्मात् भक्षविकारः ।

इज्याविकारो वा, संस्कारस्य तदर्थत्वात् । ४८॥

भाष्यम्— इज्याविकारो वा फलचमसः । फलचमसेन यजेतेत्यर्थः । कथम् ? यदेतद्भक्षणम्, एतत् सोमसंस्कारार्थम् । फलचमसस्यापि यदि भक्षणं फलचमससंस्कारार्थम्, फलचमसस्य अन्यत्रानुपयोगात् अनर्थकम् । अथ भक्षणं प्रधानं तथा 'न सोमम्' इत्यनुवादो नावकल्पते । यदि तु इज्याविकारो भवेत् ततः फलचमससंस्कारोऽवकल्पते । तस्मादिज्याविकारः । अथ कथं यजिसंबन्धे सति, इज्याविकारो भविष्यतीति । उच्यते । अस्ति यजिसंबन्धः । कथमिति ? 'यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभीः संपिष्य तमस्मै भक्षं प्रयच्छेत्' याजयितुमिति गम्यते । भक्षार्थत्वे हि न पूर्वमुक्तोऽपि संबध्यते । यदि सोमं भक्षणेन संस्कुर्यात्, न्यग्रोधस्तिभीः संस्कुर्यादिति । तस्मान्न

भक्षणसम्बन्धः । यागो हि प्रकृतोऽस्ति, तेन सह संबन्ध्यते, न दोषो भविष्यति । ननु 'तस्मै भक्षं प्रयच्छेत्' इति वचनात् भक्षणसाधनमिति गम्यते, न यागसाधनमिति, भक्षशब्दानन्तर्यात् । उच्यते । श्रूयमाणे सम्बन्धे अनर्थकमिति कृत्वा प्रकृतसम्बन्धः इत्युच्यते । कथं तु भक्षसम्बन्धः इति । यदि यागद्रव्यम्, भक्षयितव्यं शब्दोपदेशेन भवति, तस्मात् भक्षणरूपं लभते, भक्षसंबन्धेन च यागसम्बन्ध एव स्मर्यते । यदि तेन इज्यते ततः स भक्षो भवति । तस्मात् भक्षवचनात् पुनरपि तेनेज्यते इति गम्यते । एषा व्यवधारणकल्पना । तस्मै भक्षं प्रयच्छेत् तस्मै भक्षं कुर्यादित्यर्थः । यथा स भक्षो भवति, तथा कुर्यादिति । यदि च तेन इज्यते, ततोऽस्य भक्षो भवति । तस्मात्तेन यष्टव्यमिति ।

वा— लिङ्गदर्शनेन चायम् भाष्यकार उपक्रमते । सति हि इज्याविकारत्वे चौमिकभक्षसम्बन्धोऽस्य लभ्यते । ततश्च तस्यानापत्त्या निराकृतत्वात् । 'न गिरा गिरेति ब्रूयात्' इतिवत् 'न सोमम्' इत्यनुवादः सेत्स्यति । लिङ्गं तु एतत् नास्त्या यागसम्बन्धी साधनमिति मन्यमान आह 'कथमसति यजिसम्बन्धे' तद्विकारत्वमिति । इतरस्तु दर्शयति, 'स यदि राजन्यं वैश्यं वा याजयेत्, न्यग्रोधस्तिभीराहृत्य, ताः संपिष्य, दधन्युन्मृज्य, ताभिर्याजयेत्' इति संबध्यते । तत्रापि तत्रैव श्रुतेन आख्यातेन सह सम्बन्धो भवति । न च पाठापेक्षया पूर्वकालत्वं क्त्वाशब्देनोच्यते । भवति हि गच्छति भुक्त्वेत्यपि गमनमपेक्ष्य भोजनस्य पूर्वकालत्वम् । अतो वाक्येनैव यजिसम्बन्धः । तस्मात् याजयतिसम्बन्धे यजिसंबन्ध एवाग्रगम्यः 'आमनाम याजयेत्' इतिवत् । अङ्कुरैः प्रासत्वादेव निष्फलत्वेन चानुपदेशत्वात् । एवं च सति 'तस्मै भक्षम्' इति 'न सोमम्' इति च उभयमपि शास्त्रमनुवदिष्यते ।

न त्वेषा योजनाऽवकल्पते । कथम्? 'व्यवधानात् तन्मितस्य बाधाद्विधिविशङ्कितः । निमित्तत्वोपयुक्तस्य पुनश्च विधिकल्पना ॥ तृतीयार्थश्च कल्प्यः स्याद् द्वितीयार्थस्य बाधनम् । समस्तसोमबाधश्च यजिनिष्कर्षकल्पना ॥' 'स यदि सोमं बिभक्षयिषेत्' इत्येतद्व्यवधाने सति याजयतिसम्बन्धः कल्पयितव्यः, 'तस्मै' इति च सर्वनाम्नः श्रुत्यैव प्रकृतग्रहणसामर्थ्यमानन्तर्यं न बाध्येयाताम् । 'स यदि राजन्यं वैश्यं वा याजयेत्' इत्यस्य यदिशब्दसम्बन्धात् उपहतविधिशक्तिर्न फलचमससंयोगं विधत्ते । निमित्तत्वेन चोपयोगे सति निराकाङ्क्षीभूतस्य तत पुनरन्यत्र विपरीतं विधित्सा स्वीकरणीयम् । ताभिर्याजयेदिति च । अत्यन्ताश्रुततृतीयार्थः कल्प्येत । तस्मै इति च प्राधान्येन निर्देशः अवगम्यमानः अपह्नूयेत । प्रयच्छेदिति च अनन्यपरे विस्पष्टे विधौ सति नानुवादत्वाश्रयणं युक्तम् । न च याजयतिसम्बन्धात् उपसर्जनीभूत यजिं निष्कृष्य फलचमससंबन्धो युक्तः । सर्वेण च ज्योतिष्टोमेन सम्बन्धात् समस्तं सोमं बाधित्वा तेनैव यागः क्रियेत, सर्वं विरुद्धं नैवत् । भाष्यकारोऽपि 'याजयितुमिति गम्यते' इत्याह, न याजयेदित्यनेन संबन्धात् । सूत्रकारोऽपि च 'संस्कारस्य तदर्थत्वात्' इति हेतुमाह, न याजयतिसम्बन्धादिति । तस्मादयुक्तमेतत् ।

अन्ये तु— यागो हि प्रकृतोऽस्ति, इत्यतः वचनात् यागसम्बन्धानवक्लृप्तिं मन्यमानाः 'तस्मै प्रयच्छेत्', किमर्थम्? प्रकरणात् 'याजयितुम्' इति गम्यते — इति वर्णयन्ति । तेषामपि तु समस्तसोमनिरासस्य तच्छब्दोपनीतस्य वाक्यावगतभक्षसम्बन्धनाय, 'तं' इति च पुल्लिङ्गनिर्देशो न घटते । भक्षव्यवहितेन च 'प्रयच्छेत्' इति आख्यातेन सम्बन्धः । तस्मात् भक्षसम्बन्धापरित्यागेनैव सिद्धान्तोऽपि व्याख्येयः । कथम्? 'अपूर्वो ह्येष चोद्येत भक्षः प्रकृत एव वा । संस्कारोऽर्थक्रिया (आरादुपकारिका) न स्यात् संस्कारो यागसाधनम् ॥' यदि तावत् अपूर्व एव भक्षः चोद्यते, ततोऽपि आरादुपकारकत्वं न भवति, अदृष्टकल्पनात् प्रकरणविनियोगविप्रकर्षात् अपरद्वारकारित्वाच्च । तथा 'तं प्रयच्छेत्' इति द्वितीयया विस्पष्टं संस्कार्यत्वं गम्यते । अन्यथा हि तेनेति प्राप्नोति । तस्मात् संस्कारः । संस्कारस्य चैष स्वभावो यदुपयुक्त उपयोक्ष्यमाणो वा द्रव्यमभिसंस्क्रियते । तत्रापि भक्षितस्य पुनरुपयोगासंभवात् उपयुक्तसंस्कारत्वमेव ज्ञायते ।

तेन फलचमस संस्कारभूत भक्षमुपवर्णनेन शक्यो निर्देष्टुम्, 'यदि कश्चिदुपयोग गच्छसि ततो भक्षणेन संस्क्रियसे नान्यथा' इति। स चोपयुज्यमानत्व प्राप्यमान प्रकरणात् यागोपयोगित्व प्रतिपद्यते। तत्रापि यावनि अनुपयुज्यमानो यजमानभक्षसंस्कारायत्त न प्रतिपद्यते, तावनेव यजमानेन अर्थापत्त्या सम्बध्यते इत्यवधारणात् यजमानचमसाभ्यासेनैव एकेन सम्बध्यते। नहि प्रहृचमसान्तरेषु अनुपयुज्यमानस्यास्य यजमान भक्षेन अनुपपन्नम्। अत सोमोऽपि अनुग्रहीष्यते। यद्वा ज्योतिष्टोमप्रकरणेन सम्बद्धोऽय भक्षशब्द उच्चार्य माण प्रकृत सोमभक्षमेव अवगम्यते। स च यागो पयुक्तत्यशेषसंस्कारत्वेन प्राप्त इति फलचमसमपि साहश्येन संस्कर्तु शक्नोति। न तु असौ इदानीं अन्य प्रयोजन शक्य कल्पयितुम्। न च तस्य कर्मान्तरत्वे किञ्चित् शब्दान्तरादिकारणमस्ति। अपि च 'स यदि सोम निभक्षयेत्' इति स्वकारकोपादनेनैव सोमभक्षणेन संबन्धो विज्ञायते। अन्यथा हि तदुपादान व्यर्थमेव स्यात्। न च 'न सोमम्' इत्यनुवाद अवकल्पते। यदि भक्षान्तरमेवेद आरात् उपकारक चोद्यते, तत्र समानकर्तृकत्वाभावात् नैन सोम निर्भक्षयेत्। अभि धानेन च तस्मिन् न प्रतिषेधानुवाद स्यात्। न च निर्धिर्युक्त, वाक्यभेद-अनेकादृष्टकल्पनाप्रसङ्गात्। असंबद्ध च वाक्य भवेत्। यदि सोम भक्षणेन संस्कर्तु मिच्छेत्, तत फलचमसभक्षम आरादुपकारक कुर्यात्, फलचमस वा संस्कुर्यात् इति। यदा तु अयमर्थो गृह्यते 'येन भक्षणेन यथाभूत सोम संस्कर्तुमिच्छेत्, तेन तथाभूतमेव फलचमस संस्कुर्यात्' इति, तदा अर्थान्तरया यजमानचमसत्वामाभ्यां अबन्ध कृतो भवति। तस्मात् इत्यायामय सोमविकार इति सिद्धम्।

'शेषा व्यवधारणकल्पना' इति (भाष्यम्)। यथैव अश्वप्रतिग्रहेष्ट्या 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति श्रुते प्रतिग्राहयेत् इति व्यवधार्य कल्पितम्, तथैवात्र 'भक्ष प्रयच्छेत्' इति श्रुते स्वगतभक्षण प्रयच्छेत् इति कल्प्यते। एतेन 'पूर्ववचनमिद्भुगुणात्' इत्यादीनि व्याख्यातानि।

होमात्। ४९॥

भाष्यम्— होमविशेषवचन भवति 'यदा अन्यान् चमसान् जुह्वति, अथैतस्य (फलचमसस्य) दर्भतरुणकेन (त्रिक्किस्थूलेन दण्डेन प्रादेशमात्रेण दर्भेण) उपहत्य जुहोति' इति। इज्याविकारे सति दर्भतरुणकेन इति जुहोतौ गुणवचनमवकल्पते। तस्मादपि इज्याविकार।

वा— होमानुवादेन दर्भतरुणकविधि इज्याविकारत्व अवकल्पते।

चमसैश्च तुल्यकालत्वात्। ५०॥

भाष्यम्— 'यदाऽन्यांश्चमसानुन्नयन्ति, अथैत चमसमुन्नयन्ति' इति। इज्याविकारे सति, उन्नयनदर्शन युज्यते, न भक्षविकारे। तस्मादपि इज्याविकार।

वा— सदिग्धयागसाधनोन्नयनैकवाक्यता चैवमुच्यते अवकल्पते, नान्यथात्वे।

लिङ्गदर्शनाच्च। ५१॥

भाष्यम्— इतश्च पश्याम इज्याविकार इति। कुत? लिङ्गदर्शनात्। किं लिङ्ग भवति? सोमप्रतिषेधानुवाद। 'तस्मै भक्ष प्रयच्छेन सोमम्' इति। इज्याविकारे सति सोमो न भक्ष्यते। तस्मात् पश्याम इज्याविकार इति।

वा— सोमप्रतिषेधानुवादश्च लिङ्गमिति व्याख्यातम्।

शा— 'यागार्थद्रव्यसंस्काररूपभक्षणसंगते। क्लिमिनीचमसो यागे द्रव्यमित्यवधार्यते॥'
(यग्रोधक्लिमिनी न्यग्रोधफलानि तत्स्वरूप चमस)।

भाष्य— पूर्वेण सपूर्णग्रहणश्रवणात् यजमानस्य वषट्कारसत्त्वेऽपि हि फलचमसस्य न यागशेष अभ्रवणात् इति प्रत्यवस्थानात् भवति। सूत्रे श्रुति संयोगात् श्रुतौ फलचमसस्य भक्षेणैव संयोगस्य अवगमात् इत्यर्थ।

वि— 'न्यग्रोधपिष्टि सोमस्य स्थाने क्षत्रियवैश्ययो। भक्षमाना विकुर्यात् तत् सोमयागेऽपि वा तथा॥, विमर्शविषया वाक्यमुपक्रम्योपसंहृतम्। भक्ष यच्छेदिति तन्ने निर्णीतो भक्षमानय॥, फलस्य चमसेनाग्नौ यजेनेति श्रुतत्वत। इज्याया च विकारोऽस्ति यागार्था भक्षसंस्कृति॥'

भाट्ट— तत्रैव 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत्, न सोमम्' इति श्रुतम्। तत्र द्वितीयो यदिशब्दो निर्विघ्नत्वपरः। आद्यस्तु निमित्तपर एव। स्तिभिनीः अवरोहान् फलानि च। तत्रैतस्य फलचमसपदाभिधेयस्य किं भक्षणमात्रम्, किंवा यागोऽपीति चिन्तायाम्, निमित्तत्वेन अपक्षीणस्य यागस्य फलचमसान्वयित्वानुपपत्तेः तच्छब्दपरामृष्टस्य च तस्य भक्षान्वयश्रवणात् प्राप्तयागानुवादेन अनेकपेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्च अनेकगुणविशिष्टं भक्षान्तरमेव फलचमसकरणकं विधीयते। फलचमसस्य विनियोगाभावेन भक्षार्थत्वानुपपत्तेः भक्तुन्यायेन विनियोगभङ्गस्य आवश्यकत्वात्। तदपि आरादुपकारकमपि यजमानसोमभक्षस्य बाधकम्, 'न सोमम्' इत्यनुवादबलात्, 'न गिरा गिरेति ब्रूयात्' इतिवत् एककार्यकारित्वाभावेऽपि बाधकत्वरूपाया एव स्वाभाविकत्वाङ्गीकारात्। अस्तु वा अयं स्वतन्त्र एव प्रतिषेधः। इति प्राप्ते, यद्यपि भक्षान्तरविधिः, तथापि तस्य न आरादुपकारकत्वम्, 'तम्' इति द्वितीयानिर्देशेन फलचमससंस्कारार्थत्वप्रतीतेः। अनुपयुक्तस्य च संस्कारायोगेऽपि 'अध्वर्युं वृणीते' इत्यादिवत् विनियोगकल्पना। तथापि 'स यदि सोमं बिभक्षयिषेत्' इत्यनुवादबलात् यजमानकर्तृकसोमभक्षस्य च तावतैवोपपत्तौ तदंशे सोमभक्षेन सर्वांशे रूपकल्पने प्रमाणाभावात् यजमानत्वमात्रयागाभ्याससाधनत्वमेव फलचमसस्य कल्प्यते इति न काचिदनुपपत्तिः। वस्तुतस्तु, भक्षान्तरत्वे प्रमाणाभावात् सोमभक्ष एव यजमानकर्तृकः पेषणदध्युन्मृजनोत्तरकालत्वविशिष्टः फलचमससंस्कारत्वेन विनियुज्यते। 'राजा राजसूयेन' इतिवत्, 'तस्य वायवास्तु' इतिवच्च विनियोगविशिष्टप्रयोगविधानात् अवाक्यभेदः। तस्य च यजमानभक्षाभ्यासीयद्रव्यसंस्कारकभक्षसंस्कार्यत्वात् पूर्वोक्तयुक्तेश्च तदीयत्वानुमानात् कल्पितवाक्येन फलचमसस्य उक्तयागाभ्याससाधनत्वसिद्धिः। नैमित्तिकत्वाच्च अत्र नित्यसोमबाधकत्वम्। एवं च स्थानापत्त्यैव फलचमसे इत्यसोमसंस्कारात् यजमानभक्षस्यापि प्राप्तत्वे पूर्वप्रवृत्ता तद्विध्यङ्गीकरणं गुणद्वयविधानार्थम्, फलचमसस्य यागसाधनत्वसिद्ध्यर्थं चेति द्रष्टव्यम्। एतेन 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्' इत्यत्र अभिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम्। १८.

मण्डन— 'फलस्य भक्षणादि स्यात्।'

शंकर— 'स्तिमिनीचमसो यजौ।'

* फलचमसाधिकरणे स्थानापत्त्यतिदेशः निरूपितः। बाल. पृ. ११८.

* फलचमसादौ यत्र यागान्तरविध्यसंभवः प्रमाणान्तरप्राप्तिः तत्र निरवकाशेन नैमित्तिकेन नित्यापनयाभावेऽपि नित्यस्य बाधः। भाट्ट. ६।५।१ पृ. २८७.

* फलचमसन्यायः (३।५।१९।४७-५१) आग्नेयहविःश्रपणसाधनत्वस्य नैमित्तिकस्य द्रव्यश्रपणप्रयुक्तत्वेन नैमित्तिकतुल्यत्वात् फलचमसन्यायेन स्थानापत्त्यैव दधिशृतयोः प्रणीताधर्मप्राप्तिः, न तु व्रीहियवन्यायेन। भाट्ट. ९।२।१३।४८-८५.

* फलचमसविधिः। अयं विशेषविधिः द्व्यर्थः। बाल. पृ. २१.

* फलतः वाचनिको व्यवस्थितविकल्पो यथा, ज्योतिष्टोमसत्यासु गौभरे 'दीर्घ इति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। बाल. पृ. १६०, * फलतः वाचनिकी व्यवस्था यथा 'मृण्मयेन प्रतिष्ठाकामस्य प्रणयेत् कांस्येन ब्रह्मवर्चसकामस्य' इति। स्मार्ते तु— अद्यापि एव फलविशेषार्थं ऋग्यजुःसामाध्ययनविधिः। पृ. ११, * फलतः व्यवस्थात्मकः प्रतिषेधो यथा, 'यो ब्राह्मणायावगुरेत् तं शतेन यातयात्, यो निहनत् सहस्रेण, यो लोहितं कुर्यात् यावतः प्रस्कन्द्य पांसून् संगृह्णीयात् तावतः संवत्सरान् सुवर्गं लोकं न प्रजानीयात्, तस्मात् ब्राह्मणायावगुरेत् न हन्यात् न लोहितं कुर्यात्' इति। पृ. ९५, * फलतो व्यवस्थितविकल्पो यथा— ज्योतिष्टोमे षोडशिस्तोत्रे 'गौमरमुरूस्थाना बृहत्साम भवति' इत्युभयत्र बृहत्स्तोत्रसाधनत्वेन नित्यं गौमरं विहितम्। ज्योतिष्टोमातिरात्रे तु 'यदि बृहत्सामातिरात्रः स्यात् गौमरमुरूस्थाना बृहत्साम कार्यम्' इति अनारभ्यत्वेनैव नैमित्तिकं

'यदि रथंतरसामा सौभरं कुर्यात्' इति चोक्थ्यश्येऽपि नैमित्तिकं विहितम्। ततो नित्य नैमित्तिक च सौभर पुनः फलत्रयसाधनत्वेन विहितम् 'यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीत' इति। सौभरस्य च नानाशाखाभेदेन नानानिधनकस्याव्यवस्थित-विकल्पे प्राप्ते 'हीषिति वृष्टिकामाय निधनं कुर्यात् ऊर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय' इति तत्तत्फले तत्तन्निधनकस्य सौभरस्य विधानात् फलतो व्यवस्थित-विकल्पः। पृ. १६०.

* 'फलदेवतयोश्च' (१।२।३।४) इत्यत्र लिङ्गेन ये संयुक्ताः ते अपूर्वार्था न सम्भवन्ति इति पूर्वपक्षः। टुप्. ९।१।२।२. * 'फलदेवतयोश्च' कर्तव्यं इति साध्यभूतमपूर्वम्, अथवा विधेयत्वानुष्ठेयत्वाभ्या भाव एव प्रत्ययवाच्योऽभिधीयते। (शङ्कते) वाच्या-र्थोपनिपातात् स्वर्गादिफलं कर्तव्यमिति चेन्न। तस्य कालान्तरभावित्वेन प्रयोगासमवायित्वे सति तत्सिद्ध्य-र्थापूर्वस्यैव कर्तव्यत्वावधारणात्। तेन अपूर्वं कृत्वा नान्यपैति। तथा च...... फलदेवतयोश्च इत्युपन्यस्य निराकरिष्यते (उपन्यस्य फलदेवतयोश्च इति निरा-करिष्यते इत्यन्वयः। सुधा. पृ १२५६ द्रष्टव्यम्)। वा. ३।३।७।१४ पृ. ८५१.

* फलदेवतयोश्च। ९।१।३।४॥

दर्शपूर्णमासयोः 'अगन्म स्व स ज्योतिषाऽभूम' इति फलसंबन्धो धर्मः श्रुतः। तथा 'अग्नेरहमुज्जिति-मनूज्जेषम्, सोमस्याहमुज्जितिमनूज्जेषम्' इति देवता-संबन्धः। तत्र किं एते मन्त्रा. स्वर्गाग्न्यादिप्रयुक्ताः उत अपूर्वप्रयुक्ताः इति विचारे पूर्वपक्षमाह। फलदेवतयोः फलस्य स्वर्गस्य, देवताया अग्न्यादेश्च मन्त्रप्रयोजकत्वं स्यात्। तथा च सौर्ययागे स्वर्गरूपफलस्य अग्निरूप देवतायाश्च अभावेन प्रयोजकाभावात् मन्त्रनिवृत्तौ ऊहो न संभवति इति।

न चोदनातो हि ताद्गुण्यम्। ५॥

सिद्धान्तसूत्रमिदम्। दर्शपूर्णमासयोः 'अगन्म स्वः सं ज्योतिषाऽभूम' इति मन्त्र. स्वर्गरूपफलप्रयुक्तः, 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिमन्त्रश्च अग्न्यादि-देवताप्रयुक्त इति पूर्वपक्षिणा यदुक्तम्, तन्न। हि यस्मात् चोदनातः अपूर्वस्यैव फलत्वेन चोदनात् ताद्गुण्यं तद्गुणत्वं मन्त्राणां फलवदपूर्वशेषत्वम्। तस्मात् अपूर्व प्रयुक्तत्वमेव मन्त्राणाम्। तथा च सौर्ये चरौ 'अगन्म ब्रह्मवर्चसम्, सूर्यस्याहमुज्जितिमनूज्जेषम्' इत्यूहसिद्धिः अपूर्वप्रयुक्तत्वस्य तत्रापि समानत्वात्। के.

* फलदेवताधिकरणम्। दर्शपूर्णमासयो. धर्माः फलप्रयुक्ताः॥

फलदेवतयोश्च। ९।१।३।४॥

भाष्यम्— दर्शपूर्णमासौ स्तः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्र फलसंबद्धो धर्मो देवता-संबद्धश्च श्रूयते। फलसंबद्धस्तावत् 'अगन्म स्वः सं ज्योतिषाऽभूम' इति। देवतासंबद्धोऽपि 'अग्नेरहमुज्जिति-मनूज्जेषम्' 'सोमस्याहमुज्जितिमनूज्जेषम्' इत्यादिः। तत्र संशय, किं स्वर्गसंबद्धस्य कर्मणः स्वर्ग एव प्रयोजकः, अग्न्यादिसंबद्धस्य अग्न्यादयः एव, [illegible] उभयत्रापि अपूर्वं प्रयोजकमिति। यदि एवमभिसंबन्ध. क्रियते गता स्म स्वर्गम्, अग्न्यादीनां चोज्जितिमनूज्जेष इति, ततः स्वर्गाग्न्यादिप्रयुक्तः। अथ एवं क्रियते आगता दर्शपूर्णमासफलम्, दर्शपूर्णमासदेवतायाश्च उज्जितिमनूज्-जेष इति तत. अपूर्वप्रयुक्तः। किं प्राप्तम्? स्वर्गा-ग्न्यादिप्रयुक्त इति। कुतः? मन्त्राम्नानसामर्थ्यात्। यस्य मन्त्रो वाचक. स इह वदितव्य इति गम्यते। श्रुत्या च स्वर्गाग्न्यादीनां वाचको मन्त्रः। लक्षणया दर्शपूर्ण-मासफलदेवतयो। तस्मात् यत्फलदेवतं इति समाम्नात स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्म. स्यादिति।

टुप्— (चतुष्कोणकंसात् बहिष्ठ. असाङ्कितपाठ, यस्तस्तु आनन्दाश्रमीयः अधिकाक्षरकः इति ज्ञेयम्। के.) दीक्षणीयापूर्वप्रयुक्तो वाङ्नियम, न परमापूर्व-प्रयुक्त इति पूर्वाधिकरणापवादोऽयम्। दीक्षणीयासिद्धान्ते-नैव [फलदेवतयोश्च] इति अत्र पूर्वपक्ष। अग्निस्वरूप-प्रयुक्तोऽयं [मन्त्र•] स्वर्गप्रयुक्तश्च, [लिङ्गेन हि अत्र विनियोगः। सामर्थ्यं च लिङ्गम्। स्वरूपे च मन्त्राणां सामर्थ्यम्, नापूर्वीयस्वरूपे। लक्षणा हि तथा स्यात्। न च प्रकरणवशेन लिङ्गबाधो युक्तः। तेन शमं सामर्थ्यं

प्रकरणेन शक्यताम् । लिङ्गं च ततो बलवत्तरम्, न ततो बाधितुं युक्तम् । तेन यथा वाङ्नियमो ज्योतिष्टोमार्थ-दीक्षणीयार्थः तथा मन्त्रोऽपि । ] अथवा अयं [मन्त्रः] स्वसामर्थ्यादेव [ 'स्वसामर्थ्येन' इति पाठः कल्पतरौ पञ्चम्यन्त एव पाठः ] अग्निप्रकाशकः । तत्र योयोऽग्निः स सामर्थ्यविशेषात् प्रकाशनीयः । एवं प्रकरणबाधं सामर्थ्येन मन्यमानः पूर्वपक्षं करोति [ 'आरभते' इति पाठः । कल्पतरौ तु करोति इत्येन पाठः ] प्रोक्षणवत् तु उत्तरम् ।

न चोदनातो हि ताद्गुण्यम् । ५ ॥

भाष्यम्— नैतदस्ति स्वर्गाग्न्यादिसंयुक्त इति । चोदनातः ताद्गुण्यं स्यात् । यत् यस्मात् चोदयते तत् इति-कर्तव्यतया अनुबध्यते । अपूर्वं च फलवत्, न स्वर्गा-ग्न्यादि । तदर्थं वचनं सत् अदृष्टार्थं कल्प्येत । अन्यथा च अपूर्वफलदेवताबन्धने दृष्टोऽर्थः स्यात् प्रोत्साहनात् । एतस्मिन् पक्षान्तरे दृष्टे सति न स्वर्गाग्न्यादिजननस्य अपूर्वत्वता न्याय्या । शब्दार्थस्य च फलदेवतत्वेन संप्रतिपन्नत्वात् लक्षणा अदुष्टा । तस्मात् अपूर्वप्रयुक्त एवंजातीयको धर्म इति । किं भवति विचारस्य प्रयो-जनम् ? यथा पूर्वः पक्षः, सौर्ये कर्मणि अधिकारेण मन्त्रः प्रयोक्तव्यः । यथा तर्हि सिद्धान्तः ऊहेन, 'अगन्म वयसमर्वसम्' 'सूर्यस्योज्जिति( स्वाहगुज्जिति )मन्-ज्जेषम्' इति । फले पर्यवसितम् । देवतायामुत्तरा चिन्ता वर्तिष्यते ।

शा— 'तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः । फलस्याद्दृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ अग्न्यादेर्योज्यमानस्य फलदायित्वसंभवात् । तादर्थ्येनैव मन्त्रस्य युक्तम्, नापूर्वशेषता ॥ ( सिद्धान्तमाह— ) सत्यं फलस्य सर्वस्मात् प्राधान्यं न तु वाक्यतः । मन्त्रस्यादृष्टरूपत्वेऽपि स्याद्वाक्यात्तदर्थत्वप्रसङ्गतः ॥'

सोम— पूर्वत्र यथा परमापूर्वार्थदीक्षणीयाऽपूर्वार्थत्वं वाङ्नियमस्य न परमापूर्वार्थत्वम्, एवं मन्त्रस्यापि अग्न्याद्यर्थत्वं न तद्द्वारा दर्शपूर्णमासार्थत्वं इत्युचितैः संगतिः ।

वि— 'अगन्मादेः स्वर्गदेवौ हेतू यद्वाऽत्र चोदि-तम् । , आद्यो लिङ्गात्, नैवमङ्गस्यापूर्वोकाङ्क्षितत्वतः ॥'

भाट्ट— पूर्वोक्ताया अपूर्वसंबन्धित्वेन उद्देश्यतायाः क्वचिदाक्षिप्य समाधानार्थं इदमधिकरणम् । दर्शपूर्ण-मासयोः 'अगन्म सुवः सुवरगन्म' इति स्वर्गप्रति-पादको मन्त्रः । 'अग्नेरहमुज्जितिमनूज्जेषम्' इत्यादिश्च अग्न्यादिप्रकाशको मन्त्रः श्रुतः । तयोश्च स्वर्गलाभि-त्यादिनैव स्वर्गाग्न्योः लिङ्गकल्प्यश्रुतौ उद्देश्यता उप-स्थितत्वात्, न तु अपूर्वसंबन्धित्वेन मुख्ये एवार्थे विनि-योगस्य औत्सर्गिकतायाः साधितत्वेन तेन रूपेण स्वर्गादि-पदैः अनभिधानात् । न च स्वर्गादिस्मरणे आनर्थक्यम्, साक्षात् फलरूपस्य तस्य अनिष्टातीभावस्याविरोधेन तद-र्थत्वे वैयर्थ्याभावात् । मन्त्रजन्यप्रकाशनव्यतिरेकेण इतरा-ङ्गयुक्तप्रधानमात्रादेव उत्पत्तिसिद्धेः आनर्थक्यं अपूर्वे-ऽपि तुल्यम् । प्रयोगविधिना सर्वाङ्गसाहित्यावगतेः मन्त्रजन्यप्रकाशनव्यतिरेकेण अपूर्वानुत्पत्तिः इति स्वर्गेऽपि तुल्यम् । एवं देवतायामपि मन्त्रार्थवादेति-हासादिवशात् सत्यपि अपूर्वे तज्जनितदेवताप्रसादादेव फलोत्पत्त्यवगतेः प्रसादस्य च मन्त्रजन्यप्रकाशनव्यति-रेकेण उत्पत्तौ प्रमाणाभावात् तदर्थत्वम् । अत एव लिङ्गकल्प्यश्रुतिविनियोगविधौ उपस्थितत्वात् प्रसादा-श्रयीभूतमूर्तेरेव सत्वेन उद्देश्यता, न तु अपूर्वोपदेशतात्वेन इति न सौर्यादौ ब्रह्मवर्चससूर्यादिपदोहः । इति प्राप्ते, न तावत् सौर्यादिषु श्रवणादीनां अपूर्वार्थत्वमपहाय स्वर्गार्थत्वं शङ्कितुं शक्यम्, दीक्षादिपदेन प्रयाजप्रकृतया तेषामपूर्वाधिकरण-न्यायेन आश्रयापूर्वस्यपूर्वसाधनत्वस्यैव लक्षणात् । एवं अपूर्वाद्यतिरेकेण देवताप्रसादार्थत्व अव-घातादीनां नियतत्वम् । देवताप्रसादस्य अपूर्वजन्यत्वेना-प्रत्यासन्नत्वात् । उदाहृतमन्त्रस्थलेऽपि च न स्वर्गमन्त्रस्य स्वर्गार्थत्वसंभवः । नहि किं दर्शपूर्णमासजन्यस्वर्गव्यक्ति-प्रत्येव मन्त्रजन्यप्रकाशनस्योपयोगः, उत स्वर्गपदत्वान्तर प्रति । नान्त्यः, तथात्वे दर्शपूर्णमासाङ्गत्वाभावात्सामान्य-संबन्धबोधकप्रमाणाभावेन लिङ्गकल्प्यश्रुतेरेव अकल्पनेन स्वर्गार्थत्वे एव प्रमाणाभावात् । न च स्वर्गाधिकार एव सामान्यसंबन्धबोधकं प्रमाणम्, स्वर्गस्य यागाख्य-

• फलप्रयुक्तत्वं नास्ति द्रव्यसंस्कारकर्मणाम्, तत्र फलश्रुतिरर्थवादः । ४।३।१।१-३.

• फलभवनवादः नासत्यन्यथा । वा. २।२।३।३ पू. ४८३, सु. पृ. ७३३.

• फलभाज एव प्रधानकर्तृत्वं इति न्यायः । परिमल. ३।४।१३।४४ वम्.

• फलभावनाकरणत्वं एकस्यैव । मीन्या.

▣ फलभूमाधिकरणम् । अङ्गानां प्रयाजादीनां एकस्मिन् प्रयोगे सकृदनुष्ठानम् ॥

क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् । ११।१।७।२९॥

भाष्यम्— प्रयाजादीनि उदाहृत्य चिन्त्यते । किं सकृत् प्रयोग एषां उत अभ्यासोऽपि कर्तव्य इति । तत्र 'धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्' (११।१।६।२८) इत्यनेन न्यायेन सकृत् प्रयोगे प्राप्ते एवमुच्यते, 'क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात्'। अभ्यासः कार्यः । कुतः ? यतः अभ्यासे फलभूमा स्यात् । कथं ज्ञायते । अनुमानेन । किं तदनुमानम् ? प्राक् अङ्गप्रयोगात् प्रधानोपकारो नासीत् ऊर्ध्वं ततो भवति, तेन विज्ञायते नूनं अङ्गेन क्रियते इति । क्रियते चेत् पुनःपुनरपि करिष्यते । क्रतुवत्, यथा कर्मसु सौर्यादिषु फलं कर्मणा क्रियते । तत्र कर्माभ्यासे फलभूयस्त्वम्, एवमिहापि ।

सकृद्वा कारणैकत्वात् । ३० ॥

भाष्यम्— सकृत् वा अङ्ग प्रयोक्तव्यम्, नावृत्या । कुतः । कारणैकत्वात् । एक कारणमङ्गानां प्रधानोपकारः । कः पुनरसौ ? येन प्रधानानि फलं ददति । यद्येन सकृत्प्रयुक्तेनाङ्गेन कृतं आसानि प्रधानानि फलं ददतीति, पुनरङ्गस्याप्रयोगः । अथ न कृतम्, पुनरपि प्रयोगः । येन सकृत्कृतेन नोपकृतम्, स पुनः क्रियमाण उपकरिष्यति इति का आशा ।

परिमाणं चानियमेन स्यात् । ३१ ॥

भाष्यम्— यदि चानियमः सकृदसकृद्वा प्रयोगः, ततः 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति योऽयं नित्यवदाहुतिपरिमाणानुवादः, स न स्यात् । स तावत् भवता पाक्षिकः कल्प्येत तथा चास्य रूपं नाप्येत । तस्मादनभ्यासः ।

फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् । ३२ ॥

भाष्यम्— यत्तु क्रतुवदिति, युक्तं यत् क्रतुषु अभ्यासः । फलस्य आरम्भनिर्वृत्तेः । कर्मारम्भेण [illegible] फलं निष्पद्यते । आरम्भान्तरेण अपरं निष्पत्स्यते इति । अङ्गस्य पुनः उक्तपरिमाणं फलं प्रधानानां फलवत्तासम्पादनम् । तच्चेत् सकृत्त्वेन कृतम्, न भूयः क्रियाऽस्तीति । एवमसदृशो हेतुः । तस्मादनभ्यासः ( अभ्यासे दृष्टान्तस्य ) ।

अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् । ३३ ॥

भाष्यम्— यदुक्तं सकृत्कृतेन अङ्गेन कृतत्वात् अर्थस्य अनर्थकोऽभ्यास इति । अत्र ब्रूमः । अर्थवांस्तु अभ्यास अङ्गानाम्, नानर्थकोऽभ्यासः । कथं कृत्वा ? एकत्वादभ्यासः स्यादनर्थकः । यदि एकमेवार्थं अभ्यस्यमानमपि अङ्गं करोति, ततः अभ्यासोऽनर्थकः स्यात् । यथा भोजनमेकस्मिन् काले अभ्यस्यमानं एकमेव फलं तृप्तिं करोतीति गम्यते । अपि तु अर्थस्य अपरिमाणत्वात् । इयन्तमुपकारं करोत्यङ्गं इति न ज्ञायते । ननु यावता प्रधानं फलवद्भवति तावत् करोति इति गम्यते । सत्यमेतत् । किन्तु प्रधाने क्रियार्थत्वात् अनियमः स्यात् । प्रधानस्य फलक्रियार्थमङ्गम् । तत्तु प्रधानफलमपरिमितम् । तदङ्गोपकारस्य भूयस्त्वे भूयो भविष्यति । अल्पत्वे अल्पम् । अभ्यासे च अङ्गस्य भूयानुपकारः स्यात् सार्थत्वात् तस्य । तस्मादनियमः स्यात् सकृद्वा प्रयोगः, अभ्यासो वेति ।

पृथक्त्वाद्विधितः परिमाणं स्यात् । ३४ ॥

भाष्यम्— यत्तु आहुतिसंख्या विरुध्यते इति, पृथक्त्वादुपकारस्य अभ्यासे न्याय्यत्वे योऽयं आहुतिसंख्यानुवादः स विधितः स्यात्, आहुतिनियमाभिप्रायः 'चतुर्दश पौर्णमास्यां आहुतिविषयः, त्रयोदश अमा-

साम्नायाम्' इति। नहि आहुतिसत्त्वं युज्येत। आहुतिविधिस्त्वा तु लक्षणया उपपद्यते।

**अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात्॥ ३५॥**

**भाष्यम्**— अनभ्यासो वा अङ्गानाम्। कुतः? प्रयोगवचनैकत्वात्। एकं प्रयोगवचनं अङ्गानां प्रधानानां च। तस्यैकत्वात् सर्वस्य युगपच्छासनं 'अनेन कर्मणा साङ्गेन यजेत' इति। सकृत्कृतैश्चाङ्गैः कृतं साङ्गं भवतीति न पुनः क्रियाया हेतुरस्ति। ननु उपकारभूयस्त्वं भविष्यति। यदि अङ्गानि अदृष्टमुपकारं कुर्युः, ततः तदभ्यासे उपकारभूयस्त्वमनुमीयेत। दृष्टमेव तु अर्थं अङ्गानि कुर्वन्ति प्रधानस्योपकारकत्वात्। सा च अभ्यासेऽपि तावत्येव अङ्गवत्ता। सा चेह फलवत्ता साङ्गेन यजेत इति, साङ्गानि। अङ्गानि तत्सम्पादनेन अर्थवन्ति। ननु एतदयुक्तमिव। यदा हि प्रयाजाः, न तदा प्रधानयागः अपूर्वं वा। यदा च यागः अपूर्वं च, न तदा प्रयाजाः। तदेवं अदृष्टरहिते सन्निधानमात्रे सति अङ्गत्वमेव नास्ति, कुत उपकारः? अपि च यदि सन्निधानमेवाङ्गेषु, नापूर्वफलमस्ति, ततः सोमाङ्गभूतानां इष्टिपशुबन्धानां चोदक एव नास्ति। अकर्तरि हि अपूर्वे इतिकर्तव्यताकाङ्क्षा नास्ति। यजतेः प्रकृतेतिकर्तव्यता कत्वात् इतिकर्तव्यता चोदको नातिदिशेत्। तथैतानि दर्शनानि नोपपद्येरन्। 'तस्यैकस्य प्रयाजानुयाजाः, न च समिष्टयजूंषि जुहोति, प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति। तस्मादियं अन्या व्याख्या। अनभ्यासो वाऽङ्गानां प्रयोगवचनैकत्वात्। एकः प्रयोगवचनः अङ्गानां प्रधानानां च। तस्यैकत्वात् सर्वस्य अङ्गप्रधानकलापस्य युगपच्छासनम्। तत्र प्रधानानामनभ्यासः। कस्य हेतोः? सकृत्कृतैः प्रधानैः कृतश्रुत्यर्थः, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। कृते श्रुत्यर्थे यत् शास्त्रविहितं फलं तल्लब्धम् इति न पुनःक्रियाया हेतुरस्ति। एवमङ्गेष्वपि सकृत्कृतेषु यदङ्गानां भावकं शास्त्रं तस्यार्थः कृतः। तस्मिन् कृते यत् शास्त्राभिमतं अदृष्टं तल्लब्धमिदानीं इत्यवगन्तव्यम्। तथा च सति अभ्यासोऽनर्थकः। ननु फलभूयस्त्वं भविष्यतीति। तदयुक्तम्। दर्शपूर्णमासयोर्यत् फलं तत्साधनतया अङ्गोपकार उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ। यदि अपूर्वं फलं अङ्गैः साधयेत्, अङ्गफलमेव तत् स्यात्। न चाङ्गानि फलवन्ति। प्रधानानां स्वकार्यं साधयतां अदृष्ट उपकारः क्रियते। सकृत्कृतेश्चासौ कृतः। तस्मात् नाङ्गावृत्तौ फलभूयस्त्वमस्ति।

**टुप्**— भाव्यः स्वर्गः, भावको यागः। इतिकर्तव्यता यागस्यानुग्रहं करोति, न फलसाधिका। तस्मात् फलं न भूयते, करणात् फलमिति। स्वल्पम्, करणस्य फलं साधयतः अभ्यस्यमाना इतिकर्तव्यता महान्तमुपकारं करोति। तथा महता उपकारेण अनुगृहीतं महत् फलं करोति। अथाह, सकृत् इतिकर्तव्यता। कुतः? भावनया करणेतिकर्तव्यते आकाङ्क्षिते। तत्र करणं फले व्याप्रियते, इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता। सकृत्कृतया च निराकाङ्क्षीकृता भावना। द्वितीयादि प्रयोगः केन आकाङ्क्ष्यते। तस्मात् सकृत्। अत्र भाष्य- 'यदा प्रयाजाः, न तदा प्रधानयागः, अपूर्वं वा, यदा च यागः अपूर्वं च न तदा प्रयाजाः' इति (भाष्यम्) एतदयुक्तम्। कथम्? यस्मिन्नेव क्षणे स्वर्गो भावने कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव करणमपि भावकत्वेन व्याप्रियते। इतिकर्तव्यताऽपि तस्मिन्नेव करणमनुगृह्णाति। यदि अन्यस्मिन् क्षणे स्वर्गो भावने कर्तृत्वं प्रतिपद्येत, करणमपि अन्यस्मिन् भावकम्, तथा सति भाव्यभावकसम्बन्ध एव न स्यात्। तस्मात् यौगपद्यं स्वर्गयागयोः। एकमेव करणेतिकर्तव्यतयोः। तस्मादेषा तुल्यकालता। न च अवान्तरक्रियाः परस्याभिप्रेताः। भिन्नकाला अपि सत्यः प्रयाजादिक्रिया एवाभिप्रेताः। तथानुक्तम्, स्वरूपाणां भिन्नत्वादिति।

**अभ्यासो वा छेदनसंमार्गावदानेषु वचनात् सकृत्त्वस्य॥ ३६॥**

**भाष्यम्**— अभ्यासो वा अङ्गानाम्। कुतः? पितृयज्ञे श्रूयते 'सकृदाच्छिन्नं बर्हिर्भवति' इति। तथा अनुयाजे 'सकृत् परिधीन् सम्मार्ष्टि' इति। स्विष्टकृति

च ' उत्तरार्धात् सकृदवद्यति ' इति । तत्र असकृदङ्गानां प्रयोगः, ततः एतानि वचनानि उपपद्यन्ते । तस्मादभ्यासः ।

अनभ्यासस्तु वाच्यत्वात् । ३७ ॥

भाष्यम्— अनभ्यासस्तु अङ्गानां यथोक्तेन न्यायेन । यत्तु छेदनादिषु वचनात् सकृत्त्वस्य अन्यत्र अभ्यासो विज्ञायते इति । अत्र ब्रूमः । यद्यपि अनभ्यासः, तथापि छेदनादिषु वाच्यं सकृत्त्वम् । दर्शपूर्णमासयोः ' असकृदा च्छिन्न बर्हिर्भवति ' इति वचनात् । तथाङ्गनिगमात् पितृयज्ञेऽपि असकृत् प्राप्तम् । तथा अस्ते सकृत्त्व वाच्यम् । एवं प्रयाजेषु त्रिः समानीं उक्तः । सोऽनुयाजेषु पुनरावर्तते । तथापि त्रिस्वे प्राप्ते सकृत्त्वं विधातव्यम् । तथा ' द्विर्हविषोऽवद्यति ' इत्यविशेषेणोक्ते स्विष्टकृत्यपि द्विरवं प्राप्ते तत्र सकृत्त्वं विधीयते । तस्मात् छेदनादिषु सकृद्वचनात् नान्यत्र अभ्यासो विज्ञातुं न्याय्यः इति ।

शा— फलभूमार्थिना कर्माणि पुनः पुनः प्रयोक्तव्यानि इति स्थिते चिन्त्यते, किं एकस्मिन् प्रयोगे अङ्गानि पुनः पुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति, नेति । तत्र अभ्यस्यमानानि अङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तं च प्रधानं फलभूयस्त्वाय भवति इति मन्वानस्योत्तरम् । समग्रसारणाङ्गत्या हि कार्यमात्रवर्तते, प्रधानं च साङ्गं फलसामग्री नाप्रमाणम्, अतस्तन्मात्राङ्गत्या न भूयः फलदानम् । न च उपकारभूयस्त्वात् फलभूयस्त्वं प्रमाणाभावात् । न चात्र अङ्गाभ्यासः शास्त्रीयः । नचाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुम् । अतः फलभूमार्थिना साङ्गं प्रधानं अभ्यसितव्यम्, नाङ्गमात्रम्, नापि प्रधानमात्रम् ।

सोम— सूत्रार्थस्तु— अङ्गं फलभूमार्थमभ्यासमर्हति सफलत्वात्, शौर्यादिवत् इत्यनुमानेन अङ्गाभ्यासे फलभूमा स्यात् इति ।

वि— ' अङ्गेऽभ्यासो न वा, भूम्नाऽभ्यासो, नाङ्गे पृथक् फलम् । अङ्गावृत्तेर्न भूमाऽतः प्रयोगोऽङ्ग सकृद्भवेत् ॥ '

भाट्ट— एकस्मिन्नेव प्रयोगे पुनः पुनः क्रियमाणेऽङ्गे प्रयासगौरवेण फलाधिक्यं मन्वानस्योत्तरम् । न तावत् फलान्तरोत्पत्तिः, एकस्मात् प्रधानात् एकस्यैव फलस्य उत्पत्तिनियमेन प्रधानावृत्त्यभावे सामग्र्यभावेन फलान्तरोत्पत्तौ प्रमाणाभावात् । नापि तस्यामेव फलव्यक्तौ अतिशयमात्रम् ' अतिरात्रे षोडशिनं गृह्णाति ' इत्यादिवत् फलभूमा । स हि यत्र तद्व्यतिरेकेण कल्पकार-सिद्धिः प्रमाणप्रमिता, तत्रैव वृद्धिविधिवैयर्थ्यभिया कल्प्यते, यथा षोडशिग्रहणात्, यथा वा ' एका देया, षड् देयाः ' इत्यादौ । प्रकृते तु अङ्गविधीनां सकृत्करणेन चरितार्थत्वात् कृतोऽस्य एकवत्प्रकारमन्त्रापेक्षितस्य पुनरनुत्पत्तावेपन्नत्वं गुरुपेक्षमाणेनैव आवृत्तौ फलाधिक्ये प्रमाणाभावः । यत्र हि ' पशुमालभेत ' इत्यादौ महान् पशुरालभ्यते, यत्र स्वल्पः, तत्रापि न फले तारतम्य इत्युक्तं भाष्ये ( ११।१।१।४४ अक्षरभेदेन ) । तत्र प्रयाजादीनां पुनःकरणे का सम्भावना । ' गां दद्यात् ' इत्यादौ तु समीचीनगोदाने फलाधिक्यमस्त्येव इति ध्येयम् ।

मण्डन— ' अङ्गं प्रयाजादि सकृत् प्रकुर्यात् । '

शंकर— ' नाङ्गावृत्त्या फलं बहु । '

● फलभूमार्थी बहुकृत्वः प्रयोगे प्रवर्तेत, सकृदङ्गः सकृत् । भा. ११।१।४।२४.

● फलभेदः कर्मभेदहेतुः । सु. पृ. ९१९.

ꣲ फलगुरुगौरवं न दोषावहमिति न्यायः । यत्र गौरवे फलसपत्तिर्भवेत् तत्रायं प्रवर्तते । यथा चायं न्यायो मुक्तावल्यां समासलक्षणानिरूपणप्रस्तावे निरूपितस्तथाहि, अत एव ' निषादस्थपतिं याजयेत् ' इत्यत्र न तत्पुरुषो लक्षणापत्तेः, किन्तु कर्मधारयः लक्षणाभावात् । न च निषादस्य संकरजातिविशेषस्य वेदानधिकाराद्याजनासम्भव इति वाच्यम्, निषादस्य विद्याप्रयुक्तेस्तत एव कल्पनत्वात् लाघवेन मुख्यार्थान्वये तदनुपपत्त्या कल्पनायाः फलमुखगौरवतया इति दिक् । साहस्री. ४७६.

● फलमुखप्रतिपत्तिविधिकल्पनानुमतिः भौमविधेः प्रकाशाक्षेपाधिकल्पनागौरवपरिहारार्थम् ( ' प्रथमदोषेण हरीं प्रभिधारयति ' इत्यत्र ) । भाट्ट. ४।२।१४.

● फलवत् यद्दीयते तत् प्रतिकर्मण्यनयः अनुवर्त्यते । भा. ९।१।४।५.

■ फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् । ४।४।४।७॥

'वैश्वदेवीं साङ्ग्रहणीं निर्वपेद् ग्रामकामः' इति विधाय 'आमनमस्यामनस्य (आमन असि आमनस्य इति पदच्छेदः) देवा इति तिस्र आहुतीर्जुहोति' इति आमनहोमा उक्ताः। ते किं साङ्ग्रहणीष्ट्या समप्रधाना उत तस्या अङ्ग इति विचारे समप्रधाना इति उत्सूत्र पूर्वपक्षे प्राप्ते वामन्देन ■ निरस्य सिद्धान्तयति। फलवत् सफल साङ्ग्रहणीकर्म इतरस्य आमनहोमत्रयस्य प्रधानं स्यात् आमनहोमत्रय च अङ्ग स्यात्। उक्तहेतुत्वात् 'फलवत्संनिधावफल तदङ्गम्' इति हेतोरुक्तत्वात्। उक्तो हेतुरस्य इति उक्तहेतु तादृशत्वात्। के

● फलवद्धि अफलस्य प्रधानम्। भा. ४।४।४।७, ● यत् फलवत् तत् पुरुषस्य चिकीर्षितम्। १०।६। १८।६७, ● यो हि आरम्य परिसमापयति स फलवान्। एष हि आख्यातार्थ.। स हि उपक्रमप्रभृति अपवर्गपर्यन्तमाह। ६।१।१।२४ पृ. १४२२, ● फलवति च प्रयाजो विधीयमानोऽर्थवान् भवति। ७।१।१।१.

■ फलवदफलन्यायेन अग्निहोत्रस्य अन्यलभ्यस्वर्गसंबन्धबोधनद्वारा तत्संनिधिसमाम्नाताना अनिर्दिष्टफलाना कर्मणा तदङ्गत्वप्राप्तिः। ('फलवत्संनिधौ अफल तदङ्गम्' इति न्यायस्वरूपम्।) 'पृथक्त्वे त्वभिधानयोर्निवेशः ●' ४।४।११।३४ इति सूत्रोपात्तश्चाय न्यायः)। रसायनम्. पृ १७, ● कर्मान्तरत्वे (रथंतरसामा, बृहत्सामा इति ज्योतिष्टोमात् कर्मान्तर इति पक्षे) तत्र फलवदफलन्यायेन ज्योतिष्टोमाङ्गत्वात् ज्योतिष्टोमाङ्गत्वेन केवलरथंतरसामक कर्मान्तरमनुष्ठेयम्। (इति पूर्वपक्षे)। सोम. २।१।१.

● फलवत्त्वं मुख्यलक्षणम्। 'तत्पुनर्मुख्यलक्षणं यत् फलवत्त्वम्'। सूत्रं ४।४।११।३४. ● फलवत्त्व विश्वजिदादीनाम्। ४।३।५।१०-१२.

● फलवन्निगदा अपि विधेयस्तावका। १।२।२. मीको पृ. १३३६ 'औदुम्बर्यधिकरणम्' इत्यत्र द्रष्टव्यम्।

● फलवन्निगदाधिकरण अर्थवादाधिकरणस्यैव शेष। मु पृ. ९३.

● 'फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता। निष्फलत्वेन शब्दस्य योग्यत्वादवधार्यते॥' (श्लोवा. शब्दनित्यताधिकरणम् श्लो. ३३८) इति न्याय। मु पृ २३. अत्र रत्नाकर – फलवतः गवानयनादिव्यापारस्य अङ्गभूत. अर्थप्रत्यय. तत्फलत्वेनैव फलवान्, शब्दस्तु आरम्भसंस्कारमात्र. स्वयमफलस्य फलवत्प्रत्ययाङ्गता अव गम्यते इति।

● 'फलवत्संनिधावफलं तदङ्गम्' इति न्याय। ['पृथक्त्वे त्वभिधानयोर्निवेशः, श्रुतितो व्यपदेशाच्च, तत्पुनर्मुख्यलक्षण यत् फलवत्त्वम्, तत्संनिधावसंयुक्त तदङ्ग स्यात्, भागित्वात् कारणस्य, अश्रुतत्वान्यसंबन्ध' ४।४।११।३४ इति सूत्रम्, तदवयव. 'तत्संनिधावसंयुक्त तदङ्गं स्यात्' इति। तदर्थ एव फलवत्संनिधावफल तदङ्गमिति न्याय। के] इतरत्तु (यागेभ्य) फलवत्संविधानात् तदङ्गं भवति। शा. ४।४।१. ● 'फलवत्संनिधावफल तदङ्गम्' इति न्याय। ननु अन्योन्यविशेषणविशेष्यभावरहितानामपि अङ्गाङ्गिभावो भवतु। नेति ब्रूम 'फलवत्०' इति न्यायवैषम्यात्। नृसिंहपूर्वतापनीयोपनिषद्भाष्यम् १।१. ● सगुणवाक्यस्य निर्गुणवाक्यसंनिधौ पठितस्य 'फलवत्संनिधौ अफलं तदङ्गम्' इति न्यायेन तदनुगुणतया नेयत्वम्। अद्वैत २।४।२५९. ● 'फलवत्संनिधावफल तदङ्गम्' इति न्यायात् फलवद्विद्यासंनिध्याम्नातानां तदङ्गता। न्यायनि ३।३।१४।२५ भमू. ● 'फलवत्संनिधावफल तदङ्गम्' इति न्यायात् स्वतःअफलत्वतः सोमस्य दर्शपूर्णमासाङ्गत्वासंभवः। वि. ४।३।१६. ● निष्प्रपञ्चवाक्येष्वेव फलश्रवणात् 'फलवत्संनिधावफल तदङ्गम्' इति न्यायात् सप्रपञ्चवाक्याना तदेकवाक्यता इति (वृत्तिकारमतम्)। न्यायनि. ३।२।५।११ भमू. ● सफला हि सर्वा विद्या आम्नाता। तत्संनिधौ मन्त्रा कर्माणि च समाम्नातानि 'फलवत् संनिधावफल तदङ्गम्' इति न्यायात् विद्याङ्गभावेन विज्ञायन्ते। भामती ३।३।१४।२५ ब्रसू. ● 'फलवत्संनिधौ अफल

वन्तम् '। फलसन्निधेस्तु आधारादीनि आरादुपकारकाणीति। भा ३।२।३।३, * फलसन्निधौ अफलं तदङ्गम्। अन्येऽपि नित्यनैमित्तिकादिषु प्रयोजनवत्सु कर्मसु यत्फलेन श्रूयते तत् तदङ्गं विज्ञायते इति मन्यमाना कर्मार्थं चात्र या उपदिष्टैव इतिनो मन्यन्ते, न तु स्वतन्त्रस्य प्रयोजनवतोऽङ्गमिति । ४।१।३।८ * फलसन्निधौ अफलमनान प्रधानफलस्य ग्रहणहेतु । मु पृ १०७०

फलवत्सहकारन्याय । यथा आपस्तम्बसूत्रम्, तद्यथा- ' आम्रे फलार्थे निर्मिते छायागन्ध अनूत्पद्येते, एवं धर्मे चर्यमाणे अर्था अन्येऽनूत्पद्यन्ते ' । यथा ' आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ ' इत्यभिधानादतिसौरभ आम्रवृक्षोऽतिमधुरफलप्राप्तिकामेन समुपसेव्यमानश्छायार्थिने जनाय फलं परिमलं चाप्रार्थितमपि ददाति, तथैव फलप्राप्त्या स्वेष्टदेवताराधनमन्यदपि फलं प्रयच्छतीति । एतत् समानविषयकं लौकिकन्यायद्वयं तत्स्थापि बोध्यम् । साहस्री. ४

• फलवाक्यस्य स्वरूपेण फलविधिमात्रपरत्वम्, उत्पत्तिविनियोगवाक्यैकवाक्यतया च प्रयोगविधानार्थत्वम् । मु पृ ७१५

* फलविधानमपि वाक्यान्तरस्थेन विधिशब्देनापि भवति। भा ४।३।७।१२ • फलविधान हि वैदिकेन शब्देन ( ' प्राणापानावेवात्मन् धत्ते ' इत्यादिना ) न क्रियते इति पक्षान्तरम् ( ४।३।११-१२ द्रष्टव्य )। भा ३।४।८।१८

• फलविधि अर्थवाद ' प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति ' इति । वाल पृ ७३ • फलविधि ' खादिरं वीर्यकामस्य यूपं कुर्यात्, पालाशं ब्रह्मवर्चसकामस्य, बैल्वमन्नाद्यकामस्य ' इति । भा ७।३।११. • फलविधि त्रिविध यजमानगामिफलविधि, ऋत्विग्गामिफलविधि, उभयगामिफलविधिश्चेति । वाल पृ ६२

• फलविधिमन्त्र अर्थवाद ' यस्य पर्णमयी जुहूर्भवति ' इति । वाल पृ ७२, • फलविधिमन्त्र मन्त्र ' आयुर्दा अग्नेऽस्यायुर्मे देहि ' इति । पृ ६२

* फलश्रुति अङ्गेषु स्तुतिरेव, न फलविधि । भा ४।३।८।१९ * फलश्रुति अप्राधान्यस्यापि प्रत्यक्षशिष्टत्वात् न फलान्तरत्वम् विज्ञायते । यथा 'योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इति ज्ञानमात्रादेव ब्रह्महत्यातरणं यदि सिध्येत् को जातुचित् बहुद्रव्यसाध्यमश्वमेधं कुर्यात् । भा ।।३।८।२७ पृ २८७ • फलश्रुति अर्थवाद आशास्यो । आशास्ये हि मन्त्रकर्म फलार्थम् । भा ४।१।२।१-४.

• ' फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् ' ( २।२।११।२५-२६ ) इत्यधिकरणे गुणफलत्व व्युत्पाद्यते । [redacted] पृ ८४८

फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात्। २।२।११।२५ ॥

' अग्निहोत्रं प्रकृत्य दध्नेन्द्रियकामस्य जुहुयात् ' इति समामनन्ति । तत्र किं अग्निहोत्रहोमात् होमान्तरं दध्ना होमः उत दध्यादेर्गुणात् फलम् इति विचारे पूर्वपक्षमाह । 'दध्ना जुहुयात्' इति कर्म होमान्तरं स्यात्, फलश्रुतेः । इन्द्रियमात्रं फलम् श्रूयते, तच्च कर्मणो न्याय्यम् । फलस्य कर्मयोगित्वात् फलस्य वाक्यसमाप्यत्वात् । तस्मात् दधिविशिष्टो होमः फलाय विधीयते इति कर्मान्तरोक्तत्वम्। तुशब्दः पूर्वाधिकरणसिद्धान्तात् वैलक्षण्यमाह।

अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत । २६ ॥

पूर्वनव तुशब्देन व्यावर्तयन् सिद्धान्तमाह । वाक्ययोः, ' अग्निहोत्रं जुहुयात् स्वर्गकामः ' ' दध्नेन्द्रियकामस्य जुहुयात् ' इति वाक्ययोः अतुल्यत्वात् तुल्यत्वाभावात् तस्य अग्निहोत्रहोमस्य गुणे दधिरूपे फलमत्र प्रतीयेत गुणात् फलं इति । स्वर्गकामवाक्ये होम एव स्वगायत्वेन विधीयते । इन्द्रियकामवाक्ये तु होमाश्रितस्य दध्न इन्द्रियार्थत्वेन विधि इति अतुल्यत्वम् । तस्मात् न कर्मान्तरविधि किन्तु फलाय गुणविधि । फे.

फलश्रुतेस्तु कर्म स्यात् फलस्य कर्मयोगित्वात् । २।२।१०।२५॥

अग्निहोत्रं प्रकृत्य समामनन्ति ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्येवमादि । तत्र संदेहः किं अग्निहोत्रहोमात्

होमान्तरं दध्यादिहोम उत दध्यादेर्गुणात् फलं इति। इदानीं पूर्वप्रतिपादितस्य गुणनिमित्तस्य भेदस्यापवाद क्रियते।

अत्राय पूर्वपक्षिणोऽभिसंधि । भावार्थाधिकरणे ह्येतदवस्थितम्, आख्यातशब्दा फलपदसम्बन्धिनो न द्रव्य गुणशब्दा । तदत्रापि तेनैव न्यायेन 'इन्द्रियं भावयेत्' इतीन्द्रियभावना साधनाकाङ्क्षिणी समानपदोपात्त होम (रूपधात्वर्थ)मेव करणतया गृह्णाति, न विप्रकृष्ट द्रव्यम्। न चैव सति फले होमविधानाद्धोमे च दधिविधानाद्वाक्यभेद, अगत्या 'दशापवित्रेण ग्रह सम्मार्ष्टि' इति वत् दधिमता होमेनेन्द्रियं भावयेदिति मत्वर्थलक्षण(या विशिष्ट)विधानेनैव कर्मान्तरविधानोपपत्ते । ननु भवतु होमात् फलम्, तथापि प्रकृत एव होम 'सन्निधौ त्वविभागात्फलार्थेन पुन श्रुति' (२।४।१३।२६) इति न्यायेन स्वाग्यावाभीयमयोरिवेन्द्रियफले विधीयताम्। मैवम्। दधिविशि(ष्टेन) होमेन उत्पत्तिवाक्यगतहोम स्वरूपाप्रत्यभिज्ञानात्। तदुक्तम्— 'होमो हि प्रकृत शुद्ध स्वाख्यातावधारित । सोऽस्मिन् दधिविशि ष्टत्वाभाविभागेन गम्यते ॥' इति (वा पृ ५४०)। न च 'दध्ना जुहोति' इति दधिविशिष्टोऽपि होमो विहित एवेति तत्प्रत्यभिज्ञानमिति वाच्यम्। यतो गुण वाक्य ह्येतत्। न च गुणवाक्यफलवाक्ययोरुत्पत्तिवाक्या पेक्षयो परस्परनिरपेक्षत्वात् सम्बन्धोऽस्ति। तदुक्तम्— 'सान्युत्पत्तिमपेक्षन्ते सा चाव्यवहिता यत । गुणादीना त्वसम्बन्धाद्व्यवधि स्यात् परस्परम् ॥' इति। (वा पृ ५८१)।

न च उत्पत्तिवाक्यावगतमेव क्रम गुणवाक्यापादित दधिसम्बद्ध फले विधास्यतीति वाच्यम्। नित्यानित्य संयोगविरोधात्। एव ह्यत्र वचनव्यक्ति । यदीन्द्रिय-काम स्यात्तदा नित्य केवलदधिविशिष्टहोम (भावये)दिति दधि वैकल्पिकत्वेन दशमे पक्षे सम्बध्यते । अतो यथाभूतो नित्यदधिविशिष्टो होम इन्द्रियकामवाक्ये प्रतीयते, तादृशस्याप्रत्यभिज्ञानात्, अनुपादेय फलं प्रत्यु पादानात् कर्मान्तरमवति। तदुक्तम् 'दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम्। नित्य चेन्द्रियकामस्य तेनापि न निरूप्यते ॥' इति (वा पृ ५४१)। न च प्रकृत होमाश्रितस्यैव दध्न फले विधानमस्ति, किं विशिष्टोऽत्र मत्वर्थलक्षणाश्रयणेनेति वाच्यम्। दध्न फलसम्बन्धविधाने आश्रयसम्बन्धविधाने च वाक्यभेदप्रसङ्गात्। न च प्रकरणादाश्रयलाभ इति वाच्यम्। 'असंयुक्त प्रकरणात्' इति न्यायेन फलार्थस्य दध्न प्रकरणग्रहणाभावात्। न च विधिसंनिधानप्रकरणादाश्रयलाभो भवतीति वाच्यम्। यत शब्दो हि सन्निधिवशात् विशेषान्वये प्रमाणम्। न तु संनिधान नाम यागस्य प्रमा(णम)स्ति। न चात्र प्रकृताश्रयसंबन्धप्रतिपादक शब्द कश्चिदस्ति, श्रौतेन्द्रिय कामवाक्यस्य उभयसम्बन्धकरणे वाक्यभेदस्योक्तत्वात्। कल्पितशब्दस्य चाऽऽश्रयसम्बन्धकरणे कल्पनैव दोष इति श्रुतस्यैव वाक्यस्य विशिष्टकर्मविधायकत्वमेव युक्तम्। तेनात्रेन्द्रियकामवाक्ये फलस्य श्रुतत्वात् कर्मान्तरमेव विधेयं भवेदिति। एव प्राप्तेऽभिधीयते।

**अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥२६॥**

अयमभिप्राय, भवदेव यदि भावार्थाधिकरणवदेव भावार्थविषयो विधिर्भवेत्। सर्वत्र खलु भावनास्य एव निमित्तादर्थभेदेन तत्र तत्र भिद्यते । यत्र फलवती भावनामात्र धात्वर्थपरो विधिर्भवति, तत्र धात्वर्थमेव फलकारण करोति । यत्र तु स्ववाक्योपात्तविधेयगुणान्तरो पादानमप्यस्ति तत्र विशिष्टविधिगौरवभिया गुणमात्र विधानलोलुपो यदि धात्वर्थप्राप्तिं पश्यति तदा समस्त मनूद्य गुणमात्रमेव फले विधत्ते। अथ न पश्यति, तदा विशिष्टविधान मत्वर्थलक्षणा च स्वीकुरुते इति स्थितम्। 'यावद्धि विधिसामर्थ्यं धात्वर्थादनपोद्धृतम् । तावत्र फलसम्बन्ध स धात्वर्थस्य गम्यते ॥ भवेत्फलश्रुतिर्या तु गुणसंचरिते विधौ। सा तद्द्वव विधिस्पृष्टा तेन यात्येकवाक्यताम् ॥' (वा पृ ५४६)। तदिहापि प्रकृतधात्वर्थप्रत्यभिज्ञानात् तमुद्देश्य गुणसम्बन्धो विधि गुणमेव फले विधत्ते। धात्वर्थस्तु प्रत्ययप्रयोगार्थ प्रयुक्त। (स च पूर्वो)क्तेन धातुना प्रकरणप्राप्तोऽनूद्यते। एव सति मत्वर्थलक्षणादोषो विशिष्टविधिगौरव च न भविष्यति। ननु भवतु धात्वर्थस्य होमरूपस्य प्राप्तत्वात् अनुवाद, दधिहोमसम्बन्धोऽप्यत्र

निमित्तार्थः निमित्तार्थतयैव उपपद्यते, नान्यथा । न हि कपालनाशे तदन्वेषणार्थं इष्टिः क्रियते । जातेष्टेः तु अन्यथापि उपपद्यमानत्वात् पूतत्वादि फलं पुत्रगतमेव, न तु कर्तुः इति सिद्धान्तः ।

अथवा अनेन एकेन सूत्रेण वर्णकं द्वितीयम् । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति श्रुता इष्टिः किं पुत्रे जातमात्रे कर्तव्या उत जातकर्मोत्तरं इति संशये जातमात्रे इष्टिः इति च पूर्वपक्षे प्राप्ते, सिद्धान्तयति । तुशब्दः पूर्वपक्षं निरस्यति । अङ्गाना कालक्रमस्याङ्गस्य उपघातः उदराग्निर्गमनं पुनर्जननं इति यावत् । उपघातस्य संयोगः केवलं निमित्तार्थः निमित्ते सति विधानार्थः । तस्मात् जातेष्टिः जातकर्मानुष्ठानोत्तरं कर्तव्या ।

अथ अनेनैव सूत्रेण तृतीयं वर्णकम् । इयं जातेष्टिः किं अन्तर्दशाहे कर्तव्या किंवा जननाशौचसमाप्त्युत्तरं पौर्णमास्याममावास्यायां वा कर्तव्या इति विचारे नियामकाभावात् अन्तर्दशाहे कर्तव्या इति पूर्वपक्षे प्राप्ते, सिद्धान्तयति । अङ्गानां उपघातसंयोगः कार्त्स्न्येन संयोगः निमित्तार्थः कामनानिमित्तविहितकर्मार्थः, काम्यकर्मसु सर्वाङ्गोपसंहारस्य आवश्यकत्वात् । के.

* 'फलसंयोगात्तु स्वामियुक्तं प्रधानस्य' (३।७।२।६) इत्यनेनैव गतार्थत्वात् दीक्षाणामनुदाहरणम् । भा ३।७।५।११.

※ फलसंयोगात्तु स्वामियुक्तं प्रधानस्य । ३।७।२।६॥

ज्योतिष्टोमे वपन पयोव्रत तपश्चाम्नातानि । तेषां याजमानत्वं तृतीयस्याष्टने पादे द्वितीयाधिकरणे वक्ष्यति । ते वपनादयो धर्माः किं कर्तरि संबद्धाः सन्तः अङ्गप्रधानार्थाः उत भोक्तरि संबद्धाः सन्तः केवलप्रधानार्थाः इति संशये कर्तृत्वाश्रयेन अङ्गप्रधानार्थाः इति पूर्वाधिकरणन्यायेन पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तुशब्दः पूर्वाधिकरणसिद्धान्तप्रत्युदाहरणत्वसूचकः । स्वामियुक्तं यजमानसंयुक्तं यत् वपनादिधर्मजातं तत् भोक्तरि संबद्धं सत् प्रधानस्य केवलस्य भवितुमर्हति नाङ्गानाम् । फलसंयोगात् फलेन संयोगात् । एते हि धर्माः यजमानं फलभोगसमर्थं कुर्वन्ति । तस्मादेते प्रधानार्था एव । के.

※ फलसंयोगात्स्वामियुक्तं प्रधानस्य । ३।७।२।६ ॥

ज्योतिष्टोमे केशश्मश्रुणोर्वपनम्, पयोव्रतानि, तपश्च आम्नातानि । तेषु संदेहः किमङ्गप्रधानार्थानि उत प्रधानार्थानि इति । अस्मिन्नधिकरणे येषां संस्काराणां यजमानगामित्वं व्यवस्थाप्यते, तेषामेव विषयत्वम् । अत्राय पूर्वपक्षः । यद्यपि यजमानस्य द्वैरूप्यमस्ति यागकर्तृत्वं फलभोक्तृत्वं च, तथापि कर्तृत्वावगमपूर्वकत्वाद्भोक्तृत्वावगमस्य सर्वेषामेवाङ्गप्रधानानां उपकारापेक्षित्वात् कर्तृत्वयशोपनिपाते च यजमानस्य साक्षात्प्रयुक्तया च साङ्गप्रधानकर्तृत्वेन साङ्गप्रधानोपकारोपपत्तेः कर्तृत्वाद्योपनिपातात् अङ्गप्रधानार्थत्वमेव वपनादिसंस्काराणामिति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि कर्तृत्वाद्योपनिपातिनः संस्कारा भवेयुः । भोक्तृत्वाद्यनिपातिनश्च ते । कर्तृत्वस्य संस्कारैर्विनापि अध्ययनमात्रनिष्पत्तियैनैव सर्वलोकसिद्धत्वात् । फलभोक्तृत्वं तु न संस्कारैर्विना भवतीति न प्रमाणान्तरसिद्धम् । तेन फलभोक्तृत्वांश एव यजमानस्य योग्यतामादधाना क्रियाः संस्कारा इत्युच्यन्ते । फलपूर्वत्वस्य च प्रधानसम्बन्धात् प्रधानार्था एव यजमानसंस्काराः । तेन यथा यानि अदृष्टार्थान्यङ्गानि तैः फलभोक्तृत्वम्, न तत्र न्यायेन पूर्वपक्षो विशेषणम् (!) दृष्टार्थान्यङ्गानि दैक्षादीनि फलयोग्यतामादधानान्येवाङ्गानि भवन्ति, तथैतेऽपि संस्कारा इति सिद्धं यजमानसंस्काराणां केवलप्रधानार्थत्वमिति ।

प्रयोजनम्—पूर्वपक्षे यद्यङ्गार्थत्वमपि संस्काराणाम्, तदा दैक्षादयो ज्योतिष्टोमाङ्गानि विकारेष्वपि कर्तव्याः । सिद्धान्ते तु नेति । सूत्रं तु फलभोक्तृत्वात् स्वामिभूतयजमानसंयुक्तं वपनादि प्रधानस्यैवेति । तौता

※ फलसंयोगाधिकरणम् । जातेष्टि पुत्रगतपूतत्वादिफलप्रयुक्ता ॥

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ४।३।२६।२८॥

भाष्यम्— 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे

जाते' इति विधाय आम्नायते, 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। तत्र संदेहः किमात्मनिःश्रेयसाय, उत पुत्रनिःश्रेयसायेति। आत्मनिःश्रेयसायेति ब्रूमः। नेमानि फलदानि परस्य भवन्ति कर्माणि। कुतः? आत्मनेपदनिर्देशात्। यथा 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यापेतः स्यात्। अथ यजमानः प्रमीयेत, द्यावापृथिवीयमेककपालं निर्वपेत्। यदि द्वे नश्येतां द्वौ मासौ संवत्सरस्यापेतौ स्याताम्। अथ यजमानः प्रमीयेत, आश्विनं द्विकपालं निर्वपेत्। तस्यापोद्वासयति, यजमानस्य गोपीथाय' इति कपालनाशे निमित्ते आत्मनिःश्रेयसफलं कर्म दर्शयति। एवमिहापि द्रष्टव्यम्। तस्मात् आत्मनिःश्रेयसार्थमिति। एवं प्राप्ते, ब्रूमः। फलसंयोगो न स्यात् पितुः। फलवचनं शेषभूतं पुत्रस्य, न पितुः। कथम्? एवं श्रूयते, 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालो भवति, त्रिवृतैवास्मिन् तेजो दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति। यद् द्वादशकपालः, जगत्यैवास्मिन् पशून् दधाति। यस्मिञ्जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। यो जातस्तस्य फलं श्रूयते। नास्ति वचनस्यातिभारः। तस्मात् पुत्रस्य फलमिति। यदुक्तं न परस्य फलदान्येतानि कर्माणीति। तदुच्यते। यत् पुत्रस्य फलम्, आत्मनः सा प्रीतिः। तस्मादात्मनेपदं न विरुध्यते। एतामेव आत्मनः प्रीतिमभिप्रेत्य भवति वचनम्, 'आत्मा वै पुत्रः' इति। 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्॥' इति।

टुप्— अर्थवादो रात्रिसत्रन्यायेन फलप्रतिपत्त्यर्थ इति स्थिते, किं पुत्रजन्मनिमित्तं पितुः फलमुत पुत्रस्येति। पुत्रस्यैव। कुतः? 'यस्मिञ्जात एतामिष्टिं निर्वपति, पूत एव सः' इति सर्वनाम्ना पुत्रस्य फलं प्रतिपाद्यते, पूत एव सः। कः? यो जात इति। अतो वचनसामर्थ्यात् पुत्रस्यैव फलम्। यजनादिशीलपुत्रः पुत्रः इष्यते एव इत्यात्मनेपदमविरुद्धम्।

अङ्गानां तूपघातसंयोगो निमित्तार्थः॥ ३९॥

भाष्यम्— अथ यदुक्तम्, 'यद्येकं कपालं नश्येत्' इत्येवमादि। तदोच्यते। अङ्गानां उपघातसंयोगो निमित्तार्थ उपपद्यते, नान्यथा। नहि कपाले नष्टे तदन्वेषणार्था इष्टिर्युक्ता। नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते।

शा— 'येनैव वाक्यशेषेण फलमेतत् प्रकल्प्यते। तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा॥' १७।

सोम— सोमस्य दर्शपूर्णमासोत्तरकालत्वे अभिहिते तत्प्रसङ्गात् उत्तराधिकरणे वैश्वानरेष्टेः कालो निरूपयिष्यते। तत्र कुमारविपत्तिप्रसङ्गात् जातकर्मानन्तर इति करिष्यमाणः सिद्धान्तः पूतत्वादेः पुत्रगतत्वं विना नोपपद्यते इति तदुपयोगितया पुत्रगतत्वनिरूपणात् संगतिः। ननु पुत्रजननिमित्तकत्वात् अस्या इष्टेः प्रत्यवायपरिहार एव फलम्, न तु पूतत्वादिकमिति चेत्, उच्यते, विधेः फलाकाङ्क्षायां श्रुतत्वात् आर्थवादिकं पूतत्वादिकमेव फलत्वेन स्वीक्रियते। पूतत्वादिफलसंबन्धानन्तरं तावता नैमित्तिकत्वानिर्वाहात् तन्निर्वाहार्थं पश्चात् प्रत्यवायपरिहारः अश्रुतोऽपि फलत्वेन कल्प्यते इति पूतत्वादिकं प्रत्यवायपरिहारश्च इत्युभयमपि अत्र फलम्। तत्र च उत्पत्तौ निमित्तसंयुक्तस्यैव पूतत्वादिकं फलं इति निमित्तप्रयुक्तानुष्ठानानुसारितया पूतत्वादेः स्वातन्त्र्याभावात् एकस्मिन्नेव प्रयोगे पूतत्वादिफलपञ्चकं (पूतत्व-तेजस्वित्व-अन्नादत्व-इन्द्रियावित्व-पशुमत्त्वरूपं) भवति, न तु योगसिद्धिन्यायात् (४।३।१२) एकैकं फलम्। सूत्रार्थस्तु— वाक्यशेषगतफलभाक्त्वेन अचोदिते पितरि फलसंयोगो न स्यात्, तद्गतत्वेन अप्रतिपादितस्य फलस्य तं प्रति शेषत्वाभावात् इति। १७.

वि— 'वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वा, ऽग्रिमः। कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि॥, जाते यस्मिन्निष्टिमेतां निर्वपेत् तस्य पूतता। तयेष्ट्येवं पितृत्वेन पिता तत्र प्रवर्तते॥'

भाट्ट— वैश्वानरेष्टिवाक्यस्थपूतत्वाद्यर्थवादिकफलानां, सत्यपि निमित्तसंयोगेन प्रकरणे श्रवणे भावनाभाव्यत्वेन

निमित्तार्थः निमित्तार्थतयैव उपपद्यते, नान्यथा । न हि क्रयानन्तरं तदन्वेषणार्थं इष्टिः क्रियते । जातेष्टेः तु अन्यथापि उपपद्यमानत्वात् पूतत्वादि फलं पुत्रगतमेव, न तु कर्तुः इति सिद्धान्तः ।

अथवा अनेन एवेन सूत्रेण वर्णकं द्वितीयम् । 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति श्रुता इष्टिः किं पुत्रे जातमात्रे कर्तव्या उत जातकर्मोत्तरं इति संशये जातमात्रे इष्टिः इति च पूर्वपक्षे प्राप्ते, सिद्धान्तयति । द्वयान्तः पूर्वपक्षं निरस्यति । अङ्गानां कालस्य-स्याङ्गस्य उपघातः उद्धर्षिर्गमनं पुनजननं इति यावत् । उपघातस्य संयोगः केवलं निमित्तार्थः निमित्ते सति विधानार्थः । तस्मात् जातेष्टिः जातकर्मानुष्ठानोत्तरं कर्तव्या ।

अथ अनेनैव सूत्रेण तृतीयं वर्णकम् । इयं जातेष्टिः किं अन्तर्दशाहे कर्तव्या किंवा जननाशौचसमाप्त्युत्तरं पौर्णमास्याममावास्यायां वा कर्तव्या इति विचारे निवा-मकाभावात् अन्तर्दशाहे कर्तव्या इति पूर्वपक्षे प्राप्ते, सिद्धान्तयति । अङ्गानां उपघातसंयोग कालस्येन संयोगः निमित्तार्थः कामनानिमित्तविहितकर्मार्थः, काम्यकर्मसु दर्शपौर्णमासंहारस्य आवश्यकत्वात् । के.

● 'फलसंयोगात्तु स्वामियुक्तं प्रधानम्' ( ३।७।२१६ ) इत्यनेनैव गतार्थत्वात् दीक्षाणामनुदाहरणम् । वा ३।७।५।११.

▮ फलसंयोगात्तु स्वामियुक्तं प्रधानस्य । ३।७। २।६॥

ज्योतिष्टोमे वपन पयोव्रत इत्यादानि । तेषां याजमानत्वं तृतीयस्याष्टमे पादे द्वितीयाधिकरणे वेत्स्यति । ते वपनादयो धर्माः किं कर्तरि संबद्धा सन्तः अङ्ग-प्रधानार्थाः उत भोक्तरि संबद्धाः सन्तः केवलप्रधानार्थाः इति संशये कर्तृत्वेन अङ्गप्रधानार्थाः इति पूर्वाधिकरण न्यायेन पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम् । तदुक्तं पूर्वाधि-करणसिद्धान्तस्यानुदाहरणं सूचकं । स्वामियुक्तं यजमान संयुक्तं यत् वपनादिधर्मजातं तत् भोक्तरि संबद्धं सत् प्रधानस्य केवलस्य भवितुमर्हति नाङ्गानाम् । फलसंयो-गात् फलेन संयोगात् । एते हि धर्माः यजमानं फल-भोगसमर्थं कुर्वन्ति । तस्मादेते प्रधानार्था एव । के.

▮ फलसंयोगात्स्वामियुक्तं प्रधानस्य । ३।७। २।६ ॥

ज्योतिष्टोमे केशश्मश्रुवपनम्, पयोव्रतानि, इत्येवम् आम्नातानि । तेषु संदेहः किमङ्गप्रधानार्थानि ▮ प्रधा नार्थानि इति । अस्मिन्नधिकरणे येषां संस्कारो यज-मानगामित्वं व्यवस्थास्यते, तेषामेव विषयत्वम् । अत्र पूर्वपक्षः । यद्यपि यजमानस्य द्वैरूप्यमस्ति यागकर्तृत्वं फलभोक्तृत्वं च, तथापि कर्तृत्वावगमपूर्वकत्वाद्भोक्तृत्वाव-गमस्य सर्वेषामेवाङ्गप्रधानानां उपकारापेक्षित्वात् कर्तृत्वा वस्थोपनिपाते च यजमानस्य साक्षाच्छ्रुत्या च सा अङ्ग प्रधानकर्तृत्वेन साङ्गप्रधानोपकारोपपत्तेः कर्तृत्वोप-निपातात् अङ्गप्रधानार्थत्वमेव वपनादिसंस्काराणामिति । एवं प्राप्ते, अभिधीयते । भवेदेवं यदि कर्तृत्वयोग निबन्धिनः संस्कारा भवेयुः । भोक्तृत्वनिबन्धिनस्तु ते । कर्तृत्वस्य संस्कारैर्विनापि अध्ययनमात्रनिमित्तेनैव सर्वलोकसिद्धत्वात् । फलभोक्तृत्वं तु न संस्कारैर्विना भवतीति न प्रमाणान्तरसिद्धम् । तेन फलभोक्तृत्वमेव यजमानस्य योग्यतामादधानाः क्रियाः संस्कारा इत्यु च्यन्ते । फलपूर्वकत्वं च प्रधानसम्बन्धात् प्रधानार्था एव यजमानसंस्काराः । तेन यथा यानि अग्न्यार्थान्यङ्गानि तैः फलभोक्तृत्वम्, न तत्र न्यायेन पूर्वपक्षो निर्दोषतया (?) द्वादशान्यङ्गानि देवादीनि फलयोग्यतामादधानानीत्युपनि भवन्ति, तथैतेऽपि संस्कारा इति सिद्धं यजमानसंस्काराणां केवलप्रधानार्थत्वमिति ।

प्रयोजनम्— पूर्वपक्षे यद्यङ्गार्थान्यपि संस्काराणां, तदा देवादयो ज्योतिष्टोमाङ्गानि विकारेष्वपि कर्तव्याः । सिद्धान्ते तु नेति । सूत्रं तु फलभोक्तृत्वम् स्वामियुक्त यजमानसंयुक्तं वपनादि प्रधानस्यैवेति । तौता

▮ फलसंयोगाधिकरणम् । जातेष्टि. पुत्रगतपूतत्वा-दिफलयुक्ता ॥

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ४।३।१।६।१८॥

भाष्यम्— 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे

जाते' इति विधाय आम्नायते, 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। तत्र संदेहः किमात्मनिःश्रेयसाय, उत पुत्रनिःश्रेयसायेति। आत्मनिःश्रेयसायेति ब्रूमः। नेमानि फलानि परस्य भवन्ति कर्माणि। कुतः? व्याख्याने आत्मनेपदनिर्देशात्। यथा 'यद्येकं कपालं नश्येदेको मासः संवत्सरस्यापेतः स्यात्। अथ यजमानः प्रमीयेत, द्यावापृथिवीयमेककपालं निर्वपेत्। यदि द्वे नश्येतां द्वौ मासौ संवत्सरस्यापेतौ स्याताम्। अथ यजमानः प्रमीयेत, आश्विनं द्विकपालं निर्वपेत्। उत्पातोद्भासयति, यजमानस्य गोपीथाय' इति कपालनाशे निमित्ते आत्मनिःश्रेयसफलं कर्म दर्शयति। एवमिहापि द्रष्टव्यम्। तस्मात् आत्मनिःश्रेयसार्थमिति। एवं प्राप्ते, ब्रूमः। फलसंयोगो न स्यात् पितुः। फलवचनं शेषभूतं पुत्रस्य, न पितुः। कथम्? एवं श्रूयते, 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते। यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति। यन्नवकपालो भवति, त्रिवृतैवास्मिंस्तेजो दधाति। यदेकादशकपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति। यद् द्वादशकपालः, जगत्यैवास्मिन् पशून् दधाति। यस्मिञ्जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति। यो जातस्तस्य फलं श्रूयते। नास्ति वचनस्यातिभारः। तस्मात् पुत्रस्य फलमिति। यदुक्तं न परस्य फलवन्त्येतानि कर्माणीति। तदुच्यते। यत् पुत्रस्य फलम्, आत्मनः सा प्रीतिः। तस्मादात्मनेपदं न विरुध्यते। एतामेव आत्मनः प्रीतिमभिप्रेत्य भवति वचनम्, 'आत्मा वै पुत्रः' इति। 'अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्॥' इति।

टुप्— अर्थवादो रात्रिसत्रन्यायेन फलप्रतिपत्त्यर्थ इति स्थिते, किं पुत्रजन्मनिमित्तं पितुः फलमुत पुत्रस्येति। पुत्रस्यैव। कुतः? 'यस्मिञ्जात एतामिष्टिं निर्वपति, पूत एव सः' इति सर्वनाम्ना पुत्रस्य फलं प्रतिपाद्यते, पूत एव सः। कः? यो जातः इति। अतो वचनसामर्थ्यात् पुत्रस्यैव फलम्। पवनादिसंयुक्तः पुत्रः इष्यते एव इत्यात्मनेपदमविरुद्धम्।

**अङ्गानां तूपघातसंयोगो निमित्तार्थः। ३९॥**

भाष्यम्— अथ यदुक्तम्, 'यद्येकं कपालं नश्येत्' इत्येवमादि। तत्रोच्यते। अङ्गानां उपघातसंयोगो निमित्तार्थं उपपद्यते, नान्यथा। नहि कपाले नष्टे तदन्वेषणार्था इष्टिर्युक्ता। नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते।

शा— 'येनैव वाक्यशेषेण फलमेतत् प्रकल्प्यते। तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा॥' १७.

सोम— सोमस्य दर्शपूर्णमासोत्तरकालत्वे अभिहिते तत्प्रसङ्गात् उत्तराधिकरणे वैश्वानरेष्टेः कालो निरूपयिष्यते। तत्र कुमारप्रियप्रश्नप्रसङ्गात् जातकर्मानन्तरं इति करिष्यमाणः सिद्धान्तः पूतत्वादेः पुत्रगतत्वं विना नोपपद्यते इति तदुपयोगितया पुत्रगतफलनिरूपणात् संगतिः। ननु पुत्रजननिमित्तकत्वात् अस्या इष्टेः प्रत्यवायपरिहार एव फलम्, न तु पूतत्वादिकमिति चेत्, उच्यते, विधेः फलाकाङ्क्षाया श्रुतत्वात् आर्थवादिकं पूतत्वादिकमेव फलत्वेन स्वीक्रियते। पूतत्वादिफलसंबन्धानन्तरं तावता नैमित्तिकस्यानिर्वाहात् तन्निर्वाहार्थं पश्चात् प्रत्यवायपरिहारः अश्रुतोऽपि फलत्वेन कल्प्यते इति पूतत्वादिकं प्रत्यवायपरिहारश्च इत्युभयमपि अत्र फलम्। तत्र च उत्पत्तौ निमित्तसंयुक्तस्यैव पूतत्वादिकं फलं इति निमित्तप्रयुक्तानुष्ठानानुसारितया पूतत्वादेः स्वातन्त्र्याभावात् एकस्मिन्नेव प्रयोगे पूतत्वादिफलपञ्चकं (पूतत्व-तेजस्वित्व-अन्नादत्व-इन्द्रियावित्व-पशुमत्त्वरूपं) भवति, न तु योगसिद्धिन्यायात् (४।३।१२) एकैकं फलम्। सूत्रार्थस्तु— वाक्यशेषगतफलभाक्त्वेन अचोदिते पितरि फलसंयोगो न स्यात्, तद्गतत्वेन अप्रतिपादितस्य फलस्य तं प्रति शेषत्वाभावात् इति। १७.

वि— 'वैश्वानरेष्ट्या पूतत्वं पितुः पुत्रस्य वा, ऽग्रिमः। कर्तुरेव फलं युक्तं कर्तृत्वं पितुरेव हि॥, जाते यस्मिन्निष्टिमेतां निर्वपेत् तस्य पूतता। तत्रेप्सितं पितृत्वेन पिता तत्र प्रवर्तते॥'

भाट्ट— वैश्वानरेष्टिस्तावत्पुत्रगतार्थवादिकफलार्था, सत्यपि निमित्तसंयोगेन प्रकरणे प्रत्यवाये भावनाभाव्यत्वेन

शा— 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' इत्यनारभ्य श्रुतम्, तथा 'ऐन्द्राग्नीया दीक्षणीया' इत्यश्वमेधे। अत्रापि कर्मभेदः इति सिद्धान्तः।

सोम— पूर्वन्यायातिदेशात् संगतिः। प्रयोजनं पूर्वपक्षे रुक्कामस्य न पृथक् प्रयोगः, किन्तु गुणफलत्वात् दर्शपूर्णमासप्रयोगेणैव तत्सिद्धिः। सिद्धान्ते तु कर्मान्तरत्वात् पृथक् प्रयोग इति।

वि— 'अष्टाकपालमाग्नेय रुक्कामः प्राप्नुते फलम्। कर्मान्यद्वा, फल मानात् पूर्वन्यायाप्रवेशनात् ॥, मा भूद् भिन्न प्रकरणे कर्मान्तरमसंनिधे.। अनारभ्याधीतमेतद् रूपं स्वन्यूनमीक्षते ॥'

भाट्ट— फलस्य 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति (कर्मभेदकत्वम्)। संस्कार्यस्य तु 'औदुम्बरीं प्रोक्षति' इति प्रीहिप्रोक्षणात् कर्मान्तरम्।

मण्डन— 'आग्नेयोऽन्यो रुगर्थिनः।'

शंकर— 'फलसंस्कार्ययोस्तथा।' भेदकत्वम्।

● फलसिद्धिः आदित आरभ्य कृत्स्नाङ्गोपेतप्रधानप्रयोगाधीना। कु. ६।३।१।२४.

● फलस्वाम्यं कर्मजन्यफलभोक्तृत्वम्। मीन्या.

● फलस्वाम्य पुरुषविशेषणत्वेन श्रूयमाणाधिकारिविशेषणविशिष्टस्यैव। 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राज्ञः एव. स्वाराज्यकामस्य फलस्वाम्यम्। मीन्या.

● फलीकरणहोमः पिष्टलेपहोमश्च प्रतिपत्तिकर्मणी। भा. ८।४।९।२७. ● फलीकरणहोमः। अवहननादौ ये अवशिष्टाः कणाः, तान् जुह्वा चतुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ 'अग्नेऽदब्धायो०' (तैस. १।१।१३।३) इति मन्त्रेण जुहोति। फलीकरणाः तण्डुलकणाः। (फलीकरणाः तण्डुलेषु क्रियमाणेषु अपनेया मालिन्यांशाः — वैसंभा.)। वि. ५।१।१५, ● फलीकरणहोमः वनीयपुरोडाशे अनुयाजैः सह आग्निमारुतादूर्ध्वं नोत्कृष्यः। ५।१।१५. ● पिष्टलेपफलीकरणहोमयोः प्रकृतिनोऽपि अनूयाजोत्तरत्वं नास्ति। भाट्ट. ५।१।१५.

● फाल्गुनानि नाम लताविशेषः सोमस्य प्रतिनिधिर्भवति। 'आदाराश्च फाल्गुनानि चाभिषुणुयात्' (तैब्रा. १।४।७)। शाब्दरेण प्रतिनिधित्वेन अनेकेषु द्रव्येषु प्राप्तेषु फाल्गुनानां नियमविधिरयम्। फाल्गुनीनक्षत्रयुक्तपूर्णिमामासे येषा कश्यपादिभिर्वृद्धिस्तादृशवल्लीविशेषाः फाल्गुनानि इति अस्माकं मतम्। सायणाचार्यः तु लोकव्यवहारे फल्गु स्वल्पमेव प्रयोजनं येषां आर्द्रदूर्वाङ्कुरादीनां तृणानां तानि फाल्गुनानि इति। कै. (वि. ६।३।१३). ● 'फाल्गुन्यां पौर्णमास्यां प्रयुञ्जीत' इति वाक्येन चातुर्मास्यारम्भः विहितः। संकर्ष. १।३।१८.

● फाल्गुनीप्रतिपदवसन्तोत्सवादीनां न शास्त्रादेव नियमक्रियाप्रमाणमस्ति। या. २।३।३।७ पृ. २०५। फाल्गुनीपौर्णमास्यनन्तरायां प्रतिपदि वसन्तनिमित्त उत्सवः। सु. पृ. १८७.

ब

▪ बकबन्धनन्यायः। बकबन्धनाय बकस्य शिरसि नवनीतस्थापनायासो यथा वृथा। नवनीतस्थापनकाले एव बन्धनस्य सुसाध्यत्वात्। (के.)

▪ बकश्रुतिन्यायः। स्पष्टोऽर्थः। साहस्री. ९५७.

▪ बधिरान्धन्यायः: श्रेयानिति न्यायः। स्पष्टार्थोऽयम्। साहस्री. ९९९.

▪ बधिरकर्णजपन्यायः। यत्र क्रिया निष्फला तत्र अस्य प्रवृत्तिः। साहस्री. १०८.

● बनर इति छन्दानुकृतिः (यथा भसंदः)। भा. १।१।८।३१.

● बभ्रुः सौम्यः ऐकादशिनेषु तृतीयः पशुः अश्वमेधे ज्योतिष्टोमे च। वि. ८।१।७.

• वर्करत्वं महिषत्व-( १ मेषत्व )एकार्थसमवायिनी बाल्यावान्तरजातिः। सु. पृ. १४११.

• वर्कुः वार्ष्णः। 'इति ह स्माह वर्कुर्वार्ष्णि., माषानेव मह्य पचत, न वा एतेषां हविर्गृह्णाति'। दर्शपूर्णमासप्रकरणे एतत्। वि. ६।७।१२.

• बर्हिः आतिथ्यायाः उपसदां अग्नीषोमीयस्य च साधारणं ज्योतिष्टोमे, न फलान्यस्योपदेशः न निरिष्टस्य न वा धर्मविधिः। ४।२।१४।२९-३०. मीको. पृ. ८८४ 'आतिथ्योपसदग्नीषोमीयपशूनाम्' इत्यत्र द्रष्टव्यम्। • बर्हिः कुशमयं दर्शपूर्णमासयोः। वि. १०।४।१. • बर्हिश्च अङ्गप्रधानार्थम्। टुप्. ४।२।१४।२९. • बर्हिः दर्शपूर्णमासयोः असकृदाच्छिन्नं भवति। भा. ११।१।७।३७. • 'बर्हिर्देवसदनं दामि' इति मन्त्रः आच्छिनत्तिप्रकाशकः। बाल. पृ. ६४. • 'बर्हिर्देवसदनं दामि' इति लवनमन्त्रः मुख्यस्य कुशमयादेर्लवनस्याङ्गम्, न तु उलपराजिशम्बितस्य गौणस्य लवनस्य। वि. ३।२।१. • बर्हिः पितृयज्ञे अमावास्यातन्त्रात् पृथक् कार्यम्। भा.१२।२।५।१८. • 'बर्हिः प्रति समानयते जुह्वामौपभृतम्' इत्यनेन जुह्वामौपभृताज्यस्य समानयने कालमात्रं विधीयते। भाट्ट. ४।१।१५. • बर्हि. 'यजमान गोपदसि' इत्यस्मिन्ननुवाके (तैब्रा. ३।१।२) प्रोक्तैर्मन्त्रैर्दात्रच्छिन्नं सत् संपद्यते दर्शपूर्णमासयोः, राजसूये रत्निना हविःषु मैत्राबार्हस्पत्ये 'स्वयंदिनं (नं) बर्हिः' न तत्र छेदनादि मन्त्रा वा। वि. १०।१।१. • बर्हिः वेदिस्तरणार्थम्। भा. १२।२।५।१८. • बर्हिः वैश्वदेवपर्वणि 'त्रेधा संनद्धं बर्हिर्भवति' इति विहितम्। वि. ७।१।२, • बर्हिः सर्वं संस्कृतं वेदेस्तरणे समाप्तं भवति इति कृत्वा परिक्रयण परिभोजनीयादयः। ३।८।१८.

तु 'बर्हिः स्तृणीहि' इति प्रैषः सोमार्थः॥

सवनीयस्य पशोः क्रमे 'अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशानलंकुरु, पत्नीमुदेहि' इति प्रैषः श्रुतः। तत्र बर्हिःस्तरणं पश्वर्थं पुरोडाशार्थं च, उभयोरविशेषेण संनिधानात् आकाङ्क्षितत्वाच्च। माध्यंदिनतृतीयसवनयोः पश्वेकमेव प्रैषदर्शनात् च पशोरभावात् तदेकरूप्याय केवलपुरोडाशार्थमेव वा। इति प्राप्ते, ऐष्टिकेषु मन्त्रश्च बर्हिर्विधेरभावात् 'अनुपृष्ठ्यं बर्हिः स्तृणाति' इति सौमिकबर्हिर्विधेः सत्त्वाच्च तस्यैवायं स्तरणार्थः प्रैषः। संकर्ष. १।३।१५

• पितृयज्ञे 'सकृदाच्छिन्नं बर्हिर्भवति'। भा. ११।१।७।३६. • सौमापौष्णे चरौ आभिचारिके 'शरमयं बर्हिर्भवति'। वि. १०।४।२. • बर्हिषा वत्सलक्षितकालस्य पौर्णमासे व्रतार्थं विधानं वत्सेन च दर्शे। ६।४।१२।३४-४०. मीको. पृ. २०६० 'दर्शपूर्णमासयोः व्रते' इत्यत्र द्रष्टव्यम्। • 'बर्हिषा पूर्णमासे व्रतमुपैति' इत्याद्युक्तकालस्य सनवदर्शनयुक्तसाधारणत्वम्। ६।४।१३।४१-४३. • 'बर्हिषा यूपावटमवस्तृणाति' इति पशुगत बर्हिः दर्शपूर्णमासगतबर्हिर्धर्माणां न ग्राहकम्। भा. ७।३।७।१८, • 'बर्हिषा यूपावटमवस्तृणाति' इति बर्हिषि प्राकृतबर्हिर्धर्मा न कर्तव्याः ज्योतिष्टोमे अग्नीषोमीये पशौ। ३।८।१९।३१. • बर्हिषः आतिथ्यातस्य अग्नीषोमीयार्थं हरणकाले स्तरणमन्त्रस्यावृत्तिः कर्तव्या ज्योतिष्टोमे। १२।१।२०।४९. • बर्हिषः आतिथ्यादेशात् अग्नीषोमीयदेशे नयनकाले संनहनमन्त्रस्य हरणमन्त्रस्य न नावृत्ति। १२।१।११।४६-४७. • बर्हिषः प्रयाजस्य चतुर्थता दर्शयति, 'चतुर्थोत्तमयोः प्रति समानयति' इत्युक्ते सति 'अतिहायेडो बर्हिः प्रतिसमानयति' इत्युक्तत्वात्। भा. ९।१।४।७. • बर्हिषः प्रसूनस्य नियमः अग्रमणे ज्ञघन्यद्यावापृथिव्यानुरोधेन मुख्यस्याप्यैन्द्राग्नादेः नियेधाऽभावात्। १२।२।१४।३४. • बर्हिषः बर्हिर्धर्माणां च वेद्याः वेदिधर्माणां च विधिः विनियोगसाधारण्यविधिः। बाल. पृ. २०. • बर्हिषः स्तम्बस्य संनहनहरणे उपादानार्थे। तत्र मन्त्रौ स्वीक्रियमाणस्यैव उपवर्णनात्मकौ। भा. १२।१।२१।४६, • बर्हिषः वेदिस्तरणोत्तरस्य उपादानं स्नुते प्रयोजनम्। ११।४।१४।१४, • बर्हिषः संस्कारः प्रोक्षणम्, अग्रणामुपसादनम्, मूलानामभ्यञ्जनम्। १२।१।१९।४२.

• बर्हिरधिकरणम्। ३।१।१।१-२. 'बर्हिन्र्याय.' इत्यत्र द्रष्टव्यम्।

● बर्हिरनुयाज नास्त्यवभृथे 'अपबर्हिषावनुयाजौ यजति' इति । वि. १०।७।१८

※ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।७।१०॥

'बर्हिर्लुनाति' 'आज्यं निर्वपति' इति बर्हिराज्यशब्दौ संस्कारनिमित्तौ जातिशब्दौ वा इति विचारे सिद्धान्तमाह । असंस्कारे तत्कार्यमात्रेऽपि लोकप्रसिद्धयो बर्हिराज्ययोः पदार्थयोर्विषये शब्दलाभात् बर्हिःशब्दस्य आज्यशब्दस्य च लाभात् । अतच्छब्दः न संस्कारवाचकः बर्हिःशब्दः आज्यशब्दो वा । एवं पुरोडाश–आमिक्षा–धानादिशब्दा अपि द्रष्टव्याः । के

※ बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।८।१०॥

बर्हिराज्ययोः पुरोडाशे च संदेहः किमेते संस्कारशब्दाः उत जातिवचना इति । अत्र प्रभाकरेण संगतिर्नोक्ता । अत्र प्रभृति अधिकरणत्रयमेतत् इत्युपवर्णितम् । जातिनिमित्तसंस्कारनिमित्तयोर्विचारानुपयोगात् अप्रामाण्यं पूर्वपक्षे, सिद्धान्ते तु यथाप्राप्तं प्रामाण्यमिति । तदयुक्तम् । वक्ष्यमाणपूर्वपक्षन्यायेनैव सर्वेषामप्यनर्थकत्वप्रसङ्गात् यत्किंचिदेतत् । इति यथावार्तिकमेवाधिकरणं प्रस्तूयते । इदानीं कर्मनामधेयप्रसङ्गेन द्रव्यनाम्नामपि प्रवृत्तिनिमित्तं अधिकरणत्रयेण निरूप्यते । तत्रैतदधिकरणे तावत् अयं पूर्वपक्षिणोऽभिप्रायः । 'बर्हिर्लुनाति' इत्येतद्वाक्यविहितलवनसंस्कृते कुशे बर्हिःशब्दः याज्ञिकैः प्रयुज्यमाना दृश्यन्ते । तथा 'आज्यं विलापयति' इत्येतद्वाक्यविहितविलापनसंस्कृते घृते आज्यम् । एवं 'पुरोडाशं प्रथयति' इत्येतद्वाक्यविहितप्रथनसंस्कृते पिष्टे पुरोडाशशब्दम् । येन यथा 'यूपं छिनत्ति' इत्येतद्वाक्यविहितच्छेदनजनितसंस्कारवति काष्ठे यूपशब्दप्रयोगदर्शनात् यत् छिद्यते स यूप इति संस्कारवचनत्वं यूपशब्दस्य, तथा यत् लूयते तद् बर्हिः, यद् विलाप्यते तदाज्यम्, यत् प्रथ्यते स पुरोडाश इति सर्वत्र संस्कारवचनत्वमेव । ननु यूपशब्दस्य अलौकिकार्थत्वेन संस्कृतेष्वेव प्रयोगदर्शनात् भवतु संस्कारवचनत्वम् । बर्हिरादिशब्दानां तु असंस्कृतेष्वपि प्रयोगदर्शनात् कथं संस्कारवचनत्वम् । नैवम्, 'शास्त्रस्था वा तन्निमित्तत्वात्' इति न्यायेन शास्त्रस्थानामेव याज्ञिकानां प्रसिद्धिर्बलीयसी । सा तु संस्कृतगोचरैव । अतस्तद्विरोधवशात् शास्त्रस्थप्रसिद्धेर्गौणत्वेनाप्युपपत्तौ संस्कारवचनत्वं बर्हिरादिशब्दानामिति । एवं प्राप्ते, अभिधीयते । सत्येव यदि शास्त्रस्थाशास्त्रस्थप्रयोगयोर्विरोधो भवेत् । न चैतदस्ति । तथाहि, यस्मामेव कुशजातौ बर्हिःशब्दः अशास्त्रस्थाः प्रयुञ्जते सा जातिः शास्त्रस्थप्रयोगेऽपि अनपगतैव । तेनैव उभयप्रयोगानुगतैकजातिवचनत्वेनैव अविरोधात् सकलप्रयोगोपपत्तौ न क्वचित् गौणत्वम्, क्वचित् संस्कारवचनत्वं इत्युपपद्यते । तदुक्तम् 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिमित्तकः । (जातिनिबन्धन इति मूले पाठः) तद्त्यागात्र तस्यास्ति निमित्तान्तरकल्पना ॥' इति (वा पृ ३४३)। यत्र च सति 'बर्हिर्लुनाति' पूर्वसिद्धबर्हिष्ट्वेन लवनविधानात् 'यद् बर्हिः, तत् लुनाति' इति यथावस्थितवचनोपपत्तौ 'यत् लुनाति, तद् बर्हिः' इतिवचनव्यक्तिविपर्यासोऽपि न भविष्यति । यूपे तु पदान्तराभावात् तथाभिधानम् । तदुक्तम्, 'न च यूपादितुल्यत्वमन्यथाऽप्युपपत्तितः । लोकादलभ्यमानार्थास्ते ह्यगत्या तथाऽऽश्रिताः ॥' (वा पृ ३४३) इति ।

प्रयोजनम् –पूर्वपक्षे 'बर्हिषा यूपावटमवस्तृणाति' इति संस्कृतेरानुषङ्गिकत्वम् । सिद्धान्ते तु कुशमात्रेणेति ।

सूत्रं तु बर्हिराज्यपदार्थयोः असंस्कारे असत्यपि संस्कारे शब्दलाभात् बर्हिराज्यशब्दप्रयोगात् अतच्छब्दः असंस्कारशब्दो बर्हिःशब्दः आज्यशब्दश्चेति । दीपा

※ बर्हिराज्याधिकरणम् । आज्याधिकरणम् । बर्हिराज्यशब्दौ जातिवचनौ तेन यूपावटस्तरणार्थं यूपप्रक्षालनाय च लौकिकमेव असंस्कृतं ग्राह्यम् ॥

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः । १।४।७।१०॥

भाष्यम्— बर्हिराज्ययोः पुरोडाशे च संदेहः किमेते संस्कारशब्दाः, उत जातिशब्दा इति । संस्कारशब्दा इति ब्रूमः । संस्कृतेषु तृणेषु बर्हिःशब्दमुपचरन्ति यत्र, नासंस्कृतेषु । संस्कृते च घृते आज्यशब्दम् । तथा संस्कृते

इति। अत्र न्यायसाम्यात् मते बर्हिराज्यशब्दस्थलमुपलक्षणं इत्याश्रित्य पुरोडाशोऽप्युदाहृतः।

वि— ' बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः। जात्यर्था वा, शाब्दस्तेऽस्ते स्युः संस्कारवाचिनः ॥, जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः। विनाऽपि संस्कृतिं लोके ह्यतो जातिवाचिनः ॥ ' गुरुमतमाह— ' बर्हिरादौ निमित्तस्य दुर्वचत्वान्न मेति चेत्।, जातेरत्र निमित्तत्वात् तद्युक्ता चोदना मम ॥ ' न मा प्रमाणं इति चेत्। ८.

भाट्ट— बर्हिराज्य-पुरोडाशादिशब्दाना संस्कृतेषु शास्त्रार्थेः प्रयुज्यमानत्वात् यूपादिशब्दवत् संस्कारमात्रवाचित्वे संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते, जातिं विहाय कैरप्यप्रयुज्यमानत्वात् संस्कार विनाऽपि लोके ' बर्हिर्दाय गावो गता ' ' आज्यं क्रय्यम् ' ' पुरोडाशेन मे माता प्रहेलकं ददाति ' इत्यादौ प्रयुज्यमानत्वात् अव्यभिचारकल्पकाच्च कुशादिजातिवाचित्वमेव।

प्रयोजनं यूपाच्छादनस्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणम्, सिद्धान्ते नेति।

मण्डन— ' बर्हि शब्दस्तृण वक्ति। '

शंकर— ' बर्हिराज्यादि नार्थम्। ' ८.

* न च बर्हिराज्याधिकरणन्यायेन ( १।४।७।१० ) अनार्यव्यवहारादपि राजशब्दस्य क्षत्रियजातिपरत्वं स्यात् इति वाच्यम्। बर्हिराज्यस्थले अनार्यव्यवहारादपि तात्पर्यत्नम्, आर्यव्यवहारस्य जात्यव्यभिचारित्वात्, इदं पूर्वपक्षे। कु. २।३।२।३.

* बर्हिराज्याधिकरणवार्तिकोक्तन्यायः। ' एकदेशेऽपि यः शब्दो दृष्टो जातिनिबन्धनः। तदव्यावृत्त तस्यास्ति निमित्तान्तरकल्पना ॥ ' इति। तेन राज्यरहिते क्षत्रिये जातिनिमित्तत्वेनाभ्युपगतस्य राजशब्दस्य राज्ययोगित्वपि क्षत्रिये जात्यन्यायात् अक्षत्रियेऽपि च क्षत्रियकार्यपरतया प्रयोगोपपत्तिः। मु. पृ. १००.

* बर्हिराज्यादिशब्देषु एकदेशेऽपि जातिनिमित्ते लभ्यमाने निमित्तान्तरं न कल्पनीयम्। वा. ३।१।२।३ पृ. ५८१.



* बर्हिरादीनि यागद्रव्यधारणेन दृष्टेन उपकारसंबन्धेन उपकुर्वन्ति। भा. ११।२।१०।४५. * बर्हिरादीनां अङ्गप्रधानसाधारण्यम्। ३।७।१।१–५. ' वेदिबर्हिर्धर्मन्यायः ' इत्यत्र द्रष्टव्यम्।

* बर्हिरास्तरणमन्त्रः आतिथ्यायां ' ऊर्णाम्रदसं [illegible] स्तृणामि ' इत्यादिः स चाग्नीषोमीयबर्हिषि पुनराकर्षणीयो देशभेदात्, बर्हिस्तु स्वरूपेण तदेव। वि. १२।१।२०.

* बर्हिर्धर्मा अङ्गप्रधानार्थाः न केवलं प्रधानार्थाः दर्शपूर्णमासयोः। वेदिबर्हिर्धर्मन्यायः। ३।७।१।१–५। द्रव्यसंस्कारन्याय। ३।८।१५।३१ ( वेदिबर्हिर्धर्मन्याये द्रव्यसंस्कारन्याये च समानो विचारः। उत्तरविवक्षया च प्रापणात् न दोषः )।

बर्हिर्न्यायः। गौणमुख्याधिकरणम्। मन्त्रविनियोगे मुख्यार्थे। लिङ्गविनियोगाधिकरणम्। लिङ्गाधिकरणम् ॥

अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात्, तस्मादुत्पत्तिसंबन्धोऽर्थेन नित्यसंयोगात्। ३।२।१।१॥

भाष्यम्— इह मन्त्र उदाहरणम् ' बर्हिर्देवसदनं दामि ' इत्येवमादय। किं मुख्ये एवाभिधेये मन्त्राणां विनियोगः, उत गौणेऽपीति। कः पुनर्मुख्यः को वा गौण इति। उच्यते। यः शब्दादेव अवगम्यते, स प्रथमोऽर्थो मुख्यः। मुखमिव भवतीति मुख्यः इत्युच्यते। यस्तु खलु प्रतीतादर्थात् केन चित् संबन्धेन गम्यते, [illegible] पश्चाद्भावात् जघनमिव भवतीति जघन्यः। गुणसंबन्धाच्च गौण इति। यद्येवं सर्व एव मुख्यः। सर्वो हि शब्दादवगम्यते। यथैव हि अग्निर्माणवक इत्युक्ते प्रत्ययः। एवमेव अग्निर्माणवक इति शब्दे प्रयोच्चरिते माणवके संप्रत्यय। अत्रोच्यते। यस्मिन् निरपेक्षाच्छब्दात् संप्रत्ययः स मुख्यः, यस्मिन् सापेक्षात् स गौण इति। नैवमुक्तम्। यस्य हि शब्दस्य रूपं यस्य चिद्र्थस्य निमित्तम्, सापेक्षस्यापि तदेव रूपं निरपेक्षस्यापि। न च शक्यं निमित्ते सति नैमित्तिकेन न भवितुम्। किमतः? यद्येवम्, इदं न शक्यते वदितुं अपरथाऽते न योऽर्थो

वा— इदानीं लिङ्गविनियोगः प्रस्तूयते । लिङ्गं नाम मन्त्राणामर्थप्रकाशनसामर्थ्यम् । तच्च मुख्ये गौणे च येन चित् प्रकारेण क्रियते । तत्र विनियोगः किं मुख्ये एवार्थे भवति उत गौणेऽपीति सन्देहे नैव गौणो नाम कश्चिदस्तीति मन्वान आह— 'कः पुनर्मुख्यः को वा गौणः' इति । तत्सिद्धिसूत्रे तु सिद्धे गौणे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तित्वं च व्याख्यातं इत्यस्मत्पूर्वविचारे पूर्वं ज्ञातव्यम् । तत्र च 'शब्दार्थस्यैव मुख्यत्वं मुख्यवत् प्रथमोद्गतेः । अर्थगम्यस्य गौणत्वं गुणागमनहेतुकम् ॥ शाखादिभ्यो य (पा० ५।३।१०३) इत्येवमिवार्थे मुख्य इत्ययम् । शब्दः शब्दाभिधेयत्वात् सर्वेष्वेव प्रसज्यते ॥' पशुगुणानां परत्रासम्भवदत्वं गुणेभ्य आयात इत्येवंलक्षणं गौणत्वं इष्यतः सर्वं एव (अर्थः) शब्दे उच्चरिते अभिधीयमानत्वादनन्यगतिः शब्दशक्तिवशतां कुर्वन् अर्थान्तरेणाव्यवहितत्वात् प्रथममेव मुख्यमिव भवतीति मुख्यः । तत्र परपरिकल्पितानि तावत् गौणत्वकारणानि उपन्यस्यन्नाह— अथोच्येत प्रसिद्धिरूपपदादित्यादि । 'सर्वथा लक्षणं नाम यद् व्यवच्छेदकारणम् । पराधीनप्रवृत्तिश्च गौणो नित्यं प्रतीयते ॥' (पराधीना शब्दप्रवृत्तिर्यस्मिन्नर्थे) । नहि यथा केवलादग्निशब्दात् ज्वलनप्रत्ययो भवति, एवं माणवकप्रत्ययः, पदान्तराधीनत्वात् । यद्यपि पदान्तरं न श्रूयते, तथापि अर्थप्रकरणादिगम्यं तदेव व्याश्रियते इत्यभिचारः । तदेव च सामान्यं नाम प्रवृत्तिहेतुर्गुण इति । नैतदेवम् । कुतः ? 'शब्दार्थस्यैव साहित्यादभिव्यक्तिरियं कृता । अन्यस्य द्योतकत्वात्तु नापैतं मुख्यलक्षणम् ॥' यथैव चक्षुषः प्रकाशानुग्रहापेक्षित्वेऽपि रूपमर्थः, यथा वा मुक्तसंशयस्य मुख्यस्य वर्णक्रमव्याप्तसम्बन्धसंस्कारस्मृतिविशेषानुभवापेक्षित्वम्, तथा अन्योपपदमपि नैव विना सामर्थ्यं नामापेक्षितुं शक्यते । अपेक्ष्यमाणमपि च द्योतकत्वेन इति पदान्तराण्येव मुख्यता विदन्ति । तेन विनाऽप्युपपदेन च सम्भाव्यो भवन्नेव, कथञ्चित्तु नाभिव्यज्यते । तद्यथा यथादिशब्दानां पृथिव्यादिः । अर्थोपपदस्य द्योतकत्वं परित्यज्य तुल्यत्वात्प्रोच्यते, यस्याश्रित्यं माणवकाग्निशब्दसमुदायात् अस्यार्थस्य प्रतीतिः अतः अश्वकर्णादिवत् समुदायवाच्यत्वे सति अवयवस्य गौणत्वमिति । तदुच्यते । 'न चासौ समुदायार्थः शक्यो वक्तुमिह त्वया । अन्वयव्यतिरेकाभ्यामर्थभेदो हि दृश्यते ॥' तत्र समुदायप्रसिद्धिर्भवति, यथावयवार्थौ तिरोधाय तत्कभेदः समुदाय एव प्रतीयते । इह तु अग्निशब्दस्य पैङ्गल्यम्, माणवकशब्दस्य च पिण्डस्वरूपं विविक्तं वाच्यम् । अत उभावपि प्रायात्मिकयोरपि वाचकत्वात् मुख्याविति । इदानीमवयवानुसारेणैव समुदायार्थत्वं समर्थयमान आह— अनुगतत्वार्थपदद्वयसाम्यात् नीलोत्पलवाक्यार्थः । अतश्च तस्य पदार्थप्रत्यायकत्वात् शब्दं प्रति पूर्ववदेव गौणत्वमिति । तन्निराकरोति । 'अभिमाणवकाभ्यां यद्येकोऽर्थो विशेषितः । नीलोत्पलवदिष्येत ततो वाक्यार्थता भवेत् ॥' न तु अत्र तदीयो मुख्यार्थोऽभिप्रेतमस्ति । न च भवतः पैङ्गल्यं वाच्यम्, असान्निध्यादिदमप्रसङ्गात् । तस्माद्य वाक्यार्थः । तेन ज्वलने माणवकस्य च पैङ्गल्ये तुल्यप्रवृत्तिरिति मुख्यत्वम् । माणवकस्येति भाष्ये पैङ्गल्यव्यतिरेकजनिता षष्ठी, नाभिधानव्यतिरेकजनिता । न हि माणवकस्वरूपं अग्निशब्दाद्गम्यते । नहि पर्यायत्वे माणवकशब्दः प्रयुज्येत । अथोच्येत यः मुख्यः प्रसिद्ध इति मुख्यया उपपदव्यापारं यत्कृतं तथाश्रवणमनाश्रयणं च, ते एव मन्दप्रसिद्धी गौणमुख्यविभागाय दर्शयन्ति । तत्रोत्तरम्— 'प्रसिद्धिरिति विज्ञानं न चान्योनातिरिच्यते । तस्माच्च वक्तृतः शक्यो विशेषो वक्तुमञ्जसा ॥'

इदानीं श्रोतृप्रत्ययप्रसिद्धिभेदमूलं वक्तृगतं मन्दत्वप्रयोगित्वं विभागार्थं दर्शयति । यस्य च बहुशः प्रयोग इत्यादि । तन्निराक्रियते । 'अल्पशोऽपि प्रयुक्तस्य सकृच्छ्रुतिर्निरक्षिता । न निवर्तेत इत्येवमुभयोस्तुल्यता पुनः ॥' इहापि च गोशब्दस्य पृथिव्यादौ मन्दप्रयुक्तप्रसिद्धिप्रयोगौ दर्शिता यौ । तथा चाहुः— 'मण्डकैर्बहुशब्दप्रसिद्धिः कदा चित् रवण्डमोदकैः । न चात्र मण्डका मुख्या गौणा वा खण्डमोदकाः ॥' इदानीं विशेषं कथयति । उभयी तावत्

माणवकसामानाधिकरण्ये अग्न्यादिशब्दान्वयेन सति सादृश्येऽभिधानात् असति च अनभिधानात्, अन्वयात्सादृश्य सति वृत्तिदर्शनात् असति चादर्शनात्, विशेषणत्वात् अवश्यम्भाविप्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्यायितम्। न चान्वयनेऽसौ तत् प्रतीयते इति प्रथमतरमंशेऽभिधानम्। ततश्च तत्सम्बन्धादेव शेषप्रतीतेर्यत्किञ्चित् अनभिधेयत्वम्। सन्ति चैवमादिषु कानि चित् रूपादिसामान्यानीत्युक्तम्। तस्मादस्ति गौणमुख्यविभागः इत्यारभ्यमधिकरणम्।

एते च तन्त्रवार्त्तिकोक्तैः सह नव गौणपक्षा द्रष्टव्याः। 'जहत्स्वार्थाभिधायित्वं संघातः परिकल्पना। तथा सोपपदा वृत्तिः समुदायप्रसिद्धिता। वाक्यार्थोऽल्पप्रसिद्धित्वमेवमल्पप्रयोगिता। अष्टावेवाभिराहृत्य साधिता गुणलक्षणा॥' (१– स्वार्थं जहातीति जहत्स्वार्थः अर्थान्तराभिधायी च, तस्य भावो जहत्स्वार्थाभिधायित्वम्, शुचिरूपाद्यवयवस्वार्थत्यागेन गुणरूपे पैङ्गल्यादौ वृत्तिः गौणत्वे कारणम्। २– अग्न्यादिजातिपैङ्गल्यादिगुणसंघातः अग्न्यादिशब्दवाच्यः सन् जातिरहितगुणमात्रे शब्दप्रवृत्तिहेतुत्वात् गौणत्वकारणम्। ३– अग्न्यादिशब्दवाच्यस्य अग्नित्वादेः माणवकादौ अग्न्यादिगुणदर्शनेन कल्पना गौणत्वकारणम्। ४– माणवकाद्युपपदसहायस्य अग्न्यादिशब्दस्य पैङ्गल्यादौ वृत्तिः अङ्गारत्वगुणभूतोपपदाधीनत्वात् गौणत्वकारणम्। ५– अग्निर्माणवकः इत्यादिशब्दस्य अवयवार्थानपेक्षवर्णसमुदायरूपेण पैङ्गल्यादौ या प्रसिद्धिः तस्याः भावः, समुदायावयवभूतस्य अग्न्यादिशब्दस्य पैङ्गल्यादौ प्रवृत्तिहेतुत्वात् गौणत्वकारणम्। ६– पैङ्गल्यादेः अग्निर्माणवकः इत्यादिवाक्यार्थत्वेन अग्न्यादिशब्दस्य पैङ्गल्यादौ वाक्यावयवत्वाख्यगुणत्वात् गौणत्वकारणम्। ७– अग्न्यादिशब्दस्य पैङ्गल्यादौ अल्पश्रोतृप्रसिद्धत्वस्य अङ्गाख्यगुणभूतोपादानापेक्षत्वनिमित्तात् गौणत्वकारणम्। ८– यस्मिन् पैङ्गल्यादौ अग्न्यादिशब्दस्य अल्पैरेवपुम्भिः प्रयोगः, सः अल्पप्रयोगी, तस्य भावः अल्पप्रयोगित्वम् अल्पप्रसिद्धत्ववत् गौणत्वकारणम्। एतान् गौणत्वकारणपक्षान् निरस्य अग्न्यादिशब्दवाच्येन अग्नित्वादिना अग्न्यादिगुणस्य पैङ्गल्यादेर्लक्षणया माणवकादौ अग्न्यादिगुणवति अपि शब्दप्रवृत्तिहेतुत्वात् गौणशब्दवाच्यस्वरूपगौणत्वकारणत्वेन साधिता। सुधा. पृ १०८२)

(पूर्वपक्षभाष्यं व्याचष्टे–) 'यत्र नित्यं पर्यायत्वादुभयत्र प्रयोगिता। साक्षात्तत्राभिधानस्य किञ्चिदभ्यधिकं फलम्॥' एवं च सति गौण्या वृत्त्या पूषादिशब्दैः अग्न्याद्यभिधानात् अनुत्कर्षो भविष्यति। अन्यथा यत्र पूषादयस्तत्र नीयेरन्। तथा अग्न्यादिशब्दैः सूर्याद्यभिधानादविकारे सति आपचोदकोऽनुग्रहीष्यते। इत्येवं प्राप्ते, ब्रूमः। 'अर्थाभिधानसंयोगान्मन्त्राणां क्रतुशेषता। मुख्येन च कृतार्थानां न गौणे श्रुतिकल्पना॥' 'अपि वा प्रयोगसामर्थ्यात्' (२।१।६।११) इत्यनेन हि न्यायेन अभिधेये तावत् विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति। तत्र यदि जहत्स्वार्था गौणी वृत्तिर्भवेत् ततस्तुल्यवदुभयत्रापि श्रुतिः कल्प्येत। यदि तु गौणमपि वदता पूर्वतरं स्वार्थोऽभिधेयः तत्र तदतिक्रमकारणाभावात् तद्विनियोगश्रुतौ कल्पितायां निराकाङ्क्षेषु मन्त्रप्रकरणस्थापाठाध्ययनविधिषु न पुनः श्रुतिकल्पनहेतुरस्तीति न विनियोगः। किञ्च 'कृतार्थे मन्त्रपाठे च गौणानां स्मारकान्तरम्। अनिवारितसामर्थ्यप्राप्तं किमिति बाध्यते॥' अपि च 'मुख्यः प्रत्याय्यते कस्माद्गौणेऽप्यर्थे विवक्षिते। अन्यथाऽनुपपत्त्या चेन्न ध्यानाद्युपपत्तितः॥ पाक्षिकत्वेऽप्यनित्यत्वात् पक्षेऽनर्थकता भवेत्। नित्यं मुख्यापरित्यागान्मत्पक्षश्चाऽऽश्रितो भवेत्॥ न चार्थप्रत्यये सिद्धे मन्त्रः कार्योऽभिधायकः। मन्त्राम्नानार्थवत्त्वं च मुख्येनार्थेन सेत्स्यति॥' तेनैव सूत्रार्थः यस्मादर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः तस्मादौत्पत्तिकेनैवार्थेनैषां संयोगः स्यात्। कुतः। तेनैवाऽव्यभिचारितया नित्यसंयोगात्।

संस्कारकत्वादचोदिते न स्यात् ॥ २ ॥

भाष्यम्–– अथ यदुक्तं पूषाद्यनुमन्त्रणादीनामुत्कर्षो न भविष्यतीति। युक्तस्तेषामुत्कर्षः। संस्कारको हि मन्त्रः। सोऽसति संस्कार्येऽनर्थकः इति यत्रार्थवांस्तत्र नाययिष्यते। न च कश्चिद्दोषो भविष्यति।

वा-- अचोदिते यूपादौ, दर्शपूर्णमासयोर्मन्त्रा न विनियुज्यन्ते, युक्तमेव तत् । संस्कारस्य तस्यार्थपरत्वात् लिङ्गेन च प्रकरणबाधात् । कथं पुनरेषामुत्पत्त्यानां वैदिकैः कर्मनियोगः, कथं वा ऋत्वङ्गसामान्यविनियोगमन्तरेण लिङ्गं देवतायामेव केवलायां विनियोजकमिति ? उच्यते । ' यागानुमन्त्रणानीति समाख्या क्रतुयोजिनी । तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥ ' यागानुमन्त्रणसमाख्या होषां यागसंबन्धादृते अनुपपद्यमाना यागसामान्याङ्गत्वं गमयति । ' अतो विशेषचिन्तायामशक्येऽविनियोजनात् । शक्यार्थविनियोगाय लिङ्गव्यापारसंभवः ॥ '

शा-- ' अर्थानां स्मरणार्थत्वान्मन्त्राणां चापि शक्तितः । प्रतिप्रधानमावृत्तेर्गुणानामुभयार्थता ॥ ' तस्मादुभयत्र (मुख्ये गौणे च) विनियोगः । इति प्राप्ते, अभिधीयते । ' गौणे सदपि सामर्थ्यं न प्रमाणान्तराद् विना । आविर्भवति, मुख्ये तु शब्दादेवाविरस्ति तत् ॥ तात्पर्यं च स्वतो मुख्ये, गौणार्थपरता पुनः । प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति ॥ '

सोम-- प्रयोजनम्- मन्त्राणां गौणेऽपि विनियोगे प्राकृतानां मन्त्राणां गौण्या वृत्त्या वैकृतद्रव्यदेवताऽऽदिप्रकाशकत्वसंभवात् ऊहासिद्धिः, सिद्धान्ते तु मुख्यार्थत्वाय ऊहसिद्धिरिति । सूत्रार्थस्तु-- यतः कारणात् अर्थाभिधानसंयोगात् अर्थाभिधानलक्षणसंस्कारसंयोगात् मन्त्रेषु क्रतुशेषत्वं स्यात् । तस्मात् उत्पत्तिसंयोगः औत्पत्तिकेन मुख्यार्थेनैव संयोगः स्यात्, तेनार्थेन नित्यसंयोगात् इति ।

वि-- ' देवोपसदनंबर्हिर्दाभिर्गौर्मुख्यगौणयोः । तल्लिङ्गमर्थयोर्मन्त्रं नियुङ्क्ते मुख्य एव वा ॥ , शब्दार्थत्वाद् द्वयोस्तत्र युज्यते विनियोजनम् । , प्रथमावगतत्वेन मुख्ये तद् विनियम्यते ॥ '

भाट्ट-- एवं श्रुत्युपयोगिविचारे कृते अधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र लिङ्गं नाम अङ्गत्वकल्पकीभूतपदोद्देश्यत्वशक्तिप्रकारकवाचकपदकल्पनानुकूला स्वस्तपदपदार्थनिष्ठा योग्यता । यथा ' सुवेणाऽवद्यति ' इत्यत्र स्रुवनिष्ठा द्रव्यत्वपदकल्पनाऽनुकूला । एवं मन्त्रेषु स्वार्थप्रत्युद्देश्यतावाचिपदकल्पनाऽनुकूला स्वप्रतिकारकत्वशायिपदकल्पनाऽनुकूला च योग्यता लिङ्गम् । सा च पदरूपश्रुतिकल्पकत्वात् तद्द्वारा तदर्थविनियोगे प्रमाणम् । तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेषविचारासंभवात् मन्त्रसामर्थ्यरूपस्य किं मुख्ये एवार्थे विनियोजकत्वम्, उत जघन्यवृत्तिप्रतिपाद्येऽपीति संदेहे, क्रतुप्रकरणाम्नातमन्त्रस्य ' बर्हिर्देवसदनं दामि ' इत्यादेर्मुख्ये इव जघन्येऽपि उलपादौ स्मारकत्वाद्युपाधिरूपसामर्थ्यविशेषात् तत्सामर्थ्येनैव विनियोगः । ' यतीः प्रवेशय ' इत्यादिवाक्यार्थाऽऽदिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थबाधस्य अकिञ्चित्करत्वात् । इति प्राप्ते, गवयसम्बन्धप्रतीत्यपेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात् प्रथमप्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेः जघन्यार्थविनियोजकत्वानुपपत्तेः । अत एव तत्स्मारकाकाङ्क्षाया ध्यानाद्युपायान्तरेणैव निवृत्तिः । अत एव यत्र प्रकरणे मुख्यार्थोपयोगो न सम्भवः, तत्र मन्त्राम्नानबलादेव तत्कल्पना । यत्र तु विरोधिगुणान्तरावरोधः प्रकरणे, तत्र सामान्यसंबन्धबोधकप्रमाणसत्त्वे उत्कर्षः यथा दर्शपूर्णमासप्रकरणाम्नातयूपानुमन्त्रणमन्त्रादेः, यागानुमन्त्रणसमाख्याया एव सामान्यसंबन्धबोधकत्वात् । उत्कर्षस्याप्यसंभवे प्रकरणे एव जघन्यार्थे विनियोगः यथा मनोताऽऽदौ । अप्रयुक्तत्वाभावादिना तस्याप्यसंभवे अदृष्टाभिधानस्यैव अदृष्टार्थत्वं यथा जपादौ ।

मण्डन-- ' मन्त्रे न गौणे विनियोजनीयः । '

शंकर-- ' गौण्या वृत्तेस्तथाऽस्थिता । '

* बर्हिर्न्यायः । ' द्रव्यसंस्कारः प्रकरणाविशेषात् सर्वकर्मणाम् ' (३।८।१५।३१) इति सूत्रोक्तः धर्मोपादानसाधारण्यात्मकः । सू. ३।८।१२।१५. * बर्हिर्न्यायः । यूपाद्यर्थमानबर्हि असंस्कृतम्- लौकिकम् । ३।८।१६. ' यूपाद्यर्थमानबर्हिर्न्यायः ' इत्यत्र द्रष्टव्यम् ।

* बर्हिःप्रहरणान्तं हारियोजनादि कर्म द्वादशाहे प्रथमादिनवमान्तेषु एकादशेऽहनि च न कर्तव्यम्, किन्तु पत्नीसंयाजान्तो विरामः कर्तव्यः । अवशिष्टं च द्वादशेऽहनि पत्नीसंयाजोत्तरं कर्तव्यम् । वि. ५।२।९.

* बर्हिं प्रोक्षणादिना आतिथ्यागतेन उपसद्भी षोमीयसो प्रसङ्गसिद्धि ज्योतिष्टोमे। १२।१।१९।४३ –४४.

* बर्हिर्लवने प्रतिमुष्टिस्वन मन्त्रावृत्ति। भा ११।४।१४।४४-४५

* बर्हिर्लवनादि प्रयाजापि न सर्वार्थम्। ३।८। १७ 'विधृतिपरिधाधिकरणम्' इत्यन द्रष्टव्यम्।

* बर्हिं शब्द तृणप्रत्ययस्य निमित्तम्, न तृणसदृश प्रत्ययस्य। भा ३।२।१।१ पृ ७८९ * बर्हिं शब्दो न संस्कारवाचको नियमेन, यथा 'बर्हिर्दाय गावो गता' इत्यत्र। यत्र तु अयं जातिवाची। अत एव 'बर्हिषा यूपावटमवस्तृणाति' अत्र विना संस्कारेण लक्षणसिद्धि। वि १।४।८ * बर्हिं शब्द संस्कारशब्द उत जातिशब्द इति संदेहे जातिशब्दोऽयम्, न संस्कार शब्द इति सिद्धान्तः। भा १।४।७।१०, * बर्हिं शब्देन उभयमपि शक्यते प्रत्याययितुं तृणं च तृणसदृशं च, तृणं साक्षात्, तृणसदृशं च तृणप्रत्ययेन। ३।२।१।१ पृ ७८९

* बर्हिःसनहनमन्त्र 'इन्द्राण्यै सनहनम्' (तैब्रा १।१।२।२) हरणमन्त्रश्च 'बृहस्पतेर्मूर्ध्ना हरामि' इति। आतिथ्याबस्तृते बर्हिषि संनद्धे अग्नीषोमीयदेशे नीयमाने, तौ मन्त्रौ न प्रयोक्तव्यौ। तौ हि लवनदेशात् आनयने प्रयोक्तव्यौ न तु गार्हपत्यदेशात् आहवनीयदेशं प्रति आनयने। आतिथ्या गार्हपत्यदेशे क्रियते, अग्नीषोमीयपशुश्च आहवनीयदेशे। नि १२।१।२१

* बर्हिःस्तरणमन्त्रे प्राकृते हरितपदस्थाने रक्तपदस्य ऊहः सौत्रे चरौ। ९।३।२।१ भीको पृ १२२६ 'ऊह रक्तपदस्य' इत्यत्र द्रष्टव्यम्।

* बलाधिकरणे (३।३।७।१४ बलाबलाधिकरणे) निर्देवनादीनां स्थानात् अभिषेचनीयाङ्गत्वस्य प्रतिभासमानस्य प्रकरणागमनेन राजसूयाङ्गत्वेन बाधो वक्ष्यते। सु पृ १०७९

* बलाबलम्। अविरोधे दुर्बलस्यापि ग्राह्यत्वम्। यदेव अयन्त प्रमाणाभासत्वेन मृगतृष्णाजलवत् भवति तत् सर्वदैव परिहर्तव्यम्। यत् पुन बलवद्विरोधापेक्षं अप्रमाणं भवति तत् विरोधाभावात् प्रमाणमेवेत्यवधारणीयम्। वा १।३।५।१० पृ २२७, * बलाबलम्। 'एकसोपानवर्तिनो भूमिष्ठस्यापरस्य तु। उभयोश्च तत्स्तुल्य प्रतिबन्धश्च भवता॥ विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयो। प्रथमेन गृहीतेऽस्मिन् पश्चिमो ऽवतरेन्मुधा॥' ३।३।७।१४ पृ ८३४, * बलाबलम्। 'शास्त्रनिरूपा प्रसिद्धेश्च या कल्प्या वा गरीयसी'। १।३।५।१० पृ २२७ * बलाबल क्रमविषयकश्रुत्यादीनां पञ्चमेऽध्याये उच्यते। भा ५।१।१।१ * 'श्रुत्यादिसमवाये च वक्ष्यते यद् बलाबलम्। तस्याविरुद्धत्वाच्च लेपगोचरमेव न॥' वा १।१। २।१ पृ ६७२ * श्रौत-आयतनात् वाक्यप्रकरणलभ्या बलाबलमागेच्यते ('उच्चैर्ऋचा क्रियते' इत्यादौ), तथ निरोधहेतुत्वात् मुख्यप्रमाणतापेक्षम्, न विपर्ययात् पदस्थवाग्योजनात् निपातन भवति। सु पृ ११७१

## बलाबलाधिकरणम्॥

श्रुति- लिङ्ग- वाक्य- प्रकरण- स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्। ३।३। ७।१४॥

भाष्यम्- उक्तानि विनियोगकारणानि श्रुति लिङ्ग वाक्य प्रकरण स्थान समाख्यानमिति। तेषां समवाये किं बलीय इति चिन्त्यते। एकार्थवृत्तित्वात् यावो युगपद संभवात् द्वयोर्द्वयो सम्प्रधारणा।

श्रुतिबलाबलविचार.— तत्र श्रुतिलिङ्गयो किं श्रुतिर्बलीयसी आहोस्विल्लिङ्गमिति। किं पुनरत्रोदाहरणम्। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। अत्र चिन्त्यते। किमिन्द्रस्य गार्हपत्यस्य वोपस्थानं कर्तव्यमित्यनियम उत गार्हपत्यस्यैवेति। यदि तुल्यबले एते कारणे, ततो विकल्प। अथ श्रुतिर्बलीयसी, गार्हपत्य एवोपस्थेय। का पुनरत्र श्रुति। किं लिङ्गम्। श्रुतिगार्हपत्यशब्दश्रवणम्। लिङ्ग पुन 'कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति इन्द्रशब्दस्य विशिष्टदेवताभिधानसामर्थ्यम्। अथ किं वाक्य नाम 'सहत्य अर्थमभिदधति पदानि वाक्यम्। यथेव किंमपि वाक्यम् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति, इदमपि 'कदा चन स्तरीरसि' इति। उभयत्रापि सहत्य

अर्थमभिदधति पदानि । तेन वाक्यस्य वाक्यस्य चैषा सम्प्रधारणा, न श्रुतिलिङ्गयोः । यदि वा, श्रुतिलिङ्गवाक्यानि विवेक्तव्यानि, इदं श्रुतिवाक्ययोरन्तरम्, इदं लिङ्गवाक्ययोरिति । तदभिधीयते, यतावच्छब्दस्यार्थमभिधातुं सामर्थ्यम्, तल्लिङ्गम् । यदर्थस्याभिधानं शब्दस्य श्रवणमात्रादेवावगम्यते, स श्रुत्याऽवगम्यते । श्रवणं श्रुतिः । एकार्थमनेकं पदं वाक्यमित्युक्तमेव । तदेतत् सर्वेष्वेव वाक्येषु समर्थितं विविक्तं च दृश्यते । इह तावत्, 'कदा चन स्तरीरसि' इत्यनेन मन्त्रेण इन्द्र उपस्थातव्य इति नैतत् कस्य चिच्छब्दस्य श्रवणादेवावगम्यते । नापि शब्दान्तरस्य समीपे उच्चारितस्य सामर्थ्यमस्ति, येनैतदवगम्येत । एतस्मात् खलु मन्त्रे इन्द्रशब्दो विद्यते, यो विशिष्टां देवतामवगमयितुं शक्नोति । तया चावगमितया प्रयोजनमस्तीति । तेनेन्द्रोपस्थाने इन्द्रशब्दः प्रयुज्यते । तदेकवाक्यत्वाच्च अविशिष्टानि पदानि । न त्वेवमस्यामृचि कस्य चिच्छब्दस्य सामर्थ्याद्गार्हपत्यस्योपस्थानं भवति । श्रवणादेव तु गार्हपत्यशब्दस्य नयमर्थं प्रतीमः, न लिङ्गात् । यदि तु लिङ्गं बलीयः, इन्द्र उपस्थातव्यः । यदि गार्हपत्यश्रवणम्, ततो गार्हपत्यः । एवं तर्हि लिङ्गवाक्ये विरुध्यमाने इह संप्रधार्ये, न श्रुतिलिङ्गे । इन्द्रशब्दस्य विशिष्टदेवताभिधानसामर्थ्यादिन्द्रोपस्थानम्, यदि लिङ्गं बलीयः, अथ तु वाक्यम्, गार्हपत्य उपस्थेयः । वाक्यं ह्येतत्, 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते इति' । नैतदेवम् । यद्यपि एतद्वाक्यम्, श्रुतिरपि अत्रास्ति, या त्वत्र श्रुतिः, सा लिङ्गेन विरुध्यते, न यद्वाक्यम् । कथम् ? बलीयस्यपि हि लिङ्गे, ऐन्द्र्योपतिष्ठते इत्येतद्गार्हपत्यशब्देन सह एकवाक्यतामुपैत्येव । यदि हि नोपेयात् ततो लिङ्गेन विरुध्येत । यत्तु गार्हपत्यश्रवणादेवार्थः प्रतीयते, स लिङ्गे बलीयसि परित्यक्तो भवति । नासौ उपस्थानेन सम्बध्यते । तदा हीन्द्रं गार्हपत्यशब्दोऽभिवदेदग्निसमीपं वा । अथ तु श्रुतिः प्रमाणं भवति, ततो लिङ्गेनागत इन्द्रोपस्थानं बाध्येत । तस्मात् श्रुतिलिङ्गयोरेवैष विरोधः, न लिङ्गवाक्ययोरिति । अथवा नानेकवाक्यत्वात् इन्द्रप्राधान्यं गार्हपत्यप्राधान्यं चोपस्थानस्य । कुतस्तर्हि ? इन्द्रशब्दवत्त्वात् मन्त्रस्य इन्द्रप्राधान्यम्, द्वितीयाविभक्तिश्रवणात् गार्हपत्यप्राधान्यम् । तस्मात् श्रुतिलिङ्गयोर्विरोधः ।

वा— (अस्मिन् अधिकरणे वार्तिकानुपूर्वी भाष्याद्यनुसारेण मनाक् परिवर्तिता इत्यवधेयम् ।) इदानीं षण्णामपि श्रुत्यादीनां बलाबलं विचार्यते । तत्र भिन्नविषयाणां न समवाय इति समवाये एकार्थोपनिपातो विषयत्वेनोदाहृतः । तत्र केचिदाहुर्विरोधग्रहणं कर्तव्यमिति । कुतः ? 'क्रीणात्यरुणयेत्यत्र समवाये हि सत्यपि । विरोधाभावतो नैव चिन्तयन्ति बलाबलम् ॥' एक एव अरुण्यादिः शेषः श्रुत्या सामान्यक्रियासम्बन्धी, वाक्येन तद्विशेषस्य क्रयस्य, प्रकरणेन ज्योतिष्टोमिकस्य । सत्यपि चानेकप्रमाणसमवाये परस्परानुपहतिमित्त्वाद् अविरोध इति कस्य विचारो न भवति, निर्विशेषसामान्यानुपपत्तेः । क्रयस्य सामान्यप्रयुक्तत्वे चानर्थक्यात् अपेक्षिते हि श्रुतिवाक्याभ्यां वाक्यप्रकरणे । तस्मात् कर्तव्यं विरोधग्रहणमिति । न वा कर्तव्यम् । कुतः ? 'समानविषयत्वं हि समवायोऽभिधीयते । न चैकार्थ्ये प्रमाणानां शेषाणामवगम्यते ॥' अरुणादौ तावत् नैव प्रमाणसमवायोऽस्ति । नत्वेकत्र समवस्थानं समवायः । किं तर्हि ? विषयैकत्वम् । इह चारुण्यस्य क्रियासम्बन्धः श्रुत्या । तस्य तु श्रुतिकल्पितक्रियाकारकसम्बन्धस्य भूयोऽप्यपेक्षावशेन क्रयविषयत्वम् । तावता च प्रयोजनानवाप्तेः अपेक्षान्तरे सति अपूर्वसम्बन्धवतः क्रयस्य ज्योतिष्टोमार्थत्वमिति विषयनानात्वम् । अतश्च सर्वेषां विनियोजकत्वमविरुद्धम् । न चात्र विप्रकृष्टग्रहणे संनिकृष्टस्य बाधो दृश्यते । नहि क्रयं गृह्णत् अरुणादाः क्रियासम्बन्धं बाधते, नापि ज्योतिष्टोमे कुर्वन् क्रयसंबन्धम् । यत्र तु एकः शेषः, तावन्नेव च संबन्धान्तरविरोधिना एकेन प्रमाणेन अन्यशेषिणो विधीयते, यौ च तदनाधानुपपत्तिना शेष्यन्तरार्थः, एकसम्बन्धे च कृतार्थस्य आकाङ्क्षाऽभावात् पुनर्विनियोगान्तरानुपपत्तिः, तत्र प्रमाणयोः परस्परपदार्थसमानविषयत्वलक्षणः समवायः । तथा यत्र शेषभेदेऽपि एकस्मिन्नेव शेषिणि तुल्योपकारनिबन्धनः एकेन प्रमाणेनान्यः शेषः साधनत्वेन प्रतीयते, अन्येनापरः, न चैकस्य विशेषकारः द्वेषी शेषान्तरमपेक्षते, तत्रापि एकविषयसहकारित्वात् समवायः । स च विरोधे एव सति

भवतीति समवायग्रहणेनैव सिद्धो विरोधः। यत्र पुनः स्पष्ट एव शेषभेदो यथा 'समिधो यजति' इत्यादिषु, यत्र वा तस्यैव किञ्चिदाधिक्यं भवति यथाऽरुणाया व्याख्यातम्, तथा यत्र शेषिभेदो यथाऽऽग्नेयादिष्वाग्नाकपालादीनाम्, यत्र वा तद्गतमाधिक्यं यथा दर्शपूर्णमासाङ्गानामेवोपकारभेदः, तथापि विषयान्यत्वादसमवाय इति। यच्च श्रुत्या विनियुज्यते, यच्च समाख्यया, तत् सर्वं तुल्यम्। यस्तु सर्वाङ्गजन्य एकः प्रधानोपकारः, तत्र पर्यायपर्यायविधानादेकमेव प्रमाणम्, शेषत्वं चेति व्यापारभेदादसमवायः। तथा यत्र स एव शेषस्तस्मिन्नेव शेषिणि सन्निकृष्टेन विप्रकृष्टेन च प्रमाणेन विनियुज्यते, तत्राप्येकस्यैव प्रमाणत्वेन इतरस्य प्रयोजनान्तरार्थत्वादसमवाय इति। तस्मात् विरोधविषयमेव समवायग्रहणम्। तत्र षण्णामप्येकस्यैव बलाबले कथयितव्ये क्रमवर्तित्वात् वाचो युगपदशक्तेरेकैकस्य संप्रधारणा। यत्तु द्वितीयोपादानं तत् प्रतियोगिना विना बलाबलकथनाशक्तेः तेनोच्यते— द्वयोर्द्वयो. इति। एकार्थवर्तित्वाद्वाचः इत्यस्य अपरा व्याख्या, येयं बलाबलचिन्तैषा प्रत्येकं श्रुत्यादिषु समवैति न समुदाये। तानि हि शेषविनियोगनार्थवन्ति न बलाबलम्। अतस्तस्याः प्रतिप्रधानवृत्तित्वादयौगपद्येन एकैकस्य संप्रधारणायां कर्तव्यायां द्वितीयोपादानं विरोधबलाबलाधाना प्रतियोगिन्यनुपपत्तिं दर्शयितुमसंभवात् 'द्वयोर्द्वयोः समवायो' इत्युक्तम्। तत्र एकैकस्य पञ्चभिः पञ्चभिः सह विचारे कर्तव्ये यदेकैकेन सह क्रियते तद्बाधितबाध्यस्य बाधकबाधनेन बाधस्य सुज्ञानत्वात्। यानि हि श्रुतिबाध्यैर्लिङ्गादिभिर्बाध्यन्ते तानि श्रुत्या बाध्यन्तेतरामिति न तया सह संप्रधारयिष्यन्ते। तत्र प्रथमं तावत् क्रमप्राप्ते श्रुतिलिङ्गयोः संप्रधारणमिति। 'किमिहोदाहरणम्' इति केवलपदप्रयोगाभावात् सर्वत्र वाक्यत्वे सति न श्रुतिलिङ्गयोः स्वसामर्थ्यातिरेको लभ्यते इति मन्यमानस्य प्रश्नः। वक्ष्यमाणविवेकाभिप्रायेण आह— 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। किमिन्द्रस्यैवोपस्थानं कर्तव्यम्, उत इन्द्रस्य गार्हपत्यस्य वा, अथवा समुचितयोः, अथवा गार्हपत्यस्यैवेति। यदि लिङ्गं बलीयः, तत इन्द्रोपस्थानम्। अथ तुल्यबलत्वं विरोधश्च, ततो विकल्पः। अथ तुल्यबलत्वेऽप्यविरोधः, ततः समुच्चयः। अथ विरोधः श्रुतिबलीयस्त्वं च, ततो गार्हपत्यस्यैवोपस्थानमिति। यत्तु सिद्धवत् गार्हपत्यार्थत्वाङ्गीकरणेन 'वचनात्त्वयथार्थमैन्द्री स्यात्' ३।२।२।३ इत्युक्तम्, तदिह स्थापयिष्यमाणश्रुतिबलीयस्त्वाभिप्रायेण। तेनैव सर्ववाक्यत्वाभिप्रायेण श्रुतिलिङ्गे अर्थे वाक्यत्वभ्रान्त्या पुनः पृच्छति 'का पुनरत्र श्रुतिः किं लिङ्गम्' इति। तत्रोत्तरं गार्हपत्यशब्दश्रवणं मन्त्रसामर्थ्यं चेति। परः पुनराह— यद्येवंविधपदसमूहात्मके श्रुतिलिङ्गे, हन्त तर्हि वाक्यं नाम न किञ्चिदप्यस्ति। तदुच्यताम्, अथ वाक्यं नाम किं (अथ किं वाक्यं नाम इति भाष्ये पाठः) इति। सिद्धान्तवादी तु तथैव वाक्यविवेकज्ञानस्य मन्यमान आह 'संहत्यार्थमभिदधति पदानि वाक्यम्' इति। यद्यपि च न संहतानां कश्चिदेकोऽभिधेयः, तथापि गम्यमानाभिप्रायेणोक्तम्। अथवा एकलक्ष्यमाणार्थप्रयुक्ततया एषां स्वमात्राभिहितानि यदा स्वार्थमभिदधति, तदा तद्भूतान्येव सन्ति वाक्यत्वं प्रतिपद्यन्ते इति। यद्येवं ततः उभयोरपि उदाहृतयोर्मन्त्रब्राह्मणयोर्वाक्यलक्षणयोगाद्वाक्ययोरियं संप्रधारणा, न श्रुतिलिङ्गयोरिति। यदि वा अवश्यं श्रुतिलिङ्गयोः विरोधः समर्थनीयस्ततः श्रुतिलिङ्गवाक्यानि लक्षणतो विवेक्तव्यानीदं नाम तेषां परस्परमन्तरमिति। तदभिधीयते—'यच्छब्दस्योक्तिसामर्थ्यं तल्लिङ्गम्, त्रिविधा श्रुतिः। विध्युक्तिविनियोगाख्या, वाक्यं तु प्राङ्निदर्शितम्॥' ननु सामर्थ्यपूर्वकत्वाद्युक्तिविधिविनियोगानाम्, 'ऐन्द्र्या गार्हपत्यम्' इत्यत्रापि शब्दसामर्थ्यमस्ति। 'कदा चन स्तरीरसि' इत्यत्रापि च इन्द्राभिधानमित्यविशेष एव श्रुतिलिङ्गयोः प्राप्नोति। तथाहि, 'विध्युक्तिविनियोगा हि न विना शब्दशक्तिभिः। न चेन्द्रशब्दसामर्थ्यमभिधाश्रुतिवर्जितम्॥' सत्यमुभयत्र उभयमप्यस्ति। 'किं त्वैन्द्र्यां गार्हपत्यस्य नोक्तिः शक्त्याऽवगम्यते। इन्द्राद्यस्यमतिश्राम्या नाक्षरश्रुतिचारिता॥' [illegible] हि 'ऐन्द्र्या गार्हपत्यम्' इत्येषा शक्तिः, तथा एतान्येव पदानि प्रयर्य

लोके विनियुक्तानि, न मन्त्र ऐन्द्रो गार्हपत्याङ्गम्, अन्यत्र गतया शक्त्या अन्यस्याविनियोगात्। स्वसामर्थ्यप्रवृत्तैस्तु ब्राह्मणपदैः शक्त्या शक्त्यनपेक्षमङ्गत्वमभिधीयते। न चात्र सामर्थ्यं प्रथमं गृह्यते, लिङ्गाभिधानान्यथानुपपत्त्यैव तस्य गम्यमानत्वात्। तेन ज्ञाते विनियोगे शक्तिः कल्प्यते इति नासौ विनियोगकारणम्। यद्यपि वस्तुतः प्रथमं विद्यते, तथापि प्रमाणतः पश्चाद्गृह्यते, इति कारकहेतुत्वे सत्यपि ज्ञापकत्वेनाकारणमित्युच्यते। यदि तु पौरुषेयमिदं भवेत् तथा सति वक्तुरभिधानशक्तिज्ञानं विनियोगाभिधानात् प्रथममेव भवेत्। न त्वेतदस्ति, वेदस्यापौरुषेयत्वात्। तस्मात् सर्वपुरुषाणां प्रतिपत्तृत्वात् पश्चात्तनं शक्तिज्ञानमित्यवश्यश्रवणकृत एवायं गार्हपत्याङ्गत्वप्रत्ययः। 'कदा चन स्तरीरसि' इत्यत्र पुनर्यद्यपि इन्द्रशब्देनेन्द्रोऽभिधीयते, तथापि विनियोगो नाभिधीयते इति श्रुतेरव्यापारः। तदत्र मन्त्र चित्सामर्थ्यात् श्रयणात् इन्द्रस्य शेषित्वम्, मन्त्रस्य शेषत्वं प्रतीयते। यथैतन्न द्वितीयाश्रवणात् गार्हपत्यस्य ईप्सिततमत्वमैन्द्र्याश्च तृतीया श्रुत्या करणत्वम्। केवलं तु मन्त्रस्याभिधानसामर्थ्याद्विनियोगयोग्यता दृश्यते। न च तावता विनियोगोऽभिहितो भवति, न च विहित, मन्त्रस्याविधायकत्वात्। ब्राह्मणवाक्ये तु अभिधानं विधानं चोभयमपि निष्पन्नम्। ननु मन्त्रस्यापि अभिधानपूर्वकमेव सामर्थ्यैकरूपम्। सत्यमेवम्। न तु तद्विनियोगस्याभिधानम्। किं तर्हि? अर्थस्वरूपमात्रस्य। अन्येन च तेन प्रथमं तदभिधान शक्तिः कल्प्यते, अन्या [illegible] तद्बलेन विनियोगशक्तिः। क्रमम्। 'यो हि यस्याभिधानाय शक्त इत्यवगम्यते। विनियोगेऽप्यसौ शक्तो न ह्यशक्तो नियुज्यते॥' ततश्च द्वितीयसामर्थ्याद्विनियोगः कल्पयिष्यते, न प्रथमात्। प्रथमेन हि विनियोगनिरपेक्षमिन्द्राभिधानमात्रं कृतम्। अत इह ईदृशो विवेकः प्रतिपत्तव्यः। 'एकत्रासति सामर्थ्ये मन्त्रः शेषोऽभिधीयते। अन्यत्रानुक्तशेषत्वं सामर्थ्यं संप्रतीयते॥' अविद्यमानमेव ऐन्द्र्या गार्हपत्याभिधानसामर्थ्यमभिहितविनियोगविधानात् कल्पनीयम्। विनियोगस्तु प्रथममेव क्लृप्तः। इन्द्र प्रति तु सामर्थ्यं क्लृप्तमालोच्य विनियोगोऽभिहितो निहितो वेत्येतत् कल्पनीयम्। वाक्ये पुनः 'अर्थं प्रति न सामर्थ्यं न च शेषत्वमुच्यते। केवलः पदसंघातः प्रत्यक्षमुपलभ्यते॥' कथम्भावदेशसामान्ययौगिकरूपाणां तु प्रकरणक्रमसमाख्यानां विवेकः सुगम एवेति न पृष्टो न निरूपितः। तदेतत् सर्वेष्वेव वाक्येषु समवेतं विविक्तं च दृश्यते इति। नहि किञ्चिदपि वाक्यं शब्दसामर्थ्येनार्थाभिधानेन पदान्तरसंनिधानेन वा विना विद्यते। विवेकश्च पुरोदितः। क्व चित् कस्य चित् पूर्वं सम्प्रतीतेः। तद्दर्शयति, इह तावत् 'कदा चन स्तरीरसि' इति न विनियोगोऽभिधीयते, न पदान्तरसंनिधेर्वा गम्यते, किं तर्हि, एतस्मात्प्रतीन्द्रशब्द इन्द्राभिधानसमर्थो विद्यते, शेषाणि च पदानि तेनैकवाक्यतां यान्तीति समस्तो मन्त्र इन्द्राभिधानसमर्थो गम्यते। सोऽपि च इन्द्रः कर्माङ्गत्वादभिधानार्ह इत्यमत्यापि वचने भवत्यभिधीयतामित्युपेक्षा। (इन्द्रः अभिधीयतां इत्युपेक्षा भवति इत्यन्वयः)। गार्हपत्ये पुनर्विनैव मन्त्रसामर्थ्येन विनियोगः ब्राह्मणमभिधत्ते इति वक्ष्यत्न चिन्तयितव्यम्। अत्र केचिदाहुः— "एवं तर्हि लिङ्गवाक्ये' इत्येतस्मात्प्राग् अयं ग्रन्थो योजयितव्यः 'अथवा नानैकवाक्यत्वादिन्द्रप्राधान्यम्' इत्यादिः। कुतः? 'लिङ्गत्वमभ्युपेतं चेदिन्द्रोपस्थानकल्पने। उभयत्रापि वाक्यत्वं कथं भूयोऽवकल्पते॥' यत्र वाक्यद्वयमेतदित्युपन्यस्तं तत्रैवैतदुच्यते वक्तुम् 'अथवा नानैकवाक्यत्वात् इन्द्रप्राधान्यं गार्हपत्यप्राधान्यं वोपस्थानस्य' इति तथा ह्युभयवाक्यैकवाक्यत्वव्यापारनिराकरणमवकल्पते। अन्यथा तु मन्त्रस्य लिङ्गविनियोज्यत्वे पूर्वपक्षवादिनैवाभ्युपगते पुनस्तदनपेक्षमिन्द्रोपस्थानमप्येकवाक्यत्वकृतमेवेत्याशङ्क्य निराकरणमसम्बद्धमेव स्यात्। तस्मात् प्रमादादुत्क्रान्तस्य ग्रन्थस्य अपकृष्य व्याख्यानं कर्तव्यम्।" न त्ववश्यमेतदादर्तव्यम् (केचिन्मतम्)। भवत्येव हि बह्वीनां परिचोदनानां मध्ये परिचोदनापरिहारकालेऽपि पूर्वपरिचोदनापरिहारः। अपि च। यदा 'अथवा नानैकवाक्यत्वात्' इत्येतत् प्रथममुक्तम्, तदाऽपि पुनः 'एवं तर्हि लिङ्गवाक्ये' इत्यत्र वाक्यग्रहणमसम्बद्धमेव स्यात्। ततो यथान्यासमवस्थिते अभ्युपेत्यवादमात्रेण पूर्वपक्षवादिनैकस्य लिङ्गत्वमुक्त-

बलाबलाधिकरणम्

मतोऽस्य वाक्यस्यानुपपत्तिशेषमपनयामीत्येवमाह ' अथवा नानैकवाक्यत्वात् ' इति । यद्वा ब्राह्मणगतमेवैकवाक्यत्वमकारण विवक्षन् प्रसङ्गान्मन्त्रेऽप्युक्तवानिति व्याख्येयम् । तत्र वाक्य लेतत् ' ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इत्यस्याभिप्राय – यदैन्द्र्या तृतीयाश्रुत्या शेषत्वमात्मन यागतशेषिविशेष प्रतीयते । यत्तु ( यच्च ) गार्हपत्यमिति द्वितीयया किमपि प्रति शेषित्वमात्रम्, न तस्य लिङ्गेन सह कश्चिद्विरोध । यदाम्नातसंबन्धे सति यथार्थमेव ऐन्द्र्या करणत्व स्यात् । गार्हपत्यस्य वा या का चिदाभेर्यं प्रति शेषित्व भवेत् । परस्परसंनिधान तूभयोरिन्द्रोपस्थान बाधते तच्च वाक्यमिति । नैतदेव इति गार्हपत्याभिधान श्रुतिं तावदुपन्यस्यति । परस्परसंनिधानमपि हि श्रुतिं पीडयित्वा शक्यमविरोधेन नेतुम् । यदि तु गार्हपत्यशब्दो गृहपतेरयमित्येव इन्द्र अभिवदेत्, यज्ञसाधनत्वेन वा लक्षयेदग्निसमीप वा, ततो लिङ्गाविरोधेनैव तत्संनिधिरुप पद्यते । यतस्त्वत्र समुदायप्रसिद्ध्यभिधेयापरित्यागेन वर्तते, ततो विरुध्यते इति श्रुतिविरोध । अथवा नानैकवाक्यत्वात् इति विभक्तिश्रुतिविरोधोपन्यास । यदि हि सप्तम्यर्थे वा तृतीयार्थे वा द्वितीया वदेत्ततोऽपि नैव विरोध स्यात् । यतस्तु ईप्सिततमत्वमाह तेन विरुध्यते । लिङ्गविरोधस्तु प्रागुक्त एव एकवाक्यत्वव्यापारनिराकरणमात्रार्थमुपन्यस्यते । कथ पुनर्यथोक्तेन न्यायेनोभयथा विरोध संभवे श्रुतिलिङ्गविरोध एव परिगृह्यते, न वाक्यविरोध । उच्यते । ' यथा शीघ्रप्रवृत्तित्वाल्लिङ्गादेर्बाधिका श्रुति । तथैव विनियोगेऽपि सैव पूर्वं प्रवर्तते ॥ ' यच्च शीघ्रतरं विनियुङ्क्ते, तस्यैव प्रतियोगिना सह विरोधो लक्ष्यते । ननु च श्रुतिमात्र न विरुध्यते इत्युक्तम् । कथ [illegible] विरुध्यते, यदा श्रुतिनियतावतो श्रुतिवाक्यसंबन्धो एक शेषशेषिरूप, अयो विशेषणविशेष्यात्मक । तत्र च श्रुतिरेव वदति वाक्यमुभयस्य विशेषस्यैनविध शेषशेषित्वमिति । लिङ्ग [illegible] शेषशेषिसंबन्धे नैव सह विरुध्यते न वाक्यगम्येन विशेषणविशेष्यभावेन । अतश्च निष्प्रतिद्वन्द्विना वाक्येन यदा विशेषणविशेष्यभाव कृत, तदा श्रुत्या सह लिङ्गविरोध उपलभ्यमानो विचारयितव्य । अथवा यदैव ऐन्द्र्या इत्युक्तम्, तदैव तदर्थशास्त्रयाथ्येन इन्द्रव्यतिरिक्त कोऽप्युपस्थातव्य च लिङ्गसामर्थ्येन्द्रविरोधीत्येतत्प्रतीयते । तस्मात् श्रुतिलिङ्गयोरेवैष विरोध इत्युपपन्नो विचार ।

**भाष्यम्**— ( श्रुतिलिङ्गाधिकरणे पूर्वं पक्ष ) किं तावत् प्राप्तम् ? तुल्यबले एते कारणे इति । कथम् ? इदमपि कारण इदमपि, श्रुतिरपि लिङ्गमपि । नहि विज्ञानस्य विज्ञानस्य च कश्चिद्विशेष उपलभ्यते रूप प्रति, अस्य भङ्गुरस्येव रूप अस्य दृढस्येवेति । ननु लिङ्गस्य भङ्गुरस्येव रूपम् । सविचिकित्सो हि भवति लिङ्गात् प्रत्यय निर्विचिकित्स श्रुते । नैतदुक्तम् । यतो लिङ्गात् सविचिकित्स प्रत्यय, तस्य च श्रुतेश्च नैव प्रामाण्यम् अस्ति । यतस्तु खलु लिङ्गान्निर्विचिकित्स प्रत्यय स श्रुत्या विकल्पितुमर्हति । ननु नैव कदा चित् लिङ्गान्निर्विचिकित्स प्रत्ययोऽस्ति । नैतदेवम् । एव हि सति नैव लिङ्ग नाम किञ्चित् प्रमाणमभविष्यत् । काम मा भूत् प्रमाणम् । भवति तु संशयो लिङ्गपरिज्ञातेष्वर्थेषु । यदि वा विस्पष्टमेवाप्रामाण्यम्, न संशय । कथम् ? समर्थमेतत् इममर्थमभिनिर्वर्तयितुम् इति लिङ्गादेतावदवगम्यते । न च यदस्य निर्वर्तनायालम्, तदस्यैव वचने तद्विनिवर्तयितुमर्हति । तस्मात्र लिङ्ग विनियोजकमिति ।

अत्राभिधीयते । प्रकरणवतोऽर्थस्य संनिधाने यमर्थमामनन्ति, स तस्य साधनभूत इत्येव गम्यते । कथ खलु उपकरिष्यतीति संदिह्यमाने, भवति सामर्थ्यात् परिनिश्चय । यत्रायं समर्थस्तत्र शक्यो विनियोक्तुमिति । तस्माद्भवति लिङ्ग प्रमाणमिति । न च लिङ्गप्रामाण्ये विनिगमनाया हेतुरस्ति । तस्मात्तुल्यबले एते कारणे । ' कदा चन स्तरीरसि ' इति लिङ्गादिन्द्र उपस्थातव्य, श्रुतेर्गार्हपत्य इति । अविरोधात् उभावपि इममेवार्थ प्रतिपद्यामहे । बलीयानपि हेतु विरुध्यमानमबलीयांस बाधितुमर्हति, नाविरुद्धम् । न च कश्चन विरोध, यदिन्द्रमुपतिष्ठेतानेन मन्त्रेण गार्हपत्यमपि । नन्वयमेव विरोध सकृदुपस्थान चोदित असकृदभिनिर्वर्त्यते इति । उपस्थेयभेदात् ' प्रतिप्रधानमावर्तन्ते गुणा ' इति न्याय एवैष न विरोध । अथ वर्हि विरोध । गार्हपत्ये उपस्थीयमाने अभिवदन् इन्द्रशब्दो गुण क्रियायोग वा अपेक्षमाणो

बाधितुमर्हति । इन्द्रे चोपस्थातव्ये निरपेक्ष इन्द्रवचन एव । ‘गौणमुख्ययोश्च मुख्ये सम्प्रत्ययः’ इति । नेति ब्रूमः । विरोधे मुख्येन गौणो बाध्येत । न च कश्चिद्विरोधः । युगपदभिधाने हि विरुध्येयाताम् । [redacted] च अन्यस्मिन् प्रयोगे अग्निवचनः अन्यस्मिन् इन्द्रवचनः । अतः तुल्यबले एते कारणे इति । एवं प्राप्ते, ब्रूमः । श्रुतिलिङ्गयोः श्रुतिर्बलीयसी । कुतः ? अर्थविप्रकर्षात् । किमिदमर्थविप्रकर्षादिति । अर्थस्य विप्रकर्षः अर्थविप्रकर्षः । कः पुनरर्थः ? श्रुत्यर्थः । गार्हपत्यमुपतिष्ठते इति सन्निकृष्टः श्रुत्यर्थः । इन्द्र उपस्थेय इति विप्रकृष्टः । कथम् ? ‘कदा चन स्तरीरसि’ इत्यनेन मन्त्रेण इन्द्र उपस्थातव्य इति न श्रूयते । सत्यपि इन्द्राभिधानसामर्थ्ये वचनाभावादनुपस्थानीय इन्द्र इत्येव गम्यते । ननु इदमुक्तं प्रकरणाम्नानादङ्गमित्यवगम्यते, सामर्थ्याद्विनियोग इति । नैतदस्ति । उक्तमेवैतत् ‘धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात्’ ( १।३।१।१ ) इति । यदेतत् प्रकरणं लिङ्गं च, उभयमप्येतत् अशब्दम् । न चातिक्रान्तप्रत्यक्षविषये एवंलक्षणकेऽर्थे शब्दमन्तरेण परिच्छेदोऽवकल्पते । अतो मन्यामहे विप्रकृष्टं श्रुत्यर्थाल्लिङ्गमिति । यद्येवम्, श्रुत्यर्थेन विरोधिनी न विरुद्धे, तत्रापि न लिङ्गादर्थपरिच्छेदः । तत्रैतदेव नास्ति, लिङ्गं प्रमाणमिति । कुत एवैतेनैव श्रुतिर्विरोत्स्यते इति । तत्र श्रुतिलिङ्गयोर्नैरपेक्ष्यं प्रति सम्प्रधारणैव नोपपद्यते इति ब्रूमः । अत्रोच्यते । इतिकर्तव्यतार्थिनः प्रकरणस्तोऽर्थस्य सन्निधौ उपनिपतितो मन्त्रः आम्नानसामर्थ्यात् इतिकर्तव्यताकाङ्क्षस्य वाक्यशेषतामभ्युपैत्य ( अभ्युपैति ) एतेन मन्त्रेण यजेतेति । किमुक्तं भवति ? यागेनाभीप्सिते साध्यमाने अनेन मन्त्रेणोपकुर्यादिति । न चान्तरेणेन्द्राभिधानं अयं मन्त्रः उपकर्तुं शक्नोति । तेनैतदुक्तं भवति, अनेन इन्द्रोऽभिधातव्यः इति । अतः श्रुतिमूल एवायमर्थः । यदि श्रुतिमूलो न श्रुत्यन्तरेण बाधितुं शक्यः । तदेतल्लिङ्गम्, यदि वा नैव प्रमाणम्, यदि वा श्रुत्या विकल्पितुमर्हतीति, नाप्यप्रमाणं भविष्यति, नापि विकल्पिष्यते इति ब्रूमः । कथम् ? श्रुतिलक्षणोऽयमर्थं इत्युपपादितम् । तस्मान्नाप्रमाणम् । यतस्तु खलु आनुमानिकीमेकवाक्यता लिङ्गसामर्थ्यं चापेक्ष्य श्रौतोऽयमर्थः, यदिन्द्रस्योपस्थानमनेन मन्त्रेणेत्यवगम्यते । प्रत्यक्षा तु श्रुतिर्गार्हपत्यमुपतिष्ठते इति । स एषोऽर्थविप्रकर्षः, प्रथमं त्ववच्छिन्नज्ञानम् । ततः सामर्थ्याच्छब्देनायमर्थोऽभिहितो भवति । तदेतत् श्रुतिविरोधे नावकल्पते । विस्पष्टं ह्यवगतमेतदनेन मन्त्रेण गार्हपत्य उपस्थेय इति । तत्र विज्ञातं एतदेवमयमुपकरोति मन्त्र इति । एतस्मिंश्च निर्ज्ञाते कृतसामर्थ्ययोर्वाक्यप्रकरणयोर्नैतदेवं कल्पयितुं शक्यमिन्द्रोपस्थानशब्देनाभिहितमिति । तस्मादर्थविप्रकर्षात् श्रुत्या लिङ्गं बाध्यते इति । विकल्पस्य चान्याय्यत्वात् । अन्याय्यश्च विकल्पः । तत्र अभावः पक्षे । नित्यवत् च ‘ऐन्द्र्या गार्हपत्यमुपतिष्ठते’ इति श्रूयमाणे यदभावः पक्षे परिकल्प्यते, तदश्रुतं भवति । श्रुतं च हीयते । यागाश्च श्रुतस्यार्थस्य उत्सर्गे दोषपत्तावान् अश्रुतपरिकल्पनायाम् । उभयत्र हि प्रमितिर्बाध्यते । तस्मादन्याय्यत्वाद्विकल्पस्य श्रुतिलिङ्गयोः श्रुतिर्बलीयसीत्यवगच्छामः ।

अथ यदुक्तं सति विरोधे न्याय्यो बाधः । न चास्ति विरोध इति । अत्रमस्ति विरोधः । यदकृतसामर्थ्ययोर्वाक्यप्रकरणयोः इन्द्रोपस्थानवाचिनी श्रुतिर्भवति । कृतसामर्थ्ययोस्तु नावकल्पते । न च वाक्यप्रकरणाभ्यां युगपत् कृतसामर्थ्याभ्यामकृतसामर्थ्याभ्यां च शक्यं भवितुम् । तस्माद्विरोधः । विरोधे च श्रुतिर्लिङ्गाद्बलीयसीति ।

वा— इदानीं भाष्यशेषमनुक्रमिष्यामः । ‘तत्र तुल्यबलत्वोक्तिः स्वतःप्रामाण्यविभ्रमात् । प्रदेशान्तरदृष्टं च रूपं तुल्यं द्वयोरपि ॥’ स्वत एव मन्त्रत्वं दृष्ट्वा श्रुत्यनुमानान्तरेणैव विनियोगबुद्धिर्भवति इति श्रुतितुल्यत्वम् । ‘नहि विज्ञानस्य विज्ञानस्य च विशेष उपलभ्यते’ इति मन्त्राम्नानवेलाया इन्द्रार्थत्वं ज्ञातम्, श्रुत्युच्चारणकालेऽपि गार्हपत्यार्थत्वम्, इत्युभयोः तुल्यात्मनोः अनिश्चितत्वम् । नहि अविज्ञातरूपो मन्त्रः श्रुत्या शक्यो विनियोक्तुम्, इति श्रुत्या प्रथमं रूपनिरूपणं कर्तव्यम् । अतश्च तदवधारणवेलाया इन्द्रोपस्थानप्रत्ययो जातो न शक्यो निवर्तयितुमिति मन्यते । ‘ननु लिङ्गस्य भङ्गुरस्येव रूपम् । सविचिकित्सो हि’ इति श्रुतौ दृश्यमानाया अनुमानाप्रमत्वात् भङ्गुरत्वम् । सविचि-

विस्रो हि तु अयम्, विक्षेपजन्यत्वात् । नहि अस्य स्वतः प्रामाण्यं इत्यभिप्रायः । परः पुनः प्रत्ययोत्पादन ऐकान्तिकं गृहीत्वा सविचिकित्सत्वं संदेहविपर्ययानध्यव सायानामन्यतमं मन्यमान आह– 'नैतदुक्तम् । यतो लिङ्गात् सविचिकित्सः प्रत्ययः । तस्य (च) श्रुतेश्च नैव संप्रधारणा अस्ति' इति किमियं ऐन्द्री भवति न भवति, इत्यनिश्चितः । तस्य श्रुत्यविरोधे अप्रमाणत्वात् नैव तया सह बलाबलचिन्ता । यतस्तु निर्विचिकित्स एकान्तेन एतद्देवत्योऽयं मन्त्र इति प्रत्ययः, स श्रुत्या सह तुल्यबलत्वादिकं विचारयितुमर्हति । ननु नैव कदा चिदिति । पूर्वपक्षे एव कदा चिद्विक्षेप इति मन्यते । इतरस्तु स्वाभिप्रेतमेव सविचिकित्सत्वं गृहीत्वाऽऽह 'एवं हि सति नैव लिङ्गं नाम किञ्चित् प्रमाणमभविष्यत्' इति । सिद्धान्तवादी तु वदति यदि सविक्षेपप्रत्ययोत्पादनमात्रेण कुपितं लिङ्गं प्रामाण्यमेव मुञ्चति 'कामं मा भूत् प्रमाणम्, भवति तु तावतो लिङ्गपरिज्ञातेष्वर्थेषु' इति । कथं पुनः सविक्षेपत्वं परित्यज्य संशय एव सविचिकित्सत्वमुदाह्रियते । कथं वा लिङ्गपरिज्ञातत्वं सिद्धवदभिधीयते । नैष दोषः । लिङ्गपरिज्ञानत्वं तावदविरोधवेलाभिप्रायम्, संदिग्धत्वं विरोधवेलायाम् । एतदुक्तं भवति । यदविरोधकाले लिङ्गस्यावगतं विनियोजकत्वम्, तत्र तथैव सर्वेणैव अवसीयते । किं तर्हि ? संदिह्यते । अन्यत्र अविरोधात् विनियोगोऽङ्गीकृतः, स इह तथैव भवति अथ नेति चिह्नयानतिष्यते इति । यदि वा विस्पष्टमेवाप्रामाण्यमिति । तावदेव संदेहो भवति यावत् प्रत्यक्षा श्रुतिर्नोपलभ्यते । तस्यां तु सत्यां इतरकल्पनानुपपत्तेरप्रामाण्यम् । लिङ्गे हि सामर्थ्यमात्रं प्रत्यक्षम् । न च तावता विनियोग उक्तो भवति । न चानुक्तस्य क्रियाया प्रामाण्यमस्ति । यथा सत्यपि सामर्थ्ये विप्रराजन्यौ न न वैश्यस्तोमं कुरुतः । तस्मान्न लिङ्गं विनियोजकमिति । परन्तु विरोधविषयमप्रामाण्याभिधानं अज्ञात्वा सार्वत्रिकमेवेदमुक्तमिति भीतः प्रामाण्यमार्गं दर्शयति 'प्रकरणवतोऽर्थस्य संनिधाने समर्थमाम्नानमिति' इति । तदेतत् 'अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात्' इत्यत्र 'अविशिष्टस्तु वाक्यार्थः' इत्यत्र च वर्णितम् । अथवा सिद्धान्त-

वादिनाऽपि विरोधे सुस्पष्टमप्रामाण्यं वक्ष्यामीति मन्यमानेन प्रथमं स्वतन्त्रमेव तावदप्रामाण्यं दर्शितम् । तथाकृते स्वयमेवैतस्य श्रुत्यनुमानद्वाराप्रामाण्यकल्पनमाफल्यते । ततश्च मम सुज्ञयो भविष्यति । तत्र इतरेण विरोधविषयमनादृत्य प्रामाण्यं तावदस्तीति निरूप्य तुल्यबलत्वमभिहितम् । अभ्युपगम्यापि बलाबलं अविरोधादबाधः । तथोपदेशातिदेशाभ्यां प्रयाजाद्युपकारस्य प्रकृतिविकृत्यर्थत्वात् अविरोधः । सकृच्चोदितस्यासकृत्करणेऽपि प्रधानानुरोधेन गुणानुवृत्तेः सर्वत्रेष्टत्वात् । इन्द्रशब्दस्य गार्हपत्ये गौणत्वादवयवप्रसिद्धेर्वा इन्द्रे मुख्यत्वात् समुदायप्रसिद्धेर्विरोध इति चेत् । न । प्रयोगभेदेन परिहारात् । युगपदुपदिश्यमाने दोषः संभवात्मकमभिधानादिरुच्यते । प्रयोगभेदे तु सति गार्हपत्याभिधानवेलायां यथासंभवं वा गुण इन्दतिक्रियारूपैश्वर्ययोगं वाऽङ्गीकृत्य प्रवर्तीति । इन्द्राभिधानकाले तु मुख्य इत्यविरोधः । तस्मान्नास्ति बाधः, इति । एवं प्राप्ते, ब्रूमः । श्रुतिर्लिङ्गाद्बलीयसी । कुतः ? 'मन्त्रोऽयं गार्हपत्याग्निं शब्देनैवाभिधीयते । इन्द्राङ्गत्वं तु सामर्थ्यादयमन्वनुमीयते ॥' यत्तु प्रकरणात् सामर्थ्याच्चाङ्गत्वानुमानमुक्तम्, तच्छब्देनासंस्पृष्टं ऐन्द्रीष्वर्थेषु अप्रमाणमित्युक्तम् । परस्तु सार्वत्रिकमेव लिङ्गस्याशाब्दत्वमुक्तमिति मन्यमानो न तर्हि विरोधाद्बाधः । किं तर्हि ? अप्रमाणत्वादेवेति विवक्षन् यथैवमित्याह । सिद्धान्तवादी तु यथा प्रथमं पूर्वपक्षवादिना लिङ्गस्य प्रामाण्यं उक्तमासीत् तथेदानीं स्वयं प्रतिपादयति । भवति हि प्रकरणादेर्योऽर्थः, यथा शक्नुयात्तथा यागस्य अनेनोपकुर्यादिति । व स्वार्थाभिधानादन्यथा शक्नोति असावुपकर्तुमिति तत्र विनियोगश्चोदितो भवति । परस्तु मदीयमेवाय पूर्वोक्तं मार्गमायातः, क्वेदानीं गमिष्यतीत्युत्साहेनाऽऽह 'यदि श्रुतिमूलः, न श्रुत्यन्तरेण बाधितुं शक्यः' । तेन यदि तावत् अशाब्दोऽयमर्थः, ततो नैव प्रमाणम् । अथ शाब्दः, ततस्तुल्यबल इति । सिद्धान्तवादी तु द्वयमपि परिहरति— नापीति । आनुमानिक्याः श्रुतेः अविरोधे सति आत्मलाभात् विरोधे चानुत्पादात् । यत्र हि प्रत्यक्षा श्रुत्या मन्त्रो न विनियोगं प्रति निराकाङ्क्षीकृतः तत्रास्य

विनियोगसिद्ध्यर्थं यावत् कल्प्यते तत्सर्वं आम्नानान्यथाऽनुपपत्तिमुद्रामुद्रितत्वात् वैदिकं भवति । यत्र विस्पष्टमेवाम्नातं अनेन गार्हपत्य उपस्थेय इति तत्र आम्नानप्रयोजनेन साध्ये प्रयोगोपकारे विज्ञाते नैनामत् कल्प्यमानं वेदः सहते अनेन इन्द्रोपस्थानं कर्तव्यमिति । तस्मात् दुर्बलं लिङ्गम् । किंच '**सर्वत्रैव विकल्पानामप्रामाण्यमवस्थितम् । पक्षे हि सदसद्भावावेकार्थे दुराश्रयौ ॥**' स्वकण्ठ श्रुत्या नियमेन गार्हपत्योपस्थानं चोदितम्, लिङ्गेन स्वकण्ठेन इन्द्रोपस्थानम् । तत्रान्यतराश्रयणे सति इतरच्चोदितं यत्र क्रियते, तदपेक्षया चेतरदचोदितं सत् कृतम् । तदकरणमप्यचोदितम् । श्रुतहान्यश्रुतकल्पनयोश्च तुल्यो दोषः । प्रसिद्धिबाधात् । चोदितस्य कर्तव्यता प्रसिद्धिः, इतरस्याकर्तव्यत्वम्, तदुभयमतिक्रम्येत । तस्माच्चायमत्र विकल्पः । यस्तु विरोधपरिहारार्थं समुच्चयोऽभिहितस्तत्र ब्रूमः, अस्त्येव विरोधः । कथम् ? '**श्रुत्या ह्यत्र निराकाङ्क्षे मन्त्रप्रकरणे कृते । लिङ्गं साकाङ्क्षसाध्यार्थं तदेकान्तान्निरुध्यते ॥**' एकोऽयं मन्त्र एकं च प्रकरणम् । सकृच्चाऽऽम्नातस्यैकरूप्येण भवितव्यम् । तत्र श्रुतिविनियोगवेलायां मन्त्रप्रकरणयोर्निराकाङ्क्षत्वं भवेद्वा न वा । यदि तावत् नास्ति, ततो विनियोग एवासिद्धः । नहि विनियुक्तस्याऽऽकाङ्क्षा युज्यते । अथ तु अस्ति, ततश्च आकाङ्क्षाऽधीनसिद्धित्वात् लैङ्गिकविनियोगानुपपत्तिः । युगपत्प्रत्याश्रयणे हि अस्त्याकाङ्क्षा नास्ति वेति विप्रतिषिद्धं स्यात् । एवं सत्यपि तु यदि प्रमाणयोस्तुल्यप्रवृत्तित्वं भवेत्ततो विशेषाग्रहणात् ज्ञायेत केन प्रथमतर निराकाङ्क्ष इति । युगपदेव उभाभ्यां निराकाङ्क्षीक्रियमाणः उभयार्थो भवेत् । अस्ति तु प्रमाणयोर्विशेषः । श्रुतेः शीघ्रतरप्रवृत्तित्वात् । अतस्तया विनियुक्ते मन्त्रे, न लिङ्गस्यावकाशोऽस्तीति श्रुतिबलीयस्त्वसिद्धिः । '**सूत्रेण परदौर्बल्ये सूचिते सति, भाष्यकृत् । आर्थं पूर्वबलीयस्त्वं व्याचष्टे तदनादरात् ॥**' (पृ. ८४१–८४७).

(श्रुतिप्राबल्यविचारः— ) किं तावत् प्राप्तम् ? सर्वप्रमाणानि तुल्यबलानि इत्यवगन्तव्यम् । कुतः ? '**कश्चिदस्य प्रमाणत्वं स्वशक्तेरवधारितम् । नह्यन्यापेक्षया तस्य सा शक्तिरपगच्छति ॥**' सर्वत्र प्रत्यक्षादावपि दृष्टैव गतिः प्रमाणत्वमप्रमाणाभावश्च । न तत्र यत् प्रमाणम्, तत् कदा चिदपि प्रमाणाभासो भवति । योऽपि तदाभासः, सोऽपि नैव प्रमाणं भवति । नित्यं च प्रमाणाभासबाधः, न प्रमाणस्यैव । न च तत्र बाध्यस्य प्रामाण्यमभ्युपगतम् । बाधनाक्षमत्वात् प्रमाणस्य । श्रुत्यादिषट्कस्य च समस्तस्य स्वविषये प्रामाण्यं स्थापितम् । न चैषां विषयान्तरसंचारोऽस्ति यत्र दौर्बल्यमाशङ्क्यते, न चैतदुपस्थापितं ज्ञानमनुत्पन्नं शक्यं च वेदितुम् । न चोत्पन्नस्य स्वरसभङ्गुरत्वात् उत्तरेण विनाशः । न च संस्कारापनयनम् । स्मृतिहेतोः संस्कारस्य सर्वथानुच्छेदात् । नाप्यनुष्ठानात् फलात् विनियोगः शक्यते कर्तुम्, अनुष्ठानप्रत्ययस्य दुर्वारत्वात् । तस्मात् सर्वेषां तुल्यबलत्वाद्विकल्पः । '**बाधस्तु यदि कल्प्येत, विपरीतः प्रसज्यते । नहि पूर्वमबाधित्वा परेषां जन्म लभ्यते ॥**' श्रुत्यादीनां हि पूर्वं पूर्वं शीघ्रतरं प्रवर्तते । तेन पश्चात्तनस्य तदुपमर्देनैव आत्मलाभेन भवितव्यम् । अतश्च विपरीतबाधप्रसङ्गः । किञ्च, '**श्रुत्यादिना समर्थस्य विनियोगोऽपि कल्प्यते । न सामर्थ्यादिरूपं स्यादेकवाक्यादिभिर्विना ॥**' (यद्यपि श्रुत्या विनियोगः प्रतीयते, तथापि असमर्थस्य नावकल्पते इति अपिशब्दार्थः । सामर्थ्यैकवाक्यत्व तु आकाङ्क्षारूपाणां लिङ्ग–वाक्य–प्रकरणानां एकवाक्यत्वाकाङ्क्षासंनिधिरूपैः वाक्यप्रकरणस्थानैर्विना रूपमेव नास्तीत्यर्थः । सुधा. पृ. १२१८ । अत्र यद्यपि आनन्दाश्रमीये 'योगोऽवकल्पते' इति पाठः, तथापि सुधाऽनुसारेण पाठो ग्राह्यः । के. ) । उत्पत्तिकाले यत्स्वविषयसामर्थ्यमवधृतम्, न तस्य तद्विनियोगकाले पर्यावर्तयितुं शक्यते । विनियोगस्तु सामर्थ्यानुसारीति युक्तमध्यवसातुम् । एवं यस्य येन सह संबन्ध एकवाक्यतया न विद्यते, न तस्य तद्विषया शक्तिः कल्प्यते । संबन्धे सति तदन्यथाऽनुपपत्त्यैव शक्तिसिद्धिरिति वाक्यस्य बलीयस्त्वम् । तथा सर्वेषां वाक्यत्वं आकाङ्क्षामूलम् । अतः तस्यामुपलभ्यमानायां तदेकान्तेन प्रतीयते । तदभावे तु नैतदस्तीति पूर्वतरभावित्वादाकाङ्क्षात्मकं प्रकरणमेव ज्यायः । तद्विरोधिनी, तु, या

अन्येन सह एकवाक्यतयाऽवगतिः, सा भ्रान्तिः। तथा सर्वाकाङ्क्षा असंनिहितावगम्भिन्यो भवन्ति। नह्यसंनिहितमपेक्षितुं सम्बन्धुं वा शक्यम्, अतो यत्र संनिधिः तत्र सर्वमिति बलीयस्त्वम्। समाख्या पुनः प्रत्यक्षमेव सम्बन्धं वदति। तस्मात् विपरीतं बलाबलम्। अथवा विरोधे सत्येतच्चिन्त्यते। न च इह विरोधः। उभयत्रापि विनियोगोपपत्तेः। अतः समवायेऽपि सर्वेषां प्रामाण्यम्। इति प्राप्ते, अभिधीयते। श्रुत्यर्थविप्रकर्षात् परपरमेषां बाध्यते इति। कुतः? 'विनियोक्त्री श्रुतिस्तावत् सर्वेष्वेतेषु संमता। धीस्तस्याः संनिकर्षेण विप्रकर्षेण च स्थिता॥' यदि श्रुतिवल्लिङ्गादीनामपि स्वातन्त्र्येण प्रामाण्यमभविष्यत्, ततः एतदुपापत्स्यत। तेषां तु स्मृतिवत् श्रुत्यनुमानद्वारं प्रामाण्यम्। श्रुतिरेव ह्येकं प्रमाणम्। सा तु प्रत्यक्षोपात्तदूरत्वानुरोधेन षोढाऽवतिष्ठते। कथं पुनरेषां स्वातन्त्र्येण प्रामाण्यं न भवति। उच्यते। 'चोदनालक्षणोऽर्थो धर्मः' (१।१।२।२) इति स्थापितम्। तथा चोक्तम् 'असम्बद्धमनपेक्षं स्यात्' (१।२।१।१) इति। तत्र प्रत्यक्षगृहीतानि यान्यक्षराणि विनियुञ्जते, सा श्रोत्रग्राहित्वात् श्रुतिरित्युच्यते। यत्र तु अविनियोजकान्यक्षराणि प्रत्यक्षेण गृहीत्वा विनियोजकान्यर्थापत्त्या कल्प्यन्ते तत्र लिङ्गादीनि भवन्ति। तत्रैव अर्थविप्रकर्षो भवति। ऐन्द्रीविनियोगं हि प्रति श्रुतिलिङ्गयोः सह प्रवृत्तयोर्यदा श्रुतेर्विनियोजकान्यक्षराणि दृश्यन्ते, तदा लिङ्गे स्वरूपसमर्थानि, ततो यावत् तेषां प्रकरणाम्नानान्यथाऽनुपपत्त्या विनियोजकानि कल्पयितुमारभ्यन्ते, तावदितरैः प्रत्यक्षविनियोगः प्रत्यायितः। तस्मिंश्च प्रतीते मन्त्रोऽपि प्रकरणिनं प्रति निराकाङ्क्षीभूतः। प्रकरणस्यापि मन्त्रं प्रति। तथा सति प्रकरणाम्नानस्य अन्यथाऽप्युपपद्यमानत्वात् नेन्द्राभिधानश्रुतिकल्पनासामर्थ्यमस्ति प्रभवति। न च श्रुत्यन्तरेण विनियोगः सिध्यति। बहुधा वर्णितं चैतत्पुरस्तात्, यथा शाकटे वेदार्थे कल्प्यन्ते, श्रद्धेदिकम्, नैयतीति। तस्मात् श्रुतिर्बलीयसी। नहि तस्याः किंचिदपेक्षणीयमस्ति, यथा लिङ्गस्य श्रुतिरेवम्। आह च। 'नापेक्षा यस्य यत्रास्ति, स तस्माद् दुर्बलो भवेत्। यः पराधीनवृत्तिः स तदर्थं कल्पयाचरेत्॥' श्रुत्यादीनां हि पूर्वपूर्वमुत्तरोत्तरनिरपेक्षं प्रवर्तमानं बलवद्भवति, परंपरं तु पूर्वाधीनप्रामाण्यं न शक्नोति तस्यैव बाधं कर्तुम्। नहि श्रुतिमननुमाय लिङ्गादेः प्रामाण्यमध्यवसीयते इत्युक्तम्। ननु एतदप्युक्तम्, नासमर्थं विनियुज्यते इति। सत्यमुक्तम्। अयुक्तं तूक्तम्। कुतः? 'न श्रुतेर्विनियोक्तृत्वं लिङ्गाधीनं प्रतीयते। विज्ञाते विनियोगे तु तद्वशाच्छक्तिनिर्णयः॥' विनियोगोत्तरकालं हि कथमेतत् साधयिष्यति इत्यपेक्षिते, यथा शक्नोतीत्यवधारणा भवति। तत्र यद्यपि स्वरूपेण तद्विषया शक्तिर्न दृश्यते, तथापि विनियोगदर्शनादेव अनुमीयते। तदुक्तम् 'वचनात्त्वयथार्थमैन्द्री स्यात्' (३।२।२।३) इत्यत्र। ननु च प्रागविद्यमानसामर्थ्यस्य विनियोगो न सम्भवतीति पूर्वतरं सामर्थ्यमनुमातव्यम्। ततश्च प्रत्यक्षलिङ्गात् दुर्बलत्वापत्तिः। सत्यम्। पूर्वभावित्वेन तत् कल्प्यते, न तु पूर्वमेव गम्यते। नह्यविनियुक्तायां ऐन्द्र्यां गार्हपत्याभिधानसामर्थ्यप्रतिपत्तिकारणमस्ति। निर्वृत्तविनियोगान्यथाऽनुपपत्त्या पूर्वमपि विद्यमानं पश्चादेव अनुमीयते। ननु एवमपि तुल्योऽर्थविप्रकर्षः। तथाहि, 'विप्रकर्षो यावता लिङ्गे स्यात् श्रुतेरनुमापके। लिङ्गानुमानभूतायां तावदेव श्रुतावपि॥' सर्वथा स्वशब्दमनानुमानेन प्रत्ययविप्रकर्षो भवति। तयोरुभयत्रापि समानम्। सत्यमेतावत्समानम्, न तु तत् बलाबलं प्रति उपयुज्यते। कुतः? 'विनियोगाभिधानस्य दूरत्वाद् दुर्बलत्वधीः। तच्च पूर्वानुमायां स्यान्नोत्तरत्र प्रयत्नतः॥' लिङ्गे हि प्राग्भाविना श्रुत्यनुमानेन विना विनियोगाभिधानाभावात् दूरत्वं भवति। श्रुतौ पुनरवगते विनियोगाभिधाने पश्चादेतदेवम्, तस्मात् नूनं किमपि सामर्थ्यमस्तीति पश्चात् प्रवर्तमानमनुमानम्, न विनियोगप्रत्ययविघातं करोति। सहप्रस्थितयोर्हि प्रमाणयोर्येन विनियोगहेतुरधिकेन गम्यो भवति, स विलम्बो दौर्बल्यकारणं भवति। अवगते तु विनियोगे, यद्यपि पश्चादनुमानप्रवृत्तिः भवति न तदपि विप्रकर्षः। एतेन लिङ्गवाक्यादिष्वपि व्याख्येयानि। सर्वत्र हि परस्य पूर्वमनुमाय विनियोगप्रवृत्तिः। पूर्वं तु कृते विनियोगे परस्य नान्तरीयक

सद्भावमात्रकल्पनमिति प्रतिपत्तिः । आह । श्रुतेस्तावत्प्रत्यक्षत्वेन लिङ्गात् बलीयस्त्वं युक्तम् । ( पृ. ८२८–८३१ )

( श्रुत्योर्विरोधे– ) । यथा चैषामर्थविप्रकर्षाद्विजातीयैः सह बलाबलमेवं सजातीयैरपि यत्र हेतुसमानं तत्र दर्शयितव्यम् । तद्यथा श्रुतेरेव तावत् सामान्यविशेषादिभावेन शेषविषयः समवायः । 'पुरोडाशं चतुर्धा करोति ' इत्यविशेषश्रवणात् अग्नीषोमीयादावपि प्राप्नुवत् 'आग्नेयं चतुर्धा ' इति विशेषश्रवणेन विशेषे चतुर्धाकरणमुपसंह्रियते । तथा होमविषयत्वे ' यदाहवनीये जुहोति ' इति सप्तमीश्रुत्या जुहोतिसामानाधिकरण्येन अवभृथेऽपि आहवनीयः प्राप्यमाणो विशेषयुक्तया ' अप्स्ववभृथेन ' इत्यनया बाध्यते । संदिग्धासंदिग्धत्वेन च बलाबलविशेषो भविष्यति । एवं पौर्वापर्यविरोधाद् गुणविरोधादिष्वपि श्रुतिद्वयमुदाहर्तव्यम् । ' तथा पदवाक्यमेकत्वं पदश्रुत्या प्रतीयते । समानप्रत्ययश्रुत्या बलीयस्या क्रियाङ्गता ॥ तथा धात्वर्थकर्मत्वे पदश्रुत्योपपादिते । भावनाया विधिश्रुत्या पुरुषार्थस्य साध्यता ॥ ' ( पृ. ८४० ) ।

शेषशेषिसमवायश्च प्रत्येकं विविच्योदाहर्तव्यः । एवं तावत् प्रत्यक्षेषु श्रुत्यादिषु विचारितम् । एतयैव दिशा अनुमानादिष्वप्येष्वपि सजातीयविजातीयसमवाये विचारयितव्यम् । तत्र च प्रत्यक्षगम्यानामानुमानिकैः, आनुमानिकानां चानुमानिकैः सह पूर्वोक्तेनैव मार्गेण सजातीयविजातीयबलाबलत्वं व्याख्येयम् । तद्यथा अतिदेशप्राप्ताः श्रुत्यादयः प्रत्यक्षैर्विकृतिषु बाधिष्यन्ते । विपरीतोऽपि चेह बाधो भवति । पूर्वपूर्वमपि ह्यानुमानिकं परेणापरेणापि प्रत्यक्षेण बाध्यते । यथा कृष्णलेषु सामर्थ्येनावघातः । सर्ववस्तुविषयं च सामर्थ्यम्, लिङ्गं केवलं मन्त्रगतमेवावगन्तव्यम् । तथा च यान्यन्यान्यर्थदर्शनानि अनन्यगतीनि, तेषामपि लिङ्गत्वमभिधास्यते । का पुनरत्र लिङ्गस्य प्राप्तिः, अनन्यथासंभव इत्यादि । यत्र पुनः श्रुतिः आनुमानिकी लिङ्गं च प्रत्यक्षम्, तत्र कथम् । यथा स्मृतिवैदिकलिङ्गविरोधे । तत्र स्मृतेर्मूलश्रुत्यपि समाप्यते, न तु लिङ्गस्येति तदेव बलवदित्यनुवर्तनम् । सर्वत्र दुर्बलस्यापि प्रमाणस्य बाधे यदि किञ्चिदनर्थकं भवति, ततो विपरीतो बाधो योजयितव्यः । तदुक्तम् ' व्रीहीन् प्रोक्षति ' इत्यत्र श्रुतिमुत्सृज्यापूर्वसाधनत्वग्रहणमिति । तथा ' दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदाऽपि विपरीतत्वं शिष्टाकोपे यथोदितम् ॥ ' सर्वप्रमाणानामेव अर्थद्वारः परस्परविरोधो न स्वरूपनिमित्तः । अत्र यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते, तत्र यद्यपि प्रमाणतोऽन्याय्यं बलाबलम्, तथापि प्रमेयानुरोधेन तदाश्रयणात् स्वरूपदुर्बलेनापि बलवत् बाध्यमानं तदानुगुण्यं प्रतिपद्यते । तदुक्तमाश्वमेधादयः पदार्थास्तेषां गुणः क्रम इति । तथा च लोके 'अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः । दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः ॥ ' एवं सूत्रम्, श्रुतिलिङ्गविरोधोपपादनान्तं च भाष्यं व्याख्यातम् । ( पृ. ८४१ ) ।

श्रुतिवाक्ययोर्विरोधे, अरुणादिवाक्यसामर्थ्यात् आनन्तर्यसामानाधिकरण्याभ्यां एकहायन्यादिशेषत्वं प्राप्नुवत् तृतीयाश्रुत्या क्रयार्थनिर्वर्त्यत्वेन विज्ञायते । द्वितीयसोपानभूतारोहकयोरिव अत्र यावत् वाक्यं सामर्थ्यं कल्पयति, तावत् श्रुत्या विनियोगः कल्पितः, इति महदन्तरम् । श्रुतिप्रकरणयोर्विरोधे प्रकरणादेकविंशत्यानुवचनादौ दर्शपूर्णमासाङ्गत्वे प्राप्ते, श्रुत्यैव प्रतिष्ठाकामादिषु पुरुषार्थावधारणात् प्रकरणबाधः । अनुवचनानां च क्रियात्मकत्वाद्दितिकर्तव्यतारूपत्वात् प्रकरणग्राह्यत्वेन तद्विरोधोदाहरणत्वम् । ' तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य ' इति तु द्वादशत्वस्य अक्रियात्वात् अनितिकर्तव्यतात्मकत्वे सति कथम्भावरूपप्रकरणग्राह्यत्वानुपपत्तेः सन्निधिमात्रेण प्रकरणवत्त्वानुपूर्व्यसंबन्धाध्यवसानात् श्रुतिस्थानविरोधोदाहरणत्वं युक्तमित्येके । तत्तु नैवमभिमतम् । कुतः । ' यदि द्रव्यगता संख्या स्वतन्त्रा वा भवेदियम् । नेत्थम्भावेन गृह्येत क्रियारूपेण वर्जनात् ॥ इतिकर्तव्यतांशस्थां येनोद्दिश्योपसत्क्रियाम् । द्वादशत्वविधिस्तेन कथम्भावेन गृह्यते ॥ इहापि च कथम्भावविनिर्मुक्तोपसद्गता । यावत् सांस्यैकवाक्यत्वसामर्थ्यं कल्पयिष्यति ॥ तावत् प्रत्यक्षया श्रुत्या पञ्चपाऽहीनाङ्गत्वं गता । नैव

ह्यहर्गणादन्यदहान्यहीनमुच्यते ॥ ' श्रुतिक्रमविरोधे किमुदाहरणमिति । ' उच्यते रशनाधर्मा दर्भमय्यादयः क्रमात् । अग्नीषोमीयशेषाः स्युः श्रुत्या यूपाङ्गतां गताः ॥ एतद्यूपपरिव्याणशेषो हि रशना श्रुता । सह धर्मैर्न सा याति क्रमेण पशुशेषताम् ॥ यावत् प्रकरणादीनि तस्याः कल्पयति क्रमः । पशुभिर्मैत्र्यपेतत्वाच्छ्रुत्या तावत् स नीयते ॥ आकाङ्क्षामात्रमेवैक यावत् कल्पयति क्रमः । दूरेण तावदप्राप्तां रशनां हरति श्रुतिः ॥ '

श्रुतिसमाख्ययोर्विरोधे किमुदाहरणम् । पौरोडाशिकमिति समाख्याते दर्शपूर्णमासकाण्डे पठितो मन्त्रः साधारणे प्रकरणे वर्तमानः क्रमेण चानुमीष्टिलिङ्गेन अविनियुज्यमानः पुरोडाशस्यैव वा प्राधान्यात् प्राप्नुवन्, श्रुत्या सानाय्यार्थशाखाङ्गत्वेन विधीयते ' इषे त्वेति शाखां छिनत्ति ' इति । तत्रापि यावत् समाख्यया किञ्चित् सामान्यं कल्प्यते, तावत् श्रुत्या विनियुक्तत्वात् प्रकरणवाक्यसामर्थ्यश्रुतिषु अपरिप्लुतास्वेव बाधः । (पृ. ८१५–८१६)।

एवं तावदेकस्य शेषस्य अनेकं शेषिणं प्रति नीयमानस्य विरोध उदाहृतः । एतयैव तु दिशा अनेकस्य शेषस्य एकं शेषिणं प्रति नीयमानस्य विरोध इदानीमुदाहर्तव्यः । तथा श्रुतिलिङ्गयोर्विरोधे 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते ' इति मन्त्रकरणकव्यापारविधाने कृते लिङ्गात् कस्मिंश्चिदाग्नेये मन्त्रे शेषत्वेन प्राप्नुवति श्रुत्यैन्द्री विनियुज्यते । तदवसरे चोपस्थाने नैतरस्यावकाशो विद्यते । श्रुतिवाक्ययोर्विरोधे महाबलीकरणवैश्वदेवधर्मागतापस्याती इत्यादिविधानमुदाहरणम् । यथा विश्वेषां देवानां श्रुत्या आमिक्षैव, शेषो हि तेषां वाक्येन वाजिनम्, तत् दुर्बलप्रमाणत्वात् तया श्रुत्या निराकृतम् । श्रुतिप्रकरणयोर्विरोधे प्रतिज्ञातदर्शपूर्णमासप्रयोगे प्रकरणात् पयोदध्यादिरसामिधेन्यनुवचने अङ्गत्वेन प्राप्ते श्रुत्या एकविंशतिसामिधेन्यनुवचनाद्द्वयोरनुरागमात् प्राकरणिकनित्यानुवचनबाधः । श्रुतिक्रमविरोधे ' पशुयागप्रयोगे च क्रमेण धर्मगाद्गता । श्रौतात् गौरीहलाघात्र धर्मस्य निराक्रिया ॥ ' श्रुतिसमाख्याविरोधे ' याजपेयः समाख्यानात् प्राप्तोऽस्ध्वर्युकर्तृकः । श्रुत्या स्वाराज्यकामस्य तथाऽध्वर्योर्निराक्रिया ॥ ' तत्र 'यजमानस्य याज्या' इत्युदाहरणम् । ऋतुयाजेषु हि हौत्रसमाख्यया होतुः आप्ता याज्या यजमानकर्तृत्वेन कर्तृसम्बन्धवाचिन्या षष्ठीश्रुत्या प्रतिपाद्यते । (पृ. ८१८)।

शा— ननु लिङ्गवाक्ययोरेव (अत्र) विरोधः, न श्रुतिलिङ्गयोः । अत्राभिधीयते— ' सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते । सहिते हि विरुध्येते, न तु लिङ्गेन केवले ॥ ' इति श्रुतिलिङ्गयोरेवैष विरोधः । ' तत्र स्वतःप्रमाणत्वं लिङ्गादेः श्रुतिकल्पनम् । सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते ॥ गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकक्षता । तेन द्वयोरुपस्थानं विकल्पेन भविष्यति ॥ समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि । प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते ॥ यद्यपि स्याद् बलीयस्त्वं श्रुतेर्लिङ्गात्, तथापि तु । अविरोधादबाधः स्यात् संभवी हि समुच्चयः ॥ यद्वा सामर्थ्यरूपत्वात् लिङ्गं स्यात् प्रबलं श्रुतेः । शक्त्यनुसारी हि सर्वः शब्दः प्रवर्तते ॥, अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता । गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते ॥ गुणाद्वाऽप्यभिधानं स्यादित्यत्रैतद्धि साधितम् । तत्र तावद् बलीयस्त्वं लिङ्गस्य न च तुल्यता ॥ विनियोगः श्रुतेः पार्श्वे (समीपे) लिङ्गस्यारादसौ स्थितः । यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते ॥, तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत् । मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च ॥ मन्त्राकाङ्क्षावशेनैन्द्रशेषत्वे श्रुतिकल्पना । श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते ॥ निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना । तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम् ॥ प्रत्यक्षे चानुमाने च यथा लोके बलाबलम् । शीघ्रमन्थरगामित्वात् तथेह श्रुतिलिङ्गयोः ॥ अविरोधादबाधो यो वर्णितः सा न युज्यते । लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम् ॥ तां च श्रुतिर्निहन्त्यसौ नाविरोधेन

गच्छति । विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते ॥ '

सोम— एवं श्रुत्यादिभिः विनियोगप्रकारे कथिते सति अध्यायादौ उपक्षिप्तः बलाबलविचारः प्राप्तावसरः ( इति संगतिः ) ।

वि— 'ऐन्द्रोपस्थीयतां वह्निरितीन्द्राग्न्योर्विकल्पनम् । समुच्चयो वोत चक्र एवाथि. केवलोऽथवा ॥, विकल्पः श्रुतिलिङ्गाभ्यां गुणाङ्गस्य समुच्चयः । श्रुतिः शब्दानुसारेति शक्र एषोऽस्य निर्णयः ॥, श्रुतिरुक्ता श्रुतिः शीघ्रा लिङ्गं श्रुत्यनुमापकम् । नैराकाङ्क्ष्यात्मके बोधे श्रुत्याऽसौ केवले स्थितिः ॥ '

भाट्ट— तदेवं षट्प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं निरूप्यते । विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे यथा ऐन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्च इन्द्राङ्गत्वे । यथा वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये यथा गार्हपत्ये श्रुत्या ऐन्द्रीमन्त्रः, लिङ्गादाग्नेयः । अयं च शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबलप्रयोजकः, न तु तद्भेदेऽपि, वाक्यप्रकरणाभ्यां नैमुख्यप्राप्तवादीनां एकशेष्यर्थत्वेऽपि तदभावात् । यत्र तु एकस्य शेषस्य एकस्मिन्नेव शेषिणि प्रमाणद्वयम्, तत्र वैषम्ये प्रबलस्यैव प्रयोजनाय विनियोजकत्वम् । साम्ये तु एकस्य विनियोजकत्वम्, इतरस्य पुनःश्रुतित्वेन प्रयोजनान्तरकल्पनम् । नियामकाभावे द्वयोरप्युदासीनत्वकल्पनं कर्मान्तरबोधकत्वं वा । एवं यत्र 'अरुणया क्रीणाति' इत्यादौ आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयम्, तत्रापि श्रुतेरेव विनियोजकत्वम्, न त्वन्यस्य, वाक्योद्देश्यसमर्पकत्वमात्रत्वात् । अत एव न 'ऐन्द्या' इत्यत्र लिङ्गवाक्यविरोधः । वाक्यस्य उद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकबोधकत्वरूपविनियोजकत्वाभावात् । प्रकरणं तु अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकमात्रम् । न तु तदपि विनियोजकम्, गौरवात् । अत एव विनियोजकप्रमाणत्रयमपि निरूप्यमेव ।

तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव, न तु लिङ्गितश्रुत्या इन्द्राङ्गत्वम् । तस्य सूकाद्दितत्वेन माध्यन्येन कृतिकारकत्वशक्तिमत्ताभावात् । अतश्च तस्य मुख्यश्रुतित्वाभावाद्दुर्बलत्वम् । एवं च तस्यैव मन्त्रस्य लिङ्गात् इन्द्राङ्गत्वमिति । लिङ्गविरोधेऽपि एतदेव उदाहरणम् । अत्र हि सर्वत्र उत्तरोत्तरस्य पूर्वपूर्वसापेक्षत्वेन प्रामाण्यस्य तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावद्भवति तावत्पूर्वपूर्वेण शेषशेषिणो निराकाङ्क्षत्वापादनेन बाधः । न च अङ्गानां प्रकृत्यर्थत्वेन निगदप्राप्तानामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवत् इन्द्राद्याकाङ्क्षया लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः, तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षणात् । अतः श्रुत्या गार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायकत्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वात् नायं श्रुतिलिङ्गविरोध इति वाच्यम् । तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया 'यजमानदेवत्यः पशुः' इतिवत् प्रबलत्वोपपत्तेः । वस्तुतस्तु यत्र न केवलया श्रुत्या विरोधो नैव वाक्येनापि, तत्रापि गार्हपत्यसमीपे इत्येवमुपपत्तेः । अतश्च उपगविरोधसत्त्वेऽपि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् ।

माधव— 'बलीयसी श्रुतिर्लिङ्गात् ।'

शंकर— 'श्रुत्या लिङ्गस्य बाधः स्यात् ।'

( लिङ्गवाक्यबलाबलविचारः— ) भाष्यम्— लिङ्गवाक्ययोर्विरोधे किमुदाहरणम् ? 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥' इति । अत्र सन्देहः किं कृत्स्नो मन्त्र उपस्तरणे पुरोडाशसादने च प्रयोक्तव्यः, उत कल्पयाम्यन्त उपस्तरणे, 'तस्मिन् सीद' इत्येवमादि पुरोडाशसादने इति । यदि वाक्यं बलीयस्ततः कृत्स्न उभयत्र । कथम् ? 'सुशेवं कल्पयामि' इत्येतदपेक्ष्य 'तस्मिन् सीद' इत्येवमादिः पूर्वेणैकवाक्यतामुपैति यत् कल्पयामि तस्मिन् सीदेति । अथ लिङ्गं बलीयः, ततः कल्पयाम्यन्तः सदनकरणे । कथम् ? 'स्योनं ते सदनं कृणोमि' इति सदनकरणमभिवदितुमयमलमिति । 'तस्मिन् सीद' इत्ययमपि पुरोडाशं सादयितुमिति सादने विनियुज्यते । किं तावत्

प्राप्तम् ? तुल्यबले एते कारणे इति । यथा लिङ्गं प्रति श्रुतेर्बलीयस्त्वमुक्तम्, न तथा वाक्यं प्रति लिङ्गस्य उच्यते । अथवा वाक्यमेव लिङ्गात् बलीय । कुत ? तद्धि श्रुत्याऽपि बाध्यते । न च बलीय कारणं शक्यते बाधितुम् । तेनास्य भङ्गुरतामध्यवस्याम । यत्त्वेकेन बाध्यते, शक्योऽसौ अन्येनापि बाधितुमिति । एवं प्राप्ते ब्रूम । लिङ्गवाक्ययो लिङ्गं बलीय इति । कुत ? अर्थविप्रकर्षात् । कोऽत्र अर्थविप्रकर्ष ? प्रकरणवत संनिधौ आम्नानात् दर्शपूर्णमासाङ्गमयं मन्त्र इत्यव गम्यते । 'तस्मिन् सीद' इति पुरोडाशासादनाभिधानसामर्थ्यात् सादने विनियुज्यमाने कृतसामर्थ्यं मन्त्राम्नानमिति नास्ति प्रमाणम्, येन उपस्तरणेऽपि विनियुज्येत । तथा, 'स्योन ते सदनं कृणोमि' इत्येषोऽपि प्रकरणाम्नानसामर्थ्यादेव दर्शपूर्णमासाङ्गतामापन्न सामर्थ्यादेवोपस्तरणे विनियोगात् कृतप्रयोजनो न पुरोडाशासादने विनियोग मर्हति । न ह्यस्मिन् विनियुज्यमानस्य किञ्चिदपि प्रयोजन मस्ति । एवं उपस्तरणे 'तस्मिन् सीद' इत्यस्य नास्ति सामर्थ्यम्, पुरोडाशासादनेऽपि 'स्योन ते' इत्यस्य । पूर्वेणैकवाक्यतामुपेत्योपस्तरणे सामर्थ्यम् । पूर्वस्य परेणैकवाक्यत्वात् सादने, न तु स्वरूपेणोभयो । तदेषोऽर्थविप्रकर्ष, यत् 'स्योन ते' इत्यस्य प्रत्यक्ष सदनकर्मणोऽभिधानसामर्थ्यं तमुख्यम् । 'तस्मिन् सीद' इत्यस्य पुन पूर्वेण सहैकवाक्यतामुपगतस्य भवति जघन्यम् । तदत्र पूर्वस्य मन्त्रस्याभिधानसामर्थ्यादुपस्तरणे विनियोग उक्तो भवतीति सन्निकृष्टो लिङ्गस्य श्रुत्यर्थ । उत्तरस्य तूपजनितेऽभिधानसामर्थ्ये तत श्रुत्यर्थ इति लिङ्गान्तरितो विप्रकृष्टो भवति । एवमुत्तरस्य सादने संनिकृष्ट पूर्वस्य च लिङ्गान्तरित । तस्मादर्थविप्रकर्षात् लिङ्गवाक्ययोर्लिङ्गं बलवत्तरम् । तत्र स्योनमित्येष शब्दो यद्यप्युत्तरेण आकाङ्क्षित इति सादनेऽपि प्रयोगमर्हति, तथापि भित्वा वाक्यमुपस्तरणे एव विनियोक्तव्य । 'तस्मिन् सीद' इत्येष च सादने । ननु 'स्योन ते' इत्यस्य शब्दस्य यथैवोपस्तरणाभिधानसामर्थ्यं एवमुत्तरेणैकवाक्यतामुपगन्तु सामर्थ्यम् । सामर्थ्यं च लिङ्गमित्युच्यते । तस्माद्विद्यमाने वाक्ये लिङ्गमेव बाधितं भवतीति । सत्यमेवम् । एत दपि लिङ्गम् । लिङ्गमपि त्वस्यैतदेवंलक्षणक विप्रकृष्टार्थमेव भवति । लिङ्गादेकवाक्यता, तस्यादभिधानसामर्थ्यम्, तत श्रुत्यर्थ इति विप्रकृष्टार्थता । विप्रकृष्टार्थता च बाधने हेतुभूता । तस्मान्नोत्तरेणैकवाक्यता यास्यतीति । एवं 'तस्मिन् सीद' इत्युत्तर न पूर्वेणापि । अपि चोत्तरेणैकवाक्यतामुपगतस्य न किञ्चिदपि दृष्टमस्ति कार्यम् । उपस्तरणप्रत्यायनं तु दृष्टम् । कुत ? श्रुतत्वादुपस्तरणस्य सादनस्य च । एवमुत्तरस्य सादनप्रत्यायनम्, न तु पूर्वेणैकवाक्यतायाम् । न चैतौ पूर्वोत्तरावन्योन्यमेकवाक्यतामन्तरेण पृथग् यथायथं कार्यं न कुरुत । तस्मात् पूर्वं पूर्वत्र विनियोजनीय, उत्तरं उत्तरत्रेति । अथ यदुक्तं श्रुत्याऽपि तद्बाधितमिति वाक्येनापि तद्बाधितव्यमिति । नैतदेवम् । नहि बाधितस्यान्येनापि बाधनमेव न्याय्यम् । बाधित ह्यनुगृहीत यमर्गेनत्वाय । श्रुतिं प्रति विप्रकृष्टार्थम्, वाक्यं प्रति संनिकृष्टार्थम् । तस्माल्लिङ्गं बलीय इति ।

ख — लिङ्गद्वयविरोधे 'स्योन ते सदनं कृणोमि' इत्येवोदाहरणम् । द्वे हि तत्र लिङ्गे । परस्परैकवाक्यतागमनसामर्थ्यात्मकमेकम्, अभिधानशक्तिरूपमपरम् । एतच्च श्रुत्यनुमानस्य प्रत्यासन्नम्, विप्रकृष्टमितरत् वाक्यादपि जघन्यत्वात् इत्युक्तं भाष्ये (लिङ्गवाक्यविरोधोदाहरणे) । पृ ८४० ।

लिङ्गवाक्ययोर्विरोधे एकं तावदिदं उदाहरणम् । ज्योतिष्टोमे होत्रप्रवचनाधीता प्रैषा वाक्येन मैत्रावरुणस्य विधीयन्ते 'तस्मान्मैत्रावरुण प्रेष्यति चानु चाऽऽह' इति । तेषां मध्ये कश्चित् प्रैष एव पठ्यते 'प्रशास्तर्यज' इति । सोऽयं स्वसामर्थ्येन मैत्रावरुणं नियुङ्क्ते । तत्र यदि वाक्यं बलीय, ततो मैत्रावरुण प्रेष्येत् । आत्मनि च प्रैषासंभवात् होता यजेत् । अथ तु लिङ्गं बलीय, ततो मन्त्रेण मैत्रावरुणो नियोक्तव्य । न चाऽऽत्मनैवाऽऽत्मानं नियोक्तुमर्हतीति परेण विनियोक्तव्य । स च 'तेषां यतो निर्देश स्यात्' (३।८।१०।२२) इत्येव विज्ञायते । सामान्यसमाख्यया पूर्वमत्र होतुरेव प्राप्ति सन् वाक्येन बाधित आसीत् । तद्यदा वाक्यं लिङ्गेन बाध्यते, तदा समाख्ययैव प्रतिप्रसूतया होतृकर्तृत्व

विज्ञायते । प्रैषार्थकारी तु मैत्रावरुणो विज्ञायते एव । यद्यपि 'तस्मान्मैत्रावरुणः' इत्येतद्ब्राह्मणम्, तथाऽपि पदार्थनिधिमात्राश्रयत्वेनाश्रुतित्वात् प्रत्यासन्नतरश्रुतित्वेन लिङ्गेन बाध्यते । यदि हि मैत्रावरुणः प्रेष्येत्, ततः प्रशास्तृशब्दो होतरि अनर्थकः स्यात् । ननु च मैत्रावरुणोऽपि प्रेष्यमाणः 'होता यक्षत्' इत्यादिरेव अर्थशून्यः स्यात् । गौण इति चेन्न । प्रशास्तृशब्देऽप्येवं प्रसङ्गात् । अपि च पश्चात्तनत्वादुपजातविरोधः प्रशास्तृशब्द एव वरं गौणः, न प्रथमोच्चारितो विनैव विरोधेन होतृशब्दः । तस्माल्लिङ्गयोरेवैष विरोधो न लिङ्गवाक्ययोरिति । अत्र ब्रूमः । सर्वथा शब्दयोरन्यतरस्य विरोधे गौणत्वं कल्पनीयम् । तत्र प्रशास्तृशब्दस्य होतरि अत्यन्तमनिमित्तः प्रयोगः, होतृशब्दस्य तु होतृकार्यापन्ने मैत्रावरुणेऽस्ति निमित्तम् । सर्वे एव प्रधानविशेषवचनाः तत्पुरुषेषु प्रयुज्यमाना दृष्टाः, न तु विपर्ययः । तस्मात् प्रशास्तृलिङ्गत्वात् मन्त्रमेव विनियुञ्जीत । न चैतद्वाक्यमत्यन्तमनर्थकमेव भवति । प्रैषान्तरेषु चारितार्थ्यात् । अतोऽस्मिन्विषये बाध्येतेति । 'स्योनं ते सदनं कृणोमि' इत्यस्योदाहरणे (भाष्योक्ते) चोद्यते । 'भिन्ने फले यतो वाक्ये पुरस्तात्प्रतिपादिते । तस्मात्त समुदायोऽयं वाक्येन विनियुज्यते ॥' यद्यपि विभज्यमानसाकाङ्क्षत्वे अर्थभेदाद्भिन्नवाक्यत्वेन एते पुरस्तात्प्रतिपादिते । तस्मान्न समुदायस्यैव सदनाभिधाने पुरोडाशप्रतिष्ठापने च समुच्चयेन विकल्पेन वा विनियोग आशङ्क्यः । तत्र के चिदाहुः । नैवात्र सकलेन वाक्येन सह विचारः, किं तर्हि ? अंशेनैव सह । (अन्यथा समाधत्ते—) अथवा 'साकाङ्क्षावयवत्वेन प्रायेणैकवाक्यता । सिद्धा लिङ्गबलीयस्त्वात् प्रत्युक्ता भिन्नवाक्यता ॥' 'तस्मिन् सीद' इत्येतत्कृतं साकाङ्क्षत्वमाश्रित्यैकवाक्यत्वेनोदाहृतमिदमेव प्रधानकारणम् । शक्यते हि तद्द्वारेण ययेष्टं विशेषणविशेष्यभावं कल्पयित्वा एकार्थत्वेनैकवाक्यत्वम् । यद्यथा, पूर्वस्य तावदुत्तरेण सह यदहं घृतस्य धारया सुशेवं तव सदनं कल्पयामि तस्मिन्नेवमितिकर्तव्यताके प्रतितिष्ठ त्वमितीतिकर्तव्यताविशिष्टपुरोडाशप्रतिष्ठापनमेकं प्रयोजनम् । अथवा पुरोडाशप्रतिष्ठापनफलं सदनाभिधानं करोमीत्येवं विशिष्टफलसदनकरणप्रकाशनं प्रयोजनमिति शक्यमेकवाक्यत्वम् । यत्तु पुरस्तादर्थनानात्वात् नानावाक्यत्वमुक्तम्, तदिह स्थितं लिङ्गबलीयस्त्वेन । यदि हि लिङ्गं बलीयः, ततः संभवदन्यतरविशेषणत्वेनैकवाक्यत्वं परित्यज्योभयोः प्रत्येकं स्वप्राधान्यं लिङ्गावगतमभिप्रेत्य विशेषणबुद्धितिरस्कारेण प्रयोजनभेदाद्वाक्यभेदो भवति । तेनायं विनियोगद्वारेण वाक्यारम्भलाभस्य लिङ्गप्राधान्यस्य अत्र बलाबलविचारः । तत्रापि प्रतीतेः उभयात्मके वाक्ये इति बाधकप्रत्ययतदसद्भावविचार इति द्रष्टव्यम् । [redacted] प्राप्तम् ? 'तुल्यवत्' इति । तदा चेदं कर्म, कदा चिदिदमस्य मन्त्रौ प्रयोक्तव्यौ, कदा चित् समुदायोऽन्यतरत्र, कदा चित्तु एवोभयत्रेति, 'कथं पुनरयम्' इत्ययमनवस्थितः शास्त्रार्थो भवति ? सर्वथा यदि प्रमाणत एवमवगम्यते किं नो बाध्यते ? लिङ्गवाक्यतुल्यबलत्वालोचने सर्वमेतत् प्रतिभाति । यदा तु श्रुतिवत् लिङ्गात् प्रमाणान्तरत्वाद्वाक्यमेव बाधकमित्यवधार्यते, तदा नियत एव समुदायप्रयोग इति । एवं प्राप्ते, ब्रूमः । 'स्योनादिः कल्पयाम्यन्तः स्वसामर्थ्येन बाध्यते । निराकाङ्क्षः स्वकार्येण साकाङ्क्षत्वं पराश्रयम् ॥' यदेकवाक्यदर्शित आरम्भ विनियोग निरीक्षते । तदिह कल्पयाम्यन्तः अत्र न कदा चित् परमपेक्षा दृश्यते इति तावति पर्यवसानं निश्चित्य प्रयोजनाकाङ्क्षानिवृत्तेः अभिधानकरणेनाऽऽश्रीयते । तेनैव तावत् प्रतिष्ठापनं यावन्न यदा विधीयते, न च परस्य एतेन विना अनर्थकत्वापत्तिः, यतस्तच्छब्देन नीयते, सोऽपि हि प्रतिष्ठापनाङ्गत्वेनार्थवान् भविष्यति । यद्यपि च तच्छब्दः पूर्वापेक्षः, तथापि प्रकाशितं निर्वृत्तं च पूर्ववाक्यार्थमालोच्य भिन्नस्यापि प्रवर्तमानस्य न कश्चिद्विरोधः । तद्यथा 'तप्ते पयसि दध्यानयति' इति संस्कारविधाने पर्यवसिते 'सा वैश्वदेव्यामिक्षा' इति वाक्यान्तरेणैव द्रव्यदेवतासंबन्धः क्रियते । तस्मादेतेन विनियोगस्य प्रत्यासन्नतरश्रुतित्वान्नेतरेतरविषयसंक्रान्तिर्विद्यते । एवमुपसंहारे 'तस्मिन् सीद' इत्यस्य नास्ति सामर्थ्यमिति पूर्वेणैव गतार्थप्रायं तत् निरूपणद्वारार्थं पुनः परामृश्यते । यत्त्वेकेनोक्तम्,

तस्यैतस्याभाव दर्शयिता पुनरात्मधर्ममुपनीय इतरधर्मं निराकरणीयमिति द्वयो निराकुलीकर्तव्य । पूर्वं प्रस्तान प्रमाणसदसद्भावाभ्याम्, मध्यम शक्त्यशक्तिभ्याम्, अन्त्यश्च दृष्टार्थत्वादृष्टार्थत्वाभ्यामिति विवेक । तस्मात् वाक्याल्लिङ्ग बलीय इति सिद्धम् । (पृ ८४७–८९१)।

अथ लिङ्गवाक्यादीना अनुमीयमानश्रुतित्वात् अविशेषे सति किंकृत बलाबलमिति ? तदुच्यते । '**एकद्वित्रिचतुष्पञ्चवस्त्वन्तरणकारितम् । श्रुत्यर्थं प्रति वैषम्य लिङ्गादीनामपीष्यते ॥**' श्रुतिमात्रानुमानान्तरितो हि लिङ्गस्य श्रुत्यर्थ । वाक्यस्य पुन लिङ्गश्रुत्यनुमानव्यवहित । कथम् ? '**वाचकेनैकवाक्यत्वादिहातद्वाचिना सताम् । कल्पयित्वाऽभिधाशक्ति श्रुति पश्चात् प्रकल्प्यते ॥**' सर्वेन हि मन्त्रे किञ्चिदेव पद कर्मसमवेतमर्थं वदति । यथा 'अग्नये जुष्ट निर्वपामि' इत्यत्र निर्वपामिपदं । शिष्टानि तु असमवेतार्थाभिधायित्वाद् प्रयोगार्हाणि सन्ति दृश्यमानैकवाक्यताऽन्यथाऽनुपपत्त्या अनुमिततत्सामर्थ्याभिधानानि सति स्वार्थमुपसर्जनीकृत्य तद्विशिष्टसमवेतार्थप्रकाशनेन प्रयोगार्थत्व प्रतिपद्यन्ते । ततश्च श्रुतिमनुमाय विनियुज्यन्ते । तच्चाविरोधे सति सर्वमभ्यनुज्ञायते । यदा दृश्यमानैकवाक्यत्वयोर्मन्त्रयो पृथक् पृथक् प्रकाशयितव्यो अर्थौ कर्मसमवेतौ दृश्येते, तदा उभयोरपि भेदेन प्रकाश्यापेक्षणात् प्रकाशकयोश्च प्रकाश्यापेक्षणात् विनियोगाय प्रस्थिते सति यस्य यत्र क्लृप्त सामर्थ्यम्, स तत्र शीघ्रतर प्राप्नुवन् नान्यत्रैकवाक्यतया नेतु शक्यते । नाप्यन्येभ्य तत्राऽऽगच्छद्भ्य सोऽवकाश ददाति । कथम् ? '**एकवाक्यतया यावत् सामर्थ्यमनुमीयते । सामर्थ्येन श्रुतिस्तावत् कल्प्यते विनियोजिका ॥**' समुदायो हि विनियुज्यमानो नावयवान् अविनियुज्य विनियोक्तु शक्यते । तत्र पूर्वोत्तरयोर्भागयोरेकवाक्यत्व प्रत्यक्षम्, नैकार्थाभिधानसामर्थ्यम् । भिन्नार्थाभिधानसामर्थ्यं तु अर्थे प्रत्यक्षदर्शनात् सिद्धम् । तत्र समुदायावयवविनियोगाय वाक्यसामर्थ्ययो सह प्रस्थितयो असमर्थविनियोगासंभवात् यावद्वाक्येन पूर्वो भाग उत्तरार्थाभिधानसमर्थ , उत्तरो वा पूर्वसमर्थ इत्यनुमीयते, तावत् प्रत्येकमागतेन सामर्थ्येन पूर्वस्यापि स्वार्थे, परस्यापि स्वार्थे श्रुतिरनुमिता । ततश्च यावदितरत्र विनियोजकश्रुत्यनुमानाय प्रयत्यते तावदिह विनियोगे सिद्धे निराकाङ्क्षत्वात् प्रकरणाम्नानस्य, न कश्चिदपि हेतु श्रुत्यनुमाने इत्यनुपजातमूलो विनियोगो बाध्यते । मन्त्रस्यापि हि पूर्वस्य पूर्वार्थे शीघ्र विनियोग , उत्तरस्य चिरेण । तथोत्तरोत्तरस्य शीघ्र पूर्वस्य तत्र चिरेण । शीघ्रविनियुक्तश्च मन्त्र चिरविनियोग नाऽऽद्रियते । तथाऽर्थोऽपि प्रथमावगतमन्त्रसम्बन्धो नेतरं गृह्णाति । स्वप्रत्यये च संभवति न परोपजनत्व प्रतिपद्यते । तस्माल्लिङ्ग बलीय इति भित्वा वाक्य विनियोग इति । नन्वेव सति 'निर्वपामि' इत्यादिना कर्मसमवेतार्थेन शीघ्रतरमतेनावरुद्धेऽर्थे विप्रकृष्टभाषाणा 'देवस्य त्वा' इत्यादीना बाधादविनियोग प्राप्नोति । न चैषा भिन्नप्रयोजनत्वात् समुच्चय , तथा सत्येकवाक्यत्वाभावात् । अत एव चैतैरेकवाक्यत्वविशिष्टैरेव प्रकाशयितव्यो नाय प्रकाशनम्, कर्मान्तरप्रसङ्गात् । अत समानविषयत्वात् समवाये सति वाक्यप्राप्यपदान्तरबाधेन भवितव्यमिति । अत्रोच्यते । '**पदान्तराणि यत्रार्थं वदेयु कर्मवर्तिनम् । तत्रैवमितरेषा तु वाक्यमप्यगतेर्वरम् ॥**' यानि असमवेतार्थवचनानि, तानि यदि स्वतन्त्रीक्रियन्ते, ततोऽनर्थकानि भवन्ति । तेन कर्मसंबन्धैर्निराकाङ्क्षीकृतोऽप्यर्थ इतरेषा साकाङ्क्षत्वात् पुनस्तत्प्रकाशकत्व प्रतिपद्यते । यथा प्रकरणपूरितानामपि क्रमेण पुनस्तद्धर्मप्राप्तिर्भवति । यथा प्रकृतौ निराकाङ्क्षीभूता धर्मा विकृतीर्गमिष्यन्ति । तथा च क्लृप्तो व्याख्यातम् । तस्मादेवमादीन्यपि संबध्यन्ते । येषा तु प्रकाश्योऽर्थ समवेतो दृश्यते तेषामनभिधेयेना संबध्यमानानामपि अर्थवत्ताऽस्तीति नाऽऽनर्थक्यनिमित्तमवकाश लभन्ते । सर्वेषामेव च श्रुत्यादीनामानर्थक्यप्रतिहताशा दुर्बलैरपि बाध्यत्वमिष्यते । तद्यथा व्रीह्यादीना प्रोक्षणादीन् प्रति श्रुत्या चोदित्व प्राप्नुवदपि अतिलङ्घ्य प्रकरणस्यापूर्वसाधनलक्षण संबन्धो भविष्यति । तेनावस्थित वाक्यात् लिङ्गस्य बलीयस्त्वम् । तथा च भाष्यानुवादे दर्शितम् । (पृ ८३१–८३३ )।

एव लिङ्गस्य प्रकरणादिविरोध उदाहर्तव्य । तत्र प्रकरणविरोधे तावत् पूषानुमन्त्रणादि उदाहृतानि ।

भाट्ट— लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाध । लिङ्गवाक्ययोस्तु 'स्योन ते' इति सदन करणप्रकाशकस्य पूर्वार्धस्य 'तस्मिन् सीद' इत्युत्तरार्धेन सादनप्रकाशकेन 'तस्मिन्' इति विभागे साकाङ्क्षत्वेनैकवाक्यत्वात् सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापने एव 'तस्मिन्' इति पद संनिधिरूपेण वाक्येन विनियोगे प्रारोप्सिते तत पूर्वं प्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यकत्वेन स्वार्थबोधकस्य परोपसर्जनत्वकल्पने प्रमाणाभावात् तच्छब्दस्य च 'सा वैश्वदेवी' इतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात् प्रत्येकमेव विनियोग इति ।

मण्डन— 'लिङ्ग वाक्यस्य बाधकम् ।'

शंकर— 'वाक्यस्यापि च लिङ्गत ।' भाष । ८

( वाक्यबलाबलविचार — ) भाष्यम् – अथ वाक्यप्रकरणयोर्विरोधे कथमिति । किं पुन प्रकरण नाम ? कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचन प्रकरणम् । प्रारम्भो हि स तस्या वचनक्रियाया । स एव विध्यादिर्विध्यन्तापेक्ष । वाक्य उक्तमेव । तयोर्विरोधे किमुदाहरणम् ? सूक्तवाकनिगद । तत्र हि पौर्णमासी देवता अमावास्यादेवताश्चाऽऽम्नाता । ता परस्परेणैकवाक्यता नास्युपपद्यते । तत्र लिङ्गसामर्थ्यात् पौर्णमासीप्रयोगादि ग्निशब्द उत्कृष्योऽमावास्याया प्रयोक्तव्य । अथेदानी संदिह्यते योऽस्य शेष, 'अवीवृधेता महो ज्यायोऽक्राताम्' इति, स किं यावत्कृत्व सूक्तवाके समाम्नात तावत्कृत्व उभयो पौर्णमास्यमावास्ययो प्रयोक्तव्य प्रकरण बलवत्तरमिति, उत यनेऽग्निशब्द उत्कृष्य नीतस्तत्रैव प्रयोक्तव्यो वाक्य बलवत्तरमिति । एव सर्वेषु संशय । किं तावत् प्राप्तम् ? तुल्यबले एते कारणे इति । कुत ? इतरत्राप्याकाङ्क्षा, इतरत्रापि । तुल्यायामाकाङ्क्षाया नास्ति विनिगमनाया हेतु । तस्मात्तुल्यबले इति । अथवा वाक्य दुर्बलम् । बाधित हि तल्लिङ्गेनेति । एव प्राप्ते, ब्रूम । प्रकरणाद्वाक्य बलीय । कथम् ? अथविप्रकर्षात् । कोऽर्थविप्रकर्ष ? । वाक्ये एकैक पद विभज्यमान साकाङ्क्ष भवति, कृत्स्न परिपूर्णं भवति । तत्र प्रत्यक्ष एकवाक्यभाव । प्रकरणे तु अप्रत्यक्ष । कथम् ? इतिकर्तव्यताऽऽकाङ्क्षस्य समीपे उपनिपतित पूर्णमिति तस्य प्रकृतस्य साकाङ्क्षत्वमवगम्यते । नैकवाक्यभूतमित्यनुमीयते । एकवाक्यतया चाभिधानसामर्थ्यमवकल्प्याभिहितोऽयमेव भवतीति परिकल्पना । एषोऽर्थविप्रकर्ष । यद्वाक्यस्य समासन्ना श्रुति, प्रकरणस्य विप्रकृष्टा । तस्मात् सूक्तवाकेन प्रस्तर प्रहरति इति पौर्णमासीदेवताभिधायिना मावास्यादेवताभिधायिना च निष्कृष्य प्रयोगे, तच्छेषाणाममावास्यादेवताभिधायिभि सह निष्कृष्य प्रयोग । तेन यद्यपि प्रकरणसामर्थ्यात् पौर्णमासीदेवतापदशेषाणाममावास्यादेवताभिधायिभि सह एकवाक्यताऽनुमीयते, प्रत्यक्षा तु अमावास्यादेवतापदै सह । न च प्रत्यक्षविरोधेऽनुमान सम्भवति । अर्थवति च प्रकरणे संजाते, न निराकाङ्क्षाणामाकाङ्क्षा शक्योपपादयितुम् । अथ यदुक्तम्, लिङ्गेनापि हि तद्बाध्यते । अत प्रकरणेनापि बाधितव्यमिति । न यदन्येनापि बाध्यते, तद् भङ्गुरमन्यत्रापीत्यवगन्तव्यम् । अथ भङ्गुर प्रमाणमेव नाभविष्यत् । किं चित्तु प्रति कस्य चित् प्रभाव । वाक्यस्य प्रकरण प्रति बाधकशक्ति न तु लिङ्ग प्रति । लिङ्ग प्रति विप्रकृष्टार्थमेतत्, प्रकरण प्रति संनिकृष्टार्थम् । तेन वाक्येन प्रकरण बाध्यते इति ।

वा— वाक्ययोर्विरोधे 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश वैश्यस्य' इत्येतदुदाहरणम् । उभयत्रापि हि सामानाधिकरण्यादेकवाक्यत्वे कृते विनियोगे सति निमित्तविशेषसंयोगात् सप्तदश बलीयो भवति । (पृ ८४०)।

किं पुन प्रकरण नामेति । सर्वेण सिद्धवत्प्रकरणेन व्यवहार, न चेत कश्चिन्निरूपितपूर्वम्, तदिहापि तावदस्य स्वरूप निरूप्यताम् । निर्ज्ञातस्वरूपस्य हि बलाबल शक्यते इति । अथवा नैवास्य वाक्यक्रमाभ्या भेद । साकाङ्क्षपदसंनिधिमात्र हि वाक्यमित्युच्यते । तच्च प्रकरणेऽप्यविशिष्टम् । न च वाक्यस्य पदेयत्तायां प्रमाणमस्ति । विभज्यमान– साकाङ्क्षत्वं ह्येवमानैकप्रयोजन मात्रोपलक्षणत्वात् । तेन वाक्यमेवैकमल्पपद अपर बहुपदम् । अवान्तरार्थवशीकृताना महाप्रयोजनवशेन महासंघातात्वे । वक्ष्यति हि वाक्य दोक दर्शपूर्णमासाभ्यां सहधर्माणामिति । अथवा संनिपातात्मक क्रम इत्युच्यते । स च प्रकरणेऽप्य

चरयम्भावी सन्निधिः । अत॰ क्रमादप्यभिन्नं प्रकरणमिति मन्यते । तदिदानीं तत्प्रभेदपर्यायैर्निरूपयति । तत्र तत्त्वं तावदुच्यते 'कर्तव्यस्येतिकर्तव्यताकाङ्क्षस्य वचनं प्रकरणम्' इति । कर्तव्यमिति साध्यभूतमपूर्वं अथवा विधेयत्वानुष्ठेयत्वाभ्यां भाव एव प्रत्ययवाच्योऽभिधीयते । साध्यांशोपनिपातात् स्वर्गादिफलं कर्तव्यमिति चेन्न । तस्य वाक्यान्तरभावित्वेन प्रयोगसमवायित्वे सति नत्विधद्वयपर्यायपूर्वस्यैव कर्तव्यत्वावधारणात् । तेनापूर्वं कृत्वा नान्यमेति । तथा 'यज्ञकर्म प्रधानं तद्धि चोदनाभूतम्' (४।१।१।१) इति तस्यैव प्रयोजकत्वं वक्ष्यते । 'फलदेवतयोश्च' (९।१।३।४) इत्युत्तरस्य निराकरिष्यते । तत्र कथमित्यनु प्रयोगाकाङ्क्षणमाकाङ्क्षेति यत्नत व्याख्यायते । यद्वा इतिकर्तव्यता भावाकाङ्क्षतीतिकर्तव्यताकाङ्क्षं भावापूर्वयो रैकम्, तस्य यद्वचनमिति समानाधिकरणे षष्ठ्यन्ते । वचनमिति शब्देन प्रत्यायनम् । एतदुक्तं भवति यत्नुरूपेण विश्रमानाऽप्याकाङ्क्षा न प्रकरणमित्यभिधीयते । किं तर्हि ? प्रतीयमाना । साऽपि च कर्तव्यतार्थो पपन्नत्वेन गृह्यमाणा, न स्वातन्त्र्येण । तेन आकाङ्क्षा ऽभिधीयमाना प्रकरणम्, आकाङ्क्षावती वा भावनेति द्रष्टव्यम् । इदानीमस्य व्युत्पत्त्यात्मकेन भेदेन कथयति । तत्र प्रशब्दस्तावत्प्रारम्भमाह, करणशब्द॰ क्रियाम्, प्रकरणं प्रक्रियेत्यर्थ॰ । का पुनरिह क्रिया गृह्यते, नामाह 'वचनक्रियायाः' अर्थाभिधानक्रियाया इति यावत् । भावनाभिधानक्रियाया हि प्रयोगवाक्यप्रवृत्तिप्रारम्भ । फलकरणावपूरणे भवद्भवमानसाध्यम्, इतिकर्तव्यतालाभस्त्वनेकवाक्यान्तरायत्तसिद्धिः । अतस्तत्सम्बन्धापेक्षया कथम्भाव प्रकरणमभिधानविधानक्रिययोरारम्भ इत्युच्यते । करणशब्दश्च क्रियामात्रवाच्यपि सन् आगमविषये प्रयुज्यमानोऽभिधानक्रियायां वर्तते । 'स एव विध्यादि॰' इति पर्यायकथनम् । आरम्भणो॰ संबन्धि शब्दत्वात् किमपेक्ष्य आदित्वमित्यत आह 'विध्यन्तापेक्ष॰' इति । विध्यन्तो नाम इत्यम्भावरूपमितिकर्तव्यतावधारणम् । तस्य चानेकाङ्गवाक्यतदर्थ—तद्योजनारूपेणावयवस्य कथम्भाव आदिरित्यारम्भणो विध्यादित्वेन प्रसिद्धिः । तत्र च स्वपदग्रहणेन किंचिदपि प्रयोजनेऽवसितानामेव वाक्यानां पुनः कार्यान्तरापेक्षावत्त्वेन संबन्ध इति वाक्यादिशेषः । तत्र आदित एव क्वचिदपि प्रयोजनदेशे विश्राम्यमाणानां वृत्तिर्नास्ति, सम्बन्धेनैव अर्थलाभ । क्रमेण तु सह वेल साध्यमनन्तरमेव प्रस्थाम॰ । तस्मात् प्रमाणान्तरं प्रकरणम् । 'किमिह उदाहरणमिति' तेनैकवाक्यतानयनाभिप्रायेण पृच्छति । सिद्धान्तवादी तु निधायस्तारकत्वेन भिन्नवृत्तित्वात् मन्त्रब्राह्मणयोर्न कश्चिदेकवाक्यता घटत इति सूक्तवाकमुदाहरति । लिङ्गादेयवापदेषु निष्कृष्टेषु तच्छेषाः किमुत्कृष्यन्तामथ सहिता अपि प्रयुज्यन्तामिति । प्रकरणेन तावत् सर्वशेषा अग्नय प्राप्नुवन्ति । लिङ्गमपि साधारणम् । द्विवचनैकवचनयोरुभयत्र विद्यमानार्थत्वात् । ननु चाऽऽग्नेयेनैव शेषेणावरुद्धेषु देवतापदेषु शेषान्तरमनवकाशमेव स्यात् । सत्यम् । एवमपि वाक्यप्रकरणयोर्विरोधो नैवापैति । प्रकरणेन अनन्वीतदेवताकोऽपि शेष॰ प्रयोज्य प्राप्नोति वाक्येनेतर इति वाक्यबलीयस्त्वादेव तदाश्रयणम् । अतएव प्रकरणेन तावत्प्रयोगः प्राप्नोति । वाक्येन तु यथादेवतापदानुसारात् सकृदिति विरोध॰ । तत्र अनन्यत्वाच्च वाक्यं बलीय॰ । कथम्भावेन हि, इत्थं यजेतेति प्रकरणिना सह संबन्धमनुमाय यावदाम्नातं शेषप्रयोग । तथा तत्सम्प्रयोगशेषैरग्नीषोमदेवतापदैः सह पुन संबन्धकल्पनमिति विप्रकर्ष॰ । तस्मात्तान॰ । ततश्च देवताशेषाणां नियमेनापकर्ष॰ न पाक्षिक॰ । सर्वदा वा विनियोग इति सिद्धम् । (पृ. ८५१-८५४) ।

वाक्यप्रकरणयो॰ प्रकरणं अर्थविप्रकर्षात् दुर्बलम् । तथाहि, 'प्रत्यक्षः संबन्धिवाक्ये न च प्रकरणेऽस्त्यसौ । आकाङ्क्षातोऽनुमातव्या तावता विप्रकृष्टता ॥' प्रकरणे हि स्वार्थपरिपूर्णानामङ्गाङ्गिवाक्यानामुपकार्योपकारकभावाकाङ्क्षामात्र दृश्यते । वाक्ये तु प्रत्यक्षः संबन्ध॰ । ततश्च सहप्रस्थितयोर्यावत् प्रकरणेनैकवाक्यता कल्प्यते, तावद्वाक्येन अभिधानसामर्थ्यम् । यावदितरत्र वाक्येन सामर्थ्यम्, तावदिह सामर्थ्येन श्रुतिः । यावदितरत्र सामर्थ्येन श्रुति, तावदिहत्र श्रुत्या विनियोगोऽभिहित इति निष्कम्पमाकाङ्क्षायाः श्रुत्यनुमाने मूलाभावादिह वे ।

कल्पितमपि शेषत्वं निष्पत्तिमबला अन्तरैव विनीयते। तस्माद्वाक्य बलीय ।( पृ. ८३३ )।

वाक्यक्रमयोर्विरोधे परिग्याणस्यणक्रियमाणानुवादि- परिवीरसिपरिवीतपद व्यतिरिक्तपदानां 'युवा सुवासा आगात्, स उ श्रेयान्' इत्येवमादीनां लिङ्गविनियुक्त परिवीतपदैरशक्यत्वात् स्वनीयपरिव्याणे विनियोग। वाक्यसमाख्ययोर्विरोधे मध्यनुवाके एव 'सप्यासम्' इत्येवमादिषु ग्रहणादौ विनियुज्यमानेषु तदेकवाक्यगत- दोपपदानुचिरुदाहृतेया। तथा आध्वर्यवादिसमाख्यानात् ज्योतिष्टोमादिप्रधानेषु तदर्थेनेव क्रतुगतेषु स्वर्गकामाद्ये कवाक्यत्वादधिमानविषयत्व विधायते। ननु च श्रुति दैवा भवेत्। नात्र वस्य चित् श्रवणादेतत् विशयते लिङ्ग कर्तृत्वमभिधानात्। किं तर्हि? पदद्वयनिष्पत्तेरेव पूर्वत् तु उभया सामानाधिकरण्यादवगम्यते। तस्मात् वाक्येनैव समाख्या बाध्यते इति। ( पृ ८३७ )।

( अनेकस्य शेषस्य शेष्येकत्वे वाक्यप्रकरणयो- र्विरोधे 'पूर्णेनुरमावास्याया वेदिं करोति' इत्युदाहरणम्। प्रकरणेन हि हविरभिघारणोत्तरकाल यत् विधान तस्य ग्रहण प्राप्नोति। अमावास्यासमभिव्याहारेण तु पूर्णे तु। न चात्र श्रुतिरस्ति। नहि सप्तमी नेयदोविसन च वदति। यत्तु अधिकरणत्वमभिधत्ते, तत् तत्कर्मणोऽनुपपन्नमेव। तस्मात् पदद्वयनिधानेनैव सम्बन्ध। स च शौभरः भराती- त्युक्तम्। वाक्यक्रमयोर्विरोधे किमुदाहरणम्? ज्योतिष्टोमे काम्येनेमित्तिकेषु प्रतिपत्तरस्तेषु प्रतीकग्रहणात् पादमात्र श्रुत्या विनियुज्यते। [redacted] द्वितीयपादात् प्रभृति यथासंख्य क्रमेण नियमानामेवैषां प्रसङ्गः। तद्यथा 'वृषा पवस्व धारया इति राजयाय प्रतिपद कुर्यात्' इत्यत्र 'पवमा नायेन्दवे। अभि देवा इयक्षते' इत्येतावेव द्वितीय तृतीयपादौ प्राप्नुत। वाक्याच्च 'मरुत्वते च मत्सरः'। विश्वा दधान ओजसा' इति। ननु विभक्तिभेदादत्र लिङ्गविरोध स्यात्। नैष दोष। सर्वेषां सोमलिङ्गत्वात् विभक्ति भेदेन तु एकवाक्यत्वमेव नोपपद्यते। तस्मात् आकाङ्क्षा पूर्वक्रमेकवाक्यत्वादि कल्प्यते, तावद्वितरेण आनन्तर्यात् समानविषयत्वाच्च सामर्थ्यादि कल्पयित्वा विनियोग कृत इति वाक्यपरम्। वाक्यसमाख्ययोर्विरोधे "तस्मा- न्मैत्रावरुण प्रेष्यति चानु चाऽऽह' इति हौत्रसमाख्याते प्रवचने प्रैषानुवचनमाम्नातम्। तस्य कर्तृविरोधादृत्विक् समाख्यया होता प्राप्नोति, वाक्येन मैत्रावरुण। एवेन न कृतार्थस्य न कर्त्रन्तरापेक्षा भवति। तत्र शौभरत्वने मैत्रावरुणे प्रकरणकल्पना नास्ति प्रता समाख्या बाध्यते। न चात्र श्रुतिविरोध। आख्यातपदेन कर्तुरनभि धानात्, मैत्रावरुणपदे च कारकविभक्तिप्रयोगाभावात्। (पृ. ८३९ )।

शा—( वाक्यप्रकरणयोर्विरोधे ) ये तु ( प्राभाकरा ) आरादुपकारकेष्वेव प्रकरणस्य व्यापार, सन्निपातिना तु ग्राहकग्रहणत्वेन प्रमाणेन तार्तीयश्रुत्यादिनिरिवेन अपूर्वार्थत्वम्, इतरैरप्यर्थे श्रुत्यादिभि औपादानिक तत्व यत्वम्, प्रकरणस्य तु न कश्चित् व्यापारः इति मन्यन्ते, तेषामेवाथ सूक्तवाक्यपदानां श्रुत्या प्रकरणविनियुक्तानां प्रकरणाविनियुक्तत्वात् नेद वाक्यप्रकरणविरोधोदाहरण युक्त इत्युपालम्भो नास्माकम्।

द्वयोरपि वाक्यप्रकरणयो प्रमाणयत् श्रुतिकल्पना- धीनत्वसाम्यात्, अन्यस्य च विप्रकर्षकारणस्य अभाव्य कथितत्वात् तुल्यबलता मन्यन्ते। यत्र प्रधानाकाङ्क्षा प्रकरणम्, प्रधानार्थं च सर्वम्, इति तत्रिव घन एव विनियोगो बलीयान्। इति मते, अभिधीयते। 'येनैकवाक्यता तत्र सामर्थ्यं गम्यते मनाक्। सामर्थ्याच्च श्रुति , श्रुत्या विनियोगो, ऽपरत्र तु॥ पूर्वयोरेकवाक्यत्व कल्प्य स्यात् प्रक्रियावशात्। ततो लिङ्ग, श्रुति पश्चाद्, विनियोगस्ततः परं ॥' इति दुर्बलं वाक्यात् प्रकरणम्।

वि— 'अग्नीषोमादिर इयमनुगेत्यादिवीरितात्। अपच्छिन्नेदमित्यादि सर्वशेषो भवेच्च वा॥, प्रक्रि- यातो भवेत्, मैत्र प्रक्रियाऽन्तरिता त्रिभि। वाक्य द्वयन्तरित तेन भवेत् प्रकरणाद् बलि॥' १

भाट्ट— वाक्ययोर्विरोधे उपांशुत्वस्य 'स्वरा ना एषा यज्ञस्य' इति वाक्येन यज्ञपदैकवाक्यत्वात् यज- मानधर्मत्वं 'तस्मात्प्रतिविधिन् प्राचीनमग्नीषोमीयात् तेनो- पांशु चरन्ति' इत्यनेन संनिहितयस्तिवितरदैकवाक्यतया

अवगतपदार्थधर्मत्वेन बाध्यते । वाक्यप्रकरणविरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणा-गतदर्शाङ्गत्वबाधः ।

यत्तु अग्नीषोमादिपदैकवाक्यतापन्नाना 'इदं हविः' इत्यादिपदाना अमावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यते इति उदाहरणमुक्तं मूले । तत् श्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वासंभवस्यभावे अपि अधिकाराख्यगौणप्रकरणस्य अपूर्वसाधनत्वलक्षणतात्पर्यग्राहकस्य प्रसक्तत्वात् तद्बाधाभिप्रायेण द्रष्टव्यम् ।

मण्डन— 'वाक्येन प्रक्रिया बाध्या ।' ९.

शंकर— 'वाक्यात् प्रकरणं बाध्यम् ।' ९.

( प्रकरणक्रमाधिकरणम् ) भाष्यम्— अथ प्रकरणस्य क्रमस्य च विरोधे किमुदाहरणम् ? राजसूयप्रकरणे अभिषेचनीयक्रमे शौनःशेपाख्यानमाम्नातम् । यदि प्रकरणं बलवत् सर्वेषां तदङ्गम्, यदि क्रमः अभिषेचनीयस्यैव । [redacted] तावदास्ताम् ? तुल्यबले एते कारणे इति । कुतः ? न तावद्विशेषमुपलभामहे, येनावगच्छाम इदं बलीय इति । तस्मात्तुल्यबले एते कारणे इति । अपि च प्रकरणं वाक्येन बाधितम् । तस्माद्बाध्येत क्रमेणापीति । एवं प्राप्ते, ब्रूमः । प्रकरणं क्रमाद्बलीयः । कुतः ? अर्थविप्रकर्षात् । कोऽसावर्थविप्रकर्षः । प्रकरणवतः साकाङ्क्षत्वात् तत्संनिधौ आम्नातेन परिपूर्णेनापि अवगम्यतेतदङ्गत्वम्, न तु क्रमवतः क्रमे आम्नातेन । अनेकस्य आम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रमः । तत्र संनिधिविशेषाम्नानसामर्थ्यात् क्रमवतः संनिधौ आम्नातस्यानुपलभ्यमानमेव आकाङ्क्षात्वमस्तीत्यवगन्तव्यम् । प्रकरणे तु प्रकरणवतः प्रत्यक्षम् । न च प्रकरणवत्ता क्रमवत्ता च यौगपद्येनैकस्यापि संभवति आम्नातस्येति विशेषः । तत्र प्रकरणे प्रत्यक्षं साकाङ्क्षत्वम्, क्रमे आनुमानिकं बाधितुमर्हति । साकाङ्क्षत्वादेकवाक्यत्वम्, एकवाक्यत्वादभिधानसामर्थ्यम्, सामर्थ्यात् श्रुत्यर्थ इति संनिकृष्टः प्रकरणस्य श्रुत्यर्थः, विप्रकृष्टः क्रमस्य । तस्मात् 'क्रमप्रकरणयोः प्रकरणं बलवत्तरमिति । अत्र यदुक्तं वाक्येनापि हि तद्बाधितमतोऽन्येनापि तद्बाधितव्यमिति । नैतत् । बाधितस्यानुग्रहो न्याय्यो न बाधितव्यमिति ।

वा— प्रकरणयोर्विरोधे 'अभिक्रामं जुहोति' इत्युदाहरणम् । महाप्रकरणेन हि अस्य दर्शपूर्णमासार्थता । अवान्तरप्रकरणेन [redacted] प्रयाजार्थता, तच्च बलीयः । तत्र हि प्रत्यासत्तेः अननुभूते महाप्रकरणसंस्पर्शे पूर्वतरं वाक्यसंबन्धः संबन्धः अवकल्पते । (पृ. ८४० ) ।

अथ क्रमप्रकरणयोर्विरोधे किमुदाहरणमिति । यथा-संदंशलक्षणक्रमविशेषोदाहरणासंभवात् पुरस्तात् परस्ताद्वा आम्नातस्य संनिविलक्षणेन अवान्तरप्रकरणेन प्रायेणैव किंचिदुदाहरणमिति विपर्ययदर्शनेन अप्रधानसंबन्धयो अतिक्रम्यापि प्रश्नः । अवयं तु स्थानान्तरप्रकरणत्वप्रसङ्गनिराकरणमित्यभिप्रेत्योदाहरणोपन्यासः । राजसूयप्रकरणे अभिषेचनीयस्योपरि 'शौनःशेपमाख्यापयति' 'राजन्यं जिनाति' 'शौनःशेपं वेत्यति' 'अभिषिच्यते' इत्येवमादीन्याम्नायन्ते । तेषां चाङ्गत्वे नैव कस्य चित् संदेहो विप्रतिपत्तिर्वा इति शेषविशेषलक्षणनिश्चयार्थमिदं विचार्यते किं समस्तराजसूयस्य एतान्यङ्गानि, उताभिषेचनीयस्यैव, अथ विकल्पः समुच्चयपक्षासंभवादिति । प्रकरणस्य क्रमस्य च तत्र प्रवृत्ति एतद्विचारणीयम् । ननु चाभिषेचनीयस्थानान्तरप्रकरणात् प्राप्तिरिति महाप्रकरणं बाध्येत । नैष दोषः । यदि अभिषेकाङ्गीकृतेऽभिषेचनीये तेषां पाठः स्यात्, ततोऽवान्तरप्रकरणमवगम्येत । स तु प्रागेव निर्वचनादिभिः प्राकृतैर्धर्मैः निराकाङ्क्षीकृतः । तस्मादपि प्रत्यासन्नौ अवक्लृप्तोपकारानेतानुपकारापेक्षः क्रतुः संगृह्य प्रकृतिमपेक्षते । तथा च शेषोपकारप्रदानेन पूरिते कथंभावे निवृत्तं प्रकरणम् । समीपाम्नातधर्मान्तर्व्यवायनिमित्तादेव पुनरुत्पाद्येत, ततश्च क्रमस्य भवति । निराकाङ्क्षस्य हि तत्र आकाङ्क्षा यावदभिषेचनीयस्योत्पादते तावत् राजसूयकथंभावेन प्रत्यक्षेण सिद्धो विनियोगः । तदीयो हि कथंभावः परिपाद्यस्य धनस्य धृतिं यावदनुसृतः शक्नोति निर्देवनादीनि संग्रहीतुम् । (पवित्र. धनस्य धृतिश्च खोमयागौ राजसूयान्तर्गतौ । तत्र धनस्य धृतिः अन्तिमः) । अतो नास्त्यत्र अवान्तरप्रकरणमभिषेचनीयस्य । यस्यां तु विकृतौ प्राकृतं किंचि-

दङ्गं प्रकीर्त्यं तस्य पुरस्तात्परस्ताद्वा वैकृतमङ्गमाम्नायते, तत्र कथंभावगृहीताङ्गमध्यवर्तित्वात् प्रकरणपाठो विज्ञायते। न चेह तदस्तीति क्रमस्यैव व्यापारः। 'सन्निधावाम्नातेन परिपूर्णेनापि' इति—वाक्यार्थपूर्णत्वाभिप्रायम्। 'अनेकधाऽऽम्नायमानस्य सन्निधिविशेषाम्नानमात्रं हि क्रमः' इति केन चित्सन्निधानस्य नान्तरीयकत्वं दर्शयति। यो हि बहूनामर्थेन आम्नायते, तस्य सर्वप्रधानप्रत्यासन्नप्रदेशासंभवादवश्यंभाविनी केन चित्सह प्रत्यासत्तिः। न तु प्रकरणपाठस्य एव नान्तरीयकत्वम्। अतः सह प्रवृत्तयोः क्रमप्रकरणयोः प्रकरणस्य शीघ्रतर श्रुत्यर्थप्राप्तिरिति बलीयस्त्वम्। (पृ. ८५५)।

तथा क्रमप्रकरणयोः क्रमस्य अर्थविप्रकर्षः। कथम्? 'आकाङ्क्षातः प्रभृत्येकं प्रत्यर्थं प्रति गच्छति। तमपि त्वन्यतो लब्ध्वा श्रुतिरेकस्य कल्प्यते॥' क्रमो नाम निरपेक्षाणां सतां पाठानुष्ठानदेशसामान्यमानम्। यदि तु आकाङ्क्षावतः सन्निधौ आम्नायेत, ततः प्रकरणमेव स्यात्। अत्र च प्रायेण महाप्रकरणोपनिपातिन्यो विकृतय उदाहरणम्। तासु हि यत् प्राकृताङ्गमध्यपातित्वेन नोत्पन्नं तत् पुरस्तात् परस्ताद्वा अवस्थितक्रमभाग्भवति। प्रकरणस्य कृत्स्नोपकारैः प्राकृतैः पर्यवसितत्वात्। तत्र यन्निवृत्ताकाङ्क्षस्य कस्य चित् समीपे पठ्यते, अन्यस्य चाकाङ्क्षा, ततस्तदुभाभ्यां श्रूयमाणं यावत् क्रमवतो निवृत्तामपतीमाकाङ्क्षामुपजनयति, तावत् प्रकरणवता सहैकवाक्यतां गच्छति, यावच्च इतरत्र एकवाक्यता भवति, तावत् प्रकरणिनं प्रति उपकारसामर्थ्यकल्पना। यावत् इतरत्रासौ, तावदिह श्रुत्यनुमानम्। यावत् इतरत्र श्रुतिरनुमास्यते, तावदिह सिद्धे विनियोगे अनुमानबीजहीनेन अकल्प्तश्रुति सर्वं अप्रमाणी भवति। (पृ. ८३३–८३४)।

(अनेकस्य शेषस्य शेष्येकत्वे) प्रकरणक्रमयोर्विरोधे शिपदेशपदे एव स्तोत्रापेक्षयोदाहरणम्। अग्निष्टोमशास्त्रः क्रमेण शिपदं प्राप्नोति, प्रकरणाद्विपदम्। तच्च भणीयम्। पूर्वं तु सामपेक्षमोऽहवमासीदित्यधिर्गविषयत्वम्। प्रक्रियासमाख्ययोर्विरोधे 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इत्येतदेव ज्योतिष्टोमं प्रति उदाहरणम्। तस्य हि समाख्यया होतृकर्तृकं प्रैषानुवचनं प्राप्नोति, प्रकरणात्तु मैत्रावरुणकर्तृकं निर्णीयते। प्रैषानुवचनस्वरूपापेक्षं च पूर्वेणोदाहरणमिति भेदः। (पृ. ८३९–८४०)। (एकस्य शेषस्य शेष्यनेकत्वे तु) प्रकरणसमाख्ययोर्विरोधे पौरोडाशिकसमाख्यातस्याहणाक्षानां प्रयाजादीनां प्रकरणात् सानाय्योपांशुयाजार्थत्व इत्युदाहरणम्। (पृ. ८३८)।

**सोम—** तैत्तिरीयशाखाया अभिषेचनीयप्रयोगमध्ये 'दिशोऽभ्यय राजाऽभूत् इति पञ्चाक्षान् प्रयच्छति' 'शौनःशेपमाख्यापयते' इति विदेवनादीनाम्नाय तदनन्तरम् 'मारुतस्य चैकविंशतिकपालस्य वैश्वदेव्यामिक्षायाः अग्नये स्विष्टकृते समवद्यति' इत्यभिषेचनीयाङ्गेषु इष्टिविशेषमाम्नाय 'अपां नप्त्रे स्वाहा, ऊर्जो नप्त्रे स्वाहा, अग्नये गृहपतये स्वाहा इति त्रिस्र आहुतीर्जुहोति' इत्यभिषेचनीयाङ्गहोमविशेष आम्नायते। तेन विदेवनादीनां अभिषेचनीयाङ्गसंदंशतया आम्नातानां तदवान्तरप्रकरणेन अभिषेचनीयमात्रार्थत्वात् तेषां क्रमप्रकरणविरोधोदाहरणत्वं नोपपद्यते इति। न च शाखाऽन्तरे अभिषेचनीयप्रयोगपरिसमाप्त्युत्तरं आम्नानात् तदभिप्रायेण उदाहरणत्वमुपपद्यते इति वाच्यम्। अवान्तरप्रकरणस्य बलवत्त्वेन कस्यांचिच्छाखायां अवान्तरप्रकरणेन अभिषेचनीयमात्रार्थानां तेषां शाखान्तरे महाप्रकरणेन सर्वार्थत्वानुपपत्तेः। तस्मात् कृत्वाचिन्तया इदमुदाहरणं इत्याहुः। पृ. २४६.

**वि—** 'राजसूयेऽभिषेच्याख्ययागे ये देवनादयः। तच्छेषास्तेऽखिलार्था वा, तच्छेषास्तस्य संनिधेः॥, राजसूयकथंभावानुवृत्तेः सर्वशेषता। कथ्याकाङ्क्षाऽभिषेच्यस्य प्रक्रिया प्रबला ततः॥' १०.

**भाट्ट—** प्रकरणयोर्विरोधे महाप्रकरणं अवान्तरप्रकरणेन। प्रकरणक्रमयोर्विरोधे 'अक्षैर्दीव्यति' इत्यादिविदेवनादीनां संनिधानात् अभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणात् राजसूयाङ्गत्वम्। न च अभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का, तस्य विकृतित्वेन कल्पनोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात्। न च विकृतावपि यत् प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते यथा पूर्ववाति, तस्यापि विकृतिगताङ्गाकाङ्क्षा-

यामनिवृत्तायामेव विधेयत्वात् तत्सदृशस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनः अपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः, विदेवनादीनां च अभिषेचनीयोत्तरसूक्त-विधाभिषेचनपूर्वभावित्वेन पाठात् प्रकरणग्रहणोपपत्ति-रिति वाच्यम्। प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वा-ङ्गस्य उपहोमवत् विकृत्याकाङ्क्षया निवृत्तायामेव विधा-नात्। यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथा औदुम्बरत्वशरादेः, तस्यैवानिवृत्ताकाङ्क्षया विधानं तत्सदृशस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृ-तिप्रकरणेन ग्रहणम्। अभिषेकस्य तु प्राकृतकार्यापत्त्य-भावात् तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरण-ग्राह्यत्वोपपत्तिः। वस्तुतस्तु अभिषेकस्य अपि स्वातन्त्र्यो-त्पन्नस्य प्रकरणात् राजसूयाङ्गत्वावगतेः 'माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते' इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोगः इति वक्ष्यते। अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव संनिधानादभिषेचनीयाङ्गत्वप्राप्तौ प्रकरणेन तद्बाधः। न च राजसूयस्यापि प्रत्येकं विहितत्वात् प्रकरणाभावः, पवित्रादारभ्य क्षत्रस्य धृतिं यावत् राजसूयत्वाभ्युपगमपुरस्कारेण यावानेकाङ्गाम्नानात् तत्सदृशविदेवनादीनां प्रकरणग्राह्यत्वो-पपत्तेः। एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणानि ऊह्यानि।

मण्डन— 'प्रक्रिया बाधते क्रमम्।' १०.

शंकर— 'स्थानं प्रकरणेन च।' भाष्यम्। १०.

( क्रमसमाख्याबलविचारः ) भाष्यम्— अथ क्रम-समाख्ययोर्विरोधे किमुदाहरणम्? किं बलवत्तर-मिति। पौरोडाशिकमिति समाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति शुन्धनार्थो मन्त्रः समा-म्नातः। तत्र संदिह्यते किं समाख्यानस्य बलीयस्त्वात् पुरोडाशपात्राणां शुन्धने विनियोक्तव्य, उत क्रमस्य बलीयस्त्वात् सान्नाय्यपात्राणामिति। किं तावत् प्राप्तम्? तुल्यबले एते कारणे स्याताम्। कुतः? अविशेषात्। यदि वा समाख्यैव बलीयसी। बाधितो हि क्रमः प्रक-रणेनापीति। एवं प्राप्ते, ब्रूमः। क्रमो बलीयान्। कुतः? अर्थविप्रकर्षात्। कः पुनरत्र अर्थविप्रकर्षः। निर्गते प्रकरणेन केनापि उद्देशमात्रत्वे यत्सन्निधा-वाम्नायते, तत्र आकाङ्क्षा परिकल्प्य तेनैकवाक्यतेत्यव-गम्यते। लौकिकश्च शब्दः समाख्या। न च लोक एवंविधेष्वर्थेषु प्रमाणम्। तस्मात् क्रमो बलीयानिति। यद्येवं भवति प्रत्यक्षवाक्येषु क्रमेण विनियोगः, न त्वर्थ-विप्रकर्षात् क्रमो बलीयान्। कथम्? द्वयोर्हि प्रमाणयो-र्बलीयस्त्वं प्रति तत्प्रधारणम्। न चैवं सति समाख्या प्रमाणम्। लौकिकत्वाच्छब्दस्य पुरुषस्य प्रमाणता भव-तीति। नैष दोषः। नाभाङ्गभावः पुरुषप्रामाण्याद्गम्यते। पौरोडाशिकशब्द एतस्य काण्डस्यैतदर्थं पुरुषप्रमाण-कम्। भवति चास्मिन्नर्थे पुरुषः प्रमाणम्। यथा सान्नाय्य-क्रमे आम्नातं पुरुषप्रमाणकम्। यथा प्रकरणसैकवाक्यत्वं वेदशब्दश्चायमिति। नह्येतेऽतीन्द्रियविषया अर्थाः। उप-पद्यते एष्वभियुक्तानां प्रामाण्यम्। ये तु अतीन्द्रियविषयाः तेष्वभियुक्ता न प्रमाणम्। तस्मात् समाख्या कारणम्। कारणत्वे च सति बलीयस्त्वं परीक्ष्यमिति।

उच्यते। अर्थविप्रकर्षस्तर्हि वक्तव्यः समाख्यायाः। अयमर्थविप्रकर्षः। उपदिश्यते हि क्रमे समाम्नानात् सान्नाय्यसम्बन्धः, नोपदिश्यते समाख्यायाम्। शब्दमुच्चार्य-माणमुपलभ्य अर्थापत्त्या नूनं अस्तीति कल्प्यते। तस्मात् पूर्ववदेवार्थविप्रकर्षात् क्रमेण समाख्या बाध्यते इति।

वा— क्रमयोर्विरोधे काम्ये एव याज्याकाण्डे पौर्वा-पर्यस्यागतिक्रमेण तथैव ऐन्द्राग्नयोः युगलयोः अनि-यमेन इष्टिद्वयेऽपि अनियमेन प्राप्नुवतोः यथासंख्य-क्रमेण अत्यन्तदेशसामान्येन प्रत्यासन्नत्वात् विनियोगो भवति। ( पृ. ८४० )।

'क्रमसमाख्ययोर्विरोधे किमुदाहरणम्' इति। अत्रापि अज्ञानसंशयवृत्तप्रमानन्तरं यौगिकत्वात् समा-ख्यायाः श्रुतिवत् शाब्दं सम्बन्धहेतुत्वमिति बलीयस्त्वं मन्यमानस्य विपर्ययमतेः प्रश्नः। पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। तत्र सान्नाय्य-पात्रशुन्धनक्रमे शुन्धध्वमिति मन्त्रः पठितः। स च प्रकरणाल्लिङ्गाच्च दार्शपौर्णमासिकपात्रशुन्धनार्थः इति सामान्येनावधारिते तद्विशेषे जिज्ञासया संदिह्यते किं समाख्यया पुरोडाशपात्रार्थो भवति अथ क्रमेण सान्नाय्यपात्रार्थ इति। यतरद्बलीयः, तेन विनि-

किञ्चिदत्र सामान्यमनुमातव्यम्, देशसामान्यस्य प्रत्यक्षत्वात्। इह तु तदप्रत्यक्षत्वात् आनुमानिकत्वमिति विप्रकर्षः। समाख्या हि यावत् किञ्चित् सामान्यमस्तीति कल्पयति, तावत् क्रमेण नूनमनयो- का निरपेक्षाऽस्ति, येनेत्थं समानदेशौ पठितौ इति प्रकरणं कल्प्यते। यावच्च किञ्चित् सामान्यमपेक्षा कल्पयति, तावदितरैकवाक्यता क्लृप्ता। तथा यावदिहैकवाक्यता भवति, तावदितरत्र उपकारसामर्थ्यसिद्धिः। यावच्च इहोपकारसामर्थ्यकल्पना, तावदितरेण श्रुतिरुत्पादिता। ततश्च यावदिह श्रुतिमनुमातुमुपक्रमते, तावदितरस्य विनियोगे सिद्धे निराकाङ्क्षीभूते प्रकरणादौ, सर्वमेतत् प्रचितमपि अपरिपक्वविच्छेदादामफलमिव छिन्नं निर्बीजं भवति। तस्मादर्थविप्रकर्षात्तु परं परं बाध्यत इति सिद्धम्। आह च। 'निःश्रेण्यारोहणप्राप्यं प्रतिमात्रोपपादि च। एकमेव फलं प्राप्तुमारोहतो यदा॥ एकसोपानपर्वस्थो भूमिष्ठश्चापरस्तयोः। उभयोश्च जवस्तुल्यः प्रतिबन्धश्च नान्तरा॥ विरोधिनोऽल्पदेशो हि तत् फलं प्राप्नुयात्तयोः। प्रथमेन गृहीतेऽस्मिन् पश्चिमोऽपतरेन्मुधा॥ तेन यद्यपि सामर्थ्यं प्रत्येकं सिद्धमन्यदा। तथाऽपि युगपद्भावे जघन्यस्य निराक्रिया॥ अन्यथैव हि शून्येषु दुर्बलैरपि चर्यते। अन्यथा बलवद्भिस्तैः सर्वशक्तिक्षये सति॥' तत्राप्येतदाख्यानं युक्तम्, यत् क्वचिदुत्तरेण प्रामाण्यमिष्टम्। तस्माद्बलवद्विरोधेऽपि तेन भवितव्यमिति। यत्तु प्रमाणाभासो बाध्यते न प्रमाणमिति, तत्र ब्रूमः, अयमपि प्रमाणाभास एव। कथम्? 'नैवैतेषां प्रमाणत्वमासीदत्र कदाचन। अन्यत्र दृष्टमेतत्तु समारोपेण कल्पितम्॥' नहि यत्र विषये बाध्यतेऽस्य प्रमाणत्वम्। किं तर्हि? प्रदेशान्तरे केवलमनुपलक्षितसामान्यदोषरूपेण अत्रापि प्रतिभाति। तत्तु बलीयसा अपहृतविषयत्वात् सीदतीति पश्चाद्भ्रान्तित्वेन प्रत्यवसीयते। अथवा यत्तनास्य व्यापार आसीत्तमिहापि प्रक्रमते एव। स तु जवनतयाऽन्येन निष्पन्नेऽपहृते मूलच्छेदात्तदा तं न गच्छति, तत्र किं क्रियताम्। तेन मृगतृष्णादिवद्देशमप्राप्य प्रमाणमेव बाध्यते। अनुत्पन्नमेव चेह तुल्यभावात् नोपहानं बाध्यते आन्तरालिकज्ञानमिथ्यात्वकल्पनया, इति नोत्पत्तिसामान्येन तुल्यत्वम्। अतश्च ज्ञानसंकरोच्छेदनादिरूपो बाधो नैव आशङ्कितव्यः। योऽपि च उत्पन्नबाधः, तमपि फलविशेषात्मना उपपादयिष्यामः।

एवं तावत् द्वयोर्द्वयोर्विरोधे वर्णितम्। अर्थसिद्धत्वात्तु मध्यक्रमेण इतरैः सह न प्रदर्शितम्। (पृ. ८३४–८३५)।

(अनेकस्य शेषस्य शेष्येकत्वे) क्रमसमाख्ययोर्विरोधे विमुदाहरणम्। शाम्भवाम्बावदण्डाधीतयोर्मन्त्रयुगलयोः उभयोरपि विकल्पेन कर्मद्वयेऽपि प्रयोगः समाख्यानुरोधेन प्राप्नोति। क्रमबलीयस्त्वात्तु प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमेवेति व्यवस्था। लिङ्गं तु पक्षद्वयेऽपि तुल्यार्थमिति क्रमसमाख्ययोरेव विरोधः। (एवं शेषैकत्वे शेष्येकत्वे च श्रुत्यादिसमवाया अन्विताः)। (पृ ८४०)।

समाख्ययोस्तु विरोधे सामान्यविशेषसमाख्ययोः सुतरां एव बाधो भविष्यति 'तल्लोपदेशसमाख्यानेन निर्देशः' इति (३।७।१०।४३, अधिकरणं तु मीको. पृ. १२५१ 'ऋत्विजां अनियतपदार्थे०' इति निर्दौ द्रष्टव्यम्)। (पृ. ८४१)।

शा— (क्रमसमाख्ययोर्विरोधे) 'विशेषाग्रहणात् तुल्यबलत्वमुभयोर्भवेत्। संबन्धवाचिनीत्वेन समाख्या वा बलीयसी॥ नैतदेवं समाख्या हि न संबन्धाभिधायिनी। यद्यपि स्यादभिधात्री स्यात्, प्रमाणं न तु तत्र सा॥' नहि यौगिकैः शब्दैः संबन्धोऽभिधीयते।

वि— 'शुन्धध्वमिति मन्त्रोऽत्र पौरोडाशिकशोधने। सान्नाय्यपात्रशुद्धौ वा, प्रथमोऽस्तु समाख्यया॥, पौरोडाशिकमित्यत्र प्रकृत्या तद्धितेन वा। तन्निष्पत्तिर्न कस्य स्यात् सान्नाय्यान्वयः क्रमात्॥' ११.

भाट्ट— एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्येष्टिकाण्डस्थानुवाक्ये अनियमेन प्रसक्ते यथाक्रमं पाठात् आद्यस्य आद्याङ्गत्वम्। क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे समाम्नातस्य 'शुन्धध्वम्' इति मन्त्रस्य संनिधानात् सान्नाय्याङ्गत्वम्। न च महाधि-

पूर्वेण । ये त्वेतद्व्यतिरिक्तास्तेषु कथमिति मन्यमानो वदति ' अथ यत्तत्र तत्रोच्यते इदमनेन बाध्यते ' प्रत्यक्षेणानुमानं मृगतृष्णादिमतयाश्च, यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासः, श्रुत्या स्मृतिः, आम्नाताविगीतस्मृत्या अनाम्नातविगीतस्मृतिः, अदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया शिष्टादिप्रभवाऽर्थवादप्रभवा च, स्मृत्याऽप्याचारः, सोऽप्यभियुक्ततराचारेण, सन्दिग्धमसन्दिग्धेन, दुर्बलाश्रयं बलवदाश्रयेण, उपसंहारस्थमुपक्रमस्थेन, अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, आपदुपस्थितकल्पं समर्थाधिकारत्वेन, अनेकार्थविधानमेकार्थविधानेन, अनेकशब्दार्थत्वमेकशब्दार्थत्वेन, बहुबाधोऽल्पबाधेन, भेदान्तरगोचरं भेदान्तरविहितत्वेन, परशाखाविहितं स्वशाखाविहितेन, नित्यं नैमित्तिकेन, द्विप्रकारमप्येतरत्क्रत्वर्थं पुरुषार्थेन, अनारभ्याधीतं प्रकरणाधीतेन, पौर्वापर्येण विरोधे पूर्वं परेण प्राकृतं वैकृतेन, प्रयोगवचनाश्रितं चोदकाश्रयेण, निष्प्रयोजनं सप्रयोजनेन, ब्राह्मणक्रमो मन्त्रक्रमेण, देवताश्रयं द्रव्याश्रयेण, पश्चादाम्नातं पूर्वाम्नातेन, अल्पं भूयसा, गौणं मुख्येन, सामान्यविहितं विशेषविहितेन, सावकाशं निरवकाशेन, अङ्गं प्रधानेन, अङ्गधर्मः प्रधानधर्मेण, तत् सर्वमेव किं प्राप्तं बाध्यते, अथ श्रुत्यादिवदेव अप्राप्तमिति । तद्यदि तावत् श्रुत्यादिवत् सामान्यविशेषातिदेशोपदेशिकादिष्वपि अप्राप्तबाधः, ततोऽवश्यं लिङ्गादिष्वपि श्रुतेः विनियोजकस्य शास्त्रस्याभावोऽभ्युपगन्तव्यः । तथा सति तस्यैकत्वात् विशेषविषयत्वादितरस्याप्यभाव इति सार्वत्रिकबाधप्रसङ्गः । अथाविशेषापेक्षया सद्भावोऽभ्युपगम्येत तत इतरत्रापि सद्भावः स्यादिति तुल्यबलत्वापत्तिः । विशेषशास्त्रानुपमर्देन चाऽऽत्मलाभाभावात् तदभ्युपगमे विपरीतबाधप्रसङ्गः । न ह्येकस्यैव शास्त्रस्य किञ्चित्प्रति सद्भावः किञ्चित्प्रत्यसत्त्वं इति युज्यते । तेन ' दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय ', ' प्रकृतिवत् कुर्यादन्तरमथ बर्हिः ' इत्यादौ प्रतिब्राह्मणं प्रसङ्गः च शास्त्राभावादेकं शास्त्रम् । तद्यदि शरवत्कालोचनेन कुशकौण्डिन्ययोर्नास्तीत्यवधार्यते ततः प्रशाखादिमात्रादिष्वप्यप्रवृत्तिः । अथ तेष्वस्ति ततः कुशकौण्डिन्ययोरपि भवितव्यम् । अथ तौ प्रति नास्ति इतरत् प्रत्यस्तीत्येतदप्येकवस्तुनि विप्रतिषेधादप्रमाणकम् । न चात्र प्रतिवस्तुभेदो विद्यते । येन संबन्धग्रहणात्तद्वदविरोधः स्यात् । न च सकृद्गृह्यमाणत्वाच्छास्त्रभेदोऽवकल्प्यते, येनान्यस्यैव सत्त्वमन्यस्य चासत्त्वमित्यभिधीयेत । व्यक्तिपक्षे च कदाचिदेतद्भवेत् । आकृतिपक्षे तु यागवन्व्यापारातिदेशपक्षे च विषयैकत्वाद्युगपदेकमेव शास्त्रं प्रवर्तते । एतेनैवोत्कल्पनबाधनं प्रत्युक्तम्, ब्राह्मणप्रकृतिवच्छब्दयोः तुल्यत्वेन किञ्चिद्वर्जनासंभवात् । तथा च ' वर्जनं तु वचनप्राप्ते ' ( ३।६।११ ) इत्युक्त्वा ' न चोदनार्थकारत्वात् ' ( ३।६।१८ ) । इत्युत्तरं वक्ष्यति । पौरुषेयेऽपि तावद्वाक्ये दध्यार्थवत्, विना शब्दव्यापारेणैव तद्वर्जं मया प्रयुक्तमित्येवमीश्वराज्ञानुरूपेण भवेत्, न त्वेतद्वेदेऽवकल्पते । न चेह सामान्यशास्त्रात्परतो विशेषशास्त्राणि कल्प्यन्ते, येन सामान्यशास्त्रस्य तत्प्रवृत्तिलब्धमाश्रित्य विशेषशास्त्रापेक्षया सदसद्भावविरोधः परिह्रियेत । तस्मादवश्यम्भाविन्यैकरूप्ये नाभिमतबाधोऽवकल्पते । अथ कथञ्चित् प्राप्तबाधमेव मिथ्यात्वकल्पनया आश्रित्यैवमादिष्वविरोध इत्युच्यते, तत एवं श्रुत्यादीनामपि प्राप्तबाधोऽङ्गीकार्यः । तत्र चोक्तम् ' अतो न बाधमार्गैकरूप्यं घटते ' इति । तदुच्यते । ' न बाधस्यैकरूपत्वमेषितव्यं नियोगतः । न किञ्चिद्विरुणद्धीह नानारूपं प्रमाणवत् ॥ ' यथैवैते पुरस्ताद्बाधगोचरा भेदा वर्णिता नैतेष्वैकरूप्यमङ्गीकृतं तथाऽत्र न बाधकनानात्वेऽपि गम्यमाने कश्चिद्विरोधः । तत्र श्रुत्यादिषु तावद्यथोक्त एव प्राप्तबाधः । न च तत्र किञ्चिद्विरुध्यते । सद्विषयप्राप्त्यन्तराभ्युपगमात् । येऽप्येतच्छास्त्रानुसारिणोऽर्थनिरूपणादेव स्मृत्यादिबाधा भवन्ति तेऽपि हेतुसामर्थ्यकथनात् श्रुत्यादिबाधेनैव व्याख्याताः । ये तु प्रमाणतदाभासनित्यनैमित्तिकक्रत्वर्थपुरुषार्थपौर्वापर्यप्राकृतवैकृतसामान्यविशेषनिष्प्रयोजनसप्रयोजनाल्पभूयस्त्वसावकाशानवकाशाङ्गप्रधानतद्धर्मबाधास्तेष्विदमुक्तं प्राप्तं बाध्यते इति । ' कथमिति ' श्रुत्यादिनैरपेक्ष्यविवक्षितस्य प्रश्नः । उत्तरमाह ' सामान्यस्य कारणस्य विद्यमानत्वात् ' इति । दर्शितमेतद्ब्राह्मणप्रकृतिवच्छब्दयोः । यच्च प्राप्तस्य ज्ञान-

सानुत्पादोच्छेदसंस्कारविच्छेदानामशक्यत्वात्रास्ति बाधम् इति । तथाऽऽह ' नैव निवर्तते । किं तर्हि ? मिथ्याज्ञानमेतदिति प्रत्ययान्तरं भवति ' इति । भ्रान्तर ज्ञानन्यमपि दृष्ट्वा मृगतृष्णादिनदेव सामान्यापट्तदुदेमेंमेव भ्रान्तिः पूर्वमेतद्विषयपरिकल्पनया जातेत्यवबध्यति । तस्मात् प्रयाजादिमाठवादिशासिनेत्यामुपजातोऽपि कुशरीर्ज्जिन्यबुद्धिर्भ्रान्तिरिति निश्चित्य फल विमुक्तान्यतुवक्तमर्थं शास्त्रं वा बाधितुं मन्यते । किं तु खलु भ्रमिथ्याज्ञानस्य रूपमिति— यथुत्तरा अपि प्रत्यया, प्रत्ययान्तरैरेव निराक्रियन्ते ततोऽन्यमपि क आश्वास इति मन्यते । तत् कथयति । यत्नान्वेषणेऽपि कृते बाधकप्रत्ययान्तरं नोत्पद्यत इति । यत्तु कारणदोषज्ञानं द्वितीयमुपलक्षणं तदोक्तविषयत्वात्र वेदे सम्भवतीति नोपन्यस्तम् । प्रासङ्गिकमुक्त्वा, इदानीमधिकरणमुपसंहृत्य अधिकरणान्तरमारभ्यते ।

शा— ' अथ यत् तत्तत्र ' इत्यादिमाष्यस्य श्रुत्यादिविषयत्वं ( ' बाध्यत्वोपक्रमत्वात् प्रस्तावस्य युज्यते । ) स्थिते चाप्रासनाधत्वे मात्रबाधोऽपि नोत्तरम् ॥ ' इत्यनेन वार्तिकेन सूचितम् । के चन (प्रमा कर्षणाः ) अस्य दूषणस्य सामान्यत' प्राप्ति मन्वाना. विशेषमदयन्तः स्मृतिप्रमोषनिमित्तं प्रातिशान व्यपदिशन्ति विशेषागमात् सैषा निवर्तते इत्यनेन न कश्चिदपि परिहारलेशः । नहि विप्रकृष्टप्रमाणं सन्निकृष्टप्रमाणात् प्राक् प्राप्त व्यवहारमपि निवर्तयति । यतः सन्निवर्तकत्वं सन्निकृष्टस्य स्यात् । अतो नेदं उपदेशनाथविदा अभिधानम्, अपि तु अतद्विदा इत्युपरम्यते । ( सोम - अत्र ' सामान्यत' प्राप्ति ' इत्यारभ्य ' निवर्तते ' इत्यन्त. गुरुमत्य अनुविमलाया तथा दर्शनात् । तत्र च गुरुग्रन्थे अपेक्षित पूरयितुं ग्रन्थकारेण ( शा. ) ' के चन ' इत्युक्तम् । तस्य च ' व्यपदिशन्ति ' इत्यनेन अन्वयः । ' अस्य दूषणस्य ' इत्येतत् ' न कश्चित् परिहारलेशोऽभिहितः ' इत्यनेन संबध्यते । ' इत्यनेन ' इत्यादिः प्रामाकरग्रन्थदूषणार्थ. । ) ' श्रुत्यादीनामतः षण्णामेवार्थोपनिपातिनाम् । पूर्वपूर्वं यतीयः स्यात् दुर्बलं चोत्तरोत्तरम् ॥ '

वि— ' बाधो न युक्तो युक्तो वा, प्राप्त्यप्राप्त्योर्न युज्यते ।, अप्राप्तेन प्रसक्तं यद् धिया तस्यास्तु बाध्यता ॥ प्रमाणैः प्रसक्तस्य बाधो दाक्षिकेऽस्त तु । विभ्रमेण प्रसक्तस्य तस्मादप्राप्तबाधनम् ॥ ' ३।३।१२.

भाट्ट— ॥ चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाध । तत्त्व च अङ्गतावोधकलिङ्गादिकल्प्यप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रमाणेन हि अङ्गत्वेऽवधारिते निराकाङ्क्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाध' । एव गृहमेधीये ' आज्यभागौ यजति ' इत्यादावपि । अन्यत्र तु सामान्यविशेषनित्यनैमित्तिकभावादौ प्रसक्तबाधः । तत्त्वं च वस्तुतः बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्र प्रतिबध्यते, न ॥ सामान्यशास्त्रमपि । तस्य वस्तुतस्तेनानवसनीयत्वात्, होमान्तरेष्वपि आहवनीयामावापत्तेः मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च । अत एव येन सामान्यशास्त्रमेव पूर्वमालोचितम्, तस्य विशेषादर्शनजनितभ्रमः एव विशेषविषयतापि पश्चात् विशेषशास्त्रेण बाध्यते । एवं यत्रापि ' न तौ पशौ करोति ' इत्यादौ शास्त्रप्राप्तस्य निषेधः, तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्रसक्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम्, तथापि तत्र निरवकाशशास्त्रादभावपक्षे विशेषविषयत्वप्रतिबन्धकत्वलक्षणबाधानुपपत्तेः । यथा च तत्र रागप्राप्तनिषेधवत् भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पः, तथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते च अत्रापि दशमे । अतः सिद्ध बाधस्य द्वैविध्यम् ।

मण्डन— ' बाधः प्राप्ते क्वचिद् भवेत् । ' ११.

शंकर— ' प्राप्तबाधस्तथेतरः । ' १२.

● चलाचलाधिकरणे प्रत्यक्षलिङ्गविरोधे स्मृतिकल्पितश्रुते याथार्थ्यनिश्चयाभावेन दुर्बलत्वं वार्तिककृतैव वक्ष्यते । मी. १।३।४।९, ● बलाबलाधिकरणे लिङ्गबलीयस्त्वं वक्ष्यते । ३।२।१।२४ पृ. २७०, ● यत्तु बलाबलाधिकरणे शाखान्तरीयस्य दुर्बलत्वाभिधानं तत् भूयस्त्वाभ्येऽपि यत्र परोक्षमात्रेण पदार्थ-

श्रमः तत्र मूलवचनपर्यन्तं बाध्यते इत्येतत्परम् । २।४।३।२१.

• टीकायामपि ( भामत्यां ) बलाबलाधिकरणानुक्रमणे ऐन्द्रीमन्त्रादीनां प्रथमप्रवृत्तश्रुत्यादिभिः विनियोगद्धीकरणेन अप्रामाण्य एव वर्णितः । परिमल. १।३।१४।२५ पृ. ८०२.

• श्रुतिर्हि वाक्याद् बलीयसी बलाबलाधिकरणोक्तन्यायात् । वैद्यनाथः.

• प्रकरणोत्तरप्रमाणानां बलाबलाधिकरणवद्व्यवस्थापनन्यायेन अन्यपरत्वात् अप्रमाणत्वानुपपत्तिः । कौ. १।२।४।११.

• बलाबलाधिकरणवार्तिके संदर्भस्य भेदस्वं उक्तम् । बाल. पृ. १०.

• लिङ्गश्रुतिविरोधस्य बलाबलाधिकरणसिद्धत्वेन ऐन्द्र्यधिकरणविषयत्वाभावः । कौ. ३।२।२।३.

• बलाबलचिन्तायाः विशेषविचारणम् । सु. पृ. १२०६.

• बलाबलपरीक्षा चोदनानामधेययोः ' न वा शब्दाभिधानात्० ' ( ७।४।२।१५ ) इत्यत्र सिद्धा । भा. ११।१।७।२१.

• बलाबलविचारः । ' भिन्नकक्षागते ये च प्रमाणे तत्र बाधनः । तयोः शीघ्रेण निर्णीति मन्थरं न प्रवर्तते ॥ यदि दूरमपि प्राप्तमेकमन्यगतं पदम् । इतरेण गते नावाप्येकान्तेनैव नीयते ॥ मन्थ शीघ्रतर नास्ति तस्यार्थस्यापहारकम् । चिरेणापि प्रवृत्तस्य तुल्यं न निवार्यते ॥ नहि येन प्रमाणत्वं लब्धपूर्वं कदा चन । तेन तत्तर्हदा लब्धमित्याशापगतीश्वर. ॥ ' वा. १।३।२।३ पृ. १७३.

• बलभित् । ' यत्राद्धो कश्चिद्भवति रथन्तरसामा ऽन्योपरकसामा ' ( तत्प्रकारीयबृहत्काद्विशालयोः ) । सु. १।४।६।७. • ' बलभिदा यजेत ' इति बलभिच्छब्दः कर्मनामधेयम् । भा. १।४।११।१–२.

• बलभिच्छब्दस्य यागनामतया प्रामाण्यम् ' बलभिदा यजेत ' इत्यत्र । वि. १।४।१.

• बलवत् प्रयोगकालप्रत्यक्षमात् देवतासामान्यं न्यूनचित्तमयाच्यतम् । संकर्ष. २।२।५. • ' नापेक्षा यस्य यत्रास्ति स तस्माद् बलवान् भवेत् । यः पराधीनवृत्तिः स तद्बाधं कथमाचरेत् ॥ ' श्रुत्यादीनां हि पूर्वं पूर्वं उत्तरोत्तरनिरपेक्षं प्रवर्तमानं बलवद्भवति, परपरं तु पूर्वाधीनप्रामाण्यं न शक्नोति तस्यैव बाधं कर्तुम् । नहि श्रुतिमननुमाय लिङ्गादेः प्रामाण्यमभ्युपगम्यते । वा. ३।३।७।१४ पृ. ८३०. • बलवता प्रमाणेन प्रधानकर्मणां बाधित्वा अङ्गगुणत्वागमे संदर्शनम. । सर्वेषां च अवान्तरप्रकरणित्वेनाभिमतानां श्रुत्यादिभिः प्राक् तदनुमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावात् न क्वचित् संदंशाभावः शङ्कनीयः । सु. पृ. १०७०. • ' बलवति हेतौ प्रयुक्ते दुर्बलोपन्यासः क्लिष्टो भवति ' इति न्यायः । ननु ' प्रयोगचोदनाभावात् ' ( १।३।१०।३० ) इत्यनेनैव शब्दार्थैकत्वसिद्धेः ' अविभागात् ' इत्यनर्थकम्, दैवन्तराभिधानाभेदे वा शब्दैक्यमात्रविषयत्वेन अव्यापकतया दौर्बल्यात् ' बलवति भवति ' इति न्यायेन पूर्वमनुपन्यस्येन इत्याशङ्क्य । सु. पृ. ३३५.

• बलवदाश्रयेण दुर्बलस्य बाध्यते । अप्रसक्तबाधोऽयम् । वा. ३।३।७।१४ पृ. ८६०, बाल. पृ. १४०. • बलवदाश्रयात् दुर्बलस्यापि लिङ्गस्य प्रबलायाः श्रुतेरपि अन्यथानयनम् ' आकाशवल्लिङ्गात् ' इत्यत्र ' शिखालोपे यथोदितम् ' इति न्यायेन । पद्मक्रमः. ६२।१–२.

• बलवदाश्रितस्य दुर्बलस्य प्राबल्यम् । ' दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा । तदापि विपरीतत्वं शिखालोपे यथोदितम् ( १।३।३ ) ॥ अन्यत्वबलवन्तोऽपि पौरजानपदा जना. । दुर्बलेऽपि गच्छन्ति पुरुषे. पार्थिवाश्रिते ॥ ' यदा पदार्थतद्धर्मविषये प्रमाणे विरुध्येते तत्र यद्यपि प्रमाणतोऽन्यादृशं बलाबलं तथापि प्रमेयानुरोधेन तदाश्रयणात् स्वरूपदुर्बलेनापि बलवद् बाध्यमानं तदानुगुण्यं प्रतिपद्यते । तदुक्तं आचमनादयः पदार्थाः श्रयः तेषां धर्मः । वा. ३।३।७।१४ पृ. ८४१.

• बलीयः देवतावटितत्वाद्दस्यापेक्षया द्रव्यघटित सादृश्यम् । ८।१।१७।३२-३४. • बलीयानपि हेतुः विरुध्यमानमबलीयांसं बाधितुमर्हति नाविरुद्धम् । भा. ३।३।७।१४ पृ. ८४३-८४४.

• बलीयस्त्वं श्रुतिलिङ्गादीनां पूर्वपूर्वस्य । भा. ३।३।७।१४.

• बलीवर्दाभ्यर्चनं तद्वाचनादिकं च ज्येष्ठपौर्ण-मास्यां उदीच्या. कुर्वन्ति । अस्योत्सवस्य ' उद्वृषभ-यज्ञः ' इति नामधेयम् । वि. ११२।८.

• बल्वजाः तृणविशेषः । सोम. २।१।४ पृ. १०८.

• बहिरिन्द्रियाणि प्राप्यकारीणि । ऋजु. पृ २४२.

• बहिष्पवमानं ज्योतिष्टोमे प्रातःसवने स्तोत्रविशेषः। वि. १।३।५ वर्णक ३. • बहिष्पवमान पवमानार्थमन्त्र-करणात् बहिः सदसश्च । भा. १।४।२।२. • बहिष्पव-मानं सदसो बहिः प्रसर्पद्भिः प्रयुज्यते इति ' बहिष्पव-मानम् ' इत्युच्यते । वि. १।४।१, • ' त्रिवृद् बहिष्पव-मानम् ' अत्र त्रिवृच्छन्दस्क ऋचां नवकमित्यर्थः । १।३।५ वर्णक ३ वार्तिकमतम् . • ' त्रिवृद्बहिष्पवमा-नम् ' इति बहिष्पवमानशब्दः नामधेयम्, न गुणविधिः । भा. १।४।२।३ . • बहिष्पवमानस्य अविवृद्धस्तोमः अग्निष्टोमे प्रातःसवने । वि. १०।५।७, • बहिष्पव-माने, अतिरात्रे चोदकप्राप्ते, ' एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम् ' इति कामभेदेन एकविंश-त्रिणव-त्रयस्त्रिंशाः स्तोमा विहिताः । ५।३।४. • बहिष्पवमाने अतिरात्रगते एकविंशादिकाम्यस्तोमेषु संख्यापूरणाय आगमिततृचानां अन्ते निवेशः । ५।३।४ वीको. पृ. २५८ ' अतिरात्रे काम्यस्तोमविवृद्धौ० ' इत्यत्र द्रष्टव्यम् । • बहिष्पवमाने अतिरात्रगते एकविंश-त्रिणव-त्रयस्त्रिंशेषु काम्यस्तोमेषु ऊर्ध्वगानार्थं संख्या-पूरणाय के चित् तृचाः आगमयितव्याः । वि. ५।३।४, • बहिष्पवमाने अतिरात्रगते काम्यस्तोमेषु ऊर्ध्वगानमेव । ऊर्ध्वगानं आवृत्तिं विना ऋचां पाठक्रमेण गानम् । ५।३।४, • बहिष्पवमाने अतिरात्रगते, माध्यंदिने विवृद्धस्तोमः एकविंशः । तत्र सामागमेन स्तोमपूरणम्, न ऋगागमेन । आगमितसाम्नि निवेशश्च नान्त्ये त्रिष्टुप्छन्दस्के तृचे, किन्तु ' उच्चा ते जातमन्धसः ' इति गायत्रे तृचे एव । ५।३।५. • बहिष्पवमाने अप-च्छेदे, द्वादशाहादौ अहर्गणे, सर्वोऽहर्गणो नावर्तनीयः, किन्तु तदेवैकं अहरावर्तनीयं प्रायश्चित्तत्वेन, यस्मिन्नप-च्छेदः सञ्जातः । ६।५।२११५६. • बहिष्पवमाने आदौ उद्गात्रपच्छेदः, ततः प्रतिहर्त्रपच्छेदः एव क्रमेणापच्छेदद्वये उत्तरापच्छेदनिमित्तकं सर्वस्वदानं तस्मि-न्नेव प्रयोगे कर्तव्यम्, पुनः प्रयोगस्तु नास्त्येव । अपच्छेदन्यायः । ६।५।१९. • बहिष्पवमाने उद्गात्र-पच्छेदनिमित्तकं प्रायश्चित्तम् ' यद्युद्गाताऽपच्छिद्येता-दक्षिणो यज्ञः संस्थाप्यः, अथान्यं आहृत्य, तत्र तद् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात् ' इति । वि. ६।५। १७. • बहिष्पवमाने उद्गातृ-प्रतिहर्त्रोः युगपदपच्छेदे-ऽपि अस्त्येव प्रायश्चित्तम् । ६।५।१७. • बहिष्पवमाने उद्गातृ-प्रतिहर्त्रोः युगपदपच्छेदे प्रायश्चित्तद्वयं प्राप्तमेव, तथापि विरुद्धत्वात् समुच्चयासम्भवात् विकल्पेन किञ्चि-देकमनुष्ठेयम् । वि. ६।५।१८, • बहिष्पवमाने ' एक द्वि त्रय साम ' इति सामैकत्वम् । १०।५।७, • बहिष्पव-माने ज्योतिष्टोमीये तृचेषु त्रिषु ऊर्ध्वगानेन त्रिवृत् स्तोमो भवति, नात्र आवृत्तगानम् । ५।३।४, • बहिष्पवमाने ज्योतिष्टोमीये तृचात्मकेषु त्रिषु सूक्तेषु गायत्रं साम गीयते । १।४।२, • बहिष्पवमाने ज्योतिष्टोमीये त्रय-स्तृचाः ' उपास्मै गायता० ' ' दविद्युतत्या रुचा० ' ' पवमानस्य ते० ' इति स्तोत्रिय-अनुरूप-पर्यासनामकाः क्रमेण । तेषु ऊर्ध्वगानं त्रिवृत्स्तोमे । तासामेव ऋचां नवानां आवृत्तगानं तु पञ्चदशसप्तदशादिस्तोमेषु भवति । १।४।२.

§ बहिष्पवमाने [illegible] ऋगागमः सामैकत्वात् । १०।५।७।२६॥

विवृद्धस्तोमकेषु एकविंशत्रिणवादिकेषु बहिष्पव-माने तु न सामागमः, किन्तु ऋगागमः । ' यदुत्तरयोः पवमानयोस्तृचावतृचाय [illegible] करोति अथ कस्माद्

बहिष्पवमाने सकृदेव हिं करोतीति, एकं हि तत्र सामेति ब्रूयात् स्वरमेव गायन् ( स्वरसामैव ) गायति' इति वचनात् सामैकत्वात् सामागमो न सम्भवति। नापि अभ्यासेन संख्यापूरणं 'पराग्बहिष्पवमानेन स्तुवीत' इत्यनभ्यासवचनेन पराक्शब्देन अभ्यासस्य श्रुत्यैव निषिद्धत्वात् तस्मात् ऋगागमः। के.

● भाष्यकारेण त्रिवृद्स्तोमेषु क्रतुषु 'बहिष्पवमाने तु ऋगागमः सामैकत्वात्' इति न्यायेन आगम्यमानाना ऋचा क्रमानियमः आशङ्कितः। तन्त्ररत्न. ५।१।६।११. ● बहिष्पवमाने द्वादशाहगतपाडहिके द्वितीयेऽहनि त्रिवृद्स्तोमके पञ्चदशे आगमिकतृचपण्णां तृचाः अनुरूपपर्यासयोर्मध्ये निवेशनीयाः 'स्तोत्रियानुरूपौ तृचौ भवतः, तृचण्यनास्तृचा भवन्ति, तृच उत्तमः पर्यासः' इति वचनात्। वि. ५।३।४, ● बहिष्पवमाने प्रतिहर्त्रपच्छेदनिमित्तं प्रायश्चित्तं सर्वस्वदक्षिणत्वम्। 'यदि प्रतिहर्ताऽपच्छिद्येत सर्ववेदसं दद्यात्' ।६।५।१८, ● बहिष्पवमाने प्रथमतः प्रतिहर्त्रपच्छेदः पश्चादुद्गात्रपच्छेदः तथा प्रथमप्रयोगः अदक्षिणः समापनीयः। द्वितीयः प्रयोगश्च कर्तव्यः, तत्र च सर्वस्वमेव देयम्, न तु द्वादशशतम्। ६।५।२०, ● बहिष्पवमाने प्रातःसवने ऋत्विजः सदसो बहिः प्रसर्पन्ति। ( 'अत्र सूर्ये उदग्रः सहाः बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति, अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः' इति। तैसं. भा ३।१। १०)। अध्वर्युः प्रस्तोता उद्गाता प्रतिहर्ता ब्रह्मा यजमानः प्रशास्ता चेति एते क्रमेण पुरोगन्तुः कच्छं पाश्चात्यो गृहीत्वा पिपीलिकावद्गच्छन्ति। वि. ६।५।१७. "बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिर्गच्छतां अन्वारम्भः श्रुतः 'अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता' इति"। सोम. ६।५। १७, अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः ( उद्गातारं यजमानः ), यजमानं ब्रह्मा इत्येकेषाम्। सत्याश्रौ. ८।४।४४. ● बहिष्पवमाने रथंतरपृष्ठं विश्वजिति सर्वपृष्ठे। भा. ७।३।३।८. ● बहिष्पवमाने त्रिवृद्स्तोमकेषु क्रतुषु साम अभ्यसितव्यम्। ऋगागमेन संख्या पूरयितव्या। १०।५।७।२६. 'त्रिवृद्स्तोमके क्रतौ' इत्यत्र अधिकरणं द्रष्टव्यम्।

● माध्यंदिनार्भवपवमानयोः बहिष्पवमानवत् ऋगागमनं न भवति, किन्तु सामागमेन स्तोमपूरणं इति दशमे ( १०।५।६।१९-२५ ) वक्ष्यते। वि. ५।३।५.

● बहु। ननु आपेक्षिकमेतत् बहु अधिकं इति। यदेव हि बहु तदेव अन्यापेक्षया अबहु भवति। सत्यमेवम्। यत्तु यदपेक्ष्य बहु न तत् तदेव अपेक्ष्य अबहु। भा. ११।१।८।३८. ● 'बहुः समुद्रः, बहुरोदनः' इत्यत्र वैपुल्यं महत्त्वं वा शब्दस्यार्थः। भा. ३।४।४। १३ पृ. १२५.

बहुभ्यः श्रोतव्यं बहुधेति न्यायः। अयं न्यायः सत्सु बहुषु गुरुष्वेव कश्चिदेको भजयितव्यो लभ्यते, ततः संसारप्रभापनोदकं सम्यग्ज्ञानं सलक्षणं सिध्यतीत्यभिप्रायकोऽस्ति। न तु बहुभ्यो ज्ञानं संपादनीयमिति, 'श्रोत्रियं ब्रह्मनिष्ठम्' इत्येकवचनश्रवणात्, 'व्यासीदेकमेव सद्गुरुं ब्रह्मविचक्षणम्' इत्येकवचनात् चेति। साहस्री. ५११.

बहूनामनुग्रहो न्याय्य इति न्यायः। यथाहुः- 'बहूनामप्यसाराणां मेलनं कार्यसाधकम्। तृणैः संपाद्यते रज्जुस्तया नागोऽपि बध्यते॥' इति। साहस्री. २६५.

बहूनामनुरोधो न्याय्य इति न्यायः। साहस्री. ५६७.

बहूनामनुसरणं न्याय्यमिति न्यायः। साहस्री. २६६.

बहूनां तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात्। ६।३।८।२२॥

बहूनां स्वामिनां सत्रूपे कर्मणि प्रवृत्ते, अन्यतमे स्वामिनि अपचरति सति अन्यमागमयेत् अपचरतः स्वामिनः प्रतिनिधिम्। अवैगुण्यात्, ल्यब्लोपे पञ्चमी,

त्रैगुण्य संपादयितुम् । प्रतिनिधिमात्रे वैगुण्य स्यात् । 'तया स्वामिनः' इत्यस्य अपवादाधिकरणमिदम् । अपवादसूचनार्थमेव तुशब्दः । के.

● बहूनां पुरतो नृत्यवर्तकः सर्वेषां मुख युगपन्निवर्तयति । नि. ११।१।१०. ● 'बहूनां स्यात् सधर्मत्वम्' इति न्यायः ( 'भूयसां स्यात् सधर्मत्वम्' १२।२।७।२२ इति न्याय. इत्यर्थः ) । न च 'बहूनां स्यात् सधर्मत्वम्' इति न्यायेन अनेकेषु देवतानाम एव अङ्गानां तन्त्रितत्वात्पर्यग्राहकः इति वाच्यम् । भाट्ट.११।२।८. ● बहुषु च सामान्य विशेषाश्च भवन्ति । भा.९।२।६।२५.

● बहुनुग्रहन्याय. ( भूयोऽनुग्रहन्यायः । १२।२।७।११ ) । तस्मात् दहराकाशो ब्रह्म इति बहनुग्रहन्यायेन निर्णयः, नोपसंहाराभावत्वेन । पराक्रम. .९७।१, ● तस्मात् सिद्धमेतत् दहराधिकरणे नोपसंहाराभावस्योपजीव्यमस्ति न वा सूत्रकारमतिप्रसक्तम्, उत्तरेभ्यः इति बहुवचनेन बहुनुग्रहन्यायस्यैव सूचनात् । ६।२।१.

● बहुप्रतिग्रहस्थले चतुष्पादेषु काण्डानुसमये नानुष्ठानम् 'काण्डानुसमयन्यायः' । ५।२।२.

● बहुकर्तृकत्वं सत्रस्य । १०।६।१३।४५–५०.

● बहुकृत्वोऽपि चोद्यमानो नान्यार्थो भवति । यत्प्रथमे उच्चारणे गम्यते शततमेऽपि तदेव गम्यते । भा. २।१।२।२. ● प्राकृसिद्धचोदनाप्रामाण्यमनेन 'बहुकृत्वोऽपि पश्य वेदितव्यम्' इत्येव पुनः कथितमनेन सूत्रेण । द्या. ५।१।१.

● बहुक्षीरादिवाक्येषु ( 'इय गौः रेवत्या, बहुक्षीरा' इत्यादिषु ) रूपमङ्गेनापि पुरुषार्थपर्यवसायित्वं दृश्यते । मु पृ. २१.

वहुच्छिद्रघटप्रदीपन्यायः । अथ श्रीशङ्कराचार्यैः संक्षेपेण भाष्यतात्पर्यप्रकाशके श्रीमद्दक्षिणामूर्तिस्तोत्रेऽभिहितः । तथाहि "नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं, ज्ञान यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते । जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत्, तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये ॥" इति । साहस्री. २६१.

● बहुत्वं किमित्युच्यते । बहुत्वं वृद्धिः उपचयः आधिक्यम् । कथं कृत्वा ? बृहतिरयं वृद्ध्यर्थः । तस्यौणादिक उकारः प्रत्ययः 'बृंहेर्नलोपश्च' इति । तस्य रूप बहु इति । बहु-वृद्धं-अधिकं इत्यर्थः । भा. ११।१।८।३८, ● बहुत्वं चापेक्षिकम्, किञ्चिदेवेभ्यो ऽधिकं बहु इत्युच्यते । अवस्थापेक्षया अपरिपूर्णमेतत् । ६।७।१२।२४. ● बहुत्वं श्रूयमाणं यत्नमेव कुर्यात्, यथा 'प्राजापत्यान्' इति 'वारुणान्' इति च । टुप्. ५।२।२।१.

● बहुत्ववत् । 'सनाद्युदवसाय पृथग्गमनीयेन यजेरन्' इत्यत्र बहुत्वं यथा अविवक्षितं तथा 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान्' इत्यत्र बहुत्वमविवक्षितम्, निमित्तस्यचापतिपादनेन नैमित्तिकेऽपवाद्या असंगतत्वात् । सोम. ५।१।१.

● बहुदेवत्ये पशौ एकवचनान्तमेवपरिग्रहस्य द्विवचनान्तेन विकल्पः । भा. ९।३।१३।४२–४१.

● बहु–द्वि–एकशब्दाः संख्यावचनाः, तामभिधाय संख्येये वृत्यसंभवात् इत्याकृत्यधिकरणे स्थापितम् । वा. ३।४।४।१३ पृ. ९२४.

● बहुद्विपत्नीके दर्शपूर्णमासप्रयोगे प्रैषमन्त्रे पत्नीशब्दे ऊहो न । ९।३।६।२१.

● बहुपत्नीक. द्विपत्नीकश्चास्ति यजमानः । भा. ९।३।६।२०.

● बहुबाधः अल्पबाधेन बाध्यते, ( अल्पबाधः ) यथा अश्वप्रतिग्रहेष्टौ । प्रतिग्रहीतृविषयत्वे 'वरुणाय' इति चतुर्थ्याः पञ्चम्यर्थत्वम्, 'अनयत्' इत्यस्य प्रीत्यर्थत्वम्, 'स स्वा देवताम्' इत्यत्र शब्दस्य अप्राधान्यनिर्दिष्टद्रव्यपरामर्शित्वम्, वरुणस्य दातृत्वे च अदेवतात्वात् देवताशब्दायोगः इति बहुबाध । दातृविषये तु प्रतिगृह्णातिधात्वर्थस्य स्वार्थत्यागः । बाल. पृ. १४०. ● 'बहुबाधादल्पबाधो वरम्' इति न्यायः । यत्तु 'सप्तदशप्राजापत्यान् पशूनालभेत' इत्यत्र उपसंहारानुसारेण समुदायस्याश्रयणं तत् 'बहुबाधादल्पबाधो वरम्' इति न्यायात् । तत्राश्रयणे प्रत्येक

अग्निप्रिलिङ्गकमन्त्रोपदेशेष्टकास्तुतीनां इष्टकासादनस्थ्वर्तिनस्य सर्वथा बाध. स्यात् । पराक्रमः. ४१।१-२,

● बहुबाधस्य अन्याय्यत्वम् । ६६।२.

● बहुभवनकामस्य पञ्चशारदीयः अहीनः । भा. ११।२।१२।१४.

**बहुयाजी नाम सोमयाजी एव ॥**

बहुयाजिपदेन यागबाहुल्यप्रतीते. बहुर्यष्टैव ग्राह्य । सहस्रदक्षिणयागकर्तर्यपि सहस्रद इति प्रयोगदर्शनाद्बहुदक्षिणपौण्डरीकादियाजी वा ग्राह्य । इति प्राप्ते, ऐष्टिकपाशुककर्माण्यपेक्ष्य सोमस्यैतिस्तैम्यतावाहुल्याद्विसहजा मयनान्ताखिलविकृत्यनुगमस्याद्य सोमयाज्येव बहुयाजी । अत एव 'यो ब्राह्मणो बहुयाजी स्यात् तस्य कुम्भ्यां गृह्णीयात्' इति विधार्ये 'स हि एहीत्यस्त्रीवरीकः' इति विवरणमुपपद्यते । संकर्ष. ४।२।३.

**बहुराजकपुरन्याय** । यथा एकस्मिन्पुरे यदा बहवो राजानस्तदा तेषामैकमत्याभावेन प्रजाना क्लेशस्तथा एकस्मिन् देहे नानेन्द्रियाणां कर्तृत्वे स्वीकृते मिथो विरोधाच्चैकमपि क्षियेत् । तथाहि, यदा चक्षुर्दर्शनाय प्रवर्तमान भवति तदाऽन्यानि इन्द्रियाणि स्वस्वक्रियया निर्वाहोद्यतानि भवन्ति चेत् तदा दर्शनादि नैकमपि जायते, एव विनश्यायामस्य प्रवृत्तिरिति । साहस्री १९.

● बहुलक्षणा अल्पलक्षणया बाध्यते । बाल. पृ. १४३.

**बहुशूकाकृष्टमृगन्याय** । यथा बहूना शूकाणा प्रत्येक भोक्तृत्वे बहूनामैकमत्याभावेन विरुद्धादिक्रियया मृगदेहस्योन्मथनप्रसङ्गस्तथा प्रकृतेऽपि । साहस्री १८.

● बहुवैयर्थ्यं दोष. । वि ३।१।५.

● बहुवचनं एकस्यैव पूजार्थे । भा. १०।४। २५।५३. ● बहुवचन साधारण्येन वर्तते त्रिरादिषु, यथा अक्षशब्द साधारणत्वतो विदेवनादिषु । अथवा यत्र एकत्वद्वित्वे न स्त तत्राय वर्तते । एतस्मिन् पक्षे सामान्यवचनोऽयम् । (पूर्वस्मिंस्तु पक्षे बहुवचनस्य नानार्थत्वापत्ति., अत्र तु द्वित्वाधिक्य सामान्यं तदर्थ. इति न नानार्थत्वम्) । सिद्धान्तेऽपि अयमेव शब्दार्थो न व्यावर्तते । टुप्. ११।१।८।३८. ● यद् बहुषु प्रातिपदिकं वर्तते ततो बहुवचनं भवति । भा. ३।५।८।२३, ● यथा लोके पृथक्त्वेनापि कुर्वाणाना बहुवचनं दृश्यते । 'देवभेद् वर्षेत् बहवः कृषिं कुर्युः, तस्य चेत् एकमेव बहवो ब्राह्मणा यजेरन्' इति । तथा वेदेऽपि प्रयोगदर्शनम् 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति । १०।६।१४।४९ । लोके अन्यत प्रवृत्तस्य अर्थस्य अनुवादभूतः शब्द उच्चार्यमाणः सामान्य क्रियासम्बन्धाभिसमीक्षया उच्चरितः इति गम्यते । तथा भिन्नानि उदवसानानि उपलभ्य क्रियामात्र विधीयते तद्बहुत्व च समानकर्तृत्वादेव प्राप्तमनूद्यते इत्युक्तमेव । १०।६।१४।४८. ● बहुवचनेन त्रय एव कपिञ्जला ग्राह्या नाधिका. । ११।१।८।३८-४६. ● बहुवचनेन त्रयश्चत्वार. पञ्च वा सर्वे एते सङ्ख्याविशेषाः प्राप्यन्ते । सर्वे तस्य वाच्या सर्वत्र प्रयोगात् । (प्राथम्यात्तु नित्यं नियम्येत, कारणाद्व्यतिक्रमः स्यात् ।) । भा ११।१। ८।३८.

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् । ११। १।८।३८॥**

'वसन्ताय कपिञ्जलानालभते' इति श्रूयते । तत्र कपिञ्जलान् इति बहुवचनेन त्रित्वचतुष्ट्वादीना सर्वासां संख्यानां प्राप्ते बहुत्वे सर्वासामन्तर्भावात् कपिञ्जलसंख्यासु विकल्प. स्यात् त्रयो वा चत्वारो वा पञ्च वा आल- भ्यन्ताः इति पूर्व. पक्ष ।

**दृष्ट' प्रयोग इति चेत् । ३९ ॥**

बहुवचनस्य न नित्यमेव वाच्यम्, यत 'चत्वारो ब्राह्मणा' 'पञ्च भूतानि' इति चतुरादिषु बहुवचनस्य प्रयोगो दृष्ट । तस्मात् बहुवचनेन का संख्या विवक्षिता इति विचार कर्तव्य. इति चेत् ।

**तथेह । ४० ॥**

तथा बहुवचनस्य चतुरादिषु प्रयोगवत् कपिञ्जल- शब्दस्य कपोते मयूरे च प्रयोगो दृष्ट' । तस्मात् 'वसन्ताय कपिञ्जलानालभेत' इति वाक्यस्यकपिञ्जल- पदार्थस्य विचार कर्तव्य स्यात् । न तु स कृत. । तत्र संख्याविचारोऽपि मा भूत् ।

**भक्त्येति चेत् ॥ ४१ ॥**

नैवम् । महति कपोते अल्पे मयूरे च कपिञ्जलशब्दः भक्त्या गुणवृत्त्या प्रयुज्यते । तस्मात् कपिञ्जलप्रातिपदिकार्थो न विचार्यः । इति चेत् ।

**तथेतरस्मिन् ॥ ४२ ॥**

यथा महाकपोतादौ कपिञ्जलशब्दो गौण्या प्रयुज्यते तथा बहुवचनमपि चतुरादिषु लक्षणया प्रयुज्येत । बहुत्वसामान्यं तु बहुवचनार्थः । तस्मात् कपिञ्जलेषु संख्याया विकल्पः इति पूर्वः पक्षः ।

**प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥ ४३ ॥**

वाशब्देन पूर्वपक्षनिरासः । बहुत्वान्तर्गतासु संख्यासु प्रथमं त्रित्वं नियम्येत । त्रय एव कपिञ्जला आलब्धव्या नाधिका इति । विशेषात् कारणात्तु त्रित्वस्य अतिक्रमः स्यात् । यथा 'षड् देया द्वादश देयाश्चतुर्विंशतिर्देयाः' इत्यादौ । तस्मात् अत्र बहुवचनस्य त्रित्वे पर्यवसानम् ।

**श्रुत्यर्थाविशेषात् ॥ ४४ ॥**

कपिञ्जलानां त्रित्वे स्वीकृते श्रुत्यर्थस्य न कश्चित् विरोधः । त्रित्वस्यापि बहुवचनश्रुत्यर्थत्वात् । तस्मात् त्रय एव आलब्धव्याः । नेदं सूत्रं किन्तु भाष्यं इति बहवः ।

**तथा चान्यार्थदर्शनम् ॥ ४५ ॥**

'कृष्णा याम्याः, अवलिप्ता रौद्राः, नभोरूपाः पार्जन्याः, तेषामैन्द्राग्नो दशमः' इति अन्यार्थे अश्वमेधे पशुविशेषविधानार्थं दर्शनं बहुवचनस्य उत्सर्गतः त्रित्वमर्थः इति दर्शयति । यदि याम्या यमदेवताकास्त्रयः रुद्रदेवताकास्त्रयः पर्जन्यदेवताकाश्च त्रयः स्युः तदैव नियोगेन ऐन्द्राग्नो दशमः स्यान्नान्यथा । तस्मात् त्रित्व नियमः ।

**प्रकृत्या च पूर्ववत् तदासत्तेः ॥ ४६ ॥**

प्रकृत्या अग्नीषोमीयेण । प्रकृतिगतेन एकत्वेन तदासत्तेः तस्य त्रित्वस्य आसत्तेः सन्निधानात् कपिञ्जलान् इति बहुवचनेन त्रित्वमेव निश्चीयते । पूर्ववत् इत्यनेन सिद्धान्तमुक्तम् । गृहमेधीये श्रूयते 'ओदनानुद्धरति' इति । तत्र मध्यमस्येति निरुपपदं त्रयाणां मध्यमस्य इति ज्ञायते । तस्मात् त्रीनेव कपिञ्जलानालभेत नाधिकान् इति सिद्धान्तः । के.

* बहुवचनस्य असति बाधके त्रित्वे पर्यवसानम् । ११।१।८।२८-४६. मीको. पृ. १३५८ 'कपिञ्जलाधिकरणम्' इत्यत्र द्रष्टव्यम् । * बहुवचनस्य पश्चात् श्रुतत्वेन प्रातिपदिकं प्रति गुणत्वम् । सु. पृ. १०४९.

* बहुवचनान्तस्य पाशमन्त्रस्य विकल्पेन प्रकरणे एव निवेशः । ९।३।५।१९-२०.

* बहुवचनान्तैकवचनान्तपाशमन्त्रयोर्द्विवचनान्तेनोह. द्विपशुकाया विकृतौ । ९।३।४।१०-१४.

* बहुवचनस्थले, अवश्यम्भावित्वे प्रथमभावित्वे लाघवे च समवति अधिकग्रहणे दोषवत्वे च सति त्रित्वमेव ग्राह्यं न चतुष्ट्वादि । वि. ११।१।८.

* **बहुसपत्नीकन्यायः** । यथा बहुसपत्नीकः पुरुषः सर्वासां पत्नीनां युगपत् कामनाकरणेऽशक्तो दुःखमनुभवति, तथा नानेन्द्रियविषयभोगेन तत्तदिन्द्रियपरोऽपि युगपत्कार्यप्राप्तौ दुःखमनुभवतीति । यथा चोक्तम्- 'जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा, शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् । घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥' इति । साहस्री. ४६९

* बहुव्रीहिः मत्वर्थकः इति के चित्, नेत्यन्ये । मणि. पृ. १५०. * बहुव्रीहिः समानाधिकरणानां इति स्मृति. । रत्नाकर'. पृ. ४४६. * चित्राणां गवामयं इतीदृशेऽर्थे बहुव्रीहिः वर्तते । सम्बन्धविशिष्टाभिर्गोभिः देवदत्तादिर्विशिष्टः इति समासार्थो निगद्यते । बहुव्रीहौ अपि न सम्बन्धप्राधान्यम् । स च अन्यपदार्थः संबन्धी योग्यतावशेन जातिद्रव्यगुणक्रियाणामन्यतमः परिगण्यते । वा ३।१।६।१२ पृ. ६७७. * बहुव्रीहेः अन्यपदार्थे शक्तिः इति निरूपणम् । अरुणाधिकरणे (३।१।६।१२) बहुव्रीहेः अन्यपदार्थे शक्तिः इत्युक्तं 'अतश्च दण्डिशब्देन मत्वर्थोच्यते यथा । तथैव यौगिकैः शब्दैः पिङ्गाक्ष्यादिपदैरपि ॥' इत्युपक्रमात् (वा. पृ. ६७७), 'तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वम्' इति चोपसंहारात् (वा. पृ. ६७९) । इन्द्रपीत-निषादस्थपत्यधि-

करणद्वयपर्यालोचनात्तु ( ३।२।११, ६।१।१३ ) लाक्षणिकः अन्यपदार्थः इति भाति । तथाहि, आद्ये इन्द्रपीतशब्दः सोमविशेषणं तत्पुरुषः, तत्र पूर्वपदार्थमात्रलक्षणापत्तेः, न बहुव्रीहिः सवनविशेषणम्, तत्र पदद्वयेऽपि अन्यपदार्थलक्षणाऽऽपत्तेः इति पूर्वपक्षिते बहुव्रीहौ अन्यपदार्थः शक्यः इत्येवोत्तरं वाच्यम् । वस्तु अनुत्तरम् हताहुलसमुदायमाविनः इन्द्रपीतशब्दस्य तदवयवे लक्षणापत्तेः तत्पुरुषे चदतः सिद्धान्तिनः पूर्वपक्षमुक्ता बहुव्रीहौ अन्यपदार्थलक्षणा अभिमतेति गम्यते । निपादस्थपत्यधिकरणे च तत्पुरुषात् कर्मधारयस्यैव बलीयस्त्वेन सिद्धान्तितम् । तत्र बहुव्रीहौ अन्यपदार्थस्य शक्यत्वे निषादश्रुतिलाभात् कर्मधारयं हित्वा निषादः स्थपतिर्यस्य इत्येवं बहुव्रीहिणापत्त्या पूर्वपक्षः प्रवर्तेतेति । तत्र लक्षणपक्षे बहुव्रीह्यादेः अरुणशब्दस्य च द्रव्यलक्षकत्वाविशेषे किं विनिगमकम्, यद् बहुव्रीह्यादेरेव द्रव्याभिधायिता, नारुणपदस्येति । प्रत्युत बहुव्रीहौ लक्षणायाः समस्यमानानेकपदालोचनापेक्षत्वेन विलम्बितत्वात् न तेन द्रव्यविधिः स्यात्, किन्तु गुणशब्देनैव इति क्रयसाधनद्रव्यविवेकस्य पूर्वोत्तरपक्षयोः साम्यात् तदासेरपूर्वपक्षस्य वाक्यीयतल्लिङ्गसिद्धान्तस्य च अयोगात् अरुणाऽधिकरणमनुपपन्नं स्यात् इति वाच्यत्वपक्ष एव संमतः । न च लक्षणा न्याय्या । तत्र हि किं आकृतिन्यायः 'नागृहीतविशेषणा' इत्ययं बीजम्, 'अनन्यलभ्यः शब्दार्थः' इति कर्माधिकरणन्यायो वा । नाद्य, आकृतिन्यायो हि तत्र प्रवर्तते, यः शब्दः कदाचिदपि विशेषणमात्रे दृष्टप्रयोगः । तेन पाचक–नप्तृ–स्नुषा–कुब्जत्वादिशब्दाः न तस्योदाहरणं इत्युक्तम् । अतो बहुव्रीहेरपि विशेषणमात्रे कदाचिदपि अप्रयोगात् न आकृतिन्यायः इति विशिष्टवाचित्वैव । ■ द्वितीयः, तत्रापि हि आक्षेपतः अन्यलभ्यत्वं वा स्यात् लक्षणया वा । नाद्यः, पिङ्गाक्ष्यादौ क्वचिदव्यभिचारेण आक्षेपसम्भवेऽपि चित्रग्वादौ व्यभिचारेण आक्षेपायोगात् । न द्वितीयः, नियमतः शक्तिग्रहापेक्षे शब्दे 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायस्याप्रवृत्तेः । अन्यथा पङ्कजादिपदे पद्मस्य लक्षणया प्रतीतिसंभवात् अनन्यलभ्यत्वाभावाद् वाच्यता स्यात् । अस्ति च चित्रग्वादिबहुव्रीहेः अन्यपदार्थबोधे शक्तिग्रहापेक्षेति । तत्पुरुषे तु न राजसंबन्धिनि राजशब्दस्य शक्तिग्रहापेक्षा । यत्तु इन्द्रपीत–निषादस्थपत्यधिकरणपर्यालोचनात् बहुव्रीहेः षष्ठीतत्पुरुषात् कर्मधारयाच्च इष्टं दौर्बल्यं न सिध्येदित्युक्तम्, तत्र । कर्मधारये तावत् यावन्तः श्रुतपदार्थाः तावतां वाक्यार्थे अन्वयः । बहुव्रीहौ तु एकस्यैव इति दौर्बल्यम् । षष्ठीतत्पुरुषादौ तु एकस्यैव उत्तरपदार्थस्य वाक्यार्थे अन्वयः, बहुव्रीहावपि एकस्यैव इति साम्यं यद्यपि, तथापि तत्पुरुषे एकस्यैव त्यागः, बहुव्रीहौ तु अनेकस्यागः इति दौर्बल्यम् । अत. 'सर्वेन यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।' इति वार्तिकं ( पृ. ६७५ ) बहुव्रीहिविषयमपि न कल्पितमानविषय इति सर्वमनवद्यम् । 'बोनमीयैर्निरस्तान्यपदार्थस्येह वाच्यता । बहुव्रीहौ जैमिनीये मते त्विश्चोपपादिता ॥' इति बहुव्रीहौ अन्यपदार्थवाच्यतानिरूपणम् । वाल. पृ. ९३–९४. ● बहुव्रीहिः अन्यपदार्थे शक्तएव, न तु लक्षणा इति अरुणाधिकरणवार्तिके ( ३।१।६।१२ ) व्यवस्थापितम् । सोम. ३।२।२०. ● बहुव्रीहेः मत्वर्थो वा अभिधेयः द्रव्यं वा इति संशये 'बहुव्रीहिसमासोऽयं मत्वर्थे विधीयते' इति पूर्वः पक्षः । 'बहुव्रीहितो द्रव्यमभिधेयं न तद्गुणः' इति सिद्धान्तः । वा. ३।१।६।१२ पृ. ६७३–६७९. ● बहुव्रीहेर्मत्वर्थविषयत्वात् एकहायन्यादिशब्दैः सम्बन्धोऽभिधीयते । इति पूर्वः पक्षः । पृ. ६७४. ● बहुव्रीहेः सर्वनामार्थवृत्तित्वम् । तु. पृ. ७८०.

● बहुव्रीहौ अवयवार्थविशिष्टान्यपदार्थरूपे द्रव्ये एव शक्तिः इति प्राञ्चः । अन्यपदार्थे पदद्वयस्य लक्षणा इति तु बहवः । भाट्ट. ३।१।६ पृ. १९०. ● बहुव्रीहौ पूर्वपदप्रकृतिस्वरः । वि. ३।२।११.

● बहुव्रीह्यभिधेयस्याक्षणिकत्वविचारः । मीको. पृ. ६०८ 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

● बहुव्रीहिविचारः 'समासवादः' इति हिन्दी मणिग्रन्थे द्रष्टव्यः ।

● बहुव्रीहिसमासार्थः किमभिधेयः लाक्षणिको वेति चिन्तायां लाक्षणिक इति केचित्, अभिधेय इति सिद्धान्तः । वा. पृ. ६७८–७९.

● बहुव्रीहिसमासार्थविचारः । मीको. पृ. ६०८ 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः ।

● बह्वृचाः अध्यापकाः महाव्रतप्रतिपादकं आश्वलायननिर्मितं कल्पसूत्रं अरण्येऽधीयानाः 'पञ्चममारण्यकं' इति वेदत्वेन व्यवहरन्ति । तच्च कर्तृविस्मरणमूलकम् । वि. १।३।१ वर्णकं २. ● बह्वृचैरेव वासिष्ठं धर्मसूत्रं परिगृहीतम् । वा. १।३।७।१०.

● बह्वृचब्राह्मणे ( अध्वर्युब्राह्मणे इति वार्तिकं ) 'यावज्जीवमग्निहोत्रं जुहोति' इति जीवनं निमित्तीकृत्य नित्योऽग्निहोत्रप्रयोगो विधीयते, न तु काम्ये कालरूपधर्मः । २।४।१।१–७.

● बाणोद्धृतीन्यायः । यथा कश्चिदुत्पतितजगरेण वेष्टितकुक्कुर एतत् बाणेरजगर जयानेति लौकिकी गाथा, तथा निषेधवाक्यानि बाधावधित्वेनाऽऽत्मान रक्षयन्ति अनात्मानं बाधन्ते इति । साहस्री. १०४.

● बाणवन्तः परिधयः यत्र तत्र बाणवन्त एव उत्पादयितव्याः सिद्धान्ते । पालाशास्तु पूर्वपक्षे । भा. २।१।४।१२.

● बादरिः आचार्यः. सर्वाधिकार (चातुर्वर्ण्याधिकार) मात्र मन्यते स्म । भा. ६।१।७।२७.

● बादर्यधिकरणम् ॥

द्रव्यगुणसंस्कारेषु बादरिः । ३।१।२।३॥

भाष्यम्— बादरिराचार्योऽत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्द इति मेने, न यागफलपुरुषेषु । द्रव्यं क्रियार्थम् । यदि प्रयोजनवती क्रिया ध्रुवं सा द्रव्येण निर्वर्तयितव्या । तस्या निर्वृत्तिर्द्रव्यादृते न भवतीति तन्निर्वृत्तये द्रव्यमेषितव्यं भवति । तस्मात् क्रियार्थं द्रव्यम् । गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम् । लक्षितेन च तेन प्रयोजनम् । विशिष्टस्य क्रियासाधनत्वात् । तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोतीति क्रियार्थ एव । संस्कारो नाम स भवति, यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य । तेनापि क्रियायां कर्तव्यायां प्रयोजनमिति सोऽपि परार्थः । तस्माद्द्रव्यगुणसंस्काराः परार्थत्वाच्छेषभूता न तु यागफलपुरुषाः । यागस्तावत्कर्तव्यः पुरुषस्य । न हि तस्मिन्निर्वर्तिते किंचित्परमस्ति कर्तव्यम् । स हि पुरुषार्थः । यदन्यद् द्रव्यादि तत्, तदर्थं तस्य शेषभूतम् । स तु न किंचिदभिनिर्वर्तयितुं क्रियते । फलमपि न तेन क्रियते । तस्मिंस्तु कृते स्वयमेव तद्भवति । तस्मिन्कृते फलस्य भवतीत्येतावद्गम्यते । नास्ति शब्दो यागेन क्रियते फलमिति । तस्माद्यागो न शेषभूतः कस्य चिदर्थस्य । फलमपि न पुरुषं प्रत्युपदिश्यते । यः स्वर्गं कामयते स यागं कुर्यादित्येतावच्छब्देनोपदिश्यते, नाऽऽत्मनः परस्य वेति । स्वर्गं प्रतीच्छामात्रेण स्वर्गकाम इति भवति । तस्मात् पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः । तस्मात्सोऽपि न शेषभूतः । न चेत् फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति । प्रत्यक्षश्चास्य द्रव्यत्वात् कर्म प्रति गुणभावः । तस्माद्द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिर्मेने इति ।

वा— इदानीं शेषत्वस्य विषयं कथयति । तत्र बादरिमतेन त्रयस्त्रय एव शेषाः । द्रव्यं हि 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति स्वभावत एव शेषभूतं नियमविधिप्रयोजनत्वेन केवलं ख्याप्यते । गुणोऽप्यरुण्यादिः क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यात् तत्परत्वेव शेषः । तथा संस्कारोऽप्यवहन्त्यादिः यागसाधनपुरोडाशादिनिर्वृत्तये चोदितानां व्रीह्यादीनां स्वरूपेणायोग्यत्वादवहतानां योग्यत्वादवहतानां योग्यत्वमापादयन् तत्परत्वेनाङ्गं भवतीति । न तु यागादीनां सिद्धं शेषत्वं दृश्यते । न च शब्देन चोद्यते । न चान्यत्र क्वचिदपि यागो दृश्यते यागस्तावत् सर्वभावैरनुष्ठीयते । न चान्यत्र क्वचिदपि यागो दृश्यते । फले इति चेत्, न । चिरनिर्वृत्ते यागे फलोत्पत्तिप्रतीतेः । ननु च भावार्थाधिकरणे करणत्वं यागस्योक्तम् । सत्यमुक्तं न तु साधितम् । स्वर्गकामाधिकरणाधीनसिद्धिना तेन नामपदकरणत्वमात्रनिरूपणात् । अत इदानीमसिद्धावस्थेनैव करणत्वेन व्यवहरति । फलमपि यागं प्रति साध्यमानत्वात् प्रधानम्, पुरुषं प्रति स्वस्य शेषभावे नैवोपात्तः, साध्यमानत्वेन पुनरपि प्रधानत्वात् ।

पुरुष एव तु कामं द्रव्यत्वाद्यागे गुणत्वेन स्यात् । तस्माद् द्रव्यगुणसंस्कारेष्वेव शेषभाव इति ।

**कर्माण्यपि जैमिनिः फलार्थत्वात् । ४ ॥**

**भाष्यम्**— जैमिनिस्तु स्माचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म, न बादरिरिवावधारणामनुमेने । स हि ददर्श, न यागः कर्तव्यतया चोद्यते । फलकामस्य तु तत्साधनोपायत्वेनेति । एवं श्रुतोऽर्थः परिगृहीतो भविष्यति, अर्थवाक्योपदेशः । एतमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति । इह तु सिद्धेनैव फलार्थत्वेन शेषभावं यागस्याऽऽपादयति स्म । तस्मादनवधारणा, द्रव्यगुणसंस्कारा. शेषभूताः, यागोऽपि शेषभूतः फलं प्रतीति ।

वा— गतार्थमेतत् ।

**फलं च पुरुषार्थत्वात् । ५ ॥**

**भाष्यम्**— फलमपि पुरुषं प्रत्युपदिश्यते । य. स्वर्गो मे भवेदित्येवं कामयते तस्य याग. । न य स्वर्गः स आत्मानं लभेतेति । कुतः ? आत्मनेपदप्रयोगात् । कर्त्रभिप्राये एतद्भवति । क्रियाफलमनुभवेत् कथं पुरुष इति यागः प्रयुज्यते । तस्मात् फलं पुरुषार्थं यागात् श्रूयते, नाऽऽत्मनिर्वृत्त्यर्थम् । तस्माच्छेषभूतमिति ।

वा—कामपदोपादानादेव फलस्य पुरुषार्थत्वं गम्यते । न हि कश्चिद्बुद्धिपूर्वकार्येवं कामयते स्वर्ग आत्मानं लभतामिति । किं तर्हि ? ममोपभोग्य. स्यादिति । पुनश्चाऽऽत्मनेपदनिर्देशात् कर्तुरेवोपभोग्यो नान्यस्य इति गम्यते । तेनोपभोक्तारं प्रति फलमपि शेषभूतम् ।

**पुरुषश्च कर्मार्थत्वात् । ६ ॥**

**भाष्यम्**— पुरुषोऽप्यौदुम्बरीसंमानादिषु गुणभूत. श्रूयते । तस्मादनवधारणेयं द्रव्यगुणसंस्कारेषु शेषत्व बादरिर्मेने इति । अथेदानीमत्र भगवान् वृत्तिकारः परिनिश्चिकाय । द्रव्यगुणसंस्कारेष्वेव नियतो यज्ञं प्रति शेषभाव, आपेक्षिक इतरेषाम् । यागस्य द्रव्यं प्रति प्रधानभाव , फलं प्रति गुणभाव । फलस्य यागं प्रति प्राधान्यम्, पुरुषं प्रति गुणता । पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसंमानादि प्रति गुणत्वम् । तस्मात् संभवाऽनवधारणा, द्रव्यगुणसंस्कारा यागं प्रति नियोगतो गुणभूता एवेति ।

वा—पुरुषोऽपि यजेतेत्याख्यातेन गुणभूत आक्षिप्तः । औदुम्बरीसमानादौ विहित इति शेषः । एवं चतुःसूत्रेणाधिकरणेन समस्त. शेषत्वविषय. प्रतिपादितः । अत्र चोद्यते । यत्तावत् ‘द्रव्यगुणसंस्कारेषु’ इत्यत्र ‘न तु यागफलपुरुषेषु शेषत्वम्’ इत्यभिधायान्ते पुरुषस्य शेषित्वनिराकरणं तदसंबद्धम् । यत्तु ‘प्रत्यक्षश्चास्य द्रव्यत्वात्कर्मं प्रति गुणभावः’ इति, तदपि व्याहतं पुनरुक्तं च, पूर्वमेवाभिहितत्वात् । न च यागफलाभ्यां शेषत्वनिराकरणफलया तदास्यानुल्यप्रवृत्तिरावाद्युक्तम् युक्तम् । तस्मादसदेतत् । यदप्यधिकरणसमाप्तावुक्तम् ‘अथेदानीमत्र भगवान् वृत्तिकारः परिनिश्चिकाय’ इति, तदपि प्रथममेव द्रव्यगुणसंस्काराणां निरपेक्षशेषत्वाभिधानात् कर्मफलपुरुषाणां च द्रव्यादीनि प्रति प्राधान्येऽवस्थिते सूत्रैरेव परस्परापेक्षशेषत्वप्रतिपादनादुक्तार्थमिति मन्दफलं दृश्यते । तेनैवं परिहर्तव्यम् । अस्याधिकरणस्य व्याख्यानद्वयं कृतम् । तत्र प्रथमं तावत् स्वमतेन ‘शेषः परार्थत्वात्’ इत्यभिहिते बादरिमतमुपकारलक्षणशेषत्वाभिप्रायेण द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवं पूर्वपक्षीकृत्य जैमिनिमतमेव सिद्धान्तत्वेन वर्णितम् । अपर च पूर्वत्र इष्टोपकारानुक्रमणमेव भाष्ये दृश्यते । तत्र च पुरुषस्य द्रव्यत्वात् प्रत्यक्षमेव क्रियानिर्वृत्तिहेतुत्वादिष्टमेव शेषत्वम् । यागफलयोस्तु न किंचित्प्रति प्रत्यक्षं साधनत्वमुपलभ्यते इत्यदोषतराम् । यत्तु न यागफलपुरुषेष्विति त्रयाणामपि भाष्ये संकीर्तनम्, न तत् प्रकृतशेषपक्षानुग्रहादेव कल्पितम्, न तेषां शेषत्वमिति । किं तर्हि ? यत्सिद्धान्तवादिमतं तत्र भवतीत्येवं संबन्धः । सर्वत्र हि पूर्वपक्षवादिना सिद्धान्तवादिमतं प्रतिषेद्धव्यं न यत्किंचित् । शेषत्वमेव हि असौ स्वाभिमतमेवेति प्रतिषेधति, न स्वरूपमात्रेण । सिद्धान्तवादिनश्चैतन्मतं यदुत यागफलपुरुषाणां द्रव्यात्मकत्वं किंचिदपेक्ष्य शेषत्वं किंचिदपेक्ष्य शेषित्वमिति, तद् बादरिमतानुसारी भाष्यकारः प्रतिषेधति, न तु यागफलपुरुषेषु सिद्धान्तवादिसंमतं द्व्याकारत्वम् । यागफलयोरेकान्तेनैव शेषित्वात् पुरुषस्य चात्यन्तशेषत्वात् । सर्वथा य एवैक आकारः प्रतिषिद्धस्तेनैव तद्द्व्याकारत्वनिराकरणं द्रष्टव्यमिति व्याख्यानमपि

एतावता तुल्यधर्मत्वात् सह निर्देशः । ' कर्मण्यपि जैमिनिः ' इत्यादिभिस्तन्त्रीतद्व्याकारमेव शेषत्वं प्रतिपादितम्, पारार्थ्यलक्षणशेषत्वाङ्गीकरणात् । नन्वेवं सति पुरुषस्य द्रव्यत्वात् पूर्वपक्षवादिनैवाभ्युपगम्य शेषत्वम्, शेषित्वे निराकृते सिद्धान्तवादिना तदेव प्रतिपादनीयमिति न वक्तव्यं 'पुरुषश्च कर्मार्थत्वात्' इति । नैष दोषः । तेन हि यागफलयोश्शेषत्वात्तस्य शेषित्वं निराकृतम् । ततश्च यावदेव सूत्रद्वयेन यागफलयोः शेषत्वं प्रतिपादितं तावदेव यागोपदर्शनं फलं प्रति प्रधानत्वादुभौ प्रति केवलं शेषित्वमेव प्रसक्तमिति मत्वैव द्रव्यत्वात्वे पुनः शेषत्वप्रतिप्रसवार्थमुच्यते ' पुरुषश्च कर्मार्थत्वात् ' इति । अथवा परेणोपकारद्वारेण शेषत्वमभ्युपगतम्, तदयुक्तं मन्यमानः फलयागयोरिवास्यापि पारार्थ्यकृतमेवेति प्रतिपादयिष्यन्नाह ' पुरुषश्च कर्मार्थत्वात् ' न तदुपकारित्वादिति । वृत्तिकारमतेन सूत्रचतुष्टयमन्यथा व्याख्यास्यन्नाह ' अथात्र भगवान् ' इति । नैवेदानीं बादरिमतं पूर्वपक्षः । किं तर्हि ? ' शेषः परार्थत्वात् ' इति सामान्येन लक्षणमुक्तवा तस्यैव विषयप्रदर्शनद्वारेणोत्तरः प्रपञ्चः क्रियते । तत्र पूर्वव्याख्याया द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवमवधारणं पूर्वपक्षे कृतम् । इदानीं तु सिद्धान्तरूपेणैव बादरिमतमप्रतिषेधेनानुमतं कृत्वा लक्षणप्रपञ्चाभ्यां शेषत्वं वर्णयिष्यते । द्रव्यगुणसंस्कारेषु शेषत्वमेवेत्यवधारयति । अतश्च द्रव्यगुणसंस्काराः शेषत्वेन नियता, शेषित्वं न प्रतिपद्यन्ते । शेषत्वं पुनरनियतत्वात् यागफलपुरुषेष्वप्यस्त्येवेति तत्प्रतिपादनार्थान्युत्तरसूत्राण्यवकल्प्यन्ते । तस्मादापेक्षिकशेषशेषित्वमात्रमेवैभिः सूत्रैः प्रतिपाद्यते । तथा च भाष्ये दर्शितम् । ततश्च द्विप्रकार एव शेषविषयो नैयमिक आपेक्षिकश्चेत्युक्तं भवति । ननु च द्रव्यगुणसंस्काराणामपि स्वाङ्गानि प्रति प्रधानत्वात्तान् च प्रति गुणभावादापेक्षिकमेव शेषशेषित्वम् । यथा हि ' व्रीह्यादीनां प्रधानत्वमवघातादिषु स्थितम् । मुसलादीन्यपेक्ष्यैवमवघातप्रधानता ॥ ' व्रीह्यादयो ह्यवघातादीन् प्रति प्रधानभूताः, पुरोडाशनिर्वृत्तिं प्रति गुणभूताः । तथा गुणः शोण्यादिः संस्कारं प्रति परिच्छेदकत्वेन । तेषां तु गुणानां निष्पादकं यत् तत् प्रति शेषिणी । तथा संस्कारः सम्मार्गावघातादिभिर्व्रीह्यादेः शेषः, स्वसाधनानामभिमर्शनहननोत्पवनमुसलादीनां शेषी । तस्मादवधारणं सिध्यतीति । तदुच्यते । ' द्रव्यादेर्यत्र शेषत्वं तत्र नैवास्ति शेषिता । फलयागनराणां तु व्याकारत्वं परस्परम् ॥ ' द्रव्यगुणसंस्कारा हि सर्वत्र यागं प्रति नियोगतः शेषभूताः । सत्यपि स्वाङ्गानि प्रति शेषित्वे तं प्रति नास्तीत्यभिधीयते । अत एव भाष्यकारोऽपि ' नियोगतो यज्ञं प्रति शेषभावः ' इत्याह, न ब्रवीति ' नियतः शेषभावः ' इति । ' आपेक्षिक इतरेषाम् ' इत्यत्रापि यज्ञं प्रतीत्यनुवर्तते । तथा ह्येकैकस्य द्वौ द्वौ प्रति गुणत्वं प्राधान्यं च दृश्यते । यागस्य तावद् द्रव्यात्मकं निर्वर्तकं पुरुषं प्रति प्राधान्यम्, फलं प्रति गुणता । यश्च फलं प्रति गुणः स शक्यते फलस्य स्वामिनं पुरुषमपि प्रति सुतरां गुण इति वक्तुम् । तथा यस्य पुरुषं प्रति प्राधान्यं तस्य तदुपसर्जनं फलं प्रति सुतरां तदित्यपि शक्यनिरूपणम् । एवं फलस्य यागं प्रति प्राधान्यात्तत्साधनं पुरुषमपि प्रति प्राधान्यम्, पुरुषं प्रति गुणत्वात्तदनुष्ठेये यागेऽपि गुणत्वम् । तथा पुरुषस्य फलं प्रति प्राधान्यात्तत्साधनं यागमपि प्रति प्रधानत्वम् । यागं च प्रति गुणभावात्तत्साध्ये फलेऽपि गुणत्वम् । नत्वेवं द्रव्यगुणसंस्कारेष्विति विशेषः । यत्किंचित् पारम्पर्येणापि शेषस्य प्राधान्यं चोक्तम्, तत्सर्वं लक्षणवस्तुमात्ररूपेणेत्यवगन्तव्यम् । न व्यवहारार्थम् । मा भूत् अङ्गत्वादेन विकृतौ फलपुरुषयोरपि अतिदेशात् सिद्धान्तविरोधः । तस्मादेतावत्प्रकार एव यथाशक्यमशेषत्वशेषित्वविषयसंक्षेप इति सिद्धम् ।

वा— ' बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम् । श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः ॥ ' जैमिनिस्तु उपकारकत्वागम्य शेषत्वस्य तत्शेषताम् पारार्थ्यमेव शेषत्वं इत्यभिप्रेत्य कर्मणामपि पारार्थ्यात् शेषत्वमाह ।

वि— ' किं द्रव्यगुणसंस्कारमात्रं शेषोऽथवा फलम् । पुमान् कर्म च पक्षौ द्वावाद्ये बादरिः ॥ शेषत्वमुपकारित्वं तन्मन्वानाह बादरिः । पारार्थ्यं शेषता तच्च सर्वेष्वस्तीति जैमिनिः ॥ '

भाट्ट— यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेरुद्देश्यता, समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात् । विधेः प्रवृत्तिस्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात् । आक्षेपकत्वेऽपि वा प्रमाणासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतया इष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च । स्वर्गकामपदस्य तु 'परलोककामः प्रायश्चित्तं कुर्यात्' इतिवत् कर्तृपरत्वादिनाऽप्युपपत्तेर्न भाव्यपरत्वावश्यकता । अतो न यागादेरुद्देश्यत्वम् । वस्तुतस्तु उपकारकत्वमेव शेषत्वम् । तदर्थेऽप्युपकारके शेषत्वव्यवहाराभावात् । तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव । अत एव व्रीह्यादेर्द्रव्यस्य आरुण्यादेर्गुणस्य अवघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम् । प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासंभवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैव उपकारकत्वकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वम् । इति प्राप्ते, नोपकारकत्वं शेषत्वम्, गोदोहनद्ध्यानयनादेरपि प्रणयनार्जनयागाङ्गत्वापत्तेः । अपि तु पारार्थ्यमेव । अपकारकत्वे तु तदपकार्यैर्थेपत्वेन उद्देश्यता, न तु तस्येति न तदर्थेऽप्युपकारके शेषत्वव्यवहारः । तदपि श्रुत्यादिषट्प्रमाणगम्यमिति वक्ष्यते । अतश्च वाक्ययागोऽपि फलाङ्गम् । तथा हि यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते, तथापि कदा चिदपि प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेः अवश्यं कदा चित् तथा भवितव्यम् । तथा चेष्टसाधनताज्ञानं विना तदसंभवात् तस्य च बाधकाभावे प्रमात्वयोगात् इष्टसाधनत्वं तावदागम्य विधित्वादवगम्यते । इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः । एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम् । भोक्ता च उत्सर्गतो विधिवशात् कामनावशात् आत्मनेपदवशाच्च कर्तैव । प्रमाणत्वे तस्य । अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम् । पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यकक्रियाकारकत्वात् वाक्यादेव तदङ्गमित्यविवादमेव ।

मण्डन— 'कर्मण्यपि फलाद्विनः ।' शेषः ।

शंकर— 'निरस्तो बादरे. पक्ष. ।' .

* बादर्यधिकरणं द्वेधा व्याख्यातम् । अकारलक्षणशेषत्वाभिप्रायेण द्रव्यादिष्वेव शेषत्वमिति शेषत्वमपारक्या बादरिमतं पूर्वपक्षं कृत्वा कर्मादिष्वपि शेषत्वमस्ति पारार्थ्यलक्षणत्वात् इति जैमिनिमतं सिद्धान्तितं प्रथमे व्याख्याने । द्वितीये तु बादरिमतमपि सिद्धान्तमङ्गीकृत्य द्रव्यादिषु शेषत्वमेवेति नियम्य कर्मादिषु शेषत्वं दोषितं चेति । तन्त्ररत्न. ४।१।२।१.

* वार्तिककृता तु बादर्यधिकरणादौ (अध्ययनस्य) संस्कारकर्मत्वमपि उक्तम् । कौ. १।२।१७.

* बाधः अग्निहोत्रार्थोद्धरणमन्त्रस्य दर्शार्थाग्न्युद्धरणे । भाट्ट. ९।४।७. * बाधः अजस्य धेनुवत्सऋषभशब्दोपदिष्टगोद्रव्येषु । भा. १०।२।९३।६९. * बाधः अग्निगुप्रैषस्य सारस्वत्या मेष्याम् । कृत्साचिन्ता । ९।१।१७. 'मेष्यधिकरणम्' इत्यत्र द्रष्टव्यम् । * बाधः अन्वारम्भणीयायाः दीक्षणीयादिविकृतिषु ज्योतिष्टोमे । १०।१।२।४. मीको. पृ. ९७४ 'आरम्भणीयायाः ज्योतिष्टोमाद्यङ्ग०' इत्यत्र द्रष्टव्यम् । * बाधः अन्वारम्भणीयायाः राजसूयेऽनुमत्यादीष्टौ । १०।१।३।५. मीको. पृ. ९७७ 'आरम्भणीयायाः राजसूय०' इत्यत्र द्रष्टव्यम् । * बाधः अन्वाहार्यदक्षिणाया आग्रयणोपदिष्टवासोवत्सदक्षिणया । १०।३।६।३४. मीको. पृ. ८९४ 'आग्रयणे उपदिष्ट०' इत्यत्र द्रष्टव्यम् । * बाधः अभिधारणस्य अन्वाहार्यस्थानापन्नयोराग्रयणे वासोवत्सयोः । १०।३।१०।३८. मीको. पृ. ८५५ 'आग्रयणे वासोवत्सयोः०' इत्यत्र द्रष्टव्यम् । * बाधः अभिधारणस्य शतकृष्णलचरौ । १०।२।२।३–१३. * बाधः अभ्यूहस्य सौर्ये चरौ । १०।१।१८।५६. * बाधः अवघातस्य कृष्णलचरौ । १०।२।१।१–३ वर्णक २. मीको पृ. ६७९ 'अवघातस्य कृष्णलचरौ०' इत्यत्र द्रष्टव्यम् । * बाधः अवज्वलनस्य सौर्ये चरौ । १०।२।१९।६०. 'सौर्ये चरौ अवज्वलनस्य बाधः' इत्यत्र द्रष्टव्यम् । * बाधः अविवृद्धस्तोमकक्रतूपदिष्टसामभिः प्राकृतसाम्नाम् । १०।४।१०।२०. * बाधः आतिदेशिकहस्तदक्षिणाया. भूसङ्केतादे औपदेशिकधेनुदक्षिणया । १०।३।१४।५६–५८. मीको. पृ. २२७७. 'धेनुन्यायः' इत्यत्र द्रष्टव्यम् । * बाधः

आधानादिसंस्काराणां अग्निचयनप्रकरणे श्रुतस्य स्वल्पदृष्ट्याग्राद्याहृतस्य काम्यस्याग्नेः । १२।४।१. मीको. पृ. ४८ 'अग्निचयने श्रुतस्य०' इत्यत्र द्रष्टव्यम् । * बाधः आरम्भणीयायाः आरम्भणीयायाम् । १०।१।४।६–८. मीको. पृ. ९७८ 'आरम्भणीयान्यायः' इत्यत्र द्रष्टव्यम् । * बाधः उत्पत्तिविशिष्टस्य प्रत्यक्षेण अनुमानस्य । सु. पृ. १३७. * बाधः उपधानस्य सौर्ये चरौ । १०।१।१६।५७. 'सौर्ये चरौ उपधानस्य बाधः' इत्यत्र द्रष्टव्यम् । * बाधः उपस्तरणाभिघारणयोः कृष्णलेषु । १०।२।२. मीको. पृ. १४७६ 'कृष्णलचरौ उपस्तरणाभिघारणयोः०' इत्यत्र द्रष्टव्यम् । * बाधः ऊहस्य ( ऊहो न ) चातुर्मास्येषु अनुयाजदेवताप्रकाशनार्थं प्राकृताह्वानमन्त्रस्य, किन्तु अविकारेणैव प्रयोगः । १०।४।२५।५१–६०. * बाधः ऊहस्य । मनोतामन्त्रस्य बाधादिपक्षे नोहः । १०।४।२।४३. * बाधः ऋतपेये निहितसोमचमसदक्षिणया कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च । १०।३।२०।७२–७३. मीको. पृ. १२४२ 'ऋतपेये सोमचमसेन' इत्यत्र द्रष्टव्यम् । * बाधः काम्येन प्राग्वंशाग्निना नित्यस्योख्याग्नेश्चयने । १२।४।७।१७–२५. मीको. पृ. २४ 'अग्निचयनगतेन स्वल्पदृष्टाग्न्याहृतेन' इत्यत्र द्रष्टव्यम् । * बाधः । कल्पसूत्राणां प्रमाणानां प्रत्यक्षबाधो भवति, न कल्प्यमूलानां इत्युक्तम् १।३।७।१४। शा. १।३।२३।५१. * बाधः गिरापदस्य इरापदेन ज्योतिष्टोमे यज्ञायज्ञीये । ९।१।१८।५०–५३. मीको. पृ. १५९१ 'गिरापदस्य इरापदेन' इत्यत्र द्रष्टव्यम् । * बाधः शुष्काग्रानामस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२०. मीको. पृ. ७६० (१) 'अस्थियज्ञस्य मृताधिकारित्वपक्षे' इत्यत्र द्रष्टव्यम् । * बाधः चतुर्धाकरणादीनां शतकृष्णलचरौ । १०।२।७।२२. मीको. पृ. १४७९ 'कृष्णलचरौ चतुर्धाकरणस्य' इत्यत्र द्रष्टव्यम् । * बाधः ( अमानः ) त्रिवेदै तण्डुलेषु प्राकृतव्रीहिमानान्तरनियमस्य । १०।२।३।११–१२. * बाधः तक्षणादीनां सावस्के मुखेनाल्याम् । १०।२।१२।७२–७३. मीको. पृ. १५३५ 'स्खलेनास्या तक्षणोपणादि' इत्यत्र द्रष्टव्यम् । * बाधः दशमेऽध्याये उच्यते । वि. प्रस्तावना. पृ. ५. * बाधः द्विविधः अप्राप्तबाधः प्राप्तबाधश्चेति । तत्र तार्तीयो बाधः अप्राप्तबाधः । मीन्या. * बाधः न अजद्रव्यस्य वायव्यपशौ उपदिष्टेन श्वेतगुणेन । १०।२।३०।३०. मीको. पृ. २१५४ 'द्रव्यस्य गुणेन न बाधः' इत्यत्र द्रष्टव्यम् । * बाधः न अङ्गनाभ्यञ्जनाञ्जनस्य विशिष्टगौग्गुलवाभ्यञ्जनादिना प्राकृतनवनीताभ्यञ्जनस्य । १०।८।६।१०–१२. * बाधः न अतिदिष्टानां ऋतुपशूनां वाजपेयोपदिष्टप्राजापत्यपशुभिः । १०।४।३।६. * बाधः न आतिदेशिकैन्द्रवायवादिग्रहाणां अश्वमेधोपदिष्टसौवर्णराजतमहाग्रहाणाम् । १०।४।२।३–५. * बाधः न अध्वर्योः दासस्त्र्यादिभागान्तरस्य वाजपेयश्रुतचतुर्युक्तरथेन । १०।३।२१।७४–७५. * बाधः न अवघातस्य महापितृयज्ञे धानासु । १०।२।३४।७५. 'महापितृयज्ञे धानासु' इत्यत्र द्रष्टव्यम् । * बाधः न आतिदेशिकोपगानकर्तॄणामृत्विजां गवामयनगत- महाव्रतोपविहितोपगानकर्त्रीभिः पत्नीभिः । १०।४।५।८–९. * बाधः न आमिक्षायागस्विष्टकृतः । संकर्ष. १।४।२. मीको. पृ. ९५५ 'आमिक्षायागस्विष्टकृतो०' इत्यत्र द्रष्टव्यम् । * बाधः न एकादिदीक्षापक्षाणां साग्निचित्ये क्रतौ । संकर्ष. २।१।२९. मीको. पृ. २६ 'अग्निचयनविशिष्टे क्रतौ' इत्यत्र द्रष्टव्यम् । * बाधः न ऋत्विजामस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१९।५१. मीको. पृ. ७६० (५) 'अस्थियज्ञस्य मृताधिकारिपक्षे ऋत्विजाम्' इत्यत्र द्रष्टव्यम् । * बाधः न क्रतुदक्षिणायाः अग्निचेतृदक्षिणया । संकर्ष. २।१।८. मीको. पृ. ५६ 'अग्निचेतृदक्षिणया न क्रतुदक्षिणाबाधः' इत्यत्र द्रष्टव्यम् । * बाधः न नक्षत्रेष्ट्यादौ उपदिष्टैः सहोमादिभिः आतिदेशिकानां नारिष्ठहोमादीनाम् । १०।४।१।१–२. * बाधः न निर्वापस्य अग्निहोत्रहवण्यभावेऽपि पवमानेष्टिषु । १०।२।२७।६४. मीको. पृ. १५९२ 'गुणलोपन्यायः' इत्यत्र द्रष्टव्यम् । * बाधः न पयोव्रतादेः आतिदेशिकस्य पृथक्पदार्थे उपदिष्टेन मध्वशनेन । १०।४।१।१–२ * बाधः न पर्यूहणादिसंस्काराणां सावस्के मुखेनाल्याम् । १०।२।३३. मीको. पृ. १५३६ 'स्नेहास्या पर्यूहणादि' इत्यत्र द्रष्टव्यम् । * बाधः न पाकस्य कृष्णलचरौ । १०।२।१।१–२.

मीको. पृ. १४७५ 'कृष्णलेषु मुख्यभक्षासम्भवात्' इत्यत्र द्रष्टव्यम् । * बाधः न प्राकृताङ्गान्तराणां अवभृथे विहितेनाप्सु तुषप्रक्षेपेन । १०।३।१।८–१२. * बाधः न प्राकृताङ्गान्तराणां चातुर्मास्येषु विहितैर्नवप्रयाजैः । १०।३।१।१–१२. * बाधः न प्राकृताङ्गान्तराणां वायव्यपशौ विहितेन 'आपारम्भेण' । १०।३।१।१–१२. * बाधः न प्राकृताङ्गान्तराणां सोमेऽग्नीषोमीये पशौ विहितैरेकादशप्रयाजैः । १०।३।१।१–१२. मीको. पृ. १०७ 'अग्नीषोमीयपश्वादौ प्रयाजादिषु' इत्यत्र द्रष्टव्यम् । * बाधः न प्राकृतसाम्नां त्रिवृत्स्तोमकक्रतूपदिष्टसामभिः । १०।४।१०।२०. 'त्रिवृत्स्तोमकक्रतुषु उपदिष्टैः सामभि.' इत्यत्र द्रष्टव्यम् । * बाधः न बृहस्पतिसवादिगतोपदेशिकबार्हस्पत्यादिग्रहैः आतिदेशिकैन्द्रवायवादिग्रहाणाम् । १०।४।२।१–५. * बाधः न भक्षणस्य शतकृष्णलचरौ । १०।२।३।१४–१७. मीको. पृ. १४८० 'कृष्णलचरौ भक्षणा न बाधः' इत्यत्र द्रष्टव्यम् । * बाधः न मन्थे पेषणस्य महापितृयज्ञे । १०।२।३४।७७. 'महापितृयज्ञे धानासु' इत्यत्र द्रष्टव्यम् । * बाधः न महाव्रते साम्प्राविभिः प्राकृतग्रहस्याम्नः । १०।४।७।१३–१५. * बाधः न महाव्रतगतस्तोमान्तरत्वापन्नभूतपञ्चदशादिसामभिः प्राकृतसाम्नाम् । १०।४।८।१६–१७. * बाधः न विषुवति विहितेनार्कग्रहेण आतिदेशिकानामैन्द्रवायवादिग्रहाणाम् । १०।४।२।३–५. * बाध न श्येने उपदिष्टैर्लोहितोष्णीषत्वादिभिः आतिदेशिकस्योष्णीषस्य । १०।४।१।१–२. * बाधः न सत्रे ऋत्विग्वरणहिरण्यदानयोः अदृष्टार्थयोः । १०।२।२६।६३ . मीको. पृ. १२४६ 'ऋत्विग्वरणहिरण्यदानयोः' इत्यत्र द्रष्टव्यम् । * बाध. न सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गतायुराशासनादेः । १०।२।२५।६१–६२. 'सर्वस्वारे यजमानयावज्जीवद्दशायाम्' इत्यत्र द्रष्टव्यम् । * बाधः न साग्रहणेष्टिविहितामनहोमैरानिदेशिकानुयाजानाम् । १०।४।४।७. * बाध नाम चोदकप्रापितस्य अङ्गनानुष्ठेयत्वाप्रत्ययस्य भ्रान्तित्वेन निश्चयः । वि. १०।१।१. * बाध. नाम यदेव इदमिति निश्चितं विज्ञान ( तत् ) कारणान्तरेण मिथ्येति कल्प्यते । भा. १०।१।१।१. * बाधः नित्यस्य काम्येन । १२।४।७।१७–२५. * बाधः नित्यप्रयोगीयगोमहादन्वदश्वतरपल्यामानस्य ज्योतिष्टोमे नैमित्तिकैकादिगोदक्षिणया । १०।३।१५।५९, ६२. 'सोमापहारादौ एकादिगोदक्षिणया' इत्यत्र द्रष्टव्यम् । * बाधः नैर्ऋतचरुविहितकृष्णव्रीहिभिः प्राकृतयवानाम् । १०।७।१९।६८–७१. * बाधः पदार्थनिवृत्तिः । वि. १०।१।१ प्रस्तावे. * बाधः परिक्रयस्य ( ऋत्विजा ) सत्रे । १०।२।११।३६–३९. 'सत्रे ऋत्विक्परिक्रयस्य बाध.' इत्यत्र द्रष्टव्यम् । * बाधः पाकस्य आग्रयणेऽन्वाहार्यस्थानापन्नस्य वत्से । १०।३।८।३६. मीको. पृ. ८५३ 'आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से' इत्यत्र द्रष्टव्यम् । * बाधः पाकस्य वाससि आग्रयणे अन्वाहार्यस्थानापन्नेऽपि । १०।३।९।३७. मीको. पृ. ८५१ 'आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वाससि' इत्यत्र द्रष्टव्यम् । * बाध पुनराधानश्रुतदक्षिणया आधानसामान्यविहितैकादिदक्षिणायाः । १०।३।५।२०–२३. मीको. पृ. २४०१ 'नैमित्तिके पुनराधाने' इत्यत्र द्रष्टव्यम् । * बाधः पेषणस्य सौर्ये चरौ । १०।१।१२।५२–५३. 'सौर्ये चरौ पेषणस्य बाध.' इत्यत्र द्रष्टव्यम् । * बाधः प्रकृतिप्राप्तद्रव्यदेवतादीनां विकृत्युपदिष्टद्रव्यदेवताभिः । १०।७।१७।५८–६०. मीको. पृ. १४४२ 'काम्यासु विकृतिषु उपदिष्टैः' इत्यत्र द्रष्टव्यम् । * बाध प्रकृतिप्राप्तयवानां सोमारौद्र–चरुप्रकरणविहितशुक्लव्रीहिभिः । १०।७।१९।६४–७१. 'सोमारौद्रादिचरौ श्रूयमाणे.' इत्यत्र द्रष्टव्यम् । * बाध. । प्रत्यक्षेणानुमान मृगतृष्णादिप्रत्ययाश्च बाध्यन्ते यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासाः, श्रुत्या स्मृतिः, आप्ताविगीतस्मृत्या अनाप्तविगीतस्मृतिः, अदृष्टार्थया दृष्टार्था, श्रुतिप्रभवया लिङ्गादिप्रभवा अर्थवादप्रभवा च, स्मृत्याऽपि आचारः, सोऽपि अभियुक्ततराचारेण, संदिग्धमसंदिग्धेन, दुर्बलाश्रय बलवदाश्रयेण, उपसंहारस्यमुपक्रमस्थेन, अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, आरादुपकारकत्र सामवायिकत्वेन, अनेकार्थविधान एकार्थविधानेन, अनेकशब्दार्थत्व एकशब्दार्थत्वेन, बहुबाधः अल्पबाधेन, वेदान्तरोत्पन्नं

इति । पृ. १३८–१३९, ● अप्रासबाधभेदाः शास्त्रीयाः क्रमप्रमाणेषु श्रुति–अर्थ–पाठ–स्थान–मुख्य–प्रवृत्तिषु । श्रुतिः अर्थादीन् बाधते इति ५ बाधभेदाः । अर्थेन पाठादीनां चतुर्णां बाधात् ४ बाधभेदाः । पाठेन स्थानादीनां त्रयाणां बाधात् ३ बाधभेदाः । स्थानेन मुख्य-प्रवृत्त्योः बाधात् २ बाधभेदौ । मुख्येन प्रवृत्तेः बाधात् १ बाधभेदः । सर्वेषां उदाहरणानि तु न सन्ति । पृ. १३६, ● अप्राप्तबाधभेदाः शास्त्रीयाः । श्रुत्या लिङ्गादीनि पञ्च बाध्यन्ते । लिङ्गेन वाक्यादीनि चत्वारि । वाक्येन प्रकरणादीनि त्रीणि । प्रकरणेन क्रमादिद्वयम् । क्रमेण समाख्या इति । तथा – श्रुत्यादिषु द्वाभ्यां प्रमाणाभ्याम्, एकः शेषः द्वयोः शेषिणोः विनियुज्यते तत्र दुर्बलत्वेन बाधः इति ५ भेदाः । एवं एकस्मिन् शेषिणि द्वयोः शेषयोः प्रमाणद्वयेन विनियोगे प्रबलेन दुर्बलस्य बाधः इति ५. मिलित्वा १० । पृ. १३४, ● अप्राप्त-बाधभेदाः ७ शास्त्रीयाः । १ श्रुत्या श्रुतिः प्रबलया दुर्बला बाध्यते, २ श्रुत्या श्रुतिः असंदिग्धया संदिग्धा, ३ लिङ्गेन लिङ्गम्, ४ वाक्येन वाक्यम्, ५ प्रकरणेन प्रकरणम्, ६ क्रमेण क्रमः, ७ समाख्यया समाख्या । एते च एतत् शेषशेषिभेदेन द्विगुणा भवन्ति । पृ. १३५, ● अप्राप्तबाधभेदाः शास्त्रीयाः स्मृत्या । श्रुतिप्रमतया स्मृत्या लिङ्गादिप्रमाण्यानुमापकता स्मृतिः बाध्यते । अत्र श्रुतिलिङ्गादीनां बाधानां पञ्चदशभेदत्वात् तदनुमूलकस्मृतिविषयेऽपि १५ एव भेदा भवन्ति । तथापि शेषसमवाये पञ्चदश शेषिसमवाये च पञ्चदश इति ३० भेदाः । पृ. १४०, ● अप्राप्तबाधभेदाः शास्त्रीयाः स्मृत्याचारसंबद्धाः षट्, आप्तस्मृत्या अनाप्तस्मृतिः बाध्यते, अविगीतस्मृत्या विगीतस्मृतिः, अदृष्टार्थस्मृत्या दृष्टार्था स्मृतिः, आप्ताचारेण अनाप्ताचारः, अविगीताचारेण विगीताचारः, अदृष्टार्थेन आचारेण दृष्टार्थ आचारः । भाट्ट. पृ. १३९.

● बाधभेदनिरूपणम् ( ते च भेदाः ५५९ भवन्ति ) । बाधो निवृत्तिः अननुष्ठान इति यावत् । स च द्विविधः, प्रसक्तबाधः अप्रसक्तबाधश्चेति । यत्र अतिदेशप्राप्तस्य उपदिष्टानेन कर्मणि सर्वविषये वा 'निषेध' इति प्रत्ययान्तरं भवति स प्रसक्तबाधः । यत्र तु लिङ्गादी श्रुतिविकल्पनाप्रतिबन्धात् ज्ञानोत्पत्तिरेव प्रतिबध्यते असौ अप्रसक्तबाधः इति । अनयोश्च मध्ये पूर्वो मिश्रैः 'प्रसेक-प्रहारम्भाणो बाधः' इत्यपि व्यवहृतः । उत्तरश्च 'मूले च्छेदलक्षणः' इत्यपि । तत्र प्रसक्तबाधोऽपि द्विविधो नित्यो वैकल्पिकश्च । तत्र नित्यस्तावत् एकविंशति भेदः । तद्यथा [ १ ] प्रत्यक्षेण तदाभासो बाध्यते । [ २ ] अनुमानेन तदाभासः । [ ३ ] शब्देन तदाभासः । [ ४ ] उपमानेन तदाभासः । [ ५ ] अर्थापत्त्या तदाभासः । [ ६ ] अभावेन तदाभासः । एते षट् लौकिका बाधाः । अथ शास्त्रीयाः । [ १ ] नित्यं नैमित्तिकेन, यथा दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्' इति नित्यं पाञ्चदश्यं 'सप्तदश वैश्यस्य' इति वैश्यनिमित्तकेन साप्तदश्येन वैश्यकर्तृके प्रयोगे बाध्यते । [ २ ] उभयमपि क्रत्वर्थं पुरुषार्थेन, यथा– पूर्वोक्तं पाञ्चदश्यं साप्तदश्यं च 'एकविंशतिमनुब्रूयात् प्रतिष्ठा-कामस्य' इति काम्येन एकविंशतित्वेन बाध्यते । [ ३ ] पूर्वं परेण, यथा– 'यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः परिसमाप्यते, यत् पूर्वस्मिन् दास्यन् स्यात् तद्दद्यात् । यदि प्रतिहर्ता सर्ववेदसं दद्यात्' इति द्वयोर्निमित्तयो द्वे नैमित्तिके विहिते, तत्र निमित्तयोः पौर्वापर्ये परेण नैमि-त्तिकेन पूर्वनैमित्तिकं बाध्यते । [ ४ ] प्राकृतमर्थलोपेन बाध्यते, यथा– कृष्णलचरौ अवघातः प्राकृतप्रोक्षणादि वैतुष्यरूपार्थलोपात् । यथा वा स्वयंदिते बर्हिषि लवन प्रतिहरणार्थलोपात् । [ ५ ] प्राकृतमेव प्रतिषेधेन बाध्यते, यथा 'न होतारं वृणीते' इति निषेधः श्रुतम्, तत्र वैधनिषेधे विकल्पप्रसक्तेः पर्युदासत्व निरु-बाधार्थं दशमे उक्तम् । ( १०।८।१।१–४ ) । [ ६ ] प्राकृतमेव प्रत्याम्नानेन बाध्यते, तदपि आरम्भ-णीयेन अनारम्भाधीनेन वेति द्विधा । आद्योदा-हरणं यथा– 'कुशमयं बर्हिर्भवति' इति प्रकृतिप्र-प्राप्ता. कुशाः 'शरमयं बर्हिर्भवति' इति विहितो ( सौमारौद्रादौ ) विहितैः शरैर्बाध्यन्ते । ( ७ ) द्वितीयो-दाहरणं यथा– 'य इष्ट्या' इत्यनारभ्य विहितेन सप्तदशत्वेन विकृतिषु अतिदिष्टदेयस्यानुरूपस्य बाधः ।

[८] सामान्यविहितं विशेषविहितेन बाध्यते। तदपि विधेयभेदे विधेयैक्ये चेति द्विधा। तत्राद्योदाहरणं यथा— पदेन आहवनीयस्य बाधः। [९] द्वितीयोदाहरणं उपसंहारः। [१०] सामान्यविशेषबाधो न वाक्यानेकत्वे एव, किन्तु वाक्यैक्येऽपि, यथा— सप्तमे (७।३।५।१६) उक्तः 'शरमया निष्कासेन' इति द्रव्यविशेषेण अवभृथनाम्ना सामान्यतोऽतिदिष्टः पुरोडाशो बाध्यते। [११] निष्प्रयोजनं सप्रयोजनेन बाध्यते, यथा निगदेषु परसंबोधनार्थेषु स्वयं कल्पितविधिनाऽपि प्रश्नेन उच्चैस्त्वेन उपांशुत्वम् 'उपांशु यजुषा' इत्यनेन प्राप्तं बाध्यते। [१२] अल्पं भूयसा बाध्यते, यथा— पञ्चदशरात्रे नाम्ना मिथश्चिन्तायां (१२।२।७।२२) एवं अग्निष्टुनाम आग्नेयीसुब्रह्मण्याप्रवर्तकं अनेनैन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना बाध्यते। [१३] अवकाशं निरवकाशेन, यथा— 'यत्किञ्चित् प्राचीनं' इति सोमक्रयक्रिशिष्टच्छब्दयशेन अग्नीषोमीयप्राग्भावि-पदार्थविशेषोद्देशेन विहितं दीक्षणीयातोऽन्यत्रापि सावकाशमुपांशुत्वं दीक्षणीयादिमात्रार्थेन 'यावत्या' इति स्वरेण अन्यत्र निरवकाशेन बाध्यते। तथा विशेषणमात्रया सामान्यसमारम्भाभावोऽपि तार्तीयः (३।७।२०।४१-४२) अस्योदाहरणम्। [१४] अङ्गं प्रधानेन बाध्यते, यथा— पवमानेष्टिषु अग्निहोत्रहवण्याः निर्वापेण बाध्यते। अङ्गधर्मः प्रधानधर्मेण बाध्यते, यथा— दीक्षणीयायाः पर्वकालत्वं सुत्यापर्वकालत्वेन। [१५] उपादेयम् अनुपादेयेन, यथा— सातपनीयोत्कर्षे अग्निप्रणयनं कालेन बाध्यते।

इमे पञ्चदश शास्त्रीयबाधभेदाः, पूर्वे च लौकिकाः षट्, इति एकविंशतिर्बाधभेदाः।

प्रसङ्गलक्षणोऽपि बाधः प्राप्तबाध एव। स तु सप्तविधः। [१] प्रधानप्रसङ्ग एकः प्रकारो यथा— काम्यार्थेन अग्निहोत्रादिप्रयोगेण नित्यवत्प्रयोगस्य प्रसङ्गसिद्धिः। अङ्गप्रसङ्गस्तु षोढा। तत्रापि औपदेशिकेनाङ्गेन औपदेशिकस्य प्रसङ्गः। [२] तत्रापि नैमित्तिकेन नित्यस्य यथा— वैश्यनिमित्तकपात्रद्वयेन नित्यस्य पात्रद्वयस्य। [३-४] तथा काम्येन नित्यस्य नैमित्तिकस्य च यथा— प्रतिष्ठार्थेन एकविंशतित्वेन पात्रद्वयस्य नित्यस्य, वैश्यनिमित्तकस्य च पात्रद्वयस्य। [५] औपदेशिकेन आतिदेशिकस्य यथा— दर्शार्थेन प्रयाजादिना निरीष्ट्यर्थस्य प्रयाजादेः। [६] आतिदेशिकेन आतिदेशिकस्य यथा— पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः। [७] आतिदेशिकेन औपदेशिकस्य यथा— 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति काम्ये अनुवचनान्तरे नित्यानुवचनप्रकृतिके अतिदिष्टाभिः सामिधेनीभिः प्राकृतसामिधेनीकार्यस्य अग्निसमिन्धनस्य प्रसङ्गतः सिद्धेः तासां बाधः।

ते इमे सप्त प्रसङ्गलक्षणाबाधाः पूर्वैः एकविंशतिसंख्यैः बाधैः सह अष्टाविंशतिर्बाधभेदाः सिद्धाः। वैकल्पिकस्तु प्राप्तबाधः पूर्वमुद्दिष्टः, सोऽपि विभक्तविभागेन चतुर्विधः। तथाहि औपदेशिकेन औपदेशिकस्य कश्चित्। सोऽपि चतुर्धा, भावयोः भावाभावयोश्च। द्विविधोऽपि बाधः प्रकृतौ विकृतौ चेति। [१] तत्र प्रकृतौ उपदिष्टयोर्भावयोर्यथा— व्रीहियवयोः। [२] विकृतौ उपदिष्टयोर्भावयोर्यथा— 'खादिरो यूपो भवति' 'बैल्वो यूपो भवति' इति। [३] प्रकृतौ उपदिष्टयोः भावाभावयोर्यथा— 'अग्निहोत्रे न दध्यभिभवेत्, अधिश्रयेदित्येके' इति। [४] विकृतौ उपदिष्टयोः भावाभावयोर्यथा— 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति।

कश्चित्तु उपदिष्टेन अतिदिष्टस्य वैकल्पिको बाधः, स तु त्रिविधः: उपदिष्टेन भावेनातिदिष्टस्य भावस्य वैकल्पिको बाधः। [५] यथा पित्र्यायां 'द्वौ त्रीन् वा परिधीन् परिदध्यात्' इत्यापस्तम्बसूत्रम्। अत्र हि प्राकृतपरिधानानुवादेन त्रित्वस्यापि विधौ वाक्यभेदापत्तेः परिधिद्वयमेव वैकल्पिकतया विधीयते, तदभावपक्षे अतिदेशप्राप्तमेव परिधित्रित्वमनूद्यते। [६] उपदिष्टेन भावेन अतिदिष्टस्याभावस्य वैकल्पिको बाधः, स च तत्र यत् प्रकृतौ किञ्चिन्नियमेन निषिद्धम्, विकृतौ तदेव वैकल्पिकतया विधीयते, तादृशमुदाहरणं मृग्यम्। [७] उपदिष्टेनाभावेन अतिदिष्टस्य भावस्य वैकल्पिको बाधो यथा— पशौ आज्यभागौ अतिदेशात् प्राप्तौ 'न तौ पशौ

करोति' इति निषेधात् बाध्येते। उपदिष्टेनाभावेन अतिदिष्टस्याभावस्य वैकल्पिको बाधो नैव संभवति इति।

ते एते वैकल्पिकाः सप्त बाधभेदाः। एकचत्वारिंशत्तु वैकल्पिकबाधभेदाः द्वादशाध्यायार्थनिरूपणे एकचत्वारिंशद्विधविकल्पोक्त्या अर्थात् कथ्यन्ते। तेन इमे सप्त वैकल्पिकबाधभेदाः तैः एकचत्वारिंशत्संख्यैः वैकल्पिकबाधभेदैः सह अष्टाचत्वारिंशद्वैकल्पिकबाधभेदाः, पूर्वोक्ताश्च अष्टाविंशतिः नित्यबाधभेदाः मिलित्वा षट्सप्ततिः प्राप्तबाधभेदाः सिद्धाः। यदा तु वक्ष्यमाणैकचत्वारिंशद्वैकल्पिकबाधभेदवत् पूर्वोक्ताः अष्टाविंशतिसंख्या अपि नित्यबाधभेदाः जातिद्रव्यगुणक्रियादिविषयत्वेन भिन्ना निरूप्यन्ते, तदा ते द्वादशोत्तरं शतं भवन्ति। तैरेते मिलितैः अष्टाचत्वारिंशत्संख्यैः प्राप्तबाधभेदैः सह षष्ट्यधिकं शतं प्राप्तबाधभेदाः सिद्धाः। इति प्राप्तबाधभेदनिरूपणम्।

अथ अप्राप्तबाधभेदा उच्यन्ते। ते च विभक्तविभागेन पञ्चविंशत्यधिक शतचतुष्टयं भवन्ति। तथाहि, प्रत्यक्षेण अनुमानादीनि पञ्च बाध्यन्ते इति ते पञ्च बाधभेदाः। प्रत्यक्षव्यतिरिक्तानां तु मध्ये यदेव प्रथमं प्रवृत्तम्, तेनोत्तरस्य उत्पत्तिप्रतिबन्धः एव भवति। तेन अनुमानकृताश्चत्वारो बाधभेदाः, उपमानकृताश्चत्वारः, शब्दकृताश्चत्वारः, अर्थापत्तिकृताश्चत्वारः, अभावकृताश्चत्वारः। यौगपद्ये तु द्वयोर्द्वयोः प्रमाणयोः सामान्योरेकविषयत्वेन विरोधे अन्योन्यप्रतिबन्धात् प्रमाणसंप्लव एव ज्ञानानुत्पत्तिलक्षण इति नैयायिकाः। ते इमे लौकिकाः पञ्चविंशतिर्बाधभेदाः।

अथ शास्त्रीयाः अप्राप्तबाधभेदा उच्यन्ते। श्रुत्या लिङ्गादीनि पञ्च बाध्यन्ते, लिङ्गेन वाक्यादीनि चत्वारि, वाक्येन प्रकरणादीनि त्रीणि, प्रकरणेन क्रमादिद्वयम्, क्रमेण समाख्या इति ते एते पञ्चदश बाधभेदाः, यत्र एकः शेषो द्वयोः शेषिणोः द्वाभ्यां प्रमाणाभ्यां विनियुज्यते तथापि संभवन्ति, यथा एका ऐन्द्री श्रुत्या गार्हपत्ये, लिङ्गेन इन्द्रे, तथा [illegible] एकस्मिन् शेषिणि द्वौ शेषौ द्वाभ्यां प्रमाणाभ्यां विनियुज्येते, तथापि संभवन्ति, यथा— एकस्मिन् गार्हपत्ये शेषिणि श्रुत्या ऐन्द्री, लिङ्गेन या काचित् प्रकृता आग्नेयी सामान्यसंबन्धापेक्षत्वात् इति त्रिंशत्। ते च पूर्वोक्तैः पञ्चविंशतिसंख्यैः लौकिकैः प्रत्यक्षादिबाधभेदैः सह पञ्चपञ्चाशत् बाधभेदाः संपद्यः।

[१] श्रुत्यादिषु च यथा विजातीयैर्विजातीयानां बाधः, एवं सजातीयैः सजातीयानामपि बाधः। तत्र श्रुत्या तावत् श्रुतिर्बाध्यते, तदुक्तम् 'यथा पशुत्वमेकत्वं पदश्रुत्या प्रतीयते। समानप्रत्ययश्रुत्या क्लीबस्या क्रियाङ्गता॥' इति (वा. पृ. ८४०)। [२] तथा असंदिग्धश्रुत्या संदिग्धश्रुतिबाधो यथा– आमिक्षायागे वैश्वदेवी इत्यसंदिग्धतद्धितश्रुत्या वाजिभ्यः इति चतुर्थी पञ्चमीत्वेन संदिग्धायाः श्रुतेर्बाधो गुणाधिकरणे (२।२।९।२१) उक्तः। [३] लिङ्गेनापि लिङ्गं बाध्यते, यथा–' स्योनं ते सदनं कृणोमि' इत्यत्र मन्त्रे उभयोरर्थयोः धर्मधर्मवेतस्त्वार्थप्रकाशनसामर्थ्येन 'तस्मिन्' इत्येकवाक्यतोपगमनसामर्थ्यात्मकं लिङ्गं बाध्यते। [४] वाक्येनापि वाक्यं बाध्यते, यथा– 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यत्र प्रोक्षिताभ्यां इति तृतीयायाः करणत्वबोधकोलूखलमुसलगतकरणकारकानुवादित्वात् श्रौतविनियोगाभावेन वाक्यीयविनियोगे सति असौ वैयधिकरण्याभावयागे, किन्तु उलूखलमुसलयोरेव इति नवमे 'उत्पत्तिसंयोगात्' इत्यधिकरणे (संस्कारे युज्यमानाना० ९।१।२।२–३ इत्यधिकरणे) वक्ष्यते।

यत्तु अत्र (वाक्ययोर्विरोधे) वार्तिके उदाहरणमुक्तं (३।३।अ१४ पृ. ८४०) 'पञ्चदश सामिधेनीरनुब्रूयात्' 'सप्तदश सामिधेनीरनुब्रूयाद्वैश्यस्य' इति। 'उभयत्रापि हि सामानाधिकरण्यात् एकवाक्यत्वकृते विनियोगे सति निमित्तविशेषसंयोगात् साप्तदश्यं बलीयो भवति' इति, तदयुक्तम्। निमित्तनैमित्तिकन्यायेनैव तत्र बाधसिद्धेः। किञ्च नैमित्तिकत्वेन बाधः प्राप्तबाधः, तेन वाक्यान्तरत्वे अपूर्वं नित्यपाञ्चदश्यज्ञानोत्पत्तेः स एव युक्तः, वाक्ययोस्तु अन्योन्यं बाधः अप्राप्तबाधः, स वाक्यैकत्वे एव युक्तः अवघातसमभिव्याहारनिमित्तबोधानुत्पत्तेः इति। [५] प्रकरणेन प्रकरणं बाध्यते, यथा– 'अभिक्रामं जुहोति' इत्यवान्तरप्रकरणेन महाप्रकरणम्। महाप्रकरण-

मपि महाप्रकरणेन बाध्यते, यथा ज्योतिष्टोमप्रकरणेन नित्यानित्यसंयोगविरोधसहकृतेन संस्थाप्रकरणम् । [६] क्रमेणापि क्रमो बाध्यते, यथा– ऐन्द्राग्नयोः कर्मणोः ऐन्द्राग्नयोश्च याज्याऽनुवाक्यायुगलयोः यथासंख्यक्रमेण देशसामान्यलक्षणेन पौर्वापर्यप्रत्यासत्तिक्रमो युगलयोरनियमेन कर्मद्वये प्रापको बाध्यते । [७] समाख्ययाऽपि समाख्या बाध्यते, यथा– विशेषसमाख्यया सामान्यसमाख्यायाः । यथोक्तं तृतीये 'तस्योपदेशसमाख्यानेन निर्देशः' (३।७।२०।४१) इत्यधिकरणे ।

ते एते सप्त बाधभेदाः शेषशेषिभेदेन द्विगुणाः, पूर्वोक्तैः पञ्चपञ्चाशत्संख्यैः अप्राप्तबाधभेदैः सह द्विषष्टिः अप्राप्तबाधभेदाः सिद्धाः ।

शब्दान्तरादीनां तु मिथः समवायाभावात् न बाधभेदाः संभवन्ति । क्रमप्रमाणानामपि श्रुतिलिङ्गादिवत् षण्णां पञ्चदश बाधभेदाः । तत्र तु तार्तीयवत् न सूत्रक्रमेण बलाबलम्, किन्तु अन्यथा । तथा च नियामकवादे श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिभिः इत्ययथासूत्रमनुक्रम्य विरोधे सति दौर्बल्यमेतेषामपि पूर्ववत् इत्युक्तम् । पूर्ववत् श्रुतिलिङ्गादिवदित्यर्थः । सूत्रक्रमेण बलाबले सति अवदानाभिघारणासादनेषु प्रवृत्तिक्रमात् मुख्यक्रमस्य बलीयस्त्व पञ्चमोक्तं (५।४।१२।२–४) विरुध्येतेति । ते च श्रुत्यर्थादीनां षण्णां पञ्चदश बाधभेदा एवम्– श्रुतिः पञ्चभ्योऽपि बलीयसी इति स्पष्टमेव, तेन श्रुत्या अर्थादीनां पञ्चानां पञ्च बाधाः ॥ अर्थात्प्रयोजनविरोधे याज्यादीनामप्रयोजकत्वात् तैः क्रमकल्पनाऽसंभवात् अर्थेन पाठादीनां चतुर्णां चत्वारो बाधाः ॥ पाठः स्थानादिभ्यो प्रबलः इति स्फुटमेव । स हि श्रुतिवत् आम्नातेन प्रत्यक्ष एव । स्थानादिषु तु न तदस्ति । श्रुतिस्तु साक्षात् क्रमविधिरेव, न पाठः, इति श्रुतितो भेदः । तेन ते त्रयो बाधाः ॥ स्थानमपि मुख्यप्रवृत्तिभ्यां प्रबलं इत्यसंदिग्धम् । पाठे हि क्रमवतोर्ज्ञाने प्रत्यक्षक्रमेण जाते अनुसरक्रमेण स्मृतिः, तत्क्रमेण चानुष्ठानम् । स्थाने तु आश्विनग्रहणेन सवनीयमात्रज्ञानम्, पश्वन्तरस्य तु चोदकादवश्यकर्तव्यत्वात् 'सह पशून्' इति साहित्यश्रवणे सवनीयानन्तर्यक्षेपमात्रं परिशेषात् प्रयोगविधिना, न तु पश्वन्तरस्य सवनीयानन्तरं ज्ञानं पाठेनेवास्ति । मुख्यक्रमे तु मुख्यस्यैव ज्ञानमस्ति, न तु क्रमवतोरन्यतरस्यापि पाठेनेव ज्ञाने स्तः । एवं प्रवृत्तावपि क्रमवद्भ्यां पूर्वयोरेव ज्ञाने सिद्धे, न तु क्रमवतोरन्यतरस्यापि पाठेनेव, तेन तौ द्वौ बाधौ ॥ मुख्यक्रमोऽपि प्रवृत्तेः प्रबलः । पूर्वो हि प्रधानानां भङ्गाभावार्थः, उत्तरस्तु अङ्गानामेव परस्परप्रत्यासत्त्यर्थः, इति अङ्गगुणविरोधन्यायादेव (१२।२।१०।२२) अयं बाधः सिद्धः ॥ इति पञ्चदशैते बाधाः । तदेते पञ्चदशापि बाधाः 'विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति' इति सूत्रे (५।१।१०।१८) तन्त्ररत्ने उक्ताः । 'श्रुत्यादिचतुष्टयं मुख्यप्रवृत्तिभ्यां सर्वत्र बलीयः । षण्णामपि हि श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वं तत्तत्र साधयिष्यते' इति । अनोदाहरणानि । तत्र श्रुत्या अर्थबाधे स्थितोदाहरणाभावात् कृत्वाचिन्तान्यायेन उदाहरणमुक्तं तन्त्ररत्ने 'क्रमकोपोऽर्थशब्दाभ्यां' इत्यधिकरणे (५।१।१।१) 'श्रुत्यर्थयोर्विरोधस्तु नैव [illegible] चन संभवी । यथाश्रुत्येव हि न्याय्यमर्थस्य परिकल्पनम् ॥ कृत्वाऽग्निहोत्रं पक्तव्या यवागूरिति हि श्रुते । पाकोऽग्न्यर्थ एव स्यादनुष्ठानं च पश्चिमम् ॥' इति । अनुष्ठानं च पश्चिमं होमोत्तरं स्यात् इत्यनुषङ्गः ॥ अर्थेन तु पाठबाधः क्रमकोपाधिकरणे (५।१।१।१) एव 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्युदाहृत्य सिद्धान्तितः । इति अर्थतो दुर्बलस्य पाठस्य श्रुतितो दौर्बल्यं कैमुतिकन्यायेन अर्थादेव सिद्धं इति तदुदाहरणानुक्तिः ॥ एवं अत्यल्पबलबलीयसा पाठात् दुर्बलस्य स्थानस्य, श्रुत्यर्थाभ्यां सुतरां दौर्बल्यं कैमुतिकन्यायसिद्धम् । तत्र तु श्रुतिस्थानयोः अर्थस्थानयोश्च बाधोदाहरणे पञ्चमे अनुक्तत्वात् न स्तः इति गम्यते ॥ पाठेन स्थानबाधे तूदाहरणं 'प्राकृताच्च पुरस्तात्' इत्यधिकरणे (५।२।११।२२) उक्तम् । सावित्रहोमोपासनाभ्यासपूर्वपदार्थान् विधाय दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः, तत्र प्राकृतेन दीक्षणीयाप्राचीनेन पदार्थेनोपस्थितानां दीक्षणीयादीनां स्थानेन प्रागनुष्ठाने ततः प्राक् पाठः सावित्रहोमादेर्न स्यात् इति पाठक्रमेण स्थानात् क्रमो बाध्यते इति ॥

इति । पृ. १३८–१३९, ● अप्राप्तबाधभेदाः शास्त्रीयाः प्रमप्रमाणेषु श्रुति–अर्थ–पाठ–स्थान–मुख्य–प्रवृत्तिषु । श्रुतिः अर्थादीन् बाधते इति ५ बाधभेदाः । अर्थेन पाठादीनां चतुर्णां बाधात् ४ बाधभेदाः । पाठेन स्थानादीनां त्रयाणां बाधात् ३ बाधभेदाः । स्थानेन मुख्यप्रवृत्त्योः बाधात् २ बाधभेदौ । मुख्येन प्रवृत्तेः बाधात् १ बाधभेदः । सर्वेषां उदाहरणानि तु न सन्ति । पृ. १३६, ● अप्राप्तबाधभेदाः शास्त्रीयाः । श्रुत्या लिङ्गादीनि पञ्च बाध्यन्ते । लिङ्गेन वाक्यादीनि चत्वारि । वाक्येन प्रकरणादीनि त्रीणि । प्रकरणेन क्रमादिद्वयम् । क्रमेण समाख्या इति । तथा – श्रुत्यादिषु द्वाभ्यां प्रमाणाभ्याम्, एकः शेषः द्वयोः शेषिणोः विनियुज्यते तत्र दुर्बलप्रबलेन बाधः इति ५ भेदाः । एवं एकस्मिन् शेषिणि द्वयोः शेषयोः प्रमाणद्वयेन विनियोगे प्रबलेन दुर्बलस्य बाधः इति ५, मिलित्वा १० । पृ. १३४, ● अप्राप्तबाधभेदाः ७ शास्त्रीयाः । १ श्रुत्या श्रुतिः प्रबलया दुर्बला बाध्यते, २ श्रुत्या श्रुतिः असंदिग्धया संदिग्धा, ३ लिङ्गेन लिङ्गम्, ४ वाक्येन वाक्यम्, ५ प्रकरणेन प्रकरणम्, ६ क्रमेण क्रमः, ७ समाख्यया समाख्या । एते च सप्त शेषशेषिभेदेन द्विगुणा भवन्ति । पृ. १३५, ● अप्राप्तबाधभेदाः शास्त्रीयाः स्मृत्या । श्रुतिप्रभवया स्मृत्या लिङ्गादिप्रभवान्यतमप्रभवा स्मृतिः बाध्यते । अत्र श्रुतिलिङ्गादीनां बाधानां पञ्चदशभेदत्वात् तत्तन्मूलकस्मृतिविषयेऽपि १५ एव भेदा भवन्ति । तत्रापि शेषसमवाये पञ्चदश शेषिसमवाये च पञ्चदश इति ३० भेदाः । पृ. १४०, ● अप्राप्तबाधभेदाः शास्त्रीयाः स्मृत्याचारसंबद्धाः षट्, आप्तस्मृत्या अनाप्तस्मृतिः बाध्यते, अविगीतस्मृत्या विगीतस्मृतिः, अदृष्टार्थस्मृत्या दृष्टार्था स्मृतिः, आप्ताचारेण अनाप्ताचारः, अविगीताचारेण विगीताचारः, अदृष्टार्थेन आचारेण दृष्टार्थ आचारः । बाल. पृ. १३९.

● बाधभेदनिरूपणम् ( ये च भेदाः ५८९ भवन्ति ) । बाधो निवृत्तिः अननुष्ठानं इति यावत् । स च द्विविधः, प्राप्तबाधः अप्राप्तबाधश्चेति । यत्र धर्मादिज्ञानानन्तरमाप्तादिनिमित्ते ज्ञाने अंशे सर्वविषये वा 'मिथ्येद' इति प्रत्ययान्तरं भवति स प्राप्तबाधः । यत्र तु लिङ्गादौ श्रुतिकल्पनाप्रतिबन्धात् ज्ञानोत्पत्तिरेव प्रतिबध्यते असौ अप्राप्तबाध. इति । अनयोश्च मध्ये पूर्वो मिश्रैः 'प्रमेयापहारलक्षणो बाधः' इत्यपि व्यवहृतः । उत्तरश्च 'मूलोच्छेदलक्षणः' इत्यपि । तत्र प्राप्तबाधोऽपि द्विविधो नित्यो वैकल्पिकश्च । तत्र नित्यस्तावत् एकविंशति भेदः । तद्यथा [ १ ] प्रत्यक्षेण तदाभासो बाध्यते । [ २ ] अनुमानेन तदाभासः । [ ३ ] शब्देन तदाभासः । [ ४ ] उपमानेन तदाभासः । [५] अर्थापत्त्या तदाभासः । [६] अभावेन तदाभासः । एते षट् लौकिका बाधाः । अथ शास्त्रीयाः । [१] नित्यं नैमित्तिकेन, यथा दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्' इति नित्यं पाञ्चदश्यं 'सप्तदश वैश्यस्य' इति वैश्यनिमित्तकेन साप्तदश्येन वैश्यकर्तृके प्रयोगे बाध्यते । [ २ ] उभयमपि क्रत्वर्थं पुरुषार्थेन, यथा–पूर्वोक्तं पाञ्चदश्यं साप्तदश्यं च 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति काम्येन एकविंशतित्वेन बाध्यते । [ ३ ] पूर्वं परेण, यथा–'यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः परिसमाप्यते, यदि पूर्वस्मिन् दास्यन् स्यात् तद्दद्यात् । यदि प्रतिहर्ता सर्ववेदसं दद्यात्' इति द्वयोर्निमित्तयोः द्वे नैमित्तिके विहिते, तत्र निमित्तयोः पौर्वापर्ये परेण नैमित्तिकेन पूर्वनैमित्तिकं बाध्यते । [ ४ ] प्राकृतमर्थलोपेन बाध्यते, यथा–कृष्णलचरौ अवघातः प्राकृतश्चोदकप्राप्तो वैतुष्यरूपार्थलोपात् । यथा वा स्वयंचिते बर्हिषि स्तरणं प्राप्तिरूपार्थलोपात् । [ ५ ] प्राकृतमेव पर्युदासेन बाध्यते, यथा 'न होतारं वृणीते' इति विध्यादि श्रुतम्, तत्र वैधनिषेधे विकल्पप्रसक्तेः पर्युदासत्वं नित्यबाधार्थं दशमे उक्तम् । ( १०।८।१।१–४ ) । [ ६ ] प्राकृतमेव प्रत्याम्नानेन बाध्यते, तदपि आरभ्याधीतेन अनारभ्याधीतेन चेति द्विधा । आद्योदाहरणं यथा–'कुशमयं बर्हिर्भवति' इति प्रकृतिप्राप्ताः कुशाः 'शरमयं बर्हिर्भवति' इति विकृतौ ( सौमारौद्रादौ ) विहिते शरैर्बाध्यन्ते । ( ७ ) द्वितीयोदाहरणं यथा–'य इष्ट्वा' इत्यनारभ्य विहितेन पयस्यावत्त्वेन विकृतिषु अतिदिष्टदेयद्रव्यस्य बाधः ।

[ ८ ] सामान्यविहितं विशेषविहितेन बाध्यते । तदपि विधेयभेदे विधेयैक्ये चेति द्विधा । तत्राद्योदाहरणं यथा—पदेन आहवनीयस्य बाधः । [ ९ ] द्वितीयोदाहरणं उपसंहारः । [ १० ] सामान्यविशेषभावो न वाक्यानेकत्वे एव, किन्तु वाक्यैक्येऽपि, यथा— अग्रे ( ७।३।५।१६ ) उक्तं 'शरुण्या निष्कासेन' इति द्रव्यविशेषेण अवभृथनाम्ना सामान्यतोऽतिदिष्टः पुरोडाशो बाध्यते । [ ११ ] निष्प्रयोजनं सप्रयोजनेन बाध्यते, यथा निगदेषु परसंबोधनार्थेषु तदर्थं कल्पितविधिनाऽपि प्राप्तेन उच्चैस्त्वेन उपांशुत्वम् 'उपांशु यजुषा' इत्यनेन प्राप्तं बाध्यते । [ १२ ] अल्पं भूयसा बाध्यते, यथा— पञ्चदशरात्रे नाम्नां मिथश्चिन्तायां ( १२।३।७।२२ ) एकं अभिप्लवाम आग्नेयीसुब्रह्मण्याप्रवर्तकं अनेकैन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना बाध्यते । [ १३ ] सावकाशं निरवकाशेन, यथा — 'यत्किञ्चित् प्राचीनं' इति वीप्सार्थकयत्किञ्चिच्छब्दबलेन अग्नीषोमीयप्राग्भावि-पदार्थविशेषोद्देशेन विहितं दीक्षणीयातोऽन्यत्रापि सावकाशमुपांशुत्वं दीक्षणीयादिमात्रार्थेन 'स्वरेण' इति स्वरेण अन्यत्र निरवकाशेन बाध्यते । तथा विशेषसमाख्यया सामान्यसमाख्याबाधोऽपि तार्तीयः ( ३।७।२०।४१–४२ ) अत्रोदाहरणम् । [ १४ ] अङ्गं प्रधानेन बाध्यते, यथा— पवमानेष्टिषु अग्निहोत्रहवणी नियोगेण बाध्यते । अङ्गधर्मः प्रधानधर्मेण बाध्यते, यथा— दीक्षणीयायाः पर्वकालत्वं सुत्यापर्वकालत्वेन । [ १५ ] उपादेय अनुपादेयेन, यथा—प्रातपनीयोत्कर्षे अग्निप्रणयन कालेन बाध्यते ।

त इमे पञ्चदश शास्त्रीयबाधभेदाः, पूर्वे च लौकिकाः षट्, इति एकविंशतिर्बाधभेदाः ।

प्रसङ्गलक्षणोऽपि बाधः प्राप्तबाध एव । स तु सप्तविधः । [ १ ] प्रधानप्रसङ्ग एकः प्रकारो यथा— काम्यार्थेन अग्निहोत्रादिप्रयोगेण नित्यतत्प्रयोगस्य प्रसङ्गसिद्धिः । अङ्गप्रसङ्गस्तु षोढा । तत्राद्य औपदेशिकेनाङ्गेन औपदेशिकस्य प्रसङ्गः । [ २ ] तत्रापि नैमित्तिकेन नित्यस्य यथा— वैश्यनिमित्तकसान्नाय्येन नित्यस्य सान्नाय्यस्य । [ ३–४ ] तथा काम्येन नित्यस्य नैमित्तिकस्य च यथा— प्रतिष्ठार्थेन एकविंशतित्वेन साम्नाय्यस्य नित्यस्य, वैश्यनिमित्तकस्य च साम्नाय्यस्य । [ ५ ] औपदेशिकेन आतिदेशिकस्य यथा— दर्शार्थेन प्रयाजादिना चित्रेष्ट्यर्थस्य प्रयाजादेः । [ ६ ] आतिदेशिकेन आतिदेशिकस्य यथा— पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः । [ ७ ] आतिदेशिकेन औपदेशिकस्य यथा — 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति काम्ये अनुवचनान्तरे नित्यानुवचनप्रकृतिके अतिदिष्टाभिः सामिधेनीभिः प्राकृतसामिधेनीकार्यस्य अग्निसमिन्धनस्य प्रसङ्गतः सिद्धेः तस्य बाधः ।

त इमे सप्त प्रसङ्गलक्षणबाधाः पूर्वैः एकविंशतिसंख्यैः बाधैः सह अष्टाविंशतिर्बाधभेदाः सिद्धाः । वैकल्पिकस्तु प्राप्तबाधः पूर्वमुद्दिष्टः, सोऽपि विभक्तविभागेन चतुर्विधः । तथाहि औपदेशिकेन औपदेशिकस्य कश्चित् । सोऽपि चतुर्धा, भावयोः भावाभावयोश्च । द्विविधोऽपि चायं प्रकृतौ विकृतौ चेति । [ १ ] प्रकृतौ उपदिष्टयोर्भावयोर्यथा—व्रीहियवयोः । [ २ ] विकृतौ उपदिष्टयोर्भावयोर्यथा— 'खादिरो यूपो भवति' 'बैल्वो यूपो भवति' इति । [ ३ ] प्रकृतौ उपदिष्टयोः भावाभावयोर्यथा— 'अग्निहोत्रे न दध्यभिश्रयेत्, अभिश्रयेदित्येके' इति । [ ४ ] विकृतौ उपदिष्टयोः भावाभावयोर्यथा — 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इति ।

कश्चित्तु उपदिष्टेन अतिदिष्टस्य वैकल्पिको बाधः, स तु त्रिविधः उपदिष्टेन भावेनातिदिष्टस्य भावस्य वैकल्पिको बाधः । [ ५ ] यथा पित्र्यायां 'त्रीन् वा परिधीन् परिदध्यात्' इत्यापस्तम्बसूत्रम् । अत्र हि प्राकृतपरिधानानुवादेन त्रित्वस्यापि विधौ वाक्यभेदापत्तेः परिधित्रयमेव वैकल्पिकतया विधीयते, तदभावपक्षे अतिदेशप्राप्तमेव परिधित्रित्वमनुज्ञायते । [ ६ ] उपदिष्टेन भावेन अतिदिष्टस्याभावस्य वैकल्पिको बाधः, स च तत्र यत् प्रकृतौ किञ्चिन्नियमेन विहितम्, विकृतौ तदेव वैकल्पिकतया विधीयते, तादृशमुदाहरणं मृग्यम् । [ ७ ] उपदिष्टेनाभावेन अतिदिष्टस्य भावस्य वैकल्पिको बाधो यथा— पशौ आज्यभागौ अतिदेशतः प्राप्तौ 'न तौ पशौ

बाधभेदनिरूपणम्

पाठेन मुख्यक्रमबाधे तूदाहरणं 'प्रकृतौ तु स्वशब्दत्वात्०' इत्यधिकरणे (५।१।८।१५) उक्तम्। अग्नीषोमीयनिर्वापं आज्यनिर्वापोत्तरं मुख्यक्रमात् प्राप्तं औषधनिर्वापत्वेन आज्यनिर्वापात् प्राक् पाठात्तथैव कार्यं इति ॥ मुख्यक्रमेण प्रवृत्तिक्रमबाधे तूदाहरणं 'अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात्' इत्यधिकरणे (५।४।२।२-४) उक्तम्। सानाय्यधर्मा हि पूर्वं प्रवृत्ताः पश्चादाग्नेयधर्माः, प्रदानं तु आग्नेयस्य प्रथमम्, पश्चात् सानाय्यस्य तत्स्विष्टकृदवदानम्। प्रयाजशेषाभिघारण चैन्द्राग्नासादनं तु सानाय्यस्य पूर्वं प्रवृत्तिक्रमात् प्राप्तम्, मुख्यक्रमात्तु आग्नेयस्य पूर्वं कार्यमिति ॥ एवं पञ्चदशानां बाधानां मध्ये अर्थेन पाठबाध, पाठेन स्थानबाध, पाठेन मुख्यबाध, मुख्येन प्रवृत्तिबाधश्च इत्येतेषां चतुर्णां बाधभेदानामुदाहरणानि चत्वारि चतुर्ष्वधिकरणेषु विशेषत उदाहृतान्युक्तानि। श्रुत्याबाधभेदोदाहरणं च 'क्रमकोपोऽर्थशब्दाभ्याम्' इति जैमिनिनैव सूत्राचिन्तयोपनिबद्धमुक्तम्। इतरेषां दशानां बाधभेदानामुदाहरणानि अनुपलम्भात् पञ्चमे नोक्तानि अस्माभिश्चात ॥ श्रुत्यर्थादिषु च श्रुतिलिङ्गादिवत् सजातीयानामपि अन्योन्यबाधा श्रुत्यो, अर्थयो, स्थानयो, मुख्ययो, प्रवृत्त्योश्च इत्येवंविधा उदाहरणासंभवात् पञ्चमे न चिन्तिता। पाठयोस्तु विधिमन्त्रपाठयोर्मन्त्रपाठो बलवान् इत्युक्तं 'मन्त्रतस्तु विरोधे स्यात्' इत्यधिकरणे (५।१।५।१६) अग्नीषोमीयब्राह्मणं प्राक् पठितम्, पश्चादाग्नेयब्राह्मणम्, मन्त्रकाण्डे तु प्रागाग्नेयस्य याज्यानुवाक्यायुगलम्, ततोऽग्नीषोमीयस्य, तत्र मन्त्रपाठक्रमेण विधिपाठक्रमबाधात् आग्नेयं पूर्वमनुष्ठेयं पश्चादग्नीषोमीयं इति। ते एते षोडश बाधभेदाः पूर्वोक्तैर्द्विपञ्चाशद्भिः बाधभेदैः सह अष्टषष्टिः श्रौतबाधभेदाः सिद्धाः।

तथा श्रुत्या स्मृतिर्बाध्यते। यथा— 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः ॥ तथा श्रुत्या आचारो बाध्यते। यथा— ब्राह्मणस्य सोमपानरूप आचारः 'तस्माद् ब्राह्मणेन न मद्यं पेयम्' इति निषेधरूपश्रुत्या ॥ तथा स्मृत्या श्रौताचारो बाध्यते। यथा— 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च। समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥' इति स्मृत्या मातुलकन्यापरिणयनाचारो दाक्षिणात्यानाम् ॥ तथा प्रत्यक्षवैदिकलिङ्गेन स्मृतिर्बाध्यते। अनोदाहरणं सोमेश्वरेणोक्तम्। मातुलकन्योद्वाहनिषेधस्मृतिः पूर्वोक्ता श्रौतलिङ्गेन बाध्यते। श्रौतलिङ्गद्वयं च तत्रोक्तम्। 'गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः' इत्येकम्, 'आ याहीन्द्र पथिभिरीळितेभि' इत्यपरं मन्त्ररूपम्, वाजसनेयके 'स्रुचौ व्यूहति, प्राचीं जुहूं प्रतीचीमुपभृतम्' इति स्रुग्व्यूहनविधिवाक्यशेषरूपम् 'तस्मात् समाना देव पुरुषाद्वत्ता चाद्यश्च जायते, उत तृतीये सङ्गच्छावहे, चतुर्थे सङ्गच्छामहे' इति तृतीयम्। तदर्थं तन्निरसनं शास्त्रदीपिकाप्रकाशेऽस्माभिः विस्तरेणात्रहोक्तं। इदं तु सत्रोदाहरणं 'आचमनं निरसनमथो अग्निविकर्तनम्। सूर्यायाः पश्य रूपाणि तानि ब्रह्मा तु शुम्भति ॥' इति। सूर्याख्याया नववध्वाः आच्छादनविशसनविकर्तनाख्य— वस्त्रयथाशक्तिविषयश्रौतमन्त्रलिङ्गेन 'सूर्याविदे वधूवस्त्रं दद्यात्' इति स्मृते एकवस्त्राचारः णार्याया बाधः ॥ तथा प्रत्यक्षवैदिकलिङ्गेन आचारो बाध्यते। यथा यववराहाधिकरणे (१।३।४।८-९) 'यत्र वा अन्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति' इत्यर्थवादलिङ्गेन प्रियङ्गुषु यवशब्दप्रयोगरूप आचारो बाध्यते ॥ एवं श्रुतिस्मृत्याचारसंबद्धाः त्रयो बाधभेदाः पूर्वोक्ते अष्टषष्टिसंख्ये बाधभेदे सह एकसप्ततिः श्रौतबाधभेदाः सिद्धाः।

तथा [१] आप्तस्मृत्या अनाप्तस्मृतिर्बाध्यते, यथा 'नात्मानं घातयेत्' इति मन्वादिस्मृत्या 'केदारे घातयेद् देहं' इति पाशुपतादिस्मृतिः ॥ [२] तथा अविगीतस्मृत्या विगीतस्मृतिर्बाध्यते, यथा— 'न स्तेन स्यात्' इत्यनया 'तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥' इत्यन्यस्मृतिरपि दृष्टार्थत्वात् ॥ [३] अदृष्टार्थस्मृत्या दृष्टार्था स्मृतिर्बाध्यते, यथा— 'न घातु ब्राह्मणं हन्यात्' इत्यनया 'जिघांसन्तं जिघांसीयात्' इत्यर्थशास्त्रादिदृष्टार्था ॥ [४] एवं आप्ताचारेण अनाप्ताचारो

बाध्यते, यथा– पीत्वधिकरणे (१।३।५ शा.) उक्तं वृक्षविषयपीलुशब्दप्रयोगरूपाचारेण हस्तिविषयम्लेच्छरूपानासमप्रयोगरूपाचारबाधः इति ॥ [५] तथा अविगीताचारेण विगीताचारो बाध्यते, यथा– दाक्षिणात्यानां मांसभक्षणवर्जनाचारः प्राच्यादीनां च मांसभक्षणाचारः । तयोरुभयोः आचारयोः श्रुत्यनुमानं सामान्यत एव स्यात्, दाक्षिणात्यकाव्यानुपपद्यकल्पनायाः होलाकाधिकरणन्यायेन (१।३।७।१९–२२) निरस्तत्वात् । ततश्च किं विकल्पः उत अन्यतरेणान्यतरबाधः, बाधेऽपि केन कस्य इति वीक्षायां लोभादिमूलकत्वेन भक्षणाचारस्य विगीतस्य असंभवल्लोभादिमूलकेन अविगीतेन वर्जनाचारेण बाधः ॥ [६] तथा अदृष्टार्थेन आचारेण दृष्टार्थः आचारो बाध्यते, यथा– पक्वन्तोऽच्छवाकाचारेण 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इति सूत्रोक्ते (१।३।६।७ शा.) श्रुतिकल्पनोक्तेः अदृष्टार्थेन तत्समानकालीनस्य यस्य कस्य चित् दृष्टार्थस्याचारस्य बाधः ॥

एवैते षट् स्मृत्याचारसंबद्धा बाधभेदाः पूर्वोक्तैः त्र्यशीतिसंख्यैर्बाधभेदैः सह एकोननवतिः बाधभेदाः सिद्धाः ।

तथा पैत्र्या इतिवत् तृतीयादिप्रभवया स्मृत्या लिङ्गादिप्रमाणप्रभवा बाध्यते । यथा 'पुनं प्रतिग्रहीष्यन् निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा' इत्यादिना होमादीतिकर्तव्यतायुक्तपुनःप्रतिग्रहादिविषयकस्य शिष्टश्रुतितृतीयाश्रुतिप्रभवया स्मृत्या 'न दोषो ग्रामे अन्यथात्वमस्ति' इत्यादेः शेषः अपरत्वं अन्योत्पादितं नास्ति इत्यर्थत्वेन दत्तकपुत्रनिषेधलिङ्गत्वात् तत्प्रभवः 'यस्य ये बीजिनो जातास्तस्य ते नेतरस्य च' इत्यादेः इति ।

तेन एतेऽपि पञ्चदश भेदाः शेषप्रमाणे, पञ्चदश च शेषिप्रमाणे इति त्रिंशत् । तदेवैते पूर्वोक्तैः एकोननवतिबाधभेदैः सह एकोनविंशत्यधिकं शतं अप्रामाण्यबाधभेदाः सिद्धाः ।

[१] तथा विधिप्रभवया स्मृत्या अर्थवादप्रभवा सा बाध्यते, यथा– 'मा गामनागामदितिं वधिष्ट' इतिविधिप्रभवया 'गां न हन्यात्' इत्यनया 'तदद्वेषादो मनुष्यराज आगते अन्यस्मिन् वाऽर्हति, उक्षाणं वा वेहतं वा क्षदन्ते' इत्यर्थवादप्रभवा 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इति ॥ [२] तथा संदिग्धमसंदिग्धेन, यथा– शर्कराञ्जनं केन इति संदिग्धं घृतस्तुत्या ॥ [३] तथा दुर्बलाश्रयं बलवदाश्रयेण बाध्यते, यथा– दुर्बलक्रमाश्रयं 'वेदं कृत्वा वेदिं करोति' इति वेदवाक्यं बलवत्पदार्थाश्रयेण 'क्षुते आचामेत्' इति स्मृतिवाक्येन ॥ [४] तथा उपसंहारस्थं उपक्रमस्थेन, यथा– 'उच्चैर्ऋचा' इत्याद्युपसंहारस्थं ऋगादिपदं वेदोपक्रमेण ॥ [५] तथा अत्यन्तादृष्टार्थं नियमादृष्टार्थेन, यथा– अवघाते आज्यभागाभ्यार्थत्वमौपधार्थत्वेन ॥ [६] आरादुपकारित्वं संनिपातित्वेन, यथा– पशुपुरोडाशादौ ॥ [७] अनेकार्थविधानं अल्पार्थविधानेन बाध्यते, यथा– 'दध्ना जुहोति' इत्यादौ विशिष्टविधिर्गुणविधिना ॥ [८] तथा अनेकार्थत्वं एकार्थत्वेन बाध्यते, यथा– आकृत्यधिकरणे (१।३।९।३०–३५ वर्णके २) ॥ [९] तथा अनेकशब्दत्वं एकशब्दत्वेन बाध्यते, यथा– व्याकरणाधिकरणे (१।३।८।२४–२९) ॥ [१०] बहुबाधः अल्पबाधेन बाध्यते, यथा– अश्वप्रतिग्रहेष्टेः प्रतिग्रहीतृविषयत्वे 'वरुणाय' इति चतुर्थ्याः पञ्चम्यर्थत्वम्, 'अनयत्' इत्यस्य च प्रतिग्रहार्थत्वम् 'स स्वां देवतां' इति च तच्छब्दस्य अप्रामाण्यनिर्दिष्टवरुणपरामर्शित्वम्, दातृत्वे च वरुणस्यादेवतात्वात् देवताशब्दायोगः इति बहुबाधः । दातुरिष्टिपक्षे प्रतिग्रहीतृमात्रस्य स्वार्थत्यागः ॥ [११] तथा वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन बाध्यते, यथा– आधाने सामवेदोत्पन्नं वारवन्तीयादि उच्चैस्त्वेन प्राप्तं यजुर्वेदविहितत्वेन उपांशुत्वमाप्नोति ॥ [१२] तथा शाखान्तरविहितं स्वशाखाविहितेन बाध्यते, यथा– उदितहोमादि अनुदितहोमादिना ॥ [१३] अनारभ्याधीतं प्राकरणिकेन बाध्यते, यथा– अनारभ्याधीतं साप्तदश्यं पाञ्चदश्येन । ननु इह मित्रविन्दादौ उपसंहारेणैव प्रकृतौ अनारभ्याधीतसाप्तदश्यबाधः सिद्धः, न प्रकरणाधीनपाञ्चदश्येन, इत्यसंकीर्णमुदाहरणं वाच्यं यत्र प्रकरणाधीतेनैव अनारभ्यवादो बाध्यते इति । तदुच्यते । यतो भुत 'षट् षोडशिनीमितान् मिनुयात्' इति यूपैकादशिनीमानम्, तत्र

अप्रामाण्यात् यच्छब्दत्यागेन विधिरङ्गीकृतो वार्तिकमते, तेन ज्योतिष्टोमे अग्निविधिना प्रकरणाधीतेन बाधित 'रथाक्ष मात्राणि यूपाहवनीयाणि भवन्ति' इत्यनारभ्यवादात् विकृतौ अग्निरहिता गच्छति इति । तदिदं शास्त्रान्तराधिकरणे उक्तं ( २।४।२।८ ) ॥ [१४] तथा प्रयोगवचनाश्रय चोदकाश्रयेण बाध्यते, यथा– श्येने प्राकृताङ्गेषु उद्गातु कर्तृत्वं चोदकप्राप्तेन नानर्त्विग्कर्तृकत्वेन ॥ [१५] तथा देवताश्रय द्रव्याश्रयेण बाध्यते, यथा– ऐन्द्रपुरोडाशे देवतासामान्यात् सान्नाय्यविध्यन्त स्यात्, स तु द्रव्य सामान्यात् प्रवृत्तेनाग्नेयविध्यन्तेन बाध्यते ॥ [१६] पश्चादाम्नात पूर्वाम्नातेन, यथा– अध्वरकल्पाया आग्ना वैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् आमावास्य तन्त्रेण सारस्वत्या आज्यभागाया प्राप्त पौर्णमासतन्त्रम् ॥ [१७] श्रुत्या लक्षणा बाध्यते, यथा– उद्भिदादौ नामत्वे श्रुत्या चित्रामनाधिकरण्यात् गुणविधौ प्रसक्ता मत्वर्थलक्षणा, निषादस्थपत्यादौ च ॥ [१८] श्रुत्यैव गौण्यपि बाध्यते, यथा– बर्हिर्मन्त्रप्रकाश्य गौण कुशसदृश उलपादि मुख्यकुशरूपार्थेन ॥ [१९] लक्षणयाऽपि गौणी बाध्यते, यथोक्त तद्व्यपदेशाधिकरणे ( १।४।४।५ ) पूर्वपक्षे 'अन्यथोंपादानेन कर्मणि प्रवृत्तौ अत्यन्तविप्रकृष्टा गौणता स्यात्' इति (वा पृ ३३६)। न चैतत् पूर्वपक्षोक्तिमात्रम्, सिद्धान्ते लक्षणत्वेन गौण्या ह्रीकरणात् अन्यत्र दौर्बल्यस्य समतयात् । दौर्बल्यबीज तु लक्षणाया शक्यसम्बन्धमात्रापेक्षणात्, गौण्या शक्य धर्मगुणसम्बन्धापेक्षणात् । अत्र स्थितोदाहरण सप्तमे ( ७।३।१४।३५–३६ ) 'पृष्ठैरुपतिष्ठते' इत्यत्र चित्राधिकरणन्यायेन स्तोत्रवचन पृष्ठशब्द इति निर्णयादम् । स 'मासमग्निहोत्रम्' इतिवत् गौण्या हिङ्कारादिपृष्ठधर्मातिदेशार्थ इत्याशङ्क्य गौणीतो बलीयस्या लक्षणया मन्त्रा एव करणतया विधीयन्ते इति सिद्धान्तितम् । ननु 'उपा मन्त्रकरणे' इति मन्त्रकरणके 'अभिधानेऽर्थे प्रयोजने विवक्षिते उप पूर्वात् तिष्ठते आत्मनेपदस्मरणात् अभिधानार्थं अग्नि समीपे तिष्ठेत् इत्याख्यातपदार्थावगमात् समीपस्थितौ च पृष्ठधर्माणां हिङ्कारादीना अप्राकृतकार्यतापत्तेरनतिदेश इति न्यायान्तरेणैव सिद्धान्त उक्त, न लक्षणाप्राबल्यात्, इति चेत् । सत्यम् । तथापि न्यायद्वयेन सिद्धान्त साधन न विरुध्यते । यथा– नैमित्तिकेन मासदर्शा दिना नित्यपाशुदर्शादिबाधे, यथा वा काम्येन 'एक विंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इत्यादिना नित्यनैमित्तिकयोरपि तादृशे इति ॥ [२०] तथा लक्षणाना मपि मध्ये लक्षणया लक्षितलक्षणा बाध्यते, यथोक्त नवमे ( ९।१।२।२–३ वर्णक २ ) 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इत्यादि स्वरयोर्नियमो न लक्षितलक्षणया ज्योतिष्टोमापूर्वार्थं, किन्तु लक्षणया दीक्षाऽपूर्वार्थं एवेति ॥ [२१] तथा लक्षणाना मध्ये अजहत्स्वार्थया जहत्स्वार्था बाध्यते, पूर्वस्या मुख्या र्थस्य वाक्यार्थान्वयात् उत्तरस्या तदभावात् । एतदेव गौणीतो मत्वर्थलक्षणाया बलीयस्त्वाय तद्व्यपदेशाधि करणपूर्वपक्षे वार्तिककृतोक्त ( वा पृ ३३६ ) 'गुण विधिपक्षे हि स्वार्थापरित्यागेनैव श्येनपद तद्वन्त उत्तर काले लक्षयति, आरम्भोच्चारणकाले तु स्वार्थमेव विनि युङ्क्ते, मत्वर्थस्तु श्येनार्थानुपयोगात् आदित एव सादृश्यविषयस्य पद प्रयुङ्क्ते इत्यभ्युपगमात् श्रुतिबाध प्रसङ्ग इति । एतच्च बीज जहत्स्वार्थाजहत्स्वार्थलक्षण योरपि प्रकाशते तुल्यम् । तत्रोदाहरण 'सूक्तवाकेन प्रस्तर प्रहरति' इति । अत्र हि श्रुतिविनियुक्तस्य सूक्तवाकस्य करणत्वात् तत्प्रकाश्याना देवताना सयोगे कल्पिते तदुपपत्त्यर्थं कल्पितो याग प्रहरतिना लक्ष्यते, तत्र यागमात्र न लक्ष्यते, किन्तु प्रक्षेपविशेषयुक्त इति । गौतमीयास्तु यत्र शक्यलक्ष्ययो उभयोरपि प्राधान्य 'काकेभ्यो दधि रक्ष्यताम्' इत्यादौ तत्रैव अजहत्स्वार्था लक्षणा इत्याहु । तत् परिभाषामात्रम् । तदिदमुदाहरण प्रकृतिप्रत्ययैकशब्दविषयम् ॥ [२२] प्रकृतिप्रत्ययरूप शब्दभेदविषय तु उदाहरण यथा– 'प्रोद्गातृणा' इत्यत्र उद्गातृप्रातिपदिक तद्गीयसम्बन्धितीयसामभक्तेः गुणैरेकस्यैव मुख्यस्य पुरुषस्याभिधायकम्, तत्र उद्गात्रादिपुरुषत्रय लक्षणा अजहत्स्वार्था बहुवचने तु एकत्वलक्षणा जह त्स्वार्था, सा पूर्वया बाध्यते इत्युक्त तृतीये ( ३।५।८। २३–२६ ) ॥ [२३] तथा निरूढलक्षणया अनि-

रूढलक्षणा बाध्यते, उदाहरणं मृग्यम् ॥ [२४] तथा एकलक्षणया अनेकलक्षणा बाध्यते, यथा— दशमे (१०।४।१ वर्णकं २)। 'रथघोषेण' इत्यत्र समाहारद्वन्द्व. इति पूर्वपक्षे पदद्वयलक्षणा स्यात्, तत्पुरुषे तु पूर्वपदे एवेति स एव युक्तः इति सिद्धान्तितम् ॥ [२५] तथा अल्पलक्षणया बहुलक्षणाया बाधः 'बहुबाधः अल्पबाधेन' इत्यत्रोदाहृतः ॥ [२६] तथा कल्प्यया लक्षणया अकल्प्या लक्षणा बाध्यते, यथा— 'ऋग्भिः प्रातर्दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः ॥' इत्यत्र ऋगादिशब्दानां वेदपरा लक्षणा कल्प्या, इति 'उच्चैरृचा क्रियते' इत्यत्र ऋगादिशब्दा एव वेदपराः, न वेदपदं ऋगादिलक्षकं तल्लक्षणाया अकल्प्यत्वादिति ॥ [२७] तथा लक्षणयोरपि कार्यलक्षणया धर्मलक्षणा बाध्यते, यथा— 'त्रैधातव्या दीक्षणीया' इति ॥ [२८] तथा गौणीनामपि मध्ये भूय-लिङ्ग-समवायाभ्यां या गौणी तया इतरा गौणी बाध्यते। पूर्वस्या मत्वर्थलक्षणायामिव बहुतरस्यापि वाक्यार्थान्वयात्, उत्तरस्या तदभावात् ॥ [२९] भूयोलिङ्गसमवायेऽपि पूर्वया उत्तरा बाध्यते। पूर्वस्या बहूनां वाक्यानां वाक्यार्थान्वयात्, उत्तरस्या तदभावात् ॥ [३०] तथा नियमविधिना अपूर्वविधिः बाध्यते, यथा 'उपांशु यजुषा' इति निगदेषु अपूर्वविधित्वापत्तेः यजुरन्तरेषु नियमविधिरेव अङ्गीकृतः ॥ [३१] तथा नियमविधिनैव परिसंख्याविधिर्बाध्यते, यथा— 'ऋतौ भार्यामुपगच्छेत्' इति ॥ [३२] तथा मन्त्रक्रमेण ब्राह्मणक्रमो बाध्यते, यथोक्तं 'मन्त्रतस्तु विरोधे स्यात्' (५।१।१६) इति ॥ [३३] तथा उत्पत्तिशिष्टेन उत्पन्नशिष्टं बाध्यते, यथा— आमिक्षया वाजिनम् ॥ [३४] तथा अनुवादेन विधित्वं (विध्यन्तर्गतिः) यथा— अवभृथे 'अग्नीवरुणौ स्विष्टकृतौ यजति' इति स्विष्टकृच्छब्दलक्षिते स्विष्टकृत्त्वविशिष्टाग्निकार्ये अग्नीवरुणयोर्विधौ विशिष्टविधानापत्तेः अस्विष्टकृच्छब्दकं वचनं कार्यं इति पूर्वपक्षिते यजतिना प्रकृतस्विष्टकृद्यागमेव उद्दिश्य अग्नीवरुणयो विधौ एकविशेष्य-द्वयानापत्तिरेव, द्वयोरपि विशेषणमात्रमेवानूद्यते स्विष्टकृतौ इति इत्युक्तं दशमे (१०।४।१७।३४-३५)। ईदृशस्वीर्णोदाहरणादेव अनेकार्थविधिः अस्वार्थविधानेन इत्यनेनागतार्थता ॥ [३५] तथा अर्थवादत्वेन विधित्वं बाध्यते। अर्थवादयोगाद्धि विधित्वतः 'उपरि हि देवेभ्यो धारयति' इति । तथा 'विष्णुरुपांशु यष्टव्यः' इत्यादौ ॥ [३६] तथा प्रतिप्रसवविधिना नियमविधिर्बाध्यते, यथा— 'धृते श्रपयति' इति श्रपणप्रतिप्रसवस्य धृतनियमस्य च एकत्र वाक्ये कर्तुमशक्यत्वात् पूर्वेणोत्तरबाधे उत्पत्तिवाक्यमात्रस्थत्वानुवादः इत्युक्तं दशमद्वितीयपादान्ते ॥ [३७] तथा प्रतिप्रसवविधिना अपूर्वविधिरपि बाध्यते, यथा— 'पूषा प्रपिष्टभागः' इति पेषणस्य चरौ प्रतिप्रसवेन पयो पुरोडाशे चापूर्वविधिः ॥ [३८] तथा वैदिकत्वसामान्योपस्थितेन अवैदिकं बाध्यते, यथा— अश्वप्रतिग्रहेष्टिनिमित्तं वैदिकं दानम्, न लौकिकम् ॥ [३९] तथा अनपेक्षितविधिः अपेक्षितविधिना बाध्यते, यथा— सोमवमनेष्टिः वैदिकसोमस्य वमने, न तु लौकिकस्य ॥ [४०] तथा देवतात्विनी तद्धितेन, चतुर्थी बाध्यते, यथा— 'वैश्वदेवी' इति तद्धितेन आमिक्षायाः विश्वैर्देवैः संबन्धं बोधयता 'वाजिभ्यः' इति चतुर्थी वाजिनस्य विश्वैर्देवैः संबन्धबोधयन्ती ॥ [४१] तथा तद्धितेनैव मन्त्रवर्णो बाध्यते, यथा— 'पात्नीवतं गृह्णाति' इति तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं बोधयता 'अग्नाऽऽइ पत्नीवाऽऽऽन्' इति आध्वर्यवमन्त्रवर्णः त्वष्टुर्देवतात्वप्रापक. ॥ [४२] तथा तद्धितेन द्वितीया बाध्यते, मृग्यमुदाहरणम् ॥ [४३] तथा चतुर्थ्या मन्त्रवर्णो बाध्यते, यथा— सोमेश्वमने अग्निहोत्रे 'यदग्नये च प्रजापतये च सायं जुहोति' इति चतुर्थ्या केवलस्याग्नेर्देवतात्वप्रापिकया 'अग्निर्ज्योतिः' इति मन्त्रवर्णो ज्योतिष्ट्वविशिष्टस्याग्नेः देवतात्वप्रापक. ॥ [४४] तथा चतुर्थ्यैव द्वितीयाऽपि बाध्यते, मृग्यमुदाहरणम् ॥ [४५] तथा मन्त्रवर्णेन द्वितीया बाध्यते, यथा— उपांशुयाजे अग्नीषोमीययाज्यापन्नवर्णेन 'तावमृतावाज्यस्येत वी' इति द्वितीया ॥ [४६] तथा प्रतिनिधिनियमेन द्रव्यनियमविधिर्बाध्यते, यथा— पूतीकेषु ॥ [४७] तथा प्रतिनिधिनियमेनैव

बाधभेदनिरूपणम्

अभावे विधिरपि बाध्यते, यथा—पूर्वोक्तेष्वेव ॥ [ ४८ ] तथा अनुषङ्गेण अध्याहारो बाध्यते, यथा– 'या ते अग्ने रजाशया' इत्यादौ ॥ [ ४९ ] तथा बलवत्तया रूढ्या योगो बाध्यते, यथा– 'रथकारः' इति ॥ [ ५० ] तथा अन्यत्र योगेन रूढिः बाध्यते, यथा– प्रोक्षणीशब्दे ॥ [ ५१ ] तथा बलवज्जातिवाचित्वेन संस्कारनिमित्तत्वं बाध्यते, यथा– बर्हिराज्यपुरोडाशादौ ॥ [ ५२ ] तथा बलवद्योगेन संस्कारनिमित्तत्वं बाध्यते, यथा– प्रोक्षणीशब्दे एव ॥ तथा यौगिक–प्रख्यशब्दान्तर–तत्प्रख्य–तद्व्यपदेशेषु नामधेयत्वेन गुणविधिरेव बाध्यते। निरूढेषु तु गुणविधित्वेनैव नामधेयत्वं बाध्यते सोमादिषु । एते पञ्च बाधभेदाः द्विपञ्चाशद्भिः सह सम्पद्यन्ते अप्राप्तबाधभेदाः। पूर्वोक्तैः एकोनविंशत्यधिकशतसंख्यैः अप्राप्तबाधभेदैः सह षट्सप्तत्यधिकं शतं अप्राप्तबाधभेदाः सिद्धाः । तथा पूर्वोक्ताः षट्सप्तत्यधिकं शतं प्राप्तबाधभेदाः, एते च षट्सप्तत्यधिकं शतं अप्राप्तबाधभेदाः, मिलित्वा शतद्वयं द्विपञ्चाशदिंशत्य बाधभेदा भवन्ति ।

एतेषामपि च सर्वेषां बाधभेदानां आनर्थक्यप्रतिघाते विपरीतो बाधो भवति, तेन सर्वेऽपि द्वैगुण्यमापन्नाः सन्तः चत्वारि शतानि चतुरशीतिश्च संभाव्यन्ते । तद्यथा 'व्रीहीनवहन्ति' इत्यत्र व्रीहिमात्रावघातप्रापिका श्रुतिः प्रकरणेन बाध्यते । एवं तत्रैव लक्षणया मुख्यवृत्तिरपि (बाध्यते)। श्येनादौ च उपक्रमानर्थक्यात् गौण्या मन्त्रवर्णलक्षणा बाध्यते । न केवलं तार्तीयप्रमाणमेव आनर्थक्यप्रतिघातेन बाध्यते, किन्तु द्वैतीयकमपि यथा अभ्युदितेष्टौ 'ये स्वपिताः, येऽग्निष्टाः' इत्यनयोर्वाक्ययोः अनेकार्थोपादानात् वाक्यभेदापत्तेः गुणेन कर्मभेदस्य प्रसक्तस्य 'सह श्रपयति' इति विध्यानर्थक्यात् बाधः । श्रुत्यादीनां च आनर्थक्याभावेऽपि उत्तरोत्तरेण अन्यथाऽनुपपत्तिलक्षणेन पूर्वस्यपूर्वस्य बाधो भवति । तत् सोदाहरणं प्रदर्श्यते । तद्यथा लिङ्गेन श्रुतिबाधे यथा, 'स्रुवेणावद्यति' 'स्वधितिनावद्यति' इति स्रुवादिभेदः शेषः श्रुत्या द्रवावदाने स्फ्यावदाने वा अनेकत्र शेषिणि प्राप्तः, लिङ्गेन द्रवावदाने एव नियमनात् शेष्यन्तरं बाध्यते । तथा एकस्मिन् शेषिणि द्रवावदानादौ श्रुत्यैव स्रुवः करणान्तरं च अनेकशेषः प्राप्तः, तत्र लिङ्गेन स्रुवमेव नियच्छत् करणान्तरं शेषमपि बाध्यते ॥ वाक्येन लिङ्गबाधे 'देवस्य त्वा' इति मन्त्रे सवित्रादिदेवताप्रकाशनसामर्थ्यं तमंशं सवित्रादौ विनियुञ्जान वाक्येन प्रकृताग्निदेवत्यनिर्वापे विनियुञ्जानेन बाध्यते । पशौ च 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' इत्याघारपतेः पूर्वाघारविषयता हिरण्यगर्भमन्त्रलिङ्गात् आगतस्य उत्तराघारे 'इन्द्र ऊर्ध्वोऽध्वरे' इति मन्त्रस्यान्यनियमादृष्टस्य क्लृप्तत्वात् तद्विषयतानिश्चये तत्समभिव्याहारमन्त्रवत् वाक्यात् लिङ्गं बाध्यते इति दशमे (१०।३।२।१३–१७) स्थितम् ॥ प्रकरणेन वाक्यबाधे श्येने 'निवीता ऋत्विजः प्रचरन्ति' इति विहितं निवीतं तार्तीयवेदिबर्हिःसदर्मन्यायेन (३।७।१।१–५) वाक्यात् अङ्गप्रधानार्थं प्रसक्तं श्येनप्रकरणात् प्रधानमात्रार्थं भवति । अत एव दशमे (१०।४।१।१–२ वर्णक १) तदेतु ऐष्टिकेषु चोदकप्राप्तमुपवीतं मिश्रविषयं इति नारिष्ठहोमबाधमुखपचिन्ताविषय इति वक्ष्यते । ननु एवं निवीतं अङ्गान्तरेऽपि न स्यात्, किञ्च तार्तीयवर्हिर्वेदिन्यायवैषम्यम् । उच्यते । सौमिकदीक्षादक्षिणवत् प्रधानार्थमेव सत् कर्तृद्वारा प्रयोगाङ्गत्वात् प्रधानादङ्गान्तरेषु उपकरिष्यति इति न तदर्थमपि वाक्यमायासनीयम् । प्रधानहविषि तु वेदिबर्हिषोरुपसादितेन अङ्गहविषयसादितं भवति, इति तदर्थमपि वाक्यस्य पृथगायासेन भाव्यम्, इति तार्तीयन्यायवैषम्यमिति ॥ क्रमेण प्रकरणबाधे 'हविष्मानासि' इति मन्त्रं आग्नेयादिष्वपि विनियुञ्जानं प्रकरणं उपांशुयाजमात्रे विनियुञ्जानेन यथाध्ययनाम्नानक्रमेण बाध्यते । स चाक्रियाप्रकाशको मन्त्रः अर्थाभिधानक्रियावैशेन प्रवृत्तः । अयं चाध्यटलिङ्गः अस्यार्थस्याभिधायकः इत्यनेन कथं प्रकरणविषय इति वाच्यम् । नियमवैधे उच्चारणावैशेनैव प्रहणसम्भवात् । अन्यत् प्रकारो ग्रेषम् ॥ समाख्यया क्रमबाधे ज्योतिष्टोमे परगोपाधानामुक्तिवा संनिधानात् सर्वत्राध्वर्यवत्वेन कर्तृत्वे प्राप्ते समाख्यया अपनया ॥ एवमेतावन्तरितादपरि इति पञ्चदश एतेऽपि बाधाः । तेऽपि शेषिशेषभेदात् द्विगुणाः त्रिंशत्, पूर्वैः

चतुर्णोत्यधिकशतचतुष्टयसंख्यैः सह चतुर्दशाधिकानि पञ्च शतानि बाधभेदा भवन्ति ॥ तथा प्रत्यक्षैः श्रुत्यादिभिः आनुमानिकाना श्रुत्यादीना बाधः, यथा— श्येनादौ 'शरमयं बर्हिः' इति प्रत्यक्षश्रुत्या 'बर्हिषि हवींष्यासादयति' इत्यानुमानिकश्रुतेः । त इमे पञ्चदश बाधाः ॥ तथा आनुमानिकैः श्रुत्यादिभिः आनुमानिकाना तेषा बाधः, यथा— पशौ अनुमेयैः प्रयाजादिविनियोजकैः श्रुत्यादिभिः पशुपुरोडाशे तद्विनियोजकाना आनुमानिकाना श्रुत्यादीनाम् । तेऽपि पञ्चदश बाधाः ॥ तथा आनुमानिकाना श्रुत्यादीना प्रत्यक्षैर्लिङ्गादिभिर्बाधः, यथा— कृष्णलेषु सामर्थ्येन 'व्रीहीनवहन्ति' इत्यतिदेशानुमितश्रुतेः । तेऽपि पञ्चदश ॥ एवं पञ्चचत्वारिंशत् बाधभेदाः पूर्वोक्तैः चतुर्दशाधिकपञ्चशतबाधभेदैः सह एकोनषष्ट्यधिकं शतपञ्चकं बाधभेदाः भवन्ति ॥ 'ये केऽपि तत्रत्र स्युर्बाधा न्यायसहस्रगाः । तत्रैवान्तर्भवन्तीति न भेदान्तरसंभवः ॥' प्रमाणानामिव च न्यायानामपि अन्योन्य तत्र बाध्यबाधकभावो भवति, तं बाधभेदनिरूपणानन्तरं निरूपयिष्यामः । इति दशमाध्यायार्थसंग्रहः । बाल. पृ. १३१–१४२.

• बाधमार्गेण सर्वत्र एकरूपेण भवितव्यम् । ( इदं पूर्वपक्षे । सिद्धान्ते तु ) 'न बाधवैकरूप्यमेषितव्यं नियोगतः । न किंचिद्विरुणद्धीह नानारूप्यं प्रमाणवत् ॥' वा. ३।३।७।१४ पृ. ८५९.

• बाधयोग्यताधिकरणं मीको. पृ. २९८२ इत्यत्र बलाबलाधिकरणे द्रष्टव्यम् ।

• बाधविकल्पौ तुल्यार्थयोः भवतः । वा. १।४।१७ पृ. १२०.

• बाधस्वरूपविचारः । भा. ३।३।७।१४, वा. पृ. ८५८. मीको. पृ. २५४२ इत्यत्र बलाबलाधिकरणे द्रष्टव्यः ।

• बाधकम् । तद्धि बाधकं भवति यद्बाध्यमानमप्रयोजनं भवति । भा. १०।६।२।२. • बाधकहेत्वाभासः । 'हेत्वाभासाः' इति विन्दौ द्रष्टव्यम् । मणि. पृ. ४२.

• 'बाधकाभावे बाध्यस्य निरपवादत्वात्' इति न्यायेन आश्रयकृतत्वप्राप्तस्य पुनरुज्जीवनादपि न श्लेष्मकाकादिवार्थग्रहणसिद्धिः । पूर्वपक्षे । कौ. ३।३।५।१०.

• बाधितबाध्यस्य बाधकबाधकेन बाधस्य सुज्ञानत्वात् यानि हि श्रुतिबाध्यैर्लिङ्गादिभिः बाध्यन्ते तानि श्रुत्या बाध्यन्तेऽपराम् । वा. ३।३।७।१४ पृ. ८२१.

• बाध्याबाध्यविवेकः सर्वस्यापि अशक्यत्वात् । १०।२।२४।६०.

• बाध्यबाधकभावः । ( अत्र उदाहरणग्रन्थः सुधास्थः इत्यवधेयम् ) । यत् तत्र तत्र उच्यते इदमनेन बाध्यते ( इति तदित्थम् ) प्रत्यक्षेण अनुमानं यथा स्तम्भोऽयमित्यादिना बाह्यार्थविषयप्रत्यक्षेण निरालम्बनानुमानम्, मृगतृष्णादिप्रत्ययाश्च । यथास्वं षड्भिरपि प्रमाणैः प्रमाणाभासः । श्रुत्या स्मृतिः— यथा 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या 'औदुम्बरी सर्वा वेष्टयितव्या' इति स्मृतिः । आप्तस्मृत्या अनाप्तस्मृतिः— आप्तस्य मन्वादेः अभिगीतया 'नात्मानं घातयेत् प्राज्ञः' इत्यादया स्मृत्या 'केदारे घातयेद्देहम्' इत्याद्यनाप्तपाखण्ड्यादिस्मृतिः । अविगीतस्मृत्या विगीतस्मृतिः— 'भार्याश्वतस्रो विप्रस्य' इत्याद्याप्तस्मृतिरपि 'यदुच्यते द्विजातीनां शूद्रादारोपसंग्रहः । न तन्मम मतम्' इति याज्ञवल्क्यादिस्मृतिभिः ( १।५६ ) विगीता । अदृष्टार्थया स्मृत्या दृष्टार्था— 'न जातु ब्राह्मणं हन्यात्' इत्यादिस्मृत्या 'जिघांसन्तं जिघांसीयात्' इत्याततायिस्मृतिः । श्रुतिप्रभवया लिङ्गादिप्रभवा— 'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राज्ञे निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीयात्' ( वसिष्ठस्मृतिः १५।६ ) इत्यादया होमादीतिकर्तव्यतायुक्तपुत्रप्रतिग्रहादिविषयश्रुतिप्रभवया 'न दोषो अमे वन्यजातमस्ति' इत्यादेः दत्तकपुत्रनिषेधादिलिङ्गत्वात् तत्प्रभवा । श्रुतिप्रभवया स्मृत्या अर्थवादप्रभवा स्मृतिः— 'तथया मनुष्यराज आगतेऽन्यस्मिन् वार्हति उक्षाणं वा वेहतं वा क्षदन्ते' इत्यादर्थवादप्रभवा 'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्' इत्याद्या 'मा गामनागामदितिं

धयित ' इत्यादिविधिश्रुतिप्रभवया ' गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् । न निन्दाताडने कुर्यात् ' इत्यादया । स्मृत्या आचारः— ' सूर्याविदे वधूवस्त्रं दद्यात् ' इत्यादिस्मृत्या विवाहचतुर्थेऽहनि वधूवस्त्रपरिधानाद्याचारः । अभियुक्ततराचारेण अभियुक्ताचारः— वृद्धव्यवहाराभियुक्तानामपि म्लेच्छानां हस्त्यादौ पील्वादिशब्दप्रयोगाचारः अभियुक्ततराणामार्याणां वृक्षविषयकप्रयोगाचारेण । सन्दिग्धं असन्दिग्धेन— ' अक्ताः शर्कराः ' इति सन्दिग्धं असन्दिग्धेन घृतस्तवनेन । दुर्बलाश्रयं बलवदाश्रयेण – दुर्बलाश्रयं ' वेदं कृत्वा वेदिं करोति ' इति वेदवाक्यं अन्यपदार्थाश्रयेण सुतादिनिमित्ताचमनवाक्येन । उपक्रमस्थेन उपसंहारस्थम्— उपसंहारस्थं ऋगादिपदं उपक्रमस्थेन वेदपदेन । अत्यन्तादृष्टार्थं नियमादृष्टार्थेन — सान्नाय्याज्ययोः अत्यन्तादृष्टार्थं अवघातादि औषधे नियमादृष्टार्थेन अवघातादिना । आरादुपकारकत्वं सामवायिकत्वेन— पशुपुरोडाशस्य आरादुपकारित्वं संनिपत्योपकारित्वेन । अनेकार्थविधानं एकार्थविधानेन— ' दध्ना जुहोति ' इति विशिष्टविधिपक्षे विशेषणविशेष्यरूपानेकार्थविधानं गुणविधिपक्षे एकार्थविधानेन । अनेकशब्दार्थत्वं एकशब्दार्थत्वेन— एकस्य अर्थस्य अनेकगोशब्दादिशब्दत्वं एकगोशब्दत्वेन । एकस्य च शब्दस्य अनेकव्यक्त्याकृत्यर्थत्वं एकाकृत्यर्थत्वेन । बहुबाधः अल्पबाधेन— प्रतिग्रहीतुरिष्टिः इति पक्षे यस्मायेति चतुर्थ्याः पञ्चम्यर्थत्वेन, ' अश्वमनयत् ' इति नयतेश्च प्रतिगृह्यार्थत्वेन कल्पनात् ' स त्वा देवता ' इति च तच्छब्दस्य अप्राधान्यनिर्दिष्टवरुणपरामर्शित्वात् दातृत्वे च वरुणस्य देवतात्वाभावेन देवताशब्दस्य अविवक्षितार्थत्वात् बहुबाधः, दातुरिष्टिः इति पक्षे प्रतिगृह्णातिमात्रस्य दाने कल्पनात् अल्पबाधेन । वेदान्तरोक्तं वेदान्तरविहितेन— सामवेदोत्पन्नवारवन्तीयादेः उपांशुत्वं यजुर्वेदविहितत्वेन उच्चैस्त्वरूपेण । परशाखाविहितं स्वशाखाविहितेन— अग्नीषोमीयादेर्द्वादशकपालत्वादि एकादशकपालत्वादिना । नित्यं नैमित्तिकेन— नित्यं सामिधेनीपञ्चदशत्वं वैश्यनिमित्तेन सप्तदशत्वेन । क्रत्वर्थं पुरुषार्थेन— नित्यं पञ्चदशत्वं नैमित्तिकत्वात् सप्तदशत्वं पुरुषार्थेन एकविंशत्यादिना । अनारभ्याधीतं प्रकरणाधीतेन— सप्तदशत्वं पाञ्चदश्येन । पौर्वापर्यविरोधे पूर्वं परेण— सर्वस्वदाक्षिण्यादाक्षिण्यनिमित्तभूतप्रतिहर्त्रुद्गात्रपच्छेदपौर्वापर्यात् सर्वस्वदाक्षिण्यादाक्षिण्ययोः पौर्वापर्येणापद्यमानयोः विरोधे पूर्वं परेण । प्राकृतं वैकृतेन— प्राकृतं बर्हिरादि वैकृतेन शरादिना । प्रयोगवचनाश्रितं चोदकाश्रयेण— श्येने प्रकृतेष्वङ्गेषु उद्गातृकर्तृकत्वं चोदकाश्रयेण नानर्त्विक्कर्तृकत्वेन । निष्प्रयोजनं सप्रयोजनेन— निगदेषु परसंबोधनार्थेषु उपांशुत्वं सप्रयोजनेन उच्चैस्त्वेन । ब्राह्मणक्रमः मन्त्रक्रमेण— आग्नेयाग्नीषोमीययोर्ब्राह्मणक्रमः मन्त्रक्रमेण । देवताश्रयं द्रव्याश्रयेण— देवताश्रयं ऐन्द्रपुरोडाशादौ सान्नाय्यविष्यन्त्यादि द्रव्याश्रयेण औषधविष्यन्त्यादिना । पश्चादाम्नातं पूर्वाम्नातेन— पश्चादाम्नातं उपांशुयाजविकारभूतं सारस्वतं कर्म अमावास्यायां उपांशुयाजं अधिकृत्य अमावास्यात्वप्रवर्तकतया भासमानं पूर्वाम्नातेन अग्नीषोमीयविकारभूतेन आग्नावैष्णवेन पौर्णमासतन्त्रप्रवर्तकेन । अल्पं भूयसा— अल्पं पञ्चदशरात्रे अग्निष्टुत्कर्म आग्नेयीसुब्रह्मण्याप्रवर्तकं भूयसा ज्योतिरादिना ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन । गौणं मुख्येन— गौणं बर्हिः मन्त्रप्रकाश्यं कुशरहितं मुख्येन कुशेन । सामान्यविहितं विशेषविहितेन— आहवनीयादि, विशेषविहितेन पदादिना । सावकाशं निरवकाशेन— सावकाशं यत्किंचित् प्राचीनमग्नीषोमीयात् प्राग्भागिपदार्थनिहितं उपांशुत्वम्, दीक्षणीयादिमात्रतया विहितेन स्वरेण अन्यत्र निरवकाशेन । अङ्गं प्रधानेन— अङ्गं अग्निहोत्रहवणी प्रधानेन निर्वापेण । अङ्गधर्मः प्रधानधर्मेण— दीक्षणीयादौ पर्वकालत्वं प्रधानधर्मेण मुख्यायाः पर्वकालत्वेन बाध्यते । शा. १२।७।१४ पृ. ८५९–८६०, सु. पृ. १२७३–१२७५.

● बाध्यबाधकभावः । ' यत् यस्यैव बाध्य तत् तस्यैव बाधकं न हि भवितुमर्हति ' । बृहती. पृ. १७८.

● बाध्यबाधकभावः । यस्तु एकेन बाध्यते, शक्योऽसौ अन्येनापि बाधितुमिति । भा. ३।३।७।१४ पृ. ८४९ । नैतदेवम् । नहि बाधितस्य अन्येनापि बाधनमेव न्याय्यम् । बाधितं हि अनुपादीक्य अर्थंतरत्वात् ।

पृ. ८५१. • बाध्यबाधकभावः विशेषवाचिनोर्द्वयोर्नास्ति । टुप्. ९।१।६।२९. • बाध्यबाधकभावः शास्त्रयोः यत्र परस्परनिरपेक्षता । मीन्या.

• बाध्यबाधकभावविचारः । भा. ३।३।७।१४ पृ. ८५८-८६२. मीको. पृ. २९४२ इत्यत्र बलाबलाधिकरणे द्रष्टव्यः ।

• बार्हते तृचे बृहतीविष्टारपङ्क्त्योरेव प्रयत्नेन संपादिते, रौरवयौधाजयसाम्नोर्गानं ज्योतिष्टोमे । ९।२।६।२५-२८ वर्णकं २.

• बार्हद्गिरं गवामयने समाम्नायते । टुप्. ६।१।७।२८. • 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' अयं कर्तृतः प्रापणिकव्यवस्थाविधिः । बाल. पृ. १८-१९. • 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति नैमित्तिकमेव न नित्यम्, प्रापणात् । नित्यं तु 'अभीवर्तो ब्रह्मसाम' । भा. ४।१।२।४.

• बार्हस्पत्यः ग्रहः बृहस्पतिसवे । वि.१०।४।२. • बार्हस्पत्यश्चतुर्थः काम्यः पशुः चरकसौत्रामण्या इति उत्पादः । के. • बार्हस्पत्यः चरुः अध्वरकल्पाया आग्नेयविकारः । वि. ५।१।१०. • बार्हस्पत्यश्चरुर्ब्राह्मणो गृहे राजसूये । भा. ११।२।३।१३. • 'बार्हस्पत्यमनूच्य वाग् यन्तव्या' । जपोऽयम् । १२।४।१।१. • 'बार्हस्पत्यं गृह्णाति' इति श्रुत्यैव विधानम् । द्राम्या विशेषणमन्या लिङ्गेन तद्विधायौ विधीयते, नोपसर्जनम् । टुप्. १०।४।२।१. • 'बार्हस्पत्यं चरुं' (निर्वपेत्) । इदं तृतीयं हविः, प्राजश्च, माध्यंदिने च तृतीयसवने च अध्वरकल्पायाम् । भा. ११।१।४।१९. • 'बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इयं पञ्चमी अवेष्टिः राजसूये । भाट्ट. ११।४।२. • 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत्' (इदमवेष्टौ) । भा. ११।४।३।८. • बार्हस्पत्यस्य आग्नेयविकारस्य धर्माः पूर्वं कार्याः, सरस्वत्याज्यस्य उपांशुयाजाज्यविकारस्य धर्माः पश्चात्, प्रयोगवचनात् चोदकस्य बलवत्त्वात्, अध्वरकल्पायाम् । ५।१।१०।१७-१८. • ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पः । १२।४।४।३-४.

• बार्हस्पत्यादिग्रहैः बृहस्पतिसवादौ उपदिष्टैः आतिदेशिकाना ऐन्द्रवायवादिग्रहाणां समुच्चयः । १०।४।२।३-५. मीको. पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम् ।

• बार्हस्पत्यचरुः प्रथमभाविनः आग्नेयस्य विकारः, सारस्वताज्यं च पश्चाद्भाविनः उपांशुयाजाज्यविकार इति अन्तरङ्गत्वात् अध्वरकल्पायां पूर्वं बार्हस्पत्यचरुनिर्वापः पश्चात् सारस्वताज्यधर्माः । ५।१।१०. मीको. पृ. ३५५ 'अध्वरकल्पान्यायः' इत्यत्र द्रष्टव्यम् ।

• बार्हस्पत्यचरुनिर्वापात् पूर्वं आग्नावैष्णवनिर्वापः ततो बार्हस्पत्यचरुनिर्वापः वैकृतमुख्यक्रमानुरोधात् अध्वरकल्पायाम् । भाट्ट. ५।१।१०.

• 'बालादपि सुभाषितं ग्राह्यम्' इति न्यायः । इति भारविः । साहस्री. ९६४.

• बालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणकः । प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ॥' इति न्यायः । साहस्री. ३८१.

• बाहुप्रशंसापरत्वं अभिगुरेपगतप्रशासाशब्दस्य । ९।४।४।२३-२४.

• बाह्यार्थसद्भावः निरालम्बनवादनिरासेन औत्पत्तिकसूत्रे एव भाष्ये उक्तः । बाल. पृ. ६.

• बाह्यग्रन्थानामप्रामाण्यम् । यत्र यान्येतानि त्रयीविद्भिर्न परिगृहीतानि किञ्चित्तन्मिश्रधर्मकञ्चुकच्छायापतितानि लोकोपसंग्रहलाभपूजाख्यातिप्रयोजनपराणि त्रयीविपरीतासम्बद्धदृष्टशोभादिप्रत्यक्षानुमानोपमानार्थापत्तिप्राययुक्तिमूलोपनिबद्धानि सांख्ययोगपाञ्चरात्रपाशुपतशाक्यनिर्ग्रन्थपरिगृहीतधर्माधर्मनिबन्धनानि विषचिकित्सावशीकरणोच्चाटनोन्मादनादिसमर्थकतिपयमन्त्रौषधिकादाचित्कसिद्धिनिदर्शनबलेन अहिंसासत्यवचनदमदानदयादिश्रुतिस्मृतिसंवादिस्तोकार्थगन्धवासितजीविकाप्रायार्थान्तरोपदेशीनि यानि च बाह्यतराणि म्लेच्छाचारमिश्रकभोजनाचरणनिबन्धनानि तेषामेवैतच्छ्रुतिविरोधहेतुदर्शनाभ्यामन-

पेक्षणीयत्वं प्रतिपाद्यते । न चेतत्क्वचिदधिकरणान्तरे निरूपितम् । न चावक्तव्यमेव, शाक्यादिशब्दवाचकत्वबुद्धिवदतिप्रसिद्धत्वात् । ' यदि ह्यनादरेणैषां न कल्प्येत प्रमाणता । अशक्यैवेति मत्वाऽन्ये भवेयुः समदृष्टयः ॥ शोभासौकर्यहेतूक्तिकलिकालवशेन वा । यज्ञोक्तपशुहिंसादित्यागभ्रान्तिमवाप्नुयुः ॥ ' ब्राह्मणक्षत्रियप्रणीतत्वाविशेषेण वा मानवादिवदेव श्रुतिमूलत्वमाश्रित्य सचेतसोऽपि श्रुतिविहिते. सह विकल्पमेव प्रतिपद्येरन् । ' तेन यद्यपि लभ्येत स्मृतिः क्वचिद्विरोधिनी । मन्वाद्युक्ता तथाऽप्यग्निमेतदेवोपयुज्यते ॥ त्रयीमार्गस्य सिद्धस्य ये ह्यत्यन्तविरोधिन. । अनिराकृत्य तान् सर्वान् धर्मशुद्धिर्न लभ्यते ॥ महाजनगृहीतत्वं मिथ्याद्यनुगमादि च । तेऽपि द्वीपान्तरापेक्षं वदन्त्येव स्वदर्शने ॥ " तत्र श्रद्धामात्रमेवैक ग्नस्वाभिनिमित्तम्, सर्वेषां स्वपितृपितामहादिचरितानुयायित्वात् । यैश्च मानवादिस्मृतीनामप्युत्सन्नवेदशाखामूलत्वमभ्युपगतं तान् प्रति सुतरां शाक्यादिभिरपि शक्यं तन्मूलत्वमेव वक्तुम् । को हि शक्नुयादुत्सन्नानां वाक्यविषयेयत्तानियमं कर्तुम् । ततश्च यावत् किंचित् कियन्तमपि कालं कैश्चित् आद्रियमाणं प्रसिद्धिं गतम्, तत्प्रत्यक्षशाखाविसंवादेऽपि उत्सन्नशाखामूलत्वावस्थानमनुभवतुल्यकक्षतया प्रतिभायात् । अत आह– ' विरोधे त्वनपेक्ष्य स्यात् ' इति । पारतन्त्र्य तावदेषां स्मर्यमाणपुरुषविशेषप्रणीतत्वाच्चैव प्रतिपन्नं शब्दकृतकत्वादिप्रतिपादनादपि पार्थक्यैरपि ज्ञायते ।

वेदमूलत्वं पुनस्ते तुल्यकक्षमूलत्वाक्षमयैव लज्जया च मातापितृद्रोहिदुष्टपुत्रवत् नाभ्युपगच्छन्ति । अन्यच्च स्मृतिवाक्यमेकमेवेन श्रुतिवचनेन विरुध्येत । शाक्यादिवचनानि तु कतिपयदमदानादिवचनवर्जं सर्वाण्येव समस्तचतुर्दशविद्यास्थानविरुद्धानि त्रयीमार्गव्युत्थितविरुद्धाचरणैश्च बुद्धादिभिः प्रणीतानि । त्रयीबाह्येभ्यश्चतुर्थवर्णनिरवसितप्रायेभ्यो व्यामूढेभ्य. समर्पितानीति न वेदमूलत्वेन संभाव्यन्ते । स्वधर्मातिक्रमेण च येन क्षत्रियेण सता प्रवक्तृत्वप्रतिग्रहौ प्रतिपन्नौ स धर्ममविप्लुतमुपदेक्ष्यतीति क. समाश्वास । उक्तं च ' परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत् । आत्मानं योऽतिसंधत्ते सोऽन्यस्मै स्यात्कथं हितः ॥ ' इति । बुद्धादे. पुनरयमेव व्यतिक्रमोऽलङ्कारबुद्धो स्थितः । येनैवमाह ' कलिकलुषकृतानि यानि लोके मयि निपतन्तु विमुच्यतां तु लोकः ।' इति । स किल लोकहितार्थं क्षत्रियधर्ममतिक्रम्य ब्राह्मणवृत्तं प्रवक्तृत्वं प्रतिपद्य प्रतिषेधातिक्रमासमर्थैर्ब्राह्मणैरननुशिष्टं धर्मं बाह्यजनानुशासद्धर्मपीडामप्यात्मनोऽङ्गीकृत्य परानुग्रहं कृतवानित्येवंविधैरेव गुणै. स्तूयते तदनुशिष्टानुसारिणश्च सर्व एव श्रुतिस्मृतिविहितधर्मातिक्रमेण व्यवहरन्तो विरुद्धाचारत्वेन ज्ञायन्ते । ' तेन प्रत्यक्षया श्रुत्या विरोधे ग्रन्थकारिणाम् । ग्रहीतॄणां चरितॄणां च ग्रन्थप्रामाण्यबाधनम् ॥ ' न चैषां पूर्वोक्तेन न्यायेन श्रुतिप्रतिबद्धाना स्वमूलश्रुत्यनुमानसामर्थ्यमस्ति । ' न च शाखान्तरोच्छेदः कदाचिदपि विद्यते । प्रागुत्पत्तेदनित्यत्वाच्च चैषां दृष्टमूलता ॥ ' न हि यथोपनयनादिस्मृतीनां शाखान्तरदृष्टश्रुतिसंवादः । एवं चैत्यकरणतद्वन्दनशूद्रसंप्रदानकदानादीनां संवादः संभवति । मूलान्तरकल्पनं च प्रागेव प्रत्याख्यातम् । ' लोभादिकारणं चात्र बहुनान्यत्प्रतीयते । यस्मिन् सन्निहिते दृष्टे नास्ति मूलान्तरानुमा ॥ शाक्यादयश्च सर्वत्र कुर्वाणा धर्मदेशनाम् । हेतुजालविनिर्मुक्तां न कदा चन कुर्वते ॥ न च तैर्वेदमूलत्वमुच्यते गौतमादिवत् । हेतवश्चाभिधीयन्ते ये धर्मे दूरतः स्थिताः ॥ एत एव च ते येषां वाङ्मात्रेणापि नार्चनम् । पाषण्डिनो विकर्मस्था हैतुकाश्चैव एव हि ॥ ' एतदीया ग्रथा एव च मन्वादिभि परिहार्यत्वेनोक्ताः । ' या वेदबाह्या. स्मृतयो याश्च काश्चित् कुदृष्टय । सर्वास्ता निष्फलाः प्रोक्तास्तमोनिष्ठा हि ता. स्मृताः ॥ ' तस्माद्धर्मं प्रति त्रयीबाह्यमेवंजातीयकं प्रामाण्येनानपेक्ष्यं स्यादिति सिद्धम् । वा पृ. १९४ –१९६ .

* बिडालव्रतन्याय । एवं तर्हि सौगतावागमाऽर्थोऽपि कश्चिदहिंसादि सर्वदर्शनानां पातिभि अनुष्ठीयते एव कैश्चित् इति सोऽपि महाजनपरिगृहीत स्यात् । न । संदेहात् । किमयमहिंसादि- वैदिक एवार्थो बिडालव्रत-

न्यायेन श्रद्धापादनाय शौद्धोदनिप्रभृतिभिरुपनिबद्ध आहो स्वदृष्ट एवेति । सना ध प्र पृ २४६

* विद्रा पक्षावचिन । वि १०।७।२०

* विमेते अर्थे अनद्यतनवृत्तमिया । मथि. पृ २४०

■ बिलवर्तिगोधान्याय । यथा बिले गर्ते वर्ते मानाया गोधाया नियतेन विभाजकधर्मेण निर्देशो न संभवति, तस्या अदृष्टत्वात्, एवमज्ञातपरसिद्धान्तस्य तद्दूषणाय प्रवृत्तिर्यत्तीत्येव विवक्षायामस्य प्रवृत्तिरिति । अत्र गोधापद बिलनिवासिना सर्पादीनामुपलक्षण ज्ञेय मिति । साहस्री ४९८

■ बिल्वखल्वाटन्याय । व्याख्यातोऽय न्याय श्लोकेन, तद्यथा– "खल्वाटो दिवसेश्वरस्य किरणै सतापितो मस्तके, वाञ्छन् देशमनातप विधिवशात्तालस्य मूल गत । तत्राप्यस्य महाफलेन पतता भग्न सशब्द शिर, प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापद ॥" 'तत्रापदा भाजनम्' इति वा पाठान्तरमिति । साहस्री १११

■ बिल्वविभजनन्याय । अन्यप्रयुक्तार्थे प्रवृत्तिरन्यस्येति यत्र विवक्षा तत्रास्य प्रवृत्ति । साहस्री २२५

* 'बीजाद्योनिर्बलीयसी' इति न्याय । ननु स्त्र्यपराधेऽपि 'बीजाद्योनिर्बलीयसी' इति न्यायेन मातु ब्राह्मण्यमात्रेण क्षेत्रिब्राह्मण्येन वा पुत्रे ब्राह्मण्यसिद्धे कथ दुर्ज्ञानत्व इत्याशङ्का । सु पृ ६३ * बीजे बीजे अयहननमनस्य आकृति नानाबीजेष्टौ राजसूये । ११।४।१३।४६

■ बीजाङ्कुरन्याय । 'अङ्कुरोऽभिनवोद्भिदि' इत्यमर । बीज विना नाङ्कुरो जायते, अङ्कुर विना च न बीजोत्पत्तिरिति । एव यत्र परस्परकार्यकारणभाव स्तत्राय न्याय प्रवर्तते । तथा च बीजजातीय प्रत्य ङ्कुरजातीयम्, अङ्कुरजातीय च प्रति बीजजातीय कारणम् । अतो बीजाङ्कुरप्रवाहानादिताया च यद्बीज प्रति यदङ्कुरस्य कारणत्व तदङ्कुर प्रति तद्बीजस्य न कारणत्वमतो नान्योन्याश्रय । एव च प्रामाणिकत्वात् गम्यते, एव च न प्रामाणिकत्व तत्र नानादित्वकल्पनेति । प्रामाणिकप्रवाहस्यैव अनादित्वकल्पना, नान्यस्येति सिद्धान्तात् सूचित च । तथा च शारीरकभाष्ये 'तत्कृतधर्माधर्मनिमित्त सशरीरत्वमिति चेन्न, शरीर संबन्धस्य धर्माधर्मयोस्तत्कृतत्वस्य चेतरेतराश्रयत्वप्रसङ्गा दन्धपरम्परैवैषा कल्पना' इति । 'आत्मन शरीरसंबन्धे जाते धर्माधर्मोत्पत्ति, तस्या च सत्या संबन्धोत्पत्तिरित्यन्योन्याश्रयापादेकस्यासिद्ध्या द्वितीयस्यासिद्धि स्यादिति परिहरति– नेत्यादिना । न ह्येतद्देहजन्यधर्माधर्मकर्मण एतद्देहसबन्धहेतुत्वे स्यादन्योन्याश्रय । पूर्वदेहकर्मण एतद्देहसबन्धोत्पत्ति, पूर्वदेहश्च तत्पूर्वदेहकर्मण, तद्देहसबन्धोत्पत्ति तत्पूर्वदेहकृतकर्मण इति बीजाङ्कुर वदनादित्वान्नाय दोष इत्यत आह– अन्धेति । अप्रामाणिकमित्यर्थ । न हि बीजादङ्कुरस्ततो बीजान्तर च यथा प्रत्यक्षेण गम्यते, तथा आत्मनो देहसंबन्ध पूर्वकर्मकृत प्रत्यक्ष, नाप्यस्ते कश्चिदागम, प्रत्युत 'अशरीरो हि' इत्यादिश्रुति शरीरकर्तृत्व वारयतीति भाव' इति आनन्दगिरि । साहस्री २१७

* 'बीजाभावे कुत फलम्' इति न्यायेन अद्वैतलाभमनो निरादयति । उपदेशसाहस्री पद्य १९।९ रामतीर्थ, * 'बीजाभावे फलाभाव' इति न्यायेन शोकमोहकारणस्याज्ञानस्य निवृत्तौ आत्मन कमापि नहि भवेत् इति निश्चिय शैवधिनाम् । १०।१२

* बीजावाप अभिचयने । इष्टे अभिषेके नाना बीजानामावपन क्रियते । तत्र कम विनैव केचित् तत्प्रकरणस्था चतुर्दश मन्त्रा ग्राह्या, न आदित एव । १०।५।५ मीशौ पृ ४५५ 'अन्यलोपस्वादपि करणम्' इत्यत्र द्रष्टव्यम् । * बीजावाप इष्याजिले स्थापितोल्लखले । ■ चावघातपदार्थविधय । वि. ५।२।७

■ बीजवृक्षन्याय । यथा बीजात् वृक्षो भवति, वृक्षात् बीजमिति । साहस्री २१६

* बुद्धे (ज्ञाते) अपि उच्चारणविशेषोऽनपेक्ष्यते । भा १।१।४।२१–२

* **बुद्ध्यादिवचसां** असमवन्मूलाना प्रामाण्यसंभावना अपि नैव भवति । वैद्यनाथः - १।१।२।२ पृ. १६.

* **बुद्धिः** अनुमेया मीमांसकस्य ( मते )। ऋजु. पृ. ६०. * बुद्धिः । निराकारा तु नो बुद्धिः आकारवान् बाह्योऽर्थः । साकारा बुद्धि. इति बौद्धाः । निराकारा इति मीमांसकाः । बुद्धिः प्रत्यक्षा इति बौद्धा. । अप्रत्यक्षा इति मीमांसकाः । भा. १।१।५।५. * बुद्धिः निराकारा । सा च अर्थे ज्ञाते सति ज्ञाततालिङ्गकानुमानात् अनुमेया । अनुमान चेत्थम् । घटः विषयतासंबन्धेन ज्ञानविशिष्ट., स्वरूपसंबन्धेन ज्ञाततावत्त्वात् इति । ज्ञातता नाम ज्ञानजन्यो ज्ञेयनिष्ठोऽतिशयविशेषः । स च मानसप्रत्यक्षविषयः । वैद्यनाथः . १।१।५।५ पृ २३. * न चार्थरहिता बुद्धिः आत्माकारमात्रमनुभवन्ती ज्ञायते इत्युक्त प्रत्यवादे । वा १।४।१२।२२ पृ. ३५८. * न च व्यवहार विना परबुद्धिरनुमातु शक्यते । ऋजु पृ. १६. * नहि अज्ञाते अर्थे कश्चित् बुद्धिमुपलभते । ज्ञाते तु अनुमानात् अवगच्छति । भा. १।१।५।५ पृ. २२. * बुद्ध्या विपर्यीकृतस्य बाधः संभवति । वि. १।३।१२. * बुद्धेः इम विषयप्रकाशने । विषयप्रकाशनं फलम्, बुद्धिः करणम्, व्यापारश्चात्र बुद्धेर्जन्मैव नान्यः । यदि फलमानन्तर्येण जनयति तस्य तत्र जन्मैव व्यापारः । रत्न. ६।१।१।२. * न च अर्थव्यपदेशमन्तरेण बुद्धेः रूपोपलम्भनम् । तस्माच्च व्यपदेश्या बुद्धिः । भा. १।१।५।५ पृ. ३४. * पूर्वबुद्धेः क्षणिकत्वात् स्वरूपेण नाशेऽपि संस्कारद्वारा अनपाय. । तु पृ. ६९४. * बुद्धीनां क्षणिकत्वम् । वा. १।२।४।३७. बुद्धौ संनिहित यत् तल्लिङ्गमित्युक्तम् ( ८।१।१७।३३ ) । भा. ८।१।१७।३४.

* **बुद्धिकर्मणी** न प्रत्यक्षे तस्मात्त ते प्रत्यभिज्ञायेते । बुद्धिकर्मणोः कार्येकसमवायो. प्रत्यभिज्ञा नास्ति । ऋजु पृ. २४७.

* **बुद्धिपूर्वकारी** तावत् कर्तुमेव नाध्यवस्यति न च प्रवर्तते । अबुद्धिपूर्वकारिणा ■ अज्ञातवस्तुना पुंसा यदृच्छया प्रयत्नाख्ये व्यापारे कृतेऽपि वस्तुनिष्पत्तिर्नैकान्ताद्भवति । सु. ३।७ पृ. ३३. * बुद्धिपूर्वकारी पुरुष. न च पुरुषार्थरहित व्यापार वचनशतेनापि उक्तोऽनुतिष्ठति । वा. २।१।१।१ पृ. ३८३.

* ' **बुधन्वानाग्नेयः** कार्यः ' इत्यत्र तद्धितान्ते आग्नेयपदे उपसर्जनीभूतो देवतावाचकोऽग्निशब्द. बुधन्वच्छब्देन विशेष्टु नार्हति । तथा च मन्त्रपर वाक्यम् । आग्नेयः आज्यभागः, बुधन्वान् बुधधातुघटितमन्त्रयुक्तः कार्य इत्यर्थः । पवमानेष्टिषु आज्यभागदेवो न सगुणो, तेन अग्ने. बुधन्वान् इति विशेषणं न संभवति । ' अग्निं स्तोमेन बोधय ' इति मन्त्रो बुधन्वान् । ( ' अग्निं स्तोमेन वर्धय ' इति भाट्ट., परतु तैसं., ऋसं., अत्र ' बोधय ' इत्येव ) । वि १०।४।१७.

**§ बुधन्वान् पवमानवद् विशेषनिर्देशात् । १०।४।१५।३० ॥**

पवमानेष्टिषु आज्यभागयोः ' बुधन्वानाग्नेय कार्यः, पावकवान् सौम्यः ' इति श्रूयते । तत्र त्यागादिषु बुधन्वान् अग्नि., पावकवान् सोमश्च अभिधातव्य सगुणः । ' बुधन्वतेऽग्नय इद न मम ' ' बुधन्वानग्निरिद हविर्जुषत ' इति, तथा ' पावकवते सोमायेद न मम ' ' पावकवान् सोम इद हविर्जुषत ' इति । विधौ तथा विशेषस्य निर्देशात् । पवमानवत्, यथा पवमानेष्टिषु पवमानादिविशेषणविशिष्टोऽग्निशब्द उच्चार्यते तद्वत् इति पूर्वः पक्ष. ।

**मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् । ३१ ॥**

पूर्वपक्षे सूत्रेण प्राप्ते सिद्धान्तमाह । न देवताविकारः स्यादयम् । मन्त्रविशेषनिर्देशात् मन्त्रविशेषस्य निर्देशोऽयं बुधन्वानाग्नेय. कार्य इत्यादिः । ' अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् ' इत्यादिः मन्त्र. बुधधातुमत्त्वात् बुधन्वान् उच्यते । तथा च मन्त्रनिर्देशोऽयं न देवतानिर्देश. इति सिद्धान्त. । के.

* **बुभुक्षमाणाः** के चित् क्रीतराजकस्य भोजनमाचरितवन्तः । भा. १।३।२।४ पृ. १८६.

**§ बुभुक्षितः किं द्विकरेण भुङ्क्ते** इति न्यायः । अयं लालसातिशये वर्तते । यथा ' जागर्ति लोको ज्वलति प्रदीपः सखीजन. पश्यति कौतुक मे ।

क्षणैकमात्र कुरु कान्त धैर्यं बुभुक्षित. किं द्विकरेण भुङ्क्ते ॥ ' इति । साहस्री. ६४१.

ॐ बुभुक्षितः किं न करोति पापं ( दरिद्रः किं न कुरुते) इति न्यायः । साहस्री. ६४३, ६४४.

ॐ बुभुक्षितं न प्रतिभाति किञ्चिदिति न्यायः । उक्तं च– ' नायातु लोभे ज्वलतु प्रदीप सर्वोजनः पश्यतु कौतुकं ते । क्षणैकमात्रं न करोमि धैर्यं बुभुक्षितं न प्रतिभाति किञ्चित् ॥ ' इति । साहस्री. ६४२.

● बुभुक्षो. अभोजने पित्तसोम. । वि. ६।३।२.

● बुभूषत: सर्वस्तोमातिरात्र , कातीये । याल. पृ ३४,

● बृसयशब्दः बृहच्छब्दार्थं गमयति ' सरस्वति देवनिदो निबर्हय प्रजा विश्वस्य बृसयस्य मायिन ' इत्यत्र । भा १०।१।११२१.

● बृहत् आर्भवपवमाने, विश्वजिति सर्वपृष्ठे । भा. १०।६।२।१४, ● बृहदेव पृष्ठ विकृतिविशेषे । १०।७। १६।५१–५७, ● बृहत्. ( साम. ) योनिः बृहती (छन्द ) ' त्वामिद्धि हवामहे० ' इति । उत्तरा पङ्क्तिः ' स त्वं नश्चित्र ' इति । ९।२।६।२५.

● बृहदन्त पृष्ठगण । रत्न. १०।५।२५।८५

● बृहदादीनां सर्वेषां विश्वजिति नैयत्य निवेश. । भा. १०।६।८।२४.

● बृहद्गानं प्रागाथिकम् । बृहतीपङ्क्त्यो प्रगथन ककुप्कारम् । भा. ९।२।६।२५ वर्णक १

● ' बृहत्तयं अपरिमित स्वर्गकामभिन्वीत ' । संकर्षे २।१।१०.

● बृहद्धर्मा. विश्वजित्स्तुतौ निरुद्धा. बृहति भवेयुः, न रथंतरे । भा. ३।३।१५।४७.

● बृहत्पृष्ठं आर्भवे पवमाने विश्वजिति । भा. ७।३।३।८. ● बृहत्पृष्ठस्य प्रतिपत् ' आयती ' ज्योतिष्टोमे । " त्रयवती रथंतरपृष्ठस्य प्रतिपद कुर्यात् आयती बृहत्पृष्ठस्य ' । ' प्रयुजो वाजो अग्निः ' इति अग्निवती ककुप् प्रतिपत् । वि. १०।५।१६.

● ' बृहद्रथंतरं पृष्ठ भवति ' इति न बृहत्साधनत्वं न रथंतरसाधनत्वमिति । नैव तत्र बृहत् निमित्त भवति रथंतर वा । भा. ९।६।१।९, ● बृहद्रथंतराभ्यां अन्यतरेण पृष्ठं साधित ज्योतिष्टोमे । १०।६।८।२४, ● बृहद्रथंतरयो. एकस्मिन् कर्मणि विकल्प., एकार्थत्वात् । १२।३।४।१०–१५. ● बृहद्रथंतरयो. प्रत्येक-मेकैकस्यैव गवामयनगतपृष्ठ्यषडहे अनुष्ठानम् । १०।६। ३।४–८ मीको पृ १५५० 'गवामयने पृष्ठ्ये षडहे०' इत्यत्र द्रष्टव्यम् । ● बृहद्रथंतरयो. उक्थ्ये, गोष्ठवे, अपचितौ, पृष्ठस्तोत्र एव समुच्चित्य निवेश. । १०।६।८। २४–२६. ' संभवादौ उभयसामके क्रतौ ' इत्यत्र द्रष्टव्यम् । ● बृहद्रथंतरयो. सवनादौ प्रधानक्रियापेक्ष साहित्यम् । तत्र व्यस्तयोरपि क्रियमाणयो. साहित्य न विरुध्यते । एकं साम किञ्चित् स्तोत्रमभिनिर्वर्तयिष्यति द्वितीयमपि अपरम् । प्रधानोपकारापेक्ष साहित्यमिति समस्तसंयोगो न विरोत्स्यते । इति चेत् । तत्राभिधीयते । यत्र परस्परस्य गोष्ठवयोर्योगो भवति तत्रैतदेव न्याय्यम्, येन क्रियामयमेन आरम्भेण मध्येनावसानेन वा योगः तेन सहितयो, न पृथक्स्थः । यथैव अनेनोपकर्तव्य इत्यवगम्यते एवमितरेणापीति । ते च यस्तुत सहिते पृष्ठं संस्कर्तुम् । अत. तयो साहित्यमेव युक्तम् । भा. १०।६।८।२५ ● बृहद्रथंतरयो स्वयोन्युत्तरप्रग्रथनेन सपादितककुभोरेव गान ( ज्योतिष्टोमे ) । ९।२।६। २५–२८. मीको. पृ १८११ ' ज्योतिष्टोमे बृहद्रथंतरयो ' इत्यत्र द्रष्टव्यम् । ● बृहद्रथंतरयोर्हि ऋक्संस्कारत्वेन विनियोग । भा १०।६।८।२५.

● बृहद्रथंतरादिशब्दा. सामविशेषवाचिन. । सामशब्दस्तु सामान्यवाची गानमात्रे वर्तते, न तु गानविशिष्टासामृक्षु । रि ९।२।१.

ॐ बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था ॥

उभयसाम्नि चैवमेकार्थ्यापत्तेः ।९।२।१५।४८॥

भाष्यम्— सन्त्युभयसामान क्रतव. । ' संस्थ उभे कुर्यात्, गोसव उभे कुर्यात्, अपचितावप्येषु उभे बृहद्रथंतरे कुर्यात् ' इति श्रूयते । सन्ति तु प्रकृतौ बृहद्धर्मा रथंतरधर्माश्च । त इह चोदकेन प्राप्नुवन्ति । तत्र संशय. किमुभयसाम्नि उभयधर्मा कर्तव्या. अथवा

इहापि तथैव व्यवतिष्ठेरन् इति । किं प्राप्तम् ? उभयसाम्नि चैवं स्यात् । यथा कण्वरथंतरे । उभे ह्यत्र सामनी पृष्ठकार्ये वर्तेते, नैकैकम् । तस्मान्नैकैकधर्मान् लभेत । उभे ह्यत्र संहते, उभे धर्मैः संयुज्येयाताम् । उभे हि ते संहते, एकार्थापत्तेः पृष्ठकार्ये वर्तेते इति ।

**स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् । ४९ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति बृहद्रथंतरयोः संहतयोरुभये धर्माः कर्तव्या इति । रथंतरे रथंतरधर्मा बृहति बृहद्धर्माः । कुतः ? स्वार्थत्वाद्धर्माणाम् । रथंतरधर्मा रथंतरार्थाः, बृहद्धर्मा बृहदर्थाः । साम्नोर्ह्येते धर्माः, न पृष्ठस्य । तत्र साम प्रयुज्यते रथंतरं बृहद्वा । रथंतरे प्रयुज्यमाने तद्धर्माः प्रयोक्तव्याः, बृहत्यपि प्रयुज्यमाने बृहद्धर्माः । सामप्रयुक्ता एवैते धर्माः । साम्नाऽपि हि दृष्टमदृष्टं च क्रियते । तस्मात् साम्नापि धर्मप्रयोजने समर्थम् । अतो व्यवस्था धर्माणां प्रकृतिवत् । यथा प्रकृतौ रथंतरे प्रयुज्यमाने तदङ्गं प्रयुज्यते । बृहति तदङ्गम् । एवमिहापीति ।

**टुप्**— पृष्ठानुवादेन कण्वरथंतरविधिः, यत् पृष्ठं तत् कण्वरथंतरमिति । बृहद्रथंतरे च न पृष्ठानुवादेन विधीयेते । चोदकेन विकल्पेन प्राप्नुवती वचनेन समुच्चीयेते (अन्यथा अप्राकृतकार्यता स्यात् ।) तस्मात्प्रयाप्राप्ते प्रयोक्तव्ये । यद्यपि च पृष्ठशब्दो नोच्चारितस्तथापि पृष्ठसाधने प्रकृतौ दृष्टे इति विकृतावपि पृष्ठसाधने एव भवत । नान्यस्मिन् देशे प्रयोक्तव्ये इति ।

**शा**— द्वाभ्यामपि संहत्य एकैकस्य कार्यं साध्यते इति द्वयोरपि धर्ममात्रमुच्यते— ‘ चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह । स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥ ’

**सोम**— यथा कण्वरथंतरे उभयधर्माः तद्वत् इहापि उभयत्र उभयधर्मा इति कण्वरथंतरे विकल्पेऽपि इह समुच्चय इति च उत्थानात् संगतिः । सूत्रार्थस्तु- उभयसाम्नि संस्ववादावपि एवं कण्वरथंतरादिवदुभयस्यैव एकार्थापत्तेरुभयधर्माः स्युः इति ।

**वि**— ‘ द्विसामके द्वयोर्धर्मसाकर्यं वा व्यवस्थितिः । पृष्ठैक्यात् संकरो, मैवं धर्माणां साम्यतः ॥ ’

**भाट्ट**— यत्र संस्वगोसवश्येनादौ बृहद्रथंतरयोः प्रकृतित एव विकल्पे प्राप्ते ‘ उभे बृहद्रथंतरे भवत. ’ इति श्रुतम् । तत्र यन्मते तावदेकं पृष्ठस्तोत्रं साधनसाम्नोरेव च तस्मिन् विकल्पः, तदा तेन वचनेन तयोः समुच्चयमात्रविधानादेकस्मिन्नेव सप्तदशस्तोमके पृष्ठेऽस्यात. सामद्वयम्, तत्र च व्यवस्थिता एव तत्तद्धर्मा । यदा तु प्रकृतावेव पृष्ठस्तोत्रद्वयं वैकल्पिकं इह च तयोरेव बृहद्रथंतरपदलक्षितयोः समुच्चयस्तदा तत्तत्सामकपृष्ठद्वयस्य प्रत्येकं सप्तदशस्तोमकस्य करणाद्धर्माणां व्यवस्थैव । नत्वत्रैकैककार्ये समुचितस्तोत्रद्वयविधानम्, येनैकैककार्ये उभयविधानात् उभयत्रोभयधर्माः स्युः । विशिष्टविधिगौरवादप्राकृतकार्यापत्तेश्च यथावस्थितयोरेव समुच्चयमात्रविधानाङ्गीकरणात् । अतः तत्तत्साम्नि तत्तद्धर्मा एव संमीलनादयः ।

नैमित्तिकग्रहाग्रतानियमस्तु सत्यपि सामद्वये तयोर्विरोधित्वाभावेन निमित्तद्वयाभावान्न भवति इत्युक्तं कौस्तुभे । अत्र च पृष्ठद्वयजन्यापूर्वस्यैकजातीयत्वेऽपि समुच्चयानुरोधेन व्यक्तिद्वयोत्पत्तिरिति ध्येयम् । इदं च पृष्ठद्वयसमुच्चयोदाहरणं संस्वगोसवादिरूपं मूले कृत्वाचिन्तेति द्रष्टव्यम् ।

वस्तुतस्तु तेषु ‘ उभे बृहद्रथंतरे भवत. ’ इति प्रकृत्य ‘ पवमाने रथंतरं कुर्यात् बृहत्पृष्ठं भवति ’ इति पञ्चविंशब्राह्मणानुरोधेन लाट्यायनिकल्पे रथंतरस्य पवमानस्तोत्रे निवेशाभिधानात् न पृष्ठस्तोत्रे उभयोः साम्नोर्नं वा एकस्मिन् कृतावुभयोः पृष्ठस्तोत्रयोः समुच्चयः । अत एव पवमानेऽपि रथंतरं विधीयमानं न संमीलनादीन् धर्मान् गृह्णाति । रथंतरस्य तैर्विनाऽपि गायमानत्वेन रथंतरस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणायाः पृष्ठजनकसंस्कारसमूहसाधनत्वस्यैव लक्षणीयत्वात् । तदभावे पृष्ठकटाक्षकरणवर्हिर्वेदप्राकृतकार्यापत्ते रथंतरादावप्राप्तेः ।

अत एव यैर्विना रथंतरमेव पठितुं न शक्यं यथा स्तोभादिभिः तेनैतदपेक्षत्वे प्रमाणाभावात् यदा तदाश्रयभूता ऋचोऽपि ऋगन्तरग्राहकप्रमाणाभावे आक्षिप्येरन् तदा तदङ्गभूतस्तोभादीनां ‘ प्रधानं नीयमानं हि तदाङ्गान्यपकर्षति ’ इति न्यायेनानुष्ठाने न काचन क्षतिः ।

अतः क्रत्वन्तरे एतादृशवाक्यसत्त्वे स्तोत्रान्तरे विनियोगाभावे नेदमधिकरणं द्रष्टव्यम् ।

मण्डन— ' व्यवस्थोभयसामके । ' ३४.

शंकर— ' द्विसाम्नि चाङ्गभेदः स्यात् । ' २८.

■ बृहद्रथंतरधर्माणां अविरुद्धाना वैरूपस्तोमे कण्वरथंतरे समुच्चयः । ९।२।१६।४७. मीको. पृ. १३५१ ' कण्वरथंतरे अविरुद्धाना० ' इत्यत्र द्रष्टव्यम् ।

■ बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकाले अनुष्ठानम् ॥

एकार्थत्वादविभागः स्यात् ९।२।१५।४५ ॥

भाष्यम्—' ज्योतिष्टोमे समामनन्ति ' बृहत्पृष्ठं भवति ' ' रथंतरं पृष्ठं भवति ' इति । प्यक्तो हि बृहद्रथंतरयोर्विकल्पः । यस्मिन् कार्ये रथंतरं प्रवर्तते, तस्मिन्नेव कार्ये बृहद्रथंतरविधिद्वारेण धर्मा विहिताः । तस्मात् बृहद्धर्मा रथंतरधर्माश्चोभयत्र कर्तव्या इति । बृहद्ग्रहणं रथंतरग्रहणं च लक्षणार्थं भविष्यति ।

टुप्— पृष्ठशब्दः स्तुतेरभिधाता । ■ ( स्तुतिः ) चाऽदृष्टार्थेत्युक्तम् ( स्तुतशस्त्राधिकरणे ) । तस्मादयमत्र विकल्पः बृहद्वा पृष्ठं रथंतरं वा इति । तत्र स्तुतिरदृष्टाय, साम ऋगक्षराभिव्यक्त्या दृष्टोपकारि । तस्यार्थे साम्न्युपनिबद्धा धर्मा उच्चैर्गेयत्वादयस्तेषामुभयत्र ( बृहति रथंतरे च ) सम्बन्धो न व्यवस्था । यथा व्रीहिसम्बद्धं प्रोक्षणं न व्रीहिष्वेवावतिष्ठते ( यवेष्वपि भवति ) एवमिहापि ।

निर्देशाद्वा व्यवतिष्ठेरन् । ४६ ॥

भाष्यम्— 'निर्देशाद्वा रथंतरे रथंतरधर्माः कर्तव्याः ' नोच्चैर्गेयम् ', न च मन्द्रद्गेयम् ', ' रथंतरे प्रस्तूयमाने संमीलयेत् ', ' स्वर्दृशं प्रतिवीक्षेत ' इत्येवमादयः । बृहद्धर्माश्च ' बृहति उच्चैर्गेयम् ', ' बृहति गीयमाने समुद्रं मनसा ध्यायेत् ' इत्येवमादयः । एवं निर्देशोऽर्थवान् भविष्यति । इतरथा रथंतरग्रहणं च बृहद्ग्रहणं च प्रदर्शनार्थं स्यात् । तथा लक्षणा भवेत् । न च श्रुतिसंभवे लक्षणा न्याय्या । यदुच्यते अर्थैकत्वाद् बृहद्रथंतरयोरिति । उच्यते कोऽर्थः पृष्ठसिद्धिः । एवदप्यस्ति अन्यथा बृहता साध्यते पृष्ठम्, अन्यथा रथंतरेणेति । यथा कर्मापि विभज्यमाने द्वावप्युपायौ । यथा, द्वौ पुष्पानन्तरोर्गृहीत्वाऽऽकर्षणः, यद्वा तीक्ष्णेन शस्त्रेण छेदनम् । तत्र यन्त्रकस्य तीक्ष्णीकरणं द्रव्यं तच्छेदनाभ्युपाये संबध्यते, नाऽऽकर्षणाभ्युपाये तदर्थोपयेऽपि । एवं बृहद्धर्मा रथंतरे तदर्थापत्ते भवेयुर्वा न वेति जायते विचारणा । तत्र निर्देशसामर्थ्यादिदमवगच्छामः, अन्यथा बृहत् साधयति, अन्यथा रथंतरमिति । प्रत्यक्षं चास्याप्यन्यदुपलभामहे । रथंतरं शुद्धादिकां संस्तुतिं कुर्वत् पृष्ठं साधयति, बृहत् चित्रादिकाम् । तस्माद्रथंतरधर्माः शुद्धादिकाया स्तुतौ निबद्धा रथंतरे प्रस्तूयमाने भवेयुर्न बृहति । बृहद्धर्मा अपि चित्रादिकायां स्तुतौ निबद्धा बृहति भवेयुः, न रथंतरे । तस्माद्व्यवस्था धर्माणामिति ।

टुप्— 'अन्यथा बृहता साध्यते पृष्ठमन्यथा रथंतरेण ' इति । ( अनुभाषितं भाष्यं चोदयति— ) नन्वेवं सत्यपि व्रीहियवयोरपि धर्मव्यवस्थेत्युक्तं भवति । अन्यथा व्रीहयः साधयन्त्यन्यथा वा यवा इति । उच्यते । व्रीहयस्तण्डुलनिर्वृत्तिं कुर्वन्ति । ततः पिष्टानि, तेभ्यः पुरोडाशास्ततः, यागादपूर्वम् । यवेष्वेतत्तुल्यं सर्वम् । किमतः ? एवदतो भवति । व्रीहियवयोरत्यन्तदृष्टार्थत्वान्नापूर्वभेदः । तस्मादपूर्वं यागसाधनद्वारेण धर्मामिलापि । उभौ च व्रीहियवौ यागसाधनम् । अत उभयत्र धर्माः । नास्ति व्यवस्था । व्रीहिस्थानीयं साम, प्रोक्षणस्थानीया उच्चैर्गेयत्वादयः । तत्र यद्यपि साम दृष्टोपकारि, तथापि यस्योपकारि ( तदृग्निवर्तकम् ) । ते च स्तुती भेदेन चोदिते । अदृष्टार्थत्वाच्च तयोरपूर्वभेदः । अपूर्वप्रयुक्ताश्च धर्माः । नन्वेकस्मिन्नपूर्वे द्वे अपि स्तुती चोदिते । एकार्थत्वाच्च तयोर्विकल्पो व्रीहियवयोरिव । तस्मान्न व्यवस्था । उच्यते । न निष्पन्नमपूर्वमात्रे, यत्रैते चोद्येते । किन्तु व्याप्यमेवापूर्वं जन्यते । तथादृष्टार्थत्वात् स्तुत्योः, यदेव शुद्धादिकया जन्यते तदेव चित्रादिकयेति । कुत एतत् ? तस्मात् चित्रादिका यथा साधयति, येन साधनेनोपगृहीता, शुद्धादिकाऽपि तैः साधयिष्यतीति नास्त्येतत् । अत एव कवनादित्वस्य । अनेकार्थत्वात् । तस्माद्यथा अवघातादपूर्वभेदाद् व्यवस्था, एवमिहापि । व्रीहियवौ न साक्षादपूर्वस्य साधकौ । यागादपूर्वम् । स नाभेदादि-

तद्व्याप्यवैजात्यं वा न तावत् प्रतिगुणाभिधानव्यक्ति-विश्रान्तम्, द्वादशस्तोत्रत्वानुपपत्तेः, अपि तु तत्तस्तोत्रकगुणाभिधानव्यक्तिषु व्यासज्यवृत्ति, तासां च न यौगपद्यं क्षणिकत्वात् क्रमिकत्वाच्च । अतस्तत्तद्गुणाभिधानेभ्यः संस्काररूपाण्यदृष्टानि उत्पद्यन्ते । तैश्च सकलगुणसमूहालम्बनात्मिका तत्तद्विजातीयस्तोत्रत्वावच्छिन्ना अभिधानव्यक्तिरेका उत्पद्यते इत्यस्य वाच्यम्, तत्र च विजातीयस्तोत्रजनकतावच्छेदकतया संस्कारेष्वपि वैजात्यावश्यंभावात्, दीक्षणीयायाद्वनियमन्यायेन तत्तत्संस्कारसमूहप्रयुक्ता एव तत्तद्धर्मा इति न प्रकृतौ सांकर्यम् । कण्वरथंतरे च हिरण्यगर्भमन्त्रन्यायेन तत्तत्संस्कारसमूहद्वयजनकतयैव क्रमान्तरजन्यसंस्कारद्वारोत्पाद्यगुणाभिधानव्यक्तिविधानात् तत्तत्संस्कारसमूहप्रयुक्तधर्मप्राप्त्युपपत्तिरिति सर्वमनाकुलम् ।

मण्डन— ' साम्नो धर्मा व्यवस्थिताः । '

शंकर— ' वृहत्साम्नोरङ्गभेदः । '

● बृहद्रथंतरसामा ( पृष्ठ्यः षडहः गवामयने ) अनेकपदबहुव्रीहिरयम् । न द्वन्द्वगर्भो बहुव्रीहिः । तथा च केषु चिदहःसु रथंतर केषु चित् बृहत् । न समस्ते सामनी विधीयेते । भा. १०।६।३।४–५. ● बृहद्रथंतरसाम्नोरेव प्रकृतौ अङ्गत्वेन विधानं न तु तयोर्न्यो. । अतो विकृतौ तयोरन्योन्यातिदेशः । वि. १०।४।२४.

● बृहत्साम एकच्छन्दस्कं नास्ति । तस्याऽऽधारश्च काकुभः प्रगाथः । प्रथमा बृहती, द्वितीया पङ्क्तिः । ययोः ग्रथनेन तत्र बृहत्यौ द्वे ककुभौ च संपद्येते, तासु बृहद् गातव्यम् । ( चिन्त्यमिदम् । अत्र, सर्वानुक्रमण्या हि काकुभः प्रगाथः ककुप्–सतोबृहतीभ्यामित्युक्तम् । तत्र सतोबृहती पङ्क्तिजातीयत्वात् कथञ्चित् पङ्क्तिरिति वक्तुं शक्यम्, परन्तु ककुप् उष्णिक्जातीया न बृहतीजातीया इति । के. ) । वि. ९।२।६, ● बृहत्साम ज्योतिष्टोमे पृष्ठस्तोत्रे रथंतरेण सह विकल्पितम् । ७।२।१, ● बृहत्साम ' त्वामिद्धि हवामहे ' इत्येतस्यां योनौ उत्पन्नम् । १०।४।२४, ● बृहत्साम विश्वजिति षडहात् ' विश्वजित्सर्वपृष्ठः ' इति सर्वशब्दात् प्राप्तम् । ७।३।१, ● बृहत्साम षडहे द्वितीयेऽहनि पृष्ठनिष्पादकम् । ७।३।३. ● बृहत्सामा यदि सोमः स्यात् शुक्राग्रान् ग्रहान् गृह्णीयात् ज्योतिष्टोमे । भा. १०।५।१५।५८ वर्णकं १. ● बृहत्सामा सोमः माध्यंदिने पृष्ठस्तोत्रे यस्य सोमयागस्य बृहत् साम सः । एवं रथंतरसामा । वि. १०।५।१५.

● बृहत्सामता ज्योतिष्टोमे पुरुषार्था । भा. १०।६।६।११.

● बृहत्सामत्वेन उत्तमत्वं निमित्तीकृत्य वेदे बहुशः स्तुतिः दृश्यते । संकर्ष. ४।१।८, ● बृहत्सामत्वं, पृष्ठस्तोत्रे ज्योतिष्टोमगतं, शुक्राग्रत्वम् । वि. २।३।१.

● बृहत्सामधर्माः ' उच्चैर्गेयम् ', ' क्रौञ्चं गेयम् ', ' बृहति स्तूयमाने मनसा समुद्रं ध्यायेत् ' इत्यादयः । वि. ९।२।१५.

● बृहती । गायत्रीबृहत्यनुष्टुप्सु एव आगम्यमानानां साम्नां निवेशः त्रिवृदस्तोमकेषु प्रकृतेषु माध्यंदिनार्भवपवमानयोः । न तु अन्ये तृचे । भा. ५।३।५।१३–१४. ● बृहती पादेषु अक्षराणि ८।८।१२।८. उदा० ' मा चिदन्यत्० ' (ऋसं. ८।१।१), किंवा ९।९।९।९. उदा० ' शं त्वा यये पितो० ' (ऋसं. १।१८७।११ ) । के. ● बृहत्योरेव उत्तराग्रन्थपठितयोरेकैकसाम्नोर्गानं द्वादशाहे । अतिजगतीषु इति बहुवचनं तु प्रथमाया अतिजगत्याः सकृत्कोऽभ्यासात् । भा. ९।२।५।२१–२४ वर्णकं २.

● बृहतीपङ्क्त्योः एव ग्रथनेन रथंतरस्य गानम् । भा. ९।२।६।२५–२८ वर्णकं १.

● बृहतीविष्टारपङ्क्त्योः एव ग्रथनेन संपादिते बार्हते तृचे गौरिवीतयज्ञायज्ञीयसाम्नोर्गानं ज्योतिष्टोमे । भा. ९।२।६।२५–२८ वर्णकं १.

● बृहतीशब्दो द्रव्यवचनः । शब्दो द्रव्यमित्यर्थः । संकर्ष. ४।४।४.

● बृहस्पतिसवः । ' ब्राह्मणो बृहस्पतिसवेन यजेत ' इति प्रसिद्धो बृहस्पतिसवः । ' वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इत्यत्र तु वाजपेयाङ्गत्वेन विहितो बृहस्पतिसवः कर्मान्तरमेव प्रसिद्धबृहस्पतिसवात् । धर्मातिदेशार्थस्तु कर्मान्तरे बृहस्पतिसवशब्दप्रयोगः नामधेयमिहोच्यते । ४।३।

१२।२९–३१. ● बृहस्पतिसवः वाजपेयाङ्गम् । ४।३। १२।२९–३१. 'बृहस्पतिसवन्यायः' इत्यत्र द्रष्टव्यम् । ● बृहस्पतिसवः वाजपेयाङ्गोऽपि स्वकाले ( वसन्ते ) कर्तव्यः । भा. ४।३।१७।४०–४१. ● बृहस्पतिसवस्य ज्योतिष्टोमविकृतित्वात् वसन्तकालश्चोदकप्राप्तः । वि. ४।३।२०. ● बृहस्पतिसवे 'बार्हस्पत्यं ग्रहं गृह्णाति' । अस्य प्राकृतैः ग्रहैः समुच्चयः । १०।४।२। १–५.

**बृहस्पतिसवादौ दाशतयीभ्यः उत्पन्नगायत्रीणामाश्रयणम् ॥**

गायत्रीषु प्राकृतीनामपच्छेदः प्रकृत्यधिकारात्संख्यात्वादग्निष्टोमवद्व्यतिरेकात् तदाख्यत्वम् । ८।३।६।१२ ॥

भाष्यम्— उक्थ्यश्चिन्तितः । अथवा इदानीं चिन्त्यते । इदं श्रूयते 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । तत्रेदं समाम्नातम् 'गायत्रमेतदहर्भवति' इति । अत्र विचार्यते । किं प्राकृतीनां त्रिष्टुब्जगतीनामपच्छेदं कृत्वा गायत्रं तदहः कर्तव्यम्, उत उत्पत्तिगायत्रीणां दाशतयीभ्य आगमः कर्तव्य इति । अत्र सूत्रेणैषोपक्रमः । गायत्रीषु प्राकृतीनामपच्छेदः । गायत्रीषु श्रूयमाणासु 'गायत्रमेतदहर्भवति' इति प्राकृतीनां त्रिष्टुब्जगतीनामपच्छेदोऽपच्छेदोऽपक्रमो वा कर्तव्यः । कुतः ? प्रकृत्यधिकारात् । चोदकेनात्र प्राकृत्यस्त्रिष्टुब्जगत्यः प्राप्ताः अधिकृता विद्यन्ते । यदि अन्यासामृचामागमः क्रियेत, प्राकृतः प्रत्ययो बाध्येत ।

ननु प्रत्यक्षश्रुताः गायत्र्यः । ताभिश्चोदकप्राप्ता इतरा बाधितव्याः । नेत्याह । कस्मात् ? संख्यात्वात् । अथ गायत्रीशब्दः संख्यावाचकः । कथं गम्यते ? व्यतिरेकाच्चतुर्विंशतिसंख्यायामेव न व्यभिचरति । न चतुर्विंशतिसंख्यया विना दृष्टः । चतुर्विंशतिसंख्यादीनामु त्रिष्टुब्जगतीषु न कदाचिद्भवति । तस्मात् संख्याशब्दोऽयम् । संख्याशब्दमेवमुपगम्यैवं कर्तव्यः । अग्निष्टोमवत् । यथा 'सप्ताग्निष्टोम भवति' इत्युक्ते द्वादशादिस्तोत्राणामप्युक्तस्मपच्छेदः क्रियते । एवमिहापि ।

तं नित्यवच्च पृथक्सतीषु तद्वचनम् । १३ ॥

भाष्यम्— तं नित्यवत्संख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, पृथक्सतीषु पृथग्भूतासु गायत्रीभ्यो जगतीषु, अगायत्रीषु तद्वचनं भवति, गायत्रीवचनं भवति 'ये हि द्वे गायत्र्यौ सैका जगती' इति । यदि संख्याया गायत्रीशब्दस्ततो जगत्या द्वे चतुर्विंशतिसंख्ये इत्येतद्वचनमुपपद्यते । अथ भवन्ति ततो द्वे ऋचौ जगत्या न स्तः इत्येतद्वचनमनुपपन्नं स्यात् । तस्मादपि संख्याया गायत्रीशब्दः । तथेदमपरं च दर्शनम् । 'त्रिष्टोऽनुष्टुभश्चतस्रो गायत्रीः करोति' इति ।

न विंशतौ दशेति चेत् । १४ ॥

भाष्यम्— अथ कश्चिद् ब्रूयात्, न विंशतौ दशसंख्याऽस्ति । न संख्या संख्यान्तरे वर्तते । गुणो हि संख्या । न च गुणा गुणेषु वर्तन्ते । एवमष्टाचत्वारिंशत्संख्याया चतुर्विंशतिसंख्या नास्ति । तस्मात् संख्यार्थेऽपि गायत्रीशब्दे 'एका जगती द्वे गायत्र्यौ' इत्येतद्नुपपन्नमेव । यश्चोभयोर्दोषो नासावेकस्य वाच्यः ।

ऐकसंख्यमेव स्यात् । १५ ॥

भाष्यम्— अत्रोच्यते । न ब्रूमः संख्यायां संख्या वर्तत इति । किं तर्हि ? अष्टाचत्वारिंशत्संख्यापरिच्छिन्नेष्वक्षरेषु अवयवभूते द्वे चतुर्विंशतिसंख्ये, न तु द्वे ऋचौ इति । न च संख्या संख्यान्तरं निवर्तयति । यदि निवर्तयेदेकसंख्यमेव स्यात् । यस्य दश गावस्तस्य द्वौ पञ्चकौ गवामित्येतद्वचनं न स्यात् । भवति च तत् । तस्मान्न संख्या संख्यान्तरं निवर्तयति ।

एवं वा । न विंशतौ दशेति चेत् । यदि संख्यायां गायत्रीशब्दः, एवमपि नाक्षरान्तरेण कर्तव्यः । किं कारणम् ? विंशतौ दश विद्यन्ते । किमतः ? तावदतः । येन विंशतिरुपात्ताः, दशत्वेन दश भवन्ति । एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्तास्तेन तदन्तर्गता गायत्र्यो भवन्ति । तस्माद्विशेषेण प्रयोगः । एव चोदकानुग्रहश्च भवति । गायत्रं चाहः कृतं भवति ।

ऐकसंख्यमेव स्यात् । अथाऽऽह जगत्यां त्रिष्टुभि चोत्पन्ना न गायत्र्य उत्पन्ना भवन्ति । कथम् ? सामर्थ्यं परिच्छिन्दती संख्या कर्माणि अङ्गीभवति । न तथागतः

त्रिष्टुभो वाऽक्षरः साधनम् । [redacted] तर्हि ? त्रिष्टुब्जगत्यः । अथोच्येत 'गायत्रमेतदहर्भवति' इति वचनादक्षरस्य एवात्र साधनमिति । तथा सति अक्षरावलोप एव प्राप्नोति, उत्तरस्यावयवस्य अनङ्गत्वात् । न चानङ्गेऽनुपादीयमाने चोदको बाध्यते । तस्मात् यदुक्तम्, यद्यपि संख्यायां गायत्रीशब्दः, एवमप्यविकारेण प्रयोग इति, एतदयुक्तम् । दर्शयति च नोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति, यदयम् 'एका च दश च शतं च सहस्रं च परार्धं च' इति सर्वसंख्या अनुक्रामति । यदि चोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्ति, ऐकश्रुत्यमेव स्यात् । एकैव परार्धसंख्या भवेत् । सा हि सर्वास्य उत्तमा । यतस्त्वेकस्या अप्यनुक्रान्ताः । अतो विज्ञायते, नोत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवन्तीति ।

गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥१६॥

भाष्यम्— नैतदेवं संख्यायां गायत्रीशब्द इति । कथं तर्हि ? गुणाद् द्रव्यशब्दः स्यात् । चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः । कस्मात् ? असर्वविषयत्वात् । यदि संख्याशब्दः स्यात्, सर्वस्मिंश्चतुर्विंशतिसंख्यासंयोगे वर्तेत गोयूथादौ । न च वर्तते । तस्मान्न संख्याशब्दः ।

गोत्ववच्च समन्वयः ॥ १७ ॥

भाष्यम्— यथा गौरिति उत्पत्ति गमननिमित्ते सामान्यलक्षणाभिधाने सास्नादिमत्येव समन्वयः, नान्यत्रेति तद्वत एव गोशब्दो विज्ञायते । एवमयमप्यूम्वचन एव विज्ञातुं न्याय्यः ।

संख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥

भाष्यम्— चतुर्विंशतिसंख्यावाचकः शब्दोऽस्ति, चतुर्विंशतिरिति । नान्तरेण गायत्रीशब्देनार्थः । संज्ञाया व्यवहारार्थत्वादेकेन व्यवहारसिद्धेः ।

इतरस्याश्रुतित्वाच्च ॥ १९ ॥

भाष्यम्— इतरस्य ऋग्द्रव्यस्याश्रुतित्वात् । अग्न्यादिशब्दस्यादिशब्दः । तथापि व्यवहारार्थेन शब्दान्तरेण प्रयोजनम् । तत्रायं गायत्रीशब्दोऽर्थवान् भवति । संख्यायां निष्प्रयोजनः । तस्मादपि ऋक्शब्दो न्याय्यः । अतो गायत्रीणामृचामागमः कर्तव्य इति ।

द्रव्यान्तरेऽनिवेशादुक्थ्यलोपे विशिष्टं स्यात् ॥ २० ॥

भाष्यम्— यदुपवर्णितम्, अग्निष्टोमवदिति, तत्र ब्रूमः । अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चिन्निवेशो नास्ति । यथा गायत्रीशब्द ऋग्द्रव्ये । अयं हि केवलाग्निष्टोमान्तस्य ब्रूते । न चोक्थ्यलोपमन्तरेण द्वादशाहिकानामह्नामग्निष्टोमान्तता भवतीत्यवश्यकार्य उक्थ्यलोपः । अयं पुनर्गायत्रीशब्दः ऋग्द्रव्यस्य वाचकः इत्युक्तम् । न चाक्षरावलोपेन तद्द्रव्यं प्राप्यते । तस्मादिग्गोऽप्यमुपन्यास इति ।

अशास्त्रलक्षणत्वाच्च ॥ २१ ॥

भाष्यम्— अशास्त्रलक्षणानि चोक्थ्यस्तोत्राणि ज्योतिष्टोमे, तानि शास्त्रलक्षणयाऽग्निष्टोमसंस्थया बाध्यन्ते । इह पुनर्विपरीतम्, शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यस्त्रिष्टुब्जगत्यः । ता न शक्नुवन्ति गायत्रीं बाधितुम् ।

उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥ २२ ॥

भाष्यम्— अथ यदुक्तम्, संख्यायां गायत्रीशब्दो दृष्टः 'ये हि द्वे गायत्र्यौ, सैका जगती' इति । तस्य कः परिहारः ? उच्यते । औत्पत्तिकमेतद्वचो नामधेयमित्युक्तम् । अत उत्पत्तिनामधेयत्वाचोऽयं जगत्यक्षरे चतुर्विंशत्यक्षरे पदद्वये प्रयोगः, स भक्त्या विशेषः । न ह्येकस्य शब्दस्यानेकार्थता सत्या गतौ न्याय्या । कथं पुनर्भक्त्या ? परिमाणसामान्यात् । यत्परिमाणं द्वयोर्गायत्र्योस्तदेकस्या जगत्याः । अत एतदुक्तम् 'ये हि द्वे गायत्र्यौ सैका जगती' इति । यथा, यो द्वौ कौरवौ स एको बाह्लीक इति । एतच्च गायत्रीद्वयप्रशंसार्थं वचनम् । कथम् ? इदं श्रूयते, 'द्वाभ्यां गायत्रीभ्यां वैश्वस्येति । तदेतदयुक्तमिवोच्यते । जगत्या वैश्यस्य कार्यम्, जागतो हि वैश्यः । तदेतद्द्वाभ्यां गायत्रीभ्यां क्रियते, जागत्यैव तत्कृतं भवति, ये हि द्वे गायत्र्यौ सैका जगती' इति । प्रशंसाहेतुरयं संख्यार्थत्वे गायत्रीशब्दस्य ।

वचनमिति चेत् ॥ २३ ॥

भाष्यम्— अथवं वचनमेतदुक्तम्, यथानुवादो गायत्रीशब्दः । अत्र तु विधिरत्र कथम् ? यथा 'त्रिरोऽनुष्टुभः चतस्रो गायत्रीः करोति' इति

कः पुनर्विधौ विशेषः । विधौ शब्दार्थेन व्यवहारो भवति । तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो न शक्याः कर्तुम् । शक्यास्तु चतस्रश्चतुर्विंशतयः । तस्मात्तत्र संख्याया गायत्रीशब्द इति ।

यावदुक्तम् । २४ ॥

भाष्यम्—अथ ब्रूमः । इहैवैकत्र संख्यार्थो नान्यत्र । क्वचिद्दर्शनात् । आह । यद्येवम्, न संख्यावचनः । कथमिह संख्यार्थो स्यात् इति । उच्यते । लक्षणयाऽपि विधानं भवति । यथा लोके अमी पिष्टपिण्डाः सिंहाः क्रियन्तामिति, वेदेऽपि ' घृतैरुपतिष्ठते ' इति । न च तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्ट इत्यन्यत्रापि प्रतिकृतिवचनो विज्ञायते, घृतशब्दो वा घृतसाधनमन्त्रवचनः, न च लक्षणया प्रयोगे शब्दार्थः परिच्छिद्यते । यत्कारणम्, स्वार्थे एव वर्तमानोऽर्थान्तरं लक्षयति । स्वार्थं जहदेव लक्षयेत् । तस्मादयमन्यो हेतुः ।

अपूर्वे च विकल्पः स्याद्यदि संख्याविधानम् । २५ ॥

भाष्यम्—अपूर्वे च दर्शपूर्णमासकर्मणि विकल्पः स्यात्, यदि संख्याया गायत्रीशब्दः । तत्र हि श्रूयते ' गायत्र्या परिदध्यात् ' इति । एवं श्रुते, आग्नेय्याश्चतुर्विंशत्यक्षरस्य त्रिष्टुभश्च विकल्पः स्यात् । विकल्पे पक्षे आग्नेय्या बाधः । स चायुक्तः सत्यां गतौ । तस्मादपि नैतत्संख्याविधानम् ।

ऋग्गुणत्वान्नेति चेत् । २६ ॥

भाष्यम्—अत्रोच्यते । न प्रकृतौ विकल्पो भविष्यति । कुतः ? ऋग्गुणत्वात् । ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः । ऋचस्तस्य साभिधेयस्य आम्नाताः । यदि अनृचा परिदधीत, ऋग्गुणत्वं बाध्येत । तस्मात्तत्राग्नेय्यैव परिधास्यति । तथा सति गायत्र्या परिहृतं भविष्यति । ऋग्गुणत्वं चोपसंगृहीतम् ।

तथा पूर्ववति स्यात् । २७ ॥

भाष्यम्—पूर्ववत्यपि बृहस्पतिसवे तथा स्यात्, यथा अपूर्वे । अत्रापि ऋग्गुणकः प्रयोगोऽङ्गीकृतश्चोदकेन । तत्रापि ऋच्युपादीयमानायां गायत्र्या चैवाहः कृतं भवति, ऋग्गुणत्वं च न बाधितम् । तस्मादाद्यावलोपः ।

गुणावेशश्च सर्वत्र । २८ ॥

भाष्यम्—तुशब्दस्य स्थाने चशब्दः । इहत्य तुशब्दस्यार्थे चशब्दः यथा, भित्त्वेह भवति इति । गुणस्य चतुर्विंशतिसंख्यायाः सर्वत्राऽऽवेशः कृत्स्नायामाग्नेय्याम्, नावयवे । अतस्तस्यामुपादीयमानायामृग्गुणत्वं चोपगृहीतं भवति, संख्या च । बृहस्पतिसवे पुनर्या ऋचश्चोदकेनाङ्गीकृताः, तासामवयवे चतुर्विंशतिसंख्या निविष्टा । तस्मिन्नुपादीयमाने ऋग्गुणत्वमनुपात्तं भवति । प्रकृतिगायत्रीषु तूपात्तं भवति । तस्मात्संख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणामागमः प्राप्नोति ।

अपर आह । इदं तावदयं संख्यावादी प्रष्टव्यः । कस्मादक्षरगतायामेव संख्यायां भवानवस्थितः, न पुनरन्यसंख्येयगतायामपि, अङ्गगतायां चमसगतायां वा यावताऽविशेषेण श्रुतम् ' गायत्रमेतदहर्भवति ' इति । एवं सति सर्वत्र गुणावेशः संख्यावेशः प्राप्नोति ।

निष्पन्नग्रहणान्नेति चेत् । २९ ॥

भाष्यम्—[illegible] चेद् ब्रूयात्, 'यत्र निष्पन्नो गायत्रीशब्दः', प्रसिद्धः इत्यर्थः । तस्य ग्रहणं न्याय्यम् । अयं चाक्षरगतायामेव संख्यायां प्रसिद्धो न सर्वत्र । तस्मात्सर्वसंख्येयगतो गृह्यत इति ।

तथेहापि स्यात् । ३० ॥

भाष्यम्—स वक्तव्यः । यथाऽक्षरगतायामेव संख्यायां दृष्टो नान्यत्र, एवमृक्ष्वेव दृष्टो नान्यस्मिन्नक्षरसमूहे गद्ये वा । यथा चाक्षरेष्वेव दृष्ट इति तावद्धरे विज्ञायते । एवमृक्षु दृष्ट इति नावृक्षु विज्ञातुं न्याय्यः ।

यदि वाऽविशये नियमः प्रकृत्युपबन्धनाच्छरेष्वपि प्रसिद्धः स्यात् । ३१ ॥

भाष्यम्—अत्राऽऽह । यद्यप्ययमृक्षु गायत्रीशब्दः, एवमप्यक्षरलोप एव कार्यः । किं कारणम् ? प्रकृत्युपबन्धनात् । चोदकेनात्र प्राकृत्यस्त्रिष्टुभः प्रापिताः । ता इमा नोज्झिता भविष्यन्ति । गायत्रीशब्दश्च संख्यासामान्याच्छक्नोति तद्वत्त्ववान् वक्तुम् । एवमुभौ विधी अनुगृहीतौ भविष्यतः प्राकृतो वैकृतश्चेति । अत उत्तरं पठति । यद्यविशये असंशयेऽपि, गायत्रीषु विहितासु प्रकृत्युपबन्धनाद्गायत्र्या गायत्रीशब्दः कल्प्यते, शरेष्वपि

'शरमयं बर्हिर्भवति' इति कुशेषु शरशब्दः कल्पयितव्यः। कौशस्येन बर्हिः कार्यम्। वक्तव्यो वा विशेषः।

दृष्टः प्रयोग इति चेत्। ३२॥

भाष्यम्— अथ विशेषो दृष्टः। चतुर्विंशतिसंख्यामक्षरगणनया गायत्रीशब्दस्य प्रयोगः 'ये द्वे गायत्र्यौ सैका जगती' इति। तेन शक्यते कल्पयितुम्।

तथा शरेष्वपि। ३३॥

भाष्यम्— शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते, शरवणमेवेदं कुशवनमिति।

भक्त्येति चेत्। ३४॥

भाष्यम्— अनोच्यते। स तत्र शरशब्दो भाक्तः प्रयुज्यते। दीर्घत्वात् पृथुपत्रत्वात् सादृश्याद्वाऽसौ, शरवणमेवेदं कुशवनमिति। स्वार्थे वर्तमानः सादृश्यं गमयति। स्वार्थं जहत् कथं गमयेत्। तस्माच्छरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेष्विति।

तथेतरस्मिन्। ३५॥

भाष्यम्— तथेतरस्मिन्नपि 'ये द्वे गायत्र्यौ सैका जगती' इति भाक्त एव गायत्रीशब्द इत्युक्तम्। सोऽपि स्वार्थे एव वर्तमानस्तत्सदृशं गमयतीति, अक्षरैव प्रयुक्तो न संख्यायाम्। तस्मान्न संख्याया गायत्रीशब्दः। अतो नाक्षरावलोपः कर्तव्यः।

अर्थस्य चासमाप्तत्वान्न तासामेकदेशो स्यात्। ३६॥

भाष्यम्— अपि च त्रिष्टुब्जगतीनामेकदेशो वाक्यमपरिसमाप्तं भवति। न चापरिसमाप्तेन वाक्येनार्थः कश्चिदभिधीयते। अर्थाभिधानार्थश्च मन्त्रयोगः। तत्र मन्त्रयोग एवानर्थकः स्यात्। तस्मान्न तासां त्रिष्टुब्जगतीनामेकदेशो गायत्रीशब्दः स्यात्। तस्मादुत्पत्तिगायत्रीणामेव दाशतयीनामागमः कर्तव्य इति।

शा— 'संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते। मन्त्रान्तरे घटादौ च तस्मात्संख्यान्वितासुषम्॥ अष्टाक्षरैस्त्रिभिः पादैर्युक्तामभिदधात्यसौ। तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः॥' तस्मादुत्पत्तिगायत्र्य आनेयाः। पूर्वाधिकरणे उपवर्णश्चिन्तितः, उपगन्तव्यत्वेऽपि चिन्तितः।

सोम— सूत्रार्थस्तु— 'गायत्रं भवति' इति गायत्रीषु श्रुतासु प्राकृतीनां त्रिष्टुमादीनामवच्छेदः अक्षरावलोपः चोदकेन प्राकृतीनामधिकारात् सन्निधानात्। न च प्रत्यक्षाभिहितानि प्राकृतीनां बाधनं शङ्कनीयम्। संख्यात्वाद् गायत्रीशब्दार्थस्य संख्यामात्ररूपत्वे दृष्टिरेषाभावात्। यथा 'अग्निष्टोमे भवति' इत्यत्र द्वादशाहिकानामह्नां उक्थ्यावलोपः, तथा अत्रापि अक्षरावलोपः इति। गायत्रीशब्दस्य संख्यावाचित्वं च संख्याया अव्यभिचारात्।

वि— 'अहर्गणगतास्तत्र वर्णलोपः कार्योऽथवा। आद्यः संख्योक्तितो, नैव गवादौ व्यवहृतः॥'

भाट्ट— बृहस्पतिसवे प्रकृतितो गायत्रत्रैष्टुभादिनानाछन्दःसु प्राप्तेषु छन्दोऽन्तरपरिसंख्यार्थं 'गायत्रमेतदहर्भवति' इति श्रुतम्। तत्र गायत्र्यादिशब्दानां चतुर्विंशत्यक्षरसंख्यामात्रवाचित्वात् नागृहीतविशेषणान्याये लक्षणयाऽपि ऋक्षु प्रयोगोपपत्तेस्तत्रापि न क्षतिः। अतश्च प्राकृतीष्वेव ऋक्षु अधिकाक्षरलोपं कृत्वा चतुर्विंशत्यक्षराण्येव पठनीयानि। अत एव 'ये त्रि द्वे गायत्र्यौ सैका जगती' इति लिङ्गमपि संख्यावाचित्वपक्षे उपपद्यते, न जातिवाचित्वपक्षे, 'तिस्रोऽनुष्टुभश्चतस्रो गायत्र्यो भवन्ति' इति च। अन्यत्र अग्निष्टोमे उक्थ्यादिस्तोत्रशेषवदिहाप्यधिकाक्षरावलोपप्रसक्तौ न गायत्र्यादिशब्दानां संख्यामात्रवाचित्वम्, तथात्वे घटादिसंख्यायामपि प्रयोगापत्तेः। प्रयोगानुसारेणाक्षरसंख्यावाचित्वे तेनैव ऋग्विशेषस्य वाच्यत्वापत्तेः। इतरथा तावत् अक्षरगणेऽपि प्रयोगापत्तेः। अतोऽष्टाक्षरपादत्रययुक्तः ऋङ्मन्त्रविशेष एव गायत्र्यादिपदवाच्यः। निरुक्तलिङ्गेषु तु संख्यामात्रे लाक्षणिकः। तेन दाशतयीभ्य एवोत्पन्नगायत्र्य आनेया नाक्षरावलोपः। तथात्वे वाक्यार्थपरिपूर्त्यभावेनार्थप्रकाशकत्वानुपपत्तेश्च। पूर्वाधिकरणे अधिकागमरूपोपचयश्चिन्तितः, तत्प्रसङ्गात् 'इहापचयश्चिन्त्यत इति नात्र तथाऽध्यायसङ्गतिर्यतितव्यम्।

**मण्डन—** 'गायत्रता नाक्षरलोपने स्यात् ।'

**शंकर—** 'गायत्री वर्णलोपात् ।'

● बृहस्पतिसवादिविकृतौ औपदेशिकैः ग्रहणैः (ग्रहैः) आतिदेशिकानामैन्द्रवायवादिग्रहाणां समुच्चयः । १०।४।२।३-५. मीको. पृ. १६४४ 'ग्रहसमुच्चयन्यायः' इत्यत्र द्रष्टव्यम् ।

■ बृहस्पतिसवन्यायः । सौत्रामण्यादेः अग्निचयनाङ्गता ॥

**समवाये चोदना संयोगस्यार्थवत्त्वात् । ४।३। १२।२९ ॥**

भाष्यम्— 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति । तत्र संदेहः किमङ्गप्रयोजनसंबन्ध एष उत कालार्थः संयोग इति । अङ्गप्रयोजनसंबन्ध इति ब्रूमः । एवं हि श्रुतिविनियुक्तोऽर्थः । इतरथा काले लक्ष्येत । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मादग्न्यङ्गं सौत्रामणी, वाजपेयाङ्गं बृहस्पतिसव इति ।

**टुप्—** यदि वाजपेयः फलार्थेनोच्चार्येत, क्रियमाणोऽपि श्रुत्या हीयेत । तस्मादङ्गत्वायोच्चार्यमाणः स्वार्थः, तेनाङ्गाङ्गिसंबन्धः ।

**कालश्रुतौ काल इति चेत् । ३० ॥**

भाष्यम्— एवं चेत्पश्यसि, अङ्गप्रयोजनसंबन्ध इति । अथ कालविधानं कस्मान्न भवति । कालविधिरूपो हि शब्दः, चित्वा चयनेऽग्निनिर्वृत्ते इति ।

**टुप्—** अङ्गाङ्गित्वे हि बृहस्पतिसवः कर्मान्तरम्, अन्यापूर्वान्तरम्, धर्मलक्षणत्वं च । तस्मादेतत्प्रभृतिदोषपरिहाराय निर्ज्ञातस्य बृहस्पतिसवस्य वाजपेयेन काले लक्ष्यते । इष्ट्वेति च कालाभिधाने समर्थः शब्दः ।

**नासमवायात् प्रयोजनेन स्यात् । ३१ ॥**

भाष्यम्— नैतदेवम् । असमवायात् । शब्दप्रयोजनेन शब्दार्थेनेत्यर्थः । शब्दार्थश्चयनम् । तेनासमवायः स्यात् सौत्रामण्याः, वाजपेयेन च बृहस्पतिसवस्य । प्रकरणं च बाध्येत । अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मो गम्यते यागः । वाजपेयप्रकरणे च वाजपेयस्य । इतरथा तयोः प्रकरणेऽन्यस्य धर्मः काले गम्येत । तस्मादङ्गप्रयोजनसंबन्धः इति ।

**टुप्—** प्रकरणान्तरत्वादविपरिवृत्तिः । अविपरिवृत्तिश्चेत् कथं कालोऽस्य विधीयते । यदि 'बृहस्पतिसवेन यजेत' इत्यनेन विपरिवृत्तिः, ततस्तेनैव क्षीणत्वान्न काल विधिः । अथ कालविधिः, न विपरिवृत्तिः । तस्मात् प्रकरणान्तरे श्रुतं कर्मान्तरं विधीयते । तत्र वाजपेयाङ्गम् । तत्र प्रधानकालत्वादङ्गानां प्रधानकालत्वे प्राप्ते वचनात् वाजपेयेन साङ्गेन बृहस्पतिसवधर्मविशेषेणापूर्वं कृत्वा तत्र सर्वं कर्तव्यमिति ।

**शा—** 'उभयोर्वाजपेयस्य बृहस्पतिसवस्य च । प्रस्तावफलयोर्नैव मिथोऽङ्गाङ्गित्वसंभवः ॥ न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत् । क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा ॥' इति प्राप्ते, ब्रूमः । 'वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता । तत्प्रक्रिया च बाध्येत, न च दूरगतं प्रति ॥ कालः शक्य उपादातुम्, काले कर्म हि चोद्यते । काले च चोद्यमानं सत् कर्माविपरिवर्तनात् ॥ प्रसिद्धात् कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् । वाजपेयाङ्गभावेन वाक्येनैव विधीयते ॥'

**सोम—** यथा पूर्वत्र पश्वादिफलकत्वमानावेदकशब्दस्वारस्यात् अनियमः एवमिह क्त्वास्वारस्यात् कालविधिः इति प्रत्यवस्थानात् सङ्गतिः । सूत्रार्थस्तु— 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यादिषु समवाये अङ्गाङ्गिभावरूपे चोदना स्यात् वाजपेयादिसंयोगस्यार्थवत्त्वात् ।

**वि—** 'इष्ट्वा तु वाजपेयेन बृहस्पतिसवं यजेत् । कालं वा बोधयेद् वाक्यमुताङ्गत्वस्य बोधकम् ॥, क्त्वाश्रुत्या भाति कालोऽत्र, नैवमङ्गत्वबोधनम् । श्रुतेर्मुख्यं प्रक्रिया च तथा सत्यनुगृह्यते ॥' 'अग्निं चित्वा' इत्यत्राप्येवं योजनीयम् । १३.

**भाट्ट—** 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यग्निवाजपेयप्रकरणे श्रुतम् । तत्र प्रकरणान्तरन्यायेन (२।३।११) प्रसिद्धसौत्रामणिबृहस्पतिसवापेक्षया कर्मान्तरत्वेन तत्तद्धर्मकं

अग्निवाजपेयपूर्वकत्वेन विशिष्टं विधीयते। तस्य च फलापेक्षायां प्रकरणादिना अग्निवाजपेयाङ्गत्वं अनित्यत्वमेव इति नत्वप्रयुक्तत्वे तत्कर्मान्तरस्य। समासेऽपि बृहस्पतिसवातिरिक्ताङ्गविधिवाजपेयादिप्रयोगे तद्वचनात् इदं फलानुकूल्योपयत्वात्‌ परमापूर्वनिर्वर्तकः वचनार्थे न विरुध्यते।

मण्डन— 'सौत्रामणौ चितेरङ्गम्।'

शंकर— 'बृहस्पतिसवाङ्गता ( वाजपेये )।'

● न च अत्र ('दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र) बृहस्पतिसवन्यायेन सोमयागस्य फलवत्कर्मान्तरं विधीयते इति शक्यं वक्तुम्, सोमशब्दस्य बृहस्पतिसवशब्दवत् नामत्वाभावेन धर्मातिदेशकल्पनाभावात्। वि. ४।१।३६. ● सत्यपि फलवत्त्वात् अपकर्षेऽयं युक्तमनीषः बृहस्पतिसवन्यायेन यजनम्, (इति पूर्वपक्षे)। भाट्ट. १०।५।११.

● बृहस्पतिसववत्। बृहस्पतिसवस्य वाजपेयाङ्गत्वेऽपि स्वकाले वसन्ते कर्तव्यबृहस्पतिसवात् पूर्वमेव शरदि वाजपेयानुष्ठानमात्रेण तत्साध्यं परमापूर्वमुत्पद्यते, उत्पन्नं च परमापूर्वं बृहस्पतिसवेन पश्चात् फलमुखीक्रियते तथा तथा आधानमात्रादेव अग्नयो निष्पद्यन्ते पवमानहविर्भिस्तु तेषां फलवत्त्वसंपादनमात्रं इति पूर्वपक्षः। सोम. ५।१।९. ● न च व्यापकत्वम्, बृहस्पतिसववत् पवमानेष्टीनां आधानप्रयोगबहिर्भावेऽपि तद्वत् आधानकरणकभावनानिर्वर्त्यत्वस्य अश्रुतत्वेन ज्ञापकत्वकल्पनानुपपत्तेः (बृहस्पतिसवः वाजपेयप्रयोगबहिर्भूतः, वाजपेयकरणकभावनाबहिर्भावस्य श्रुतत्वात् च बृहस्पतिसवस्य ज्ञापकत्वकल्पनोपपत्तिः 'तद्वत् न' इति व्यतिरेकोपमान्ते)। भाट्ट. ५।३।९.

● बृहस्पतिसवप्रयोगवर्जितेन साङ्गेन अपूर्वं कृत्वा तत इदं (बृहस्पतिसवरूपं कर्म) कर्तव्यम्। टुप्. ४।३।१२।११.

● बैल्वः यूपः अग्नीषोमीये पशौ ब्रह्मवर्चसकामेन कर्तव्यः। भा. ३।६।१।१०, ● 'बैल्वं ब्रह्मवर्चसकामस्य यूपं कुर्वीत' इति फलविधिः। ४।३।१।१-४.

● बौद्धाः ज्ञानस्य प्रामाण्यं परतः अप्रामाण्यं तु स्वत इति वदन्ति। वैद्यनाथः. १।१।२।२ पृ. १४. ● बौद्धैः ज्ञानसन्तानस्य आत्मत्वाभ्युपगमात् तस्य च अद्रव्यत्वेन अपरिमाणत्वेऽपि समाप्तिः। सु. पृ. ६।७. ● बौद्धस्य दर्शने सत्कार्यविचारणं नाम नास्ति, न तस्य क्षणिकेषु स्कन्धेषु विज्ञानरूपवेदनासंज्ञासंस्कारसंज्ञकेषु मुक्तपूर्वा बुद्धिरुत्पद्यते। पूर्वमोक्तुः अद्यतनमोक्तुश्च अन्यत्वात्। ऋजु. पृ. १६४. बौद्धानां सर्वं जगद् नित्यमेव सर्वात्मना पृथग्भूतं च इति अनित्यत्वैकान्तप्रतिपादनम्। सु. पृ. ११६.

● बौद्धाधिकरणम् ( २।२।५।२८–३२ ब्रसू. )। उपलब्धाची योपपद्यन्तेः इति बौद्धाधिकरणे उक्तम्। कल्पतरु. २।४।१।१ ब्रसू.

● बौद्धादिभिः परमाण्वाद्यारम्भककारणाभ्युपगमात् शरीरसंतानारम्भकत्वकल्पनाच्च तद्व्यतिरिक्तकारणादिनिषेधः क्रियते। परमाणुशरीरादिष्वेव प्रधानात्मादिशब्दप्रवृत्तिरिति। शा. १।४।१२।२३ पृ. ३६०.

● बौद्धादिग्रन्थात् अवगम्य अनुष्ठितस्यापि वेदार्थस्य श्रेयःसाधनत्वाभावः। वेदादेव अवगम्य अनुष्ठितं कर्म श्रेयः साधयति इति नियमः। सु. पृ. १८१.

● बौद्धादिवर्णानामपि पूर्वपक्षप्रतिपादनार्थत्वेन उपयोगः। सु. पृ. १३८.

● बौद्धादिवचसां अप्रामाण्यम्। शा. १।३।३।५–७ पृ. २०१.

● बौद्धभाषितं सिद्धान्तकमभ्यञ्जनकरणवैराग्यध्यानाध्ययनाहिंसासत्यवचनदमदानदयादि तस्य धर्मं प्रति अप्रमाणता। शा. १।३।३।७ पृ. २०१.

● बौद्धमते ब्राह्मण ( वेदः ) अप्रमाणमेव। वैद्यनाथः. १।१।५।५.

● बौद्धसिद्धान्तः ( कश्चित् ) स्वच्छं चिन्मात्रं नैसर्गिकं ज्ञानरूपम्। तत्तु वासनोपप्लवात् अविद्यमानर्नीलाद्याकारं प्रकाशते इति। ( योगाचारमतम् )। भा. १।१।५।५ वृत्तिग्रन्थः.

● बौद्धस्मृतिः अहिंसाविषये प्रमाणम्, अहिंसायाः श्रुतिविहितत्वात् इति पूर्वपक्षः। स्वरूपेण धर्मार्थं

चोदोक्तत्वेन अधर्म एव । ततो न बौद्धस्मृतिः अहिंसायामपि प्रमाणम् । यथा श्वदृतौ गोपयः । वि. वार्तिकमतम् १।३।४ वर्णक २.

* बौधायनकल्पसूत्रं पौरुषेयमेव वेदमूलत्वात्तु प्रमाणम् । वि. १।३।७.

* बौधायनीयं आपस्तम्बीयं च धर्मगृह्यसूत्र तैत्तिरीयैरेव प्रतिपन्नम् । भा. १।३।७।१९.

* ब्रह्मा आहवनीयस्य दक्षिणतोऽवस्थितः कृताकृतप्रत्यवेक्षणेन अनुज्ञावचनेन च अनुगृह्णाति । भा. ११।२।१०।४५. * ब्रह्मा ऋत्विक् आधाने उद्गात्रा सह विकल्प्यते कल्पसूत्रानुसारेण । तदापि गानस्यैव विकल्पः । भाट्ट. १०।८।६. * ब्रह्मा ऋत्विक् । तस्य पुरुषास्त्रयः ब्राह्मणाच्छंसी, अग्नीत्, पोता चेति । वि. ३।७।१७. * ब्रह्मा ऋत्विक् । प्रथमगणस्थोऽयम्, पूर्णा दक्षिणा द्वादश गाः लभते । ३।७।१७. * ब्रह्मा प्रवृत्ते कर्मणि व्रियते प्रणीताप्रणयनकाले । अथवा अमावास्याया वेदिकरणं पूर्वेद्युः वचनेनोपदिष्टम् । तस्मिन्नपक्रम्यमाणे परिग्रहोऽप्यपकृष्टः. प्रसवोऽपि ब्रह्मवरणमपि । पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्याया पूर्वेद्युः । भा. १२।१।१८।३६, ३९ * ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति । वि. ३।७।१७. * ब्रह्मा सारस्वतं ग्रहं आदत्ते सौत्रामण्याम् । 'उत्तरेऽग्नौ पयोग्रहान् जुहोति, दक्षिणेऽग्नौ सुराग्रहान्' । भा. ३।५।१।१४. * 'वासिष्ठो ब्रह्मा' इति वाक्यं न वासिष्ठस्य ब्रह्मत्वविधायकत्वेनोपक्रम् । 'रश्मिरसि क्षयाय त्वा' इत्यादयो मन्त्राः स्तोमभागाः । तानधीयानः स्वयमवासिष्ठोऽपि ब्रह्मतामर्हति इति स्तोमभागप्रशंसारूपे अर्थवादे 'वासिष्ठो ब्रह्मा' इति पठितत्वात् । वि. ६।६।४. * ब्रह्माणं अध्वर्युर्दीक्षयति द्वादशाहे दीक्षायाम् ।३।७।१७ * 'ब्रह्माणं वृणीते' । भा. ३।७।९। २४. * ब्रह्मणा युगपदुपहूताना सर्वभक्षाणां स्वस्वकाले भक्षणं शतकृष्णलचरौ । १०।२।६।२१. मीको. पृ. १४८१ 'कृष्णलचरौ युगपदुपहूता.' इत्यत्र द्रष्टव्यम् । * ब्रह्मणे एव चत्वारो दक्षिणा उपहर्तव्या एकाहे । इतरेभ्य ऋत्विग्भ्यस्तु न किमपि शास्त्रीयं देयम्, लौकिकेन तु दानेन आनतिः । वि. १०।३।१८.

* ब्रह्मणो परिहारः सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय शतकृष्णलचरौ । १०।२।५।१९–२०. मीको पृ. १४८२ 'कृष्णलचरौ सर्वे शेषभक्षाः' इत्यत्र द्रष्टव्यम् । * ब्रह्मणे ये सकृद्दत्ताः कृष्णलाना इडादिभागाः, ते तेन सकृदेव न भक्षणीयाः, किन्तु स्वस्वकाले । १०।२।६। २१. * ब्रह्मणोऽपि जगत्स्रष्टौ कालादृष्टादिसापेक्षत्वम्, वैषम्यनैर्घृण्येन सापेक्षत्वात् इति न्यायात् । पराक्रम. ५।१।२. * ब्रह्मण. ऋत्विज. अध्वर्यूद्गातृहोतृणा प्रयोगेषु प्रसक्त वैकल्य समाधातु वेदत्रयज्ञानमपेक्षितम् । वि. ३।३।२४. * ब्रह्मण. ( ब्राह्मणस्य ) गृहे बार्हस्पत्यश्चरु राजसूये । भा. ११।४।३।१३, * ब्रह्मणस्तन्त्र चातुर्मास्यगतवरुणप्रघासेषु विहारद्वये । ११।२।१०। ४४–४८.

* ब्रह्मादिष्वेव षोडशसु सप्तदशसु वा ऋत्विक् शब्दस्य नियमः । ३।७।१७.

* ब्रह्मभक्षाणां युगपत्परिहरणं शतकृष्णलचरौ । १०।२।४।१८. मीको. पृ. १४७९ 'कृष्णलचरौ ब्रह्मभक्षाः' इत्यत्र द्रष्टव्यम् । * ब्रह्मभक्षे चतुर्धाकरणादीनामभावः । १०।२।७।२२.

* ब्रह्मभागो न दक्षिणा, दक्षिणावयवो हि सः । भा. १०।३।१९।७१.

* ब्रह्मयजमानौ दक्षिणत आसाते कर्मणः क्रियमाणस्य । भा. ३।४।१२।२३–१.

* ब्रह्मवरणं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु दार्शिकचोदकप्राप्त सौमिकेन प्रसङ्गसिद्धमेव । भा. १२।१।१८। ३६–३९. * ब्रह्मवरणं दर्शार्थम्, तत् सौमिकेनैव कृतत्वात् न कर्तव्यम् । १२।१।१८।४'. * ब्रह्मवरणम् । पौर्णमास्यां प्रणीताप्रणयनात् पूर्वं ब्रह्मण. कर्तव्याभावात् अप्रवृत्तावपि अमावास्याया पूर्वेद्युर्वेदिकरणाङ्गभूतानुज्ञादानाय अस्त्येव प्रणीताप्रणयनात्पूर्वं ब्रह्मणः प्रवृत्तिः । इदं च पूर्वपरिग्रहेऽपि ब्रह्मानुज्ञा अस्ति इति पक्षे । उत्तरपरिग्रहमात्रे ब्रह्मानुज्ञापक्षे पूर्वेद्युः प्रसवदानाय ब्रह्मण. प्रवृत्त्यसंभवात् इति ध्येयम् । न च परेद्युः हविरासादनोत्तरकाले आम्नाताया वेदेः पूर्वेद्युरपकर्षे सति

* 'ब्रह्महत्याऽश्वमेधाभ्यां न परं पुण्यपापयोः। आभृतस्थस्नानं च फलमिष्टं तयोर्द्विज ॥' इति स्मरणम्। सु. पृ. ६६.

* ब्रह्महत्यादीनां अनवगतनरकसाधनताप्रतिपेधो-त्तरकालभाविना वैदिकत्वेनैव नरकप्राप्तिसमर्थां अपूर्व-कल्पनोपपत्तिः। वा. २।१।२।५ पृ. ३९७.

* ब्राह्मणं विधायकम्। भा. १०।८।१०।१०, * 'ब्राह्मणम्' इति शब्दः विधीना अर्थवादाना च समानः। ७।१।३।१८, * तद्धि तेषां ब्राह्मणं येन विधीयन्ते। ७।१।३।१७, * मन्त्राश्च ब्राह्मणं च वेदः। २।१।८।३३. * "विधायकं सदर्थं ब्राह्मणं स्मारयिष्यति। 'मन्त्रस्तु विरोधे स्यात्' ('५।१।९।१६) इत्यत्रैतदुदिष्यते ॥" वा २।१।६।३०, * 'ब्राह्मणो न हन्तव्यः' इति। तन अर्थात् हननं प्रसं कुर्या वा न वेति। यदा करोति तदा प्रतिपिध्यते न हन्तव्य इति। तत्र अर्थप्राप्तस्य शास्त्रेण नित्यत्वाभा दुप्. १०।८।१।११. * ब्राह्मणः परिव्राट् पानमत्त. इति धर्मभेदात् सेना यवशा। भा. ८।२। ५।२४ * 'ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यत्र यथा पुरुषविशेषपरिविधिः तथा 'स्वर्गकामो यजेत' इत्यत्र पुरुषविशेषविधिर्न सम्भवति। सोम. ६।१।१. * ब्राह्मणः स्तूयते 'आग्नेयो वै ब्राह्मणः' इत्यत्र आग्नेयत्वेन। मुखजन्मत्वगुणयोर्धर्मैः। तथा हि 'प्रजापतिरकामयत प्रजाः सृजेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्नि देवताऽन्वसृज्यत, गायत्री छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्, तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त' [illegible]। वि १।४।१४. * ब्राह्मणः। स्वभार्यायां ब्राह्मण्यां ब्राह्मणादुत्पन्नत्वलक्षणमेव ब्राह्मण्यम्। तच्च मातृकसमधिगम्यम्, इतरस्य तु दुर्विज्ञानम्। कु १।२।१।१३. * 'अप्सु प्रकृतेषु ब्राह्मणोऽग्निमादधीत'। भा. ६।१।७।२८, * 'वसन्ते ब्राह्मणोऽग्नीनादधीत'। ६।१।७।२६, * 'ब्राह्मणो आनय' इति प्रयोगः पुंसि सद्वितीये दृष्टः तथा वसन्तो आदधीतात इति पुमान् सद्वितीयः स्यात् (इट पूर्वपक्षे)। ६।१।९।२२. * 'ब्राह्मणा आगताः परिव्राजका अप्यागताः' इति न्यायः ब्राह्मणपरिव्राजकन्याय. इत्याख्यम्। 'सर्वेषां शाखाणां सर्वेषां प्रजानां' इति ब्राह्मणम्। अत्र सायणः —'ब्राह्मणा आगता. ० इति न्यायेन वैशिष्ट्यविवक्षया प्रजानां पृथक् निर्देशः'। इति। ऐआ. १।५।१४.

* ब्राह्मणा एव दर्शपूर्णमासयोः अन्वाहार्यदक्षिणाया दृश्यन्ते 'यद्ब्राह्मणा यदन्वाहार्यमाहरन्ति' इति। भा. १२।८। १५।४७, * ब्राह्मणा एव दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणे निर्दिष्टाः 'ब्राह्मणानामिदं हविः सोम्या-नाम्' इति। १२।४।१५।४६. * ब्राह्मणा. बहुभुजा. । 'न ते निर्माल्यता यान्ति विनियोक्ताः पुनः पुनः'। सु. पृ. ११२१. * ब्राह्मणा.। 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति स्मृत्यालोचनया अन्यजातीयानां आर्त्विज्यनिषेधावगतिः। 'तस्मादाऽप्येतर्हि यतः सयुग् भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च छन्दोभिश्च' इति च ब्राह्मणानामेव आर्त्विज्यश्रुतेः। 'एता वै प्रजा हुतादो यद् ब्राह्मणाः' इति लिङ्गात् ब्राह्मणकर्तृकस्यैव आर्त्विज्यस्य अपूर्वसाधनत्वावगतिः। सु ३।७ पृ. ३४, * 'ब्राह्मणं न हन्यात्' इति अयं विशेषप्रतिषेधः। बाल. पृ. ३३. * 'वसन्ते ब्राह्मणं उपनयीत'। भा. ६।१। ७।३३. * ब्राह्मणेन (वाक्येन) एकवाक्यत्वे असन्दिग्धम्। वा १।२।१।१. * 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति कर्तरि तृतीया कारक-विभक्तिरूपा विनियोजकी श्रुतिः। बाल. पृ. ४४. * ब्राह्मणाय सुरामद्योप गौसमर्था पातु दीयते। ब्राह्मणाभावे वल्मीकवपाया वा शतातृण्णाया वा अवनीयते। वि. ३।५।३. * 'यो ब्राह्मणाय भव-गुरेत् स शतेन यातयात्' इत्यादि क्रत्वर्थं पुरुषार्थं वेति सन्देहे पुरुषार्थे पुरुषप्राप्यमः इति सिद्धान्तः, दर्शपूर्ण-मासयोः। ३।४।६।१७. * 'ब्राह्मणेभ्यो दधि दीय-ताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रविधि न दधिविधि अपेक्षते प्रवर्तितुम्। तक्रकौण्डिन्यन्यायः अयमेव। मामती. ३।३।१५।२६. * 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र ब्राह्मणशब्दस्य जातिवाचि-त्वात् कौण्डिन्यशब्दस्य व्यक्तिवाचित्वात् विशेष-प्रमाण्यस्य बाध. इति प्रयोजनं दर्शयति। सोम.

* ब्रह्मचर्यकाले एवास्य समस्तो वेदोऽध्येतव्य । यदि तु कश्चिदशक्तो नाधीते सकल अग्निहोत्रदर्शपूर्ण मासमात्र कथञ्चिदधिगच्छति न तस्य तत्रानधिकार । वा ३।८।८।१८

* ब्रह्मचारिणा मांस न भक्षयितव्यमित्युक्ते दर्वि गतमपि लेप वर्जयन्ति । अदृष्टार्थे ब्रह्मचारिणो मांसा भक्षणम् । तत्र यावदपि मांसस्पर्शन विदित भवति तत्रापि दोष न श्लेष्मप्रक्षेपादि किञ्चिद् दृष्टमपेक्ष्यते । भा १।४।१।४० * ब्रह्मचारिण अवकीर्णित्वे 'स गर्दभ पशुमालभेत' इति विहितो गर्दभ पशु, स च लौकिकेऽग्नौ । वि ६।८।८, * ब्रह्मचारिणो नाग्न्याधिकार । ६।८।४ * ब्रह्मचारिण विधवानियोग अनुचित । सु पृ १८५ * ब्रह्मचारिणा मधु मांस च प्रतिषिध्यते 'मधु मांसं च वर्जयेत्' इति । भा १०।१।१२।१२ * ब्रह्मचारिणा मध्यपानतिषेध पुरुषर्थं । वि १०।८।१२

* ब्रह्मयज्ञे एव अध्ययन तामाध्ययनविधि फल नियोगार्थ । इय फलतो वाचनिकी व्यवस्था । बाल पृ ११

* ब्रह्मवर्चसकाम । 'त्रिवृदग्निष्टुदग्निष्टोम तस्य वायव्यासु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकाम यजेत'। भा २।२।१२।२७, * 'अग्नीषोमीयमेकादश कपाल निर्वपेत् दशमास ब्रह्मवर्चसकाम'। १०।७।१७। ५८, * 'सौमारौद्र घृते चरु निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकाम'। १०।७।१९।६४, * ब्रह्मवर्चस कामेन अग्नीषोमीये पशौ बैल्वो यूप कर्तव्य । ११। ३।१० * ब्रह्मवर्चसकामे व्रीहिभिरेव याग सौमारौद्र यागे । १०।७।१९।६४-७१ । * ब्रह्मवर्चसकामस्य आधाने पवमानहविषां त्रयाणां सह प्रयोग 'यो ब्रह्मवर्चस काम स्यात् तस्य सर्वाणि हवींषि निरुप्याणि' इति । भा ११।४।८।११-१४, * ब्रह्मवर्चसकामस्य गायत्र्येव प्रयजेत् । ४।३।२।४ * ब्रह्मवर्चसकामस्य गायत्रनिते धारभरिके वचने गायत्र्येव आग्नेयमुत्तमानि ब्राह्मणि नैत्यस्छन्दसानि । सर्व्व २।१।१७ * ब्रह्मवर्चसकामस्य चतुर्विंशतिमनुब्रूयात् सामिधेनी दर्शपूर्णमासयो । भा १०।५।८।२७ * ब्रह्मवर्चसकामस्य निवृदतित्र कारीये। बाल पृ ३४ * ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणि । तत्र निर्वापे सहचोदिते वचनात् तत्र भवति । टुप् ११।४।४।१४ * 'पालाश ब्रह्मवर्चस कामस्य' (यूप कुर्यात्) इति फलविधि । भा ४।३। १।१-४, * 'बृहत्याग्रज्वल्नत ब्रह्मवर्चसकामस्याऽऽह• त्यावदध्यात्' वचने उत्पत्तिम् । १२।४।७।१७

* ब्रह्मसाम अभीवर्ते अविशेषेणाम्नातम् । भा ६।१।७।३१ * ब्रह्मसाम उक्थ्यस्तोत्राणां त्रयाणां मध्यमम्। सोम २।२।१३ * ब्रह्मसाम ज्योतिष्टोमे उक्थ्यानां तीमर विहितम् । वा २।२।१३।२८ * ब्रह्मसाम बार्हद्गिर नाम ब्राह्मणस्य कुर्यात्, पार्थुरश्म राजन्यस्य, रायोवाजीय वैश्यस्य इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। नित्य तु 'अभीवर्तो ब्रह्मसाम'। ४।३।२।४ * ब्रह्मसाम वैराजम् । विश्वजिति सर्वपृष्ठे । भा १०।६।५।१४ * 'ब्रह्मसाम्नि आलभते' (वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते इदम्) इति कर्मान्तर इति पूर्वपक्ष । टुप् ११।२।१२।५१

* ब्रह्मसामकाले प्राजापत्यानां पशूनां आलम्भे स्तवमात्रविधानम् । ११।२।१२।५१-५३ मीको पृ २८४५ 'प्राजापत्यानां पशूनाम्•' इत्यत्र द्रष्टव्यम्।

* ब्रह्मसामगान गवामयने द्वयोर्द्वयोर्मध्ये प्रथम मेव । ६।१।८।२५-२८ नवक ४ मीको पृ १५४७ 'गवामयने द्वयोर्द्वयोर्वा •' इत्यत्र द्रष्टव्यम् ।

* ब्रह्मसूत्रस्य 'नित्ययज्ञोपवीती' इति स्मृत्युक्तस्य पुरुषधर्मत्वम् । सु पृ ११५५

* ब्रह्महत्या । 'ब्राह्मणमुपेत्य यो वा ब्रह्महत्यां नियेषति । प्रायश्चित्तान्तर त्वस्या स्त्रीलमात्रविप नम् ॥' न वाचनिकप्रायश्चित्तान्तरेण ब्राह्मणीवधपर्यन्तेय एव नामतीयाद्दिरिक्तम्। वा ११।३।७ पृ ९११

* ब्रह्महत्यादिरिक्तमहापातककारिणां अवरिहरण उदीच्यानां दाक्षिणात्यानां न आचार । वा ११।३। ३।७ पृ २०४

* 'ब्रह्महत्याऽश्वमेधाभ्यां न परं पुण्यपापयोः । आमृतर्थ्यप्रदानां च फलमिष्टं क्रमोदित ॥' इति स्मरणम् । सु. पृ. ६६.

* ब्रह्महत्यादीनां अनन्तगतनरकफलकल्पना प्रतिषेधोत्तरकालभाविना वैदिकत्वेनैव नरकप्राप्तिसमर्थापूर्वकल्पनोपपत्तिः. । वा. २।१।२।५ पृ. ३९७.

* ब्राह्मणं विधायकम् । भा. १०।८।१०।१०, * 'ब्राह्मणम्' इति शब्दः विधीनां अर्थवादानां च समानः । ७।१।३।१८, * तद्धि तेषां ब्राह्मणं येन विधीयन्ते । ७।१।३।१७, * मन्त्राश्च ब्राह्मणं च वेदः । २।१।८।३३. * "विधायकं सद्ब्राह्मणं भविष्यति । 'मन्त्रतस्तु विरोधे स्यात्' (५।१।९।१६) इत्यनेनैतदभिधास्यते ॥" वा. २।१।६।१०. * 'ब्राह्मणः न हन्तव्यः' इति । तत्र अर्थात् हननं प्राप्तं कुर्यात् वा न वेति । यदा करोति तदा प्रतिषिध्यते न हन्तव्य इति । तत्र अर्थप्राप्तस्य शास्त्रेण नित्यबाधः । टुप्. १०।८।१।१ * ब्राह्मणः परिव्राट् वानप्रस्थः इति धर्मभेदात् तदाश्रयव्यवस्था । भा. ८।२।५।२४. * 'ब्राह्मणो बृहस्पतिसवेन यजेत' इत्यत्र यथा पुरुषविशेषविधिः तथा 'स्वर्गकामो यजेत' इत्यत्र पुरुषविशेषविधिर्न सम्भवति । सोम. ६।१।१. * ब्राह्मणः स्तूयते 'आग्नेयो वै ब्राह्मणः' इत्यत्र आग्नेयत्वेन । मुखजन्यत्वगुणयोर्धर्मैः । तथा हि 'प्रजापतिरकामयत प्रजाः सृजेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दः, रथन्तरं साम, ब्राह्मणो मनुष्याणाम्, अजः पशूनाम्, तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त' इति । वि. १।४।१४. * ब्राह्मणः । स्वभार्यायां ब्राह्मण्यां ब्राह्मणादुत्पन्नत्वलक्षणमेव ब्राह्मण्यम् । तच्च मानैकसमधिगम्यम्, इतरस्य तु दुर्विज्ञानम् । कु. १।२।१।२१. * 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत' । भा. ६।१।७।२८, * 'वसन्ते ब्राह्मणोऽग्नीनादधीत' । ६।१।७।२६, * 'ब्राह्मणौ आनय' इति प्रयोगः पुंसि सद्वितीये दृष्टः. तथा ब्राह्मणौ आदधीयाता इति पुमान् सद्वितीयः स्यात् ( इद पूर्वपक्षे ) । ६।१।५।२२. * 'ब्राह्मणा आगताः परिव्राजका अभ्यागताः' इति न्यायः ब्राह्मणपरिव्राजकन्यायः एतावत् । 'सर्वेषां ब्राह्मणा सर्वेषां प्रउगाणां' इति ब्राह्मणम् । अत्र सायणः — 'ब्राह्मणा आगताः' इति न्यायेन वैशिष्ट्यविवक्षया प्रउगाणां पृथक् निर्देशः' । इति । ऐआ. ३।५।१४. * ब्राह्मणा एव दर्शपूर्णमासयोः अन्वाहार्यदक्षिणया इष्यन्ते 'षड्ब्राह्मणा यदन्वाहार्यमाहरन्ति' इति । भा. १२।४।१५।४७, * ब्राह्मणा एव दर्शपूर्णमासयोः पुरोडाशस्य चतुर्धाकरणे निर्दिष्टाः 'ब्राह्मणानामिदं हविः सोम्यानाम्' इति । १२।४।१५।४६. * ब्राह्मणाः बहुश्रुताः । 'न ते निर्माल्यतां यान्ति विनियोज्याः पुनः पुनः' । सु. पृ. ११२१. * ब्राह्मणाः । 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति स्मृत्यालोचनया अन्यजातीयानां आर्त्विज्यनिषेधावगतिः । 'तस्माद्वाऽप्येतर्हि यतः सपुग् भूत्वा देवेभ्यो हव्यं वहति ब्राह्मणेन च छन्दोभिश्च' इति च ब्राह्मणानामेव आर्त्विज्यश्रुतेः । 'एता वै प्रजा हुतादो यद् ब्राह्मणाः' इति लिङ्गात् ब्राह्मणकर्तृकस्यैव आर्त्विज्यस्य अपूर्वसाधनत्वावगतिः । मु ३।७ पृ. ३४. * 'ब्राह्मणं न हन्यात्' इति अयं निषेधप्रतिषेधः । बाल. पृ. ३१. * 'वसन्ते ब्राह्मणं उपनयीत' । भा. ६।१।७।३१. * ब्राह्मण्येन ( वाक्येन ) एकवाक्यत्वे असत्त्वम् । वा. १।४।११।१. * 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इत्य कर्तरि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४४. * ब्राह्मणाय सुराग्रहशेषः सौत्रामण्यां यत्तु दीयते । ब्राह्मणस्याभावे वल्मीकवपायां वा शतातृण्णायां वा अवनीयते । वि. ३।५।३. * 'यो ब्राह्मणाय अवगुरेत् तं शतेन यातयात्' इत्यादि क्रत्वर्थं पुरुषार्थं वेति संशये पुरुषार्थं पुरुषमात्रधर्मः इति सिद्धान्तः, दर्शपूर्णमासयोः । ३।४।६।१७ * 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यत्र तक्रविधिः न दधिविधिं अपेक्षते प्रवर्तितुम् । तक्रकौण्डिन्यन्यायः व्यर्थ एव । भामती. ३।३।१५।२६ * 'ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्याय' इत्यादौ ब्राह्मणशब्दस्य जातिवाचित्वात् कौण्डिन्यशब्दस्य व्यक्तिवाचित्वात् विशेषेण सामान्यस्य बाध इति प्रयोजनं संभवति । सोम.

१।३।१० वर्णक १. * ब्राह्मणस्य अग्नीषोमीयपुरोडाशस्यैव सोमादुत्कर्षः। 'यदेवाद. पौर्णमासं हविः' इत्यादिवाक्येन उपांशुयाजाज्यमपि ब्राह्मणेन सोमात् प्राक् अग्नीषोमीयं न कर्तव्यम्, प्राजापत्यं वैष्णवं वा कर्तव्यमेवेति न तस्योत्कर्षः दर्शपूर्णमासयोः। भा. ५।४।६।१९, * ब्राह्मणस्य अतिरात्रे षोडशी गृह्यते। १०।५।९।२४. * ब्राह्मणस्य अपि सोमपूर्वत्वेष्टिपूर्वत्वरूपपक्षद्वयम्। ५।४।४।१०–१४, १७–१८. मीको. पृ. १०९३ 'उत्कर्षाधिकरणम्' इत्यत्र द्रष्टव्यम्। * ब्राह्मणस्य न अभिषेक.। 'अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते। सह्यासौ राजशब्देन, तेन नाब्राह्मणे मतः (राज्याभिषेकः)॥'। वा. २।३।२।३ पृ. ५८२. * ब्राह्मणस्य ज्योतिष्टोमे पयोव्रत क्रत्वर्थम्। भा. ४।३।४।८–९.

सू ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्। ६।२।११।३२॥

'सोमेन यजेत' इति सोमयाग उक्तः। 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति विद्या उक्ता। 'प्रजातन्तुं मा व्यवच्छेत्सीः' इति प्रजा उक्ता। सोमश्च विद्या च प्रजा च तेषां समाहारः सोमविद्याप्रजम्। ब्राह्मणस्य इत्युपलक्षणम्। तदिदं सोमविद्याप्रजं ब्राह्मणादेस्त्रैवर्णिकस्य नित्यं स्यात्। 'जायमानो ह वै ब्राह्मणस्त्रिभिरृणवा जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः इति। स वै तर्हि अनृणो यदा यज्वा ब्रह्मचारी प्रजावान्' इति ऋणवाक्येन सोमविद्याप्रजाना संयोगात्। यथा ऋणस्य प्रत्यर्पणं नित्यं तथा सोमाद्यपि नित्यम्। तुशब्दः अनित्यत्वशङ्काव्यावृत्त्यर्थः। 'तुशब्दः अप्यर्थः। ब्राह्मणस्य तु ब्राह्मणस्यापि इत्यर्थः। तेन क्षत्रियवैश्ययोः संग्रहः' इति कुतूहलम्। के.

* ब्राह्मणस्य तेज सस्तवः। भा ६।६।२।१४. * ब्राह्मणस्य द्रव्यार्जने प्रतिग्रह–याजन–अध्यापनान्येव नियतानि। उपायान्तरान् प्रत्यवाय। वि. ४।१।२ वर्णक ४. * ब्राह्मणस्य पौर्णमासीगताग्नीषोमीयस्य हविषः सोमादूर्ध्वमुत्कर्षः। पौर्णमासेष्टेरेव उत्कर्षः इत्येकदेशिमतम्। ५।४।४।१०–१४, १७–१८. * ब्राह्मणस्य प्रतिग्रहनियमविधि. दायविभागेन्नाद्यसंभवे दोषाभावमात्रबोधकतया अभ्यनुज्ञाविधिरेव। न नियमविधि', नापि परिसंख्याविधिः। भाट्ट. ४।१।२. * ब्राह्मणस्य बार्हद्गिरं ब्रह्मसाम कुर्यात् इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। भा. ४।३।२।४, * ब्राह्मणस्य बार्हद्गिर ब्रह्मसाम द्वादशाहे। ६।६।३।१७. * ब्राह्मणस्य मधुसीध्वोः नाम माध्वीगौडीसुरयोः पैष्ट्याश्च निषेधः। अब्रह्मसुरायाः त्रैवर्णिकाना प्रतिषेधः। वा. १।३।१।७ पृ. २०९–२१०. * ब्राह्मणस्य राजसूयाधिकारो नास्ति। वि. ११।४।३. * ब्राह्मणस्य विधायकस्यापि ब्रह्मपदे ब्राह्मणेन विनियोग. दृश्यते। सु. पृ. ६६६. * ब्राह्मणानामेव ऋत्विक्त्वं न राजन्यवैश्ययो। १२ ४।१५।४२–४७. मीको. पृ. २८४ 'अधिकारः आर्त्विज्ये ब्राह्मणस्यैव' इत्यत्र द्रष्टव्यम्। * ब्राह्मणानामेव राजसूयदशपेये राजन्यचमसानुप्रसर्पणम्। ३।५। २०।५२–५३. * ब्राह्मणानामेव सत्रेऽधिकारः। ६।६।२। १६–२३. मीको. पृ ३०२ 'अधिकारः सत्रे ब्राह्मणानामेव' इत्यत्र द्रष्टव्यम्। * ब्राह्मणाना व्यार्षेयभिन्नाना मनुवत् कल्पः। संकर्ष. ३।४।५. 'मनुवत्कल्पः व्यार्षेयभिन्नब्राह्मणानाम्' इत्यत्र द्रष्टव्यम्। * ब्राह्मणे न तावत् सर्वेषामेव (मन्त्राणा) विनियोगोऽस्ति। वा. २।१।१४।४६, * ब्राह्मणे भूयास. मन्त्रा विधायका., अल्पे तु अविधायकाः। २।१।६।३१. * ब्राह्मणे मन्त्राः भाषिकेण स्वरेण उपदिष्टाः। कर्मप्रयोगे तु त्रैस्वर्येणैव प्रयोक्तव्याः। १२।३।८।२०–२१. * 'ब्राह्मणेषु चरेद्भैक्षम्' इत्यनेन उपसंहारेण व्यावर्तितस्य क्षत्रियादेः 'चातुर्वर्ण्यं चरेद् भैक्षम्' इति उपसंहारव्यावर्तितविषयः अभ्यनुज्ञाविधिः। बाल. पृ. १७.

* ब्राह्मणाभिधः विधिरेव। वा. १।२।४।४५.

* ब्राह्मणावगोरणे शतसंवत्सरं यातनाप्राप्ति.। वि. ३।४।१०.

* ब्राह्मणावगोरणनिषेधस्य ऋत्विगानमनार्थं प्रवृत्तावपि ब्राह्मणमात्रविषयत्वावगमात् प्रकरणादुत्कर्षः। सु. पृ. १२३–१२४.

* ब्राह्मणादेः जातपुत्रस्य अनाहिताग्नेः वयोऽर्धातिक्रमे अवश्यं विहिताग्निहोत्राद्यननुष्ठाननिमित्तप्रत्यवाय-

यत् आधानानुष्ठाननिमित्तोऽपि अपरः प्रत्ययो भवति । सु. पृ. ९१४–९१५. * ब्राह्मणादिषु स्मातापित्या अनुमानेन वा राजशब्दः । वा. ३।५।८।२६.

* ब्राह्मणादिकर्तृकायाः अवेष्टेः कर्मान्तरत्वम् । भा. २।३।२।३. * ब्राह्मणादिकर्तृकाया अवेष्टेः राजसूयात् पृथक्त्वता । ११।४।३।९–१२. मीको. पृ. ७१३ ' अवेष्टेः ब्राह्मणादिकर्तृकायाः ० ' इत्यत्र द्रष्टव्यम् ।

* ब्राह्मणादिशब्दवत् । ब्राह्मणादिशब्दा यथा विशेषणमर्थाः, न तथा स्वर्गकामशब्दः । सोम. ६।१।१.

* ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरनियमः । १२।३।१।२३–२४. मीको. पृ. १४३७ ' क्रतौ ब्राह्मणोत्पन्नानाम्० ' इत्यत्र द्रष्टव्यम् ।

* ब्राह्मणोपेताः क्षत्रियाः ब्राह्मणेन पुत्रत्वेन स्वीकृताः ब्राह्मणवृत्त्या जीवन्तः । तेषामपि आर्षेयवरणं स्वजातीयमेव । संकर्ष. ३।८।७. मीको. पृ. १००५ ' आर्षेयवरण राजोपेतब्राह्मणोपेतयोः० ' इत्यत्र द्रष्टव्यम् ।

* ब्राह्मणकर्तृका अवेष्टिः ' यदि ब्राह्मणः यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा अभिघारयेत् ' इति । भा. ११।४।३।८.

* ब्राह्मणक्रमो मन्त्रक्रमेण बाध्यते, अग्न्यन्वाधानायः । पा. १।३।७।१४ पृ. ८६०, बाल. पृ. १४१. * ब्राह्मणक्रमस्य प्रथमभाविनेऽपि अनुष्ठाने विप्रकृष्टत्वाद्दुर्बलत्वम्, मन्त्रक्रमस्य तु अनुष्ठानसन्निकर्षात् प्रबलत्वम्, तेन दर्शपूर्णमासधर्माः आग्नेयकर्मणः प्रथमम्, ततः अग्नीषोमीयधर्माः इति क्रमः । सोम. ५।१।९.

* ब्राह्मणक्षत्रियविशां ऋणत्रयापाकरणं नित्यम् । वि. ६।२।११.

* ब्राह्मणगतं आख्यातपदं प्रधानगुणयोरन्यतरस्य विधायकम् । वि. २।१।६. * ब्राह्मणगतान्यपि आख्यातानि क्वचित् विधायकानि, यथा ' यस्योभयं हविरार्तिमार्च्छेत् ' इत्यादीनि । वा. २।१।६।३०, * ब्राह्मणगतानां मन्त्रगतानां चाख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिरनपच्छिन्ना तेषामभिधायकत्वम् । २।१।६।३१.

¶ ब्राह्मणश्रामण्यन्यायः । साहस्री. २७.

* ब्राह्मणत्वं इत्यादि । मातापितृसम्बन्धस्य अपत्ये ब्राह्मण्यादिप्रत्ययः तावत् सर्वदेहधारकैः स्वसंवेद्यः । न च निर्विषयः प्रत्ययोऽस्ति इत्युक्तम् । न चास्य सन्तानविशेषजन्यत्वं विषयः । निरालम्बनशब्दप्रयोगायोगेन जातिव्यतिरिक्तस्य संतानान्तरव्यावृत्तस्य विशेषस्य असम्भवात् । न च असदृशाद्भिन्नसन्तानमात्रे सन्तानः समाप्यते । येन सम्बन्धिविशेषेणैव सम्बन्ध, सन्तानिविशेषेण सन्तानो विशेष्टुं शक्यते । उत्पाद्योत्पादकक्रमेण अवस्थिताः पुरुषा एव हि सन्तानशब्दवाच्याः, न सन्तानाख्यं किञ्चित् वस्तु अस्ति । तस्मात् सर्वेषु ब्राह्मणेषु अनुस्यूतं प्रत्येकसमवेतं ब्राह्मणप्रत्ययविषयभूतं किञ्चिदभ्युपेयव्यम् । तस्मात् समानाकारेष्वपि पिण्डेषु विलक्षणब्राह्मणप्रत्ययवेद्यब्राह्मण्यादिजातिः नापह्नोतुं शक्यते । न चासौ शब्दस्य विषयः । प्रमाणान्तरागृहीतायां जातौ अगृहीतसम्बन्धत्वेन ब्राह्मण्यादिपदार्थस्थानात् । ' ब्राह्मणात् ब्राह्मण्यां यो जायते स ब्राह्मणः ' इति वाक्यार्थानवधारणात् । सम्बन्धाग्रहणादेव नानुमेयत्वम् । सदृशानुपपद्यमानार्थाभावात् उपमानार्थापत्त्यसम्भवात् पारिशेष्यात् प्रत्यक्षत्वम् । उत्पादकजातिज्ञानात् तु प्रागप्रतीतेः तस्य सहकारित्वं कल्प्यते । सु. पृ. १०–११. * ब्राह्मणत्वस्य न उपवीताध्ययनादि निमित्तम्, यर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि क्षित्राचारस्वनियत्वैश्यप्रतियोगित्वात् संदिग्धम् । सर्वे च दुष्टशूद्रेषु समाव्यमानत्वादनिश्चितम् । नापि तपआदीनां सपुरुषो ब्राह्मण्यम्, न तज्जनितः संस्कारः, न तदपि यदुग्रा जातिः । किं तर्हि ? मातापितृजातिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । या. १।२।१।२.

* ब्राह्मणत्वादिः न शास्त्रविषयः, लोकप्रसिद्धत्वात् वृक्षत्वादिवत् । प्र. १।२।१।२, * ब्राह्मणत्वादयः (जातय.) येषामपि आचारनिमित्ताः तेषामपि दृष्टविरोधसत्त्वादसत्त्वेन । न तु आचारनिमित्तवर्णविभागे प्रमाणं किञ्चित् । सिद्धाना हि ब्राह्मणादीनां आचारा विधीयन्ते, तस्मेतरेतराश्रयता भवेत् । स एव शुभाचारकाले ब्राह्मणः, पुनरशुभाचारकाले शूद्र इत्यनवस्थितत्वम् ।

वीता वा एतस्याग्नयः'। प्रशंसा 'वायुर्वै क्षेपिष्ठा देवता' इति। संशयः 'होतव्यं गार्हपत्ये न होतव्यम्' इति। विधिः 'यजमानसंमितौदुम्बरी भवति'। परकृतिः 'माषानेव मह्यं पचत' इति। पुराकल्पः 'उल्मुकैर्ह स्म पूर्वे समाजग्मुः' इति। व्यवधारणकल्पना 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति। 'हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पना॥ उपमानं दशैते तु विधयो ब्राह्मणस्य तु। एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्॥'

एतदपि प्रायिकम्। इतिकरणबहुलो मन्त्रोऽपि कश्चित् 'इति वा इति मे मनः' इति। इत्याद्युपनिषदश्च 'भगो भगीत्याह'। आख्यायिकास्वरूपं च 'उभौ ह मुञ्जम्' इति। हेतुः 'इन्दवो वामुशन्ति हि' इति। निर्वचनम् 'तस्मादापो अनु स्थन' इति। निन्दा 'मोघमन्नं विन्दते अप्रचेताः' इति। प्रशंसा 'अग्निर्मूर्धा' इति। संशयः 'अधः स्विदासीदुपरि स्विदासीत्' इति। विधिः 'पृणीयादिन्नाधमानाय' इति। परकृतिः 'सहस्रमयुता ददत्' इति। पुराकल्पः 'यज्ञेन यज्ञमयजन्त देवाः' इति।

वा— 'परिशेषसिद्धत्वात् ब्राह्मणलक्षणमवचनीयम्' इति। सूत्रमिदमनारम्भमिति प्रतिभाति। तत्र शेषशब्दप्रयोगात् लक्षणानभिधानाच्च सूत्रमारम्भणमेवेदमिति द्रष्टव्यम्। किमर्थं पुनः सूत्रमारभ्यते? नाऽऽरभ्येत, यदि मन्त्रब्राह्मणात्मक एव वेद इति सर्वेषां प्रसिद्धं भवेत्। येषां तु अप्रसिद्धं तेषां तृतीयादिप्रकारनिराकरणार्थं द्वैराश्यमेव वेदस्य इति प्रतिपादयितुमाह— 'शेषे ब्राह्मणशब्दः' इति। एकपुरुषकर्तृकमुपाख्यानं परकृतिः। बहुकर्तृकं पुराकल्पः। यत्रान्यथा अर्थः प्रतिभाति पौर्वापर्यालोचनेन व्यवधार्यान्यथा कल्प्यते सा व्यवधारणकल्पना, यथा 'प्रतिगृह्णीयात्' इति यत्र 'प्रतिग्राहयेत्' इति कल्पयिष्यते। विधिलक्षणमित्यत्र ब्राह्मणवाची विधिशब्दः।

शा— मन्त्रात्मकस्य वेदस्य लक्षणमुक्तम्। तदनन्तरं ब्राह्मणलक्षणाभिधानम्।



वि— 'नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा।, नास्तीयन्तो वेदभागा इति क्लृप्तेरभावतः॥, मन्त्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मन्त्रतः। अन्यद्ब्राह्मणमित्येतद् भवेद् ब्राह्मणलक्षणम्॥'

भाट्ट— 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं तल्लक्षणमपि प्रदर्शयति। मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम्।

मण्डन— 'मन्त्रेतरो ब्राह्मणशब्दवाच्यः।'

शंकर— 'लक्षणं ब्राह्मणस्य च।'

* ब्राह्मणलक्षणं चातुर्मास्येषु 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थम्। भाट्ट. २।२।९.

* ब्राह्मणवत्य इष्टकाः मध्यमायां चितौ उपधेयाः। ५।३।७।१७–१९.

‡ ब्राह्मणवसिष्ठन्यायः। यथा 'ब्राह्मणा आयाताः, वसिष्ठोऽप्यायातः' इत्यत्र प्रथमवाक्येनैव ब्राह्मणत्वेन रूपेण वसिष्ठस्याप्यागमनस्य सिद्धौ यत् 'वसिष्ठोऽप्यायातः' इति वाक्यान्तरं प्रयुज्यते, तत्पूर्ववाक्यघटकब्राह्मणपदोपात्तवसिष्ठेतरब्राह्मणवृत्तिधर्मविशेषबोधनपरतया पर्यवस्यतीति। अस्योदाहरणानि यथा महाभाष्ये 'हलन्त्यम्' (पा. १।३।३) इति सूत्रे 'उपदेशेऽन्त्यं हलित्संज्ञं भवतीति वक्तव्यम्' इति वार्तिकस्थोपदेशपदं व्याख्यातम् 'के पुनरुपदेशिनः? धातुप्रातिपदिकप्रत्ययनिपातागमादेशाः' इति। अत्र प्रातिपदिकपदेनैव प्रातिपदिकत्वेन रूपेण निपातानामपि संग्रहे सिद्धे ब्राह्मणवसिष्ठन्यायेन निपातपदोपादानमिति शेखरकाराशयः। साहस्री. २०४.

* ब्राह्मणवाक्यस्य मन्त्रलिङ्गेन न बाधः, मन्त्रस्य ब्राह्मणविहितार्थप्रकाशकत्वेन तत्परतन्त्रत्वात्। अन्यथा मनोतामन्त्रस्यापि सामान्यमन्त्रग्राहिप्रमाणसत्त्वेन लिङ्गात् हवनीयाङ्गत्वापत्तौ 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इति वाक्यानर्थक्याग्नीषोमीयाङ्गत्वबाधापत्तेः। कौ. ३।३।७।१४ पृ. १५९. * ब्राह्मणवाक्ये तु अविधानं विधानं चोभयमपि निष्फलम्। वा. ३।१।७।१४ पृ. ८२५.

* ब्राह्मणविहितानां एकार्थानां मन्त्राणां विकल्प, न तु समुच्चय । १२।३।१५।३१–३५. 'मन्त्राणां ब्राह्मणविनियुक्तानाम् •' इत्यत्र द्रष्टव्यम् ।

ॾ ब्राह्मणविहितेषु च संख्यानम् सर्वेषामुपदिष्टत्वात् । १२।३।१५।३१॥

चकारेण समुच्चयोऽनुवर्त्यते । ब्राह्मणविहितेषु ब्राह्मणे ये मन्त्रा विहिता. 'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यादयः तेषु समुच्चयः स्यात् । सर्वेषां उपदिष्टत्वात् यो न प्रयुज्येत तस्योपदेशो बाधितः स्यात् । तस्मात् समुच्चयः इति पूर्व. प. ।

याज्यानवषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् । ३२ ॥

'याज्याया अधि वषट् करोति' इति याज्याया. वषट्कारस्य च समुच्चयस्य दर्शनं भवति । तत् यद्वत् प्रमाणं तद्वत् ब्राह्मणविहितानां मन्त्राणां उपदेशः समुच्चये प्रमाणम् । इति पूर्वपक्षे दृष्टान्तप्रदर्शनं कृतम् ।

विकल्पो वा समुच्चयस्याश्रुतित्वात् । ३३ ॥

विकल्पो वा ब्राह्मणविहितानां मन्त्राणां स्यात्, न समुच्चयः । समुच्चयस्य अश्रुतित्वात् श्रुतिमूलकत्वात् नियमाभावात् । सत्याश्रवणे तु विधिकल्पनात् समुच्चयः । तस्मात् एकार्थत्वात् विकल्प. इति सिद्धान्त ।

गुणार्थत्वादुपदेशस्य । ३४ ॥

'उरु प्रथस्वेति पुरोडाशं प्रथयति' इत्यादेरुपदेशस्य गुणार्थत्वात् । मन्त्रेण पुरोडाशप्रथनस्य स्तुत्यर्थ. उपदेश. । नैतावो मन्त्रप्राप्त्यर्थं उपदेशः । तस्मान समुच्चयः ।

वषट्कारे नानार्थत्वात् समुच्चयः । ३५ ॥

यदुक्तं याज्यावषट्कारयोश्चेति तत्र वषट्कारे याज्यायां च नानार्थत्वात् समुच्चय. । याज्या देवतास्तुत्यर्था स्मरणार्था च, वषट्कारस्तु प्रदानार्थः इति तयो. नानाभिन्नौ अर्थौ । तस्मात् ब्राह्मणविहितानां मन्त्राणां विकल्प इति सिद्धान्तः । के.

* ब्राह्मणवैश्यौ राजसूये नाधिकारिणौ । राजन्यस्यैव स । भा. ११।४।४।१०. * ब्राह्मणवैश्ययोरपि प्रजापालनेन राजशब्द उपचरितो भवति । (तथा च राज्यकर्तृत्वं ब्राह्मणवैश्ययोरपि संभवति) । वि. २।३।२. * ब्राह्मणवैश्ययोः यद्यपि न शास्त्रदृष्टया राज्ययोग., क्षत्रियस्यैव परिपालनविधानात्, तथापि शास्त्रोल्लङ्घनेन ब्राह्मणवैश्ययोरपि राज्ययोगो दृश्यते । सोम. २।३।२.

* ब्राह्मणशब्दः 'ब्राह्मण पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' इत्यादौ जातिवाचिनोऽपि ब्राह्मणशब्दस्य परिव्राजकब्राह्मणविशेषपरत्वम् । 'प्रयात् ब्राह्मणश्चैव' इत्याद्याश्रमान्तरस्थब्राह्मणविहितप्रवचनादिकर्मणः कर्मान्तरोपदेशः न विरुध्यते । सु. पृ. १०५.

ॾ ब्राह्मणश्रमणन्यायः । श्रमणे बौद्धयतिः । यथा श्रमणस्य अशास्त्रीयविधिना स्वत्तशिखासूत्रत्यागदेस्त्यक्तनित्यादिकर्मणश्च इदानीं ब्राह्मणत्वाभावेऽपि भूतपूर्वेण ब्राह्मणत्वेन निर्देशः, तथा शिवसारूप्यप्राप्तानामपि प्राक्तनया मानवसंज्ञया निर्देश इत्युदाहरणसंगतिरिति । साहस्री. १६८.

* 'ब्राह्मणक्षीरवधे को वा ब्रह्महत्या निषेधति । प्रायश्चित्तान्तर तस्याः क्षीरस्नानविबन्धनम् ॥' न वाचनिकप्रायश्चित्तसत्त्वेन ब्राह्मणीवधप्रतिषेध एव नास्तीत्याशङ्कितव्यम् । वा. १।३।३।७ पृ. २११.

* ब्राह्मणाच्छंसी इन्द्रं 'इन्द्र त्वा वृषभ वयम्' इति पुनरभ्युन्नीते होमे यजति । भा. ३।२।१५।३०. * ब्राह्मणाच्छंसी ब्रह्मण. पुरुषः । द्वितीयवर्गस्योऽयम्, अर्धी दक्षिणार्थं षट् गाः लभते । वि. १।७।१७, * 'ब्राह्मणाच्छंसिनं प्रतिप्रस्थाता दीक्षयति' द्वादशाहे दीक्षायाम् । ३।७।१७. * ब्राह्मणाच्छंसिनः रैवतं साम पृष्ठं निश्चितम् । भा. ७।३।२।८.

* ब्राह्मणीनां सुरापान निषिद्धम् 'तस्माद् ब्राह्मण राजन्यो वैश्यश्च न सुरां पिबेत्' इत्यनेनैव । वा. १।३।३।७ पृ. २११.

* ब्राह्मण्यम् । 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।' ( याज्ञस्मृ. १।९० ) 'विन्नास्वेष विधिः स्मृतः' ( याज्ञस्मृ. १।९२ ) इति स्मृतिसिद्धं ब्राह्मणात् स्वभार्यायां ब्राह्मण्यामुत्पन्नत्वलक्षणं ब्राह्मण्यं मातुरेव एकस्याः सुविज्ञानम् । इतरस्य तु दुर्विज्ञानम् । कु. १।२।१।१३.

* 'ब्राह्मौदनिके अग्नौ अरणी सताप्य उद्बुध्य मस्व अग्नि नेष्यति, सेव सारे. सततिः ' इति मन्थनमाम्नातम् । संकर्ष. ३।२।१, * ब्राह्मौदनिके अग्नौ गार्हपत्यस्यैव आधाने । तदारणी निरूप्य मथित्वा तेनैव प्रथितेन गार्हपत्यः आधेयः, न तु सर्वे । ३।२।१.